॥ ३२ ॥ त्रिभिरर्जुननकुलसहदेवैः ॥ ३३ ॥ ३४ ॥ ३५ ॥ शूरसेनसुताकुंती ॥ ३६ ॥ ययुरिति ॥ तान्वनंप्रेषयित्वा ॥ ३७ ॥ ३८ ॥ यदायाताहितापसाधृतराष्ट्रादयस्तदातेभ्य

दुर्योधनहितायाऽद्यधनंदातुंत्वमिच्छसि ॥ नाहंददेमहीपालसर्वथाप्रेरितस्त्वया ॥३२॥ इत्युक्त्वानिर्गतेभीमेत्रिभिःपरिवृतोनृपः ॥ ददौवित्तं सुबहुलंधृतराष्ट्रायधर्मजः ॥ ३३ ॥ कारयामासविधिवत्पुत्राणांचौर्ध्वदेहिकम् ॥ ददौदानानिविप्रेभ्योधृतराष्ट्रोंऽबिकासुतः ॥३४॥ कृत्वौर्ध्व देहिकंसर्वंगांधारीसहितोनृपः ॥ प्रविवेशवनंतूर्णंकुंत्याचविदुरेणच ॥ ३५ ॥ संजयेनपरिज्ञातोनिर्गतोऽसौमहामतिः ॥ पुत्रैर्निवार्यमाणा ऽपिशूरसेनसुतागता ॥ ३६ ॥ विलपन्भीमसेनोऽपितथाऽन्येचापिकौरवाः ॥ गंगातीरात्परावृत्त्यययुःसर्वेगजाह्वयम् ॥ ३७ ॥ तेगत्वाजाह्न वीतीरेशतयूपाश्रमंशुभम् ॥ कृत्वा तृणैःकुटींतत्रतपस्तेपुःसमाहिताः ॥ ३८ ॥ गतान्यब्दानिषट्तेषांयदायाताहितापसाः ॥ युधिष्ठिरस्तुवि रहादनुजानिदमब्रवीत् ॥ ३९ ॥ स्वप्नेदृष्टामयाकुंतीदुर्बलावनसंस्थिता ॥ मनोमेजायतेद्रष्टुंमातरंपितरौतथा ॥ ४० ॥ विदुरंचमहात्मानंसं जयंचमहामतिम् ॥ रोचतेयदिवःसर्वान्व्रजामइतिमेमतिः ॥ ४१ ॥ ततस्तेभ्रातरःसर्वेसुभद्राद्रौपदीतथा ॥ वैराटीचमहाभागातथानागरिको जनः ॥ ४२ ॥ प्राप्ताःसर्वजनैःसार्धंपांडवादर्शनोत्सुकाः ॥ शतयूपाश्रमंप्राप्यददृशुःसर्वएवते ॥४३॥ विदुरोनयदादृष्टोधर्मस्तंपृष्टवांस्तदा ॥ क्वास्तेसविदुरोधीमांस्तमुवाचांबिकासुतः ॥४४॥ विरक्तश्चरतेक्षत्तानिरीहोनिष्परिग्रहः ॥ कुत्राप्येकांतसंवासीध्यायतेंऽतःसनातनम् ॥ ४५ ॥ गंगांगच्छन्द्वितीयेह्निवनेराजायुधिष्ठिरः ॥ ददर्शविदुरंक्षामंतपसासंशितव्रतम् ॥४६॥ दृष्ट्वोवाचमहीपालोवंदेऽहंत्वांयुधिष्ठिरः ॥ तस्थौश्रुत्वा चविदुरःस्थाणुभूतइवानघः ॥४७॥ क्षणेनविदुरस्यास्यान्निःसृतंतेजअद्भुतम् ॥ लीनंयुधिष्ठिरस्यास्येधर्मांशत्वात्परस्परम् ॥ ४८ ॥ क्षत्ताज हौतदाप्राणाञ्छुशोचाऽतियुधिष्ठिरः ॥ दाहार्थंतस्यदेहस्यकृतवानुद्यमंनृपः ॥ ४९ ॥ शृण्वतस्तुतदाराज्ञोवाग्उवाचाशरीरिणी ॥ विरक्तोऽयं नदाहार्होयथेष्टंगच्छभूपते ॥ ५० ॥ श्रुत्वातेभ्रातरःसर्वेसस्नुर्गंगाजलेऽमले ॥ गत्वानिवेदयामासुर्धृतराष्ट्रायविस्तरात् ॥ ५१ ॥ स्थितास्तत्रा ऽऽश्रमेसर्वेपांडवानागरैःसह ॥ तत्रसत्यवतीसूनुर्नारदश्चसमागतः ॥ ५२ ॥ मुनयोऽन्येमहात्मानश्चाऽऽगताधर्मनंदनम् ॥ कुंतीप्राहतदाव्या संसंस्थितंशुभदर्शनम् ॥ ५३ ॥ कृष्णकर्णस्तुपुत्रोमेजातमात्रस्तुवीक्षितः ॥ मनोमेतप्यतेसर्वंदर्शयस्वतपोधन ॥ ५४ ॥ समर्थोऽसिमहा भागकुरुमेवांछितंप्रभो ॥ गांधार्युवाच ॥ दुर्योधनरणेगच्छद्वीक्षितोनमयामुने ॥ ५५ ॥

इत्यर्थः ॥ ३९ ॥ मातरंकुंतीम् ॥ पितरौधृतराष्ट्रगांधार्याविति ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ अंबिकासुतोधृतराष्ट्रः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ तेजअद्भुतमित्यार्षम् ॥ धर्मां शत्वादुभयोर्यमधर्मजन्यत्वात् ॥ ४८ ॥ ४९ ॥ विरक्तोज्ञानीत्यर्थः ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ हेकृष्ण कृष्णद्वैपायनेत्यर्थः ॥ ५४ ॥ ५५ ॥

॥ ५६ ॥ ५७ ॥ सनातनींनित्यांदेवींसाम्यावस्थमायोपाधिकब्रह्मरूपिणींभुवनेश्वरीमित्यर्थः ॥ ५८ ॥ ५९ ॥ पुरुषारामांपुरुषाश्रयांचैतन्याऽभिन्नामित्यर्थः ॥ ६० ॥ ६१ ॥ ६२ ॥ साम्यावस्थांवर्णयति ॥ इममिति ॥ इमंजीवलोकंजीवसमुदायंचित्तेहिरण्यगर्भात्मकेसमष्टौसमाधायसंस्थाप्यतदेकतांनीत्वेत्यर्थः ॥ तंलिंगकोशंचसमष्टिलिंगशरीरात्मकंहिरण्यगर्भंचे त्यर्थः ॥ तंहिरण्यगर्भंगुणैःपृथग्भिन्नैःसत्त्वादिभिश्चसहितंसमाधौसाम्यावस्थात्मकेसुषुप्तिद्वारानीत्वास्थितात्वंकल्पकालंयावत्कल्पस्यपरिमाणंतावंतंकालंस्वतंत्रासतीनयसितस्मिन्समये विवेकंगतोज्ञानवान्वेत्तातवकोऽपिनास्त्येतादृशीत्वंसाम्यावस्थमायोपाधिकब्रह्मरूपिणीसर्वोत्तरेत्यर्थः ॥ यावान्प्रपंचस्यकालस्तावानेवप्रलयस्यापीतितुपुराणेप्रसिद्धम् ॥ ६३ ॥ ६४ ॥

तंदर्शयमुनिश्रेष्ठपुत्रंमेत्वंसहानुजम् ॥ सुभद्रोवाच ॥ अभिमन्युंमहावीरंप्राणादप्यधिकंप्रियम् ॥ ५६ ॥ द्रष्टुकामाऽस्मिसर्वज्ञदर्शयाद्यतपोधन ॥ सूतउवाच ॥ एवंविधानिवाक्यानिश्रुत्वासत्यवतीसुतः ॥ ५७ ॥ प्राणायामंततःकृत्वादध्यौदेवींसनातनीम् ॥ संध्याकालेऽथसंप्राप्तेगंगायांमु निसत्तमः ॥ ५८ ॥ सर्वांस्तांश्चसमाहूययुधिष्ठिरपुरोगमान् ॥ तुष्टावविश्वजननींस्नात्वापुण्यसरिज्जले ॥ ५९ ॥ प्रकृतिंपुरुषारामांसगुणांनि र्गुणांतथा ॥ देवदेवींब्रह्मरूपांमणिद्वीपाधिवासिनीम् ॥ ६० ॥ यदानवेधानचविष्णुरीश्वरोनवासवोनैवजलाधिपस्तथा ॥ नवित्तपोनैवयम श्चपावकस्तदाऽसिदेवित्वमहंनमामिताम् ॥ ६१ ॥ जलंनवायुर्नधरानचांबरंगुणानतेषांचनचेंद्रियाण्यहम् ॥ ॥ मनोनबुद्धिर्नचतिग्मगुःशशी तदाऽसिदेवित्वमहंनमामिताम् ॥ ६२ ॥ इमंजीवलोकंसमाधायचित्तेगुणैर्लिंगकोशंचनीत्वासमाधौ ॥ स्थिताकल्पकालंनयस्याऽऽत्मतंत्रान कोप्यस्तिवेत्ताविवेकंगतोऽपि ॥ ६३ ॥ प्रार्थयत्येषमांलोकोमृतानांदर्शनंपुनः ॥ नाहंक्षमोऽस्मिमातस्त्वंदर्शयाऽऽशुजनान्मृतान् ॥ ६४ ॥ सूतउवाच ॥ एवंस्तुतातदादेवीमायाश्रीभुवनेश्वरी ॥ स्वर्गादाहूयसर्वान्वैदर्शयामासपार्थिवान् ॥ ६५ ॥ दृष्ट्वाकुंतीचगांधारीसुभद्राचवि राटजा ॥ पांडवाश्चमुहुःसर्वेवीक्ष्यप्रत्यागतान्स्वकान् ॥ ६६ ॥ पुनर्विसर्जितास्तेनव्यासेनामिततेजसा ॥ स्मृत्वादेवींमहामायामिंद्रजालमि वोद्यतम् ॥ ६७ ॥ तदापृष्ट्वाययुःसर्वेपांडवामुनयस्तथा ॥ राजानागपुरंप्रातःकुर्वन्व्यासकथांपथि ॥ ६८ ॥ इति श्रीदेवीभागवतेमहापुराणे द्वितीयस्कंधेसप्तमोऽध्यायः ॥ ७ ॥ सूतउवाच ॥ ततोदिनेतृतीयेचधृतराष्ट्रःसभूपतिः ॥ दावाग्निनावनेदग्धःसभार्यःकुंतिसंयुतः ॥ १ ॥ संजय स्तीर्थयात्रायांगतस्त्यक्त्वामहीपतिम् ॥ श्रुत्वायुधिष्ठिरोराजानारदाद्दुःखमाप्तवान् ॥ २ ॥

॥ ६५ ॥ ६६ ॥ ६७ ॥ इंद्रजालमित्यनेनजगतोमिथ्यात्वप्रतिपादनान्मिथ्याभूतसंसारादेतादृशानामीश्वरानुगृहीतानामपीदृशीदशाजायतइतिविरक्तोभूत्वाभगवतीस्वरूपंमोक्षार्थंवि चिंतयेदित्यवांतरतात्पर्यम् ॥ व्यासकथांव्यासेश्रीभुवनेश्वर्यनुग्रहकथाम् ॥ ६८ ॥ इतिश्रीदेवीभागवततिलकेद्वितीयस्कंधेसप्तमोऽध्यायः ॥ ७ ॥ पंचाशत्पद्यकैरेकेनोनैर्नष्टंहरेःकुलम् ॥ कीर्तयित्वोत्तरासूनोर्वृत्तंचपरिगीयते ॥ १ ॥ ततइति ॥ पांडवानांहस्तिनापुरागमनोत्तरम् ॥ १ ॥ नारदाच्छ्रुत्वेत्यन्वयः ॥ २ ॥

षट्त्रिंशेथेति ॥ कारवानांक्षयादनंतरंषट्त्रिंशेवर्षेगतेसत्यथप्रभासेयादवाइत्यन्वयः ॥ ३ ॥ पश्यतोरामकृष्णयोरित्यनेनेश्वरयोरपिभावित्वस्यापरिहरकत्वमुक्तंभवति ॥ ४ ॥ एवंराम कृष्णयोरपिदुर्दशांदर्शयति देहंतत्याजेति ॥ ५ ॥ श्रीभुवनेश्वरींचित्तेकृत्वेत्यन्वयः ॥ ६ ॥ ७ ॥ ८ ॥ निष्कामयज्जनमिति ॥ वासुदेवेनस्वशक्त्यातत्पुरंसमुद्रमध्येनिर्मितंतस्मिन्नीश्वरे गतेसतीश्वरेणस्वशक्त्यपकर्षान्निश्चयेनसमुद्रोनगरींप्लावयिष्यतीतिभयेननिष्कामयन्निष्कासितवानित्यर्थः ॥ ९॥ १०॥ ११ ॥ इंद्रप्रस्थेइति ॥ अनिरुद्धसुतोवज्रनामायादवानांराजाकृतः

षट्त्रिंशेऽथगतेवर्षेकौरवाणांक्षयात्पुनः ॥ प्रभासेयादवाः सर्वे विप्रशापात्क्षयंगताः ॥३॥ तेपीत्वामदिरांमत्ताःकृत्वायुद्धंपरस्परम्॥ क्षयंप्राप्ता महात्मानःपश्यतोरामकृष्णयोः ॥४॥ देहंतत्याजरामस्तुकृष्णःकमललोचनः ॥ व्याधबाणहतःशापंपालयन्भगवान्हरिः॥५॥वसुदेवस्तुतच्छ्रुत्वादेहत्यागंहरेरथ ॥ जहौप्राणाञ्छुचीन्कृत्वाचित्तेश्रीभुवनेश्वरीम् ॥ ६॥ अर्जुनस्तुततोगत्वाप्रभासेचातिदुःखितः ॥ संस्कारंतत्रसर्वेषांयथा योग्यंचकारह ॥ ७॥ समीक्ष्याथहरेर्देहंकृत्वाकाष्ठस्यसंचयम्॥अष्टाभिःसहपत्नीभिर्दाहयामासपार्थिवः ॥८॥ देहंरामस्यरेवत्यासहदग्ध्वावि भावसौ ॥ अर्जुनोद्वारकामेत्यपुरान्निष्कामयज्जनम् ॥ ९ ॥ पुरीसावासुदेवस्यप्लावितोदधिनाततः ॥ अर्जुनःसर्वलोकान्वैगृहीत्वानिर्गतस्तदा ॥ १० ॥ कृष्णपत्न्यस्तदामार्गेचौराभीरैश्चलुंठिताः ॥ धनंसर्वंगृहीतं चनिस्तेजाश्चार्जुनोऽभवत् ॥ ११ ॥ इंद्रप्रस्थेसमागम्यवज्रोराजाकृतस्तदा ॥ अनिरुद्धसुतोनाम्नापार्थेनामिततेजसा ॥ १२॥ व्यासायकथितंदुःखं तेनोक्तोऽसौमहारथः ॥ पुनर्यदाहरिस्त्वंचभविताऽसिमहामते ॥ १३ ॥ तदातेजस्तवात्युग्रंभविष्यतिपुनर्युगे ॥ तच्छ्रुत्वावचनंपार्थोगत्वानागपुरेऽर्जुनः ॥ १४ ॥ दुःखितोधर्मराजानंवृत्तांतंसर्वमब्रवीत् ॥ देहत्यागंहरेःश्रुत्वायादवानांक्षयंतथा ॥ १५ ॥ गमनायमतिंचक्रेराजाहैमाचलंप्रति ॥ षट्त्रिंशद्वार्षिकंराज्येस्थापयित्वोत्तरासुतम् ॥ १६ ॥ निर्जगामवनंराजाद्रौपद्याभ्रातृभिःसह ॥ षट्त्रिंशच्चैववर्षाणिकृत्वाराज्यंगजाह्वये ॥ १७ ॥ गत्वाहिमाचले षट्तेजहुःप्राणान्पृथासुताः ॥ परीक्षिदपिराजर्षिःप्रजाःसर्वाःसुधार्मिकः ॥ १८ ॥ अपालयच्चराजेंद्रःषष्टिवर्षाण्यतंद्रितः ॥ बभूवमृगयाशीलोजगामचवनंमहत् ॥ १९ ॥ विद्धंमृगंविचिन्वानोमध्याह्नेभूपतिः स्वयम् ॥ तृषितश्चपरिश्रांतःक्षुधितश्चोत्तरासुतः ॥ २० ॥ राजाघर्मेणसंतप्तोददर्शमुनिमंतिके ॥ ध्याने स्थितंमुनिंराजाजलंपप्रच्छचाऽऽतुरः ॥२१॥ नोवाचकिंचिन्मौनस्थश्चुकोपनृपतिस्तदा ॥ मृतंसर्पंतदाऽऽदायधनुष्कोट्यातृषातुरः॥ २२ ॥ कलिनाऽऽविष्टचित्तस्तुकंठेतस्यन्यवेशयत् ॥ आरोपितेतथासर्पेनोवाचमुनिसत्तमः ॥ २३ ॥

॥ १२ ॥ कथितं दुःखमिति ॥ ममहतीशक्तिःक्वगतेतिदुःखंकथितमित्यन्वयः ॥ १३ ॥ पुनर्युगे इति ॥ अधुनाशक्तिर्हरिणाऽपहृतासापुनर्हरेरवतारेजातेतवापिचावतारेजातेआया स्यति नमध्ये ॥१४॥१५॥ उत्तरासुतंपरीक्षितम् ॥ १६॥ १७॥ १८॥ १९॥ २० ॥ घर्मेणोष्णजन्यजलेन ॥ २१ ॥ तृषातुरस्तृषापीडितः ॥ २२ ॥ आरोपितेऽपीत्यर्थः ॥ २३ ॥

गविजातस्तन्नामकइत्यर्थः ॥ २४ ॥ महाशाक्तइति ॥ पराशक्तेरुपासकइत्यर्थः ॥ तत्पुत्रंयस्यकंठेसर्पआरोपितस्तस्यपुत्रमित्यर्थः ॥ २५ ॥ लंभितःस्थापितः ॥ २६॥ २७॥ २८॥
॥ २९ ॥ ममद्वेषान्ममापराधादित्यर्थः ॥ ३० ॥ ३१॥ ३२॥ विज्ञोपायेनाभिज्ञकृतोपायेनदुर्लभाअप्यर्थाःसिध्यंतीत्यर्थः ॥ दुर्विदोऽचिंत्याइत्यर्थः ॥ ३३॥ ३४॥ भवितव्येनविश्वासः
कार्योभवितव्यमाश्रित्यैवनिरुद्योगेनस्थातव्यमितिन ॥ किंतूद्योगोऽपिकर्तव्यइत्यर्थः ॥ ३५ ॥ अयंसर्पदष्टोऽनेनप्रत्यक्षंजीवितइतिप्रत्यक्षंदृष्टांतंप्रथमंपश्यंतुमयोच्यमानमालोचयंतु ॥
तंतथाविधंनिश्चित्यदिविपृथिव्यांवायःकोऽपिपुरुषोविद्यतेकचित्सआनेयइतिशेषः ॥ ३६ ॥ ननुदैवंप्रारब्धमेवमुख्यमितिकेचिद्वदंतितत्राह । दैवमतिमिति ॥ एतादृशोनिरुद्यमस्तुपुरु

नचचालसमाधिस्थोराजाऽपिस्वगृहंगतः ॥ तस्यपुत्रोऽतितेजस्वीगविजातोमहातपाः ॥ २४ ॥ महाशाक्तोऽथशुश्रावक्रीडमानोवनांतिके ॥
मित्राण्याहुश्चतत्पुत्रंपितुःकंठेतवाधुना ॥ २५ ॥ लंभितोऽस्तिमृतःसर्पःकेनापीतिमुनीश्वर ॥ तेषांतद्वचनंश्रुत्वाचुकोपातिशयंतदा ॥ २६ ॥
शशापनृपतिंक्रुद्धोगृहीत्वाऽऽशुकरेजलम् ॥ पितुःकंठेऽद्यमेयेनविनिक्षिप्तोमृतोरगः ॥२७॥तक्षकःसप्तरात्रेणतंदशेत्पापपूरुषम्॥मुनेःशिष्योऽथ
राजानंसमुपेत्यगृहेस्थितम् ॥२८॥ शापंनिवेदयामाससमुनिपुत्रेणचार्पितम् ॥ अभिमन्युसुतःश्रुत्वाशापंदत्तंद्विजेनवै ॥२९॥ अनिवार्यंचविज्ञा
यमंत्रिवृद्धानुवाचह ॥ शप्तोऽहंद्विजरूपेणममद्वेषादसंशयम् ॥३०॥ किंविधेयंमयामात्याउपायाश्चिंत्यतामिह ॥ मृत्युःकिलानिवार्योऽसौवदंति
वेदवादिनः ॥३१॥ यत्नस्तथाऽपिशास्त्रोक्तःकर्तव्यःसर्वथाबुधैः ॥ उपायवादिनःकेचित्प्रवदंतिमनीषिणः॥३२॥ विज्ञोपायेनसिध्यंतिकार्या
णिनेतरस्यच ॥ मणिमंत्रौषधीनांवैप्रभावाःखलुदुर्विदः ॥३३॥ नभवेदितिकिंतैस्तुमणिमद्भिःसुसाधितैः ॥ सर्पदष्टापुराभार्यामुनेःसंजीवितामृ
ता॥३४॥दत्त्वाऽर्धमायुषस्तेनमुनिनासावराप्सरा ॥ भवितव्येनविश्वासःकर्तव्यःसर्वथाबुधैः ॥ ३५ ॥ प्रत्यक्षतत्रदृष्टांतंपश्यंतुसचिवाःकिल ॥
दिविकोऽपिपृथिव्यांवादृश्यतेपुरुषःक्वचित् ॥३६॥ दैवमतिंसमाधाययस्तिष्ठेत्तुनिरुद्यमः ॥ विरक्तस्तुयतिर्भूत्वाभिक्षार्थंयातिसर्वथा ॥ ३७ ॥
गृहस्थानांगृहेकाममाहूतोवाऽऽथवान्यथा ॥ यदृच्छयोपपन्नंचक्षिप्तंकेनापिवामुखे॥३८॥उद्यमेनविनाचास्यादुदरेसंविशेत्कथम् ॥ प्रयत्नश्चोद्यमे
कार्योयदासिद्धिंनयातिचेत् ॥३९॥ तदादैवंस्थितंचेतिचित्तमालंबयेद्बुधः ॥ मंत्रिणऊचुः ॥ कोमुनिर्येनदत्त्वाऽर्धमायुषोजीविताप्रिया ॥४०॥

षोविरक्तोदैवेप्रारब्धेनिश्चयात्मिकांमतिंकृत्वायस्तिष्ठतिसयतिर्भूत्वाभिक्षार्थंगृहस्थानांगृहंयाति ॥ नतुगृहस्थाश्रमेतिष्ठति अतोममगृहस्थाश्रमिणोनतन्मतंयुक्तमितिभावः ॥३७॥ उद्योग
स्तुतदाश्रमेप्यपेक्षितोऽन्यथाऽनिर्वाहादितितन्मतेऽपिदूषणमस्त्येवेत्याह । गृहस्थानामिति । आहूतोऽथवानाहूतोवायदृच्छतिगृहस्थानांगृहंप्रतियतिः सउद्योगेनैवगच्छतिनतुकेव
लंदैवेनतथायदृच्छयोपात्तंकेनापि मुखेनिक्षिप्तमन्नमुद्योगेनंविनायत्नंविनाकथमुदरेसंविशेत्नकथमपीत्यर्थः ॥ तस्माद्विरक्तोप्युद्योगप्रधानएवेतिभावः ॥ ३८ ॥ तदेवाऽऽह । उद्यमे
नेति ॥ ३९ ॥ यदोद्यमेकृतेऽपिकार्यंनसिध्यतितदादैवंप्रबलमितिनिश्चयःकर्तव्योनतुततः पूर्वमित्याह । तदादैवंस्थितंचेति ॥ ४० ॥

॥ ४१ ॥ सुंदरीति ॥ शर्यातेःसुकन्याशोभनाकन्याच्यवनस्यसुंदरीपत्नीआसीदित्यर्थः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ प्रमद्वरामिति ॥ तदर्थस्तुमहाभारते प्रमदाभ्योवरासातुसत्त्वरूपागुणान्विता ॥ ततःप्रमद्वरेत्यस्यानामचक्रेमहानृषिरिति ॥ ४८ ॥ ४९ ॥ इतिश्रीदेवीभागवततिलकेद्वितीयस्कंधेऽष्टमोऽध्यायः ॥ ८ ॥ अर्धाधिकैकपंचाशत्पद्यैर्वृत्तंरुरोःपुरः ॥ कीर्तयित्वागुप्तगेहेराज्ञोवासस्तथोच्यते ॥ १ ॥ कामार्तःकामपीडितःसन् ॥ विमनाःखिन्नः ॥ १ ॥ २ ॥ प्रमतिःपिता प्रमुह्यस्वभाषणेनमोहयित्वाऽतिसंकटेनसुमुखं

कथंमृतामहाराजतन्नोब्रूहिसविस्तरम् ॥ राजोवाच॥भृगोर्भार्यावरारोहापुलोमानामसुंदरी ॥४१॥ तस्यांतुच्यवनोनाममुनिर्जातोऽतिविश्रुतः॥ च्यवनस्यचशर्यातेःसुकन्यानामसुंदरी॥४२॥ तस्यांजज्ञेसुतःश्रीमान्प्रमतिर्नामविश्रुतः॥ प्रमतेस्तुप्रियाभार्याप्रतापीनामविश्रुता॥४३॥रुरुर्नामसुतोजातस्तथापरमतापसः॥तस्मिंश्चसमयेकश्चित्स्थूलकेशश्चविश्रुतः ॥ ४४॥ बभूवतपसायुक्तोधर्मात्मासत्यसंमतः॥एतस्मिन्नंतरेमान्यामेनकाचवराप्सराः॥४५॥क्रीडांचक्रेनदीतीरेत्रिषुलोकेषुसुंदरी॥गर्भंविश्वावसोःप्राप्यनिर्गतावरवर्णिनी ॥४६॥ स्थूलकेशाश्रमेगत्वाविससर्जवराप्सराः ॥ कन्यकांचनदीतीरेत्रिषुलोकेषुसुंदरीम् ॥ ४७॥ दृष्ट्वाऽनाथांतदाकन्यांजग्राहमुनिसत्तमः॥पुपोषस्थूलकेशस्तुनाम्नाचक्रेप्रमद्वराम् ॥ ॥ ४८॥ साकालेयौवनंप्राप्तासर्वलक्षणसंयुता ॥ रुरुर्दृष्ट्वाऽथतांबालांकामबाणार्दितोह्यभूत् ॥४९॥ ॥ इति श्रीदेवीभागवते महापुराणे द्वितीयस्कंधेऽष्टमोऽध्यायः ॥ ८ ॥ ॥ परीक्षिदुवाच ॥ कामार्तःसमुनिर्गत्वारुरुस्सुतोनिजाश्रमे ॥ पितापप्रच्छदीनंतंकिंरुरोविमनाअसि ॥ १ ॥ सतमाहातिकामार्तःस्थूलकेशस्यचाऽऽश्रमे॥ कन्याप्रमद्वरानामसामेभार्याभवेदिति ॥२॥ सगत्वाप्रमतिस्तूर्णंस्थूलकेशंमहामुनिम्॥ प्रमुह्यसुमुखंकृत्वाययाचेतांवराननाम् ॥३॥ ददौवाचंस्थूलकेशःप्रदास्यामिशुभेऽहनि ॥ विवाहार्थंचसंभारंरचयामासतुर्वने ॥४ ॥ प्रमतिस्थूलकेशश्चविवाहार्थंसमुद्यतौ ॥ बभूवतुर्महात्मानौसमीपस्थौतपोवने ॥५ ॥ तस्मिन्नवसरेकन्यारममाणागृहांगणे ॥ प्रसुप्तंपन्नगंपादेनास्पृशच्चारुलोचना ॥ ॥ ६ ॥ दष्टातुपन्नगेनाथसाममारवरांगना ॥ कोलाहलस्तदाजातोमृतांदृष्ट्वाप्रमद्वराम् ॥ ७ ॥मिलितामुनयःसर्वेचुक्रुशुःशोकसंयुताः ॥ भूमौतांपतितांदृष्ट्वापितातस्याऽतिदुःखितः ॥८॥ रुरोदविगतप्राणांदीप्यमानांसुतेजसा ॥ रुरुःश्रुत्वातदाक्रंदन्दर्शनार्थंसमागतः ॥ ९ ॥ ददर्शपतितांतत्रसजीवामिवकामिनीम् ॥ रुदंतंस्थूलकेशंचदृष्ट्वाऽन्यानृषिसत्तमान् ॥ १० ॥ रुरुःस्थानाद्बहिर्गत्वारुरोदविरहाकुलः ॥ अहोदैवेनसर्पोऽयंप्रेषितःपरमाद्भुतः ॥ ११ ॥ममशर्मविघातायदुःखहेतुरयंकिल ॥ किंकरोमिक्वगच्छामिमृतामेप्राणवल्लभा ॥ १२ ॥

प्रसन्नम् ॥ ३ ॥ शुभेऽहनिप्रदास्यामीतिवाचमित्यर्थः ॥ ततोवाक्यनिश्चयोत्तरंसंभारंसामग्रीमुभावपिसंबंधिनौरचयामासतुः ॥ ४ ॥ समीपस्थौदूरदेशादागत्यसमीपदेशस्थौ ॥ ५ ॥ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ सजीवामिवेति ॥ मृताऽपितेजस्विनीत्यर्थः ॥ १० ॥ ११ ॥ १२ ॥

॥ १३ ॥ १४ ॥ १५ ॥ सुखंतर्हीति ॥ अनयाविनेतिशेषः ॥ अतःप्रपतामीत्यर्थः ॥ वर्तमानसामीप्येलट् ॥ पतिष्यामीतितुफलितम् ॥ १६ ॥ इत्थंप्रथमतोमरणनिश्चयंकृत्वापुनर्म
नसाविचार्योपायंचिंतयामासेतिवक्ष्यमाणेनान्वयः ॥ १७ ॥ १८ ॥ दैवोविधिः ॥ पुंल्लिंगमार्षम् ॥ १९ ॥ सर्वोलोकःशत्रुलोकःयदर्थंप्राणोदेयस्तस्याःस्त्रियाःपरलोकेकउपकारःस्या
दित्याह ॥ उपकारइति ॥ २० ॥ ननुतद्वासनयामरणेपरलोकेसाप्राप्स्यतितत्राह । मृतेमय्याऽऽत्मेति ॥ आत्मघातव्यतिरिक्तस्यतदर्थंकर्माचरितवतस्तद्वासनयातत्फलंभवतिनात्मघा

नवैजीवितुमिच्छामिवियुक्तःप्रिययाऽनया ॥ नालिंगितावरारोहानमयाचुंबितामुखे ॥ १३ ॥ नपाणिग्रहणंप्राप्तंमंदभाग्येनसर्वथा ॥ लाजा
होमस्तथाचाग्नौनकृतस्त्वनयासह ॥ १४ ॥मानुष्यंधिगिदंकामंगच्छंत्वद्यममास्रवः ॥ दुःखितस्यनवामृत्युर्वांछितःसमुपैतिहि ॥ १५ ॥ सु
खंतर्हिकथंदिव्यमाप्यतेभुविवांछितम् ॥ प्रपतामिह्रदे घोरेपावकेप्रपताम्यहम् ॥ १६ ॥ विषमद्मिगलेपाशंकृत्वाप्राणांस्त्यजाम्यहम् ॥विलप्यै
वंरुरुस्तत्रविचार्यमनसापुनः ॥ १७ ॥ उपायंचिंतयामास स्थितस्तस्मिन्नदीतटे ॥ मरणांतिकफलंमेस्यादात्महत्यादुरत्यया ॥ १८ ॥
दुःखितश्चपितामेस्याज्जननीचातिदुःखिता ॥ दैवस्तुष्टोभवेत्कामंदृष्ट्वामां त्यक्तजीवितम् ॥ १९ ॥ सर्वःप्रमुदितश्चस्यान्मत्क्षयेनात्रसंश
यः ॥ उपकारःप्रियायाःकःपरलोकेभवेदपि ॥ २० ॥ मृतेमय्यात्मघातेनविरहात्पीडितेऽपिच ॥ परलोकेप्रियासाऽपिनमेस्यादात्मघाति
नः ॥ २१ ॥ एतदर्थंमृतेदोषामयिनैवाऽमृतेपुनः ॥ विमृश्यैवंरुरुस्तत्रस्नात्वाऽऽचम्यशुचिःस्थितः ॥ २२ ॥ अब्रवीद्वचनंकृत्वाजलंपा
णावसौमुनिः ॥ यन्मयासुकृतंकिंचित्कृतंदेवाऽर्चनादिकम् ॥ २३ ॥ गुरवःपूजिताभक्त्याहुतंजप्तंतपःकृतम् ॥ अधीतास्त्वखिलावेदा
गायत्रीसंस्कृतायदि ॥ २४ ॥ रविराराधितस्तेनसंजीवतुममप्रिया ॥ यदिजीवेन्नमेकांतात्यजेप्राणानहंततः ॥ २५ ॥ इत्युक्त्वा तज्जलंभूमौ
चिक्षेपाऽऽराध्यदेवताः ॥ राजोवाच ॥ एवंविलपतस्तस्यभार्ययादुःखितस्यच ॥ २६ ॥ देवदूतस्तदाऽभ्येत्यवाक्यमाहरुरुंततः ॥ देवदूत
उवाच ॥ माकार्षीःसाहसंब्रह्मन्कथंजीवेन्मृताप्रिया ॥ २७ ॥ गतायुरेषासुश्रोणीगंधर्वाप्सरसोःसुता ॥ अन्यांकामयचार्वंगींमृतेयंचाविवा
हिता ॥ २८ ॥ किंरोदिषिसुदुर्बुद्धेकाप्रीतिस्तेऽनयासह ॥ रुरुरुवाच ॥देवदूतनचान्यांवैवरिष्याम्यहमंगनाम् ॥ २९ ॥ यदिर्जीवेन्नजीवेद्वामर्त
व्यंचाऽधुनामया ॥ राजोवाच ॥ विदित्वेतिहठंतस्यदेवदूतोमुदाऽन्वितः ॥ ३० ॥ उवाचवचनंतथ्यंसत्यंचाऽतिमनोहरम् ॥ उपायंशृणुविप्रें
द्रविहितंयत्सुरैः पुरा ॥ ३१ ॥ आयुषोऽर्धप्रदानेनजीवयाशुप्रमद्वराम् ॥ रुरुरुवाच ॥ आयुषोऽर्धंप्रयच्छामिकन्यायैनाऽत्रसंशयः ॥३२॥

तिनस्तस्यत्वेतदर्थमेतन्मृतप्रियाप्रयोजनायाऽधोगतेरेवश्रवणादित्यर्थः ॥ २१ ॥ तस्मान्मयिमृतेदोषाएवभवेयुर्नाऽमृते ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ देवदूतइति ॥ सर्व
पुण्यकर्मणःशपथेकृतेसतिदेवेनेश्वरेणबोधनार्थंप्रेषितोदूतोऽयंदेवदूतइतिबोध्यम् ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

स्वर्गलोकात्समागतइत्यन्वयः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ प्रेषयामासेति ॥ येनमुनिनाशापोदत्तस्तंमुनिंप्रतिसेवकस्यममप्रसादार्थंपुनः पुनःक्षमस्वेतिप्रार्थयितुंगौरमुखंमुनिंप्रेषयामासेत्यन्वयः ॥४३॥ ब्राह्मणानिति ॥ इतस्ततोयत्रकुत्रचिद्विद्यमानान्सिद्धमंत्रज्ञान् रक्षणार्थमानिनायेत्यर्थः॥४४॥४५॥वातोऽपीति॥ विनिवा

अद्यप्रत्यावृतप्राणाप्रोत्तिष्ठतुममप्रिया ॥ विश्वावसुस्तदातत्रविनानेनसमागतः ॥ ३३ ॥ ज्ञात्वापुत्रीं मृतांचाशुस्वर्गलोकात्प्रमद्वराम् ॥ ततोगंधर्वराजश्चदेवदूतश्चसत्तमः ॥ ३४ ॥ धर्मराजमुपेत्यैदंवचनंप्रत्यभाषताम् ॥ धर्मराजरुरोःपत्नी सुताविश्वावसोस्तथा ॥ ३५ ॥ मृताप्रम द्वराकन्यादष्टासर्पेणचाऽधुना ॥ सारुरोरायुषोऽर्धेनमर्तुकामस्यसूर्यज ॥३६॥ समुत्तिष्ठतुतन्वंगीव्रतचर्याप्रभावतः ॥ धर्मउवाच ॥ विश्वावसु सुतांकन्यांदेवदूतयदीच्छसि ॥३७॥ उत्तिष्ठत्वायुषोऽर्धेनरुरुंगत्वात्वमर्पय ॥ राजोवाच ॥ एवमुक्तस्ततोगत्वाजीवयित्वाप्रमद्वराम् ॥ ३८ ॥ रुरोःसमर्पयामासदेवदूतस्त्वरान्वितः ॥ ततःशुभेऽह्निविधिनारुरुणाऽपिविवाहिता ॥ ३९ ॥ इत्थंचोपाययोगेनमृताप्युज्जीवितातदा ॥ उपायस्तुप्रकर्तव्यःसर्वथाशास्त्रसंमतः ॥४०॥ मणिमंत्रौषधीभिश्चविधिवत्प्राणरक्षणे ॥ इत्युक्त्वासचिवान्राजाकल्पयित्वासुरक्षकान् ॥ ४१ ॥ कारयित्वाऽथप्रासादंसप्तभूमिकमुत्तमम् ॥ आरुरोहोत्तरासूनुःसचिवैःसहतत्क्षणम् ॥ ४२ ॥ मणिमंत्रधराःशूराःस्थापितास्तत्ररक्षणे ॥ प्रेष यामासभूपालोमुनिंगौरमुखंततः ॥ ४३ ॥ प्रसादार्थंसेवकस्यक्षमस्वेतिपुनःपुनः ॥ ब्राह्मणान्सिद्धमंत्रज्ञान्रक्षणार्थमितस्ततः ॥ ४४ ॥ मंत्रिपुत्रःस्थितस्तत्रस्थापयामासदंतिनः ॥ नकश्चिदारुहेत्तत्रप्रासादेचाऽतिरक्षिते ॥४५॥वातोऽपिनचरेत्तत्रप्रवेशेविनिवार्यते ॥ भक्ष्यभोज्या दिकंराजातत्रस्थश्चचकारसः ॥ ४६ ॥ स्नानसंध्यादिकंकर्मतत्रैवविनिवर्त्यच ॥ राजकार्याणिसर्वाणितत्रस्थश्चाऽकरोन्नृपः ॥ ४७ ॥ मंत्रिभिः सहसंमंत्र्यगणयन्दिवसानपि ॥ कश्चिच्चकश्यपोनामब्राह्मणोमंत्रिसत्तमः ॥ ४८ ॥ शुश्रावचतथाशापंप्राप्तंराज्ञामहात्मना ॥ सधनार्थी द्विजश्रेष्ठःकश्यपःसमचिंतयत् ॥ ४९ ॥ व्रजामितत्रयत्राऽऽस्तेशप्तोराजाद्विजेनह ॥ इतिकृत्वामतिंविप्रःस्वगृहान्निःसृतःपथि ॥ ५० ॥ कश्य पोमंत्रविद्विद्वान्धनार्थीमुनिसत्तमः॥ ५१ ॥ इति श्रीदेवीभागवते महापुराणे द्वितीयस्कंधे नवमोऽध्यायः ॥ ९ ॥ सूतउवाच ॥ तस्मिन्नेववदि नेनाम्रातक्षकस्तंनृपोत्तमम् ॥ शप्तंज्ञात्वागृहात्तूर्णंनिःसृतःपुरुषोत्तमः ॥ १ ॥वृद्धब्राह्मणवेषेणतक्षकःपथिनिर्गतः ॥ अपश्यत्कश्यपंमार्गेव्रजं तंनृपतिंप्रति ॥ २ ॥ तमपृच्छत्पन्नगोऽसौब्राह्मणंमंत्रवादिनम् ॥ क्वभवांस्त्वरितोयातिकिंचकार्यंचिकीर्षति ॥ ३॥

र्यतेसेवकैरन्यस्यप्रवेशेतत्रकावार्तेतिभावः ॥४६॥४७॥४८॥४९॥५०॥५१॥इति श्रीदेवीभागवततिलके द्वितीयस्कंधेनवमोध्यायः ॥ ९ ॥ ॥ ॥ अष्टाधिकैःषष्टिपद्यैस्तक्षकद्वि जयोःकथाम् ॥ समाप्यतक्षकेणाथोराजामृतइतीर्यते ॥ १ ॥ तस्मिन्नेवदिनेइति ॥ यस्मिन्दिनेकश्यपोगृहान्निर्गतस्तस्मिन्नेवेत्यर्थः ॥ पुरुषोत्तमःपुरुषाकृतिःसन् ॥ १ ॥ २ ॥ ३ ॥

अपज्वरंशांतम् ॥ ४ ॥ जीवितव्येआयुष्येसति ॥ तदभावेब्रह्मणाऽपिजीवयितुमशक्यत्वादिति ॥५ ॥ अहंसइति॥यस्यविषंनाशयितुमिच्छसिसोऽहंतक्षकोऽस्मिराजानमधुनैवधक्ष्यामिभ
स्मसात्करिष्यामि ॥ ६ ॥ असंदेहंमृतशरीरम् ॥७॥८॥ न्यग्रोधंवटम् ॥९॥१०॥११॥१२॥१३ ॥ नगंवृक्षम् ॥ १४ ॥ किमर्थमिति ॥ किंधनलोभार्थमित्थंप्रयासंकरोषि अथवा प्रति
ष्ठार्थमित्यर्थः ॥ १५ ॥ हेपन्नगनृपतिंशप्तंमत्वाविद्ययासंजीविन्यानृपसत्तममुपकर्तुंवित्तार्थंचगृहादहंनिःसृतइत्यन्वयः ॥ १६ ॥ सकामोऽहमिति ॥ अतस्तवगमनादहंसकामःपूर्णका

कश्यपउवाच ॥ परीक्षितंनृपश्रेष्ठंतक्षकश्चप्रधक्ष्यति ॥ तत्राऽहंत्वरितोयामिनृपंकर्तुमपज्वरम् ॥४॥ मंत्रोऽस्तिममविप्रेंद्रविषनाशकरःकिल॥
जीवयिष्याम्यहंतंवैजीवितव्येऽधुनाकिल ॥ ५ ॥ तक्षकउवाच ॥ अहंसपन्नगोब्रह्मंस्तंधक्ष्यामिमहीपतिम् ॥ निवर्तस्वनशक्तस्त्वंमयादष्टंचि
कित्सितुम् ॥ ६ ॥ कश्यपउवाच ॥ अहंदष्टंत्वयासर्पनृपंशप्तंद्विजेनवै ॥ जीवयिष्याम्यसंदेहंकामंमंत्रबलेनवै ॥ ७ ॥ तक्षकउवाच ॥ यदि
त्वंजीवितुंयासिमयादष्टंनृपोत्तमम् ॥ मंत्रशक्तिबलंविप्रदर्शयत्वंममाऽनघ ॥ ८ ॥ धक्ष्याम्येनंचन्यग्रोधंविषदंष्ट्राभिरद्यवै ॥ कश्यपउवाच ॥
जीवयिष्येत्वयादष्टंदग्धंवापन्नगोत्तम ॥ ९ ॥ सूतउवाच ॥ अदशत्पन्नगोवृक्षंभस्मसाच्चचकारतम् ॥ उवाचकश्यपंभूयोजीवयैनंद्विजोत्तम॥
॥ १० ॥ दृष्ट्वाभस्मीकृतंवृक्षंपन्नगेनविषाऽग्निना ॥ सर्वंभस्मसमाहृत्यकश्यपोवाक्यमब्रवीत् ॥ ११ ॥ पश्यमंत्रबलंमेऽद्यन्यग्रोधंपन्नगोत्तम ॥
जीवयाम्यद्यवृक्षंवैपश्यतस्तेमहाविष ॥ १२ ॥ इत्युक्त्वाजलमादायकश्यपोमंत्रवित्तमः ॥ सिषेचभस्मराशिंतंमंत्रितेनैववारिणा ॥ १३ ॥
तद्वारिसेचनाज्जातोन्यग्रोधःपूर्ववच्छुभः ॥ विस्मयंतक्षकःप्राप्तोदृष्ट्वातंजीवितंनगम् ॥१४॥तमाहकश्यपंनागःकिमर्थंतेपरिश्रमः ॥ संपादयामि
तंकामंब्रूहिवाडववांछितम् ॥ १५ ॥ कश्यपउवाच ॥ वित्तार्थीनृपतिंमत्वाशप्तंपन्नगनिःसृतः ॥ गृहादहंचोपकर्तुंविद्ययानृपसत्तमम् ॥ १६ ॥
तक्षकउवाच ॥ वित्तंगृहाणविप्रेंद्रयावदिच्छसिपार्थिवात् ॥ ददामिस्वगृहंयाहिसकामोहंभवाम्यतः ॥ १७ ॥ सूतउवाच ॥ तच्छ्रुत्वावचनं
तस्यकश्यपःपरमार्थवित् ॥ चिंतयामासमनसाकिंकरोमिपुनःपुनः ॥ १८ ॥ धनंगृहीत्वास्वगृहंप्रयामियद्यहंपुनः ॥ भविष्यतिनमेकीर्तिर्लोके
लोभसमाश्रयात् ॥ १९ ॥ जीवितेऽथनृपश्रेष्ठेकीर्तिःस्यादचलामम ॥ धनप्राप्तिश्चबहुधाभवेत्पुण्यंचजीवनात् ॥ २० ॥ रक्षणीयंयशःकामं
धिग्धनंयशसाविना ॥ सर्वस्वंरघुणापूर्वंदत्तंविप्रायकीर्त्तये॥२१॥हरिश्चंद्रेणकर्णेनकीर्त्यर्थंबहुविस्तरम्॥ उपेक्षेयंकथंभूपंदह्यमानंविषाऽग्निना ॥
॥२२॥जीवितेऽधमयाराज्ञिसुखंसर्वजनस्यच ॥ अराजकेप्रजानाशोभवितानाऽत्रसंशयः ॥ २३ ॥

मोभवामिभविष्यामीत्यर्थः ॥ १७ ॥ १८ ॥ राजानंनगत्वातक्षकान्मध्येएवधनग्रहणेधनंतुलब्धंपरंतुराजसंजीवनजन्यामहतीकीर्तिर्नस्यात् ॥१९॥ गमनेतुफलत्रयंभविष्यतीत्याह ॥
जीवितेऽथेति ॥ २० ॥ २१ ॥ उपेक्षेयंकथमुपेक्षांकुर्यामहम् ॥ २२ ॥ मयाधार्मिकेराज्ञिजीवितेसर्वजनसुखंस्यादित्यपिमहाफलम् ॥ अजीवितेतुदोषप्राप्तिश्चफलम् ॥ २३ ॥

अहोधनलोभेनदुष्टेनाऽनेनधार्मिकोराजानरक्षितःप्रजाश्चनाशिताइत्यपकीर्तिःस्यादित्यर्थः ॥ २४ ॥ इतिविचार्याऽधुनामयाकिंकर्तव्यमितिनिश्चेतुंयोगजज्ञानेनध्यानंकृतवांस्तस्मिंश्चध्याने
गतायुषंनृपतिंज्ञातवान् ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ विप्रशापभयाकुलइति ॥ यदिराजामयानदश्यतेतदाराजशापदाताब्राह्मणोमांशपेदितिभयाकुलइत्यर्थः ॥ योगेनकेनोपायेने
त्यर्थः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ मृत्युंगतंनष्टमितिजानन् ॥ जीवनेमतिंबुद्धिमास्थायेत्यर्थः ॥ ३६ ॥ भवेदितिइतिहेतोरित्यर्थः ॥ ३७ ॥ इतियद्येतस्य

प्रजानाशस्यपापंमेभविष्यतिमृतेनृपे ॥ अपकीर्तिश्चलोकेषुधनलोभाद्भविष्यति ॥ २४ ॥ इतिसंचिंत्यमनसाध्यानंकृत्वासकश्यपः ॥ गता
युषंचनृपतिंज्ञातवान्बुद्धिमत्तरः ॥२५॥ आपन्नमृत्युंराजानंज्ञात्वाध्यानेनकश्यपः ॥ गृहंययौसधर्मात्माधनमादायतक्षकात् ॥ २६ ॥ निवर्त्य
कश्यपंसर्पःसप्तमेदिवसेनृपम् ॥ हंतुकामोजगामाऽऽशुनगरंनागसाह्वयम् ॥ २७ ॥ शुश्रावनगरस्यांतेप्रासादस्थंपरीक्षितम् ॥ मणिमंत्रौषधैः
कामंरक्ष्यमाणमतंद्रितम् ॥ २८ ॥ चिंताविष्टस्तदानागोविप्रशापभयाकुलः ॥ चिंतयामासयोगेनप्रविशेयंगृहंकथम् ॥ २९ ॥ वंचयामिक
थंचैनंराजानंपापकारिणम् ॥ विप्रशापाद्धतंमूढंविप्रपीडाकरंशठम् ॥ ३० ॥ पांडवानांकुलेजातःकोऽपिनैतादृशोभवेत् ॥ तापसस्यगलेयेन
मृतःसर्पोनिवेशितः ॥ ३१ ॥ कृत्वाविगर्हितंकर्मजानन्कालगतिंनृपः ॥ रक्षकान्भवनेकृत्वाप्रासादमभिगम्यच ॥ ३२ ॥ मृत्युंवंचयतेराजा
वर्ततेऽद्यनिराकुलः ॥ तंकथंधक्षयिष्यामिविप्रवाक्येनचोदितः ॥ ३३ ॥ नजानातिचमंदात्मामरणेह्यनिवर्तनम् ॥ तेनासौरक्षकान्स्थाप्यसौ
धारूढोऽद्यमोदते ॥ ३४ ॥ यदिवैविहितोमृत्युर्दैवेनामिततेजसा ॥ सकथंपरिवर्तेतकृतैर्यत्नैस्तुकोटिभिः ॥ ३५ ॥ पांडवस्यचदायादोजान
न्मृत्युंगतंनृपः ॥ जीवनेमतिमास्थायस्थितःस्थानेनिराकुलः ॥ ३६ ॥ दानपुण्यादिकंराजाकर्तुमर्हतिसर्वथा ॥ धर्मेणहन्यतेव्याधिर्येनाऽऽयुः
शाश्वतंभवेत् ॥ ३७ ॥ नोचेन्मृत्युविधिंकृत्वास्नानदानादिकाःक्रियाः ॥ मरणंस्वर्गलोकायनरकायाऽन्यथाभवेत् ॥ ३८ ॥ द्विजपीडाकृतंपा
पंपृथग्वाऽस्यचभूपतेः ॥ विप्रशापस्तथाघोरआसन्नेमरणेकिल ॥ ३९ ॥ नकोऽपिब्राह्मणःपार्श्वेयएवंप्रतिबोधयेत् ॥ वेधसाविहितोमृत्युरनि
वार्यस्तुसर्वथा ॥ ४० ॥ इतिसंचिंत्यसर्पोऽसौस्वान्नागान्निकटेस्थितान् ॥ कृत्वातापसवेषांस्तान्प्राहिणोत्सुभुजंगमान् ॥ ४१ ॥ फलमूलादि
कंगृह्यराज्ञेनागोऽथतक्षकः ॥ स्वयंचकीटरूपेणफलमध्येससारह ॥ ४२ ॥ निर्गतास्तेतदानागाःफलान्यादायसत्वराः ॥ तेराजभवनंप्राप्य
स्थिताःप्रासादसन्निधौ ॥ ४३ ॥

मनसि नो चेत्तर्हिमृत्युविधिमासन्नमृत्योर्योविधिस्तंकृत्वास्नानदानादिक्रियाःकृत्वास्वर्गलोकायस्वर्गलोकंगंतुंमरणंप्रतीक्षते ॥ अन्यथास्नानादिक्रियाऽभावेमरणंनरकायभवेदितिभया
न्नचतथायंकरोतितस्मान्मृत्युंजितवानहमितिजानातीत्यर्थः ॥ ३८ ॥ द्विजपीडाकृतंपापमस्यजातंतथाविप्रशापोऽपिजातस्तावुभावप्यासन्नमरणेएवभवतोनान्यथातस्मादयमासन्न
मरणइत्यर्थः ॥ इदंस्वयंनजानात्येतादृशोमूढोऽयमितिभावः ॥ ३९ ॥ ४० ॥ ४१ ॥ गृह्येतिल्यबंतमार्षसंगृह्येत्यर्थः ॥ ससारगतवान् ॥ ४२ ॥ ४३ ॥

॥ ४४ ॥ ४५ ॥ ४६ ॥ राज्ञःअसंदर्शनमितिच्छेदः ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ किंकार्यमितिपृच्छध्वं प्रातरागमनंयुष्माकंभवत्विति शेषः ॥ ५४ ॥ ५५ ॥
॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ नमेभयमिति ॥ सप्तमदिवसस्याऽस्तंगतेसवितरितक्षकस्याभावेनतक्षकविषजन्यमरणभयस्यगतत्वादितिभावः ॥ ६० ॥ अथब्राह्मणशापसार्थक्याय
ग्रीवायामेनंकीटंस्थापयामिसचमांदशतुतेनदष्टेसतितक्षकसदृशकीटदंशनेनापियथाकथंचिद्ब्राह्मणवाक्यसार्थक्यंभविष्यतीत्यभिप्रायेणाह अंगीकरोमीति ॥ ब्राह्मणवाक्यनैरर्थक्याऽभावा

रक्षकास्तापसान्दृष्ट्वापप्रच्छुस्तच्चिकीर्षितम् ॥ ऊचुस्तेभूपतिंद्रष्टुंप्राप्ताःस्मोऽद्यतपोवनात् ॥ ४४ ॥ अभिमन्युसुतंवीरंकुलार्कंचारुदर्शनम् ॥
परिवर्धयितुंप्राप्तामंत्रैराथर्वणैस्तथा ॥ ४५ ॥ निवेदयध्वंराजानंदर्शनार्थंगतान्मुनीन् ॥ कृत्वाऽभिषेकान्यास्यामोदत्त्वामिष्टफलानिच ॥
॥ ४६ ॥ भारतानांकुलेक्काऽपिनदृष्टाद्वाररक्षकाः ॥ नश्रुतंतापसानांतुराज्ञोऽसंदर्शनंकिल ॥ ४७ ॥ आरोहामोवयंतत्रयत्रराजापरीक्षितः ॥
आशीर्भिर्वर्धयित्वैनंदत्ताज्ञाः प्रव्रजामहे ॥ ४८ ॥ सूतउवाच ॥ इत्याकर्ण्यवचस्तेषांतापसानांतुरक्षकाः ॥ प्रत्यूचुस्तान्द्विजान्मत्वानिदे
शंभूपतेर्यथा ॥ ४९ ॥ नाद्यवोदर्शनंविप्राराज्ञःस्यादितिनोमतिः ॥ श्वःसर्वतापसैरत्रत्वागंतव्यंनृपालये ॥ ५० ॥ अनारोहस्तुप्रासादोवि
प्राणांमुनिसत्तमाः ॥ विप्रशापभयाद्राज्ञाविहितोऽस्तिनसंशयः ॥ ५१ ॥ तदोचुस्तानथोविप्राःफलमूलजलानिच ॥ विप्राशिषश्चराज्ञेऽथग्रा
ह्यंतुसुरक्षकाः ॥ ५२ ॥ तेगत्वानृपतिंप्रोचुस्तापसानागताञ्जनाः ॥ राजोवाचाऽऽनयध्वंवैफलमूलादिकंचयत् ॥ ५३ ॥ पृच्छध्वंतापसा
न्कार्यंप्रातरागमनंपुनः ॥ प्रणामंकथयध्वंमेनाद्यसंदर्शनंमम ॥ ५४ ॥ तेगत्वाऽथसमादायफलमूलादिकंचयत् ॥ राज्ञेसमर्पयामासुर्बहुमा
नपुरःसरम् ॥ ५५ ॥ गतेषुतेषुनागेषुविप्रवेषाऽऽवृतेषुच ॥ फलान्यादायराजाऽसौसचिवानिदमब्रवीत् ॥ ५६ ॥ सुहृदोभक्षयंत्वद्यफलान्ये
तानिसर्वशः ॥ अद्म्यहंचैकमेतद्वैफलंविप्रार्पितंमहत् ॥ ५७ ॥ इत्युक्तातत्फलंदत्त्वासुहृद्भ्यश्चोत्तरासुतः ॥ करेकृत्वाफलंपक्वंददारनृपतिः
स्वयम् ॥ ५८ ॥ विदारितंफलंराज्ञातत्रक्रिमिरभूदणुः ॥ सकृष्णनयनस्ताम्रोदृष्टोभूपतिनास्वयम् ॥ ५९ ॥ तंदृष्ट्वानृपतिःप्राहसचिवान्वि
स्मितानथ ॥ अस्तमभ्येतिसविताविषादद्यनमेभयम् ॥ ६० ॥ अंगीकरोमितंशापंकृमिकोमांदशत्वयम् ॥ एवमुक्त्वासराजेंद्रोग्रीवायांसंन्य
वेशयत् ॥ ६१ ॥ अस्तंयातेदिवानाथेधृतःकंठेऽथकीटकः ॥ तक्षकस्तुतदाजातःकालरूपोभयानकः ॥ ६२ ॥ राजासंवेष्टितस्तेनदष्टश्चापि
महीपतिः ॥ मंत्रिणोविस्मयंप्राप्तारुरुदुर्भृशदुःखिताः ॥ ६३ ॥ घोररूपमहिंवीक्ष्यदुद्रुवुस्तेभयार्दिताः ॥ चुक्रुशूरक्षकाःसर्वेहाहाकारोमहान
भूत् ॥ ६४ ॥ वेष्टितोभोगिभोगेनविनष्टबहुपौरुषः ॥ नोवाचनृपतिःकिंचिन्नचचालोत्तरासुतः ॥ ६५ ॥

येत्यर्थः ॥ ६१ ॥ अस्तंयातेइति ॥ अस्तगमनसमयएवेतिभावः ॥ तथाचदिवैवमरणेनब्राह्मणशापोयथार्थोजातइतिबोध्यम् ॥ अंगीकरोमीत्यनेनराज्ञउन्मादश्चध्वनितः ॥ ६२ ॥
॥ ६३ ॥ ६४ ॥ नचचालधैर्यादितिशेषः ॥ ६५ ॥

॥ ६६ ॥ ६७ ॥ ६८ ॥ इतिश्रीदेवीभागवततिलकेद्वितीयस्कंधेदशमोऽध्यायः ॥ १० ॥ सार्धपंचाधिकैःषष्टिपद्यैश्चजनमेजयः ॥ सर्पसत्रेकृतोद्योगआस्तीकेननिवारितः ॥ १ ॥ गत
प्राणमिति॥ १॥प्रथमंदुर्मरणेनमृतस्यामंत्रकंदाहमाह गंगातीरेइति ॥ पश्चात्पालाशविधिनाअगुरुचंदनकाष्ठयुक्तायांचितायामध्यरोपयन्स्थापितवंतइत्यर्थः ॥ २ ॥ तत्रपालाशविधौहे
तुमाह दुर्मरणेति ॥ मरणंमरोदुर्मरोदुर्मृतिस्तेनमृतस्यौर्ध्वदेहिकाःक्रियाःसमंत्रकाश्चक्रुरित्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ददौविद्यांगायत्रींक्षत्रियजातेस्तस्मिन्कालेव्रतबंधस्य स

उत्थिताऽग्निशिखाघोराविषजातक्षकाननात् ॥ प्रजज्वालनृपंत्वाऽऽशुगतप्राणंचकारह ॥ ६६ ॥ हत्वाऽऽशुजीवितंराज्ञस्तक्षको गगनेगतः ॥ जगद्दग्धंतुकुर्वाणंदृष्ट्वाशुस्तंजनाइह ॥ ६७ ॥ सपपातगतप्राणोराजादग्धइवद्रुमः ॥ चुक्रुशुश्चजनाःसर्वेमृतंदृष्ट्वानराधिपम् ॥ ६८ ॥ इति श्रीदेवीभागवते महापुराणे द्वितीयस्कंधे परीक्षिन्मरणंनामदशमोऽध्यायः ॥ १० ॥ ॥ सूतउवाच ॥ गतप्राणंतुराजानंबालंपुत्रंसमीक्ष्यच ॥ चक्रुश्चमंत्रिणः सर्वेपरलोकस्यसत्क्रियाः ॥ १ ॥ गंगातीरेदग्धदेहंभस्मप्रायंमहीपतिम् ॥ अगुरुभिश्चाभियुक्तायांचितायामध्यरोपयन् ॥ २ ॥ दुर्मरेणमृतस्यास्यचक्रुश्चैवौर्ध्वदेहिकीम् ॥ क्रियांपुरोहितास्तस्यवेदमंत्रैर्विधानतः ॥ ३ ॥ ददुर्दानानिविप्रेभ्योगाःसुवर्णंयथोचितम् ॥ अन्नं बहुविधंतत्रवस्त्राणिविविधानिच ॥ ४ ॥ सुमुहूर्तेसुतंबालंप्रजानांप्रीतिवर्धनम् ॥ सिंहासनेशुभेतत्रमंत्रिणःसंन्यवेशयन् ॥ ५ ॥ पौरजानपदा लोकाश्चक्रुस्तंनृपतिंशिशुम् ॥ जनमेजयनामानंराजलक्षणसंयुतम् ॥ ६ ॥ धात्रेयीशिक्षयामासराजचिह्नानिसर्वशः ॥ दिनेदिनेवर्धमानःसब भूवमहामतिः ॥ ७ ॥ प्राप्तेचैकादशेवर्षेतस्मैकुलपुरोहितः ॥ यथोचितांददौविद्यांजग्राहसयथोचिताम् ॥ ८ ॥ धनुर्वेदंकृपःपूर्णंददावस्मैसुसं स्कृतम् ॥ अर्जुनाययथाद्रोणः कर्णायभार्गवोयथा ॥ ९ ॥ संप्राप्तविद्योबलवान्बभूवदुरतिक्रमः ॥ धनुर्वेदेतथावेदेपारगःपरमार्थवित् ॥ १० ॥ धर्मशास्त्रार्थकुशलःसत्यवादीजितेंद्रियः ॥ चकारराज्यंधर्मात्मापुराधर्मसुतोयथा ॥ ११ ॥ ततःसुवर्णवर्माख्योराजाकाशिपतिःकिल ॥ वपुष्टमां शुभांकन्यांददौपारीक्षितायच ॥ १२ ॥ सतांप्राप्याऽसितापांगींमुमुदेजनमेजयः ॥ काशिराजसुतांकांतांप्राप्यराजायथापुरा ॥ १३ ॥ विचि त्रवीर्योमुमुदेसुभद्रांचयथाऽर्जुनः ॥ विजहारमहीपालोवनेषूपवनेषुच ॥ १४ ॥ तयाकमलपत्राक्ष्याशच्याशतक्रतुर्यथा ॥ प्रजास्तस्यसुसं तुष्टाबभूवुःसुखलालिताः ॥ १५ ॥ मंत्रिणःकर्मकुशलाश्चक्रुःकार्याणिसर्वशः ॥ एतस्मिन्नेवकालेतुमुनिरुत्तंकनामकः ॥ १६ ॥ तक्षकेणप रिक्लिष्टोहस्तिनापुरमभ्यगात् ॥ वैरस्याऽपचितिंकोस्यप्रकुर्यादितिचिंतयन् ॥ १७ ॥

त्वात् ॥ ८ ॥ ९ ॥ तथावेदेस्वशाखायाम् । ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ तक्षकेणपरिक्लिष्टइति ॥ वैरस्यतक्षकेणकृतस्याऽपचितिंप्रतिक्रियामुत्तंकस्यगुरोःपत्न्यारा
जपत्नीकुंडलाऽऽनयनार्थमुत्तंकेप्रेषितेसचोत्तंकोराजपत्नींप्रार्थयित्वातयादत्तेकुंडलेसंगृह्यमार्गमध्येक्वचित्सरसिकुंडलेतीरेस्थापयित्वास्नानार्थमुत्ततार तस्मिन्नेवसमयेतक्षकोप्यागत्यकुंड
लेऽपहृतवाननंतरंमहतायासेनतेकुण्डलेउत्तंकेनलब्धेतद्दिनात्तक्षकेणसहोत्तंकस्यवैरमासीदितिकथामहाभारतेप्रसिद्धा ॥ १७ ॥

परीक्षितसुतोजन्मेजयःकुर्यादितिमत्वातंनृपंसमुपागतःसन्नभाषेइतिशेषः ॥ १८ ॥ १९ ॥ अतंत्रज्ञमशास्त्रज्ञंनहिशास्त्रज्ञःसन्पितृशत्रोःक्षयंनकुर्यादित्यर्थः ॥ किंवैरमिति ॥ यद्भवता वैरमुच्यतेतत्किमितिवदनतन्मयाज्ञातमस्तीत्यर्थः ॥ नकिंप्रतिकृतमिति ॥ वैरंज्ञात्वामयानतत्प्रतिकृतमितिनैवास्तीत्यर्थः । तथास्तिचेत्तदपिवदेत्यर्थः ॥ २० ॥ करोमिकरिष्यामि ॥ वर्तमानसामीप्येलट् ॥ २१ ॥ २२ ॥ २३ ॥ शापेनमृतस्यद्भेषस्तक्षकेणैवसंभवतीत्यर्थः ॥ २४ ॥ ब्राह्मणशापात्तक्षकेणदंशःकर्तव्यः ॥ संजीवयिताकश्यपोब्राह्मणोधनंदत्त्वा

परीक्षितसुतंमत्वातंनृपंसमुपागतः ॥ कार्याऽकार्यंनजानासिसमयेनृपसत्तम ॥ १८ ॥ अकर्तव्यंकरोष्यद्यकर्तव्यंनकरोषिवै ॥ किंत्वांसंप्रार्थयाम्यद्यगतामर्षनिरुद्यमम् ॥ १९ ॥ अवैरज्ञमतंत्रज्ञंबालचेष्टासमन्वितम् ॥ जनमेजयउवाच ॥ किंवैरंनमयाज्ञातंनकिंप्रतिकृतंमया ॥ २० ॥ तद्वदत्वंमहाभागकरोमियदनंतरम् ॥ उत्तंकउवाच ॥ पितातेनिहतोभूपतक्षकेणदुरात्मना ॥ २१ ॥ मंत्रिणस्त्वंसमाहूयपृच्छस्वपितृनाशनम् ॥ सूतउवाच ॥ तच्छ्रुत्वावचनंराजापप्रच्छमंत्रिसत्तमान् ॥ २२ ॥ ऊचुस्तेद्विजशापेनदष्टःसर्पेणवैमृतः ॥ जनमेजयउवाच ॥ शापोऽत्रकारणंराज्ञःशप्तस्यमुनिनाकिल ॥ २३ ॥ तक्षकस्यतुकोदोषोब्रूहिमेमुनिसत्तम ॥ उत्तंकउवाच ॥ तक्षकेणधनंदत्त्वाकश्यपःसन्निवारितः ॥ २४ ॥ नसकिंतक्षकोवैरीपितृहातवभूपते ॥ भार्या रुरोःपुराभूपदष्टासर्पेणसामृता ॥ २५ ॥ अविवाहितातुमुनिनाजीविताचपुनःप्रिया ॥ रुरुणाऽपिकृतातत्रप्रतिज्ञाचातिदारुणा ॥ २६ ॥ यंयंसर्पंप्रपश्यामि तंतंहन्म्यायुधेनवै ॥ एवंकृत्वाप्रतिज्ञांसशस्त्रपाणीरुरुस्तदा ॥ २७ ॥ व्यचरत्पृथिवींराजन्निघ्नन्सर्पान्यतस्ततः ॥ एकदासवनेघोरंडुंडुभंजरसान्वितम् ॥ २८ ॥ अपश्यद्दंडमुद्यम्यहंतुंतंसमुपाययौ ॥ अभ्यहन्नुषितोविप्रस्तमुवाचाथडुंडुभः ॥ २९ ॥ नाऽपराध्नोमितेविप्रकस्मान्मामभिहंसिवै ॥ रुरुरुवाच ॥ प्राणप्रियामेदयितादष्टासर्पेणसामृता ॥ ३० ॥ प्रतिज्ञेयंतदासर्पदुःखितेनमयाकृता ॥ डुंडुभउवाच ॥ नाहंदशामितेऽन्येवैयेदशंतिभुजंगमाः ॥ ३१ ॥ शरीरसमयोगेननमांहिंसितुमर्हसि ॥ उत्तंकउवाच ॥ श्रुत्वातांमानुषींवाणींसर्पेणोक्तांमनोहराम् ॥ ३२ ॥ रुरुःपप्रच्छकोऽसित्वंकस्माड्डुंडुभतांगतः ॥ सर्पउवाच ॥ ब्राह्मणोऽहंपुराविप्रसखामेखगमाऽभिधः ॥ ३३ ॥ विप्रोधर्मभृतांश्रेष्ठःसत्यवादीजितेंद्रियः ॥ समयावंचितोमौर्ख्यात्सर्पंकृत्वाचतार्णकम् ॥ ॥ ३४ ॥ भयंचप्रापितोऽत्यर्थमग्निहोत्रगृहेस्थितः ॥ तेनभीतेनशप्तोऽहंविह्वलेनाऽतिवेपिना ॥ ३५ ॥ भवसर्पोमंदबुद्धेयेनाहंधर्षितस्त्वया ॥ मयाप्रसादितोऽत्यर्थंसर्पेणाऽसौद्विजोत्तमः ॥ ३६ ॥

किमितिनिवारितः ॥ नचतदभावेतस्यकाचित्क्षतिरभूत्तस्मात्सएवतस्यापराधइत्यर्थः ॥ इत्थमपराधेसतक्षकोवैरीतवपितृहानकिमितिवदेत्याह नसकिमिति ॥ नन्वेतादृशापराधिनःशिक्षाकेनकृतेतिचेत्तत्राऽऽह भार्येति ॥ २५ ॥ २६ ॥ हन्मिहनिष्यामीत्यर्थः ॥ २७ ॥ डुंडुभमजगरम् ॥ २८ ॥ २९ ॥ तेतुभ्यंनापराध्नोमिद्रोहंकरोमि ॥ ३० ॥ इयमिति ॥ सर्पजातिर्हंतव्येत्येवंरूपेत्यर्थः ॥ दंशकसर्पविषयेसाप्रतिज्ञातवास्तिनाहंदंशकइत्याह नाहमिति ॥ ३१ ॥ ३२ ॥ खगमःखेचरइत्यन्वर्थनामा ॥ ३३ ॥ तार्णकंतृणनिर्मितंसर्पंकृत्वावंचितः ॥ ३४ ॥ मयाभयंप्रापितइतितात्पर्यम् ॥ ३५ ॥ ३६ ॥

॥ ३७ ॥ ३८ ॥ ३९ ॥ यज्ञादन्यत्रदयाकर्तव्या ॥ यज्ञेतुहिंसैवकर्तव्या ॥ नसायाज्ञिकीहिंसाहिंसाभवति अहिंसन्सर्वभूतान्यन्यत्रतीर्थेभ्यइतिश्रुतेरित्याह ॥ यज्ञादन्यत्रेति॥४०॥एवं
प्रकारेणरुरुणाबालास्त्रीमृतासंजीविताऽऽयुषोऽर्धदानेनततोविवाहिताच ॥ पुनरनंतरंपूर्ववैरमनुस्मरन्सर्पाणांतेनकदनंनाशनंकृतम् ॥ ततःशापांतंकृत्वाहिंसनंपरित्यक्तमित्यन्वयः॥४१॥
त्वंतुवैरमिति ॥ इदमाश्चर्यममभातीत्यर्थः ॥ ४२ ॥ ४३ ॥ ४४ ॥ यावत्तान्नहनिष्यसीतिस्वशत्रुनाशनेतस्यवासनायाअवशिष्टत्वात्तयावासनयादुर्गतिर्युक्तैव ॥ अंबामखोवक्ष्यमाणोन

मामुवाचाथतत्क्रोधात्किंचिच्छांतिमवाप्यच ॥ रुरुस्तेमोचिताशापस्यास्यसर्पभविष्यति ॥ ३७ ॥ प्रमतेस्तुसुतोनूनमितिमांसोऽब्रवीद्वचः ॥
सोऽहंसर्पोरुरुस्त्वंचशृणुमेपरमंवचः ॥ ३८ ॥ अहिंसापरमोधर्मोविप्राणांनात्रसंशयः॥ दयासर्वत्रकर्तव्याब्राह्मणेनविजानता ॥ ३९ ॥ यज्ञाद
न्यत्रविप्रेंद्रनहिंसायाज्ञिकीमता ॥ उत्तंकउवाच ॥ सर्पयोनेर्विनिर्मुक्तोब्राह्मणोऽसौरुरुस्ततः ॥ ४० ॥ कृत्वातस्यचशापांतंपरित्यक्तंचहिंसन
म् ॥ विवाहितातेनबालामृतासंजीवितापुनः ॥ ४१ ॥ कदनंसर्वसर्पाणांकृतंवैरमनुस्मरन् ॥ त्वंतुवैरंसमुत्सृज्यवर्तसेपन्नगेष्वथ ॥ ४२ ॥ विम
न्युर्भरतश्रेष्ठपितृघातकरेषुवै ॥ अंतरिक्षेमतस्तातः स्नानदानविवर्जितः ॥ ४३ ॥ तस्योद्धारंचराजेंद्रकुरुहत्वाऽथपन्नगान् ॥ पितुर्वैरंनजानाति
जीवन्नेवमृतोहिसः॥४४॥दुर्गतिस्तेपितुस्तावद्यावत्तान्नहनिष्यसि ॥ अंबामखमिषंकृत्वाकुरुयज्ञंनृपोत्तम ॥४५॥ सर्पसत्रंमहाराजपितुर्वैरमनु
स्मरन् ॥ सूतउवाच॥इतितस्यवचःश्रुत्वाराजाजन्मेजयस्तदा ॥ ४६॥ नेत्राभ्यामश्रुपातंचचकारातीवदुःखितः ॥ धिङ्मामस्तुसुदुर्बुद्धेर्वृथा
मानकरस्यवै ॥४७॥ पितायस्यगतिंघोरांप्राप्तःपन्नगपीडितः ॥ अद्याहंमखमारभ्यकरोम्यपचितिंपितुः ॥ ४८ ॥ हत्वासर्पानसंदिग्धोदीप्य
मानेविभावसौ ॥आहूयमंत्रिणःसर्वान्राजावचनमब्रवीत् ॥ ४९ ॥ कुर्वंतुयज्ञसंभारंयथाऽहंमंत्रिसत्तमाः ॥ गंगातीरेशुभांभूमिमापयित्वाद्विजो
त्तमैः ॥ ५० ॥ कुर्वंतुमंडपंस्वस्थाःशतस्तंभंमनोहरम् ॥ वेदीयज्ञस्यकर्तव्याममाद्यसचिवाःखलु ॥ ५१ ॥ तदंगत्वेविधेयोवैसर्पसत्रःसुविस्त
रः ॥ तक्षकस्तुपशुस्तत्रहोतोत्तंकोमहामुनिः ॥ ५२ ॥ शीघ्रमाहूयतांविप्राःसर्वज्ञावेदपारगाः ॥ सूतउवाच ॥ मंत्रिणस्तुतदाचक्रुर्भूपवाक्यैर्विच
क्षणाः ॥ ५३ ॥ यज्ञस्यसर्वसंभारंवेदिंयज्ञस्यविस्तृताम् ॥ हवनेवर्तमानेतुसर्पाणांतक्षकोगतः ॥५४ ॥ इंद्रंप्रतिभयार्तोऽहंत्राहिमामितिचाब्रवी
त् ॥ भयभीतंसमाश्वास्यस्वासनेसंनिवेश्यच ॥ ५५ ॥ ददावभयमत्यर्थंनिर्भयोभवपन्नग ॥ तमिंद्रशरणंज्ञात्वामुनिर्दत्ताभयंतथा ॥ ५६ ॥

वरात्रोत्सवः ॥ ४५ ॥ जन्मेजयइति ॥ जन्मनैवातिशुद्धेनशत्रूनेजितवान्यतः ॥ एजृकंपनेधातोर्हिजन्मेजयइतिश्रुतः इतिवचनात् ॥ शकंध्वादित्वात्पररूपेजन्मेजयइत्यपिसाधु
॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ मापयित्वेति परिच्छिद्येत्यर्थः ॥ ५० ॥ ५१ ॥ तदंगत्वेसतितादृशवेद्याद्यङ्गत्वेसतिसर्पसत्रोविधेयोनाऽन्यथेत्यर्थः ॥ पुंस्त्वमार्षम् ॥ ५२ ॥ ५३ ॥
५४ ॥ ५५ ॥ ५६ ॥

उत्तंकोह्वयत्आहूतवान्सेंद्रंतक्षकंप्रथमतःपुरोनुवाक्यादिभिर्निमंत्रणंकृत्वेत्यर्थः ॥ ९७ ॥ ९८ ॥ वांछितैरिति ॥ वांछितंवृण्वित्युक्तवानित्यर्थः ॥ ५९ ॥ ६० ॥ वैशंपायनइति प्रथमां तंछांदसत्वाल्लुप्तविभक्त्यंतम् ॥ ६१ ॥ भारतश्रवणेनापिशांतिर्नजातेतिव्यासंपप्रच्छेत्याह । व्यासमिति ॥ ६२ ॥ ६३ ॥ संग्रामेमहतिरणे ॥ रणेसामान्ये ॥ ६४ ॥ मरणंमेपितुर्नाऽभूदितिगृहेवाविधिपूर्वकमित्यनेनान्वेति ॥ ६५ ॥ दुर्गतिंगतइति ॥ परीक्षितोदुर्गतिश्चमहाभारतेप्युक्ता ॥ अपृच्छत्सतदाराजामंत्रिणस्तान्सुदुःखितः ॥ उत्तंकस्यैवसान्निध्येपितुःस्वर्गगतिंप्रतीति ॥ इतिश्रीदेवीभागवततिलकेद्वितीयस्कंधेएकादशोऽध्यायः ॥ ११ ॥ चतुःषष्टिश्लोकवर्यैरास्तीकस्यसमुद्भवः ॥ श्रीमद्भागवतस्यापिमाहात्म्यमतिकथ्यते ॥ १ ॥

उत्तंकोह्वयदुद्विग्नःसेंद्रंकृत्वानिमंत्रणम् ॥ स्मृतस्तदातक्षकेणयायावरकुलोद्भवः ॥ ५७ ॥ आस्तीकोनामधर्मात्माजरत्कारुसुतोमुनिः ॥ तत्रागत्यमुनेर्बालस्तुष्टावजनमेजयम् ॥ ५८ ॥ राजातमर्चयामासदृष्ट्वाबालंसुपंडितम् ॥ अर्चयित्वानृपस्तंतुछंदयामासवांछितैः ॥ ५९ ॥ सतुवव्रेमहाभागयज्ञोऽयंविरमत्विति ॥ सत्यबद्धोनृपस्तेनप्रार्थितश्चपुनस्तथा ॥ ६० ॥ होमंनिवर्तयामाससर्पाणांमुनिवाक्यतः ॥ भारतंश्रावयामासवैशंपायनविस्तरात् ॥ ॥ ६१ ॥ श्रुत्वाऽपिनृपतिःकामंनशांतिमभिजग्मिवान् ॥ व्यासंपप्रच्छभूपालोममशांतिःकथंभवेत् ॥ ६२ ॥ मनोऽतिदह्यतेकामंकिंकरोमिवदस्वमे ॥ पितामेदुर्भगस्यैवमृतःपार्थसुतात्मजः ॥६३॥ क्षत्रियाणांमहाभागसंग्रामेमरणंवरम् ॥ रणेवामरणंव्यासगृहेवाविधिपूर्वकम् ॥ ६४ ॥ मरणंनपितुर्मेऽभूदंतरिक्षेमृतोऽवशः ॥ शांत्युपायंवदस्वात्रत्वंचसत्यवतीसुत ॥ ६५ ॥ यथास्वर्गंव्रजेदाशुपितामेदुर्गतिंगतः ॥ इति श्रीदेवीभागवते महापुराणे द्वितीयस्कंधेएकादशोऽध्यायः ॥ ११ ॥ सूतउवाच ॥ तच्छ्रुत्वावचनंतस्यव्यासःसत्यवतीसुतः ॥ उवाचवचनंतत्रसभायांनृपतिंचतम् ॥ १ ॥व्यासउवाच ॥ शृणुराजन्प्रवक्ष्यामिपुराणंगुह्यमद्भुतम् ॥ पुण्यंभागवतंनामनानाख्यानयुतंशिवम् ॥२॥ अध्यापितंमयापूर्वंशुकायात्मसुतायवै ॥ श्रावयामिनृपत्वांहिरहस्यंपरमंमम ॥ ३ ॥ धर्मार्थकाममोक्षाणांकारणंश्रवणात्किल॥ शुभदंसुखदंनित्यंसर्वागमसमुद्धृतम् ॥ ४ ॥ जनमेजयउवाच ॥ आस्तीकोऽयंसुतःकस्यविघ्नार्थंकथमागतः ॥ प्रयोजनंकिमत्रास्यसर्पाणांरक्षणेप्रभो ॥ ५ ॥ कथयैतन्महाभागविस्तरेणकथानकम् ॥ पुराणंचतथासर्वंविस्तराद्वदसुव्रत ॥ ६ ॥ व्यासउवाच ॥ जरत्कारुर्मुनिःशांतोनचकारगृहाश्रमम् ॥ तेनदृष्टावनेगर्तेलंबमानाःस्वपूर्वजाः ॥ ७ ॥ ततस्तमाहुःकुरुपुत्रदारान्यथाचनःस्यात्परमाहितृप्तिः ॥ स्वर्गेव्रजामःखलुदुःखमुक्तावयंसदाचारयुतेसुतेवै ॥ ८ ॥

तच्छ्रुत्वेति ॥ भारतादिश्रवणेनममचित्तशांतिर्नजातेतिममपितादुर्गतिंगतइतिचजन्मेजयवाक्यंश्रुत्वेत्यर्थः ॥ १ ॥ २ ॥ ३ ॥ श्रवणात्कारणमित्यन्वयः ॥ सर्वागमसमुद्धृतं सर्ववेदेभ्यःसारंगृहीत्वाकृतमित्यर्थः ॥ ४ ॥ विघ्नार्थंसर्पसत्रंविघ्नार्थम् ॥ ५ ॥ इदंप्रथमतउक्त्वाऽनंतरंसर्वं पुराणंवदेत्यर्थः ॥ ६ ॥ स्वपूर्वजाःस्ववंशजाः ॥ ७ ॥ ततस्तमाहुरिति ॥ तंजरत्कारुंतत्पितरआहुःयेनदारकरणेननोऽस्माकंतृप्तिःस्यात्तथाकुर्वित्यर्थः ॥ तथाचत्वयिसुतेसतिवयंस्वर्गंव्रजामस्तथाकुर्वित्यर्थः ॥ ८ ॥

इत्थंपूर्वजवाक्यंश्रुत्वाजरत्कारुस्तानाह ॥ सतानिति ॥ समानांनाम्नासमानांयस्याःकन्यायानाममनामचसमानमेकमस्तिपुनरयाचितांमयाप्रार्थितांपुनरतिवशानुगामतिवश्यामेताह शींकन्यांयद्यहंलभेप्राप्नुयांतर्हिगृहारंभंविवाहंकरोमिकरिष्यामीत्यर्थः ॥ ९ ॥ अग्नौपतंत्वितिमात्राशप्ताइत्यर्थः ॥१०॥ तत्रकामाताकथंवाशप्ताइतिसर्ववृत्तांतमाह ॥ कश्यपस्येति ॥ ऊचतुर्वक्ष्यमाणम् ॥ ११ ॥ किंतत्तदाह ॥ तंदृष्ट्वेति ॥ १२ ॥ १३ ॥ दासीभावायेति ॥ यस्याःपराभवःसातस्यादासीतिदासीभवनायदिव्यंपणंकुर्वित्यर्थः ॥ १४ ॥ वालानश्वस्यके

सतानुवाचाथलभेसमानामयाचितांचातिवशानुगांच ॥ तदागृहारंभमहंकरोमिब्रवीमितथ्यंममपूर्वजावै ॥९॥ इत्युक्त्वाताञ्जरत्कारुर्गतस्तीर्थान्प्रतिद्विजः॥तदैवपन्नगाःशप्तामात्राऽग्नौनिपतंत्विति ॥१०॥ कश्यपस्यमुनेःपत्न्यौकद्रूश्चविनतातथा ॥ दृष्ट्वाऽऽदित्यरथेचाश्वमूचतुश्चपरस्परम्॥११॥ तंदृष्ट्वाचतदाकद्रूर्विनतामिदमब्रवीत्॥किंवर्णोऽयंहयोभद्रेसत्यंप्रब्रूहिमाचिरम्॥१२॥ विनतोवाच ॥श्वेतएवाश्वराजोऽयंकिंवात्वंमन्यसेशुभे॥ब्रूहिवर्णंत्वमप्यस्यततस्तुविपणावहे॥१३॥कद्रूरुवाच॥कृष्णवर्णमहंमन्येहयमेनंशुचिस्मिते॥एहिसार्धंमयादिव्यंदासीभावायभामिनि॥१४॥सूतउवाच॥कद्रूश्चस्वसुतानाहसर्वान्सर्पान्वशेस्थितान्॥वालाञ्छयामान्प्रकुर्वंतुयावंतोऽश्वशरीरके॥१५॥नेतिकेचनतत्राहुस्तानथाऽसौशशापह ॥ जनमेजयस्ययज्ञेवैगमिष्यथहुताशनम् ॥१६॥ अन्येचक्रुर्हयं सर्पाःकर्बुरंवर्णभोगकैः॥वेष्टयित्वाऽस्यपुच्छंतुमातुःप्रियचिकीर्षया ॥१७॥भगिन्यौचसुसंयुक्तेगत्वाददृशतुर्हयम् ॥ कर्बुरंतंहयंदृष्ट्वाविनताचातिदुःखिता ॥१८ ॥ तदाऽऽजगामगरुडःसुतस्तस्यामहाबलः॥ सदृष्ट्वामातरंदीनामपृच्छत्पन्नगाशनः ॥१९॥ मातःकथंसुदीनाऽसिरुदितेवविभासिमे ॥ जीवमानेमयिसुतेतथाऽन्यैरविसारथौ ॥२०॥ दुःखिताऽसिततोवांधिग्जीवितंचारुलोचने॥किंजातेनसुतेनाथयदिमातासुदुःखिता॥२१॥शंसमेकारणंमातःकरोमिविगतज्वराम्॥विनतोवाच॥सपत्न्यादास्यहंपुत्रकिंब्रवीमिवृथाक्षता॥२२॥वहमांसाब्रवीत्यद्यतेनाऽस्मिदुःखितासुत।।गरुडउवाच।।वहिष्येऽहंतत्रकिलयत्रसागंतुमुत्सुका॥२३॥माशोकंकुरुकल्याणिनिश्चितांत्वांकरोम्यहम्॥व्यासउवाच॥इत्युक्त्वासागतापार्श्वंकद्रोश्चविनतातदा॥२४॥ दासीभावमपाकर्तुंगरुडोऽपिमहाबलः ॥ उवाहतांसपुत्रां वैसिंधोःपारंजगामह ॥२५ ॥ गत्वातांगरुडःप्राहब्रूहिमातर्नमोस्तुते ॥ कथंमुच्येतमेमातादासीभावादसंशयम्॥ २६ ॥

शान् ॥ श्यामान्स्वकृष्णशरीरवेष्टनेन ॥ १५ ॥ गमिष्यथपतथेत्यर्थः ॥ १६ ॥ कर्बुरंवहुलकृष्णवर्णकम् ॥ वर्णभोगकैर्नानावर्णविशिष्टस्वशरीरैः ॥ १७ ॥ १८ ॥ १९ ॥ रविसारथिररुणः ॥ २० ॥वांगरुडाऽरुणयोः ॥२१ ॥ वृथाक्षताव्यर्थखंडिताऽहंसपत्न्यादासीजातातततो दासीभावादधिकंदुःखंकिंब्रवीमि ॥ वृथाकृतेत्यपिपाठः ॥२२॥ वहमामिति ॥ स्वस्कंधेमांस्थापयित्वायत्रदेशेगंतुमिच्छामितंदेशंमांवहप्रापयेत्यर्थः ॥ २३ ॥ २४ ॥ २५ ॥ कथंमुच्येततद्वदेत्यर्थः ॥ २६ ॥

॥ २७ ॥ २८ ॥ २९ ॥ संजहाराऽपहृतवानित्यर्थः ॥ यदासर्पाःस्नातुंस्नानंकर्तुंगतास्तदेत्यर्थः ॥ विपतेःपक्षिराजस्य ॥ ३० ॥ लीढाअमृतकुंभस्थानस्थितानांकुशानाममृतद्रवयुक्तत्व बुद्ध्याआस्वादिताजिह्वया ततःकुशानांतीक्ष्णाग्रत्वान्मध्येजिह्वाःस्फालिताः ॥ ३१ ॥ ३२ ॥ महामुनिरस्तीतिशेषः ॥ सनामिकांसमाननामिकांजरत्कारुनामिकामित्यर्थः ॥ ३३ ॥

कद्रूरुवाच ॥ अमृतंदेवलोकात्त्वंबलादानीयमेसुतान् ॥ समर्पयसुताऽद्याऽऽशुमातरंमोचयाऽबलाम् ॥ २७ ॥ व्यासउवाच ॥ इत्युक्तःप्रययौ शीघ्रमिंद्रलोकंमहाबलः ॥ कृत्वायुद्धंजहाराऽऽशुसुधाकुंभंखगोत्तमः ॥ २८ ॥ समानीयाऽमृतंमात्रेवैनतेयःसमर्पयत् ॥ मोचितावितनातेनदा सीभावादसंशयम् ॥२९॥ अमृतंसंजहारेंद्रःस्नातुंसर्पायदागताः ॥ दासीभावाद्विनिर्मुक्ताविनताविपतेर्बलात् ॥३०॥ तत्राऽऽस्तीर्णाःकुशास्तै स्तुलीढाःपन्नगनायकैः ॥ द्विजिह्वास्तेसुसंपन्नाःकुशाग्रस्पर्शमात्रतः ॥ ३१ ॥ मात्राशप्ताश्चयेनागावासुकिप्रमुखाःशुचा ॥ब्रह्माणंशरणंगत्वा तेह्योचुःशापजंभयम्॥३२॥तानाहभगवान्ब्रह्माजरत्कारुर्महामुनिः ॥ वासुकेर्भगिनींतस्मैअर्पयध्वंसनामिकाम्॥३३॥तस्यांयोजायतेपुत्रःसव स्त्राताभविष्यति॥ आस्तीकइतिनामाऽसौभवितानाऽत्रसंशयः॥ ३४ ॥ वासुकिस्तुतदाकर्ण्यवचनंब्रह्मणःशिवम्॥वनंगत्वासुतांतस्मैददौविन यपूर्वकम्॥३५॥ समानांतांमुनिर्ज्ञात्वाजरत्कारुरुवाचतम् ॥ अप्रियंमेयदाकुर्यात्तदातांसंत्यजाम्यहम् ॥ ३६ ॥वाग्बंधंतादृशंकृत्वामुनिर्जग्रा हतांस्वयम्॥दत्त्वाचवासुकिःकामंभवनंस्वंजगामह॥३७॥कृत्वापर्णकुटींशुभ्रांजरत्कारुर्महावने॥तयासहसुखंप्रापरममाणःपरंतप॥३८॥एकदा भोजनंकृत्वासुप्तोऽसौमुनिसत्तमः॥ भगिनीवासुकेस्तत्रसंस्थितावरवर्णिनी ॥३९॥ नसंबोधयितव्योऽहंत्वयाकांतेकथंचन ॥ इत्युक्त्वातुगतो निद्रांमुनिस्तांसुदतींतदा ॥ ४० ॥ रविरस्तगिरिंप्राप्तःसंध्याकालउपस्थिते ॥ किंकरोमिनमेशांतिस्त्यजेन्मांबोधितःपुनः ॥ ४१ ॥ धर्मलो पभयाद्भीताजरत्कारुरचिंतयत् ॥ नोचेत्प्रबोधयाम्येनंसंध्याकालोवृथाव्रजेत् ॥ ४२ ॥ धर्मनाशाद्वरंत्यागस्तथाऽपिमरणंध्रुवम् ॥ धर्महानि र्नराणांहिनरकायभवेत्पुनः ॥४३॥ इतिसंचिंत्यसाबालातंमुनिंप्रत्यबोधयत् ॥ संध्याकालोऽपिसंजातउत्तिष्ठोत्तिष्ठसुव्रत॥४४॥उत्थितोऽसौमु निःकोपात्तामुवाचव्रजाम्यहम् ॥ त्वंतुभ्रातृगृहंयाहिनिद्राविच्छेदकारिणि ॥४५॥ वेपमानाऽब्रवीद्वाक्यमित्युक्तामुनिनातदा ॥ भ्रात्रादत्तायद र्थंतत्कथंस्यादमितप्रभ ॥४६॥ मुनिःप्राहजरत्कारुंतदस्तीतिनिराकुलः ॥ गतासामुनिनात्यक्तावासुकेःसदनंतदा॥४७॥पृष्टाभ्रात्राब्रवीद्वाक्यं यथोक्तंपतिनातदा ॥ अस्तीत्युक्त्वाचहित्वामांगतोऽसौमुनिसत्तमः ॥ ४८ ॥

॥ ३४ ॥ ३५ ॥ तंवासुकिम् ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ जरत्कारुर्जरत्कारुमुनेःपत्नी ॥ ४२ ॥ धर्मनाशापेक्षयाममत्यागंकरिष्यति अथवाममरणंस्यादिदंवरं नतुधर्मनाशइत्यर्थः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ तदस्तीतितवभ्रातुर्यदिष्टःपुत्रःसतवगर्भेऽस्तीत्यर्थः ॥ ४७ ॥ ४८ ॥

॥ ४९ ॥ ५० ॥ ५१ ॥ भव्यंकृतंसम्यक्कृतमित्यर्थः ॥ ५२ ॥ यत्त्वयोक्तंभारतंसकलंश्रुतंदानानिनानाविधानिदत्तानितथाऽपिमेचित्तशांतिर्नजाता नवापितुःस्वर्गोऽभूदिति तत्तथै
वाऽस्तीत्याह । भारतंसकलमिति ॥ ५३ ॥ अद्याऽप्येभिःकर्मभिरपित्वयानकुलंपावितम् ॥ अतोमयायदुच्यतेतत्त्वत्कल्याणार्थंतच्छृणुष्वेत्यभिप्रायः ॥ ५४ ॥ तत्किंतदाह ॥ देव्याश्चा
ऽऽयतनमिति ॥ तदुक्तंशिवपुराणे योदेवींस्थापयेत्स्कंदप्रासादेभक्तिभावतः ॥ त्रैलोक्यंस्थापितंतेनयतःसर्वमयीशिवा ॥ नानेनसदृशोधर्मोदेवीस्थापनकर्मणा ॥ तुष्टायांखलुतस्यांतुसं
तुष्टंभुवनत्रयम् ॥ यःकरोतिनरोभक्त्यादेवीप्रासादमद्भुतम् ॥ सकोटिकुलमुद्धृत्यमणिद्वीपेविराजते ॥ कुलकोटिसमायुक्तोदेवीलोकेवसेन्नरः ॥ ज्ञानंदिव्यंपरंप्राप्यकैवल्यंमोक्षमाप्नुया
त् ॥ इत्यादिवचनानिपुराणान्तरेष्वपिद्रष्टव्यानि ॥ ५५ ॥ राज्यंचकारान्मोक्षंच ॥ ५६ ॥ देवीमखंनवरात्रोत्सवादिकंज्योतिष्टोमादिकंकोटिहोमादिकंचदेवीप्रीत्यर्थंकृतंदेवीमखश

वासुकिस्तुतदाकर्ण्यसत्यवाग्मुनिरित्युत ॥ विश्वासंचपरंकृत्वाभगिनींतांसमाश्रयत् ॥४९॥ ततःकालेनकियताजातोऽसौमुनिबालकः ॥ आ
स्तीकइतिनामाऽसौविख्यातःकुरुसत्तम॥५०॥तेनाऽयंरक्षितोयज्ञस्तवपार्थिवसत्तम ॥ मातृपक्षस्यरक्षार्थंमुनिनाभावितात्मना ॥५१॥ भव्यं
कृतंमहाराजमानितोऽयंत्वयामुनिः ॥ यायावरकुलोत्पन्नोवासुकेर्भगिनीसुतः ॥ ५२ ॥ स्वस्तितेऽस्तुमहाबाहोभारतंसकलंश्रुतम् ॥ दानानि
बहुदत्तानिपूजितामुनयस्तथा ॥ ५३ ॥ कृतेनसुकृतेनापिनपितास्वर्गतिंगतः ॥ पावितंनकुलंकृत्स्नंत्वयाभूपतिसत्तम ॥ ५४ ॥ देव्याश्चाऽऽय
तनंभूपविस्तीर्णंकुरुभक्तितः ॥ येनवैसकलासिद्धिस्तवस्याज्जनमेजय ॥ ५५ ॥ पूजितापरयाभक्त्याशिवासकलदासदा ॥ कुलवृद्धिकरोत्येव
राज्यंचसुस्थिरंसदा ॥ ५६ ॥ देवीमखंविधानेनकृत्वापार्थिवसत्तम ॥ श्रीमद्भागवतंनामपुराणंपरमंशृणु ॥ ५७ ॥ त्वामहंश्रावयिष्यामिकथां
परमपावनीम् ॥ संसारतारिणींदिव्यां नानारससमाहृताम् ॥ ५८ ॥ नश्रोतव्यंपरंचास्मात्पुराणाद्विद्यतेभुवि ॥ नाराध्यंविद्यतेराजन्देवीपा
दांबुजादृते ॥ ५९ ॥ तेसभाग्याःकृतप्रज्ञाधन्यास्तेनृपसत्तम ॥ येषांचित्तेसदादेवीवसतिप्रेमसंकुले ॥ ६० ॥ सुदुःखितास्तेदृश्यंतेभुविभारत
भारते ॥ नाराधितामहामायायैर्जनैश्चसदांऽबिका ॥ ६१ ॥ ब्रह्मादयःसुराःसर्वेयदाराधनतत्पराः ॥ वर्ततेसर्वदाराजंस्तांनसेवेतकोजनः ॥६२॥

ब्देनोच्यते॥तंदेवीमखंकृत्वाश्रीदेवीभागवतंशृणु॥अनेनवचनेननवरात्रोत्सवेदेवीभागवतपारायणविधिःप्रदर्शितः॥अतोऽवश्यंनवरात्रचतुष्टयेदेवीभागवतपारायणंकर्तव्यंश्रोतव्यंच॥५७॥
किंफलंतच्छ्रवणेनेतिचेत्संसारतारिणीमिति ॥ केवलंदेवीभागवतश्रवणेनैवदेवीप्रसादेजातेसंसारान्मुक्तोभवतीतिमहाफलंश्रवणेनेतिभावः ॥ ५८ ॥ अस्मात्पुराणादधिकंसमंवाऽन्यत्पु
राणंश्रोतव्यंनैवभुविविद्यते ॥ अस्यपुराणस्यसाम्यावस्थमायोपाधिकब्रह्मप्रतिपादकत्वादन्येषांचपुराणानामेकैकसत्त्वादिगुणोपाधिहरिहरब्रह्मादिप्रतिपादकत्वात् ॥ अतएवसाम्याव
स्थमायोपाधिकब्रह्मरूपिण्याभगवत्याएकैकसत्त्वादिगुणोपाधिहरिहराद्यपेक्षयासर्वोत्कृष्टत्वादेवदेवीपादांबुजादृतेआराध्यंनैवास्ति तदेवसर्वैराराध्यमितिभावः ॥ ५९ ॥ ६० ॥ ६१ ॥
मनुष्यैर्भगवतिसर्वदाऽऽराध्येत्यत्रकिंवक्तव्यमितिकैमुतिकन्यायेनाऽऽह । ब्रह्मादयइति ॥ ६२ ॥

विष्णवेयदनुत्तमामिति ॥ पूर्वोक्तार्धश्लोकात्मकंयद्भागवतंसाक्षाद्भगवत्यास्वमुखेनैवविष्णवेउपदिष्टंयस्मात्तस्मादनेनसदृशंमहाफलंकिमन्यत्स्यान्नाकिमपीतिभावः ॥ ६३ ॥ यदुक्तंममचि त्तशांतिर्नजातापितॄणामुद्धारोऽपिनजातइति तत्राऽऽह । तेनश्रुतेनेति ॥ ६४ ॥ श्रीमच्छैवकुलोत्पन्नो रंगनाथात्मजः सुधीः ॥ श्रीलक्ष्मीगर्भसंभूतोनीलकंठोभिधानतः ॥ १ ॥ देवी

यइदंशृणुयान्नित्यंसर्वान्कामानवाप्नुयात् ॥ भगवत्यासमाख्यातंविष्णवेयदनुत्तमम् ॥ ६३ ॥ तेनश्रुतेनतेराजंश्चित्तशांतिर्भविष्यति ॥ पितॄणां चाऽक्षयःस्वर्गःपुराणश्रवणाद्भवेत् ॥ ६४ ॥ इति श्रीदेवीभागवते महापुराणेद्वितीयस्कंधेश्रोतृप्रवक्तृप्रसंगोनामद्वादशोऽध्यायः ॥ १२ ॥ स्कंधश्चायंसमाप्तः ॥ २ ॥ ॥ द्वाविंशत्यधिकसंख्यैःपद्यैःसप्तशतैःशुभैः ॥ श्रीमद्व्यासमुखोद्गीतैर्द्वितीयस्कंधईरितः ॥ १ ॥

भागवतस्यास्यव्याख्यानराहितस्यच ॥ तिलकाख्यांमहाव्याख्यां सम्यग्यःकृतवाञ्छुभाम् ॥ २ ॥ स्कंधोद्वितीयस्तस्यास्तुसमाप्तोऽभूच्छुभार्थदः ॥ ॥ इतिश्रीशैवकुलोत्पन्नरंगनाथात्मज श्रीलक्ष्मीगर्भजनीलकंठकृतेदेवीभागवतव्याख्यानेतिलकाभिधेद्वितीयस्कंधेद्वादशोऽध्यायःसमाप्तः ॥ १२ ॥ श्रीमहालक्ष्मीःप्रसन्नाऽस्तु ॥

इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मजक्षेमराजेन स्वकीये "श्रीवेङ्कटेश्वर"
(स्टीम्) मुद्रणालये मुद्रितम्। संवत् १९७५.

श्रीगणेशाय नमः ॥ श्रीदक्षिणामूर्तिगुरुभ्यो नमः ॥ मतौ या तिष्ठंती भवति च मतेरंतरतरा न किंचिज्जानाति स्वयमपि मतिर्यामविषयम् ॥ मतिर्यस्या देहः स्वयमपि मतिं प्रेरयति या नमो हृल्लेखायै सकलनिगमोत्तंसमणये ॥ १ ॥ तरुणेंदुमौलितरुणीमरुणां करुणारसेन परिपूर्णाम् ॥ वंदे समंदहसितामंकुशपाशौवराभयेदधतीम् ॥ २ ॥ नमः श्रीशंकराचार्यपादाब्जायोपकारिणे ॥ यस्य प्रत्युपकाराय नम इत्येव केवलम् ॥ ३ ॥ श्रीमल्लक्ष्मवतीं लक्ष्मीं मातरं देशिकोत्तमाम् ॥ पितरं रंगनाथाख्यंदेशिकोत्तममाश्रये ॥ ४ ॥ काशीनाथं गुरुं नत्वा श्रीधराख्यं गुरुं तथा ॥ अन्ये च संति गुरवस्तान्सर्वानभिवाद्य च ॥ ५ ॥ रत्नजीप्रेरितेनैव पुराणान्यवलोक्य च ॥ शैवोपनामकेनैव नीलकंठेन केनचित् ॥ ६ ॥ देवीभागवतस्यास्य व्याख्यानरहितस्य च ॥ व्याख्यानं क्रियते सम्यक्तिलकाख्यंमहत्तरम् ॥ ७ ॥ तत्र तावत्पुराणेषु भागवतद्वयं प्रसिद्धम्–एकंमहापुराणांतर्गतमपरमुपपुराणांतर्गतम् ॥ लोकेप्युपलंभोद्व योर्देवीभागवतनाम्ना विष्णुभागवतनाम्ना चास्त्येव ॥ तत्रैकं महापुराणांतर्गतमन्यदुपपुराणांतर्गतमित्यपि निर्विवादमेव ॥ तथापि किं देवीभागवतं महापुराणमन्यदुपपुराणमथवा विष्णुभागवतं महापुराणमन्यदुपपुराणमिति संशये–केचिद्विष्णुभागवतमेव महापुराणमितिवदंति–केचिद्देवीभागवतमेव महापुराणमिति वदंति ॥ तत्र प्रथमपक्षैकदेशिनःकेचिदुपपुराणेषु द्वितीयं भागवतं नास्त्येव महापुराणेष्वेवैकं भागवतं प्रसिद्धम् ॥ तच्च विष्णुभागवतमेव न देवीभागवतम् ॥ देवीभागवतं तु निर्मूलमेवेतिवदंति ॥ द्वितीयपक्षैकदेशिनोपिविष्णुभागवतं बोपदेवकृतमिति वदंति ॥ वस्तुतस्तूभयोरपिपुराणयोः पुराणमतभेदेन महापुराणत्वमुपपुराणत्वं च ॥ ननु महापुराणेष्वेवैकं भागवतं प्रसिद्धं–न तूपपुराणेषु द्वितीयमस्तीति चेन्न ॥ कूर्मगरुडपाद्मादिषूपपुराणेषु द्वितीयस्य स्पष्टंपरिगणनात् ॥ तथाहि हेमाद्रौ दानप्रस्तावे कूर्मपुराणेऽष्टादशपुराणान्युक्त्वा–अन्यान्युपपुराणानि मुनिभिःकथितानितु ॥ आद्यं सनत्कुमारोक्तं नारसिंहमतःपरमित्यादि ॥ पराशरोक्तं प्रवरं तथा भागवताह्वयमिति ॥ तथा गारुडे तत्त्वरहस्ये द्वितीयांशे धर्मकांडे प्रथमाध्याये प्रथमतो महापुराणानां सात्त्विकादिभेदेन विभागमुक्त्वा लघुपुराणानां सात्त्विकादिभेदेनविभागप्रदर्शनपरे ग्रंथेप्युक्तम् ॥ पुराणं भागवतं दौर्गं नंदिप्रोक्तं तथैव च ॥ पाशुपत्यं रैणुकं च भैरवं च तथैव चेति ॥ तथा तत्पूर्वमपि–विष्णुधर्मोत्तरे चैव तत्र भागवतं तथेति । तंत्रंभागवतंतथेतिपाठेपि तंत्रंशास्त्रमित्यर्थः । तद्विशेषणेन चोत्तमत्वं सूचितम् ॥ तथा पाद्मे शकुनपरीक्षायां–ब्राह्मं पाद्मं वैष्णवं च मार्त्तंडं नारदेरितमित्यादि ॥ तथैव गदितं रामपुराणं कापिलं तथा ॥ वाराहं ब्रह्मवैवर्त्तं शकुनेषु प्रशस्यते ॥ शैवं भागवतं दौर्गं भविष्योत्तरमेव चेति ॥ तथा पाद्मे भागवतमाहात्म्ये एकोनविंशेऽध्याये उपपुराणेषु–शैवमादिपुराणं च देवीभागवतं तथेति ॥ तथा मधुसूदनसरस्वतीकृतसर्वशास्त्रार्थसंग्रहेप्युपपुराणमध्ये भागवतं परिगणितम् ॥ नागोजिभट्टादिभिश्च धर्मशास्त्रग्रंथेष्वेवमन्यैरपि निबंधकारैरिति । ननु देवीभागवतस्य–तत्र भागवतं पुण्यं पंचमं वेदसंमितम्–इति प्रथमाध्यायस्थस्ववचनेनाऽष्टादशमहापुराणेषु पंचममिदं पुराणमिति स्वस्य महापुराणत्वं बोधयतःकथमन्यपुराणमुपपुराणत्वं बोधयेन्नह्येवं क्वचिद्दृष्टचरमिति चेन्न ॥ नारदीयशिववायव्यादित्यपुराणानां स्वमुखेनान्यमुखेनवामहापुराणत्वेन ज्ञायमानानामन्यपुराणैरुपपुराणत्वस्यव्यवस्थापनात् ॥ पुराणमतभेदेनैकस्यापि पुराणस्यमहापुराणत्वोपपुराणत्वसिद्ध्यातद्विरोधाभावात् । पुराणभेदेनमतभेदस्तुबहुशः प्रसिद्धः–वैष्णवपुराणेषु सात्त्विकत्वं शैवपुराणेषु तामसत्वं वैष्णवपुराणमतेन शैवपुराणेषुसात्त्विकत्वं वैष्णवपुराणेषु तामसत्वम्॥दशशैवपुराणानि सात्त्विकानि विदुर्बुधाः ॥ तामसानि च चत्वारिवैष्णवानि प्रचक्षते–इतिस्कांदे शैवपुराणमतेनेत्येवंप्रकारेणेति॥तथाहि॥नारदीयस्य पुराणस्य स्वांतर्गतमहापुराणग्रंथसूच्या स्वमुखेनैव स्वात्मनो महापुराणत्वं बोधयतः–मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम्॥आलिंपाग्निपुराणानि कूस्कंगारुडमेवच–इतिवचनेन वक्ष्यमाणमुद्गलपुराणवचनेनचमहापुराणबहिर्भूतत्वं बोध्यते ॥आलिंपाग्नीत्यत्राशब्देनादित्यपुराणस्य तथाशैवपुराणस्य स्वमुखेन स्वस्य महापुराणत्वं बोधयतो मद्वयं भद्वयमित्येव वचनं तद्बहिर्भूतत्वं बोधयति॥ननुवायव्यं पुराणमेव शैवंशिवप्रतिपादकत्वात्तस्य च वचतुष्टयपदेन संग्रहात्तदुदाहरणं न संभवतीति चेन्न॥मुद्गलपुराणे–ब्राह्मं च वैष्णवं पाद्मं शैवं भागवतं तथा भविष्यं ब्रह्मवैवर्तं मार्कंडेयं च वामनम्॥आग्नेयं वायवं मात्स्यमिति वचनेन शैववायव्यपुराणयोःपरस्परं

पृथक्त्वेनपरिगणनात् ॥ तथा वायव्यपुराणस्य स्ववचनेनस्वस्य महापुराणत्वं बोधयतो वक्ष्यमाणशैवपुराणवचनं महापुराणवहिर्भूतत्वं बोवयति ॥ तथादित्यपुराणस्याप्यालिंपाग्निपुराणानीति क्वचित्पुराणसंमतपाठेन महापुराणत्वम् ॥ अनापलिंगकूस्काख्यमिति क्वचित्पुराणसंमतपाठेन महापुराणबहिर्भूतत्वं–यथा चैतेषां चतुर्णां क्वचित्पुराणेषु महापुराणत्वेन क्वचिद्वोपपुराणत्वेनग्रहणम् ॥ तथा देवीभागवतस्यापि भविष्यतीतिको विरोधः मतभेदेनोभयोरपि वचनयोः प्रमाणत्वात् ॥ ननु अन्यान्युपपुराणानि मुनिभिःकथितानि त्वित्यादिवचनैरुपपुराणानि व्यासान्यमुनिकृतान्येव संति·-देवीभागवतं तु व्यासकृतमेवेति–तस्यकथमुपपुराणेष्वंतर्भाव इति चेन्न॥नारदशैववायव्यादित्यपुराणेषु व्यासकृतत्वेपि कस्यचित्पुराणस्यमते उपपुराणत्वदर्शनात्तादृशनियमस्यास्वीकारात् । प्रायशस्तथा सत्त्वाभिप्रायेण तु तद्वचनम्॥इत्थं भागवतद्वयस्य महापुराणमध्ये उपपुराणमध्ये च सत्त्वसिद्धौ कस्य पुराणस्य मते किंभागवतं महापुराणांतर्गतमिति चेदुच्यते॥ शैवपुराणमते मात्स्यपुराणमते च देवीभागवतमेव महापुराणमिति॥तथाहि शैवपुराणे उत्तरखंडे मध्यमेश्वरमाहात्म्ये शिवाल्लब्धवरेण व्यासेन महापुराणानि प्रणीतानीत्युक्त्यनंतरंतेषां नामान्यष्टादशोक्त्वा तेषां योगरूढानां नाम्नां निर्वचनं तत्रैव कृतम्॥तद्यथा–यत्र वक्ता स्वयं तंडे ब्रह्मा साक्षाच्चतुर्मुखः ॥ तस्माद्ब्राह्मं समाख्यातं पुराणं प्रथमं मुने ॥ तंडे इति मुनिसंबोधनम् ॥ पद्मकल्पस्य माहात्म्यं तत्र तस्मादुदाहृतम् ॥ तस्मात्पाद्मंसमाख्यातं पुराणं च द्वितीयकम् ॥ पराशरकृतं यत्तु पुराणं विष्णुबोधकम् ॥ तदेव व्यासकथितं पुत्रपित्रोरभेदतः ॥ यत्र पूर्वोत्तरे खंडे शिवस्य चरितं बहु ॥ शैवमेतत्पुराणं हि पुराणज्ञा वदंति च ॥ भगवत्याश्च दुर्गायाश्चरितं यत्र विद्यते ॥ तत्तु भागवतं प्रोक्तं न तु देवीपुराणकम् ॥ नारदोक्तं पुराणं तु नारदीयं प्रचक्षते ॥ यत्र वक्ताभवत्तंडे मार्कंडेयो महामुनिः ॥ मार्कंडेयपुराणं हि तदाख्यातं च सप्तमम् ॥ अग्नियोगात्तदाग्नेयं भविष्योक्तेर्भविष्यकम् ॥ विवर्तनाद्ब्रह्मणस्तु ब्रह्मवैवर्तमुच्यते ॥ लिंगस्यचरितोक्तेश्चपुराणं लैंगमुच्यते ॥ वराहस्य च वाराहं पुराणं द्वादशं मुने ॥ यत्र स्कंदः स्वयं श्रोता वक्ता साक्षान्महेश्वरः ॥ तत्तु स्कांदं समाख्यातं वामनस्य तु वामनम् ॥ कौर्मं कूर्मस्य चरितं मात्स्यं मत्स्यस्य कीर्तितम् ॥ गरुडस्तु स्वयं वक्ता यत्तद्गारुडसंज्ञकम् ॥ ब्रह्मांडचरितोक्तत्वाद्ब्रह्मांडं परिकीर्तितमिति॥अत्र क्वचिद्वक्तृसंबंधः क्वचिच्छ्रोतृसंबंधः क्वचित्प्रतिपाद्यमुख्यदेवताचरितसंबंधः प्रवृत्तिनिमित्तमिति स्पष्टमेव दर्शितम्॥ तत्र भागवतनाम्नो निर्वचनवाक्यमेतत्-भगवत्याश्च दुर्गायाश्चरितं यत्र विद्यते॥ तत्तु भागवतं प्रोक्तं न तु देवीपुराणकमिति । अनेन च वाक्येन भगवत्या इदं भागवतमिति व्युत्पत्त्या ग्रंथप्रतिपाद्यमुख्यदेवताचरितसंबंधःप्रवृत्तिनिमित्तमिति स्पष्टमेव दर्शितम् ॥ का सा भगवतीत्यपेक्षायामाह ॥ दुर्गाया इति ॥ तत्तुभागवतं--तुशब्दो निश्चयार्थकः--तदेव भागवतपदवाच्यं प्रोक्तमित्यर्थः॥ न तु पुराणांतरमतप्राप्तं विष्णुभागवतं महापुराणांतर्गतं भागवतमित्यर्थ इति शैवपुराणेन स्वमतं प्रदर्शितम्॥कश्चिदेतत्पुराणांतरमतेनोपपुराणं जानीयात्तत्राह ॥ न तु देवीपुराणकमिति । अत्र कप्रत्ययोल्पार्थकः॥अल्पे इति सूत्रात्।पुराणकमल्पं पुराणमिति यावत् ॥ देव्याःपुराणकंदेवीपुराणकम्॥यदिदमुक्तं तद्देव्या उपपुराणन्नैवास्तीत्यर्थः॥अनेन च वाक्येनान्यस्य महापुराणत्वनिषेधेन स्वाभिप्रेतस्यचोपपुराणत्वनिषेधेन श्रीमद्देवीभागवतस्यैव महापुराणत्वं बोधयति व्यासः ॥ मुख्यत्वेनभगवतीचरितप्रतिपादकस्य महापुराणमध्ये कस्यचित्पुराणस्यान्यस्याभावात् ॥ ननु नारदादिपुराणवचनबलाद्विष्णुभागवतस्य महापुराणांतर्गतत्वे निर्विघ्नं निश्चितेतद्बलाद्भागवतद्वयस्य मतभेदेन महापुराणत्वकल्पनापेक्षया यत्किंचिद्भगवतीचरितस्यास्मिन्वचने ग्रहणेनानेन वचनेन विष्णुभागवतनाम्न एव निरुक्तिः कृतेति कुतो न कल्प्यते ॥ वर्तते च तत्र विष्णुभागवते दशमस्कंधे किंचिद्विंध्यवासिन्याश्चरितमितिचेन्न॥तथासति मुनेर्विष्णुभागवतविषय एव तात्पर्यसत्त्वे भगवत इदं भागवतमित्येव व्युत्पत्तिं कुर्यात्-नहि केनचिन्मुनेःशिरसि भारःस्थापितोयत्स्वाभिप्रेतां युक्तियुक्तां निरुक्तिं त्यक्त्वा निष्प्रयोजनोऽनभिप्रेतां निरुक्तिं करोति ॥ किंच सर्वत्रैतद्वचनप्रकरणे ॥ यत्र पूर्वोत्तरे खंडे शिवस्य चरितं बहु ॥ शैवमेतत्पुराणं हि पुराणज्ञा वदंति चेति वचनैर्बहुचरितमुख्यचरितसंबंधरूपप्रवृत्तिनिमित्तस्यैवाभिप्रेतत्वं मुनेरवसीयते ॥ मतभेदेन पुराणभेदकल्पना तु नात्रैव नवीनास्ति ॥ पूर्वोक्तयुक्त्या नारदशैववाय

व्यादित्यपुराणेष्वन्यत्रापि सत्त्वात् । अस्तु वा गौरवं न हि तद्भयान्मुनेस्तात्पर्यमन्यथा कर्तुं कश्चिदीष्टे ॥ तस्मात्पूर्वोक्तं तात्पर्यं विहायान्यतात्पर्येणाम्यार्थकरणं महासाहसमेव ॥ ननु लक्षणवाक्यमेतत्॥ ततश्च दुर्गाचरितं यत्र वर्तते तद्भागवतमित्यर्थः तच्च न देवीभागवतं भवितुमर्हति॥ तस्य तल्लक्षणलक्ष्यत्वेन तु देवीपुराणकमिति निषेधविषयत्वेन निषेध विध्योः समानविषयत्वापत्तेः॥ किं तु विष्णुभागवतमेव ॥ ननु तथाप्येतल्लक्षणमन्यपुराणेष्वतिप्रसक्तमिति चेन्न ॥ यथा वृत्रासुरवधलक्षणमन्यपुराणेषु प्रसक्तमपि यथा लक्षणत्वेन गृहीतं तद्वदत्रापि सत्त्वादिति चेन्न ॥ पूर्वोक्तनिरुक्तिवचनप्रकरणस्थत्वंविरोधात् ॥ किंच लक्षणवाक्यमेतदिति पक्षेप्येतस्य लक्षणस्य महापुराणोद्देशेनैव सत्त्वादुपपुराणेष्वस्य प्रसक्त्यभावाद्देवीपुराणकालिकापुराणयोरुपपुराणत्वस्य निश्चितत्वात्तत्रैतल्लक्षणस्य प्रसक्तिरेव नास्तीति न तु देवीपुराणकमिति निषेधो व्यर्थ एव स्यात् ॥ तस्मादेतद्वचनस्य पूर्वोक्त एवार्थः॥किंच लक्षणवाक्यमेतादितिपक्षे यत्किंचिच्चरितं गृह्यते उतयावच्चरितम् । यत्किंचिच्चरितस्य सर्वमहापुराणेषु सत्त्वाद्देवीपुराणमात्रनिषेधेन न निर्वाहः॥ तस्माद्देवीपुराणस्यैव निषेधस्वारस्याद्यावच्चरितं मुख्यत्वेन भगवतीचरित्रमेव ग्राह्यम् ॥ तदा तव नाभीष्टार्थसिद्धिः ॥ मुख्यत्वेन विष्णुभागवते दुर्गाचरितस्याभावान्ममैव त्वभीष्टार्थसिद्धिः ॥ निषेध विध्योः समानविषयकत्वरूपं दूषणं तु नैव संभवति॥ प्रकरणबलात्तात्पर्यें निश्चिते तद्विषयं विहायैव निषेधप्रवृत्तेः॥ वृत्रासुरवधोपेतत्वलक्षणं तु गायत्र्यारंभविशिष्टमिति न तदति प्रसक्तम् । तस्मात्पूर्वोक्त एव तद्वचनार्थ इति तद्वचनाद्देवीभागवतं महापुराणं न तु विष्णुभागवतमिति शिवपुराणमतम्॥अत्र च नियमद्वयस्य पूर्वोक्तस्य सत्त्वाद्विष्णुभागवतविषये यथा नियमद्वयाभावादिदं शिवपुराणमतमेव मुख्यमन्यपुराणमतं त्वेकदेशीति नियमद्वयप्रदर्शकव्यासवाक्येन स्पष्टमेव बोधितमिति सुधियो विभावयंतु॥किंच—शैवमादिपुराणं च देवीभागवतं तथा इति पाद्मवचनसंवादितया—नवरात्रे तु देवेशि दौर्गं भागवतं पठेत्॥ जपेत्सप्तशतीं चंडीं नियमेन समाहितः ॥ इति दुर्गातरंगिणीधृतयामलवचनेन तथा देवीभागवतं नित्यं पठेद्भक्त्या समाहितः॥ नवरात्रे विशेषेण श्रीदेवीप्रीतये मुदेति महेशठक्कुरकृतदुर्गाप्रदीपधृतदेवीयामलवचनेन च सप्रमाणस्य देवीभागवतस्य सर्वथोपपुराणमध्ये एव निवेशात्—तत्र भागवतं पुण्यं पंचमं वेदसंमितमिति प्रथमस्कंधस्थस्य महापुराणेषु पंचममिदं पुराणमित्यर्थकस्य देवीभागवतोक्तवचनस्य निरालंबनत्वादप्रामाण्यापत्तेः॥ मन्मते तु तस्य विषयलाभान्नाप्रामाण्यम्॥तद्वचनप्रामाण्यादपि देवीभागवतमेव महापुराणमिति॥किंच हेमाद्रौ कालिकापुराणे—यदिदं कालिकाख्यं तन्मूलं भागवतं स्मृतमिति वचनं तदपि देविभागवतस्यैव महापुराणत्वं बोधयति॥तथाहि॥अष्टादशभ्यस्तु पृथक् पुराणं यत्प्रदृश्यते॥विजानीध्वं द्विजश्रेष्ठास्तथा तेभ्यो विनिर्गतमिति मात्स्यवचनेनोपपुराणानां महापुराणमूलकत्वनियमादिदं कालिकापुराणं किंपुराणमूलकमित्याकांक्षायां तस्या निवर्तकमिदं वाक्यं विषयत्वेन कालिकाख्यं पुराणं तन्मूलं भागवतं विदुरिति हि तस्यार्थो निबंधकारैर्दर्शितः ॥ यथान्यान्युपपुराणान्येकैकस्मान्महापुराणान्निर्गतानि तद्वदिदं भागवतादुत्पन्नमिति यावत् ॥ तच्च भागवतं न वैष्णवं तन्मूलं भवितुमर्हति ॥ देव्युपपुराणस्य देवीपुराणमूलकत्वे एव सामंजस्यात् ॥ शैवोपपुराणानां शैवेभ्य एव वैष्णवोपपुराणानां वैष्णवेभ्य एवोत्पत्तिदर्शनादिति देवीभागवतमेव तन्मूलमिति तस्य महापुराणत्वं सिद्धम् ॥ यत्र तु क्वचित्क्वचिन्महापुराणमूलकप्रसिद्धं तत्र यथायोग्यमनुमेयमिति ॥ किंचादित्यपुराणदृष्ट्याऽपि देवीभागवतमेव महापुराणम् ॥ तथाहि ॥ आदित्यपुराणे रक्तासुरवधप्रस्तावे—या जघ्ने महिषं दैत्यं क्रूरं वृत्रासुरं तथा ॥ साद्य रक्तासुरं हत्वा स्वाराज्यं ते प्रदास्यतीति वचनात् ॥ अनेन वचनेन देवीभागवते स्वसंमतिर्दर्शिता ॥ न हि देवीभागवतातिरिक्तसर्वपुराणेषु देवीकृतो वृत्रासुरवधः क्वचिदप्यस्ति ॥ इंद्रकृतस्यैव तस्य सत्त्वात्केवलं देवीभागवत एव देवीकृतः सोऽस्ति ॥ तद्ग्रहणेन तु देवीभागवते स्वसंमतिर्दार्शितेति युक्तमेव ॥ अनंतरं च—तत्रैव पुराणदानप्रस्तावे ॥ ददाति सूर्यभक्ताय यस्तु भागवतं द्विजाः ॥ सर्वपापविनिर्मुक्तः सर्वव्याधिविवर्जितः ॥ जीवेद्वर्षशतं साग्रमंते वैवस्वतं पदमिति पठितम् ॥ अत्र च स्वसंमतं भागवतमेव ग्रहीतुमुचितम्॥ किंचेदं वचनं देवीभागवतपक्षे एव स्वरसतः संगच्छते॥प्रथमश्लोके एकादशद्वादशस्कंधयोश्च

सविस्तरं गायत्रीविधानसहस्रनामादेः कथनात्सूर्यस्य गायत्रीदेवतात्वात्॥तद्भागवतपक्षे तु वैकुंठं गच्छेदित्येव वदेदिति॥किंच यत्राधिकृत्य गायत्री वर्ण्यते धर्मविस्तरः॥वृत्रासुरवधो
पेतं तद्भागवतमिष्यत इति मात्स्यवचनमपि देवीभागवतस्यैव महापुराणत्वं बोधयति॥वेदे त्रिपदा गायत्रीति गायत्रीलक्षणं श्रूयते॥तेन च त्रिपाच्छेदोधिकृत्य यत्र धर्मविस्तरो वर्ण्यते
तद्भागवतमिति तदर्थः ॥ त्रिपाच्छंदश्च देवीभागवते प्रथमश्लोके–सर्वचैतन्यरूपां तामाद्यां विद्यां च धीमहि ॥ बुद्धिं या नः प्रचोदयादिति श्रूयते ॥ न विष्णुभागवते तच्छंदोस्ति
मुख्यार्थसंभवे गायत्रीपदस्य लक्षणया धीमहीत्यर्थकरणेन विष्णुभागवतपरत्वकल्पनमस्य वचनस्य तु साहसमेव ॥ क्वचित्पुराणेषु यदि तादृशान्येव . विष्णुभागवतपराणि वचनानि
संति ॥ तत्र गत्यंतराभावादस्तु लक्षणा ॥ उदासीने मात्स्यवाक्ये तु मुख्याविषयसंभवेसाऽनुचिता ॥ यदप्याधुनिकपुस्तकेषु क्वचिच्चतुश्चरणश्लोकोऽपि दृश्यते ॥ तथापि सप्तशत्यां गुप्त
वतीटीकाकारादिभिस्त्रिपाच्छ्लोकस्यैव व्याख्यातत्वेन स एव सांप्रदायिकः पाठ इति बोध्यम्॥यत्तु गायत्र्यर्थश्च विष्णुध्यानं न तु शिवशक्तिभूर्यादिध्यानमित्युक्तं तत्तु नास्तिकत्वमूलकमे
व ॥ मैत्रायणीयानां 'भर्गो वै रुद्र' इति श्रुतौ प्रपंचसारादिसर्वतंत्रेषु पुराणादिषु च शिवसूर्यशक्त्यादिरूपार्थस्योक्तत्वाच्च ॥ तदुदाहृतमाग्नेयवाक्यं तु विरोधेत्वनपेक्षं स्यादसति
ह्यनुमानमिति न्यायात्स्तावकमेवेति ॥ किंच हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा ॥ गायत्र्या च समारंभस्तद्वै भागवतं विदुरिति पुराणांतरवाक्यमपि देवीभागवतस्यैव महापुरा
णत्वबोधकम् ॥ तथाहि–हयग्रीवनामासुरो देवीभागवते प्रथमस्कंधे प्रसिद्धः तेनोपासिता ब्रह्मप्रतिपादिका विद्या स्त्रीदेवत्यो मंत्रः ॥ सा विद्या यत्र वर्तते तद्भागवतमित्यर्थः ॥
स दैत्यस्तदुपासिता विद्या चेत्युभयमपि तत्रैव प्रथमस्कंधे दर्शितम्–जपन्नेकाक्षरं मंत्रं मायाबीजात्मकं ममेस्त्यादिना ॥ ननु विष्णुभागवते पंचमस्कंधेऽपिहयग्रीवमंत्रस्य सत्त्वादिदं
वचनमुभयभागवतसाधारणमिति चेन्न॥ नारदीये शारदातिलकादिनिबंधेषु च मंत्राःपुंदेवताःप्रोक्ताविद्याः स्त्रीदेवताः स्मृताः–इत्यादिवचनैः स्त्रीदेवत्यमंत्रेष्वेव विद्यापदप्रयोगो न पुं
देवत्यमंत्रेष्विति प्रतिपादनात् ॥ क्वचित्पुंदेवत्यमंत्रे तथा प्रयोगस्तु गौणः नच गौणार्थमादाय तद्वचनस्य विष्णुभागवतपरत्वं कल्पितुमुचितम् ॥ लक्षणारूपदोषापत्तेः ॥ तस्मा
न्न तद्वचनमुभयसाधारणामिति देवीभागवतस्यैव महापुराणत्वं बोधयति ॥ किंच सारस्वतस्य कल्पस्येति मात्स्यवचनादपि देवीभागवतमेव महापुराणम्॥अत्र ह्येवं प्रकरणशुद्धिः--
ऋषय ऊचुः--पुराणसंख्यामाचक्ष्य सूत विस्तरतः क्रमादिति मुनिप्रश्नोत्तरं ब्रह्मणाऽभिहितं पूर्वं यत्तद्ब्राह्मं पद्मकल्पवृत्तांताश्रयं पाद्मं वराहकल्पवृत्तांताश्रयं वैष्णवं श्वेतकल्पवृत्तांताश्रयं
वायवीयमित्येवं तत्तत्कल्पवृत्तांताश्रयाणि पुराणान्युक्त्वा तदुत्तरं यत्राधिकृत्य गायत्री वर्ण्यते धर्मविस्तरः॥वृत्रासुरवधोपेतं तद्भागवतमिष्यत इति॥सारस्वतस्य कल्पस्य मध्ये ये
स्युर्नरामराः ॥ तद्वृत्तांतोद्भवं लोके तद्भागवतमिष्यते इत्युक्त्वा ततोऽन्यान्यपि महापुराणान्येव तत्तत्कल्पवृत्तांताश्रयाणि दर्शितानि ॥ पश्चादुपपुराणकथनार्थमुपभेदान्प्रवक्ष्यामीति
प्रतिज्ञाय पद्मपुराणान्नारसिंहं निर्गतमेवं नंदिसांबादित्यसंज्ञकान्युक्त्वा अन्योपपुराणान्यपि महापुराणेभ्य एव निर्गतानीति ॥ अष्टादशभ्यस्तु पृथक्पुराणं यत्प्रदृश्यते ॥विजानीध्वं
द्विजश्रेष्ठास्तदा तेभ्यो विनिर्गतमिति वचनेन सूतऋषिरुक्तवान् ॥ततः–सर्गश्च प्रतिसर्गश्च वंशो मन्वंतराणिचेत्यादिना पुराणलक्षणान्युक्त्वा सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं
हरेः॥राजसेषु च कल्पेषु माहात्म्यं ब्रह्मणो विदुः॥तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च॥संकीर्णेषु सरस्वत्याः पितॄणां च निगद्यते इति वचनेनपुराणप्रतिपाद्यहरिब्रह्माग्निहरसरस्वती
पितॄणां माहात्म्यसंबंधात्कल्पानांसात्त्विकराजसतामसत्वसंकीर्णत्वभेदैश्चातुर्विध्यमुक्तवानिति॥तत्र कल्पानां तत्तद्देवतासंबंधज्ञानं तु तत्तत्कल्पाश्रिततत्तपुराणप्रतिपाद्यमुख्यदेवताज्ञानेनैव
बोध्यम् ॥ अन्यप्रकारस्य क्वचिदपि पुराणेष्वनुपलंभात्तत्रैवंसति सारस्वतस्य कल्पस्यमध्ये ये स्युर्नरामराः॥तद्वृत्तांतोद्भवं लोके तद्भागवतमिष्यते इतिवचनं भागवतस्य लक्षणप्रतिपादकं
प्रतिपादितम्॥तदर्थस्तुयथा गारुडकल्प इत्यत्र गरुडस्यायं गारुडः यथावावाराहकल्पइत्यत्र वराहस्यायंवाराहइति व्युत्पत्तिः प्रसिद्धा तद्वदेव सरस्वत्या अयं सारस्वत इति विग्रहः॥सर
स्वत्यास्तथा कल्पो गौरीकल्पस्तथैव चेति कल्पनामसु सरस्वतीकल्पत्वेनैव कथितत्वाच्च॥मत्स्यपुराणे उपांत्याध्याये संकीर्णेषु सरस्वत्याः पितॄणां कल्प उच्यते इतिवचनेन तथैवोक्त्वा

च । ब्रह्मविष्णुरुद्राणां कल्पवद्गौरीलक्ष्म्योःकल्पवच्च सरस्वतीकल्पस्यार्थप्राप्तत्वाच्च।तादृशसारस्वतकल्पसंबंधिनो ये देवमनुष्यास्तद्वृत्तांतस्योद्भव उत्पत्तिर्यस्मात्तत्पुराणं भागवतं विदुः ॥ तद्वृत्तांतप्रदर्शकंयत्पुराणं तद्भागवतसंज्ञकमितियावत्॥अत्र च तत्तद्देवतानामाविर्भावाश्रया ये ये कल्पास्ते तत्तन्नाम्नाव्यवह्रियंते ॥ एतच्च तत्तन्नामककल्पाश्रितेषु पुराणेषु तत्तद्देवताया एव मुख्यत्वेनोत्पत्तिप्रदर्शकवाक्यैर्लक्ष्मीकल्पादिकल्पांश्रितकूर्मपुराणादिषुसर्वत्र प्रसिद्धमेव ॥ तथाच मुख्यत्वेन सरस्वत्या आविर्भावप्रतिपादकं पुराणं यत्तद्भागवतमित्याति रहस्यार्थः ॥ तत्र सारस्वतकल्प इति पदेनैव कल्पस्य सरस्वतीसंबंधे बोधिते तस्य संकीर्णत्वं संकीर्णत्वं सरस्वत्या इतिवचनेनेश्वरप्रेरणां विनाऽपि गृहागतमेव ॥ अस्मिंश्च वचने भागवतपदेन विष्णुभागवतस्य ग्रहणं वंध्यापुत्रोपममेव तत्र मुख्यत्वेन सरस्वत्या।विर्भावस्यासत्त्वात् ॥ विष्णुभागवते द्वितीयस्कंधे पाद्मं कल्पमथो शृणु इति वचनेन स्वमुखेनैव स्वस्य पाद्मकल्पकथाश्रयत्वस्योक्तत्वात् ॥ तद्विरोधाच्च ॥ न च पाद्मकल्प एव सारस्वतः-सरस्वान्समुद्रस्तस्माज्जातं कमलं सारस्वतं तस्य कल्प इति व्युत्पत्त्येति वाच्यम्॥ पद्मकल्पस्य वृत्तांतं तत्र यस्मादुदाहृतम् ॥ तस्मात्पाद्मं समाख्यातमिति पूर्वोदाहृतशिवपुराणवचनेन--एतदेव यदा पद्ममभूद्धैरण्मयं जगत् ॥ तद्वृत्तांताश्रयं तद्वत्पाद्ममित्युच्यते बुधैः ॥ पाद्मं तत्पंचपंचाशत्सहस्राणीहकथ्यते इति मत्स्यपुराणवचनेन--सारस्वतस्य कल्पस्य मध्येये स्युर्नरामराःइति वचनेन च पाद्मकल्पसारस्वतकल्पयोःपृथक्कथाकथनात् ॥ किंच सारस्वतकल्पपाद्मकल्पयोरेकत्वे पद्मकल्पस्य प्रतिपादकंपुराणद्वयं पाद्मं भागवतं चेत्येव वदेत् ॥ किंच पद्मकल्पस्यवृत्तान्तमित्यत्राभिव्यक्तपदार्थाये स्वतंत्रा लोकविश्रुता इ तिन्यायेन पूर्वबुद्ध्यारूढं प्रसिद्धंपाद्मशब्दं विहायाप्रसिद्धंसारस्वतशब्दं पाद्मशब्दस्य वाचकंकृत्वासारस्वतपदघटितकल्पनं प्रयोजनाभावः। किं च सरस्वत्यास्तथा कल्प इत्यादेःपूर्वो क्तस्य सारस्वतपदनिरुक्त्यर्थकस्य वचनसमूहस्य विरोधश्च ॥ न च पाद्मकल्पसारस्वतकल्पयोःपृथक्त्वे त्रिंशत्कल्पेषु मत्स्यपुराणांतिमाध्याये कीर्तितेषु सारस्वतपदेन पाद्मस्य ग्रहणं न स्यादिति वाच्यम् ॥ प्रभासखंडे त्रिंशत्कल्पेषु विष्णुजकल्पार्चिषकल्पसुपुमानकल्पानां ग्रहणेऽपि तेषां कल्पानां यथा मात्स्यांतिमाध्याये न ग्रहणंतथा पाद्मस्यापि न ग्रहणमित्यस्य तुल्यत्वात् ॥ यदि तेषां पर्यायत्वेन क्कुत्रचिदंतर्भावःक्रियते तर्ह्यस्यापि कुत्रचिदंतर्भावोऽस्तु ॥ अत एव विष्णुभागवतस्य प्रबंधटीकाकारेण पितृकल्पे एव पूर्वार्धांते पद्मस्योद्भवा त्पितृकल्पपदेन पाद्मसंग्रहो वेदितव्य इत्युक्तम् ॥ पुराणकल्पकथनप्रस्तावे सारस्वतकल्पपाद्मकल्पयोःपृथक्त्वकरणेनसारस्वतपदेन पाद्मस्य सर्वथा न ग्रहणम् ॥ वस्तुतस्तु-- त्रिंशत्कल्पा ब्रह्मणस्त्रिंशात्तिथ्यात्मकाःत्रिंशत्तिथिषुप्रतिपदादिषूत्पद्यंते ॥ भूःभुवःसुवःभूर्भुवःसुवइत्यादयस्त्रयस्त्रिंशत्कल्पाः ॥ पाद्मादयश्चवायुपुराणोक्तादिनकल्पा ब्रह्मणःप्रतिदिवसेषू त्पद्यन्त इति दिनकल्पतिथिकल्पानां सुतरां भेदात्तिथिकल्पेषु दिनकल्पानांपाद्मादीनां न ग्रहणमिति सिद्धांतः।यत्तु विष्णुभागवतस्यारंभतःपाद्मकल्पकथाश्रयत्वेऽपि कृष्णजन्मखण्ड स्यैव सारस्वतकल्पभवत्वेन तस्य च दशमस्कंधे सत्त्वात्--सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामरा इति वचनस्य विष्णुभागवतं विषयोऽस्तीत्याहुः ॥ तदसत् ॥ कृष्णजन्मखंड स्य सारस्वतकल्पभवत्वप्रतिपादकानां वचनानां निर्मूलत्वात्समूलत्वेऽपि यस्मिन्पुराणे यस्य कल्पस्य प्रथमतःप्रतिपादनं तत्कल्पप्रातिपादकमेव तत्पुराणमिति नियमः ॥ सर्वपु राणेषु तथादृष्टत्वात्--तथा कृष्णजन्मखंडस्य दशमस्कंधे विद्यमानत्वेऽपि प्रथमतस्तत्कथायाः अभावात्पाद्मकल्पकथायाः प्रथमतो विद्यमानत्वस्य स्वेनैवोक्तत्वाच्च-न सारस्वतस्य कल्पस्येति वचनस्य विष्णुभागवतं विषयः ॥ किंच कृष्णजन्मखंडस्य यथा दशमस्कंधे कथनं तथा सर्वपुराणेषु तत्कथनं वर्तत एवेति सर्वपुराणानां तद्वचनविषयत्वं स्यात् । तथा च सर्वपुराणानि भागवतपदवाच्यानि स्युस्तस्मात्सारस्व तकल्पस्य यत्र प्रथमतः प्रतिपादनं स एव तद्वचनस्य विषयो वक्तव्यः ॥ तादृशं च देवीभागवतमेवास्तीति देवीभागव तमेव तद्विषयो वक्तव्य इति ॥ किंच शिवपुराणे उमासंहितायां ब्रह्मणा संस्तुता सेयं मधुकैटभनाशने ॥ महाविद्या जगद्धात्री सर्वविद्याधिदेवता॥द्वादश्यां फाल्गुनस्यैव शुक्लायां समभून्नृपेति वचनात्फाल्गुनशुक्लद्वादश्यांदेव्या उद्भवस्तद्दिने एव सारस्वतकल्पोद्भवस्तदुक्तं हेमाद्रौ कल्पश्राद्धकरणे नागरखंडे—सारस्वतस्तु द्वादश्यां शुक्लायां फाल्गुनस्य चेति ॥ तथाच सरस्वत्याः कल्पइत्यर्थकस्य सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामरा इतिवचनस्य सर्वथा देवीभागवतमेव विषयोन विष्णुभागवतमिति बोध्यम् ॥

किं च तस्य ग्रहणे तस्य हरिमाहात्म्यप्रतिपादकत्वात् तदाश्रितकल्पस्य सात्त्विकत्वमेवायास्यति ॥ सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेरिति वचनात् ॥ ततश्चसंकीर्णेषु सरस्वत्या इति वचनेन सारस्वतकल्पनाम्ना च पारमहंस्यसामग्र्येव कर्तव्या स्यात् । अतो विष्णुभागवतं विहाय देवीभागवतमेवास्य विषयोऽनिच्छतापि वक्तव्यः । तस्मात् सारस्वतस्य कल्पस्येति वचनाद्देवीभागवतमेव महापुराणम् ॥ अस्ति चात्र सरस्वत्याविर्भावप्रतिपादकं वचनम् ॥ तदुक्तं देवीभागवते प्रथमस्कंधे ॥ तस्यास्तु सात्त्विकी शक्ती राजसी तामसी तथा ॥ महालक्ष्मीःसरस्वती महाकालीति तास्त्रयः ॥ तासां तिसृणां शक्तीनां देहांगीकारलक्षणः ॥ सृष्ट्यर्थे च समाख्यातः सर्गः शास्त्रविशारदैरिति ॥ अंबरीषशुकप्रोक्तं नित्यं भागवतं शृण्विति वचनमपिशुकाय प्रोक्तमितिव्युत्पत्त्या देवीभागवतपरमपि संगच्छते ॥ भवति हि देवीभागवतं शुकायैवप्रोक्तं व्यासेनेति ॥ किंच अष्टादशपुराणानि कृत्वा सत्यवतीसुतः ॥ भारताख्यानमखिलं चक्रे तदुपबृंहणमिति मात्स्यवचनमपि देवीभागवतस्यैव महापुराणत्वं बोधयति ॥ अष्टादशपुराणोत्तरं भारतस्य जातत्वात् ॥ भारतोत्तरं च विष्णुभागवतस्य जातत्वात् ॥ भारतोत्तरकालं निर्विण्णो व्यासश्चकारेति विष्णुभागवते एवोक्तत्वात् ॥ ननु वेदशाखाःपुराणानि वेदांतं भारतं तथा ॥ कृत्वा संमोहसंमूढोऽभवं राजन्मनस्यपीति देवीभागवते तृतीयस्कंधे एवोक्तत्वात्तत्रापि स विरोधस्तदवस्थ एवेतिचेन्न ॥ मन्मते तदानीं ग्रंथो नैव जातः किंतु जनमेजयं प्रति एवं वक्तास्मीति ज्ञानचक्षुषा ज्ञात्वा भारतात्पूर्वमेव देवीभागवतं कृतमित्यर्थस्य कल्पनात् ॥ त्वन्मते तु तथाकल्पयितुं न शक्यते ॥ चतुःश्लोकीभागवतोपदेशस्य जायमानत्वात् ॥ उपदेशात्पूर्वं तज्ज्ञानाभावस्यावश्यं कल्पनीयत्वात् ॥ यदि तत्रापि पूर्वं व्यासस्य ज्ञानमस्तीति स्वीक्रियते तदा वक्ष्यमाणः सर्वोप्यर्थवादःस्यात्॥ततश्चग्रंथस्वारस्यभंगप्रसंग इत्यास्तां तावत् ॥ वस्तुतस्तु वेदशाखाः पुराणानीति पाठोऽसंगतइति वक्ष्यते तृतीयस्कंधे तदा न कोऽपि विरोधः ॥ यत्तु पाद्मे भागवतमाहात्म्ये श्रीमद्भागवतकथाश्रवणाय समागतानां परिगणनप्रसंगे वेदांतानि च वेदाश्च मंत्रास्तंत्राणि संहिताः ॥ दशसप्त पुराणानि षट्छास्त्राणि समाययुरित्युक्तम् ॥ तत्रव्यासकृतपुराणानामष्टादशत्वादष्टादशेति वक्तव्ये सप्तदशत्वोक्तिः श्रीमद्भागवतस्याष्टादशत्वं गमयति । तस्याष्टादशानंतर्गतत्वे देवीभागवतस्याष्टादशांतर्गतत्वे वाऽष्टादशानां श्रोतृत्वसंभवेन श्रोतुमागतानां पुराणानामष्टादशत्वानुक्तेर्निर्बीजत्वप्रसंगात् ॥ एवं पाद्मे–दशसप्त पुराणानि कृत्वा सत्यवतीसुतः॥नाप्तवान्मनसा तोषं भारतेनापि भामिनि॥चकारसंहितामेतां श्रीमद्भागवतीं परामिति सप्तदशत्वोक्तिः श्रीमद्भागवतस्यैवतांसंहितामिति निर्दिष्टस्याष्टादशत्वं गमयति । देवीभागवतस्याष्टादशत्वेऽष्टादशपुराणानीत्यनुक्तेःनिर्बीजत्वप्रसंगादित्याहुः॥तदसत्॥ तेषामेव वचनैर्विष्णुभागवतस्याष्टादशपुराणांतर्गतत्वेन सिध्याति॥किंतु देवीभागवतस्यैवेतिवार्धुषिकत्वं कुर्वाणोमूलमेवविनाशितवानितिन्यायआगतः ॥तथाहि ॥ भारतंव्यासमुखाच्छ्रुत्वातत्रसंदिहानः क्रौष्टुकिर्मार्कण्डेयं प्रत्यागत्य संदेहंपृष्टवान्।तस्मै मार्कंडेयो मार्कण्डेयपुराणमुक्तवान्।तदुक्तं मार्कंडेयपुराणे–तदिदं भारताख्यानं बह्वर्थ श्रुतिविस्तरम्।तत्त्वतो ज्ञातुकामोऽहंभगवंतमुपास्थित इति॥तथाच भारतोत्तरं मार्कंडेयपुराणमभवत् ॥ तथैवत्वदुक्तरीत्यैव विष्णुभागवतमपि॥तथाच भारतात्पूर्वंषोडशपुराणान्येव सिद्धानि॥तथाच पूर्वोक्तवचनमध्ये षोडशेत्येव वक्तव्ये सप्तदशेत्युक्तत्वात् । देवीभागवतमेवमहापुराणमन्यथासप्तदशत्वपूर्त्तेर्नस्यात् । तस्मात्तद्वचनप्रामाण्याद्देवीभागवतमेव महापुराणमिति सिध्यति नतुविष्णुभागवतम् ॥ वंह्लापनेनापि भारतात्पूर्वंसप्तदश मदीयभागवतसहितानिमार्कंडेयमष्टादशमुभयमतसिद्धमेव।विष्णुभागवतस्यभारतोत्तरं जायमानत्वेनतन्मध्येतस्यावस्थानस्थलाभावादित्ये वंह्लापनेनापि दोषाभावादितिसुधियो विभावयंतु॥यत्तु किंच पाद्मे–वैष्णवं नारदीयंच तथा भागवतं शुभम्॥गारुडं च तथा पाद्मं वाराहं शुभदर्शने॥सात्त्विकानि पुराणानि विज्ञेयानिशुभानि वै इत्युक्त्या च भागवतस्य सात्त्विकत्वमुक्तम् ॥ सात्त्विकेषु पुराणेष्विति कौर्मोक्त्याच सात्त्विकपुराणानां विष्णुपरत्वमुक्तम्॥ अतोविष्णुपरमेव भागवतमष्टादशपुराणांतर्गतं न तु देवीभागवतमिति ॥ अपिच स्कान्देप्रभासखंडे–चतुर्भिर्भगवान्विष्णुर्द्वाभ्यां ब्रह्मा तथा रविः॥अष्टादशपुराणेषुशेषेषु भागवान्भव इत्युक्तम्॥स्कांदे सौरसंहितायां च–कथ्यते दशभिर्विप्राःपुराणैःपरमेश्वरः॥चतुर्भिर्भग

वान्विष्णुर्द्वाभ्यांब्रह्माप्रकीर्तितः॥एकेनाग्निस्तथैकेन भगवांश्चंडभास्करः इत्युक्तम्॥अतोपि विष्णुभागवतमष्टादशांतर्गतं नत्वन्यादित्याहुस्तदसत्।त्वन्मते मात्स्योक्तसात्त्विकराजसतामससं
कीर्णपुराणेषुमध्ये त्रयाणां व्यवस्था पूर्ववचनैस्त्वयोक्ता॥संकीर्णपुराणानां तु नोक्ता॥तेषां केषु पुराणेष्वंतर्भाव इतिवद॥करिष्यामि कुत्रचिदिति चेन्मन्मतेऽपि श्रीभगवत्या विष्णुशक्तित्वा
भिमानेन मंत्राधिष्ठात्रीं देवतां वेदमानो दुर्गा दुर्बोधध्वांतभानुं गुरुं चेति श्रीक्रमदीपिकोक्तप्रकारेणविष्णुमंत्राणांदुर्गाया अधिष्ठातृत्वेन तयोरैक्याद्वा तत्प्रतिपादकभागवतस्य वैष्णवे
ष्वेवान्तर्भावात् ॥ अत एव–हरिर्द्वाभ्यांरविर्द्वाभ्यां द्वाभ्यांचण्डीविनायकौ ॥ द्वाभ्यां ब्रह्मा समाख्यातः शेषेषु भगवाञ्छिवः इति वचनं संगच्छते॥ वस्तुतस्तु द्वयोरपि भागवतयो
रस्मन्मतेप्रमाणत्वाद् विष्णुभागवतपक्षपातिनां वचनानामस्माकं विरोधाभावेन तज्ज्ञापने प्रयोजनाभाव एव॥तथाच नारदीयादिपुराणमतेन श्रीविष्णुभागवतं महापुराणं तद्वचनानि
प्रसिद्धान्येवेति न लिखितानि ॥ देवीभागवतं तु तन्मते उपपुराणम् ॥ शैवमात्स्यपुराणादिमते तु देवीभागवतं महापुराणं विष्णुभागवतमर्थादुपपुराणमिति सिद्धम् ॥ अत्र
केचिद् देवीभागवतसंमतित्वेन देवीयामलतंत्रस्थं–श्रीमद्भागवतं नाम पुराणं वेदसंमितम्॥परीक्षितायोपदिष्टं सत्यवत्यंगजन्मना॥यत्र देव्यवताराश्च बहवःप्रतिपादिता इति ॥
तथा–इदं रहस्यं चरितं राधोपासनमुत्तमम् ॥ व्यासाय मम भक्ताय प्रोक्तं पूर्वं मयाऽद्रिजे ॥ मत्तो रहस्यं ज्ञात्वैव राधामाहात्म्यमुत्तमम् ॥ एतस्य विस्तरं चक्रे श्रीमद्भागवते
तथा ॥ नारदे ब्रह्मवैवर्ते लोकानांहितकाम्ययेति सौभाग्यकल्पलतायां संहारभैरवतंत्रस्थं वचनं लिखंति ॥ तत्र परे विवदंते ॥ तदुभयमपि गौरवभिया न लिख्यत इति ॥ तत्रै
तस्य सप्रमाणस्य देवीभागवतस्य क्वचित्क्वचिद्द्राविडगौडसंप्रदायपाठभेदेन द्वैविध्येऽपि गौडपाठस्य समंजसत्वात्तमालंब्यैव यथामति व्याख्यायते ॥ तत्र तावद्भगवत्युपासनायां
केचिद्भ्रान्ता वदंति–मायारूपाया भगवत्याउपासना शास्त्रेषूक्ता ॥ तथाच मायाया मिथ्यात्वान्मुक्तौ तस्या अनन्वयाच्चाश्रद्धेयेयमुपासनेति । ननु नेयं भ्रांतिः तापनीये 'माया
वाएषा नारसिंही सर्वमिदं सृजति सर्वमिदंरक्षति सर्वमिदं संहरति तस्मान्मायामेतांशक्तिंविद्याद्य एतां मायांशक्तिंवेद समृत्युंजयतिसपाप्मानं तरतिसोऽमृतत्वंच गच्छति महतीं
श्रियमश्नुत' इतिश्रुतौ मायांशक्तिं वेदोपास्ते समृत्युं जयतीतिकथनेन तथा--त्वंवैष्णवीशक्तिरनंतवीर्या विश्वस्य बीजंपरमासिमाया॥ सम्मोहितं देवि समस्तमेतदिति स्मृतिभि
र्विष्णोःशक्तेर्जडायामायाया एवोपास्यत्वकीर्तनादितिचेन्न । देव्यथर्वशिरसि–'सर्वेवैदेवा देवीमुपतस्थुःकासि त्वं महादेवी साब्रवीदहंब्रह्मरूपिणी । मत्तः प्रकृतिपुरुषात्मकं जगद्'
इति–तथा भुवनेश्वर्युपनिषदि–'अथातोंबोपनिषदंव्याख्यास्यामोऽथह्येनांब्रह्मरंध्रे ब्रह्मरूपिणीमाप्नोति' इति. तथा :'भुवनाधीश्वरी तुर्यातीता विश्वमोहिनी' इति. तथा भावनोप
निषदि–'स्वात्मैवललिता' इतिश्रुतिभि–स्तथात्रिपुरातापनीयसुंदरीतापनीयादिषु 'परोरजसेसावदोम्' इतिगायत्रीचतुर्थचरणप्रतिपाद्यब्रह्मवाचकत्वेनह्रींकारबीजस्यकथनेनह्रींकार
बीजस्य ब्रह्मदेवतात्वप्रतिपादकश्रुत्याच–तथा कालीतारोपनिषदादिश्रुतिभिस्तथास्मृतिभिश्चब्रह्मरूपिण्याभगवत्या एवोपासनाकथनात् ॥ तथाहि स्मृतयः–सूतसंहितायांपंचमा
ध्याये–अतः संसारनाशायसाक्षिणीमात्मरूपिणीम् ॥ आराधयेत्परांशक्तिं प्रपंचोल्लासवर्जितामिति ॥ स्कांदे वेदारण्येश्वरमाहात्म्ये ॥ परातुसच्चिदानंदरूपिणी जगदंबिका ॥
सैवाधिष्ठानरूपा स्याज्जगद्भ्रांतेश्चिदात्मनीति ॥ कूर्मपुराणे द्वादशाऽध्याये–एतत्प्रदर्शितंविप्रा देव्यामाहात्म्यमुत्तमम् ॥ सर्ववेदांतवेदेषु निश्चितं ब्रह्मवादिभिः॥ एकं सर्वगतं सूक्ष्मं
कूटस्थमचलं ध्रुवम् ॥ योगिनस्तत्प्रपश्यंति महादेव्याःपरं पदमिति ॥ परात्परतरं तत्त्वं शाश्वतं शिवमच्युतम् ॥ अनंतं प्रकृतौ लीनं देव्यास्तत्परमं पदमिति ॥ शुभ्रं निरंजनं शुद्धं
निर्गुणं दैन्यवर्जितम् ॥ आत्मोपलब्धिविषयं देव्यास्तत्परमं पदमिति ॥ हालास्येश्वरमाहात्म्येमायाबीजार्थप्रस्तावे–सत्स्वरूपःसदाकारोहकारोधर्मतत्परः ॥ चिदाकारः शिवाकारो
रेफःसर्वार्थसिद्धिदः । आनंदरूपयोरैक्यादीकारः सर्वकामदः । बिंदुनादौ तदंतस्थौ भवेतांमोक्षदावुभौ ॥ सच्चिदानंदरूपं तु प्रोक्तं बीजं मनीषिभिः ॥ सच्चिदानंदरूपं यत्परं ब्रह्म
तदेवहीति ॥ देवीभागवते–निर्गुणासगुणाचेति द्विधाप्रोक्ता मनीषिभिः॥ सगुणारागिभिः सेव्या निर्गुणा तु विरागिभिरिति ॥ ब्रह्मांडपुराणे ललितोपाख्याने–चितिस्तत्पदलक्ष्यार्था

चिदेकरसरूपिणी ॥ इत्यादयोऽष्टादशपुराणेषूपपुराणेषु च देव्याःपरब्रह्मत्वप्रतिपादकस्मृतयो द्रष्टव्याः ॥ ननु तर्हि षोडशीग्रहणाग्रहणयोःक्रियाविषयत्वात्तत्र शाखाभेदेन विकल्पसंभवेऽपि वस्तुस्वरूपस्यैकविधत्वात्तत्र विकल्पासंभवेन भगवतीस्वरूपस्य मायास्वरूपत्वप्रतिपादकश्रुत्या सहभगवत्या ब्रह्मरूपत्वप्रतिपादकश्रुतेर्विरोध इति चेन्न ॥ मायाया वेदांतेषु मिथ्यात्वान्मिथ्यापदार्थस्याधिष्ठाने कल्पितत्वात्तस्याधिष्ठानसत्तातिरिक्तसत्ताभावान्मायायामधिष्ठानसत्ताप्रवेशान्मायास्वरूपोपासनायामपि सत्तास्वरूपब्रह्मण एवोपासनासंभवतीत्याशयेन मायास्वरूपत्वप्रतिपादनेऽपिविरोधाभावात् ॥ यथा ब्रह्मण उपासनायामपि न केवलं ब्रह्मणोग्रहणं किंतु शक्तिविशिष्टस्यैव ॥ शक्तेस्तदतिरेकेणाभावात् । केवलस्योपासनाऽसंभवाच्चतथा मायोपासनाऽसंभवाच्च ॥ तथा मायोपासनायामपि नकेवलमायाया अवस्थानमस्ति । येनकेवलाया उपासनंसंभवेत् । किंतु ब्रह्माधिष्ठानयुताया एवावस्थानमिति ॥ भगवत्या मायारूपत्वप्रतिपादनेऽपि फलतोब्रह्मस्वरूपमेव भगवत्याःसिध्यतीतिश्रुत्योःपरस्परं विरोधाभावात् ॥ तदुक्तं पावकस्योष्णतेवेयमुष्णांशोरिव दीधितिः ॥ चंद्रस्य चंद्रिकेवेयं शिवस्य सहजा ध्रुवेति ॥ तथा स्वपदास्वाशिरश्छायां यद्वल्लंघितुमीहते ॥ पादोद्देशे शिरो न स्यात्तथेयं बैंदवी कलेति ॥ तथाच यथाग्नौ होमेऽग्निशक्त्यांहोमोऽर्थसिद्धःएवमग्निशक्त्यां होमेऽपि वह्नौ होमेऽर्थसिद्धःतद्वन्मामाया भगतवीत्वेऽपि ब्रह्मण एव भगवतीत्वं सिद्धमितितस्येवोपासनायां ग्रहणम् । मायाया मिथ्यात्वप्रतिपादकेषुवाक्येषु तु ब्रह्मणोमिथ्यात्वाभावात्केवलमायाया एव ग्रहणम् ॥ तस्या मिथ्यात्वेऽपि तदधिष्ठानस्य सत्यत्वात् ॥ उपासकस्योपास्यमायापदार्थांतर्गतस्य ब्रह्मांशस्य मोक्षदशायामनुस्यूतत्वान्मुक्तावुपास्यस्वरूपत्यागः ॥ अत एवांतर्यामिब्राह्मणे 'पृथिव्यादिमायांतानांपदार्थानां यः पृथिव्यां तिष्ठन् यं पृथिवी न वेद यस्य पृथिवी शरीरं यःपृथिवीमंतरोयमयति' इत्यादिनांऽतर्यामिचेतनसंबंधेनैव देवतात्वमुपवर्णितम् ॥ तथाच 'सर्वं खल्विदं ब्रह्म' इति श्रुतिरप्यनुगृहीता भवतीत्येतत्सर्वमभिप्रेत्य सूतसंहितायामुक्तं–चिन्मात्राश्रयमायायाःशक्त्याकारेद्विजोत्तमाः॥अनुप्रविष्टा या संविन्निर्विकल्पास्वयंप्रभा ॥ सदाकारा सदानंदा संसारोच्छेदकारिणी ॥ सा शिवा परमा देवी शिवाभिन्ना शिवंकरीति ॥ यद्वाभगवतीस्वरूपप्रतिपादकवाक्येषुये मायाशक्तिकलादिशब्दास्ते लक्षणयामायाविशिष्टशक्तिविशिष्टकलाविशिष्टब्रह्मबोधकाः ॥ तथा च मायाविशिष्टं शक्तिविशिष्टंयद्ब्रह्म तद्भगवतीपदवाच्यमिति फलितोर्थः ॥ एतेन क्षुधारूपेण संस्थिता निद्रारूपेणस्मृतिरूपेणेत्यादि केवलशक्तिवाचकपदानि व्याख्यातानि ॥ तैःपदैस्तत्तच्छक्तिविशिष्टब्रह्मण एव सर्वत्र ग्रहणात् ॥ अयमेवार्थः कालोत्तरे उक्तः ॥ तथाच कालोत्तरे शिवंप्रति देवीप्रश्नवाक्यं–भगवन्देवदेवेश मिथ्यामायेति विश्रुता ॥ तस्याःकथमुपास्यत्वं भवेन्मुक्तावनन्वयात् ॥ श्रद्धा न जायते क्वापि मिथ्यावस्तुनि कुत्रचित् ॥ देव्या उपासना चेयं श्रुतामायाश्रिता प्रभो ॥ संशयं छिंधि देवेश रहस्यं वद मे प्रभो ॥ इति श्रुत्वावचो देव्या भगवांश्चंद्रशेखरः ॥ उवाच वचनं दिव्यं सर्वलोकहितप्रदम् ॥ नाहंसुमुखि मायाया उपास्यत्वे ब्रुवे क्वचित् ॥ मायाधिष्ठानचैतन्यमुपास्यत्वेन कीर्तितम् ॥ मायाशक्त्यादिशब्दाश्चविशिष्टस्यैव लक्षकाः ॥ तस्मान्मायादिशब्दैस्तुब्रह्मैवोपास्यमुच्यत इति ॥ अत्रपूर्वार्द्धेनमायाधिष्ठानचैतन्यमित्यनेनप्रथमपक्षउक्तःमायाशक्त्यादीत्यनेनोत्तरार्द्धेनद्वितीयःपक्षउपपादितः । एतदभिप्रायेणैव ब्रह्मांडपुराणेमायावाचकस्येव ह्रींकारस्य मायाविशिष्टब्रह्मवाचकत्वमुक्तं–शक्त्याक्षराणि शेषाणिह्रींकार उभयात्मकइति ॥ उभयात्मकः शिवशक्त्यात्मकइत्यर्थः ॥ किंचमायायाःकेवलायाउपास्यत्वंवदन्वादीभ्रांतःप्रष्टव्यः–जडाया उपास्यत्वेतत्तद्देवताविग्रहाणांप्राणेंद्रियमनआत्मजीवादिमत्त्वं कथंभवेत् ॥ द्विविधं हि भगवतीरूपंस्थूलंसूक्ष्मंच । तत्रसूक्ष्मंमुख्यंस्थूलंतुतत्तदुपासकानांदर्शनादिव्यवहारार्थंतत्तदुपासकैरुपासितम् ॥ सूक्ष्मरूपमेवस्थूलंरूपंगृह्णाति ॥ तत्रैवंसति सूक्ष्मरूपे चैतन्याननुप्रवेशेतद्गृहीते स्थूलरूपेपिचैतन्यस्यानुप्रवेशेन तत्तद्देवतानां प्राणनसंभाषणादिव्यवहारोच्छेद एव स्यात्। तस्मादनिच्छयाऽपि चैतन्यविशिष्टाया एव तत्तच्छक्तेरुपास्यत्वं वक्तव्यमिति॥नन्वेवं चेत्किमर्थं मायादिशब्दैर्व्यवहारो भगवत्याःशास्त्रे क्रियतेलक्षणादिदोषाभावाय स्पष्टप्रतिपत्तये ब्रह्मादिशब्दैरेव कुतो न व्यवहारःक्रियत इति चेच्छृणु॥चतुर्व्यूहात्मकं हि ब्रह्मणो रूपम्–विराड्ढिरण्यगर्भाव्याकृतब्रह्मरूपम्॥तत्र देव्युपासनाव्यूहांतर्गतस्य कस्य पदार्थस्येति शंकायां–विराड्ढिरण्यगर्भाव्याकृतानां तदधिष्ठातॄणां ब्रह्मविष्णुरुद्राणां च ॥मैत्रायणीयश्रुतौ–एकैकं गुणमयत्वेन कीर्तनाद्गुणत्रयसाम्यावस्थाया मायायाःप्रकृत्या

दिशब्दवाच्यत्वेन तस्याश्चतुरीयब्रह्माश्रितत्वेन शास्त्रेषूक्तत्वात् ॥ तदेवमायाविशिष्टं तुरीयंब्रह्मैव भगवत्युपासनायांग्राह्यमिति बृहदर्थप्रदर्शनार्थं तथा मायादिशब्दैर्व्यवहारस्यसत्त्वात् ॥
तथाचमैत्रायणीयश्रुतिः–'तमोवाइदमेकमग्रआसीत्तत्परे स्यात्तत्परेणेरितंविषमत्वंप्रयात्येतद्वैरजस्तद्रजःखल्वीरितंविषमत्वंप्रयात्येतद्वैसत्त्वस्यरूपम्' इति । अनेनवाक्येनमायाया
स्तमःशब्दितायापरेणब्रह्मणा नित्यसंबंधप्रदर्शनेन जगत्कारणरूपं साम्यावस्थात्मकं प्रदर्शितम् ॥ अग्रे 'तस्यैतास्तनवोऽथ योह खलु वा वास्य तामसोंशोऽसौ योयं रुद्रो योह खलु
वा वास्य राजसोंशोऽसौ ब्रह्मायोह खलु वा वास्य सात्विकोंशोऽसौ विष्णुः' इति गुणत्रयोपाधित्वं ब्रह्मविष्णुरुद्राणां प्रतिपादितम् ॥ तथा पुराणादिषुच–सत्त्वं रजस्तम इति
प्रकृतेर्गुणास्तैर्युक्तःपरःपुरुष एक इहास्य धत्ते ॥ सृष्ट्यादये हरिविरिंचिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणांस्युरित्यादिसर्वपुराणेषु ब्रह्मविष्णुरुद्राणामेकैकगुणवत्त्वमेव
प्रतिपादितम् ॥ नहि मायाप्रकृतिशक्त्यादिशब्दवाच्यं वस्तुब्रह्मातिरिक्ताश्रयकंभवति ॥ येन मायादिशब्दैरुपास्यं वस्तु मायाविशिष्टब्रह्मातिरिक्तं भवेत् किंतु मायाविशिष्टब्रह्मरूपमे
वेति ॥ तैःशब्दैरूपास्यवस्तुनि प्रतिपादिते मायाविशिष्टब्रह्मरूपमेव भगवतीरूपमुपास्यं भवेदिति बोधनार्थमेव मायादिशब्दैर्भगवत्या उपासनकथनमिति ॥ ननु-तर्हि त्वंवैष्णवीश
क्तिरनंतवीर्येत्यत्रापि मायाशब्दोब्रह्मविशिष्टमायावाचकःस्यात् ॥ न चेष्टापत्तिः ॥ तत्र केवलाया मायाया एव विवक्षितत्वादितिचेन्न ॥ नह्यस्माभिःसर्वत्र मायाशब्देन मायावि
शिष्टं ब्रह्मैव ग्राह्यमिति शपथः क्रियते येनातिप्रसंगःस्यात् ॥ किंतु कचित्संबंधिशब्दसमभिव्याहारे केवलमायाया ग्रहणं यथात्रैव तथा नाशप्रकरणे केवलमायाया ग्रहणम् ॥ तथा
सृष्टिस्थलेऽपि मन्मायाशक्तिसंक्लृप्तं जगत्सर्वं चराचरम् ॥ सापि मत्तः पृथग्विप्रा नास्त्येव परमार्थत इत्यादौ ॥ उपासनास्थले तु तद्विशिष्टब्रह्मणो ग्रहणमिति यथायथमूहना
ज्ञेयमिति ॥ तथाच त्वंवैष्णवीशक्तिरित्यादौ त्वमधिष्ठानब्रह्मरूपिणी सती वैष्णवी या मायाशक्तिरस्ति तद्रूपिण्यसीत्यर्थः ॥ तेन च ब्रह्मरूपत्वमेव भगवत्याः प्रतिपादितम् ॥
एवमन्यत्राप्यूह्यम् ॥ यद्वा ब्रह्मणो जगत्कारणस्योभयात्मकत्वात्क्वचिन्मायोपसर्जनब्रह्मण उपासनं तत्र शक्तिः सहायभूता इदं च मतं शिवपुराणादिषु स्पष्टं–तस्मात्सहतया देवं
हृदि पश्यंति ये शिवम् ॥ तेषां शाश्वतिकी शांतिर्नेतरेषां कदाचनेत्यादिवचननिचयैः ॥ क्वचिच्च ब्रह्मोपसर्जनमायाया उपासनं तत्र भगवतीविषये ब्रह्मोपसर्जनमायाया एवोपासनमिति
दर्शयितुं मायाशक्त्यादिशब्दैःशास्त्रे भगवत्या व्यवहारःक्रियत इति ॥ इदंच मतं सर्वतंत्राभिमतं पुराणाभिमतंच ॥ शिवेन सहितांदेवींभावयेद्भुवनेश्वरीमितिभुवनेश्वरीपारिजातादिवचन
निचयात् । तदुक्तं कूर्मपुराणे-अस्यास्त्वनादिसंसिद्धमैश्वर्यमतुलं महत् । तत्संबंधादनंतैषा रुद्रेण परमात्मनेत्यादीनि वचनानि देवीभागवतादिसर्वपुराणेषु द्रष्टव्यानि ॥ उभयपक्षेऽ
पि ब्रह्मणश्चिदंश उपासनायामागतएवेतिन मुक्तावुपास्यस्वरूपानन्वयित्वरूपं दूषणंनवाऽश्रद्धेयतेति ॥ इत्थं भगवत्युपासनायाः स्वरूपेनिर्णीते ब्रह्मविष्णुरुद्रशक्त्युपासनासुकस्योपा
सना वरिष्ठेत्यस्य विचारःक्रियते–तत्र सर्वं खल्विदं ब्रह्मेति सामानाधिकरण्येन सर्वपदार्थमात्रस्य ब्रह्मरूपत्वेपि भक्तानां चेतसोवलंबाय परमेश्वरेण मलिनशुद्धतरशुद्धतमा विभूतयः
शुद्धितारतम्येन कल्पिताः ॥ ताश्च गीतादिशास्त्रेषुविभूत्यध्याये छांदोग्यादिषुचप्राणोब्रह्मआदित्यो ब्रह्ममनोब्रह्मेत्यादिवाक्यैःप्रदर्शिताः ॥ तत्रचसर्वविभूतिषु ब्रह्मणःसमानत्वेना
वस्थानेऽपियथापात्रमणिकृपाणदर्पणादिषु शुद्धितारतम्येन प्रतिबिंबफलनस्यापि तारतम्यमेवंविभूतिषुचशुद्धितारतम्येनैव ब्रह्मणःप्रसादकरणतारतम्यं प्रतिबिंबफलनतारतम्यंचेति या
भिर्याभिर्विभूतिभिर्यथा यथा प्रतिबिंबफलनप्रसादकरणस्य च तारतम्यं च भवति तथातथा तस्या विभूतेरुत्कृष्टत्वउत्कृष्टतरत्वमित्यादिव्यवहारःसर्वशास्त्रप्रसिद्धो निर्विवादस्तथाच
सति ब्रह्मविष्णुरुद्राणामेकैकगुणोपाधित्वेनैकैकगुणोपक्षयासाम्यावस्थायास्तत्तद्गुणमूलभूतायाआधिक्येनैकैकगुणोपाधिब्रह्मविष्णुरुद्रापेक्षयासाम्यावस्थोपाधिकायाभगवत्याएवोपासनं
सर्वोत्कृष्टंसाम्यावस्थायाःसर्वकारणभूतायाःसर्वोत्कृष्टत्वात् ॥ किंच प्रथमतो ब्रह्मणि माया तस्या ब्रह्मणा अव्यवहितःसंबंधः ॥ तदुत्तरं गुणानामुद्भवान्मायाद्वारकःसंबंधो गुणाना
मितिसाम्यावस्थायामव्यवहितः संबंधोब्रह्मण इति ॥ सैवोपासना मुख्यासर्वोत्कृष्टा च ॥ अत एव सूतसंहितादिषु रीतिरियमुक्ता–परतत्त्वप्रकाशस्तु रुद्रस्यवै महत्तरः ॥ ब्रह्मवि
ष्ण्वादिदेवानां न तथा मुनिपुंगवा इत्यादि ॥ रुद्रःकथंचित्कार्यार्थं मनुते रुद्ररूपताम् ॥ न तथा देवताःसर्वाः परिस्फूर्त्यल्पताबलादिति सूतगीतासु ॥ ननु ब्रह्मविष्णुरुद्राणामेकै

कगुणोपाधित्वे सर्वसंमते कथं साम्यावस्थात्मकत्वेनापि तेषांपुराणादिषूपवर्णनमितिचेन्न ॥ तदंतर्गतब्रह्मण एव साम्यावस्थात्मकत्वेन तदभेदात्तेषामपि तदात्मकत्वकथनमित्याशयात् ॥ अत एव तापनीये नृसिंहस्यसत्त्वोपहितविष्णोरवतारत्वे सर्वश्रुतिपुराणनिश्चिते सत्यपि साम्यावस्थात्मकत्वेन वर्णनं संगच्छते ॥ तस्मान्मायाशक्त्याख्यब्रह्मरूपभगवत्युपासैनैव मुख्या सर्वोत्कृष्टाचेति ॥ सैव सर्वकामार्थिभिर्मुमुक्षुभिश्चोत्कृष्टवस्तूपासनेच्छुभिराश्रयणीयेत्यर्थात्प्राप्तमपि पुराणांतरवचनैः स्पष्टमुपपाद्यते ॥ तदुक्तं देवीमाहात्म्ये–ब्रह्मविद्या जगद्धात्री सर्वेषां जननी तथा ॥ यया सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ॥ सैवं सेव्या च पूज्या च नान्यद्वै देवतांतरमिति ॥ तथा तंत्रेषु ॥ एवं यः पूजयेद्भक्त्या प्रत्यहं परमेश्वरीम् ॥ भुक्त्वा भोगान्यथाकामं देवीसायुज्यमाप्नुयात् ॥ यो न पूजयते नित्यं चंडिकां भक्तवत्सलाम् ॥ भस्मीकृत्यास्य पुण्यानि निर्दहेत्परमेश्वरीति ॥ अनेन वचनेन भगवत्युपासनायाःसंध्यादिकर्मवन्नित्यत्वं नित्यपदोच्चारणेन स्पष्टमेव बोधितम् ॥ तथापुराणांतरे–आराध्या परमा शक्तिः सर्वैरपि सुरासुरैः ॥ मातुः परतरं किंचिदधिकं भुवनत्रये इति ॥ तथा–ॐकारं पितृरूपेण गायत्रीं मातरं तथा ॥ पितरौ यो न जानाति स विप्रस्त्वन्यरेतज इति ॥ तथाकालोत्तरे ॥ धिग् धिग् धिग् धिक् च तज्जन्म यो न पूजयते शिवाम् ॥ जननीं सर्वजगतः करुणारससागरामित्यादिपुराणेषु तंत्रेषु च बहूनि वचनानि द्रष्टव्यानि ॥ विस्तरस्तु मत्कृतशक्तितत्त्वविमर्शिन्यां द्रष्टव्यः ॥ अयं चोपोद्घातोक्तार्थोऽस्माभिर्देवीभागवतस्थितौ सप्तशत्यंगषट्कव्याख्याने चोक्तः ॥ तस्या भगवत्याः पुराणस्य देवीभागवतस्य समंजसगौडपाठानुरोधेन व्याख्यानं यथामतिप्रारभ्यते ॥ ॥ तत्र तु प्रथमेऽध्याये पंचविंशतिपद्यकैः ॥ पुराणविषयः प्रश्न ऋषीणां समुदीर्यते ॥ १ ॥ तत्रादौ भगवान् बादरायणो ग्रंथप्रतिपाद्यदेवतातत्त्वानुस्मरणलक्षणं मंगलमाचरति ॥ सर्वचैतन्यरूपामि

ॐसर्वचैतन्यरूपांतामाद्यांविद्यांचधीमहि ॥ बुद्धिंयानःप्रचोदयात् ॥ १ ॥ शौनकउवाच ॥
सूतसूतमहाभागधन्योऽसिपुरुषर्षभ ॥ यदधीतास्त्वयासम्यक्पुराणसंहिताःशुभाः ॥ २ ॥

ति ॥ चैतन्यमित्यत्र स्वार्थेष्यञ् ॥ चैतन्यमात्मेति शिवसूत्रे तथादर्शनात् ॥ तथाच चेतनात्मरूपामित्यर्थः ॥ ननु तथापि तस्य निष्क्रियत्वात् प्रचोदयादिति प्रेरणाकर्तृत्वप्रतिपादनमनन्वितं भवतीत्याशंकायामाह ॥ आद्यां चेति ॥ आद्यामनादिभूतां विद्यां ब्रह्मविषयकशुद्धसत्त्वांतर्मुखप्रतिबिंबविशिष्टवृत्तिरूपां यां तापनीयास्तुरीयोपाधिमाहुः॥एकैव शक्तिरंतर्मुखतया विलसंती विद्यातत्त्वरूपिणी तदुपाधिक आत्मा तुरीय इत्युच्यते ॥ बहिर्मुखतया विलसंत्यविद्यातत्त्वरूपिणी तदुपाधिक आत्मा प्राज्ञ इत्युच्यते इति तेषां सिद्धांतः ॥ चकारःसमुच्चयार्थः ॥ आत्मरूपां तां प्रसिद्धाम् आद्यां विद्यां च ॥ आद्यपदस्य देहलीदीपकन्यायेनोभयत्रान्वयः ॥ तामाद्यां विद्यां च धीमहि ध्यायामः ॥ ध्यानविषयत्वमुभयोर्मिलित्वैव–नतु प्रत्येकं समुच्चयार्थकचकारात् ॥ तथाच मायाविशिष्टब्रह्मण एव ध्यानविषयत्वात्तस्य च शबलत्वेन निष्क्रियत्वाभावात् नः प्रचोदयादितिप्रेरणकर्तृत्वमनन्वितमितिबोध्यम् ॥ यैतादृशी सेयं ध्याता भगवतीमायाविशिष्टब्रह्मरूपिणी नोऽस्माकं बुद्धिं ध्यानं कर्तुंप्रचोदयात् प्रेरयेत् ॥ प्रार्थनायांलिङ् ॥ तेन चनिरंतरमस्मच्चेतोवृत्तयस्तदासक्ता भवंत्वित्यर्थः ॥ गायत्र्या अंतर्यामिब्रह्मप्रतिपादकत्वस्य सर्ववेदसंमतत्वेन गायत्रीपदंगायत्रीछंदोघटितमंगलाचरणेनैतद्भागवतप्रतिपाद्यमपि वस्तु मायाविशिष्टांतर्यामिब्रह्मरूपमिति बोधितम् ॥ यथाचायमर्थस्तथोपोद्घाते एव दर्शितमग्रे च तत्र तत्र दर्शयिष्यामः ॥ तथाच तद्भक्तस्तद्गुणशुश्रूषुरधिकारी ॥ फलं च ज्ञानप्राप्त्यामोक्षःइत्यग्रे दर्शयिष्यति ॥ १ ॥ इत्थंमंगलाचरणंनिर्विघ्नतयाग्रंथसमाप्तिफलकंकृत्वाप्रश्नमुत्थापयति ॥ शौनकइति ॥ सूतेति ॥ वीप्साअतिशयप्रेमविषयत्वदर्शनार्था ॥ धन्यत्वेहेतुमाह ॥ यदधीताइति ॥ अत्यन्तंदुर्लभमेवपुराणसंहिताध्ययनंयस्मात्त्वयासंपादितंतस्मात्त्वंधन्यएवेत्यर्थः ॥ २ ॥

कास्ताः संहितास्तत्राऽऽह ॥ अष्टादशेति ॥ अष्टादशपुराणान्येवपुराणसंहिताइत्यर्थः ॥ ३ ॥ पंचलक्षणेति ॥ तानिचवक्ष्यमाणानि ॥ सरहस्यानीति ॥ नानामंत्रविधानश क्तिपातप्रकारप्रतिपादनादिरहस्यार्थसहितानीत्यर्थः ॥ ननुतेनोक्तानिमयाश्रुतानि । परंतुतदर्थोममनसिनागतइतिचेत्तत्राऽऽह ॥ त्वयाज्ञातानीति ॥ यदितवयोग्यतानस्यात्त र्हिव्यासोनैववदेत् ॥ यस्मात्तेनोक्तानितस्मात्त्वयाज्ञातान्येवेतिनिश्चीयतइतिभावः ॥ ४ ॥ एतादृशस्यतवास्माकंसमागमःएतादृशपुण्यक्षेत्रेदुर्लभएव ॥ तथाऽऽपियदस्माभिरने कजन्मसुपुण्यमाचरितंतद्योगादेवसमागमःसुलभोजातइत्याह ॥ अस्माकमिति ॥ विश्वसनंतन्नामकंतद्व्युत्पत्तिश्चान्यत्रोक्ता–मुनिविश्रामदेशोयस्तत्तुविश्वसनंस्मृतामिति ॥ ५ ॥ अस्त्वेतत्तथाऽपिभवतांकिमभिलषणीयमितिचेत्तत्राऽऽह ॥ समाजोयमिति ॥ ६ ॥ दीर्घायुर्भवेति ॥ अनेनगुरावतिभक्तिःस्वस्मिंश्चातिशयेनशुश्रूषावत्तइतिबोधितम् । ब्रह्मसंमितंवेदसंमितम् । वेदार्थस्यैवप्रतिपादकमित्यर्थः ॥ नह्यन्यथावेदसंमितत्वंसंभवति ॥ ७ ॥ श्रोत्रेन्द्रियेति ॥ स्वादविचक्षणाःस्वादग्रहणपंडिताःसंतः श्रोत्रेंद्रिययुताः

अष्टादशपुराणानिकृष्णेनमुनिनाऽनघ ॥ कथितानिसुदिव्यानिपठितानित्वयाऽनघ ॥ ३ ॥ पंचलक्षणयुक्तानिसरहस्यानिमानद ॥ त्वया ज्ञातानिसर्वाणिव्यासात्सत्यवतीसुतात् ॥ ४ ॥ अस्माकंपुण्ययोगेनप्राप्तस्त्वंक्षेत्रमुत्तमम् ॥ दिव्यंविश्वसनंपुण्यंकलिदोषविवर्जितम् ॥ ५ ॥ समाजोऽयंमुनीनांहिश्रोतुकामोऽस्तिपुण्यदाम् ॥ पुराणसंहितां सूतब्रूहित्वंनः समाहितः ॥ ६ ॥दीर्घायुर्भवसर्वज्ञतापत्रयविवर्जितः ॥ कथ याद्यमहाभागपुराणंब्रह्मसंमितम् ॥ ७ ॥श्रोत्रेन्द्रिययुताःसूतनराःस्वादविचक्षणाः ॥ नशृण्वंतिपुराणानिवंचिताविधिनाहिते ॥ ८ ॥ यथा जिह्वेन्द्रियाह्लादःषड्रसैःप्रतिपद्यते ॥ तथाश्रोत्रेंद्रियाह्लादोवचोभिःसुधियांस्मृतः ॥ ९॥ अश्रोत्राःफणिनःकामंमुह्यंतिहिनभोगुणैः ॥ सकर्णा येनशृण्वंतितेप्यकर्णाः कथंनच ॥१०॥ अतःसर्वेद्विजाःसौम्यश्रोतुकामाःसमाहिताः॥वर्ततेनैमिषारण्येक्षेत्रेकलिभयार्दिताः ॥११॥ येनकेना प्युपायेनकालातिवाहनंस्मृतम् ॥ व्यसनैरिहमूर्खाणांबुधानांशास्त्रचिंतनैः ॥ १२ ॥ शास्त्राण्यपिविचित्राणिजल्पवादयुतानिच ॥ ( त्रिविधा निपुराणानिशास्त्राणिविविधानिच ॥ वितंडाच्छलयुक्तानिगर्वामर्षकराणिच ॥ १ ॥ ) नानार्थवादयुक्तानिहेतुमंतिबृहंतिच ॥ १३ ॥

संतोयदिपुराणानिनशृण्वंतिवर्हितेसर्वसामग्रीसत्त्वेऽपिविधिनादैवेनैववंचिताहतभाग्याइत्यर्थः ॥ एतेनस्वस्यश्रवणेऽत्यादरवत्वंसूचितम् ॥ ८ ॥ तदेवदृष्टांतेनस्पष्टयति ॥ यथेति ॥ ९ ॥ अश्रोत्राइति ॥ कामंयथेच्छास्यात्तथानभोगुणैःशब्दैःशब्दस्याकाशगुणत्वात् ॥ अश्रोत्राअपिफणिनोदुष्टजातयोऽपिमुह्यंति । सकर्णाःसंतोयेपुराणानिनशृण्वं तितेकथमकर्णाबधिराएवनभवंति ॥ चकारएवकारार्थोऽकर्णाइत्यत्रयोज्यः ॥ बधिराएवतेइत्यर्थः ॥ १० ॥ यस्मादेवंतस्मात्किंतदाह ॥ अतइति ॥ ११ ॥ नतुसर्वेऽपिजनाः पुराणश्रवणंविनाकालंक्षपयंत्येव॥तथाभवंतोऽपिकुतोनकुर्वंतितत्राऽऽह ॥ येनकेनेति ॥ मूर्खाणां केनाप्युपायेनशब्दस्पर्शादिविषयसंबंधेनयद्यपिकालातिवाहनंकालातिक्रमणंस्मृतमनु भूतम् तथा मूर्खाणांयद्यपिव्यसनैर्दुराचारैःकालातिवाहनंस्मृतम्॰तथापिबुधानांनतथारीतिःकिंत्वन्यैवेत्याह ॥ बुधानामिति ॥ तथाचमहतांरीतिरेवाश्रयणीयेतिभावः ॥ १२ ॥ ननु बुधान्यायशास्त्रादिचिंतनैरपिकालंक्षपयंति । तदेवभवद्भिःकुतोनाद्रियतेतत्राऽऽह॥शास्त्राण्यपीति ॥ नानार्थवादस्तावकानिवाक्यानिहेतूपन्यासवंति ॥ १३ ॥

तत्रनतानिसर्वाणिसमानि किंतु सात्त्विकादिभेदेनभिन्नानीत्याह ॥ सात्त्विकंतत्रेति ॥ हेतुनाहेतूपन्यासेनवादेनजल्पवितंडादिनाभियंत्रितंयुक्तं नब्रह्मादिविचारयुक्तम् ॥ ततस्तामसत्वमेवतस्ययुक्तमितिभावः ॥ अतस्तामसशास्त्रविदोनबुधाः किंत्वबुधाएवेत्यर्थः ॥ १४ ॥ ननुतथापियत्किंचित्पुराणंश्रूयतांतत्राह ॥ तथैवेति॥यथाशास्त्राणित्रिगुणानितथैवेत्यर्थः॥ त्रिगुणानिगुणत्रयात्मकब्रह्मविष्ण्वादिप्रतिपादकत्वात्रिगुणानि॥ननुविष्णुप्रतिपादकंपुराणंसात्त्विकमस्तितदेवश्रूयतांतत्राऽऽह तत्रभागवतमिति ॥गुणत्रयोपाधिहरिहराद्यपेक्षयाऽपिगुणत्रयसाम्यावस्थोपाधिसहितायाभगवत्याउत्कृष्टत्वात्तस्याएवपुराणंभागवतंवदनान्यदुत्कृष्टपक्षपातित्वात्सर्वेषामित्यर्थः ।पंचममिति॥ब्राह्मंपाद्मंवैष्णवंचशैवंभागवतंशुभमितिश्लोकेपंचममित्यर्थः॥अयंचश्लोकः पुराणान्तरेमहापुराणगणनायामुक्तः॥अतएवैतस्यभागवतस्यमहापुराणत्वमितिपूर्वमुक्तंनविस्मर्तव्यम् ॥कथितमिति॥पुराणांतरश्रवणप्रसंगेइत्यर्थः॥ १६ ॥ यदिकथितंतर्हितदेवकिमितिपुनः पृच्छयतेतत्राऽऽह॥ उद्देशमात्रेणेति॥सामान्यतोभागवतंपुराणमस्तीत्येतादृशमेवनाममात्रेणोक्तंनतुसविस्तरमित्यर्थः॥ १७॥तदेवाऽऽहविस्तरेणेति ॥ १८॥ नन्वन्यंप्रतिकृतोनपृच्छयतेतत्राऽऽह ॥ त्वंत्विति ॥ त्वमेवजानासिनान्यइत्यर्थः ॥ तत्रहेतुः—गुरुभक्तत्वादिति ॥ १९ ॥ नन्वन्यानिपुराणानिश्रुतान्येवसंतितैरेवतृप्तिः कर्त्तव्येतिचे

सात्त्विकंतत्रवेदांतंमीमांसाराजसंमतम्॥तामसंन्यायशास्त्रंचहेतुवादाभियंत्रितम् ॥१४॥तथैवचपुराणानित्रिगुणानिकथानकैः॥ कथितानित्वयासौम्यपंचलक्षणवंतिच ॥ १५ ॥ तत्रभागवतंपुण्यंपंचमंवेदसंमितम् ॥ कथितंयत्त्वयापूर्वंसर्वलक्षणसंयुतम् ॥ १६ ॥ उद्देशमात्रेणतदाकीर्तितंपरमाद्भुतम् ॥ मुक्तिप्रदंमुमुक्षूणां कामदंधर्मदंतथा ॥ १७ ॥ विस्तरेणतदाख्याहिपुराणोत्तममादरात् ॥ श्रोतुकामाद्विजाःसर्वेदिव्यंभागवतंशुभम् ॥ १८ ॥त्वंतुजानासिधर्मज्ञपौराणींसंहितांकिल॥ कृष्णोक्तांगुरुभक्तत्वात्सम्यक्सत्त्वगुणाश्रयः ॥१९॥ श्रुतान्यन्यानिसर्वज्ञत्वन्मुखान्निःसृतानिच ॥नवतृप्तिंव्रजामोऽद्यसुधापानेऽमरायथा॥२०॥ धिक्सुधांपिबतांसूतमुक्तिर्नैवकदाचन ॥पिबन्भागवतंसद्योनरोमुच्येतसंकटात् ॥ २१ ॥ सुधापाननिमित्तंयत्कृतायज्ञाःसहस्रशः ॥ नशांतिमधिगच्छामः सूतसर्वात्मनावयम् ॥ २२ ॥ मखानांहिफलंस्वर्गःस्वर्गात्प्रच्यवनंपुनः॥ एवंसंसारचक्रेऽस्मिन्भ्रमणंचनिरंतरम् ॥ २३ ॥

त्तत्राऽऽह श्रुतानीति ॥ तत्रदृष्टांतः ॥ सुधापानेइति ॥ २०॥ ननुभागवतश्रवणात्किंचिदपूर्वमुत्पद्यते ॥ ततश्चस्वर्गादिलोकोभवतीत्येवमभिप्रायेणपृच्छयतेचेत्तत्फलंयज्ञादिभिरपिसेत्स्यत्येवतिचेत्तत्राऽऽह ॥ धिक्सुधामिति ॥ संकटात्संसाररूपात् ॥ नहिकर्मणामुक्तिर्भवति । तस्याअविद्यानाशप्रयुक्तत्वात् ॥ अविद्यानाशस्यसाक्षात्कारजन्यवात् ॥ नहिकर्मणाक्वचिदपिरज्जुसर्पादावविद्यानाशोदृष्टः ॥ तस्मात्कर्मणानैवसंसारनिवृत्तिर्भवति ॥ अतएवनकर्मणानप्रजयाधनेनत्यागेनैकेऽमृतत्वमानशुरितिश्रुतिः कर्मणांमोक्षफलवत्त्वंवारयति ॥ किंतुस्वर्गादिषुसुधापानमेवकर्मफलम् ॥ तच्चातिनिंद्यमेवमोक्षापेक्षया ॥ अथचभागवतंकर्णपुटेनपिबंस्तच्छ्रवणजन्यात्मज्ञानेनाविद्यानाशेसतितज्जन्यसंसारान्मुच्यते ॥ अतोज्ञानमेवोत्कृष्टंनकर्मेत्यर्थः॥तथाचश्रुतिः ज्ञानादेवहिकैवल्यमिति॥ २१॥यदिकर्मभ्योमोक्षःस्यात्तर्हिसकिमेकेनकर्मणोतानेकर्मभिः—अनेककर्मभिश्चेत्तेषांसंख्यानियमाभावादव्यवस्थैव ॥एकेनकर्मणाचेदस्माभिर्बहवोयज्ञाः कृताः । अद्यापिमोक्षोनैवजातस्ततस्तदपिनसंभवतीत्याह॥सुधापानानिमित्तामिति॥शांतिंमोक्षम्॥ २२॥तर्हिकिंकर्मभिर्भवतीत्यत्राऽऽह॥मखानामिति ॥ २३॥

विनाज्ञानेनेति ॥ ज्ञानादेवहिकैवल्यमितिश्रुतेः ॥ कायचक्रइत्यननघटीयंत्रवदस्मन्निर्गमनंनैवसंभवतीतिदर्शितम् ॥ २४ ॥ भागवतमेवसंसारनाशकंततस्तदेववदेत्याह अत इति ॥ सर्वरसोपेतंभक्तिज्ञानवैराग्यरसोपेतंमुमुक्षूणांसदाप्रियमित्यनेनमुमुक्षवोत्राधिकारिणइतिदर्शितम् ॥ २४ ॥ इति श्रीशैवोपनामकलक्ष्मीगर्भजरंगभट्टसुतनीलकंठभट्टकृतेदेवीभागवतस्याभिनवव्याख्यानेतिलकाभिधेप्रथमस्कंधेप्रथमोऽध्यायः ॥ १ ॥ अध्यायेतुद्वितीयेस्मिन्ग्रंथसंख्यायथार्थतः ॥ विषयश्चोच्यतेसम्यक्चत्वारिंशत्सुपद्यकैः ॥ २ ॥ यथाभवतांधन्यतांमत्समागमेनपुराणश्रवणादेवंममापिधन्यताऽस्तियुष्मत्समागमेनमन्मुखाद्भागवतस्यनिःसारणादित्याह ॥ सूतउवाच–धन्योऽस्मीति । अनेनगुरुर्निरभिमानीग्रंथप्रतिपादनश्रद्धावान्दयालुश्चापेक्षितइतिबोधितम् ॥ १ ॥ २ ॥ ग्रंथंवक्तुंग्रंथप्रतिपाद्यदेवतातत्त्वानुस्मरणलक्षणंमंगलमाचरतिसूतःनत्वेति । तत्पदपंकजम् । तस्यावेदशास्त्रप्रसिद्धायाभगवत्याःपदपंकजंपदकमलमित्यर्थः ॥ भगवतीनाम्नेति ॥ भगवतीपदघटितभागवतनाम्नेत्यर्थः ॥ तेनचभगवत्याइदंभागवतमितिव्युत्पत्तिदर्शिता ॥ देवीभागवतमित्यत्रतुशिवस्यभगवतोभक्तइत्यर्थेशिवभागवतइतिप्रयोगवत्साधुत्वम् । देव्याभगवत्याभक्तिरस्येत्यर्थेदेवीपदंतुभगवतइदंभागवतमितिव्युत्पत्तिभ्रमनिरासाय ॥ ३ ॥ इत्थंसगुणमूर्तेःपदस्मरणरूपंमंगलंकृत्वामायाविशिष्टब्रह्मरूपसूक्ष्मरूपस्यश्रुतिप्रतिपाद्यस्यभागद्वयसहितस्यसत्त्वात्तत्रैकभागस्यमायारूपस्यस्मरणरूपंमंगलमाचरति–याविद्येति॥ विद्यांतर्मुखसाध्यावस्थारूपिणीशक्तिर्नतस्यकार्यं

विनाज्ञानेनसर्वज्ञनैवमुक्तिःकदाचन ॥ भ्रमतांकालचक्रेत्रनराणांत्रिगुणात्मके ॥ २४ ॥ अतःसर्वरसोपेतंपुण्यंभागवतंवद ॥ पावनमुक्तिदंगुह्यं मुमुक्षूणांसदाप्रियम् ॥ २५ ॥ इति श्रीदेवीभागवतेमहापुराणेअष्टादशसाहस्र्यांसंहितायांप्रथमस्कन्धेशौनकप्रश्नोनामप्रथमोऽध्यायः ॥ १ ॥

श्रीसूतउवाच॥धन्योऽहमतिभाग्योऽहंपावितोऽहंमहात्मभिः ॥ यत्पृष्टंसुमहत्पुण्यंपुराणंवेदविश्रुतम्॥१॥तदहंसंप्रवक्ष्यामिसर्वश्रुत्यर्थसंमतम्॥ रहस्यंसर्वशास्त्राणामागमानामनुत्तमम्॥२॥नत्वातत्पदपंकजंसुललितंमुक्तिप्रदंयोगिनांब्रह्माद्यैरपिसेवितंस्तुतिपरैर्ध्येयंमुनीन्द्रैःसदा॥वक्ष्याम्यद्यसविस्तरंबहुरसंश्रीमत्पुराणोत्तमंभक्त्यासर्वरसालयंभगवतीनाम्नाप्रसिद्धंद्विजाः ॥३॥याविद्येत्यभिधीयतेश्रुतिपथेशक्तिःसदाऽऽद्यापरासर्वज्ञाभवबंधछित्तिनिपुणासर्वाशयेसंस्थिता॥ दुर्ज्ञेयासुदुरात्मभिश्चमुनिभिर्ध्यानास्पदंप्रापिताप्रत्यक्षाभवतीहसाभगवतीसिद्धिप्रदास्यात्सदा ॥४ ॥ सृष्ट्वाऽखिलंजगदिदंसदसत्स्वरूपंशक्त्यास्वयात्रिगुणयापरिपातिविश्वम्॥ संहृत्यकल्पसमयेरमतेतथैकातांसर्वविश्वजननींमनसास्मरामि॥५॥

करणंचविद्यतेनतत्समश्चाभ्यधिकश्चदृश्यते ॥ परास्यशक्तिर्विविधैवश्रूयते स्वाभाविकीज्ञानबलक्रियाचेतिश्वेताश्वतरश्रुतिप्रसिद्धा इच्छाशक्तिरुमाकुमारीतिशिवसूत्रप्रसिद्धाच ॥ दुरात्मभिर्दुर्विज्ञेयाध्यानास्पदंप्रापितार्थात्सुयोगिभिरितिशेषः ॥ याध्यानास्पदंप्रापितासतीप्रत्यक्षाभवतिनान्योपायैःसासदाममबुद्धिप्रदास्यादितिप्रार्थनायांलिङ् ॥ ध्यानयोगश्चपराशक्तिसाक्षात्कारहेतुःश्वेताश्वतरेउक्तः ॥ तेध्यानयोगानुगताअपश्यन्देवात्मशक्तिंस्वगुणैर्निगूढामिति ॥ ४ ॥ अथद्वितीयब्रह्मरूपभागरूपिण्या भगवत्याःस्मृतिरूपंमंगलमाचरति ॥ सृष्ट्वेति ॥ यास्वयास्वकीययात्रिगुणयागुणत्रयविशिष्टयाशक्त्याऽखिलमिदंजगत्सदसत्स्वरूपंव्यवहारदृष्ट्यासत्परमार्थदर्शनेनासत्तदात्मकंसृष्ट्वातद्विश्वंपाति॥ पुनःकल्पसमयेकल्पांतसमयेतद्विश्वंतथापूर्ववत्सृष्टिस्थितिवत्संहृत्यएकाएकमेवाद्वितीयंब्रह्मनेहनानास्तिकिंचनेतिश्रुतिप्रतिपाद्यात्मरूपिणीरमतेक्रीडतेस्वस्मिन्नेवस्वरूपेतांसर्वविश्वजननीं मनसास्मरामि ॥ अत्रपूर्ववाक्येनकेवलशक्तिवर्णनेनोत्तरवाक्येनतच्छक्त्याश्रयब्रह्मात्मकभगवतीवर्णनेनदेवीभागवतप्रतिपाद्यंभगवतीरूपंमायाशबलब्रह्मात्मकमेवनकेवलमायाशक्तिरूपामितिबोधितम् ॥ अयमेवार्थःसर्वचैतन्यरूपांतामितिप्रथमश्लोकेउक्तः । उपोद्धातेचास्माभिरुक्तः । अग्रेचतत्रतत्रमूलकारएवदर्शयिष्यति ॥ ५ ॥

तत्रशंकते ॥ ब्रह्मेति ॥ नन्वखिलमेतद्ब्रह्मासृजतीतिप्रसिद्धंलोकेवेदविद्भिःपौराणिकैश्चतदेवकथितम् ॥ तथाचकथंभगवतीसृजतीतिपूर्वमुक्तमितिचेत्तत्रसमाधत्ते॥विष्णोस्त्विति ॥यैः पौराणिकैर्ब्रह्मासृजतीत्युक्तंतैरेवपौराणिकैर्विष्णोरेवनाभिकमलेकिलनिश्चयेनतस्यजन्मोक्तम् ॥ तथाचतस्यजन्मवत्त्वात्पराधीनत्वंपराधीनत्वेचसतिब्रह्मास्वतंत्रोनहिनैवसृजतिकिंतुपराधीनतया ॥ तथाचयद्भगवत्यधीनतयासृजतिसैवभगवतीमुख्यत्वेनजगत्स्रष्ट्रीत्यर्थः ॥ ६ ॥ ननुब्रह्मणोजन्मविष्णुनाभिकमले । तथाचविष्णोरेवजगत्स्रष्टृत्वमस्त्वितिचेत्तत्राहविष्णुस्त्विति ॥ ईतिकालेप्रलयकालेविष्णुस्तुशेषशयनेस्वपिति तन्नाभिकमलेखलुतस्यब्रह्मणोजन्म ॥ अत्रास्मिन्प्रलयकालेसहस्रमौलिःशेषआधारतांगतोविष्णोः । तथाचास्याधारेणस्थितस्यविष्णोःपरतंत्रत्वात्तादृशपारतंत्र्यविशिष्टोभगवान्मुरारिर्विष्णुःकथंजगत्स्रष्टृत्वेनसंबोध्यतांगच्छेन्नकथमपीत्यर्थः ॥ ७॥ ननुविष्णोराधारःसमुद्रःसएवजगत्स्रष्टास्त्वितिचेत्तत्राह ॥ एकार्णवस्येति ॥ एकार्णवोहिजलात्मकस्तच्चजलंरसरूपमेवरसस्यचपात्रंविनाकाचित्कदापिनहिस्थितिरस्ति । एवंपात्रस्याप्यन्याधारस्तस्याप्यन्याधारइतियासर्वरूपविषयेकिलशक्तिरूपास्वतंत्रासर्वाधारशक्तिरूपासैवजगत्स्रष्ट्रीतितांसर्वभूतजननींशरणंगतोस्मि । अतएवपीठपूजादिषुआधारशक्तेरेवसर्वाधारत्वंप्रतिपादितमितिभावः ॥ ८॥ इदानींचरित्रत्रयेप्रमथच

ब्रह्मासृजत्यखिलमेतदितिप्रसिद्धंपौराणिकैश्चकथितंखलुवेदविद्भिः॥ विष्णोस्तुनाभिकमलेकिलतस्यजन्मतैरुक्तमेवसृजतेनहिसस्वतंत्रः ॥६ ॥ विष्णुस्तुशेषशयनेस्वपितीतिकालेतन्नाभिपद्ममुकुलेखलुतस्यजन्म॥ आधारतांकिलगतोऽत्रसहस्रमौलिःसंबोध्यतांसभगवान्हिकथंमुरारिः ॥ ॥ ७ ॥ एकार्णवस्यसलिलंरसरूपमेवपात्रंविनानहिरसस्थितिरस्तिकच्चित् ॥ यासर्वभूतविषयेकिलशक्तिरूपातांसर्वभूतजननींशरणंगतोऽस्मि ॥ ८ ॥ योगनिद्रामीलिताक्षंविष्णुंदृष्ट्वांबुजेस्थितः ॥ अजस्तुष्टावयांदेवींतामहंशरणंव्रजे ॥ ९ ॥ तांध्यात्वासगुणांमायांमुक्तिदांनिर्गुणांतथा ॥ वक्ष्येपुराणमखिलंशृण्वंतुमुनयस्त्विह ॥ १० ॥ पुराणमुत्तमंपुण्यंश्रीमद्भागवताभिधम् ॥ अष्टादशसहस्राणिश्लोकास्तत्रतुसंस्कृताः ॥ ११ ॥ स्कंधाद्द्वादशचैवात्रकृष्णेनविहिताःशुभाः ॥ त्रिशतंपूर्णमध्यायाअष्टादशयुताः स्मृताः ॥ १२ ॥ विंशतिःप्रथमेतत्रद्वितीयेद्वादशैवतु ॥ त्रिंशच्चैवतृतीयेतुचतुर्थेपंचविंशतिः ॥ १३ ॥

रित्रदेवतांमहाकालींस्मरति ॥ योगनिद्रेति ॥ योगनिद्रयामीलितेअक्षिणीयस्यसयोगनिद्रामीलिताक्षस्तम् ॥ अक्ष्णोरदर्शनादित्यत्र ॥ ९ ॥ एवंसगुणांनिर्गुणांचगुणसाम्यावस्थात्मिकांमायांध्यात्वापुराणंवक्ष्येइतिप्रतिजानाति । तामिति । सगुणामेकैकगुणविशिष्टमहाकाल्यादिरूपाम् ॥ निर्गुणांगुणत्रयसाम्यावस्थारूपाम् ॥ साम्यावस्थाश्रयब्रह्मणोग्रहणंतुनिर्गुणापदेनजातम् ॥ शक्तिशक्तिमतोरभेदात् ॥ ततस्तस्यपुनर्नोपादानम्॥१०॥अष्टादशसहस्राणिश्लोकाइति॥ अनुष्टुप्छंदस्कामहाछंदस्कावासर्वेमिलिताःश्लोकाः॥तत्रभागवते अष्टादशसहस्राणिसंतीतिग्रंथसंख्योक्ता ॥ ११ ॥ स्कंधसंख्यामाह स्कंधाइति ॥ अध्यायसंख्यामाह ॥ त्रिशतमिति ॥ त्रिशतमध्यायास्त्रिशतसंख्याकाअध्यायाअष्टादशयुताःपरिकीर्तिता इत्यर्थः॥अष्टादशाध्यायोत्तरात्रिशताध्यायाःसंतीत्यर्थः॥ द्वात्रिंशत्रिशतंपूर्णमध्यायास्तुप्रकीर्तिताइतिप्रवादस्तुविष्णुभागवतविषयकइतिबोध्यम् ॥१२॥ प्रतिस्कंधमध्यायसंख्यामाह ॥ विंशतिरिति ॥ प्रथमस्कंधेविंशतिरध्यायाः ॥ द्वितीयेरविसंख्याः ॥ तृतीयेतिथिसंख्याः ॥ चतुर्थेपंचाधिकविंशतिसंख्याकाः ॥ १३ ॥

पंचमेपंचाधिकतिथिसंख्याकाः ॥ षष्ठेएकाधिकतिथिसंख्याः ॥ सप्तमेचत्वारिंशत्संख्याकाः ॥ १४ ॥ अष्टमेचतुर्विंशतिसंख्याकाः ॥ नवमेपंचाशत्संख्याकाः ॥ दशमेत्रयोदशसं
ख्याकाः ॥ १९ ॥ एकादशस्कंधेतत्त्वसंख्याकाः ॥ द्वादशेचतुर्दशैवाध्यायाः॥१६॥ एवमिति ॥ इयमध्यायसंख्योक्ता ॥ याग्रंथसंख्याअष्टादशसहस्री सातुपूर्वपरिकीर्तितेत्यर्थः ॥१७॥
इदानींसर्वपुराणसामान्यलक्षणमुक्तातल्लक्षणं देवीभागवतेऽस्तीतिवदति ॥ सर्गश्चेति इदंसर्वपुराणसामान्यलक्षणम् ॥ १८ ॥ अत्रदेवीभागवतेसर्गशब्देनकस्यसर्गोऽभिधीयतेतत्राऽह॥
निर्गुणेति ॥ सच्चिदानंदब्रह्मरूपिणीयाभगवतीत्यर्थः॥१९॥तस्यास्त्विति ॥ तस्यायासात्त्विकीशक्तिस्तथाराजसी तथा तामसीचयाशक्तिस्तच्छक्तिविशिष्टंयत्परंब्रह्मेत्यर्थः ॥ तत्महाल
क्ष्म्यादयोयाःप्रसिद्धाःस्त्रियस्ताःस्त्रियोभवंति ॥ साम्यावस्थात्मकब्रह्मरूपिणीमूलदेवतातत्तदेकैकगुणविशिष्टब्रह्मरूपिण्योमहालक्ष्म्यादयोदेवताइतिभावः ॥अतएवपुराणागमादिष्वासां
सच्चिदानंदत्वमुक्तंनतुकेवलजडशक्तिरूपत्वम् ॥ २० ॥ तासामिति । सृष्ट्यर्थंजगत्सर्जनाययस्तासांतिसृणांशक्तीनांदेहांगीकारोदेहधारणंतल्लक्षणोयःसर्ग;सोऽत्रशास्त्रविशारदैःपंडितैः
सर्गशब्देनसमाख्यातइत्यर्थः ॥ अस्मिन्पुराणेसर्गशब्देनायमेवगृह्यतइत्यर्थः॥महाकाल्यादीनामुत्पत्तिःप्रथमस्कंधेपंचमस्कंधेच ॥२१॥ प्रतिसर्गमाह ॥ हरीति॥ अस्मिन्पुराणेप्रतिसर्ग

पंचत्रिंशत्तथाऽध्यायाःपंचमेपरिकीर्तिताः॥एकत्रिंशत्तथाषष्ठेचत्वारिंशच्चसप्तमे॥१४॥अष्टमेतत्त्वसंख्याश्चपंचाशन्नवमेतथा॥त्रयोदशतुसंप्रोक्ता
दशमेमुनिनाकिल ॥ १५ ॥ तथाचैकादशस्कंधेचतुर्विंशतिरीरिताः ॥ चतुर्दशैवचाध्यायाद्वादशेमुनिसत्तमाः॥१६ ॥एवंसंख्यासमाख्यातापु
राणेऽस्मिन्महात्मना ॥ अष्टादशसहस्रीयासंख्याचपरिकीर्तिता ॥ १७ ॥ सर्गश्चप्रतिसर्गश्चवंशोमन्वंतराणिच ॥ वंशानुचरितंचैवपुराणंपंच
लक्षणम् ॥ १८ ॥निर्गुणायासदानित्याव्यापिकाविकृताशिवा॥योगगम्याऽखिलाधारातुरीयायाचसंस्थिता॥१९॥ तस्यास्तुसात्त्विकीशक्ती
राजसीतामसीतथा ॥ महालक्ष्मीःसरस्वतीमहाकालीतिताःस्त्रियः ॥ २० ॥ तासांतिसृणांशक्तीनांदेहांगीकारलक्षणः॥ सृष्ट्यर्थंचसमाख्या
तःसर्गःशास्त्रविशारदैः ॥ २१ ॥ हरिद्रुहिणरुद्राणांसमुत्पत्तिस्ततःस्मृता ॥ पालनोत्पत्तिनाशार्थंप्रतिसर्गःस्मृतोहिसः॥२२॥सोमसूर्योद्भवानां
चराज्ञांवंशप्रकीर्तनम् ॥ हिरण्यकशिप्वादीनांवंशास्तेपरिकीर्तिताः ॥२३॥ स्वायंभुवमुखानांचमनूनांपरिवर्णनम् ॥ कालसंख्यातथातेषांतत्त
न्मन्वंतराणिच ॥ २४ ॥

शब्देनायमेवगृह्यतइत्यर्थः॥प्रतिसर्गोनामानुसर्गोब्रह्मादीनामनंतरोत्पत्तिरूपइत्यर्थः । तदुक्तंपुराणांतरे ॥ प्रतिसर्गानुसर्गश्चप्रलयश्चप्रकीर्तितइति ॥ तत्रगुणत्रयरूपशक्तीनामुत्पत्तिस्ता
सांपरिणामश्चब्रह्मादिरूपेणनानाविधाहंकारादिरूपेणचतृतीयस्कंधे त्वंचवेधाःशिवस्त्वेतेदेवामद्गुणसंभवाइत्यनेनोक्तः ।। संक्षेपेणप्रलयरूपेप्रतिसर्गोपिनवमस्कंधेसर्वेषांप्रकृतौलयरूपउक्तः
॥ २२ ॥ सोमेति ॥ तेषांयद्वंशप्रकीर्तनंसवंशोऽत्रवंशशब्देनगृह्यतइतिभावः ।। वंशास्तेइति । तेऽपिवंशशब्देनगृह्यंतेइत्यर्थः ॥ सोमवंशस्तुसोमात्पुरूरवःपर्यंतंप्रथमस्कंधेउक्तः ॥
सूर्यवंशस्तु वैवस्वतमनुमारभ्यहरिश्चंद्रपर्यंतंसप्तमस्कंधेसंक्षेपेणोक्तः ॥ तदुभययवंशीयान्यराज्ञांकथातुदेवीकथायांविक्षेपबाहुल्यप्रसंगभियानोक्तेतिबोध्यम् ॥ तदुक्तंसप्तमस्कंधे ॥ इत्ये
वंसूर्यवंश्यानांराज्ञांवंशप्रकीर्तनम् ॥ सोमवंशोद्भवानांचवर्णनीयंमयाकियादिति ॥ २३ ॥ स्वायंभुवेति ॥ तत्तन्मन्वंतराणिचेति ॥ तान्यत्रमन्वंतरशब्देनोच्यंतइत्यर्थः ॥ मन्वंतरक
थातुदशमस्कंधेऽभिहितातेषांवंशानुचरितमपितत्रैव ॥ २४ ॥

तेषांवंशेति ॥तदत्रवंशानुचरितमित्यर्थः ।। भवंतीति ॥ सर्वाणिपुराणानीत्यर्थः ॥ यद्यप्यत्रसकलजगत्सृष्टिरपितृतीयस्कंधादिष्वभिहितातथापिभगवतीवर्णनेएवास्यग्रंथस्यतात्पर्यंनस्
ष्ट्यादिवर्णनइतिबोधयितुंमहालक्ष्म्यादीनामवतारएवसृष्टिशब्देनोक्तइतिबोध्यम् ॥ २५ ॥ भारतमपिपंचलक्षणवदेवेत्याह ॥ सपादेति ॥ पंचमंवेदचतुष्टयापेक्षयापंचममितिहासपद
वाच्यमित्यर्थः ॥ तथापंचलक्षणवदेव ॥ २६ ॥ भवंतीतिबहुवचनाकांक्षितानिपुराणानिकतिसंख्यानिसंतीतिपृच्छतिशौनकः ॥ कतीति ॥ २७ ॥ युष्माकंवैराग्यंनास्तिकथंवक्तव्यंत
त्राऽऽहकलिकालेति ॥ तेनवैराग्यमस्तीत्युक्तंभवति ॥ पुण्योदेशोनास्तीतिचेत्तत्राह ॥ नैमिषेति ॥ कथंतस्यपुण्यदेशत्वंतत्राऽऽह ॥ ब्रह्मणेति ॥ २८ ॥ २९ ॥ ३० ॥ तस्यब्रह्मणस्त
त्कथानककंथारूपवचनंश्रुत्वातच्चक्रंगृहीत्वेत्यन्वयः ॥ चालयन्निति ॥ अर्थाच्चक्रम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ युष्माकंसात्विकेकर्मणिश्रद्धानास्तीतिचेत्तत्राऽऽह पशुहीनाइति ॥ यज्ञाः

तेषांवंशानुकथनंवंशानुचरितंस्मृतम् ॥ पंचलक्षणयुक्तानिभवंतिमुनिसत्तमाः ॥ २५ ॥ सपादलक्षंचतथाभारतंमुनिनाकृतम् ॥ इतिहासइति
प्रोक्तंपंचमंवेदसंमतम्॥२६॥शौनक उवाच ॥ कानितानिपुराणानिब्रूहिसूतसविस्तरम् ॥ कतिसंख्यानिसर्वज्ञश्रोतुकामावयंत्विह ॥ २७ ॥
कलिकालविभीताःस्मोनैमिषारण्यवासिनः ॥ ब्रह्मणाऽत्रसमादिष्टाश्चक्रंदत्त्वामनोमयम् ॥ २८ ॥ कथितंतेननःसर्वान्गच्छंत्वेतस्यपृष्ठतः ॥
नेमिःसशीर्यतेयत्रसदेशःपावनःस्मृतः॥२९॥कलेस्तत्रप्रवेशोनकदाचित्संभविष्यति॥तावत्तिष्ठतुतत्रैववयावत्सत्ययुगंपुनः॥३०॥ तच्छ्रुत्वावच
नंतस्यगृहीत्वातत्कथानकम् ॥ चालयन्निर्गतस्तूर्णंसर्वदेशदिदृक्षया ॥ ३१ ॥ प्रेत्यात्रचालयंश्चक्रंनेमिःशीर्णोत्रपश्यतः ॥ तेनेदंनैमिषंप्रोक्तंक्षेत्रं
परमपावनम् ॥ ३२ ॥ कलिप्रवेशोनैवात्रतस्मात्स्थानंकृतंमया ॥ मुनिभिःसिद्धसंघैश्चकलिभीतैर्महात्मभिः ॥ ३३ ॥ पशुहीनाःकृतायज्ञाःपु
रोडाशादिभिःकिल ॥ कालातिवाहनंकार्यंयावत्सत्ययुगागमः ॥ ३४ ॥ भाग्ययोगेनसंप्राप्तःसूतत्वंचात्रसर्वथा ॥ कथयाद्यपुराणंहिपावनंब्र
ह्मसंमतम् ॥३५॥ सूतशुश्रूषवःसर्वेवक्तात्वंमतिमानथ ॥ निर्व्यापारावयंनूनमेकचित्तास्तथैवच ॥३६॥ त्वंसूतभवदीर्घायुस्तापत्रयविवर्जितः॥
कथयाद्यपुराणंहिपुण्यंभागवतंशिवम् ॥ ३७ ॥ यत्रधर्मार्थकामानांवर्णनंविधिपूर्वकम्॥ विद्यांप्राप्यतयामोक्षःकथितोमुनिनाकिल ॥ ३८ ॥
द्वैपायनेनमुनिनाकथितंयच्चपावनम् ॥ नतृप्यामोवयंसूतकथांश्रुत्वामनोरमाम् ॥ ३९ ॥ सकलगुणगणानामेकपात्रंपवित्रमखिलभुवनमातु
र्नाट्यवद्यद्विचित्रम् ॥ निखिलमलगणानांनाशकृत्कामकंदंप्रकटयभगवत्यानामयुक्तंपुराणम् ॥ ४० ॥ इति श्रीदेवीभागवते महापुराणेप्रथ
मस्कंधे द्वितीयोऽध्यायः ॥ २ ॥

दर्शपूर्णमासादयोयेपुरोडाशसाध्याःपशुरहिताश्चएवप्रायः कृतास्तेनकदाचित्पशुसहितयज्ञकरणेऽपिनसात्विकत्वहानिःअवश्यपशुसाध्येऽस्ययागस्यब्राह्मणेनावश्यकर्तव्यत्वात् ॥ युष्मा
कमवकाशोनास्तीतिचेत्तत्राऽऽह कालातिवाहनमिति ॥ ३४ ॥ पुराणंहीति ॥ नाममात्रेणैवतानिपुराणान्युक्त्वा मुख्यविषयंभागवतंवदेत्यर्थः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥
सकलेति ॥ अखिलभुवनमातुर्भगवत्यानाट्यमस्तियस्मिन्नाट्यवद्यच्चविचित्रम् ॥ भगवत्यानामेतिभगवतीपदघटितामित्यर्थः ॥ ४० ॥ इति श्रीदेवीभागवततिलके प्रथमस्कंधे
द्वितीयोऽध्यायः ॥ २ ॥

त्रिचत्वारिंशच्छ्लोकैस्तु पुराणाख्यासमसंख्यका॥तत्तद्युगीयव्यासाश्चकथ्यंतेऽस्मिंस्तृतीयके ॥ १ ॥ शृण्वंत्विति ॥ १ ॥ मद्वयमिति॥मशब्देनमकाराद्यक्षरयुक्तंपुराणंगृह्यते ॥ तस्यद्वयंतथा
चमार्कंडेयंमात्स्यमितिचसिद्धम्।एवंसर्वत्रव्याख्येयम्।अस्मिन्पद्येऽष्टादशपुराणानामाद्यक्षरग्रहणेनसंग्रहःकृतः ॥२॥ अधुनातानिपुराणानिनाम्नासंख्ययाचपृथक्पृथगाह । चतुर्दशेति।
ग्रहसहस्रं नव सहस्रम्।३।४।५।६॥वायव्यामिति॥यस्यसंख्येतिशेषः॥यस्यसंख्याषट्छतानि॥अथचसंख्यातःसंख्ययाचतुर्विंशतिः॥चतुर्विंशतिसंख्याकानिसहस्राणियानिसाचसंख्येत्यर्थः
॥७।८।९।१०॥११॥पुराणेति॥पुराणनामानितत्संख्याचमयाप्रोक्तेतिशेषः॥१२॥१३॥१४॥१५॥भागवतमिति॥लोकेदेवीभागवतविष्णुभागवतनाम्नाभागवतद्वयस्यैवप्रसिद्धत्वेनदेवी
भागवतस्यपंचमंवेदसंमितमितिवचनेस्वेनैवस्वस्यमहापुराणत्वस्यनिश्चितत्वेनार्थादुपपुराणेषुभागवतपदेनाविष्णुभागवतस्यैवग्रहणम् ॥१६॥ भारतात्पूर्वमेवमहापुराणानिकृतानीत्याह॥

सूत उवाच ॥ शृण्वंतुसप्रवक्ष्यामिपुराणानिमुनीश्वराः ॥ यथाश्रुतानितत्त्वेनव्यासात्सत्यवतीसुतात् ॥१॥मद्वयंभद्वयंचैवब्रत्रयंवचतुष्टयम् ॥ अनापलिंगकूस्कानिपुराणानिपृथक्पृथक् ॥ २ ॥ चतुर्दशसहस्रंचमत्स्यमाद्यं प्रकीर्तितम् ॥ तथाग्रहसहस्रंतुमार्कंडेयंमहाद्भुतम् ॥ ३ ॥ चतुर्दशसहस्राणितथापंचशतानिच ॥ भविष्यंपरिसंख्यातंमुनिभिस्तत्त्वदर्शिभिः ॥ ४ ॥ अष्टादशसहस्रंवैपुण्यंभागवतंकिल ॥ तथाचायुतसंख्याकंपुराणंब्राह्मसंज्ञकम् ॥५॥ द्वादशैवसहस्राणिब्रह्मांडंचशताधिकम् ॥ तथाष्टादशसाहस्रंब्रह्मवैवर्तमेवच ॥ ६ ॥ अयुतंवामनाख्यंचवायव्यंषट्शतानिच ॥ चतुर्विंशतिसंख्यातःसहस्राणितुशौनक ॥७॥ त्रयोविंशतिसाहस्रंवैष्णवंपरमाद्भुतम् ॥ चतुर्विंशतिसाहस्रंवाराहपरमाद्भुतम् ॥८॥ षोडशैवसहस्राणिपुराणंचाग्निसंज्ञितम् ॥ पंचविंशतिसाहस्रंनारदंपरमंमतम् ॥ ९ ॥ पञ्चपञ्चाशत्सहस्रंपाद्माख्यंविपुलंमतम् ॥ एकादशसहस्राणिलिंगाख्यंचातिविस्तृतम् ॥१०॥ एकोनविंशत्साहस्रंगारुडंहरिभाषितम्॥सप्तदशसहस्रंचपुराणंकूर्मभाषितम् ॥ ११ ॥ एकाशीतिसहस्राणिस्कंदाख्यंपरमाद्भुतम्।पुराणाख्याचसंख्याचविस्तरेणमयानघाः ॥१२ ॥ तथैवोपपुराणानिशृण्वंतुऋषिसत्तमाः ॥ सनत्कुमारंप्रथमंनारसिंहंततःपरम् ॥ १३ ॥ नारदीयंशिवंचैवदौर्वाससमनुत्तमम् ॥ कापिलंमानवंचैवतथाचौशनसंस्मृतम् ॥ १४ ॥ वारुणंकालिकाख्यंचसांबंनंदिकृतंशुभम्॥सौरंपाराशरप्रोक्तमादित्यंचातिविस्तरम् ॥ १५ ॥ माहेश्वरंभागवतंवासिष्ठंचसविस्तरम् ॥ एतान्युपपुराणानिकथितानिमहात्मभिः ॥ १६ ॥ अष्टादशपुराणानिकृत्वासत्यवतीसुतः ॥ भारताख्यानमतुलंचक्रेतदुपबृंहितम् ॥ १७ ॥

अष्टादशेति।यद्यप्यत्रोपपुराणकथनोत्तरमेवेदंवचनंपठितंतथापिपुराणांतरेअष्टादशमहापुराणोत्तरमेवभारतस्योत्पत्तेरुक्तत्वादत्रापिअष्टादशपुराणपदेनमहापुराणानामेवग्रहणम् ॥ तथा
चाष्टादशमहापुराणानिकृत्वाभारताख्यानंव्यासश्चक्रेइत्यर्थः।तदुपबृंहितंतैःपुराणैर्भारताख्यानमुपबृंहितंवर्द्धितमित्यर्थः।अयंभावःअष्टादशपुराणानिव्यासेनप्रथमतः कृत्वातत्रत्यंसारांशं
प्रगृह्यभारतंप्रणीतम्।तथाचभारतापेक्षयाभारतोक्तार्थस्याष्टादशसुविस्तृतत्वेनतदुपबृंहितत्वमव्याहतमेतद्वचनादपिदेवीभागवतमेवमहापुराणम् ॥विष्णुभागवतस्यभरतोत्तरंजायमानत्व
स्यभारतोत्तरंनिर्विण्णोव्यासश्चकारेतिविष्णुभागवतवचनेनैवबोधितत्वाद्भारतात्पूर्वंविद्यमानेषुमहापुराणेषुविष्णुभागवतस्यप्रवेशाभावात् ननुमार्कंडेयपुराणेप्रथमेऽध्यायेउक्तं–भारतंव्या

सम्मुखाच्छ्रुत्वातत्रसंदिहानःक्रौष्टुकिर्मार्कण्डेयंप्रत्यागत्य तत्रत्यंसंदेहंपृष्टवान्।तत्संदेहनिवृत्त्यर्थंमार्कंडेयोमार्कंडेयपुराणमुक्तवानिति ॥ तथाचमार्कंडेयपुराणंभारतोत्तरंजातमितिनिश्चीयते।ततश्चभारतात्पूर्वंसप्तदशपुराणान्येवसंतीतिअष्टादशपुराणानिकृत्वेतिवचनमसंगतमेवेतिचेन्न॥प्रथमतः कथामात्रंव्यासमुखाच्छ्रुतंनतुग्रंथरूपमदंतकथामात्रश्रवणेनैवजातसंदेहःक्रोष्टुकिर्मार्कंडेयंप्रत्यागत्यसंदेहंपृष्टवानितिमार्कंडेयपुराणाभिप्रायः ॥ अष्टादशपुराणग्रंथंतदुत्तरंकृत्वाभारतग्रंथःकृतइति॥अष्टादशपुराणानिकृत्वेतिवचनाभिप्रायकल्पनेनविरोधाभावादिति॥१७॥नन्वेतानिपुराणानिकस्मिन्युगेजायंतेतत्राऽऽहमन्वंतरेष्विति॥ युगानामेकसप्तत्यामन्वंतरमिहोच्यते॥तेचमनवश्चतुर्दश॥तथाचप्रतिमन्वंतरंद्वापरेयुगेकरुणानिधिर्व्यासःकेवलंधर्मबुद्ध्यैवपुराणविभागंप्रादुष्करोति ॥ १८ ॥ व्यासोविष्णुरेववेदविभागंचकरोतीत्याह ॥ द्वापरेइति ॥१९॥२०॥२१॥ अष्टाविंशतितमेयुगेसत्यवतीसूनुर्ममगुरुर्व्यासोऽभवत् ॥ अनंतरे

मन्वंतरेषुसर्वेषुद्वापरेद्वापरेयुगे॥प्रादुःकरोतिधर्मार्थीपुराणानियथाविधि॥१८॥द्वापरेद्वापरेविष्णुर्व्यासरूपेणसर्वदा॥ वेदमेकंसबहुधाकुरुतेहितकाम्यया॥१९॥अल्पायुषोल्पबुद्धींश्चविप्राञ्ज्ञात्वाकलावथ॥पुराणसंहितांपुण्यांकुरुतेऽसौयुगेयुगे॥२०॥स्त्रीशूद्रद्विजबंधूनांनवेदश्रवणंमतम् ॥ तेषामेवहितार्थायपुराणानिकृतानिच॥२१॥मन्वंतरेसप्तमेऽत्रशुभेवैवस्वताभिधे॥अष्टाविंशतिमेप्राप्तेद्वापरेमुनिसत्तमाः॥२२॥ व्यासःसत्यवतीसूनुर्गुरुर्मेधर्मवित्तमः॥एकोनत्रिंशत्संप्राप्तेद्रौणिर्व्यासोभविष्यति॥२३॥अतीतास्तुतथाव्यासाःसप्तविंशतिरेवच॥पुराणसंहितास्तैस्तुकथितास्तुयुगेयुगे॥२४॥ऋषयऊचुः॥ब्रूहिसूतमहाभागव्यासाःपूर्वयुगोद्भवाः॥वक्तारस्तुपुराणानांद्वापरेद्वापरेयुगे ॥२५॥ सूतउवाच॥द्वापरेप्रथमेव्यस्ताःस्वयंवेदाःस्वयंभुवा ॥ प्रजापतिर्द्वितीयेतुद्वापरेव्यासकार्यकृत् ॥ २६ ॥ तृतीयेचोशनाव्यासश्चतुर्थेतुबृहस्पतिः ॥ पंचमेसविताव्यासःषष्ठेमृत्युस्तदापरे ॥ २७ ॥ मघवासप्तमेप्राप्तेवसिष्ठस्त्वष्टमेस्मृतः ॥ सारस्वतस्तुनवमेत्रिधामादशमेतथा ॥ २८ ॥ एकादशेऽथत्रिवृषोभरद्वाजस्ततःपरम्॥त्रयोदशेचांतरिक्षोधर्मश्चापिचतुर्दशे ॥ २९ ॥ त्र्य्यारुणिःपंचदशेषोडशेतुधनंजयः ॥मेधातिथिःसप्तदशेव्रतीह्यष्टादशेतथा ॥ ३० ॥ अत्रिरेकोनविंशेऽथगौतमस्तुततःपरम् ॥ उत्तमश्चैकविंशेऽथहर्यात्मापरिकीर्तितः ॥ ३१ ॥ वेनोवाजश्रवाश्चैवसोमोऽमुष्यायणस्तथा ॥ तृणबिंदुस्तथाव्यासोभार्गवस्तुततःपरम् ॥ ३२ ॥

युगेद्रौणिरश्वत्थामाभविष्यतीत्यन्वयः ॥२२॥२३॥ अतीताइति ॥ अष्टाविंशतितमयुगस्थाद्व्यासात्पूर्वंसप्तविंशतिर्व्यासाजाताइत्यर्थः ॥२४॥ व्यासनामानिपृच्छंति ॥ ऋषयइति ॥ ब्रूहिसूतेति ॥ कूर्मपुराणेतुएकादशेतुनहुषःशततेजास्ततःपरम् ॥ त्रयोदशेतथाधर्मस्तुरुक्षुस्तुचतुर्दशे ॥ त्र्य्यारुणिःपंचदशेषोडशेतुधनंजयः ॥ कृतंजयःसप्तदशेह्यष्टादशऋतंजयः ॥ ततोव्यासोभरद्वाजस्तस्मादूर्ध्वंतुगौतमः ॥ वाजश्रवाश्चैकविंशेतस्माच्छुष्मायणः परः । तृणबिंदुस्त्रयोविंशेवाल्मीकिस्तुततःपरम् ॥ पंचविंशेतथाशक्तिःषड्विंशेतुपराशरः ॥ सप्तविंशेतथाव्यासोजातुकर्ण्योमहामुनिः ॥ अष्टाविंशेस्मृतोव्यासःपराशरसुतःपरः—इत्यन्यथाव्यासाउक्ताः ॥ कल्पभेदेनतुव्यवस्था ॥२५ ॥२६॥२७॥२८॥२९॥३०॥३१॥ उत्तमोहर्यात्माचैकएवएकविंशेअयंजातः ॥ द्वाविंशेवेनोवाजश्रवाः ॥ त्रयोविंशेसोमोऽमुष्यायणः ॥ चतुर्विंशेतृणबिंदुः ॥ ततोभार्गवः ॥ ३२ ॥

ततःशक्तिस्ततोजातुकर्ण्यस्ततःकृष्णद्वैपायनः ॥३३॥३४॥३५ ॥ व्यासेनेति ॥ इदंपुराणंव्यासेनप्रथमतःकृत्वापश्चादिदमत्यंतंशुभमितिविज्ञायज्ञात्वायस्मैकस्मैनोक्तम् । कुतःसर्वोत्कृष्टत्वात् ॥ किंतु अयोनिजःपुत्रःकीदृशो महात्मासर्वोत्तमगुणवान् ॥ अरणिसंभवोऽयोनिजश्चवैराग्ययुक्तश्चतस्मैपाठितम् ॥ तस्मादिदंसर्वोत्तममित्यत्रकः संदेहः ॥३६॥ ननुतवापिव्यासेनोक्तमस्तीति चेत्तत्राऽऽह श्रुतमिति ॥ व्यासेनैतादृशंपुराणंमांवक्तव्यमितिममभाग्यंक्वास्ति ॥ किंतु मुख्यत्वेनशुकायोक्तम् । मयातुतत्सहाध्यायित्वेनश्रुतमिति ॥ ननुतत्सहाध्यायित्वंतवतस्यव्यासस्येष्टमितिचेत्तत्राऽऽह प्रसादादिति ॥ एतत्सहाध्यायित्वंमयामहतायत्नेनप्रसादादेव लब्धंनतुसहजतयेतिभावः॥ ननुतथाऽपिप्रसादयोग्यस्तुत्वमासितत्राऽऽह॥ करुणानिधेश्चेति ॥ नाहंयोग्यःकिंतु गुरुरेवकरुणानिधिरतस्तत्प्रसादप्राप्तसहाध्यायित्वेनमयेदंभागवतंव्यासमुखाच्छ्रुतमितिभावः ॥ ३७ ॥ तत्रापिप्रष्टाशुकएवाऽहंतु श्रोतैवकेवलमित्याह ॥ सुतेनेति ॥ सुतेनपुत्रेणशुकेनेत्यर्थः ॥ ३८ ॥ महत्त्वंपुराणस्यवर्णयति ॥ श्रीमद्भागवतेति ॥ अयमपिशुकःहेसत्तमाइतिऋषिसंबोधनम् ॥ संसारार्णवस्यदुर्विगाह्यंयत्स

ततःशक्तिर्जातुकर्ण्यःकृष्णद्वैपायनस्ततः ॥ अष्टाविंशतिसंख्येयंकथितायामयाश्रुता ॥ ३३ ॥ कृष्णद्वैपायनात्प्रोक्तंपुराणंचमयाश्रुतम् ॥ श्रीमद्भागवतंपुण्यंसर्वदुःखौघनाशनम् ॥ ३४ ॥ कामदंमोक्षदंचैववेदार्थपरिबृंहितम् ॥ सर्वागमरसारामंमुमुक्षूणांसदाप्रियम् ॥ ३५ ॥ व्यासेनकृत्वाऽतिशुभंपुराणंशुकायपुत्रायमहात्मनेयत् ॥ वैराग्ययुक्तायचपाठितंवैविज्ञायचैवारणिसंभवाय ॥ ३६ ॥ श्रुतंमयातत्रतथागृहीतंयथार्थवद्व्यासमुखान्मुनींद्राः ॥ पुराणगुह्यंसकलंसमेतंगुरोः प्रसादात्करुणानिधेश्च ॥ ३७ ॥ सुतेनपृष्टःसकलंजगादद्वैपायनस्तत्त्वपुराणगुह्यम् ॥ अयोनिजेनाद्भुतबुद्धिनावैश्रुतंमयातत्रमहाप्रभावम् ॥ ३८ ॥ श्रीमद्भागवतामरांघ्रिपफलास्वादादरःसत्तमाःसंसारार्णवदुर्विगाह्यसलिलंसंतर्तुकामःशुकः ॥ नानाख्यानरसालयंश्रुतिपुटैःप्रेम्णाऽशृणोदद्भुतंतच्छ्रुत्वानविमुच्यतेकलिभयादेवंविधःकःक्षितौ ॥ ३९ ॥ पापीयानपिवेदधर्मरहितःस्वाचारहीनाशयोव्याजेनापिशृणोतियःपरमिदंश्रीमत्पुराणोत्तमम् ॥ भुक्त्वाभोगकलापमत्रविपुलंदेहावसानेऽचलंयोगिप्राप्यमवाप्नुयाद्भगवतीनामांकितंसुंदरम् ॥ ४० ॥ यानिर्गुणाहरिहरादिभिरप्यलभ्याविद्यासतांप्रियतमाऽथसमाधिगम्या ॥ सातस्यचित्तकुहरेप्रकरोतिभावंयःसंशृणोतिसततंतुसतीपुराणम् ॥ ४१ ॥

लिलं तत्संतर्तुकामःसन्अमरांघ्रिपःकल्पतरुर्वेदरूपस्तस्यफलंश्रीमद्भागवतात्मकंतदमरांघ्रिपफलं यत्तस्यस्वादेआदरोयस्यैतादृशःसन्नानाख्यानमेवरसस्तस्यालयंपुराणमिदमद्भुतंप्रेम्णाश्रुतिपुटैःकर्णपुटैरशृणोत् ॥ एतादृशंमहाभागवतंश्रुत्वाकलिभयान्नमुच्यतेएवंविधःपुरुषःक्षितौकोऽस्तिनकोपीत्यर्थः ॥ ३९ ॥ ननुशुकादयोमहांतोभागवतश्रवणेनमुक्ताभवंतु । पापिनस्तुकथंमुक्ताःस्युरितिचेत्तत्राऽऽह ॥ पापीयानपीति । अतिशयेनपापवानपिपुनश्चवेदोक्तधर्मरहितोऽपितथास्वाचारेणहीनआशयोंतःकरणंयस्य आचारसंस्कारहीनांतःकरणवानपीत्यर्थः ॥ एतादृशोऽपिसन्पुनर्व्याजेनापिकपटेनापियोभगवतीनामांकितंभगवतीपदघटितंसुंदरमिदंप्रकृतंश्रीमत्पुराणोत्तमंशृणोतिसोऽप्यत्रभोगकलापंविपुलंभुक्त्वादेहावसानेनिश्चलंकूटस्थंश्रेष्ठपदंयोगिभिःप्राप्यंगच्छतीत्यर्थः ॥ तदुक्तं ॥ शिवापदाराधनतत्पराणांभोगश्चमोक्षश्चकरस्थएवेति ॥ ४० ॥ ननुज्ञानंविनानमोक्षइतिसिद्धांतः । तथाचैतस्यज्ञानाभावेनकेवलपुराणश्रवणमात्रेणकथंमोक्षउक्तइतिचेत्तत्राऽऽहयानिर्गुणेति ॥ निर्गुणाब्रह्मरूपिणीहरिहरादिभिर्महद्भिरप्यलभ्याविद्याविषयःसतांज्ञानिनांप्रियतमा अथापिसमाधिनानिर्विकल्पसमा

धिनवगम्याज्ञेया एतादृशीयासर्वोत्कृष्टाभगवतीब्रह्मरूपिणीसातस्यपुरुषस्यचित्तकुहरेभावंस्थितिंकरोति ॥ कस्यपुरुषस्य ॥ यःपुरुषःसततंसतीपुराणंसर्तादेवीतस्याःपुराणंतुसंशृणोतितस्यपुरुषस्येत्यर्थः ॥ एतद्भागवतश्रवणेनाचिद्रूपिण्यादेव्याअनुभवस्ततश्चभोगमोक्षौजायेते ॥ ततश्चसर्वोत्तममेतद्भागवतमितिभावः॥४१॥इदानींसूतोजनानाक्रोशति॥संप्राप्येति ॥ यःपुरुषोमानुषभवंमनुष्यजातौजन्मसंप्राप्यकीदृशंजन्मसकलानिसशक्तिकान्यंगानितुविकलानितद्युक्तम् ॥ तथावाचकंपुराणवक्तारमपिसंप्राप्ययो मूढोभवार्णवजलस्योत्तरणार्थंपोतंपोतभूतंसुखदं मोक्षसुखदंपुराणंदेवीभागवताख्यंनशृणोतिसाविधिनादैवेनवंचितोहतभाग्यइत्यर्थः ॥ ४२ ॥ यःपुरुषोमानुषत्वेमनुष्यजातौकर्णयुगलंप्राप्यरागीसन्परापवादान्सततंशृणोतिसःसर्वार्थदंपुरुषार्थचतुष्टयप्रदंरसनिधिंरसोवैसइतिश्रुतिप्रतिपादितोरसआत्मातस्यनिधिस्थानभूतंपुराणंदेवीभागवताख्यंनष्टोमंदबुद्धिःकुतोनशृणुतेइत्याक्रोशतिसूतः [॥ ४३ ॥ इति श्रीदेवीभागवतव्याख्यानेतिलकाभिधेप्रथमस्कंधेतृतीयोध्यायः ॥ ३ ॥ पंचषष्टिश्लोकवर्यैर्देवीसर्वोत्तमेतिच ॥ शुकजन्मप्रसंगेनभण्यतेऽस्मिंश्चतुर्थके ॥ १ ॥ तत्रपूर्वाध्यायेविज्ञायचैवार

संप्राप्यमानुषभवंसकलाङ्गयुक्तंपोतंभवार्णवजलोत्तरणायकामम्॥ संप्राप्यवाचकमहोनशृणोतिमूढःसोवंचितोऽत्रविधिनासुखदंपुराणम्॥४२॥ यःप्राप्यकर्णयुगलंपटुमानुषत्वेरागीशृणोतिसततंचपरापवादान् ॥ सर्वार्थदंरसनिधिंविमलंपुराणंनष्टःकुतोनशृणुतेभुविमंदबुद्धिः ॥ ४३ ॥ इति श्रीदेवीभागवतेमहापुराणेप्रथमस्कंधेतृतीयोऽध्यायः ॥ ३ ॥ ऋषयऊचुः ॥ सौम्यव्यासस्यभार्यायांकस्यांजातःसुतःशुकः ॥ कथंवाकीदृशोयेनपठितेयंसुसंहिता ॥ १ ॥ अयोनिजस्त्वयाप्रोक्तस्तथाचारणिजःशुकः ॥ संदेहोस्तिमहांस्तत्रकथयाद्यमहामते ॥ २ ॥ गर्भयोगीश्रुतःपूर्वंशुकोनाममहातपाः ॥ कथंचपठितंतेनपुराणंबहुविस्तरम् ॥ ३ ॥ सूतउवाच ॥ पुरासरस्वतीतीरेव्यासःसत्यवतीसुतः ॥ आश्रमेकलविंकौतुदृष्ट्वाविस्मयमागतः ॥ ४ ॥ जातमात्रंशिशुंनीडेमुक्तमंडान्मनोहरम् ॥ ताम्रास्यंशुभसर्वांगंपिच्छांकुरविवर्जितम् ॥ ५ ॥ तौतुभक्ष्यार्थमत्यंतंरतौश्रमपरायणौ ॥ शिशोश्चंचूपुटेभक्ष्यंक्षिपंतौचपुनःपुनः ॥ ६ ॥ अंगेनांगानिबालस्यघर्षयंतौमुदान्वितौ ॥ चुंबंतौचमुखंप्रेम्णाकलविंकौशिशोःशुभम् ॥ ७ ॥ वीक्ष्यप्रेमाद्भुतंतत्रबालेचटकयोस्तदा ॥ व्यासश्चितातुरःकामंमनसासमचिंतयत् ॥ ८ ॥

णिसंभवायचेत्युक्तंतत्प्रश्नबीजमुपलभ्यमुनयःपृच्छंति ॥ सौम्येति ॥ हेसौम्यमूत कस्यांव्यासभार्यायांशुकःसुतःपुत्रोजातइत्येकःप्रश्नः ॥ कथंकेनप्रकारेणजातइतिद्वितीयः ॥ किंचकीदृशः कीदृग्गुणवानितितृतीयः ॥ येनैतादृशीसुसंहितापठितासनसाधारणगुणइत्यर्थः ॥ २ ॥ ननुशुकोऽरणिसंभूतोऽस्तीतिमयोक्तंततश्चायंप्रश्नोघटनांप्रांचतीतिचेत्सत्यम् ॥ तदेवतुसंदेहास्पदमरणौवीर्यपातासंभवादित्याह अयोनिजइति ॥ अयोनिजःकुतोयतोऽरणिसंभवस्ततः ॥२ ॥ किंच गर्भयोगीनइति ॥ नहियोगिनःकृतकृत्यज्ञानार्थमस्यपुराणाद्यपेक्षाऽस्तीत्यभिप्रायेणाऽऽहकथंचेति ॥ ३ ॥ इतिऋषिप्रश्नत्रयमुपलभ्याऽऽह ॥ पुरासरस्वतीतीरइति ॥ अनेनचाऽयोनिजइत्येवपक्षंस्थापयति ॥ गर्भयोगित्वंतस्य वास्तवंनभवति किंतु स्तावकत्वेनोक्तंदेवीभागवतश्रवणोत्तरमेवतुतस्ययोगित्वंवक्ष्यतीतिभावः ॥ कलविंकौचटकौ ॥ ४ ॥ विस्मयकारणमाह ॥ जातमात्रमिति ॥ ५ ॥ ६ ॥ ७ ॥ मनुष्यव्यवहारतुल्यःपक्षिव्यहारइत्याश्चर्यहेतुः ॥ काममिति ॥ कामंयथेष्टंमनसासमचिंतयत् विचारितवान् ॥ ८ ॥

विचारमेवाह॥तिरश्वामिति॥मनुष्यास्तुपुत्रोऽस्माकंसेवांकरिष्यतीतिसेवाफलेच्छयापुत्रेप्रेमकुर्वंतितत्रकिंचित्रंतदभावेपिपक्षिषुप्रेमदर्शनादितिभावः ॥९॥ पक्षिषुपुत्रकर्तृकसेवायाअसंभा वनांदर्शयति॥किमेताविति॥वध्वाःस्नुषायाः॥१०॥११॥१२॥१३॥एवंसेवाऽसंभावनायामपिपुत्रेप्रेमकुर्वंतितस्मात्पुत्रःसंसारेऽधिकइतिभावः॥तदेवाह संसारेइति ॥१४॥शास्त्रमप्येवमे वाहेत्याह॥अपुत्रस्येति॥पुत्रादन्यतरत्भिन्नम् ॥१५॥१६॥ दृश्यतइति॥इदंनाऽनुमानेनसाध्यतेपुत्रस्यावश्यकत्वंकिंतु समक्षंप्रत्यक्षमेवदृश्यते॥ यथाप्रत्यक्षंप्रमाणमत्रवर्ततेतथाऽऽप्तवाक्य

तिरश्वामपियत्प्रेमपुत्रेसमभिलक्ष्यते ॥ किंचित्रंयन्मनुष्याणांसेवाफलमभीप्सताम् ॥ ९ ॥ किमेतौचटकौचास्यविवाहंसुखसाधनम् ॥ विरच्य सुखिनौस्यातांदृष्ट्वावध्वामुखंशुभम् ॥ १० ॥ अथवावार्धकेप्राप्तेपरिचर्यांकरिष्यति ॥ पुत्रःपरमधर्मिष्ठःपुण्यार्थंकलविंकयोः ॥ ११ ॥ अर्ज यित्वाऽथवाद्रव्यंपितरौतर्पयिष्यति ॥ अथवाप्रेतकार्याणिकरिष्यतियथाविधि ॥ १२ ॥ अथवाकिंगयाश्राद्धंगत्वासंवितरिष्यति ॥ नीलो त्सर्गंचविधिवत्प्रकरिष्यतिबालकः ॥१३॥ संसारेऽत्रसमाख्यातंसुखानामुत्तमंसुखम् ॥ पुत्रगात्रपरिष्वंगोलालनंचविशेषतः ॥ १४ ॥ अपु त्रस्यगतिर्नास्तिस्वर्गोनैवचनैवच ॥ पुत्रादन्यतरन्नास्तिपरलोकस्यसाधनम् ॥ १५ ॥ मन्वादिभिश्चमुनिभिर्धर्मशास्त्रेषुभाषितम् ॥ पुत्रवान्स्व र्गमाप्नोतिनापुत्रस्तुकथंचन ॥ १६ ॥ दृश्यतेऽत्रसमक्षंतन्नानुमानेनसाध्यते ॥ पुत्रवान्मुच्यतेपापादाप्तवाक्यंचशाश्वतम् ॥ १७ ॥ आतुरोमृ त्युकालेऽपिभूमिशय्यागतोनरः ॥ करोतिमनसाचिंतांदुःखितःपुत्रवर्जितः ॥ १८ ॥ धनंमेविपुलंगेहेपात्राणिविविधानिच॥मंदिरंसुंदरंचैतत्को स्यस्वामीभविष्यति॥१९॥मृत्युकालेमनस्तस्यदुःखेनभ्रमतेयतः॥अतोऽस्यदुर्गतिर्नूनंभ्रांतचित्तस्यसर्वथा॥२०॥एवंबहुविधांचिंतांकृत्वासत्य वतीसुतः ॥ निश्वस्यबहुधाचोष्णंविमनाःसंबभूवह॥२१॥विचार्यमनसाऽत्यर्थंकृत्वामनसिनिश्चयम्॥जगामचतपस्तप्तुंमेरुपर्वतसंनिधौ॥२२॥ मनसाचिंतयामासकंदेवंसमुपास्महे॥ वरप्रदाननिपुणंवांछितार्थप्रदंतथा॥२३॥ विष्णुंरुद्रंसुरेंद्रंवाब्रह्माणंवादिवाकरम्॥गणेशंकार्तिकेयंचपावकं वरुणंतथा ॥ २४ ॥ एवंचिंतयतस्तस्यनारदोमुनिसत्तमः॥यदृच्छयासमायातोवीणापाणिःसमाहितः॥२५॥ तंदृष्ट्वापरमप्रीतोव्यासःसत्यवती सुतः॥कृत्वाऽर्घ्यमासनंदत्त्वापप्रच्छकुशलंमुनिम्॥२६॥श्रुत्वाऽथकुशलप्रश्नंपप्रच्छमुनिसत्तमः॥चिंतातुरोऽसिकस्मात्त्वंद्वैपायनवदस्वमे ॥२७॥

मपिवर्ततएवेत्याह॥पुत्रवानिति॥पापात्सर्वक्लेशरूपात्॥इतिशाश्वतंचिरंतनमाप्तवाक्यंवर्तत इत्यर्थः॥१७॥यदुक्तंप्रत्यक्षंतन्निदर्शयति आतुरइति ॥१८॥१९॥२०॥ एवमिति॥बहुविधां चिंतांविचारेव्यासःकृत्वातस्यपुत्राभावादुष्णंसंतापयुक्तंयथास्यात्तथाबहुधाऽनेकप्रकारैर्निःश्वस्याविमनाःसंबभूवह ॥ २१ ॥ ततःपुत्रोत्पत्तिरीश्वरानुग्रहंविनानभवतिपरमेश्वरानुग्रहश्चत पोविनानभवतीत्यर्थमतिशयंमनसाविचिंत्यतपसिनिश्चयंकृत्वाजगाम ॥२२॥२३॥२४॥२५॥२६॥२७॥

॥२८॥ २९॥ ३०॥३१॥३२॥३३॥३४॥३५॥३६॥३७ ॥ त्वन्नाभीति॥अहंसर्वजगत्कर्तात्वत्पुत्रस्ततस्त्वत्तःकोऽन्योप्यधिकस्तथापित्वं ध्यायासितस्मादस्त्यन्योधिकोदेवस्तंदेवंहेमापते लक्ष्मीपतेमांब्रूहीत्यर्थः॥३८॥तदेवोपपादयति ॥ जानाम्यहमिति ॥३९॥४०॥४१॥४२॥४३॥४४॥४५॥ तथाप्येतेब्रह्मविष्ण्वादयोदृश्याःपरिच्छिन्नाःकार्यरूपाःशक्त्याकृताइत्यत्रत कोंनुमानंवेदपारगैःपुरुषैर्वेदार्थानुसारेणक्रियते ॥४६॥४७॥ तत्कर्मकरणेइति॥अयंभावः ब्रह्मविष्ण्वादयःकस्मादुत्पन्नाइतिजिज्ञासायांवेदरसिकाःपुरुषाःप्रथमतो मायांतुप्रकृतिंविद्या

व्यासउवाच ॥ अपुत्रस्यगतिर्नास्तिनसुखंमानसेततः ॥ तदर्थंदुःखितश्चाहंचिंतयामिपुनःपुनः॥२८॥तपसातोषयाम्यद्यकंदेवंवांछितार्थदम् ॥ इति चिंतातुरोस्म्यद्यत्वामहंशरणंगतः ॥ २९ ॥ सर्वज्ञोऽसिमहर्षेत्वंकथयाऽऽशुकृपानिधे ॥ कंदेवंशरणंयामियोमेपुत्रंप्रदास्यति ॥ ३० ॥ सूतउवाच ॥ इतिव्यासेनपृष्टस्तुनारदोवेदविन्मुनिः ॥ उवाचपरयाप्रीत्याकृष्णंप्रतिमहामनाः ॥ ३१ ॥ नारदउवाच ॥ पाराशर्यमहाभागय त्वंपृच्छसिमामिह ॥ तमेवार्थंपुरापृष्टःपित्रामेमधुसूदनः ॥ ३२ ॥ ध्यानस्थंचहरिंदृष्ट्वापितामेविस्मयंगतः ॥ पर्यपृच्छत्तदेवेशंश्रीनाथंजगतः पतिम् ॥३३॥ कौस्तुभोद्भासितंदिव्यंशंखचक्रगदाधरम् ॥ पीतांबरंचतुर्बाहुंश्रीवत्सांकितवक्षसम् ॥ ३४ ॥ कारणंसर्वलोकानांदेवदेवंजगद्गुरु म् ॥ वासुदेवंजगन्नाथंतप्यमानंमहत्तपः ॥ ३५ ॥ ब्रह्मोवाच ॥ देवदेवजगन्नाथभूतभव्यभवत्प्रभो ॥ तपश्चरसिकस्मात्त्वंकिंध्यायसिजनार्द न ॥ ३६॥ विस्मयोऽयंममात्यर्थंत्वंसर्वजगतांप्रभुः ॥ ध्यानयुक्तोसिदेवेशकिंचचित्रमतःपरम् ॥ ३७ ॥ त्वन्नाभिकमलाज्जातःकर्ताऽहमखि लस्यह ॥ त्वत्तःकोप्यधिकोस्त्यत्रतंदेवंब्रूहिमापते ॥ ३८ ॥ जानाम्यहंजगन्नाथत्वमादिःसर्वकारणम् ॥ कर्तापालयिताहर्तासमर्थःसर्वका र्यकृत् ॥ ३९ ॥ इच्छयातेमहाराजसृजाम्यहमिदंजगत् ॥ हरःसंहरतेकाले सोपितेवचनेसदा ॥ ४० ॥ सूर्योभ्रमतिचाकाशे वायुर्वातिशुभा शुभः ॥ अग्निस्तपतिपर्जन्योवर्षतीशत्वदाज्ञया॥ ४१॥ त्वंतुध्यायसिकंदेवंसंशयोऽयंमहान्मम ॥ त्वत्तःपरंनपश्यामिदेवंवैभुवनत्रये ॥४२॥ कृपांकृत्वावदस्वाद्यभक्तोऽस्मितवसुव्रत ॥ महतांनैवगोप्यंहिप्रायःकिंचिदितिस्मृतिः ॥४३॥ तच्छ्रुत्वावचनंतस्यहरिराहप्रजापतिम् ॥शृणुष्वै कमनाब्रह्मंस्त्वांब्रवीमिमनोगतम् ॥ ४४ ॥ यद्यपित्वांशिवंमांचस्थितिसृष्ट्यंतकारणम् ॥ तेजानंतिजनाःसर्वेसदेवासुरमानुषाः ॥ ४५ ॥ स्रष्टा त्वंपालकश्चाहंहरःसंहारकारकः ॥ कृताःशक्त्येतिसंतर्कःक्रियतेवेदपारगैः ॥ ४६ ॥ जगत्संजननेशक्तिस्त्वयितिष्ठतिराजसी ॥ सात्त्विकीम यिरुद्रेचतामसीपरिकीर्तिता ॥ ४७ ॥ तयाविरहितस्त्वंनतत्कर्मकरणेप्रभुः ॥ नाहंपालयितुंशक्तःसंहर्तुंनापिशंकरः ॥ ४८ ॥

न्मायिनंतुमहेश्वरम्॥तयोर्विभूतिलेशेनैवजगदेतच्चराचरम्॥नतस्यकार्यकरणंचाविद्यतेनतत्समश्चाभ्यधिकश्चदृश्यते॥परास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाचेति ॥ मायावा एषानारसिंहीसर्वमिदंसृजति सर्वमिदंरक्षतिसर्वमिदंसंहरति तस्मान्मायामेतांशक्तिंविद्यादित्यादिश्रुतीःपर्यालोचयंति॥ततस्तदर्थानुसारेणैवानुमानंकल्पयंति॥ तच्चेत्थम् ॥ योयोव्यवहा रः सशक्तिपूर्वः व्यवहारत्वात् प्राकृतपुरुषव्यवहारवदित्यनुमानंकल्पयंतितत्रास्माकंजन्मादिव्यवहारस्तथा जन्मोत्तरंजगत्सर्जनादिव्यवहारश्चशक्तिपूर्वकएवेतिनिश्चिन्वंति॥व्यतिरेकंच

पश्यंति नहिशक्तिरहितःस्पंदितुमपिसमर्थःकश्चिदिति तस्माच्छ्रुत्यनुमानाभ्यामस्माकंशक्तिपूर्वकत्वंनिश्चितम् ॥ तस्मात्पराशक्तिजन्याएववयामिति ॥४८॥ यतएवंतस्माद्वयंसर्वेतदधीनाइत्याहतदधीनाइति ॥ प्रत्यक्षेचपराक्षेचेति ॥ अस्माकंप्रत्यक्षेव्यवहारेपरोक्षेचव्यवहारेपराधीनत्वंस्पष्टमेव ॥ तत्रदृष्टांतमुदाहरणंशृणु ॥ ४९ ॥ स्वपिमीति ॥ प्रलयकालीनव्यवहारस्यब्रह्मणादृश्यमानत्वाभावेनपरोक्षत्वंप्रलयकालेचतदधीनःशक्त्यधीनएवस्वपिमि ॥ तथैवकालेसृष्टिकालेसदोत्तिष्ठेउत्तिष्ठामि तदधीनःसन्नित्यर्थः ॥ स्वापजागरयोःक्षणमेकमपिन्यूनाधिकंकर्तुमयानशक्यतेतस्मात्परतंत्रएवाहमस्मीतिभावः ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ तदेति । प्रथमतोमधुकैटभयुद्धसमयेमद्बलंनष्टमनंतरंतौदेव्याविमोहितौमयिचबलंतद्धननयोग्यंदेव्यास्थापितम् ॥ तदासर्वप्रपंचस्यमद्बलस्यचकारणंभगवतीरूपंनांकिंत्वयाज्ञातमस्ति ॥ ततःपुनःकिंपृच्छसीत्यर्थः ॥ ५५ ॥ यदिच्छेति ॥ यस्याभगवत्याइच्छयाप्रथमतःस्त्रीरूपेणस्थितोमणिद्वीपेऽनंतरमहंपुरुषोभूत्वामहार्णवेचरामिवसामितस्मात्तदधीनएवाहमस्मीतिभावःइयंकथावक्ष्यमाणा ॥ कोलेतिप्रथमांतंलुप्तविभक्तिकम् ॥ जातइतिशे

तदधीनावयंसर्वेवर्तामःसततंविभो ॥ प्रत्यक्षेचपरोक्षेचदृष्टांतंशृणुसुव्रत ॥ ४९ ॥ शेषेस्वपिमिपर्यंकेपरतंत्रोनसंशयः ॥ तदधीनः सदोत्तिष्ठेकालेकालवशंगतः ॥ ५० ॥ तपश्चरामिसततंतदधीनोऽस्म्यहंसदा ॥ कदाचित्सहलक्ष्म्याचविहरामियथासुखम् ॥ ५१ ॥ कदाचिद्दानवैःसार्द्धंसंग्रामंप्रकरोम्यहम् ॥ दारुणंदेहदमनंसर्वलोकभयंकरम् ॥ ५२ ॥ प्रत्यक्षंतवधर्मज्ञतस्मिन्नेकार्णवेपुरा ॥ पंचवर्षसहस्राणिबाहुयुद्धंमयाकृतम् ॥ ५३ ॥ तौकर्णमलजौदुष्टौदानवौमदगर्वितौ। देवदेव्याःप्रसादेननिहतौमधुकैटभौ ॥ ५४ ॥ तदात्वयानकिंज्ञातंकारणंतुपरात्परम् ॥ शक्तिरूपंमहाभागकिंपृच्छसिपुनःपुनः॥५५॥यदिच्छापुरुषोभूत्वाविचरामिमहार्णवे॥कच्छपःकोलसिंहश्चवामनश्चयुगेयुगे ॥५६॥नकस्यापिप्रियोलोकेतिर्यग्योनिषुसंभवः॥ नाऽभवंस्वेच्छयावामवराहादिषुयोनिषु ॥ ५७ ॥ विहायलक्ष्म्यासहसंविहारंकोयातिमत्स्यादिषुहीनयोनिषु ॥ शय्यांचमुक्त्वागरुडासनस्थःकरोतियुद्धंविपुलंस्वतंत्रः ॥ ५८ ॥ पुरापुरस्तेऽजशिरोमदीयंगतंधनुर्ज्यास्खलनात्क्वचापि ॥ त्वयातदावाजिशिरोगृहीत्वासंयोजितंशिल्पिवरेणभूयः ॥ ५९ ॥ हयाननोऽहंपरिकीर्तितश्चप्रत्यक्षमेतत्तवलोककर्तः ॥ विडंबनेयंकिललोकमध्येकथंभवेदात्मपरोयदिस्याम् ॥ ६० ॥ तस्मान्नाहंस्वतंत्रोऽस्मिशक्त्यधीनोऽस्मिसर्वथा ॥ तामेवशक्तिंसततंध्यायामिचनिरंतरम् ॥ ६१ ॥

षः ॥ ५६ ॥ नाभवमिति ॥ तस्मात्स्वेच्छयावामाः कुटिलायावराहादियोनयस्तासुनाभवन्नासं किंतु पराधीनएवसन्नभवमित्यर्थः ॥ ५७ ॥ किंचयदिममस्वातंत्र्यंस्यात्तदानींचयोनिषुममजन्मनैवस्यान्नहिलोकेकश्चनस्वतंत्रोहीनयोनिषुजन्मवाञ्छतीत्याह विहायेति ॥ ५८ ॥ अन्यच्चममपराधीनतायाःप्रत्यक्षमुदाहरणमुच्यते पुरेति ॥ हेअज तेतवपुरोग्रदेशेमदीयंशिरोधनुषोज्यायामौर्व्याःस्खलनात्त्रोटनात्क्वचापिकस्मिन्नपिदेशेगतंपुरापूर्वंतदावाजिशिरोऽश्वशिरोगृहीत्वाशिल्पिवरेणत्वष्ट्रात्वयासंयोजितंत्वदाज्ञयात्वष्ट्रासंयोजितामित्यर्थः॥यथा चाहंकथंसर्वेश्वरःस्वतंत्रोभवामिनहीश्वरस्येदृशीदशाजायतेतस्मात्परतंत्रएवाहमस्मीतिभावः॥५९॥हयाननोहमितितदाहंहयाननोहयग्रीवनाम्नाइतिपरिकीर्तितः॥ इदंहेलोककर्तःलोकोत्पादकब्रह्मंस्तवप्रत्यक्षमेवास्तियादिपुनरात्मपरःस्वतंत्रोहंस्यांभवेयंतदेयंविडंबनालोकमध्येकथंभवेन्नकथमपीत्यर्थःतस्मादपिपराधीनएवाहमस्मीतिजानीहीतिभावः ॥ ६० ॥ तदेवाहतस्मा

दिति ॥ शेषंस्पष्टम् ॥ यत्पृष्टंकंध्यायसीतितस्योत्तरमाह तामेवशक्तिमिति ॥ शक्तिमितिसाम्यावस्थमायाशबलब्रह्मरूपिणींदेवीमित्यर्थः ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ अत्रक्वचित्पुस्तकेषुशेषेस्वपिमिपर्यंकेइत्यतःपूर्वं ममभार्यावरारोहामहालक्ष्मीरितिश्रुतेत्यादिपंचश्लोकाःसन्ति ॥ अग्रेचहयाननोहंपरिकीर्तितश्चेतिश्लोकोत्तरंतस्मान्नाहंस्वतंत्रोस्मीत्यादिपंचश्लोकानसंति तत्पक्षेतेषांतदुक्तार्थस्याध्याहारःकर्तव्यःस्यादिति ॥ ६५ ॥ इतिश्रीदेवीभागवतव्याख्यायांतिलकाभिधायांप्रथमस्कंधेचतुर्थोऽध्यायः ॥ ४ ॥ द्वादशाधिकपद्यैस्तुशतसंख्यैर्हयास्ययोः ॥ कथयातुमहादेव्यामहोत्कर्षोनिगद्यते ॥ १ ॥ हयग्रीवरूपंप्रश्नबीजमुपलभ्यकथाप्रसंगमध्येएवऋषयःपृच्छंति सूतेति ॥ १ ॥ सर्वकर्तेति ॥ यंवेदोपि

नातःपरतरंकिंचिज्ज्ञानामिकमलोद्भव ॥ नारदउवाच ॥ इत्युक्तंविष्णुनातेनपद्मयोनेस्तुसन्निधौ ॥ ६२ ॥ तेनचाप्यहमुक्तोऽस्मितथैवमुनिपुंगव ॥ तस्मात्त्वमपिकल्याणपुरुषार्थाप्तिहेतवे ॥ ६३ ॥ असंशयंहृदंभोजेभजदेवीपदांबुजम् ॥ सर्वदास्यतिसादेवीयद्यदिष्टंभवेत्तव ॥ ६४ ॥ सूतउवाच ॥ नारदेनैवमुक्तस्तुव्यासःसत्यवतीसुतः ॥ देवीपादाब्जनिष्णातस्तपसेप्रययौगिरौ ॥ ६५ ॥ इति श्रीदेवीभा०म० प्रथमस्कंधे चतुर्थोऽध्यायः ॥ ४ ॥ ऋषयऊचुः ॥ सूताऽस्माकंमनःकामंमग्नंसंशयसागरे ॥ यथोक्तमहदाश्चर्यंजगद्विस्मयकारकम् ॥ १ ॥ यन्मूर्द्धामाधवस्यापिगतोदेहात्पुनःपरम् ॥ हयग्रीवस्ततोजातःसर्वकर्ताजनार्दनः ॥ २ ॥ वेदोऽपिस्तौतियंदेवंदेवाःसर्वेयदाश्रयाः ॥ आदिदेवोजगन्नाथःसर्वकारणकारणः ॥ ३ ॥ तस्यापिवदनंछिन्नंदैवयोगात्कथंतदा ॥ तत्सर्वंकथयाऽऽशुत्वंविस्तरेणमहामते ॥ ४ ॥ सूतउवाच ॥ शृण्वंतुमुनयःसर्वेसावधानाःसमंततः ॥ चरितंदेवदेवस्यविष्णोःपरमतेजसः ॥ ५ ॥ कदाचिद्दारुणंयुद्धंकृत्वादेवःसनातनः ॥ दशवर्षसहस्राणिपरिश्रांतोजनार्दनः ॥ ६ ॥ समेदेशेशुभेस्थानेकृत्वापद्मासनंविभुः ॥ अवलंब्यधनुःसज्यंकंठदेशेधरास्थितम् ॥ ७ ॥ दत्त्वाभारंधनुष्कोट्यांनिद्रामापरमापतिः ॥ श्रांतत्वाद्दैवयोगाच्चजातस्तत्रातिनिद्रितः ॥ ८ ॥ तदाकालेनकियतादेवाः सर्वेसवासवाः ॥ ब्रह्मेशसहिताः सर्वेयज्ञंकर्तुंसमुद्यताः ॥ ९ ॥ गताः सर्वेऽथवैकुंठंद्रष्टुंदेवंजनार्दनम् ॥ देवकार्यार्थसिद्ध्यर्थंमखानामधिपंप्रभुम् ॥ १० ॥ अदृष्ट्वातंतदातत्रज्ञानदृष्ट्याविलोक्यते ॥ यत्राऽस्तेभगवान्विष्णुर्जग्मुस्तत्रतदासुराः ॥ ११ ॥ ददृशुस्तेतदेशानंयोगनिद्रावशंगतम् ॥ विचेतनंविभुंविष्णुंतत्राऽसांचक्रिरेसुराः ॥ १२ ॥ स्थितेषुसर्वदेवेषुनिद्रासुप्तेजगत्पतौ ॥ चिंतामापुःसुराःसर्वेब्रह्मरुद्रपुरोगमाः ॥ १३ ॥ तानुवाचततःशक्रःकिंकर्तव्यंसुरोत्तमाः ॥ निद्राभंगःकथंकार्यश्चिंतयंतुसुरोत्तमाः ॥ १४ ॥ तमुवाचतदाशंभुर्निद्राभंगेऽस्तिदूषणम् ॥ कार्यंचैवप्रकर्तव्यंयज्ञस्यसुरसत्तमाः ॥ १५ ॥

स्तौतियश्चसर्वकर्तातस्यापिहयग्रीवत्वंप्राप्तमित्याश्चर्यकथंनभवेदितिभावः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ युद्धमिति ॥ दैत्यैःसमंदारुणंक्रूरम् ॥ ६ ॥ शुभेस्थानेइति ॥ वैकुंठेदेवाःप्रत्यहमागत्यनिद्राभंगंकरिष्यंतीतिदेवभीत्यावैकुंठंत्यक्त्वाक्वचिदेकांतस्थानइत्यर्थः ॥ धनुःसज्यमिति ॥ वक्रीभूतंधरास्थितंतद्धनुःकंठदेशेअवलंब्ययोगिजनवत्कंठदेशंतद्धनुषोद्वितीयकोट्यांस्थापयित्वेत्यर्थः ॥ ७ ॥ दत्त्वेति ॥ सर्वशरीरस्यभारंतस्यांधनुष्कोट्यांस्थापयित्वेत्यर्थः ॥ दैवयोगाच्चेति ॥ ईश्वरस्यश्रांतत्वंनिद्रावशगत्वमनुचितमपिदैवयोगात्प्रारब्धयोगादागतमित्यर्थः ॥ तथाचता दृशानामपिप्रारब्धाधीनत्वम् ॥ ततश्चपराधीनत्वमस्तीतिध्वनितम् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

वम्रीकीटविशेषःयस्यभाषायांवालवीतिनाम ॥ इयंचाख्यायिकाशतपथब्राह्मणेचतुर्दशेकांडेप्रवर्ग्यारंभेऽभिहिता ॥ सयःसविष्णुर्यज्ञःसयःसयज्ञोसौसआदित्यस्तद्धेदंयशोविष्णुर्नशशा
कसंयेतुंतदिदमप्येतर्हिंनैवसर्वइवयशःशक्नोतिसंयंतुंसतिसुधन्वमादायापचक्रामसधनुरात्न्यांशिरउपस्तंभ्यतस्थौतंदेवा अनभिधृष्णुवंतःसमंतंपरिण्यविशंततताहवम्र्यऊचुः । इमावै
वम्र्योयदुपदीकायोस्यज्यामप्यद्यात्किमस्मैप्रयच्छेमेत्यादिना ॥ वम्रीतथोपदीपिकाचेतिहेमचंद्रकोशश्च ॥ ननुनिद्राभंगजदोषाभावार्थंयदिकीटविशेषउत्पादितस्तर्हितद्वारानि
द्राभंगेकृतेपिनिद्राभंगजदोषोदेवानांतदवस्थएवेतिचेन्न कार्यंचैवप्रकर्तव्यंयज्ञस्यसुरसत्तमाइतिपूर्ववचनेनयज्ञार्थंदोषकरणेपिप्रत्यवायाभावात् ॥ तर्हिकिमर्थंकीटउत्पादिकःस्वेनैवकुतो

उत्पादितातदावम्रीब्रह्मणापरमेष्ठिना ॥ तयाभक्षयितुंतत्रधनुषोग्रंधरास्थितम् ॥ १६॥ भक्षितेऽग्रेतदाऽनिम्नंगमिष्यतिशरासनम् ॥ तदानिद्रा
विमुक्तोऽसौदेवदेवोभविष्यति ॥ १७ ॥ देवकार्यंतदासर्वंभविष्यतिनसंशयः ॥ सवम्रींसंदिदेशाऽथदेवदेवःसनातनः ॥ १८ ॥ तमुवाचतदाव
म्रीदेवदेवस्यमापते ॥ निद्राभंगःकथंकार्योदेवस्यजगतांगुरोः ॥ १९ ॥ निद्राभंगःकथाछेदोदंपत्योःप्रीतिभेदनम् ॥ शिशुमातृविभेदश्चब्र
ह्महत्यासमंस्मृतम् ॥ :२० ॥ तत्कथंदेवदेवस्यकरोमिसुखनाशनम् ॥ किंफलंभक्षणाद्देवयेनपापंकरोम्यहम् ॥ २१ ॥ सर्वःस्वार्थव
शोलोकःकुरुतेपातकंकिल ॥ तस्मादहंकरिष्यामिस्वार्थमेवप्रभक्षणम् ॥ २२ ॥ ब्रह्मोवाच ॥ तवभागंकरिष्यामोमखमध्येयथाशृणु ॥ तेन
त्वंकुरुकार्यंनोविष्णुंबोधयमाचिरम् ॥ २३॥ होमकर्मणिपार्श्वेचहविर्दानात्पतिष्यति ॥ तंतेभागंविजानीहिकुरुकार्यंत्वरान्विता॥ २४ ॥ सूत
उवाच ॥ इत्युक्ताब्रह्मणावम्रीधनुषोऽग्रंत्वरान्विता ॥ चखादसंस्थितंभूमौविमुक्ताज्यातदाभवत् ॥ २५ ॥ प्रत्यंचायांविमुक्तायांमुक्ताकोटिस्त
थोत्तरा॥शब्दःसमभवद्घोरस्तेनत्रस्ताःसुरास्तदा ॥ २६ ॥ ब्रह्मांडंक्षुभितंसर्वंवसुधाकंपितातदा ॥ समुद्राश्चसमुद्विग्नास्त्रेसुश्चजलजंतवः ॥२७॥
ववुर्वातास्तथाचोग्राःपर्वताश्चचकंपिरे ॥ उल्कापातामहोत्पाताबभूवुर्दुःखशंसिनः ॥ २८ ॥ दिशोघोरतराश्चाऽऽसन्सूर्योप्यस्तंगतोऽभवत् ॥
चिंतामापुःसुराःसर्वेकिंभविष्यतिदुर्दिने ॥ २९ ॥ एवंचिंतयतांतेषांमूर्धाविष्णोःसकुंडलः ॥ गतःसमुकुटःक्वापिदेवदेवस्यतापसाः ॥ ३० ॥

ननिद्राभंगःकृतइतिचेदुच्यते ॥ साक्षान्निद्राभंगेविष्णुकोपस्यसंभावनास्तिकीटद्वाराभंगेतुतथानास्तीत्याशयात् ॥ १६ ॥ ननुकीटद्वाराकथंनिद्राभंगोभविष्यतितत्रयुक्तिमाह भक्षितेऽ
ग्रेइति अनिम्नमितिच्छेदः ॥ अधःकोटयांभक्षितायांप्रत्यंचायांमुक्तायांद्वितीयाकोटिरूर्ध्वंगमिष्यतितदाधिकस्पर्शेनानिद्राभंगोभविष्यतीतिभावः ॥ १७ ॥ १८ ॥ निद्राभंगइति ॥
यद्यपिभवतांयज्ञार्थंनिद्राभंगकरणेपिदोषोनतथाऽपिममयज्ञाधिकारित्वाभावात्सममास्त्येवेतिभावः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ पार्श्वेकुंडाद्बहिः पार्श्वे देशेइत्यर्थः ॥ २४ ॥
२५ ॥:२६ ॥ २७ ॥ २८ ॥ अस्तंगतोऽभवदितिनिष्प्रभोजातइत्यर्थः ॥ २९ ॥ एवंचिंतयतांतेषामिति ॥ अत्रपुरोदेशेइतिशेषः ॥ ३० ॥

ननुयस्मिन्क्षणेप्रत्यंचामुक्तातस्मिन्नेवक्षणेमूर्धाछिन्नइतियुक्तिमत् ॥ अत्रतुप्रथमतःकियत्कालपर्यंतमुत्पाताजातास्ततोमूर्धाछिन्नइत्युक्तमितियुक्तिविरोधइतिचेन्न ॥ मूर्धच्छेदोत्तरमेवोत्पातायद्यपिजातास्तथाप्युत्पातकोलाहलव्याकुलतयादेवैर्मूर्धच्छेदोनज्ञातइतितदभिप्रायेणतथोक्तेः ॥ तदेवस्पष्टयतिअंधकारइति ॥ शांतेतूत्पातेपूर्वंछिन्नमपिशिरोऽनंतरंददृशाते इत्यर्थः ॥ ३१ ॥ ३२ ॥ वैशसंदुःखम् ॥ ३३ ॥ ३४ ॥ दैवैरिति ॥ अस्माभिःस्वहस्तेनैवायंविघ्नःकृतइतिभावः ॥ ३५ ॥ ३६ ॥ ३७ ॥ नचैषेति ॥ मायामायेशंनकदापिमोहयति किंत्वन्यमेवेतिभावः ॥ इयमुक्तिस्त्वद्यापिसर्वैश्वर्याभगवत्यामहिमानमज्ञात्वाविष्णोर्मायेशत्वंज्ञात्वास्थितानामितिबोध्यम् ॥ अस्मिन्सिद्धान्तेतुविष्णोर्मायेशत्वाभावाद्देव्या एवमायेशत्वात् ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ इंद्रस्तुसंतापेनबृहस्पतिमतंखंडयति दैवमेवेति ॥ ४२ ॥ ४३ ॥ कृत्तंछिन्नंनखेनेतिशेषः ॥ ४४ ॥ ४५ ॥ वासःकमलेइति ॥ इंद्रस्यैवेत्यर्थः ॥ ४६ ॥ ४७ ॥ अनेकोदाहरणैर्ब्रह्मविष्णुरुद्रादिसर्वदेवानामनीश्वरत्वमल्पज्ञत्वंपराधीनत्वंमायामोहितत्वंचोपपाद्यअनंतरंविघ्ननिवारणार्थंसर्वस्वकार्यसिद्ध्यर्थंसर्वैश्वर्याःसर्वज्ञायाः स्वतंत्रायामायेशायाभगवत्याआराधनाकर्तव्येत्याह चिंतयंत्विति ॥ ४८ ॥ ४९ ॥ ५० ॥

अंधकारेतदाघोरेशांतेब्रह्महरौतदा ॥ शिरोहीनंशरीरंतुददृशातेविलक्षणम् ॥ ३१ ॥ दृष्ट्वाकबंधंविष्णोस्तेविस्मिताःसुरसत्तमाः ॥ चिंतासागरमग्नाश्चरुरुदुःशोककर्शिताः ॥ ३२ ॥ हानाथकिं प्रभोजातमत्यद्भुतममानुषम् ॥ वैशसंसर्वदेवानांदेवदेवसनातन ॥ ३३ ॥ मायेयंकस्यदेवस्यययातेऽद्यशिरोहृतम् ॥ अच्छेद्यस्त्वमभेद्योऽसिअप्रदाह्योऽसिसर्वदा ॥ ३४ ॥ एवंगतेत्वयिविभोमरिष्यंतिचदेवताः ॥ कीदृशस्त्वयिनःस्नेहःस्वार्थेनैवरुदामहे ॥ ३५ ॥ नायंविघ्नःकृतोदैत्यैर्नयक्षैर्नचराक्षसैः ॥ देवैरेवकृतःकस्यदूषणंचरमापते ॥ ३६ ॥ पराधीनाःसुराःसर्वेकिंकुर्मःक्वव्रजामच ॥ शरणंनैवदेवेशसुराणांमूढचेतसाम् ॥ ३७ ॥ नचैषासात्त्विकीमायाराजसीनचतामसी ॥ ययाछिन्नंशिरस्तेऽद्यमायेशस्यजगद्गुरोः ॥ ३८ ॥ क्रंदमानांस्तदादृष्ट्वादेवाञ्छिवपुरोगमान् ॥ बृहस्पतिस्तदोवाचशमयन्वेदवित्तमः ॥ ३९॥ रुदितेनमहाभागाःक्रंदितेनतथापिकिम् ॥ उपायश्चात्रकर्तव्यःसर्वथाबुद्धिगोचरः ॥ ४० ॥ दैवंपुरुषकारश्चदेवेशसदृशावुभौ ॥ उपायश्चविधातव्योदैवात्फलतिसर्वथा ॥४१ ॥ इंद्रउवाच ॥ दैवमेवपरंमन्येधिक्पौरुषमनर्थकम् ॥ विष्णोरपिशिरश्छिन्नंसुराणांचैवपश्यताम् ॥ ४२ ॥ ब्रह्मोवाच ॥ अवश्यमेवभोक्तव्यंकालेनापादितंचयत् ॥ शुभंवाप्यशुभंवापिदैवंकोऽतिक्रमेत्पुनः ॥ ४३ ॥ देहवान्सुखदुःखानांभोक्तानैवाऽत्रसंशयः ॥ यथाकालवशात्कृत्तंशिरोमेशंभुनापुरा ॥ ४४ ॥ तथैवलिंगपातश्चमहादेवस्यशापतः ॥ तथैवाद्यहरेर्मूर्धापतितोलवणांभसि ॥४५॥सहस्रभगसंप्राप्तिर्दुःखंचैवशचीपतेः ॥ स्वर्गाद्भ्रंशस्तथावासःकमलेमानसेसरे ॥४६ ॥ एतेदुःखस्यभोक्तारःकेनदुःखंनभुज्यते ॥ संसारेऽस्मिन्महाभागास्तस्माच्छोकंत्यजंतुवै ॥४७॥चिंतयंतुमहामायांविद्यादेवींसनातनीम् ॥ साविधास्यतिनःकार्यंनिर्गुणाप्रकृतिःपरा॥४८॥ब्रह्मविद्यांजगद्धात्रींसर्वेषांजननींतथा॥यया सर्वमिदंव्याप्तंत्रैलोक्यंसचराचरम्॥४९॥सूतउवाच॥इत्युक्त्वावैसुरान्वेधानिगमानादिदेशह ॥ देहयुक्तान्स्थितानग्रेसुरकार्यार्थसिद्धये॥५०॥

ब्रह्मविद्यामिति ॥ अत्रसर्वत्रमयोक्तोपोद्घातरीत्याब्रह्मविद्यामायादिशब्दामायाविशिष्टब्रह्मवाचकाइतिनविस्मर्तव्यम् ॥ यथागजशरीरेप्रविष्टस्यचैतन्यस्यगजेतिसंज्ञातथाप्रथमंमाया
शरीरेप्रविष्टस्यचैतन्यस्यमायाशक्तिरितिसंज्ञाप्रथमा ततोविद्यातिशरीरेप्रविष्टस्यविद्यादिसंज्ञा ॥ ९१ ॥ ९२ ॥ ९३ ॥ निर्गुणेइत्यनेनब्रह्मरूपिणीमहामायेइत्यनेनब्रह्मैकदेशशक्तिरू
पिणीफलतोमायाविशिष्टब्रह्मरूपिणीतिफलितम् ॥ अत्रसर्वत्रदेवीस्तोत्रेषुपुराणतंत्रोक्तेषुदेव्यामायाविशिष्टब्रह्मरूपत्वाद्धेतोःक्वचिद्ब्रह्मत्वेनवर्णनंक्वचिन्मायात्वेनवर्णनमुभयमपिसंगच्छते
इतिबोध्यम् ॥ ९४ ॥ उद्गीथइति ॥ उद्गीथेप्रणवेअर्धमात्राबिंद्वर्धचंद्ररूपिणीयासात्वमसि ॥ वाच्यवाचकयोरभेदादर्धमात्रात्मकत्वमुक्तमितिबोध्यम् ॥ तत्रार्धमात्रापरंपदमितिवच
नादर्धमात्रावाच्यत्वेनब्रह्मप्रतिपादितम् ॥ तादृशार्धमात्रात्मकत्वोक्त्याचब्रह्मरूपत्वंभगवत्याःस्पष्टमेवोक्तम् ॥ तदुक्तंमार्कंडेयपुराणे ॥ अर्धमात्रास्थितानित्यायानुच्चार्याविशेषतइति॥
॥ ९५ ॥ त्वांसंस्तुमइति ॥ हेअंबत्वांसंस्तुमःकीदृशींभुवनत्रयस्यसंविधानमुत्पादनंतत्रदक्षांकुशलां वरेण्यांश्रेष्ठांवाग्बीजंवाग्भवोमंत्रस्तत्रयोवासस्तस्मिन्निपुणांपंडितांनिरंतरंवाग्भववी

ब्रह्मोवाच॥स्तुवंतुपरमांदेवींब्रह्मविद्यांसनातनीम्॥गूढांगींचमहामायांसर्वकार्यार्थसाधनीम् ॥ ९१ ॥ तच्छ्रुत्वावचनंतस्यवेदाःसर्वांगसुंदराः ॥
तुष्टुवुर्ज्ञानगम्यांतांमहामायांजगत्स्थिताम् ॥ ९२ ॥ वेदाऊचुः ॥ नमोदेविमहामायेविश्वोत्पत्तिकरेशिवे॥ निर्गुणेसर्वभूतेशिमातःशंकरकामदे
॥ ९३ ॥ त्वंभूमिःसर्वभूतानांप्राणःप्राणवतांतथा ॥ धीःश्रीःकांतिःक्षमाशांतिःश्रद्धामेधाधृतिःस्मृतिः ॥ ९४ ॥ त्वमुद्गीथेऽर्धमात्राऽसिगाय
त्रीव्याहृतिस्तथा ॥ जयाचविजयाधात्रीलज्जाकीर्तिःस्पृहादया ॥९५॥ त्वांसंस्तुमोंबभुवनत्रयसंविधानदक्षांदयारसयुतांजननींजनानाम् ॥
विद्यांशिवांसकललोकहितां वरेण्यांवाग्बीजवासनिपुणांभवनाशकर्त्रीम् ॥ ९६ ॥ ब्रह्माहरःशौरिसहस्रनेत्रवाग्वह्निसूर्याभुवनाधिनाथाः ॥
तेत्वत्कृताःसंतिततोनमुख्यामातायतस्त्वंस्थिरजंगमानाम् ॥ ९७ ॥ सकलभुवनमेतत्कर्तुकामायदात्वंसृजसिजननिदेवान्विष्णुरुद्राजमुख्या
न् ॥ स्थितिलयजननंतैःकारयस्येकरूपानखलुतवकथंचिद्देविसंसारलेशः ॥ ९८ ॥

जोपासकैस्तत्रबीजेप्रतिबिंबतत्वेनदृश्यत्वात्तद्बीजोपासकानांझटित्यनुभवाच्चतत्रावश्यंवासोविद्यतइतिजायतइतिभावः ॥ भवनाशकर्त्रींज्ञानप्रदानेनेतिभावः ॥ ९६ ॥ ननुब्रह्मादयः
संतितेकिमितिस्वकार्यार्थंनस्तूयंतेतत्राऽऽहब्रह्मेति ॥ ब्रह्मातथाहरःतथाशौरिश्चसहस्रनेत्रश्चवाक्चसरस्वतीचवह्निश्चसूर्यश्चेतियेभुवनाधिनाथाःसंतितेत्वत्कृतास्त्वयोत्पादिताः ॥ कस्मा
दितिचेद्यतस्त्वंस्थिरजंगमानांमातातस्मात्त्वयैवोत्पादितास्ततस्तस्माद्धेतोस्तेनमुख्याअतोमास्माभिस्तेस्तूयंतइत्यर्थः ॥ नहिमुख्यपक्षपातंविहायाऽमुख्यपक्षपातंकश्चित्करोतीतिभावः ॥
॥ ९७ ॥ नन्वहमेवजगत्स्रष्ट्रीतिचेत्तस्मिञ्जगतिनीचोच्चप्राणिकल्पनयावैषम्यनैर्घृण्येममस्यातामितिचेत्तत्राऽऽहसकलभुवनमिति । हेजननिसकलभुवनमेतद्यदाकर्तुकामात्वमसितदावि
ष्णुरुद्राजमुख्यान्विष्ण्वादिप्रभृतीन्सृजसिसृष्टैश्चतैःस्थितिलयजननं ॥ समाहारद्वंद्वःसृष्टिस्थितिसंहारान्कारयसि ॥ कथमेकरूपाईषदपिविकाराभावात् ॥ अविकृतरूपेत्यर्थः ॥ अतो
नवैषम्यनैर्घृण्यदोषप्रसक्तिस्तवेतिभावः ॥ यथाराजास्वसेवकैःस्वस्वकर्मानुरूपेक्रियमाणेकर्मणिनवैषम्यनैर्घृण्येप्राप्नोति तद्वत् ॥ ननुकथंममाविकृतरूपत्वमितिचेत्तत्राह ॥ नखल्विति ॥

हेदेवितवकथंचित्केनापिप्रकारेणसंसारलेशःसंसारगंधोनखल्वस्तिनैवास्तीत्यतोऽविकृतरूपत्वंतवनिर्विघ्नमस्त्येवेतिभावः ॥ तथाचश्रुतिः ॥ असंगोह्ययंपुरुषोऽसंगोनहिसज्जतइति ॥५८॥
किंचहेमातःत्वांसंस्तुमइतिप्रतिज्ञामात्रमस्माभिःकृतंस्तुतिंकर्तुमवलोक्यतेचेत्कथमपिकर्तुंनशक्यतइत्याह नतेरूपमिति ॥ हेमातस्तेरूपंसगुणंवानिर्गुणंवावेत्तुंज्ञातुंसकलभुवनेद्वैतप्रपंचेको
पिपुरुषोनिर्पुणःसमर्थोनास्ति ॥ तथाचश्रुतिः ॥ यस्याःस्वरूपंब्रह्मादयोनविजानंतितस्मादुच्यतेअज्ञेयेति ॥ कोअद्धावेदकइहप्रवोचत्कुतआजाताकुतइयंविसृष्टिः ॥ अर्वाग्देवाअस्य
विसर्जनेनाथाकोवेदयतआबभूवेति ॥ यतोवाचोनिवर्ततेअप्राप्यमनसासहेतिच ॥ अस्त्वेतत्तवरूपंदुर्ज्ञेयंदूरंतवनाम्नांसंख्यामपिकथितुंकथयितुमिहयोग्यःपुरुषोनास्तियथार्थंदृष्टांतः ॥
कोसौयथाअल्पंस्वल्पंकीलालंवापीसरोवरस्थजलंतत्कलयितुमुल्लंघयितुमशक्तोयोनरःकृतमतिःसत्यमतिःप्रामाणिकइत्यर्थः । सकथंपारावारः सरित्पतिस्तस्याकलनमुल्लंघनंतत्रचतुरः
स्यात्समर्थःस्यान्नकथमपीत्यर्थः ॥ तद्वद्देवपरिच्छिन्नानांनाम्नामंतंनयोवेदसात्रिपादस्यामृतंदिवीतिश्रुतिप्रतिपाद्यमनंतंरूपंकथंजानीयान्नकथमपीत्यर्थः ॥ तथाचनामरूपज्ञानाभा
वात्कथंस्तवःसंभवेदितिभावः ॥ ५९ ॥ नाभून्ममरूपज्ञानंमाभूच्चममनामसंख्याज्ञानंतथापिसृष्ट्यादिकर्तृत्वादिगुणजालमेवगृहीत्वाकुतःस्तवोनसंभवेदितिचेत्तत्राऽऽहनदेवानामिति ॥
हेभगवतिदेवानांमध्येतवानंतविभवमनंतवैभवमेकोपिदेवोनजानाति ॥ तवजगत्सर्जनादिवैभवंकोपिनजानातीत्यर्थः ॥ कुतइतिचेत्तत्राऽऽहत्वमिहभुवनैकासीति ॥ त्वमिहसंसारेभुव
नातन्नाम्नीभुवनेश्वरीनाम्नीजननीजगज्जनयित्रीएकाऽसहायाआसि ॥ एकैवसर्वत्रवर्तसेतस्मादेकेति ॥ एकमेवाद्वितीयंब्रह्म ॥ नेहनानास्तिकिंचनेतिश्रुतिभ्याम् ॥ इत्थमेकासत्यपि

नतेरूपंवेत्तुंसकलभुवनेकोऽपिनिपुणोननाम्नांसंख्यांतेकथितुमिहयोग्योऽस्तिपुरुषः ॥ यदल्पंकीलालंकलयितुमशक्तःसतुनरःकथंपारावारा
कलनचतुरःस्याद्धतमतिः ॥ ५९ ॥ नदेवानांमध्येभगवतितवानंतविभवंविजानात्येकोऽपित्वमिहभुवनैकासिजननी ॥ कथंमिथ्याविश्वंस
कलमपिचैकारचयसिप्रमाणंत्वेतस्मिन्निगमवचनंदेविविहितम् ॥ ६० ॥ निरीहैवासित्वंनिखिलजगतांकारणमहोचरित्रंतेचित्रंभगवतिमनो
नोव्यथयति ॥ कथंकारंवाच्यःसकलनिगमागोचरगुणप्रभावःस्वंयस्मात्स्वयमपिनजानासिपरमम् ॥ ६१ ॥

सकलंविश्वंमिथ्याकथंरचयसिनतद्बुद्धिगम्यमस्ति ॥ तथाचजगत्सर्जनसामग्रीज्ञानाभावंनेवैजगत्सृजसीतिस्तोतुंनशक्यतइतिभावः ॥ ननुमिथ्याजगदहंसृजामीत्यत्रकिंप्रमाणंतत्राऽऽह
प्रमाणंत्विति ॥ तथाचश्रुतिः ॥ त्रयमेतत्स्वप्नंसुषुप्तंमायामात्रमिति ॥ तुच्छेनाभ्वपिहितंयदासीदिति ॥ ६० ॥ नन्वहमेकैवजगद्रचयामीतिचेत्संकल्पविकल्पविशिष्टत्वेनममवि
कारित्वंस्याद्यथाऽहमेवविविधरूपेतिममपरिणामित्वंचस्यात्तथाजगद्रचनक्रियायाइच्छापूर्वकत्वान्ममापीच्छावत्त्वेनित्यतृप्तत्वनित्यानंदतयोर्मयिभंगश्चस्यात्तत्राऽऽहनिरीहैवासित्वामिति ॥
हेभगवतित्वंनिरीहैवनिरिच्छैवाविकृतरूपैवासिश्रुतिप्रतिपाद्याविकृतरूपस्यकेनाप्यपलपितुमशक्यत्वात् ॥ अस्तुतर्हिममाविकृतरूपत्वंजगत्कारणत्वमसंभवान्मास्तु ॥ नह्यविकृतोवि
काराभाववान्कश्चित्किंचिदपिकर्तुंशक्नोति ॥ पाषाणादिष्वदर्शनादितिचेत्तत्राऽऽहनिखिलजगतामिति ॥ हेभगवतियद्यपित्वंनिरीहाऽसितथापिनिखिलजगतांकारणमपित्वमेवासि ॥
अविकृतरूपस्यैवब्रह्मणोनासदासीन्नोसदासीत्तदानींनासीद्रजोनोव्योमापरोयत् ॥ तुच्छेनाभ्वापिहितंयदासीत्तपसस्तन्महिनाजायतैकम् ॥ कामस्तदग्रेसमवर्तताधीत्यादिश्रुतिभिर्ज
गत्कारणत्वस्याप्युक्तत्वेनतस्यापिजगत्कारणत्वस्यत्वय्यपलपितुमशक्यत्वात् ॥ ननुतर्हिमय्यरूपेद्वितीयेसक्रियत्वमाक्रियत्वंचतमःप्रकाशवद्विरुद्धंधर्मद्वयंकथंसंभवेदितिचेत्तत्राऽऽहचरित्रंते
चित्रमिति॥ हेमातर्यद्यपिविरुद्धधर्मद्वयवत्त्वमेकस्यनसंभवतितथापिश्रुत्याविरुद्धधर्मद्वयस्यापिप्रतिपादनात्तस्याप्यपलापानर्हत्वात्तदपित्वय्यद्वितीयेब्रह्मणिसंभवत्येवाकथमेकत्राद्वितीये

विरुद्धधर्मद्वयस्त्वंसंभवेदितिचेत्तेइदंचित्रं विचित्रंचरित्रमेवनोमनोव्यथयतिमोहयाति ॥ नैतदस्मद्बुद्धिगम्यमित्यर्थः ॥ इदमनिर्वचनीयमेवास्तीतिभावः ॥ यतइदमनिर्वचनीयंततः सकलनिगमानामगोचरागुणायस्यप्रभावस्यसतेप्रभावःपामरैरस्माभिः कथंकारंवाच्योनकथमपीत्यर्थः ॥ हेमातर्वयंनजानीमइतितावद्दूरंतिष्ठतु यस्मात्स्वयमपित्वं स्वंस्वकीयमनिर्वचनीयप्रभावंपरममुत्कृष्टंनजानासि ॥ तदान्यःकथंजानीयात् नकथमपीत्यर्थः ॥ तथाचश्रुतिः ॥ योअस्याध्यक्षःपरमेव्योमन् ॥ सोअंगवेदयदिवानवेदेति ॥ अयंभावः ॥ विरुद्धयोरेकत्रसहावस्थानासंभवरूपंयद्दूषणमुद्भावितंतत्रकिंसत्ययोरेकत्रावस्थानासंभवः आहोस्वित्सत्यमिथ्यापदार्थयोरेकत्रावस्थानासंभवः ॥ आद्यपक्षेतुनास्मत्सिद्धांतोदूषणविषयः ॥ नह्यस्माभिर्विरुद्धयोःसत्ययोरेकत्रावस्थानंमन्यते ब्रह्मणः सत्यत्वाज्जगतश्चमिथ्यात्वात् ॥ द्वितीयपक्षेतुसत्यमिथ्यापदार्थयोरज्जुसर्पादौसहावस्थानस्य दृष्टत्वान्नविरोधः ॥ तथाचब्रह्मणःपरमार्थनिष्क्रयत्वेऽपरिणामित्वेसत्यपिअनिर्वचनीयमिथ्याशक्तियोगादसत्पदार्थाध्यासोजगत्सर्जनादिकंचसर्वंभविष्यतीतिसर्वमनवद्यमिति ॥ ६१ ॥ नन्वस्त्वेतद्यद्भवद्भिः प्रार्थ्यतेतत्प्रार्थ्यतामितिचेत्तत्राह । नकिंजानासित्वमिति ॥ हेजननियदर्थमस्माभिर्भवतीप्रार्थ्यतेतन्मधुजितोविष्णोर्मौलिपतनंसर्वज्ञत्वंनजानासिकिंकिमस्माभिस्तद्वक्तव्यंसर्वज्ञायास्तवाग्रे ॥ सत्यंजानामिततः किमुच्यतइतिचेज्ज्ञात्वापिमौलिपतनंयद्युपेक्षसेतत्रकिंकारणमेतस्यस्वशक्त्याभिमानोजातःततस्तस्यमधुजितः शक्तिंमौलिपतनंज्ञात्वाविविदिषसिकिंज्ञातुमिच्छसिकिम् ॥ इदमप्यनुचितंत्वत्प्रसादादेवानेनमधुदैत्योजितस्ततस्तस्याल्पशक्तिपरीक्षाभवादृशाद्रष्टुमनुचितैवेतिमधुजित्पदेनबोधितम् ॥

**नकिंजानासित्वंजननिमधुजिन्मौलिपतनंशिवेकिंवाज्ञात्वाविविदिषसिशक्तिंमधुजितः ॥ हरेःकिंवामातर्दुरिततिरेषाबलवतीभवत्याःपादाब्जे भजननिपुणेक्वास्तिदुरितम् ॥ ६२ ॥ उपेक्षाकिंचेयंतवसुरसमूहेतिविषमाहरेर्मूर्ध्नोनाशोमतमिहमहाश्चर्यजनकम् ॥ महद्दुःखंमातस्त्वमसिजननच्छेदकुशलानजानीमोमौलेर्विघटनविलंबःकथमभूत् ॥ ६३ ॥ ज्ञात्वादोषंसकलसुरतापादितंदेविचित्तेकिंवाविष्णावमरजनितंदुष्कृतंपातितंते ॥ विष्णोर्वाकिंसमरजनितःकोपिगर्वोतिवेगाच्छेत्तुंमातस्तवविलसितंनैवविद्मोऽत्रभावम् ॥ ६४ ॥**

ननुनैतत्कारणमन्यदेवकिंचित्कारणमस्तीतिचेत्तत्किंहरेर्दुरिततिःपातकसंततिर्बलवतिप्राप्तातद्रूपमस्त्युतान्यत् ॥ यदिप्रथमपक्षस्तर्हिसोपिनसंभवति ॥ यतोभवत्याः पादाब्जे यद्भजनंतस्मिन्निपुणेप्रवीणेविष्णौदुरितंक्वास्तिदेवीभक्तेपातकसंभावनास्वप्नेपिनास्ति ॥ तदुक्तं ॥ छित्त्वाभित्त्वाचभूतानिहत्वासर्वमिदंजगत् ॥ देवींनमतिभक्त्यायोनसपापैःप्रलिप्यत इति ॥ ६२ ॥ अन्यत्कारणंचेत्तत्किंदेवेषूपेक्षावाहरेर्मस्तकपतनेविलक्षणस्वरूपदर्शनचमत्कारोवेत्याह । उपेक्षेति ॥ इयंसुरसमूहेयातवोपेक्षाऽतिविषमाकर्तुमयोग्यासाकिंकारणम् ॥ यद्वाहरेर्मूर्ध्नोमस्तकस्यनाशः सएवेदमाश्चर्यजनकंकारणंवामतम् ॥ विच्छिन्नशिरस्कपुरुषदर्शनेचमत्कारात् ॥ इतिकारणद्वयंसंभाव्यखंडयति ॥ महद्दुःखमिति ॥ यदीदंकारणद्वयंतदामहदेवदुःखमस्माकंनिरालंबनत्वापातात् ॥ अस्माकंसर्वोप्याश्रयस्त्वैवत्वंयदीत्थंकरोषितार्हिवयंमृताएवेतिभावः ॥ तस्मादिदमपिकारणद्वयंसंभाव्यमेव ॥ किंचहेमातस्त्वंजननरूपंयन्महद्दुःखंतच्छेदेकुशलासीतिवेदसिद्धांतस्तदा विष्णोर्मौलेर्विघटनंसंयोजनंतस्मिन्विलंबःकथमभूदितिनजानीमस्तदपेक्षयाकिमत्रभारोधिकोऽस्ति ॥ त्वयैतादृशसमये क्षणमात्रमपिविलंबोनकर्तुंयोग्यइतिभावः ॥ ६३ ॥ अथानेकानि कारणानिसंभावयंति ॥ ज्ञात्वेति ॥ हेदेविसकलसुराणांसमूहःसकलसुरता तयासंपादितंनानाप्रकारकं दोषंज्ञात्वात स्याद्दुःखजननायइदंशिरश्छेदनं कृतंत्वया ॥ राजनाशेप्रजानांदुःखसंभवात् ॥ किंवाप्रजाकृतंपापंराजनीतिन्यायेनामरजनितंदुष्कृतंविष्णौदेवराजेविद्यमानंतेत्वयापातितम् ॥ किंवा विष्णोःसमरजनितोयःकोप्यनिर्वचनीयोऽतिगर्वोऽस्तितंवाछेत्तुंतवैतद्विलासितमिति ॥ अत्रैतद्विषयेतेभावंनैवविद्मो मूढत्वात् ॥ ६४ ॥

५

किंवादैत्यैःसमरेयुद्धेदेवैर्विजितैस्तीर्थदेशेसुरम्येघोरंतपप्तस्त्वाभवत्याःसकाशाद्वरंलब्धवद्भिरिदंविष्णुशीर्षमंतर्धानंतिरोधानंगमितंप्रापितम् ॥ यद्वाहेभवानि विगतशिरसंवासुदेवंद्रष्टुंतवा यंविनोदोवा ॥ ६५ ॥ सिंधोःपुत्र्यांलक्ष्म्यांहेआद्येत्वंरोषितासिरुष्टासिकिम् कस्मादपराधादेनांनाथहीनांगतधवांप्रेक्षसे ॥ नैतत्तवोचितम् ॥ लक्ष्मीस्तुनान्याकाचिदस्ति किंतुतवस्वांशजैव ॥ तस्मात्तेत्वयास्वांशजातायालक्ष्म्याअपराधःक्षंतव्यः ॥ अथचैनंविष्णुमुत्थाप्यमांलक्ष्मींमोदितांहर्षितांकुरुष्व ॥ ६६ ॥ किंचयद्यद्दोषकारणंमनसित्वयाज्ञातमस्तितत्रसर्वत्रक्षमांविधायवयमनुग्रहणीयाइत्याह ॥ एतेइति ॥ हेभगवति तवजगत्कार्येषुसृष्ट्यादिषुमुख्याअधिकारिणस्त्वांसततंनमंति त्वदनुग्रहादेवप्रथितप्रभावाः संति ॥ अतस्तदभिमानमंगीकृत्यसकलाधिनाथंदेवमुत्थाप्य हेदेवि शोकार्णवात्तारयदेवान् ॥६७॥ हेअम्ब हरेर्मूर्धाक्कगतइत्येवंप्रथमंवयंनाविद्मः दूरतस्तु तंमूर्धानमानीयदेहेसंयोजनमिति॥ विष्णोस्त्वांविनान्योप्युपा

किंवादैत्यैःसमरविजितैस्तीर्थदेशेसुरम्येघोरंतप्त्वाभगवतिवरंलब्धवद्भिर्भवत्याः ॥ अतर्धानंगमितमधुनाविष्णुशीर्षंभवानिद्रष्टुंकिंवाविगतशिर संवासुदेवंविनोदः ॥ ६५ ॥ सिंधोःपुत्र्यांरोषिताकिंत्वमाद्येकस्मादेनांप्रेक्षसेनाथहीनाम् ॥ क्षंतव्यस्तेस्वांशजातापराधोव्युत्थाप्यैनंमोदितां मांकुरुष्व ॥ ६६ ॥ एतेसुरास्त्वांसततंनमंतिकार्येषुमुख्याःप्रथितप्रभावाः ॥ शोकार्णवात्तारयदेविदेवानुत्थाप्यदेवंसकलाधिनाथम् ॥ ६७ ॥ मूर्धागतःक्वांबहरेर्नविद्मोनान्योस्त्युपायःखलुजीवनेऽद्य ॥ यथासुधाजीवनकर्मदक्षातथाजगज्जीवितदाऽसिदेवि॥६८॥सूतउवाच॥ एवंस्तुता तदादेवीगुणातीतामहेश्वरी॥प्रसन्नापरमामायावेदैःसांगैश्चसामगैः ॥६९॥ तानुवाचतदावाणीचाकाशस्थाशरीरिणी॥देवान्प्रतिसुखैःशब्दैर्जना नंदकरीशुभा ॥७०॥ माकुरुध्वंसुराश्चिंतांस्वस्थास्तिष्ठंतुचाऽमराः ॥ स्तुताऽहंनिगमैःकामंसंतुष्टाऽस्मिनसंशयः ॥७१॥ यःपुमान्मानुषेलोके स्तौत्येतांमामकींस्तुतिम् ॥ पठिष्यतिसदाभक्त्यासर्वान्कामानवाप्नुयात् ॥७२॥ शृणोतिवास्तोत्रमिदंमदीयंभक्त्यात्रिकालंसततंनरोयः ॥ वि मुक्तदुःखःसभवेत्सुखीचवेदोक्तमेतन्ननुवेदतुल्यम्॥७३॥शृण्वंतुकारणंचाद्ययद्वृत्तंवदनंहरेः ॥ अकारणंकथंकार्यंसंसारेऽत्रभविष्यति ॥७४॥ उद धेस्तनयांविष्णुःसंस्थितामंतिकेप्रियाम् ॥ जहासवदनंवीक्ष्यतस्यास्तत्रमनोरमम् ॥ ७५ ॥ तयाज्ञातंहरिर्नूनंकथंमांहसतिप्रभुः ॥ विरूपंहरि णादृष्टंमुखंमेकेनहेतुना ॥ ७६ ॥ विनापिकारणेनाऽद्यकथंहास्यस्यसंभवः ॥ सपत्नीवकृतातेनमन्येऽन्यावरवर्णिनी ॥ ७७ ॥

योजीवनायनास्ति अस्मिन्संकटेयथादेवानांसुधाऽमृतंजीवनरूपेकर्मणिदक्षा॥तथाहेदेवि जगतोद्वैतप्रपंचस्यजीवितदाजीवनदात्वमेवासि अतोयथेच्छसितथाकुर्वितिभावः॥६८॥सामगैः सामगायकैः ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ७३ ॥ ७४ ॥ मनोरमामिति ॥ धन्यमस्यामुखमित्यभिप्रायेणनिर्व्याजंजहासेत्यर्थः ॥ ७५ ॥ हसतीति ॥ कपटेनहसतीतितयाज्ञातमित्यर्थः ॥ विरूपमिति ॥ अद्यावध्यनेनमन्मुखेनंकदापिविरूपताहृष्टानचहास्यंकृतम् ॥ अद्यकेनकारणेनविरूपताहृष्टाहास्यंचानेनकृतमित्यर्थः ॥ ७६ ॥ ननुविरूपतानैवदृष्टाकेवलंहास्यमेवकृतमितिचेत्तत्राऽह विनापीति ॥ निष्कारणंहास्यंनैवभवतीत्यर्थः ॥ विरूपताकारणंहास्येऽस्तीतियथातर्कितंतथाकारणांतरमपितर्कयाति सपत्नीवेति ॥ ७७ ॥

ततःकोपयुतेति ॥ तमोगुणेति ॥ ननुमहालक्ष्म्याःसात्त्विकत्वात्तमोगुणत्वमप्रसिद्धंतत्राऽऽहातामसीति ॥ तस्मिन्नेवकालेतामसीशक्तिर्देहेसमाविशत् नतुपूर्वमित्यर्थः ७८ ॥
किंकारणमितिचेत्तत्राऽऽहाकेनचित्कालेति ॥ विपरीतकालयोगेनेत्यर्थः ॥ परिणामस्तुतस्यशुभएवास्तीत्याह । देवकार्यार्थेति । देवकार्यार्थसिद्ध्यर्थंचेत्यर्थः ॥ ७९ ॥ ८० ॥ शापदा
नेकारणांतरमाह । स्त्रीस्वभावादिति ॥ अविवेकतएवप्रायःस्त्रीणांप्रवृत्तेः ॥ भावित्वादवश्यंभावित्वात् ॥ कालयोगात्सांप्रतंविपरीतकालागमनात् ॥ ८१ ॥ स्वहस्तेनकथंवैधव्यं
संपादितमितिचेद्वैधव्यापेक्षयासपत्नीसंभवदुःखस्यासोढव्यत्वादित्याह । सपत्नीति ॥ ८२ ॥ स्त्रीणांदोषाःस्वभावजाइति ॥ तामसस्त्रीणांतमोगुणादेतेदोषाःस्वभावजाइत्यर्थः ॥
तेनसात्त्विकस्त्रीणामुत्तमागुणाभवंतीतिबोध्यम् ॥ यद्यपिलक्ष्म्याःसात्त्विकत्वमस्तितथाप्यागंतुकतामसीशक्तियोगादित्थंजातमितिभावः ॥ ८३ ॥ ८४ ॥ देवकार्यार्थसिद्धयेइति

ततःकोपयुताजातामहालक्ष्मीतमोगुणा ॥ तामसीतुतदाशक्तिस्तस्यादेहेसमाविशत् ॥ ७८ ॥ केनचित्कालयोगेनदेवकार्यार्थसिद्धये ॥ प्रविष्टातामसीशक्तिस्तस्यादेहेऽतिदारुणा ॥ ७९ ॥ तामस्याविष्टदेहासाचुकोपातिशयंतदा ॥ शनकैः समुवाचेदमिदंपततुतेशिरः ॥ ८० ॥ स्त्रीस्वभावाच्चभावित्वात्कालयोगाद्विनिर्गतः ॥ अविचार्यतदादत्तःशापःस्वसुखनाशनः ॥ ८१ ॥ सपत्नीसंभवंदुःखंवैधव्यादधिकंत्विति ॥ विचिंत्यमनसेत्युक्तातामसीशक्तियोगतः ॥८२॥ अनृतंसाहसंमायामूर्खत्वमतिलोभता ॥ अशौचंनिर्दयत्वंचस्त्रीणांदोषाःस्वभावजाः ॥ ८३॥ सशीर्षंवासुदेवंतंकरोम्यद्ययथापुरा ॥ शिरोऽस्यशापयोगेननिमग्नंलवणांबुधौ ॥ ८४ ॥ अन्यच्चकारणंकिंचिद्वर्ततेसुरसत्तमाः ॥ भवतांचमहत्कार्यंभविष्यतिनसंशयः ॥ ८५ ॥ पुरादैत्योमहाबाहुर्हयग्रीवोऽतिविश्रुतः ॥ तपश्चकेसरस्वत्यास्तीरेपरमदारुणम् ॥ ८६ ॥ जपन्नेकाक्षरंमंत्रंमायाबीजात्मकंमम ॥ निराहारोजितात्माचसर्वभोगविवर्जितः ॥ ८७ ॥ ध्यायन्मांतामसींशक्तिंसर्वभूषणभूषिताम् ॥ एवंवर्षसहस्रंचतपश्चक्रेऽतिदारुणम् ॥ ८८ ॥तदाहंतामसंरूपंकृत्वातत्रसमागता ॥ दर्शनेपुरतस्तस्यध्यातंतत्तेनयादृशम् ॥ ८९ ॥ सिंहोपरिस्थितातत्रतमवोचंदयान्विता ॥ वरंब्रूहिमहाभागददामितवसुव्रत ॥ ९०॥ इतिश्रुत्वावचोदेव्यादानवःप्रेमपूरितः ॥ प्रदक्षिणांप्रणामंचचकारत्वरितस्तदा॥९१॥ दृष्ट्वारूपंमदीयंसप्रेमोत्फुल्लविलोचनः ॥ हर्षाश्रुपूर्णनयनस्तुष्टावसचमांतदा ॥ ९२ ॥ हयग्रीवउवाच ॥ नमोदेव्यैमहामायेसृष्टिस्थित्यन्तकारिणि ॥ भक्तानुग्रहचतुरेकामदेमोक्षदेशिवे ॥ ९३ ॥ धरांबुतेजःपवनखपंचानांचकारणम् ॥ त्वंगंधरसरूपाणांकारणंस्पर्शशब्दयोः ॥ ९४ ॥

यदुक्तंतदेवाऽऽह । अन्यच्चेति ॥ ८५ ॥ ८६ ॥ जपन्नेकाक्षरमिति ॥ अनेनचमायाबीजंभगवत्यामायाशबलब्रह्मरूपिण्यामुख्यमस्तीतरमंत्रापेक्षयेतिबोधितम् ॥ यथाचताराादि
मंत्राःसामान्यब्रह्मवाचकाः ॥ इदंतंत्रविदांस्पष्टम् ॥ तस्मान्मायाबीजमेवमुख्यंशाक्तंरूपम् ॥ एतदेवबोधयितुमत्रममेत्युक्तम् ॥ ८७ ॥ ध्यायन्मांतामसींशक्तिमिति ॥ यद्यपि
मायाबीजस्यमायाशबलब्रह्मैवार्थोनतामसीशक्तिः तथाप्येतस्यमंत्रस्यसर्वात्मकत्वाद्दैत्यस्यचतामसत्वात्तामसींशक्तिमेवध्यात्वामायाबीजमेवजजापेत्यर्थः ॥ ८८ ॥ तामसंरूपमिति ॥
यद्यप्यहंसाम्यावस्थमायाशबलब्रह्मरूपिणीमायाबीजवाच्यातथापितस्यध्यानानुरोधेनैवमयापितामसंरूपंधृतमित्यर्थः ॥ तदेवस्पष्टयति ॥ ध्यातंतत्तेनयादृशमिति ॥ ८९ ॥
॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ धरांबुतेजइति ॥ धरापृथ्वीअंबुजलंतेजोऽग्निःपवनोवायुःखमाकाशएतेपञ्चपदार्थास्तेषांकारणम् ॥ ९४ ॥

॥९५॥९६॥९७॥९८॥९९॥हयग्रीवाच्चेति॥हयग्रीवोजगतीतलेनैवास्तितथाचतस्मान्मृत्युर्याचितोपिनैवभविष्यतीतिगूढोऽभिसंधिर्दैत्यस्य॥ १०० ॥ १ ॥२॥ सपीडयतीति ॥ सदुष्टात्मापीडयिष्यतीत्यर्थः ॥ नतुयथाश्रुतोवर्तमानार्थःकर्त्तव्यःतथासतितस्मिन्दुष्टेदैत्येसातिदेवानांयज्ञादिकंताद्दशदुष्टदैत्यपीडापरिज्ञानाभावश्चासंगतएवस्यात्भविष्यद्दैत्यकथाकथनेतुनकोपिदोषः॥३॥विशिरोविष्णोःविगतशिरस्कविष्णोर्देहेइत्यर्थः ॥४॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ कियतेति॥एतत्कालादूर्ध्वंबहुकालेनदैत्यो(मदर्पितो)जातस्तेनदेवाउपद्रुताः ॥ ततोहयग्रीवे

घ्राणंचरसनाचक्षुस्त्वक्छ्रोत्रमिंद्रियाणिच॥ कर्मेंद्रियाणिचान्यानित्वत्तःसर्वंमहेश्वरि ॥ ९५ ॥ श्रीदेव्युवाच ॥ किंतेऽभीष्टंवरंब्रूहिवांछितंयद्दामितत् ॥ परितुष्टाऽस्मिभक्त्यातेतपसाचाद्भुतेनच ॥९६॥ हयग्रीवउवाच ॥ यथामेमरणंमातर्नभवेत्तत्तथाकुरु ॥ भवेयममरोयोगीतथाऽजेयःसुरासुरैः ॥ ९७ ॥ देव्युवाच ॥ जातस्यहिध्रुवं मृत्युर्ध्रुवंजन्ममृतस्यच ॥ मर्यादाचेद्दशीलोकेभवेच्चकथमन्यथा ॥ ९८ ॥ एवंत्वंनिश्चयं कृत्वामरणेराक्षसोत्तम ॥ वरंवरयचेष्टंतेविचार्यमनसा किल ॥ ९९ ॥ हयग्रीवउवाच ॥ हयग्रीवाच्चमेमृत्युर्नान्यस्माज्जगदंबिके ॥ इतिमेवांछितंकामंपूरयस्वमनोगतम् ॥ १०० ॥ देव्युवाच ॥ गृहंगच्छमहाभागकुरुराज्यंयथासुखम् ॥ हयग्रीवाद्दतेमृत्युर्नतेनूनंभविष्यति ॥ १ ॥ इतिदत्त्वावरंतस्माअंतर्धानंगतातथा ॥ मुदंपरमिकांप्राप्यसोपिस्वभवनंगतः ॥ २ ॥ सपीडयतिदुष्टात्मामुनीन्वेदांश्चसर्वशः ॥ नकोपिविद्यतेतस्यहंताऽत्रभुवनत्रये ॥ ३ ॥ तस्माच्छीर्षंहयस्यास्यसमुद्धृत्यमनोहरम् ॥ देहेऽत्रविशिरोविष्णोस्त्वष्टासंयोजयिष्यति ॥ ४ ॥ हयग्रीवोऽथभगवान्हनिष्यतितमासुरम् ॥ पापिष्टंदानवंक्रूरंदेवानांहितकाम्यया ॥ ५ ॥ सूतउवाच ॥ एवंसुरांस्तदाभाष्यशर्वाणीविररामह ॥ देवास्तदातिसंतुष्टास्तमूचुर्देवशिल्पिनम् ॥ ६ ॥ देवाऊचुः॥कुरुकार्यंसुराणांवैविष्णोःशीर्षाभियोजनम्॥दानवप्रवरंदैत्यंहयग्रीवोहनिष्यति॥७॥ सूतउवाच॥इतिश्रुत्वावचस्तेषांत्वष्टाचातित्वरान्वितः॥वाजिशीर्षंचकर्ताशुखड्गेनसुरसन्निधौ ॥ ८ ॥ विष्णोःशरीरेतेनाऽशुयोजितंवाजिमस्तकम् ॥ हयग्रीवोहरिर्जातोमहामायाप्रसादतः ॥ ९ ॥कियतातेनकालेनदानवोमदर्पितः ॥ निहतस्तरसासंख्येदेवानांरिपुरोजसा ॥ ११० ॥ यइदंशुभमाख्यानंशृण्वंतिभुविमानवाः॥सर्वदुःखविनिर्मुक्तास्तेभवंतिनसंशयः ॥ १११ ॥ महामायाचरित्रंच पवित्रंपापनाशनम् ॥ पठतांशृण्वतांचैवसर्वसंपत्तिकारकम् ॥ ११२ ॥ इति श्रीदेवीभागवतेमहापुराणेप्रथमस्कंधे हयग्रीवावतारकथनंनाम पंचमोऽध्यायः ॥५॥ ऋषयऊचुः॥ सौम्ययच्चत्वयाप्रोक्तंशौरेर्युद्धंमहार्णवे॥मधुकैटभयोःसार्द्धंपंचवर्षसहस्रकम् ॥ १ ॥

णनाशितइतिबोध्यम् ॥ ११० ॥ १११ ॥ ११२ ॥ इति श्रीदेवीभागवततिलकेप्रथमस्कंधेपञ्चमोऽध्यायः ॥ ५ ॥ ॥ चतुर्भिरधिकैश्चत्वारिंशच्छ्लोकैरतःपरम् ॥ मधुकैटभयोर्युद्धोद्योगःसम्यगुदीर्यते ॥ १ ॥ तत्रचतुर्थेऽध्यायेमधुकैटभाभ्यांसहपंचवर्षसहस्राणिबाहुयुद्धंमयाकृतमितिभगवतोपवर्णितंतत्प्रश्नबीजमुपलभ्यऋषयःपृच्छंति । सौम्ययच्चेति ॥ १ ॥

कस्मादिति ॥ कस्मादुत्पन्नावित्यर्थः ॥२॥ कथंतावसुराविति ॥ दानवापेक्षयाऽसुरावतिक्रूरौ ॥ इमौत्वसुरावेवनदानवौ ॥ दनोरनुत्पन्नत्वात्तथापिदानवसदृशत्वाद्दानवावित्युक्तम् ॥ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ इतःपरंपुराणवक्तुरुत्साहायश्रोतारःस्वोत्साहंप्रकटयंति ॥ नतेषामिति ॥ ७ ॥ मृगाद्याइति ॥ मृगाद्याअपिपशवइत्यर्थः ॥ तद्वत्फणिनोपीत्यर्थः ॥ ८ ॥ श्रवणदर्शनेइति ॥ पंचेंद्रियाणांमध्येश्रवणेंद्रियंदर्शनेंद्रियंचशुभंकल्याणकरमित्यर्थः ॥ तदेवाह ॥ श्रवणादिति ॥ ९ ॥ १० ॥ ११ ॥ सात्त्विकश्रवणस्यापित्रिविधंभेदमाह सा

कस्मात्तौदानवौजातौतस्मिन्नेकार्णवेजले ॥ महावीर्यौदुराधर्षौदेवैरपिसुदुर्जयौ ॥२॥ कथंतावसुरौजातौकथंचहरिणाहतौ ॥ तदाचक्ष्वमहाप्राज्ञचरितंपरमाद्भुतम् ॥ ३ ॥ श्रोतुकामावयंसर्वेत्वंवक्ताचबहुश्रुतः ॥ दैवाच्चात्रैवसंजातःसंयोगश्चतथावयोः ॥ ४ ॥ मूर्खेणसहसंयोगोविषादपिसुदुर्जरः ॥ विज्ञेनसहसंयोगःसुधारससमःस्मृतः ॥ ५ ॥ जीवंतिपशवःसर्वेखादंतिमेहयंतिच ॥ जानंतिविषयाकारंव्यवायसुखमद्भुतम् ॥६॥ नतेषांसदसज्ज्ञानंविवेकोनचमोक्षदः॥पशुभिस्तेसमाज्ञेयायेषांनश्रवणादरः॥७॥मृगाद्याःपशवःकेचिज्जानंतिश्रावणंसुखम्॥अश्रोत्राःफणिनश्चैवमुमुहुर्नादपानतः॥८॥पंचानामिंद्रियाणांवैशुभेश्रवणदर्शने॥श्रवणाद्वस्तुविज्ञानंदर्शनाच्चित्तरंजनम् ॥९ ॥ श्रवणंत्रिविधंप्रोक्तंसात्त्विकंराजसंतथा॥तामसंचमहाभागाःसुज्ञोक्तंनिश्चयान्वितम्॥१०॥सात्त्विकंवेदशास्त्रादिसाहित्यंचैवराजसम्॥तामसंयुद्धवार्ताचपरदोषप्रकाशनम् ११॥ सात्त्विकंत्रिविधंप्रोक्तंप्रज्ञावद्भिश्चपंडितैः ॥ उत्तमंमध्यमंचैवतथैवाधममित्युत ॥१२॥ उत्तमंमोक्षफलदंस्वर्गदंमध्यमंतथा ॥ अधमंभोगदंप्रोक्तंनिर्णीयविदितंबुधैः॥१३॥साहित्यंचैवत्रिविधंस्वीयायांचोत्तमंस्मृतम्॥मध्यमंवारयोषायांपरोढायांतथाऽधमम्॥१४॥ तामसंत्रिविधंज्ञेयंविद्वद्भिःशास्त्रदर्शिभिः॥आततायिनियुद्धंयत्तदुत्तममुदाहृतम्॥१५॥मध्यमंचापिविद्वेषात्पांडवानांयथारिभिः।अधमंनिर्निमित्तंतुविवादेकलहेतथा ॥१६॥तदत्रश्रवणंमुख्यंपुराणस्यमहामते॥बुद्धिप्रवर्धनंपुण्यंततःपापप्रणाशनम्॥१७॥तदाख्याहिमहाबुद्धेकथांपौराणिकींशुभाम्॥ श्रुतांद्वैपायनात्पूर्वंसर्वार्थस्यप्रसाधिनीम् ॥ १८ ॥ सूतउवाच॥यूयंधन्यामहाभागाधन्योऽहंपृथिवीतले ॥येषांश्रवणबुद्धिश्चममापिकथनेकिल ॥ १९ ॥ पुराचैकार्णवेजातेविलीनेभुवनत्रये ॥ शेषपर्यंकसुप्तेचदेवदेवेजनार्दने ॥ २० ॥ विष्णुकर्णमलोद्भूतौदानवौमधुकैटभौ ॥ महाबलौचतौदैत्यौविवृद्धौसागरेजले ॥ २१ ॥

त्त्विकमिति ॥ १२ ॥ १३ ॥ राजसंश्रवणमपित्रिविधमाह ॥ नवरसात्मकःशृंगारइत्यर्थः । उत्तममिति ॥ परस्त्रीगमनजन्यदोषाभावात् ॥ मध्यममिति ॥ तत्रस्पल्वदोषात् ॥ अधममिति ॥ दोषबहुत्वात् ॥ १४ ॥ १५ ॥ १६ तदत्रश्रवणंमुख्यमिति ॥ सात्त्विकश्रवणभेदत्रयमध्येऽपिमुख्यंप्रथमंमोक्षप्रदम् ॥ यदुक्तंसात्त्विकंश्रवणंतदात्मकंपुराणश्रवणमस्तीत्यर्थः ॥ बुद्धिप्रवर्धनमिति ॥ सूक्ष्मात्मरूपवस्तुविषयकबुद्धेःप्रवर्धनकारणमित्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥ पुरेति ॥ अवांतरप्रलयेइत्यर्थः ॥ २० ॥ २१ ॥

॥२२॥ भ्रातराविवेति ॥ एकोदरजन्यत्वाभावान्नमुख्यौभ्रातरौकिंतुपरस्परप्रेम्णाभ्रातृतुल्यावित्यर्थः ॥ तौचिंतामवापतुर्विचारंचक्रतुरित्यर्थः ॥ तमेवविचारमाह ॥ नाकारणामिति ॥ कारणं विनाकार्यंनैव भवतीत्यर्थः ॥ २३ ॥ २४ ॥ केनसृष्टमिति निमित्तकारणप्रश्नः ॥ कथंजातमित्युपादानकारणप्रश्नः ॥ जलेस्थिताविति ॥ अत्रकथमितिशेषः॥ २५ ॥ आवां वेति ॥ अत्राप्युभयकारणप्रश्नः ॥ २६ ॥ २७ ॥ शक्तिर्महाबलेति ॥ सर्वेपिजलेनिमज्जंतिवयंतुननिमग्नास्तत्रकारणंकश्चिच्छक्तिविशेषःकल्प्यः ॥ तथाचएकत्रव्याप्याबाधकाभावेना

क्रीडमानौस्थितौतत्रविचरंतावितस्ततः ॥ तावेकदामहाकायौक्रीडासक्तौमहार्णवे ॥ २२ ॥ चिंतामवापतुश्चित्तेभ्रातराविवसंस्थितौ ॥ नाकारणंभवेत्कार्यंसर्वत्रैषापरंपरा ॥ २३ ॥ आधेयंतुविनाधारंनतिष्ठतिकथंचन ॥ आधाराधेयभावस्तुभातिनोचित्तगोचरः ॥ २४ ॥ क्वतिष्ठतिजलंचेदंसुखरूपंसुविस्तरम् ॥ केनसृष्टंकथंजातंमग्नावावाञ्जलेस्थितौ ॥ २५ ॥ आवांवाकथमुत्पन्नौकेनवोत्पादितावुभौ ॥ पितरौक्वेतिविज्ञानंनास्तिकामंतथावयोः ॥ २६ ॥ ॥ सूतउवाच ॥ एवंकामयमानौतौजग्मतुर्नविनिश्चयम् ॥ उवाचकैटभस्तत्रमधुंपार्श्वेस्थितंजले ॥ २७ ॥ कैटभ उवाच ॥ मधोवामत्रसलिलेस्थातुंशक्तिर्महाबला ॥ वर्ततेभ्रातरचलाकारणंसाहिमेमता ॥ २८ ॥ तयाततमिदंतोयंतदाधारंचतिष्ठति ॥ साएवपरमादेवीकारणंचतथावयोः ॥ २९ ॥ एवंविबुध्यमानौतौचिंताविष्टौयदाऽसुरौ ॥ तदाकाशेश्रुतंताभ्यांवाग्बीजंसुमनोहरम् ॥ ॥ ३० ॥ गृहीतंचततस्ताभ्यांतस्याभ्यासोदृढःकृतः ॥ तदासौदामनीदृष्टाताभ्यांखेचोत्थिताशुभा ॥ ३१ ॥ ताभ्यांविचारितंतत्रमंत्रोयंनात्रसंशयः ॥ तथाध्यानमिदंदृष्टंगगनेसगुणंकिल ॥ ३२ ॥ निराहारौजितात्मानौतन्मनस्कौसमाहितौ ॥ बभूवतुर्विचिंत्यैवंजपध्यानपरायणौ ॥ ३३ ॥ एवंवर्षसहस्रंतुताभ्यांतप्तंमहत्तपः ॥ प्रसन्नापरमाशक्तिर्जातासापरमातयोः ॥ ३४ ॥ खिन्नौतौदानवौदृष्ट्वातपसेकृतनिश्चयौ ॥ तयोरनुग्रहार्थायवागुवाचाशरीरिणी ॥ ३५ ॥ वरंवांवांछितंदैत्यौब्रूतंपरमसंमतम् ॥ ददामिपरितुष्टास्मियुवयोस्तपसाकिल ॥ ३६ ॥ सूतउवाच ॥ इतिश्रुत्वातुतांवाणींदानवावूचतुस्तदा ॥ स्वेच्छयामरणंदेविवरंनौदेहिसुव्रते ॥ ३७ ॥ वागुवाच ॥ वांछितंमरणंदैत्यौभवेद्वांमत्प्रसादतः ॥ अजेयौदेवदैत्यैश्चभ्रातरोनात्रसंशयः ॥ ३८ ॥ सूतउवाच ॥ इतिदत्तवरौदेव्यादानवौमदर्पितौ ॥ चक्रतुः सागरेक्रीडांयादोगणसमन्वितौ ॥ ३९ ॥ कालेनकियताविप्रादानवाभ्यांयदृच्छया ॥ दृष्टः प्रजापतिर्ब्रह्मापद्मासनगतःप्रभुः ॥ ४० ॥

न्यत्रापितादृशशक्तेरेवकारणत्वकल्पनेननिर्वाहेकारणांतरगवेषणोपयोगाभावात्सैवशक्तिरस्माकमपिकारणमितिभावः ॥२८॥ तदेवस्पष्टयति ॥ तयाततमिति॥२९॥३०॥गृहीतमिति॥ उपदेशतयास्वीकृतमित्यर्थः ॥ अभ्यासोजपरूपः ॥ सौदामनीति ॥ जप्तोमंत्रएवतेजोरूपेणदृष्टिगोचरोऽभूदित्यर्थः ॥३१॥ ध्यानामिति ॥ पाशांकुशपुस्तकाक्षमालाधरंसरस्वतीध्यानमित्यर्थः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ वांछितमिति ॥ स्वेच्छयेत्यर्थः ॥ ३८ ॥ ३९ ॥ ४० ॥

॥ ४१ ॥ यदिनिर्बलस्तर्हिशुभमासनमिदंकातिदूरमित्यर्थः ॥ ४२ ॥ ४३ ॥ ४४ ॥ इतिश्रीदेवीभागवततिलकेप्रथमस्कंधेषष्ठोऽध्यायः ॥ ६ ॥ पंचाशद्भिरतःश्लोकैःपद्मजस्तुपरांबिकाम् ॥ मधुकैटभयोर्भीत्यातुष्टावेतिनिगद्यते ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ नूनंशक्तिसमाक्रांतइति ॥ यद्ययंस्वतंत्रः स्यात्तर्हिजागृयादेव नचजागर्ति तस्मात्परवशएवायंनमुख्यईश्वरःपरश्चात्रविलक्षणशक्तिरूपःकल्प्यः ॥ सर्वत्रकारणापरिज्ञानेशक्तेरेवकारणत्वस्यकल्पनादितिनिश्चयेनायंशक्तिसमाक्रां

दृष्ट्वातुमुदितावास्तांयुद्धकामौमहाबलौ ॥तमूचतुस्तदातत्रयुद्धंनौदेहिसुव्रत॥४१॥नोचेत्पद्मंपरित्यज्ययथेष्टंगच्छमाचिरम् ॥ यदित्वंनिर्बलश्चासिक्कयोग्यंशुभमासनम् ॥ ४२ ॥ वीरभोग्यमिदंस्थानंकातरोसित्यजाऽऽशुवै ॥ तयोरितिवचःश्रुत्वाचिंतामापप्रजापतिः ॥४३॥दृष्ट्वाचबलिनौवीरौकिंकरोमीतितापसः॥ चिंताविष्टस्तदातस्थौचिंतयन्मनसातदा॥४४॥इति श्रीदेवीभागवते महापुराणे प्रथमस्कंधे षष्ठोऽध्यायः॥६॥

सूतउवाच ॥ तौवीक्ष्यबलिनौब्रह्मातदोपायानचिंतयत्॥सामदानभिदादींश्चयुद्धांतान्सर्वतंत्रवित् ॥१॥ नजानेऽहंबलंनूनमेतयोर्वायथातथम्॥ अज्ञातेतुबलेकामंनैवयुद्धंप्रशस्यते ॥ २ ॥ स्तुतिंकरोमिचेदद्यदुष्टयोर्मदमत्तयोः ॥ प्रकाशितंभवेन्नूनंनिर्बलत्वंमयास्वयम् ॥ ३ ॥ वधिष्यतितदैकोपिनिर्बलत्वेप्रकाशिते ॥ दानंनैवाद्ययोग्यंवाभेदःकार्योमयाकथम् ॥ ४ ॥ विष्णुंप्रबोधयाम्यद्यशेषेसुप्तंजनार्दनम् ॥ चतुर्भुजंमहावीर्यंदुःखहासभविष्यति ॥ ५ ॥ इतिसंचिंत्यमनसापद्मनालगतोऽब्जजः ॥ जगामशरणंविष्णुंमनसादुःखनाशकम् ॥ ६ ॥ तुष्टावबोधनार्थंतंशुभैःसंबोधनैर्हरिम् ॥ नारायणंजगन्नाथंनिस्पंदंयोगनिद्रया ॥ ७ ॥ ब्रह्मोवाच ॥ दीननाथहरेविष्णोवामनोत्तिष्ठमाधव ॥ भक्तार्त्तिहृद्धृषीकेशसर्वावासजगत्पते ॥ ८ ॥ अंतर्यामिन्नमेयात्मन्वासुदेवजगत्पते ॥ दुष्टारिनाशनैकाग्रचित्तचक्रगदाधर ॥ ९ ॥ सर्वज्ञसर्वलोकेशसर्वशक्तिसमन्वित ॥ उत्तिष्ठोत्तिष्ठदेवेशदुःखनाशनपाहिमाम् ॥१०॥ विश्वंभरविशालाक्षपुण्यश्रवणकीर्तन॥जगद्योनेनिराकारसर्गस्थित्यंतकारक॥११॥ इमौदैत्यौमहाराजहंतुकामौमदोद्धतौ॥ नजानास्यखिलाधारकथंमांसंकटेगतम् ॥ १२॥ उपेक्षसेऽतिदुःखार्तंयदिमांशरणंगतम् ॥ पालकत्वंमहाविष्णोनिराधारंभवेत्ततः ॥ १३ ॥ एवंस्तुतोपिभगवान्नबुबोधयदाहरिः ॥ योगनिद्रासमाक्रांतस्तदाब्रह्माह्यचिंतयत् ॥१४ ॥ नूनंशक्तिसमाक्रांतोविष्णुर्निद्रावशंगतः ॥ जजागारनधर्मात्माकिंकरोम्यद्यदुःखितः ॥ १५ ॥ हंतुकामावुभौप्राप्तौदानवौमदगर्वितौ ॥ किंकरोमिक्कगच्छामिनास्तिमेशरणंक्कचित् ॥ १६ ॥ इतिसंचिंत्यमनसानिश्चयंप्रतिपद्यच ॥ तुष्टावयोगनिद्रांतामेकाग्रहृदयस्थितः ॥ १७ ॥

तइत्यर्थः ॥ १५ ॥ १६ ॥ निश्चयंप्रतिपद्यचेति ॥ परशक्त्यैवायंवशीकृतइतिनिश्चयंकृत्वातामेवपरांशक्तिंयोगनिद्रारूपांयोगनिद्राविशिष्टचैतन्यरूपांतुष्टावेत्यर्थः ॥ नह्यन्यथाचैतन्यसंत्तांविहाययोगनिद्रायाःस्वतःसत्तासंभवतितस्याःसदसद्विलक्षणत्वात् ॥ १७ ॥

तदेवाह ॥ विचार्येति ॥१८॥१९॥ २० ॥ २१ ॥ सिंधुजायाइति ॥ सिंधुजालक्ष्मीस्तस्याअपियदायंवशेवर्ततेतदायोगनिद्रावशेवर्ततेइत्यत्रकिमाश्चर्यमितिभावः ॥ २२ ॥ वशेप्यस्या
इति ॥ केषामप्यस्माकंनस्वातंत्र्यम् ॥ अभीष्टोद्योगेनानभीष्टस्यजायमानत्वात्॥ २३ ॥ २४ ॥ घटयिष्यतीति ॥ युद्धेउद्योगंकरिष्यतीत्यर्थः॥ २५ ॥ २६ ॥ सकलवेदवचोभिरिति॥
अजामेकांलोहितशुक्लकृष्णांबह्वींप्रजांजनयंतींसरूपामिति ॥ मायावाएषानारसिंहीसर्वमिदंसृजतिसर्वमिदंरक्षति सर्वमिदंसंहरतितस्मान्मायामेतांशक्तिंविद्यादिति ॥ सर्वेवैदेवादेवी
मुपतस्थुः ॥ कासित्वंमहादेवी ॥ साब्रवीदहंब्रह्मरूपिणीमत्तःप्रकृतिपुरुषात्मकंजगदित्यादिवेदवाक्यैरित्यर्थः ॥ प्रत्यक्षमप्यत्रप्रमाणमित्याह ॥ यद्विष्णोरपीति ॥ सकलदेववरोविवेक
वानपिविष्णुर्यद्यस्मान्निद्रावशंगमितःप्रापितस्त्वया ॥ तस्मात्तवकारणतायांकः संदेहइत्यर्थः ॥ २७ ॥ कोवेदेति ॥ हेजननिसकलभूतमनोनिवासेंऽतर्यामिरूपिणियस्मात्कारणादहं

विचार्यमनसाप्येवंशक्तिर्मेरक्षणेक्षमा ॥ ययाद्यचेतनोविष्णुःकृतोस्तिस्पंदवार्जितः॥१८॥व्यसुर्यथानजानातिगुणाञ्छब्दादिकानिह॥तथाहरिर्न
जानातिनिद्रामीलितलोचनः ॥१९॥ नजहातियतोनिद्रांबहुधासंस्तुतोप्यसौ ॥ मन्येनास्यवशेनिद्रानिद्रयायंवशीकृतः॥२०॥योयस्यवशमा
पन्नःसतस्यकिंकरः किल ॥ तस्माच्चयोगनिद्रेयंस्वामिनीमापतेर्हरेः ॥ २१ ॥ सिंधुजायाअपिवशेययास्वामीवशीकृतः ॥ नूनंजगदिदंसर्वंभग
वत्यावशीकृतम्॥२२॥अहंविष्णुस्तथाशम्भुःसावित्रीचरमाप्युमा ॥ सर्वेवयंवशेप्यस्यानात्रकिंचिद्विचारणा॥२३॥हरिरप्यवशःशेतेयथाऽन्यः
प्राकृतोजनः ॥ ययाभिभूतःकावार्ताकिलान्येषांमहात्मनाम् ॥२४ ॥ स्तौम्यद्ययोगनिद्रांवैययामुक्तोजनार्दनः ॥ घटयिष्यतियुद्धेचवासुदेवः
सनातनः ॥ २५ ॥ इतिकृत्वामतिंब्रह्मापद्मनालस्थितस्तदा ॥ तुष्टावयोगनिद्रांतांविष्णोरंगेषुसंस्थिताम् ॥ २६ ॥ ब्रह्मोवाच ॥ देवित्वम
स्यजगतःकिलकारणंहिज्ञातंमयासकलवेदवचोभिरंब ॥ यद्विष्णुरप्यखिललोकविवेककर्तानिद्रावशंचगमितः पुरुषोत्तमोऽद्य ॥ २७ ॥ कोवे
दतेजननिमोहविलासलीलांमूढोस्म्यहंहरिरयंविवशश्चशेते ॥ ईदृक्तयासकलभूतमनोनिवासेविद्वत्तमोविबुधकोटिषुनिर्गुणायाः ॥२८॥सांख्या
वदंतिपुरुषंप्रकृतिंचयांतांचैतन्यभावरहितांजगतश्चकर्त्रीम् ॥ किंतादृशाऽसिकथमत्रजगन्निवासश्चैतन्यताविरहितोविहितस्त्वयाऽद्य ॥ २९ ॥

विष्णुः शिवश्चैतेवयंसर्वेदेववरिष्ठाःस्मोऽथापिअहंमूढोऽधुनैवास्मिविष्णुश्चत्वदधीनः शेते ॥ वयमेतादृशाअपितवमोहस्यविलासरूपांलीलांनजानीमो मोहितत्वात् ॥ तस्मादस्मदपेक्षया
विबुधकोटिषुमध्येविद्वत्तमःपंडितोनिर्गुणायास्तवमोहविलासलीलामीदृक्तयाकोवेदनकोपीत्यर्थः ॥ २८ ॥ ननुसांख्यामांजडेतिवदंतितदाजडायाममप्रार्थनेकिंफलमितिचेत्तत्राह ॥
सांख्याइति ॥ चैतन्यभावश्चैतन्यसत्तातद्रहितामित्यर्थः ॥ त्रिगुणंप्रधानंस्वतंत्रंजडमितितेषांसिद्धांतः ॥ यद्यपितेवदंतितथापित्वंकिंतादृशासिनैवतादृश्यसीत्यर्थः ॥ कुतइतिचेत्
यदित्वंजडापरतंत्रातदासर्वेश्वरोविष्णुस्त्वयाचैतन्यताविरहितःकथंविहितः ॥ नहींद्रजालमिन्द्रजालकर्तुर्व्यामोहकंनवांधकारःप्रकाशनाशकरः ॥ तस्मात्त्वंनजडापरतंत्रावाकिंतुब्रह्म
विष्ण्वाद्युत्पादकमायाविशिष्टस्वतंत्रचैतन्यरूपेत्यर्थः ॥ २९ ॥

ननुतर्हितेसांख्याःकिमितितथावर्णयंतीतिचेत्तवस्वरूपापरिज्ञानादित्याह । नात्यामिति॥यांमुनिगणाःसंध्येतिनामपरिकल्प्यगुणांस्तादृशानेवोत्तमान्परिकल्प्यनियतंत्रिकालंध्यायंतिसाहे भवानित्वंसगुणागुणत्रयविशिष्टाविविधप्रकारमनेकप्रकारंनात्यंतनोषि यथाजडाद्गोमयादेरपिवृश्चिकादीनामुत्पत्तिः, तथाचेतनात्पुरुषादेरपिजडानांकेशनखादीनामुत्पत्तिस्तदनुभूयकोपि पुरुषोजडाद्वाचेतनाद्वाजगद्भवतीतिनिश्चयमप्राप्यतवयत्कृत्यंजगत्सर्जनादिकंतस्यविधानंकारणंतस्मिन्योगःसंबंधस्तवचैतन्यरूपस्यास्तितंयोगंनवेत्तिनजानाति मोहितत्वात् । अतोऽन्य थावर्णनंकुर्वंतीतिभावः॥३०॥किंचसर्वत्रबुद्ध्यादिरूपात्वमेवासितस्माद्यस्मिन्पुरुषेयथाबुद्ध्यादिरूपेणतिष्ठसितथासव्यवहारंकरोतिनतस्यापराधःकश्चिदस्तीत्याह । बुद्धिर्हीति ॥ बोध करणाज्ञानकरणा ॥ ३१ ॥ ननुयथातेषांमतान्ययथार्थानितथातवापिमतंकिंनस्यादितिचेत्तत्राऽऽह । नातःपरमिति ॥ यद्यस्मादिहदुःखगतिंगतेनदुःखमार्गंप्राप्तेनमयानिद्रालुतांवितरता स्वीकुर्वताहरिणाहेतुनात्वंमायाशबलब्रह्मरूपासर्वजगतांजननीतिसत्यंदृष्टंप्रत्यक्षंदृष्टम् ॥ अतःपरमस्मादधिकंवितर्कशतैरनेकावितर्कैर्निष्पन्नंप्रमाणमनुमानादिकंनप्राप्तं तस्मात्प्रत्यक्षस्य

नात्यंतनोषिसगुणाविविधप्रकारंनोवेत्तिकोपितवकृत्यविधानयोगम् ॥ ध्यायंतियांमुनिगणानियतंत्रिकालंसंध्येतिनामपरिकल्प्यगुणान्भ वानि ॥ ३० ॥ बुद्धिर्हिबोधकरणाजगतांसदात्वंश्रीश्चासिदेविसततंसुखदासुराणाम् ॥ कीर्तिस्तथामतिधृतीकिलकांतिरेवश्रद्धारतिश्चसक लेषुजनेषुमातः ॥ ३१ ॥ नातःपरंकिलवितर्कशतैःप्रमाणंप्राप्तंमयायदिहदुःखगतिंगतेन ॥ त्वंचात्रसर्वजगतांजननीतिसत्यंनिद्रालुतांवितरता हरिणाऽत्रदृष्टम् ॥ ३२ ॥ त्वंदेविवेदविदुषामपिदुर्विभाव्यावेदोपिनूनमखिलार्थतयानवेद ॥ यस्मात्त्वदुद्भवमसौश्रुतिराप्नुवानाप्रत्यक्षमेवसकलं तवकार्यमेतत् ॥ ३३ ॥ कस्तेचरित्रमखिलंभुविवेदधीमान्नाहंहरिर्नचभवोनसुरास्तथान्ये ॥ ज्ञातुंक्षमाश्चमुनयोनममात्मजाश्चदुर्वाच्यएवमहि मातवसर्वलोके ॥ ३४ ॥ यज्ञेषुदेवियदिनामनतेवदंतिस्वाहेतिवेदविदुषोहवनेकृतेपि ॥ नप्राप्नुवंतिसततंमखभागधेयंदेवास्त्वमेवविबुधेष्व पिवृत्तिदासि ॥ ३५ ॥ त्रातावयंभगवतिप्रथमंत्वयावैदेवारिसंभवभयादधुनातथैव ॥ भीतोस्मिदेविवरदेशरणंगतोस्मिघोरंनिरीक्ष्यमधुना सहकैटभंच ॥ ३६ ॥

प्रबलत्वान्मन्मतमेवमुख्यंनह्यन्यथासर्वेश्वरोजडयास्वतंत्रयाबद्धःस्यादिति॥३२॥अहमेवजानामिनान्योजानातीतिमयाभक्तिवशेनोच्यते वस्तुतस्तुतवरूपंवेदाअपिनजानंति ॥ तत्रममका कथेत्याह त्वंदेवीति॥यतोवेदोपिनूनमखिलार्थतयाऽखिलरूपेणसर्वस्वरूपेणनवेदेत्यर्थः ॥ कुतोनवेदेतिचेत्तत्राह यस्मात्कारणाच्छ्रुतिस्त्वदुद्भवंत्वत्तउद्भवं जन्मआप्नुवानाप्राप्तवतीत्यनंतरं जायमानाकथंत्वद्रूपंजानीयान्नकथमपीत्यर्थः ॥ तथाचश्रुतिः ॥ अर्वाग्देवाअस्याविसर्जनेनाथाःकोवेदयतआबभूवेति ॥ यतोवाचोनिवर्तंतेअप्राप्यमनसासहेति ॥ ननुश्रुतिर्देवीतउद्भू तेत्यत्रकिंप्रमाणंतत्राऽऽह ॥ प्रत्यक्षमेवेति ॥ सर्वद्वैतजातंत्वत्तएवोद्भूतंततस्तदंतःपातिनोवेदाःकिंत्वत्तोनोद्भूताअपितूद्भूताइत्यर्थः ॥ तथाचश्रुतिः वेदोहमवेदोहमितिदेव्यथर्वशिरसि ॥ अस्यमहतोभूतस्यनिःश्वसितमेतद्यदृग्वेदोयजुर्वेदःसामवेदोऽथर्ववेदइत्यादि ॥ ३३ ॥ वेदाअपिनजानंतितदान्यः कोवेदेत्याह ॥ कस्तेचरित्रमिति ॥ ३४ ॥ अधुनादेवानांजीवनंतवैकदे शस्वाहाशक्त्यधीनमित्याह ॥ यज्ञेष्विति ॥ ३५ ॥ त्रातावयमिति ॥ पूर्वकल्पेरक्षिताइत्यर्थः ॥ मधुकैटभयुद्धस्यब्रह्मोत्पत्तिसमयेजायमानत्वादेतयोःपूर्वमन्यदेत्यस्याश्रुतत्वाच्च ॥३६॥

॥ ३७ ॥ यदिमदिच्छयैवसर्वंजायतेतर्हिसर्वेजनामांकुतोनभजंतितत्राह ॥ जानंतियेनतवेति ॥ हेदेवितवप्रभावंयेनजानंतितेऽन्यान्भजंति ॥ तेमूढचित्ताएवततस्तैरनादृतेपिवस्तुनन
हिबुद्धिमतामनादरोभवति ॥ अहंतुप्रमाणतस्त्वामेवसर्वोत्कृष्टांजानामि ॥ किंतत्रप्रमाणंतदाह यद्विष्णुरपीति ॥ बुद्धिमंतस्त्वांभजंत्येवेतिभावः ॥ ३८ ॥ सिंधूद्भवालक्ष्मीरपित्वयाव
शीकृतंनबोधयितुंशक्ता ॥ किंचसापित्वयावशीकृतैवयतःसाविष्णोःशक्तिरस्तितत एवसानबुबुधेबोधंप्राप्तवती ॥ ३९ ॥ ४० ॥ ४१ ॥४२॥४३॥ सृष्टेति॥ नाशितुमिच्छानास्तिचेन्मौनं
परिहृत्यदयांकुर्वित्यन्वयः ॥ इमौदैत्यौकस्मात्कारणात्प्रकटितौइतिनजानेइतिशेषः।स्वयमेवोत्प्रेक्षते । यद्वेति॥मांहसितुंकिमिच्छसेततएतावुत्पादितौवा॥४४॥यदिमांहंतुमेतावुत्पादि

नोवेत्तिविष्णुरधुनाममदुःखमेतज्जानेत्वयात्मविवशीकृतदेहयष्टिः॥मुंचादिदेवमथवाजहिदानवेंद्रौयद्रोचतेतवकुरुष्वमहानुभावे ॥३७॥जानंति
येनतवदेविपरंप्रभावंध्यायंतितेहरिहरावपिमंदचित्ताः ॥ ज्ञातंमयाद्यजननिप्रकटंप्रमाणंयद्विष्णुरप्यतितरांविवशोऽथशेते॥३८॥सिंधूद्भवापिनह
रिंप्रतिबोधितुंवैशक्तापतिंतववशानुगमद्यशक्त्या ॥ मन्येत्वयाभगवतिप्रसभंरमापिप्रस्वापितानबुबुधेविवशीकृतेव ॥३९॥ धन्यास्तएवभुविभ
क्तिपरास्तवांघ्रौत्यक्त्वान्यदेवभजनंत्वयिलीनभावाः ॥ कुर्वंतिदेविभजनंसकलंनिकामंज्ञात्वासमस्तजननींकिलकामधेनुम् ॥ ४० ॥ धीकांति
कीर्तिशुभवृत्तिगुणादयस्तेविष्णोर्गुणास्तुपरिहृत्यगताःक्वचाऽद्य ॥ बंदीकृतोहरिरसौननुनिद्रयाऽत्रशक्त्यातवैवभगवत्यतिमानवत्याः ॥ ४१ ॥
त्वंशक्तिरेवजगतामखिलप्रभावात्वन्निर्मितंचसकलंखलुभावमात्रम् ॥ त्वंक्रीडसेनिजविनिर्मितमोहजालेनाटचेयथाविहरतेस्वकृतेनटोवै॥४२॥
विष्णुस्त्वयाप्रकटितःप्रथमंयुगादौदत्ताचशक्तिरमलाखलुपालनाय ॥ त्रातंचसर्वमखिलंविवशीकृतोद्ययद्रोचतेतवतथांऽबकरोषिनूनम्॥४३॥
सृष्ट्वात्रमांभगवतिप्रविनाशितुंचेन्नेच्छास्तितेकुरुदयांपरिहृत्यमौनम्॥कस्मादिमौप्रकटितौकिलकालरूपौयद्वाभवानिहसितुंनुकिमिच्छसेमाम्॥
॥४४॥ ज्ञातंमयातवविचेष्टितमद्भुतंवैकृत्वाखिलंजगदिदंरमसेस्वतंत्रा ॥ लीनंकरोषिसकलंकिलमांतथैवहंतुंत्वमिच्छसिभवानिकिमत्रचित्रम्॥
॥४५॥कामंकुरुष्ववधमद्यममैवमातर्दुःखंनमेमरणजंजगदंबिकेत्र॥कर्तात्वयैवविहितःप्रथमंसचायंदैत्याहतोथमृतइत्ययशोगारिष्ठम्॥४६॥उत्ति
ष्ठदेविकुरुरूपमिहाद्भुतंत्वंमांवात्विमौजहियथेच्छसिबाललीले॥ नोचेत्प्रबोधयहरिंनिहनेदिमौयस्त्वत्साध्यमेतदखिलंकिलकार्यजातम्॥४७॥

तौतर्हिमहान्प्रतापस्तवमशकवधेगजस्येवेत्याह । ज्ञातमिति ॥ ४५ ॥ किंचकामामिति ॥ यदिममवधार्थमेवोत्पादितावेतौतर्हिमातरद्यैवकामंयथेष्टंममवधंकुरुष्वमेमरणजंदुःखं
नैवास्ति किंतुत्वयैवयःप्रथमंजगतःकर्ताविहितोथसएवायंदैत्याहतोमृतइदंगरिष्ठमयशस्तवभवति इदमेवमहद्दुःखकरमितिभावः ॥ ४६ ॥ उत्तिष्ठेति ॥ हेदेविबाललीलेकोमललीले
उत्तिष्ठ इहाद्भुतंरूपंभयंकररूपंकुरु ॥ कृत्वाचमद्वधेच्छायद्यस्तितर्हिस्वहस्तेनैवमद्वधंकुरुनदैत्यहस्तेनाथवाइमौदैत्यौवाजहि ॥ उभयमपिनकरोषिचेद्धरिंप्रबोधयसइमौनिहनेदिदंस
र्वकार्यजातंतवसाध्यंभवति ॥ ४७ ॥

तामसीनिद्राभिमानिनीत्यर्थः ॥ तदुक्तंशिवपुराणेउमासंहितायाम् ॥ ब्रह्मणासंस्तुतासेयंमधुकैटभनाशने॥ महाविद्याजगन्मातासर्वविद्याधिदेवता ॥ द्वादश्यांफाल्गुनस्यैवशुक्लायांसम भून्नृपेति॥ अस्यामेवतिथौ-सारस्वतस्तुद्वादश्यांशुक्लायांफाल्गुनस्य च ॥ कल्पःसमभवदितिहेमाद्रिधृतनागरखंडवचनात्सारस्वतस्यकल्पस्योत्पत्तिःसएवसरस्वत्याअयमितिव्युत्पत्त्यासा रस्वतकल्पप्रादुर्भावोव्यासेनात्रस्पष्टीकृतोवेदितव्यइति ॥४९॥ विस्पंदितशरीरःकंपितशरीरः॥५०॥इति श्रीदेवीभागवते महा० प्रथथस्कंधेसप्तमोऽध्यायः ॥७॥ पंचाशत्पद्यकैरेकोत्तरैः संरंभतोधुना ॥ अध्यायेत्वष्टमेप्रोक्तःसम्यगाराध्यनिर्णयः ॥१॥ पूर्वाध्यायेपरशक्त्याविष्णुःसर्वेश्वरोपिविवशीकृतइतिश्रुत्वाऋषयःपृच्छंति संदेहोत्रेति ॥ अत्रसंदेहशब्दोलक्षणयाऽऽश्चर्य परस्तदेवाह ॥ वेदेति ॥ १ ॥ २ ॥ त्रयएतेत्रेति ॥ सर्वदेवमध्येएतद्देवत्रयमेवमुख्यंकारणंचसर्वस्येदमेवेत्यर्थः॥ ३ ॥ तेषामभेदमाह ॥ एकामूर्तिरिति ॥ तेषांगुणभेदमाह ॥ रजइति

सूतउवाच ॥ एवंस्तुतातदादेवीतामसीतत्रवेधसा ॥ निःसृत्यहरिदेहात्तुसंस्थितापार्श्वतस्तदा ॥ ४८ ॥ त्यक्त्वांऽगानिचसर्वाणिविष्णोरतुलतेजसः ॥ निर्गतायोगनिद्रासानाशायचतयोस्तदा ॥ ४९ ॥ विस्पंदितशरीरोसौयदाजातोजनार्दनः ॥ धातापरमिकांप्राप्तोमुदंदृष्ट्वाहरिंततः ॥ ॥ ५० ॥ इति श्रीदेवीभागवते महापुराणे प्रथमस्कंधे विष्णुप्रबोधोनाम सप्तमोऽध्यायः ॥ ७ ॥ ऋषयऊचुः ॥ संदेहोत्रमहाभागकथायांतुमहाद्भुतः ॥ वेदशास्त्रपुराणैश्चनिश्चितंतुसदाबुधैः ॥ १ ॥ ब्रह्माविष्णुश्चरुद्रश्चत्रयोदेवाःसनातनाः ॥ नातः परतरंकिंचिद्ब्रह्मांडेऽस्मिन्महामते ॥ २ ॥ ब्रह्मासृजतिलोकान्वैविष्णुःपात्यखिलंजगत् ॥ रुद्रःसंहरतेकालेत्रयएतेऽत्रकारणम् ॥ ३ ॥ एकामूर्तिस्त्रयोदेवाब्रह्मविष्णुमहेश्वराः ॥ रजःसत्त्वतमोभिश्चसंयुताःकार्यकारकाः ॥ ४ ॥ तेषांमध्येहरिःश्रेष्ठोमाधवःपुरुषोत्तमः ॥ आदिदेवोजगन्नाथःसमर्थःसर्वकर्मसु ॥ ५ ॥ नान्यःकोपिसमर्थोस्तिविष्णोरतुलतेजसः ॥ सकथंस्वापितःस्वामीविवशोयोगमायया ॥ ६ ॥ क्वगतंतस्यविज्ञानंजीवतश्चेष्टितंकुतः ॥ संदेहोऽयंमहाभागकथयस्वयथाशुभम् ॥७॥ कासाशक्तिःपुराप्रोक्ताययाविष्णुर्जितःप्रभुः ॥ कुतोजाताकथंशक्ताकाशक्तिर्वदसुव्रत ॥८ ॥ यस्तु सर्वेश्वरोविष्णुर्वासुदेवोजगद्गुरुः ॥ परमात्मापरानंदःसच्चिदानंदविग्रहः ॥९ ॥ सर्वकृत्सर्वभृत्स्रष्टाविरजः सर्वगःशुचिः ॥ सकथंनिद्रयानीतः परतंत्रःपरात्परः ॥ १० ॥ एतदाश्चर्यभूतोहिसंदेहोनःपरंतप ॥ छिंधिज्ञानासिनासूतव्यासशिष्यमहामते ॥ ११ ॥ सूतउवाच ॥ कःसंदेहंछिनत्त्येनंत्रैलोक्येसचराचरे ॥ मुह्यंतिमुनयःकामंब्रह्मपुत्राःसनातनाः ॥ १२ ॥

॥ ४ ॥ त्रयाणांमध्येविष्णुरेवमुख्यइत्याह ॥ तेषामिति ॥ ५ ॥ इत्थंसर्ववरिष्ठोपियोगमाययाकथंस्वापितःकथंवासविवशःपराधीनोजातः ॥ ६ ॥ जीवतस्तस्यविज्ञानंचेष्टितंच कुतोहेतोःक्वगतमित्यन्वयः ॥ संदेहोयमाश्चर्यमिदमित्यर्थः ॥ एतादृशस्येयदशाश्चर्यजनिकैव ॥ अतोयथाशुभंस्यात्तथाकथयेत्यर्थः ॥ ७ ॥ कासेति ॥ साशक्तिःकीदृशीत्यर्थः ॥ कुतो जातेति ॥ कस्मात्कारणाज्जातेत्यर्थः ॥ कथंविष्णुंजेतुंशक्तासमर्थेत्यर्थः॥ काशक्तिरितितस्याःशक्तेःकाशक्तिरस्तिययाशक्त्यायुतास्वयंशक्तिर्विष्णुंवशीकरोति ॥८॥ पुनराश्चर्यमुपपादयति ॥ यस्त्विति ॥ ९ ॥ नीतइति ॥ स्वाधीनतामितिशेषः ॥ १० आश्चर्यभूतइति ॥ आश्चर्यात्मकःसंदेहइत्यर्थः ॥ ११ ॥ १२ ॥

नारदइतिपूर्वान्वयि ॥ १३ ॥ १४ ॥ तेसर्वेइति ॥ देवाद्याइत्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥१८॥१९॥२०॥२१॥२२॥२३॥ इतरेनैयायिकैकदेशिनइत्यर्थः ॥ २४ ॥ सप्तेति ॥ पूर्वोक्ता
निपंचसाक्षिरूपंषष्ठमैतिह्यंसप्तमामितिसप्तप्रमाणानि ॥ एतैरिति ॥ एतैरनेकधाभेदाभिन्नैःप्रमाणैर्दुर्ज्ञेयंयत्परंब्रह्मतदेवपरमंमुख्यंजगत्कारणमस्तीतिवेदांताआहुरितिशेषः॥२५॥ एवमेता
निसर्वमतानिवेदएवसंतितत्रकिंमतंमुख्यमितिविमर्शोदुर्घटएवतथापियत्रश्रुतिवाक्यानांपरस्परंविरोधस्तत्रोपक्रमोपसंहारादिलिंगैः श्रुतितात्पर्यंनिर्णीयतात्पर्यवतीश्रुतिःप्रबलेतिसिद्धां
तउत्तरमीमांसायामुक्तः ॥ ननुतेनासिद्धांतेनब्रह्मैवजगत्कारणमितिसिद्ध्यतीतिचेत्तत्रानुमानेनागमेनश्रुतिवाक्येनचतद्ब्रह्मकिंसशक्तिकंजगत्कारणमुतशक्तिरहितमितिविचारःकर्तव्य

नारदःकपिलश्चैवप्रश्नेऽस्मिन्मुनिसत्तमाः ॥ किंब्रवीमिमहाभागादुर्घटेऽस्मिन्विमर्शने ॥ १३ ॥ देवेषुविष्णुःकथितःसर्वगस्सर्वपालकः ॥
यतोविराडिदंसर्वमुत्पन्नंसचराचरम् ॥ १४ ॥ तेसर्वेसमुपासंतेनत्वादेवंपरात्परम् ॥ नारायणंहृषीकेशंवासुदेवंजनार्दनम् ॥१५ ॥ तथाकेचि
न्महादेवंशंकरंशशिशेखरम् ॥ त्रिनेत्रंपंचवक्त्रंचशूलपाणिंवृषध्वजम् ॥ १६ ॥ तथावेदेषुसर्वेषुगीतंनाम्नात्रियंबकम्॥ कपर्दिनंपंचवक्त्रंगौरीदेहा
र्धधारिणम् ॥ १७ ॥ कैलासवासनिरतंसर्वशक्तिसमन्वितम्॥ भूतवृंदयुतंदेवंदक्षयज्ञविघातकम्॥१८॥ तथासूर्यंवेदविदःसायंप्रातर्दिनेदिने ॥
मध्याह्नेतुमहाभागाःस्तुवंतिविविधैःस्तवैः ॥ १९ ॥ तथावेदेषुसर्वेषुसूर्योपासनमुत्तमम् ॥ परमात्मेतिविख्यातंनामतस्यमहात्मनः ॥२०॥
अग्निःसर्वत्रवेदेषुसंस्तुतोवेदवित्तमैः ॥ इंद्रश्चापित्रिलोकेशोवरुणश्चतथापरः ॥ २१ ॥ यथागंगाप्रवाहैश्चबहुभिःपरिवर्तते ॥ तथैवसर्वदेवेषु
विष्णुःप्रोक्तोमहर्षिभिः ॥ २२ ॥ त्रीण्येवहिप्रमाणानिपठितानिसुपंडितैः ॥ प्रत्यक्षंचानुमानंचशाब्दंचैवतृतीयकम् ॥ २३ ॥ चत्वार्येवेतरेप्रा
हुरुपमानयुतानिच ॥ अर्थापत्तियुतान्यन्येपंचप्राहुर्महाधियः॥२४॥ सप्तपौराणिकाश्चैवप्रवदंतिमनीषिणः ॥ एतैःप्रमाणैर्दुर्ज्ञेयंयद्ब्रह्मपरमंचत
त्॥ २५ ॥ वितर्कश्चात्रकर्तव्योबुद्ध्याचैवागमेन च ॥ निश्चयात्मिकयायुक्त्याविचार्यचपुनःपुनः ॥ २६ ॥ प्रत्यक्षतस्तुविज्ञानंचिंत्यंमतिम
तासदा ॥ दृष्टांतेनापिसततंशिष्टमार्गानुसारिणा॥२७॥विद्वांसोपिवदंत्येवंपुराणैः परिगीयते ॥ द्रुहिणेसृष्टिशक्तिश्चहरौपालनशक्तिता ॥२८॥
हरेसंहारशक्तिश्चसूर्येशक्तिःप्रकाशिका ॥ धराधरणशक्तिश्चशेषेकूर्मेतथैवच ॥२९॥ साऽद्याशक्तिःपरिणतासर्वस्मिन्याप्रतिष्ठिता ॥ दाहशक्तिस्त
थावह्नौसमीरेप्रेरणात्मिका॥३०॥शिवोपिशवतांयातिकुंडलिन्याविवर्जितः ॥ शक्तिहीनस्तुयःकश्चिदसमर्थःस्मृतोबुधैः ॥३१॥ एवंसर्वत्रभूतेषु
स्थावरेषुचरेषुच॥ब्रह्मादिस्तंबपर्यंतंब्रह्मांडेऽस्मिन्महातपाः ॥ ३२ ॥

इत्याह ॥ वितर्कइति ॥ अनुमानमित्यर्थः ॥ बुद्ध्येत्यस्यार्थोनिश्चयात्मिकयायुक्त्येति ॥ २६ ॥ प्रत्यक्षतइति ॥ किंचमतिमताप्रत्यक्षतोयद्विज्ञानंतदपिचिंत्यंग्राह्यंप्रमाणत्वेनेत्यर्थः ॥
शिष्टमार्गःशिष्टाचारस्तदनुसारिणादृष्टांतेनव्याप्तिग्राहकेणापिसततमनुमेयमितिशेषः ॥ २७ ॥ तमेवदृष्टांतमाह विद्वांसोपीति ॥ किंतद्गीयतेतदाह । द्रुहिणे इति ॥ इत्थमनेकदृष्टां
तैर्वस्तुमात्रेशक्तिमत्त्वव्याप्तिर्ग्राह्येतिभावः ॥ २८ ॥ २९ ॥ साद्येति ॥ यासर्वस्मिन्नाद्याशक्तिरस्तिशक्तिःपरिणतातत्तच्छक्तिरूपेणेत्यर्थः ॥ ३० ॥ ३१ ॥ ३२ ॥

तथेति ॥ विद्वांसोवदंतीत्यन्वयः ॥ ३३ ॥ एवमिति ॥ यथाअत्रसर्वपदार्थत्वावच्छेदेनशक्तिमत्त्वव्याप्तिर्गृहीतातथाब्रह्मणोपिपदार्थत्वावच्छिन्नत्वेनशक्तिरस्ति ॥ साचशक्तिःसामर्थ्य रूपानस्वाश्रयाद्भिन्नाभासते अग्निशक्त्यादावदृष्टत्वात् ॥ किंत्वभिन्नैव तदेवदर्शयितुमेवंसर्वगताशक्तिः साब्रह्मेतिविविच्यते इत्यनेनस्वाश्रयाभेदएवोक्तः ॥ तथाचश्रुतिप्रतिपाद्यंब्रह्म मायावाएषानारसिंहीतिनतस्यकार्यंकरणंचविद्यतेपरास्यशक्तिर्विविधैवश्रूयते इत्यादिश्रुतिभिरनुमानादिभिश्चसशक्तिकमेवजगत्कारणमितितदेवोपास्यमितिभावः ॥ एतेनकासाशक्ति रित्यस्योत्तरंब्रह्मसामर्थ्यरूपाशक्तिरस्तीतिबोधितम् ॥ सोपास्येति ॥ यतोब्रह्मभिन्नानशक्तिस्ततस्तस्याभजनेग्निशक्त्यांहोमेग्नौहोमस्यार्थसिद्धत्ववद्ब्रह्मणउपासनंजातमेवेतिसर्वेषांकारण

शक्तिहीनंतुनिंद्यंस्याद्वस्तुमात्रंचराचरम् ॥ अशक्तःशत्रुविजयेगमनेभोजनेतथा ॥ ३३ ॥ एवंसर्वगताशक्तिःसाब्रह्मेतिविविच्यते ॥ सोपास्या विविधैः सम्यग्विचार्यासुधियासदा ॥ ३४ ॥ विष्णौचसात्त्विकीशक्तिस्तयाहीनोप्यकर्मकृत्॥द्रुहिणेराजसीशक्तिर्ययाहीनोह्यसृष्टिकृत् ॥ ॥ ३५ ॥ शिवेचतामसीशक्तिस्तयासंहारकारकः ॥ इत्यूह्यंमनसासर्वंविचार्यचपुनः पुनः ॥ ३६ ॥ शक्तिःकरोतिब्रह्मांडंसावैपालयतेऽखिल म् ॥ इच्छयासंहरत्येषाजगदेतच्चराचरम् ॥ ३७ ॥ नविष्णुर्नहरःशक्रोनब्रह्मानचपावकः ॥ नसूर्योवरुणःशक्तःस्वेस्वेकार्येकथंचन ॥ ३८ ॥ तयायुक्ताहिकुर्वंतिस्वानिकार्याणितेसुराः ॥ सैवकारणकार्येषुप्रत्यक्षेणावगम्यते ॥ ३९ ॥ सगुणानिर्गुणासातुद्विधाप्रोक्तामनीषिभिः ॥ सगु णारागिभिःसेव्यानिर्गुणातुविरागिभिः ॥ ४० ॥ धर्मार्थकाममोक्षाणांस्वामिनीसानिराकुला ॥ ददातिवांछितान्कामान्पूजिताविधिपूर्वक म् ॥ ४१ ॥ नजानंतिजनामूढास्तांसदामाययावृताः ॥ जानंतोपिनराःकेचिन्मोहयंतिपरानपि ॥ ४२ ॥ पंडिताःस्वोदरार्थंवैपाखंडानिपृथ क्पृथक् ॥ प्रवर्तयंतिकलिनाप्रेरितामंदचेतसः ॥ ४३ ॥ कलावस्मिन्महाभागानानाभेदसमुत्थिताः ॥ नान्येयुगेतथाधर्मावेदबाह्याःकथंच न ॥ ४४ ॥ विष्णुश्चरत्यसायुग्रंतपोवर्षाण्यनेकशः ॥ ब्रह्माहरस्त्रयोदेवाध्यायंतःकमपिध्रुवम् ॥ ४५ ॥ कामयानाःसदाकामंतेत्रयःसर्वदैवहि ॥ यजंतियज्ञान्विविधान्ब्रह्मविष्णुमहेश्वराः ॥ ४६ ॥ तेवैशक्तिपरांदेवींब्रह्माख्यांपरमात्मिकाम् ॥ ध्यायंतिमनसानित्यंनित्यांमत्वासनातनी म् ॥ ४७ ॥ तस्माच्छक्तिःसदासेव्याविद्वद्भिःकृतनिश्चयैः ॥ निश्चयःसर्वशास्त्राणांज्ञातव्योमुनिसत्तमाः ॥ ४८ ॥ कृष्णाच्छ्रुतंमयाचैतत्तेन ज्ञातंतुनारदात् ॥ पितुःसकाशात्तेनापिब्रह्मणाविष्णुवाक्यतः ॥ ४९ ॥

भूतासैवशक्तिः साम्यावस्थात्मिकोपास्येत्यर्थः॥ ३४॥ब्रह्मविष्णुरुद्रादिषुप्रसिद्धेष्वन्वयव्यतिरेकंदर्शयंस्तेषामेकैकगुणवत्तयान्यूनत्वेननोपासनार्हत्वं श्रीभगवत्यपक्षेयेतिदर्शयति। विष्णौचे ति॥ ३५॥३६॥कुतोजातेत्यस्योत्तरमाहशक्तिः करोतीति॥यासर्वस्यकर्त्रीसाकस्मादुत्पद्येतानवस्थाप्रसंगादितिभावः॥ अतएवशक्तेःशक्त्यंतरकल्पनमप्यनुचितमित्यर्थाद्बोध्यम् ॥ ३७ ॥ ॥३८॥ ३९ ॥.सगुणेति ॥ एकैकगुणविशिष्टेत्यर्थः निर्गुणासाम्यावस्थोपाधिकब्रह्मरूपेत्यर्थः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३॥४४॥४५॥यदिब्रह्मादयोमुख्यास्तर्हितेऽन्यंकिमितिभजेयुर्भजं तिचतस्मान्नतेमुख्याःकिंतुपराशक्तिरेवेतिभावः ॥ ४६ ॥ परंब्रह्मैवतस्यारूपंनान्यदस्तीत्यभिप्रायेणब्रह्मात्मिकामित्युक्तम् ॥ स्पष्टीकृतंचैतदस्माभिरुपोद्घाते ॥ ४७ ॥ ४८ ॥ ४९ ॥

६

यथागजशरीरेप्रविष्टस्यचैतन्यस्यगजइतिव्यवहारस्तथाप्रथमतोमायाशरीरे प्रविष्टस्यचैतन्यस्यमायाशक्तिरितिव्यवहारस्तदनंतरंगुणोत्पादादेकैकगुणविशिष्टमायाशबलब्रह्मणएवब्रह्म विष्णुरुद्राइत्यादि व्यवहारस्तथाचसर्वकारणंब्रह्ममायाशक्तिसहितमेवभवतीतिमायाशक्तिर्देवीभगवतीत्यादिमुख्यशब्दैरेवोपास्येत्याह ॥ शक्तिरेवेति ॥ ५० ॥ ५१ ॥ इतिश्रीदेवीभागवततिलकेप्रथमस्कंधेऽष्टमोऽध्यायः ॥८॥ सप्ताशीतिमहाश्लोकैर्मधुकैटभयोर्वधः ॥ देवीप्रसादाद्धरिणाकृतइत्येतदुच्यते ॥ १ ॥ मधुकैटभवधकथायांप्रसंगागतंविचारंसमाप्यपुनस्तामे

नश्रोतव्यंनमंतव्यमन्येषांवचनंबुधैः ॥ शक्तिरेवसदासेव्याविद्वद्भिःकृतनिश्चयैः ॥५०॥ प्रत्यक्षमपिद्रष्टव्यमशक्तस्यविचेष्टितम्॥अतःसर्वेषुभूतेषुज्ञातव्याशक्तिरेवहि ॥५१॥ इति श्रीदेवीभागवतेमहापुराणेप्रथमस्कंधेऽष्टमोऽध्यायः ॥ ८ ॥ सूतउवाच ॥ यदाविनिर्गतानिद्रादेहात्तस्यजगद्गुरोः ॥ नेत्रास्यनासिकाबाहुहृदयेभ्यस्तथोरसः॥१॥निःसृत्यगगनेतस्थौतामसीशक्तिरुत्तमा ॥ उदतिष्ठज्जगन्नाथोजृंभमाणःपुनःपुनः॥२॥ तदाऽपश्यत्स्थितंतत्रभयत्रस्तंप्रजापतिम्॥उवाचचमहातेजामेघगंभीरयागिरा॥३॥विष्णुरुवाच॥किमागतोसिभगवंस्तपस्त्यक्त्वाऽत्रपद्मज॥ कस्माच्चिंतातुरोसित्वंभयाकुलितमानसः॥४॥ब्रह्मोवाच॥त्वत्कर्णमलजौदेवदैत्यौचमधुकैटभौ॥हंतुंमांसमुपायातौघोररूपौमहाबलौ॥५॥भयात्तयोःसमायातस्त्वत्समीपंजगत्पते॥त्राहिमांवासुदेवाद्यभयत्रस्तंविचेतनम्॥६॥विष्णुरुवाच॥ तिष्ठाद्यनिर्भयोजातस्तौहनिष्याम्यहंकिल॥युद्धायाजग्मतुर्मूढौमत्समीपंगतायुषौ॥७॥सूतउवाच॥एवंवदतिदेवेशेदानवौतौमहाबलौ॥विचिन्वानावजंचोभौसंप्राप्तौमदगर्वितौ ॥८॥ निराधारौजलेतत्रसंस्थितौविगतज्वरौ॥तावूचतुर्मदोन्मत्तौब्रह्माणंमुनिसत्तमाः ॥९॥ पलायित्वासमायातःसन्निधावस्यकिंततः॥युद्धंकुरुहनिष्यावःपश्यतोस्यैवसन्निधौ॥१०॥पश्चादेनंहनिष्यावःसर्पभोगोपरिस्थितम्॥त्वमद्यकुरुसंग्रामंदासोस्मीतिचवावद ॥११॥ सूतउवाच ॥ तच्छ्रुत्वावचनंविष्णुस्तावुवाचजनार्दनः॥कुरुतांसमरंकामंमयादानवपुंगवौ ॥१२॥ हरिष्यामिमदंचाहंयुवयोर्मत्तयोःकिल॥आगच्छतंमहाभागौश्रद्धाचेद्वांमहाबलौ॥१३॥सूतउवाच॥श्रुत्वातद्वचनंचोभौक्रोधव्याकुललोचनौ॥निराधारौजलस्थौचयुद्धोद्युक्तौबभूवतुः ॥१४॥ मधुश्चकुपितस्तत्रहरिणासहसंयुगम्॥कर्तुंप्रचलितस्तूर्णंकैटभस्तुतथास्थितः ॥१५॥ बाहुयुद्धंतयोरासीन्मल्लयोरिवमत्तयोः ॥ श्रांतेमधौकैटभस्तुसंग्राममकरोत्तदा ॥१६॥ पुनर्मधुःकैटभश्चयुयुधातेपुनःपुनः॥बाहुयुद्धेनरागांधौविष्णुनाप्रभविष्णुना ॥१७॥प्रेक्षकस्तुतदाब्रह्मादेवीचैवांतरिक्षगा॥ नमम्लतुस्तदातौतुविष्णुस्तुम्लानिमाप्तवान् ॥ १८ ॥

वकथामुत्थापयतिसूतः । यदाविनिर्गतेति ॥ यदादेहात्सानिद्रानिद्राभिमानिनीदेवतानिर्गतातदासानिद्राभिमानिनीमहाकालीतामसीशक्तिर्गगनेमूर्तिमतीतस्थौतयोर्दैत्ययोर्मोहार्थम् ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १०॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ नमम्लतुर्नम्लानौबभूवतुः ॥ १८ ॥

॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ विश्रमणंविश्रामः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

पंचवर्षसहस्राणियदाजातानियुद्ध्यता ॥ हरिणाचिंतितंतत्रकारणंमरणेतयोः ॥ १९ ॥ पंचवर्षसहस्राणिमयायुद्धंकृतंकिल ॥ नश्रांतौदानवौ घोरौश्रांतोऽहंचैतदद्भुतम् ॥ २० ॥ क्वगतंमेबलंशौर्यंकस्माच्चेमावनामयौ ॥ किमत्रकारणंचिंत्यंविचार्यमनसात्विह ॥ २१ ॥ इतिचिंतापरं दृष्ट्वाहरिंहर्षपरावुभौ ॥ ऊचतुस्तौमदोन्मत्तौमेघगंभीरनिःस्वनौ ॥ २२ ॥ तवनोचेद्बलंविष्णोयदिश्रांतोसियुद्धतः ॥ ब्रूहिदासोस्मिवांनूनंकृ त्वाशिरसिचांजलिम् ॥ २३ ॥ नचेद्युद्धंकुरुष्वाद्यसमर्थोसिमहामते ॥ हत्वात्वांनिहनिष्यावःपुरुषंचचतुर्मुखम् ॥ २४ ॥ सूतउवाच ॥ श्रुत्वा तद्भाषितंविष्णुस्तयोस्तस्मिन्महोदधौ ॥ उवाचवचनंश्लक्ष्णंसामपूर्वंमहामनाः ॥ २५ ॥ हरिरुवाच ॥ श्रांतेभीतेत्यक्तशस्त्रेपतितेबालकेतथा ॥ प्रहरंतिनवीरास्तेधर्मएषसनातनः ॥ २६ ॥ पंचवर्षसहस्राणिकृतंयुद्धंमयात्विह ॥ एकोहंभ्रातरौवांचबलिनौसदृशौतथा ॥ २७ ॥ कृतंविश्रम णंमध्येयुवाभ्यांचपुनःपुनः ॥ तथाविश्रमणंकृत्वायुध्येहंनात्रसंशयः ॥ २८ ॥ तिष्ठतांहियुवांतावद्बलवंतौमदोत्कटौ ॥ विश्रम्याहंकरिष्या मियुद्धंवान्यायमार्गतः ॥ २९ ॥ सूतउवाच ॥ इतिश्रुत्वावचस्तस्यविश्रब्धौदानवोत्तमौ ॥ संस्थितौदूरतस्तत्रसंग्रामेकृतनिश्चयौ ॥ ३० ॥ अतिदूरेचतौदृष्ट्वावासुदेवश्चतुर्भुजः ॥ दध्यौचमनसातत्रकारणंमरणेतयोः ॥ ३१ ॥ चिंतनाज्ज्ञानमुत्पन्नंदेवीदत्तवरावुभौ ॥ कामंवांछि तमरणौनमम्लतुरतस्त्विमौ ॥ ३२ ॥ वृथामयाकृतंयुद्धश्रमोयंमेवृथागतः ॥ करोमिचकथंयुद्धमेवंज्ञात्वाविनिश्चयम् ॥ ३३ ॥ अकृतेचत थायुद्धेकथमेतौगमिष्यतः ॥ विनाशंदुःखदौनित्यंदानवौवरदर्पितौ ॥ ३४ ॥ भगवत्यावरोदत्तस्तयासोपिचदुर्घटः ॥ मरणंचेच्छयाकामं दुःखितोपिनवांछति ॥ ३५ ॥ रोगग्रस्तोपिदीनोपिनमुमूर्षतिकश्चन ॥ कथंचेमौमदोन्मत्तौमर्तुकामौभविष्यतः ॥ ३६ ॥ नन्वद्यशरणंयामिविद्यां शक्तिंसुकामदाम् ॥ विनातयानसिध्यंतिकामाःसम्यक्प्रसन्नया ॥ ३७ ॥ एवंसंचिंत्यमानस्तुगगनेसंस्थितांशिवाम् ॥ अपश्यद्भगवान्विष्णु र्योगनिद्रांमनोहराम् ॥ ३८ ॥ कृतांजलिरमेयात्मातांचतुष्टावयोगवित् ॥ विनाशार्थंतयोस्तत्रवरदांभुवनेश्वरीम् ॥ ३९ ॥ विष्णुरुवाच ॥ नमोदेवि महामायेसृष्टिसंहारकारिणि ॥ अनादिनिधनेचंडिभुक्तिमुक्तिप्रदेशिवे ॥ ४० ॥ नतेरूपंविजानामिसगुणंनिर्गुणंतथा ॥ चरित्राणिकुतोदेविसंख्याती तानियानिते ॥ ४१ ॥ अनुभूतोमयातेऽद्यप्रभावश्चातिदुर्घटः ॥ यदहंनिद्रयालीनःसंजातोस्मिविचेतनः ॥ ४२ ॥ ब्रह्मणाचातियत्नेनबोधितो पिपुनःपुनः ॥ नप्रबुद्धःसर्वथाहंसंकोचितषडिंद्रियः ॥ ४३ ॥

वरदांभुवनेश्वरीमिति ॥ यद्यपिसाम्यावस्थमायोपाधिकब्रह्मरूपिणीभुवनेश्वरीनतामसीशक्तिस्तथापिसाम्यावस्थात्मकभुवनेश्वर्येवतमोगुणयुक्तासतीमहाकालीपदवाच्येतितामस्यामहा काल्याःश्रीभुवनेश्वर्याअभेदस्यसत्त्वात्तामस्याःशक्तेर्भुवनेश्वरीतिनाम्नाव्यवहारःकृतः ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥

॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ वक्रयादृशेतिकटाक्षेणेत्यर्थः ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ पुरावैइति ॥ दानववैरिणामयापुराबहवोदैत्याजिताइति

अचेतनत्वंसंप्राप्तःप्रभावात्तवचांबिके ॥ त्वयामुक्तःप्रबुद्धोहंयुद्धंचबहुधाकृतम् ॥ ४४ ॥ श्रांतोहंनचतौश्रांतौत्वयादत्तवरौवरौ ॥ ब्रह्माणंहंतुमा
यातौदानवौमदगर्वितौ ॥ ४५ ॥ आहूतौचमयाकामंद्वंद्वयुद्धायमानदे ॥ कृतंयुद्धंमहाघोरंमयाताभ्यांमहार्णवे ॥ ४६ ॥ मरणेवरदानंतेततो
ज्ञातंमहाद्भुतम् ॥ ज्ञात्वाहंशरणंप्राप्तस्त्वामद्यशरणप्रदाम्॥४७॥ साहाय्यंकुरुमेमातःखिन्नोहंयुद्धकर्मणा ॥ दृप्तौतौवरदानेनतवदेवार्तिनाशने॥
॥ ४८ ॥ हंतुंमामुद्यतौपापौकिंकरोमिक्कयामिच ॥ इत्युक्तासातदादेवीस्मितपूर्वमुवाचह ॥ ४९ ॥ प्रणमंतंजगन्नाथंवासुदेवंसनातनम् ॥ देव
देवहरेविष्णोकुरुयुद्धंपुनःस्वयम् ॥ ५० ॥ वंचयित्वात्विमौशूरौहंतव्यौचविमोहितौ ॥ मोहयिष्याम्यहंनूनंदानवौवक्रयादृशा ॥ ५१ ॥ जहि
नारायणाशुत्वंममायाविमोहितौ ॥ सूतउवाच ॥ तच्छुत्वावचनंविष्णुस्तस्याःप्रीतिरसान्वितम् ॥ ५२ ॥ संग्रामस्थलमासाद्यतस्थौतत्र
महार्णवे ॥ तदायातौचतौधीरौयुद्धकामौमहाबलौ ॥ ५३ ॥ वीक्ष्यविष्णुंस्थितंतत्रहर्षयुक्तौबभूवतुः ॥ तिष्ठतिष्ठमहाकामकुरुयुद्धंचतुर्भुज ॥
॥ ५४ ॥ दैवाधीनौविदित्वाद्यनूनंजयपराजयौ ॥ सबलोजयमाप्नोतिदैवाज्जयतिदुर्बलः ॥ ५५ ॥ सर्वथैवनकर्तव्यौहर्षशोकौमहात्मना ॥
पुरावैबहवोदैत्याजितादानववैरिणा ॥ ५६ ॥ अधुनाचानयोःसार्धंयुध्यमानःपराजितः ॥ सूतउवाच ॥ इत्युक्तातौमहाबाहूयुद्धायसमुपस्थि
तौ ॥ ५७ ॥ वीक्ष्यविष्णुर्जघानाशुमुष्टिनाऽद्भुतकर्मणा ॥ तावप्यतिबलोन्मत्तौजघ्नतुर्मुष्टिनाहरिम् ॥ ५८ ॥ एवंपरस्परंजातंयुद्धंपरमदारुण
म् ॥ युध्यमानौमहावीर्यौदृष्ट्वानारायणस्तदा ॥ ५९ ॥ अपश्यत्संमुखंदेव्याःकृत्वादीनांदृशंहरिः ॥ सूतउवाच॥ तंवीक्ष्यतादृशंविष्णुंकरुणा
रससंयुतम् ॥ ६० ॥ जहासातीवताम्राक्षीवीक्षमाणातदासुरौ ॥ तौजघानकटाक्षैश्चकामबाणैरिवापरैः ॥ ६१ ॥ मंदस्मितयुतैःकामप्रेमभाव
युतैरनु ॥ दृष्ट्वामुमुहतुःपापौदेव्यावक्रविलोकनम् ॥ ६२ ॥ विशेषमितिमन्वानौकामबाणातिपीडितौ ॥ वीक्षमाणौस्थितौतत्रतांदेवींविश
दप्रभाम् ॥ ६३ ॥ हरिणापिचतदृष्टंदेव्यास्तत्रचिकीर्षितम् ॥ मोहितौतौपरिज्ञायभगवान्कार्यवित्तमः ॥ ६४ ॥ उवाचतौहसंश्लक्ष्णंमेघगं
भीरयागिरा ॥ वरंवरयतांवीरौयुवयोर्योभिवांछितः ॥ ६५ ॥ ददामिपरमप्रीतोयुद्धेनयुवयोःकिल ॥ दानवाबहवोदृष्टायुध्यमानामयापुरा ॥
॥ ६६ ॥ युवयोःसदृशःकोपिनदृष्टोनचवैश्रुतः ॥ तस्मात्तुष्टोस्मिकामंवैनिस्तुलेनबलेनच ॥ ६७ ॥ भ्रात्रोश्चवांछितंकामंप्रयच्छामिमहाब
लौ ॥ सूतउवाच ॥ तच्छुत्वावचनंविष्णोःसाभिमानौस्मरातुरौ ॥ ६८ ॥

हर्षोनकर्तव्यः अधुनाचानयोर्मधुकैटभयोः सार्धंयुध्यमानःपराजितइतिशोकोपिनकर्तव्यः॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६०॥६१ ॥६२ ॥६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८॥

॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ निर्जलंजलरहितंस्थलमित्यर्थः ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ मेदिनीति ॥ मधुकैटभवधे
जातेपश्चाद्वराहेणयदापृथिव्युद्धृतातदासामेदोयुक्ताजातेति ॥ मेदोस्तियस्यामितिव्युत्पत्तेर्मेदिनीतिनामजातमित्यर्थः ॥ ८४ ॥ महाविद्येति ॥ यस्मात्कारणात्सर्वश्रुतिप्रतिपाद्यसाम्या
वस्थमायाशबलब्रह्मरूपाभगवतीसर्वकारणकारणाएकैकगुणोपाधिब्रह्माद्यपेक्षयासर्वोत्कृष्टा ततःसैवोपास्याध्येयाज्ञेयाचेतिभावः ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ इतिश्रीदेवीभागवत

वीक्षमाणौमहामायांजगदानंदकारिणीम् ॥ तमूचतुश्चकामार्तौविष्णुंकमललोचनौ ॥६९॥ हरेनयाचकावावांत्वंकिंदातुमिहेच्छसि॥ ददावतु
भ्यंदेवेशदातारौनौनयाचकौ॥७०॥प्रार्थयत्वंहृषीकेशमनोभिलषितंवरम् ॥ तुष्टौस्वस्तवयुद्धेनवासुदेवाद्भुतेनच ॥७१॥ तयोस्तद्वचनंश्रुत्वाप्र
त्युवाचजनार्दनः ॥ भवेतामद्यमेतुष्टौममवध्यावुभावपि ॥७२ ॥ सूतउवाच ॥ तच्छ्रुत्वावचनंविष्णोर्दानवौचातिविस्मितौ ॥ वंचिताविति
म्वानौतस्थतुःशोकसंयुतौ ॥ ७३ ॥ विचार्यमनसातौतुदानवौविष्णुमूचतुः ॥ प्रेक्ष्यसर्वंजलमयंभूमिंस्थलविवर्जिताम् ॥ ७४ ॥ हरेयोयंवरो
दत्तस्त्वयापूर्वंजनार्दन ॥ सत्यवागसिदेवेशदेहितंवांछितंवरम् ॥ ७५ ॥ निर्जलेविपुलेदेशेहनस्वमधुसूदन ॥ वध्यावावांतुभवतःसत्यवाग्भ
वमाधव ॥७६॥ स्मृत्वाचक्रंतदाविष्णुस्तावुवाचहसन्हरिः ॥ हन्म्यद्यवांमहाभागौनिर्जलेविपुलेस्थले ॥७७॥ इत्युक्त्वादेवदेवेशऊरूकृत्वाऽ
तिविस्तरौ ॥ दर्शयामासतौतत्रनिर्जलंचजलोपरि ॥७८॥ नास्त्यत्रदानवौवारिशिरसीमुंचतामिह ॥ सत्यवागहमद्यैवभविष्यामिचवांतथा॥
॥ ७९ ॥ तदाकर्ण्यवचस्तथ्यंविचिंत्यमनसाचतौ ॥ वर्धयामासतुर्देहंयोजनानांसहस्रकम् ॥ ८० ॥ भगवान्द्विगुणंचक्रेजघनंविस्मितौतदा॥
शीर्षेसंदधतांतत्रजघनेपरमाद्भुते ॥ ८१ ॥ रथांगेनतदाछिन्नेविष्णुनाप्रभविष्णुना ॥ जघनोपरिवेगेनप्रकृष्टेशिरसीतयोः ॥ ८२ ॥ गतप्राणौ
तदाजातौदानवौमधुकैटभौ ॥ सागरःसकलोव्याप्तस्तदावैमेदसातयोः ॥ ८३ ॥ मेदिनीतिततोजातंनामपृथ्व्याःसमंततः ॥ अभक्षामृत्तिका
तेनकारणेनमुनीश्वराः ॥ ८४ ॥ इतिवःकथितंसर्वंयत्पृष्टोऽस्मिसुनिश्चितम् ॥ महाविद्यामहामायासेवनीयासदाबुधैः ॥ ८५ ॥ आराध्यापर
माशक्तिःसर्वैरपिसुरासुरैः ॥ नातःपरतरंकिंचिदधिकंभुवनत्रये ॥८६॥ सत्यंसत्यंपुनःसत्यंवेदशास्त्रार्थनिर्णयः ॥ पूजनीयापराशक्तिर्निर्गुणा
सगुणाऽथवा ॥ ८७ ॥ इति श्रीदेवीभागवते महापुराणे प्रथमस्कंधे नवमोऽध्यायः ॥९॥ ऋषयऊचुः॥सूतपूर्वंत्वयाप्रोक्तंव्यासेनामिततेजसा॥
कृत्वापुराणमखिलंशुकायाध्यापितंशुभम् ॥ १ ॥ व्यासेनतुतपस्तप्त्वाकथमुत्पादितःशुकः ॥ विस्तरंब्रूहिसकलंयच्छ्रुतंकृष्णतस्त्वया ॥ २ ॥

तिलकेप्रथमस्कंधेनवमोऽध्यायः ॥ ९ ॥ षट्त्रिंशत्पद्यकैःसार्धैर्वरदानंशिवस्यच ॥ व्यासायपुत्रविषयंजातमित्येतदीर्यते ॥ १ ॥ पूर्वंव्यासेपुत्रलाभार्थमनुष्ठानंचिकीर्षयापर्वतंगतेसति
कस्यदेवस्याऽऽराधनाकर्तव्येतिजिज्ञासायांसत्यां नारदसमागमेजातेनारदेनब्रह्मविष्णुसंवादमुखेनभगवत्येवसर्वोत्कृष्टाआराध्येतिस्थापितंमध्येप्रसंगागताःकथाःसमापिताः ॥ भगव
त्याआराधनेनकथंपुत्रोत्पत्तिर्जातेतितद्व्याप्यवशिष्टंतदृषयःपृच्छंति ॥ सूतेति ॥ १ ॥ कृष्णतोवेदव्यासात् ॥ २ ॥

॥ ३ ॥ तपश्चचारेति ॥ शक्तिरेवाऽऽराध्येतिनारदाच्छ्रुत्वातस्यावाग्भवंबीजंनारदेनोपदिष्टंगृहीत्वातज्जपंस्तपश्चचारेत्यर्थः ॥ ४ ॥ ५ ॥ जपकालेएतादृशींभावनांकृतवानित्याह ॥ अग्नेर्भूमेरिति ॥ वीर्येणशक्त्येत्यर्थः ॥ संमितस्तुल्यः ॥ ६ ॥ अतिष्ठदिति ॥ तपइतिशेषः ॥ यद्यपिव्यासेननारदमुखाद्भगवतींसर्वोत्कृष्टांश्रुत्वापराशक्तेरेवध्यानंकृतंतथापिशक्तेर्ध्यानेकृतेशिवस्यध्यानंजातमेवेत्यभिप्रायेणआराधयन्महादेवमित्युक्तम् ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ अहितमितिच्छेदः ॥ अहितंनेच्छतीत्यर्थः ॥

सूतउवाच ॥ प्रवक्ष्यामिशुकोत्पत्तिंव्यासात्सत्यवतीसुतात् ॥ यथोत्पन्नःशुकःसाक्षाद्योगिनांप्रवरोमुनिः ॥ ३ ॥ मेरुशृंगेमहारम्येव्यासःसत्यवतीसुतः ॥ तपश्चचारसोत्युग्रंपुत्रार्थंकृतनिश्चयः ॥४॥ जपन्नेकाक्षरंमंत्रंवाग्बीजंनारदाच्छ्रुतम् ॥ ध्यायन्परांमहामायांपुत्रकामस्तपोनिधिः ॥ ॥ ५ ॥ अग्नेर्भूमेस्तथावायोरंतरिक्षस्यचाप्ययम् ॥ वीर्येणसंमितःपुत्रोममभूयादितिस्मह ॥ ६॥ अतिष्ठत्सगताहारःशतसंवत्सरंप्रभुः ॥ आराधयन्महादेवंतथैवचसदाशिवाम् ॥ ७ ॥ शक्तिःसर्वत्रपूज्येतिविचार्यचपुनःपुनः ॥ अशक्तोनिंद्यतेलोकेशक्तस्तुपरिपूज्यते ॥ ८ ॥ यत्रपर्वतश्रृंगेवैकार्णिकारवनाद्भुते ॥ क्रीडंतिदेवताःसर्वेमुनयश्चतपोधिकाः ॥ ९ ॥ आदित्यावसवोरुद्रामरुतश्चाश्विनौतथा ॥ वसंतिमुनयोयत्रयेचान्येब्रह्मवित्तमाः॥ १०॥तत्रहेमगिरेःश्रृंगेसंगीतध्वनिनादिते॥तपश्चचारधर्मात्माव्यासःसत्यवतीसुतः ॥ ११॥ ततोऽस्यतेजसाव्याप्तंविश्वंसर्वंचराचरम्॥अग्निवर्णाजटाजाताःपाराशर्यस्यधीमतः॥ १२ ॥ततोस्यतेजआलक्ष्यभयमापशचीपतिः॥ तुरासाहंतदादृष्ट्वाभयत्रस्तंश्रमातुरम्॥ १३॥ उवाचभगवान्रुद्रोमघवंतंतथास्थितम् ॥ शंकरउवाच ॥कथमिंद्राद्यभीतोऽसिकिंदुःखंतेसुरेश्वर॥ १४॥अमर्षोनैवकर्तव्यस्तापसेषुकदाचन ॥ तपश्चरंतिमुनयोज्ञात्वामांशक्तिसंयुतम्॥ १५॥नत्वेतेऽहितमिच्छंतितापसाःसर्वथैवहि॥इत्युक्तवचनःशक्रस्तमुवाचवृषध्वजम्॥ १६॥कस्मात्तपस्यतिव्यासःकोऽर्थस्तस्यमनोगतः॥शिवउवाच॥ पाराशर्यस्तुपुत्रार्थीतपश्चरतिदुश्चरम्॥ १७॥पूर्णंवर्षशतंजातंददाम्यद्यसुतंशुभम् ॥ सूतउवाच ॥ इत्युक्त्वावासवंरुद्रोदययामुदिताननः॥ १८॥गत्वाऋषिसमीपंतुतमुवाचजगद्गुरुः॥ उत्तिष्ठवासवीपुत्रपुत्रस्तेभविताशुभः ॥ १९॥ सर्वतेजोमयोज्ञानीकीर्तिकर्तातवाऽनघ ॥ अखिलस्यजनस्याऽत्रवल्लभस्तेसुतःसदा॥ २०॥भविष्यतिगुणैःपूर्णःसात्त्विकैःसत्यविक्रमः॥ सूतउवाच॥ तदाऽऽकर्ण्यवचःश्लक्ष्णंकृष्णद्वैपायनस्तदा ॥ २१ ॥ शूलपाणिंनमस्कृत्यजगामाश्रममात्मनः ॥ सगत्वाऽऽश्रममेवाऽऽशुबहुवर्षश्रमातुरः ॥ २२ ॥ अरणीसहितंगुह्यंममंथाग्निंचिकीर्षया॥मंथनंकुर्वतस्तस्यचित्तेचिंताभरस्तदा॥२३॥प्रादुर्बभूवसहसासुतोत्पत्तौमहात्मनः ॥ मंथानारणिसंयोगान्मंथनाच्चसमुद्भवः ॥ २४ ॥ पावकस्ययथातद्वत्कथंमेस्यात्सुतोद्भवः ॥ पुत्रारणिस्तुव्याख्यातासाममाद्यनविद्यते ॥ २५ ॥

इत्युक्तंवचनंयस्मैसइत्युक्तवचनःशक्रः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ गुह्यंगुप्तमग्निंममंथेत्यन्वयः ॥ २३ ॥ मंथानोमंथनदंडः ॥ २४ ॥ पुत्रारणिःपुत्रजननीकामिनीममनास्ति ॥ २५ ॥

॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ धृतव्रतइति ॥ धृतव्रतोपिपंचबाणेनपरीतांगोविद्धांगआसीदित्यर्थः ॥ ३१ ॥ ३२ ॥ हासमेवाह । तपस्तप्त्वेति ॥ ३३ ॥ यदिस्यादतुलमिति ॥ इयमप्सराभोगंदत्त्वागमिष्यतिनत्वनयागृहस्थाश्रमजन्यंसुखंस्यादितिभावः ॥ ३४ ॥ गृहस्थाश्रमसंभूतंपुण्यमितिशेषः ॥ ३५ ॥ ३६ ॥ इतिश्रीदेवीभागवततिलकेप्रथम

तरुणीरूपसंपन्नाकुलोत्पन्नापतिव्रता॥कथंकरोमिकांतांचपादयोःशृंखलासमाम् ॥२६॥ पुत्रोत्पादनदक्षांचपातिव्रत्येसदास्थिताम् ॥ पतिव्रतापिदक्षापिरूपवत्यपिकामिनी॥२७॥सदाबंधनरूपाचस्वेच्छासुखविधायिनी॥शिवोपिवर्ततेनित्यंकामिनीपाशसंयुतः ॥ २८॥ कथंकरोम्यहंचात्रदुर्घटंचगृहाश्रमम् ॥ एवंचिंतयतस्तस्यघृताचीदिव्यरूपिणी ॥२९॥ प्राप्ताद्दृष्टिपथंतत्रसमीपेगगनेस्थिता ॥तांदृष्ट्वाचपलापांगींसमीपस्थांवराप्सराम् ॥३०॥ पंचबाणपरीतांगस्तूर्णमासीद्धृतव्रतः ॥ चिंतयामास चतदाकिंकरोम्यद्यसंकटे॥३१॥धर्मस्यपुरतःप्राप्तेकामभावेदुरासदे ॥ अंगीकरोमियद्येनांवंचनार्थमिहागताम्॥३२॥हसिष्यंतिमहात्मानस्तापसामांतुविह्वलम्॥तपस्तप्त्वामहाघोरंपूर्णंवर्षशतंत्विह ॥३३ ॥ दृष्ट्वाप्सरांचविवशःकथंजातोमहातपाः ॥ कामंनिंदापिभवतुयदिस्यादतुलंसुखम् ॥ ३४ ॥ गृहस्थाश्रमसंभूतंसुखदंपुत्रकामदम् ॥ स्वर्गदंचतथाप्रोक्तंज्ञानिनांमोक्षदंतथा ॥ ३५ ॥ नभविष्यतितन्नूनमनयादेवकन्यया॥ नारदाच्चमयापूर्वंश्रुतमस्तिकथानकम् ॥ यथोर्वशीवशोराजापराभूतःपुरूरवाः ॥ ३६ ॥ इति श्रीदेवीभागवते महापुराणे प्रथमस्कंधे दशमोऽध्यायः ॥ १० ॥ ऋषयऊचुः ॥ कोसौपुरूरवाराजाकोर्वशीदेवकन्यका ॥ कथंकष्टंचसंप्राप्तंतेनराज्ञामहात्मना ॥१॥ सर्वंकथानकंब्रूहिलोमहर्षणजाऽधुना॥ श्रोतुकामावयंसर्वेत्वन्मुखाब्जच्युतंरसम् ॥२॥ अमृतादपिमिष्टातेवाणीसूतरसात्मिका॥नतृप्यामोवयंसर्वेसुधयाचयथाऽमराः ॥३॥ सूतउवाच ॥ शृणुध्वंमुनयःसर्वेकथांदिव्यांमनोरमाम् ॥ वक्ष्याम्यहंयथाबुद्ध्याश्रुतांव्यासवरोत्तमात् ॥ ४ ॥ गुरोस्तुदयिताभार्यातारानामेतिविश्रुता ॥ रूपयौवनयुक्तासाचार्वंगीमदविह्वला ॥ ५ ॥ गतैकदाविधोर्धामयजमानस्यभामिनी ॥ दृष्टाचशशिनाऽत्यर्थंरूपयौवनशालिनी ॥ ६॥ कामातुरस्तदाजातः शशीशशिमुखींप्रति॥ सापिवीक्ष्यविधुंकामंजातामदनपीडिता ॥ ७ ॥ तावन्योन्यंप्रेमयुक्तौस्मरार्तौच बभूवतुः ॥ ताराशशीमदोन्मत्तौकामबाणप्रपीडितौ ॥८॥ रेमातेमदमत्तौतौपरस्परस्पृहान्वितौ ॥ दिनानिकतिचित्तत्रजातानिरममाणयोः ॥ ९ ॥ बृहस्पतिस्तुदुःखार्तस्तारामानयितुंगृहम् ॥ प्रेषयामासशिष्यंतुनायातासावशीकृता ॥ १० ॥

स्कंधेदशमोध्यायः ॥ १० ॥ षडशीतिमहाश्लोकैर्बुधोत्पत्तिस्तुकथ्यते ॥ कामबाणैस्तुविद्धत्वंमहतांयत्रभण्यते ॥ १ ॥ पूर्वाध्यायेयथोर्वशीवशोराजापराभूतःपुरूरवाइत्युक्तंतत्रकोसौपुरूरवाःकथमुत्पन्नइतिऋषयः पृच्छंति । कोसाविति कष्टंक्लेशः ॥ १ ॥ २ ॥ नतृप्यामइति ॥ तयेतिशेषः ॥ ३ ॥ यथाश्रुतांतथेतिशेषः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

॥ ११ ॥ १२ ॥ १३ ॥ तवदेवगुरुश्चाहमिति ॥ हेदेव तवाहंगुरुरस्मीत्यन्वयः ॥ किंरक्षितेति ॥ किमर्थंरक्षितेत्यर्थः ॥ १४ ॥ १५ ॥ १६ ॥ नोचेद्रक्ष्यामीति ॥ शेषःशापमिति ॥ ॥ १७ ॥ १८ ॥ क्रोधात्तेत्विति ॥ ब्राह्मणाःक्रोधादेवदुराराध्याअपूज्याभवंतीत्यर्थः ॥ अथक्रोधवर्जिताधर्मशास्त्रज्ञाःपूजार्हाभवंति ॥ एवंयेपूजार्हाउक्तास्ततस्तेभ्योन्यथाप्रकारेणये क्रोधयुक्तास्तेपूजायांवर्जनीयाइतिशास्त्रमर्यादा अतस्त्वंगुरोक्रोधंविहायपूज्योभव नतुतमालंब्यापूज्योभवेतिभावः ॥ १९ ॥ २० ॥ २१ ॥ पातकेकृतेपिचारेणरजः संचारेणरजोदर्शनेन

पुनःपुनर्यदाशिष्यंपरावर्ततचंद्रमाः॥बृहस्पतिस्तदाक्रुद्धोजगामस्वयमेवहि ॥ ११ ॥ मत्वासोमगृहंतत्रवाचस्पतिरुदारधीः ॥ उवाचशशिनंक्रुद्धः स्मयमानंमदान्वितम् ॥ १२ ॥ किंकृतंकिलशीतांशोकर्मधर्मविगर्हितम् ॥ रक्षिताममभार्येयंसुंदरीकेनहेतुना ॥ १३ ॥ तवदेवगुरुश्चाहंयजमा नोसिसर्वथा ॥ गुरुभार्याकथंमूढभुक्ताकिंरक्षिताऽथवा ॥ १४ ॥ ब्रह्महाहेमहारीचसुरापोगुरुतल्पगः ॥ महापातकिनोह्येतेतत्संसर्गीचपंचमः॥ ॥ १५ ॥ महापातकयुक्तस्त्वंदुराचारोतिगर्हितः ॥ नदेवसदनार्होसियद्भिुक्तेयमंगना ॥ १६ ॥ मुंचेमामसितापांगींनयामिसदनंमम ॥ नोचे द्रक्ष्यामिदुष्टात्मन्गुरुदारापहारिणम् ॥ १७ ॥ इत्येवंभाषमाणंतमुवाचरोहिणीपतिः ॥ गुरुंक्रोधसमायुक्तंकांताविरहदुःखितम् ॥ १८ ॥ ॥ इंदुरुवाच ॥ क्रोधात्तेतुदुराराध्याब्राह्मणाःक्रोधवर्जिताः ॥ पूजार्हाधर्मशास्त्रज्ञावर्जनीयास्ततोऽन्यथा ॥ १९ ॥ आगमिष्यतिसाकामंगृहं तेवरवर्णिनी ॥ अत्रैवसंस्थिताबालाकातेहानिरिहानघ ॥ २० ॥ इच्छयासंस्थिताचात्रसुखकामार्थिनीहिसा ॥ दिनानिकतिचित्स्थित्वास्वे च्छयाचागमिष्यति ॥ २१ ॥ त्वयैवोदाहृतपूर्वंधर्मशास्त्रमतंतथा ॥ नस्त्रीदुष्यतिचारेणनविप्रोवेदकर्मणा ॥२२॥ इत्युक्तःशशिनातत्रगुरुरत्यं तदुःखितः ॥ जगामस्वगृहंतूर्णंचिंताविष्टःस्मरातुरः ॥ २३ ॥ दिनानिकतिचित्तत्रस्थित्वाचिंतातुरोगुरुः ॥ ययावथगृहंतस्यत्वरितश्चौषधीप तेः॥ २४ ॥ स्थितःक्षत्त्रानिषिद्धोसौद्वारदेशेरुषान्वितः ॥ नाजगामशशीतत्रचुकोपातिबृहस्पतिः ॥ २५ ॥ अयंमेशिष्यतांयातोगुरुपत्नींतु मातरम् ॥ जग्राहबलतोऽधर्मीशिक्षणीयोमयाऽधुना ॥२६॥ उवाचवाचंकोपात्तुद्वारदेशेस्थितोबहिः॥किंशेषेभुवनेमंदपापाचारसुराधम॥२७॥ देहिमेकामिनींशीघ्रंनोचेच्छापंददाम्यहम् ॥ करोमिभस्मसान्नूनंनददासिप्रियांमम ॥ २८ ॥ सूतउवाच ॥ क्रूराणिचैवमादीनिभाषणानिबृह स्पतेः ॥ श्रुत्वाद्विजपतिःशीघ्रंनिर्गतःसदनाद्बहिः ॥ २९ ॥ तमुवाचहसन्सोमःकिमिदंबहुभाषसे॥ नतेयोग्यासितापांगीसर्वलक्षणसंयुता ॥ ३० ॥ कुरूपांचस्वसदृशींगृहाणान्यांस्त्रियंद्विज ॥ भिक्षुकस्यगृहेयोग्यानेदृशीवरवर्णिनी ॥ ३१ ॥

स्त्रीनदुष्यतीतित्वयाबार्हस्पत्यमतेउक्तमितिभावः ॥ तदुक्तम् ॥ प्रायश्चित्तंभवेत्स्त्रीणांयन्मासेरजसश्च्युतिरिति॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥शीघ्रंनिर्गतइति ॥ तस्यनिराशाकरणंविनाशांतिर्नभविष्यतीतिमत्वानिराशाकरणार्थंशीघ्रंनिर्गतइत्यर्थः ॥ २९ ॥ ३० ॥ ३१ ॥

॥ ३२ ॥३३॥ कामार्तस्येति ॥ यद्यपिकामार्तानामिंद्रप्रभृतीनांगौतमादिशापबाधाजातैवतथापिकामार्तस्येतीयमुक्तिः यथा मदकरमदिराक्षीनीविमोक्षोहिमोक्षइतितद्वद्बोध्या ॥३४॥
शशिनाचेज्यइति ॥ ईज्योगुरुः ॥ शचीपतेः सद्मगृहम् ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ रोहिणीपतिंचंद्रम् .॥ ४५ ॥ ४६ ॥ ४७ ॥ कल

रतिःस्वसदृशेकांतेनार्याःकिलनिगद्यते ॥ त्वंनजानासिमंदात्मन्कामशास्त्रविनिर्णयम् ॥ ३२ ॥ यथेष्टंगच्छदुर्बुद्धेनाहंदास्यामिकामिनीम् ॥
यच्छक्यंकुरुतत्कामंनदेयावरवर्णिनी ॥३३॥कामार्तस्यचतेशापोनमांबाधितुमर्हति ॥ नाहंददेगुरोकांतांयथेच्छसितथाकुरु॥३४॥सूतउवाच॥
इत्युक्तःशशिनाचेज्यश्चितामापरुषान्वितः॥जगामतरसासद्मक्रोधयुक्तःशचीपतेः॥३५॥दृष्ट्वाशतक्रतुस्तत्रगुरुंदुःखातुरंस्थितम् ॥ पाद्यार्घ्याचम
नीयाद्यैःपूजयित्वासुसंस्थितः ॥ ३६ ॥ पप्रच्छपरमोदारस्तंतथावस्थितंगुरुम्॥कांचितातेमहाभागशोकार्तोसिमहामुने॥३७॥ केनापमानितो
सित्वंममराज्येगुरुश्वमे॥त्वदधीनमिदंसर्वंसैन्यंलोकाधिपैःसह ॥ ३८ ॥ ब्रह्माविष्णुस्तथाशंभुर्येचान्येदेवसत्तमाः॥करिष्यंतिचसाहाय्यंकांचि
तावदसांप्रतम्॥३९॥गुरुरुवाच॥ शशिनाऽपहृताभार्यातारामममसुलोचना ॥ नददातिसदुष्टात्माप्रार्थितोपिपुनःपुनः ॥४०॥ किंकरोमिसुरेशा
नत्वमेवशरणंमम॥ साहाय्यंकुरुदेवेशदुःखितोस्मिशतक्रतो॥४१ ॥ इंद्रउवाच ॥ माशोकंकुरुधर्मज्ञदासोस्मितवसुव्रत ॥ आनयिष्याम्यहंनूनं
भार्यांतवमहामते॥४२॥ प्रेषितेचेन्मयादूतेनदास्यतिमदाकुलः ॥ ततोयुद्धंकरिष्यामिदेवसैन्यैः समावृतः ॥ ४३ ॥ इत्याश्वास्यगुरुंशक्रोदू
तवकुंविचक्षणम् ॥ प्रेषयामाससोमायवार्ताशंसिनमद्भुतम् ॥ ४४॥सगत्वाशशिलोकंतुत्वरितःसुविचक्षणः ॥ उवाचवचनेनैववचनंरोहिणी
पतिम्॥४५॥प्रेषितोहंमहाभागशक्रेणत्वांविवक्षया॥कथितंप्रभुणायच्चतद्ब्रवीमिमहामते ॥ ४६ ॥ धर्मज्ञोसिमहाभागनीतिंजानासिसुव्रत ॥
अत्रिःपितातंधर्मात्मानर्निद्यंकर्तुमर्हसि ॥ ४७ ॥ भार्यारक्ष्यासर्वभूतैर्यथाशक्तिह्यतंद्रितैः॥ तदर्थेकलहःकामंभवितानात्रसंशयः ॥४८॥ यथा
तवतथातस्ययत्नःस्याद्दाररक्षणे ॥ आत्मवत्सर्वभूतानिचिंतयत्वंसुधानिधे ॥ ४९ ॥ अष्टाविंशतिसंख्यास्तेकामिन्योदक्षजाःशुभाः ॥ गुरुपत्नीं
कथंभोक्तुंत्वमिच्छसिसुधानिधे ॥ ५० ॥ स्वर्गेसदावसंत्येतामेनकाद्यामनोरमाः ॥ भुंक्ष्वताःस्वेच्छयाकामंमुंचपत्नींगुरोरपि ॥५१॥ ईश्वराय
दिकुर्वंतिजुगुप्सितमहंतया ॥ अज्ञास्तदनुवर्ततेतदाधर्मक्षयोभवेत् ॥ ५२ ॥ तस्मान्मुंचमहाभागगुरोःपत्नींमनोरमाम् ॥ कलहस्त्वन्निमित्तोद्य
सुराणांनभवेद्यथा ॥५३॥ सूतउवाच॥सोमःशक्रवचःश्रुत्वाकिंचित्क्रोधसमाकुलः ॥ भंग्याप्रतिवचःप्राहशक्रदूतंतदाशशी ॥५४॥ इंदुरुवाच॥
धर्मज्ञोसिमहाबाहोदेवानामधिपःस्वयम् ॥ पुरोधापिचतेतादृग्युवयोःसदृशीमतिः ॥ ५५ ॥

होवाक्चर्चा ॥ ४८ ॥ यथातवेति ॥ यथातवदाररक्षणेस्त्रीरक्षणेयत्नस्तथैवतस्यगुरोःस्यादित्यर्थः ॥ ४९ ॥ ५० ॥ ५१ ॥ जुगुप्सितमहंतयेति ॥ अहंकारेणेत्यर्थः ॥ ५२ ॥ ५३ ॥
भंग्यास्तुतिनिंदाफलकाधिकार्थवादरूपया ॥ ५४ ॥ ५५ ॥

परोपदेशेकुशलाइति ॥ स्वस्मिन्नहल्याजारत्वंकथंनजानासीत्यर्थः ॥ ५६ ॥ बार्हस्पत्यप्रणीतमिति ॥ तस्मिञ्छास्त्रेस्त्रियंकामयानांभजन्नदुष्यतीत्युक्तंततोममकोविरोधः ॥ ५७ ॥ स्वकीयमितिबलिनांप्रबलानांसर्वंकृताकृतरूपंस्वकीयमेवेस्वनकृतमुत्तममेवभवति ॥ दुर्बलानांतुकृतमपिनोत्तमंभवतीतिलोकरीतिरियंदर्शिता ॥ किंचममभार्यांदेहीतिवदन्बृहस्पतिः कथंनलज्जते तस्याः मय्यनुरक्तत्वेनमदीयत्वादित्याह । स्वीयाचेति ॥ यद्वा प्रबलानांसर्ववस्तुस्वकीयमेवभवतिपरस्यवस्तुनोहरणेसामर्थ्यात् । दुर्बलानांतुमकिंचन । स्वकीयमपिपरकीयंभवतीत्यर्थः ॥ तथाचममप्रबलत्वान्ममैवसावर्ततइतिभावः ॥ ज्ञानदृष्टिमवलंब्यवदति । स्वीयाचेति ॥ ज्ञानिनस्तुममसर्वस्वकीयमेवभवतीतिभावः ॥ ५८ ॥

परोपदेशेकुशलाभवंतिबहवोजनाः।दुर्लभस्तुस्वयंकर्ताप्राप्तेकर्मणिसर्वदा॥५६॥बार्हस्पत्यप्रणीतंचशास्त्रंगृह्णंतिमानवाः॥कोविरोधोत्रदेवेशकामयानांभजन्स्त्रियम्॥५७॥स्वकीयंबलिनांसर्वंदुर्बलानांनकिंचन।स्वीयाचपरकीयाचभ्रमोयंमंदचेतसाम्॥५८॥तारामय्यनुरक्ताचयथानतुतथागुरौ॥अनुरक्ताकथंत्याज्याधर्मतोन्यायतस्तथा॥५९॥गृहारंभस्तुरक्तायांविरक्तायांकथंभवेत्॥विरक्तेयंतदाजाताचकमेऽनुजकामिनीम्॥६०॥नदास्येहंवरारोहांगच्छदूतवदस्वयम्॥ईश्वरोसिसहस्राक्षयदिच्छसिकुरुष्वतत्॥६१॥सूतउवाच॥ इत्युक्तःशशिनादूतःप्रययौशक्रसन्निधिम्॥इंद्रायाऽऽचष्टतत्सर्वंयदुक्तंशीतरश्मिना॥६२॥तुराषाडपितच्छ्रुत्वाक्रोधयुक्तोबभूवह॥सेनोद्योगंतथाचक्रेसाहाय्यार्थंगुरोर्विभुः॥६३॥ शुक्रस्तुविग्रहंश्रुत्वागुरुद्वेषात्ततोययौ॥माददस्वेतितंवाक्यमुवाचशशिनंप्रति॥६४॥साहाय्यंतेकरिष्यामिमंत्रशक्त्यामहामते ॥ भवितायदिसंग्रामस्तवचेंद्रेणमारिष॥६५॥शंकरस्तुतदाकर्ण्यगुरुदाराभिमर्शनम् ॥ गुरुशत्रुंभृगुंमत्वासाहाय्यमकरोत्तदा॥६६॥ संग्रामस्तुतदावृत्तोदेवदानवयोर्द्भुतम्॥बहूनितत्रवर्षाणितारकासुरवत्किल॥६७॥देवासुरकृतंयुद्धंदृष्ट्वातत्रपितामहः ॥ हंसारूढोजगामाशुतंदेशंक्लेशशांतये॥६८॥ राकापतिंतदाप्राहमुंचभार्यांगुरोरिति॥नोचेद्विष्णुंसमाहूयकरिष्यामितुसंक्षयम्॥६९॥भृगुंनिवारयामासब्रह्मालोकपितामहः॥किमन्यायमतिर्जातासंगदोषान्महामते ॥ ॥७०॥निषेधयामासततोभृगुस्तंचौषधीपतिम्॥मुंचभार्यांगुरोरद्यपित्राऽहंप्रेषितस्तव॥७१॥सूतउवाच ॥ द्विजराजस्तुतच्छ्रुत्वाभृगोर्वचनमद्भुतम्॥ददौचतत्प्रियांभार्यांगुरोर्गर्भवतींशुभाम्॥७२॥प्राप्यकांतांगुरुर्हृष्टःस्वगृहंमुदितोययौ॥ततोदेवास्ततोदैत्याययुःस्वान्स्वान्गृहान्प्रति॥७३॥

॥ ५९ ॥ चकमेऽनुजकामिनीमिति ॥ यदानुजकामिनीकनिष्ठबंधुकामिनींसंवर्तभार्यांबृहस्पतिश्चकमेतदाप्रभृतीयंविरक्ताजातेतिकथापाद्मेप्रसिद्धा ॥ यद्वाऽनुजेतिप्रथमांतंलुप्तविभक्तिकम् ॥ तथा चाऽनुजःसन्कनिष्ठबंधुः सन्नपिबृहस्पतिः कामिनींज्येष्ठबंधोरुतथ्यस्यकामिनींममताभिधांचकमेभुक्तवानित्यर्थः ॥ तदाप्रभृतिविरक्ताजातेतिकथामहाभारतेप्रसिद्धा ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ साहाय्यंमंत्रादिभिर्बृहस्पतेः शंकरोऽकरोदित्यर्थः ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ किमन्यायमतिर्जातेति ॥ तवेतिशेषः ॥ ७० ॥ ओषधीपतिंचंद्रम् ॥ पित्राहंप्रेषितस्तवेति ॥ तवपित्राऽत्रिणेत्यर्थः ॥ ७१ ॥ ७२ ॥ ७३ ॥

॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ इति श्रीदेवीभागवततिलकेप्रथमस्कंधेएकादशोऽध्यायः ॥ ११ ॥ त्रिपंचाशत्पद्यवर्यैरुत्पन्नस्तुपुरूरवाः ॥ देवीप्रसादान्मुक्ताभूदिलेत्येवंहिकथ्यते ॥ १ ॥ ऋषिभिःपुरूरवसोवृत्तांतप्रश्नेकृतेकोसौपुरुरवाइत्याकांक्षानिवृत्त्यर्थंसोमवंशोद्भवराज्ञांकथास्मिन्पुराणेक्वचिदपि अवश्यंवक्तव्येतिपुरूरवसःप्रसंगेनवक्तव्यापिसोमाद्बुधोत्पत्तिरुक्ता ॥ ततःपुरूरवसउत्पत्तिमाह॥ततःपुरूरवाइति ॥ ततोबुधोत्पत्त्यनंतरंपुरुरवाइलायांकामिन्यांजज्ञेप्रादुर्भूतः

ब्रह्मास्वसदनंप्राप्तःकैलासंचापिशंकरः ॥ बृहस्पतिस्तुसंतुष्टःप्राप्यभार्यांमनोरमाम् ॥ ७४ ॥ ततःकालेनकियतातारासूतसुतंशुभम् ॥ सुदिनेशुभनक्षत्रेतारापतिसमंगुणैः ॥ ७५ ॥ दृष्ट्वापुत्रंगुरुर्जातंचकारविधिपूर्वकम् ॥ जातकर्मादिकंसर्वंप्रहृष्टेनांतरात्मना ॥ ७६ ॥ श्रुतंचंद्रमसाजन्मपुत्रस्यमुनिसत्तमाः ॥ दूतंचप्रेषयामासगुरुंप्रतिमहामतिः॥७७॥ नचायंतवपुत्रोस्तिममवीर्यसमुद्भवः ॥ कथंत्वंकृतवान्कामंजातकर्मादिकंविधिम् ॥ ७८ ॥ तच्छ्रुत्वावचनंतस्यदूतस्यचबृहस्पतिः ॥ उवाचममपुत्रोमेसदृशोनात्रसंशयः ॥ ७९ ॥ पुनर्विवादःसंजातोमिलितादेवदानवाः ॥ युद्धार्थमागतास्तेषांसमाजःसमजायत ॥ ८० ॥ तत्राऽऽगतःस्वयंब्रह्माशांतिकामःप्रजापतिः ॥ निवारयामाससुखेसंस्थितान्युद्धदुर्मदान् ॥ ८१ ॥ तारांपप्रच्छधर्मात्माकस्यायंतनयःशुभे ॥ सत्यंवद वरारोहेयथाक्लेशःप्रशाम्यति ॥ ८२ ॥ तमुवाचाऽसितापांगीलज्जमानाप्यधोमुखी ॥ चंद्रस्येतिशनैरंतर्जगामवरवर्णिनी ॥ ८३ ॥ जग्राहतंसुतंसोमःप्रहृष्टेनांतरात्मना ॥ नामचक्रेबुधइतिजगामस्वगृहंपुनः ॥ ॥ ८४ ॥ ययौब्रह्मास्वकंधामसर्वेदेवाःसवासवाः ॥ यथागतंगतंसर्वैःसर्वशःप्रेक्षकैर्जनैः ॥ ८५ ॥ कथितेयंबुधोत्पत्तिर्गुरुक्षेत्रेचसोमतः ॥ यथाश्रुतामयापूर्वंव्यासात्सत्यवतीसुतात् ॥ ८६ ॥ इति श्रीदेवीभागवतेमहापुराणेप्रथमस्कंधेबुधोत्पत्तिर्नामैकादशोध्यायः ॥ ११ ॥

सूतउवाच ॥ ततःपुरूरवाजज्ञेइलायांकथयामिवः ॥ बुधपुत्रोऽतिधर्मात्मायज्ञकृद्दानतत्परः ॥ १ ॥ सुद्युम्नोनामभूपालःसत्यवादीजितेंद्रियः॥ सैंधवंहयमारुह्यचचारमृगयांवने ॥ २ ॥ युतःकतिपयामात्यैर्दंशितश्चारुकुंडलः ॥ धनुराजगवंबद्धाबाणसंघंतथाऽद्भुतम् ॥ ३ ॥ सभ्रमंस्तद्वनोद्देशेहन्यमानोरुरून्मृगान् ॥ शशांश्चसूकरांश्चैवखड्गांश्चगवयांस्तथा ॥४॥ शारभान्महिषांश्चैवसामरान्वनकुक्कुटान्॥निघ्नन्मेध्यान्पशून्प्राज्ञाकुमारवनमाविशत् ॥ ५॥ मेरोरधस्तलेदिव्यंमंदारद्रुमराजितम्॥अशोकलतिकाकीर्णंबकुलैरधिवासितम्॥६॥सालैस्तालैस्तमालैश्चचंपकैःपनसैस्तथा ॥ आम्रैर्नीपैर्मधूकैश्चमाधवीमंडपावृतम्॥७॥दाडिमैर्नारिकेलैश्चकदलीखंडमंडितम् ॥ यूथिकामालतीकुंदपुष्पवल्लीसमावृतम्॥८॥

बुधपुत्रोबुधादिलायामुत्पन्न इत्यर्थः ॥ १ ॥ कासाविलेत्याकांक्षायांतदुत्पत्तिकथयति सुद्युम्नोनामेति ॥ अयं सुद्युम्नोवैवस्वतमनोःपुत्रइतिविष्णुभागवते ॥ सैंधवंसिंधुदेशोद्भवम् ॥२॥ ॥ ३ ॥ ४ ॥ मेध्यान् यज्ञियान् ॥ ५ ॥ ६ ॥ माधवीवासंती ॥ वासंतीमाधवीलतेतिवचनात् ॥ ७ ॥ ८ ॥

तमदृष्ट्वामहामुनिम् ॥ आमंत्र्यतांप्रियेचेतिरेवतींपृष्टवान्नृपः॥४१॥ राजोवाच ॥ महर्षिर्भगवानस्मादाश्रमात्क्वगतःप्रिये ॥ तत्पादौद्रष्टुमिच्छामिव
दकल्याणितत्त्वतः ॥ ४२ ॥ कन्योवाच ॥ अग्निशालामुपगतोमहाराजमहामुनिः ॥ निश्चक्रामाश्रमात्तूर्णंराजाप्याकर्ण्यतद्वचः ॥ ४३ ॥ अथा
ग्निशालाद्वारस्थंराजानंदुर्दमंमुनिः ॥ राजलक्षणसंयुक्तमपश्यत्प्रश्रयानतम् ॥४४॥ प्रणनामचतंराजामुनिःशिष्यमुवाचह ॥ गौतमानीयतामर्घ्यम
र्घ्ययोग्योस्तिभूपतिः ॥ ४५ ॥ आगतश्चिरकालेनजामातेतिविशेषतः ॥ इत्युक्त्वार्घ्यंददौतस्मैसोपिजग्राहचिन्तयन् ॥ ४६ ॥ मुनिरासनमासी
नंगृहीतार्घ्यंचभूपतिम् ॥ आशीर्भिरभिनंद्याथकुशलंचाप्यपृच्छत ॥४७॥ अयितेऽनामयंराजन्बलेकोशेसुहृत्सुच ॥ भृत्येऽमात्येपुरेदेशेतथात्मनि
जनाधिप ॥ ४८ ॥ भार्यास्तितेकुशलिनीयतःसात्रैवतिष्ठति ॥ अतोनपृच्छाम्यस्यास्तेचान्यासांकुशलंवद ॥ ४९ ॥ राजोवाच ॥ भगवंस्त्वत्प्र
सादेनसर्वत्रानामयंमम ॥ एतत्कुतूहलंब्रह्मन्मद्भार्याकात्रविद्यते ॥ ५० ॥ ऋषिरुवाच ॥ रेवतीनामतेभार्यारूपेणाप्रतिमाभुवि ॥ विद्यतेऽत्रकथंप
त्नींतांनवेत्सिमहीपते ॥ ५१ ॥ राजोवाच ॥ सुभद्राद्यास्तुयाभार्याममसन्तिगृहेविभो ॥ जानामितास्तुभगवन्नैवजानामिरेवतीम् ॥ ५२ ॥ ऋषि
रुवाच ॥ प्रियेतिसांप्रतंराजंस्त्वयोक्तायामहामते ॥ साविस्मृताक्षणादेवयातेश्लाघ्यतमाप्रिया ॥ ५३ ॥ राजोवाच ॥ त्वयोक्तंयन्मृषातन्नोतथैवामं
त्रितामया ॥ मुनेदुष्टोनमेभावःकोपंमाकर्तुमर्हसि ॥ ५४ ॥ ऋषिरुवाच ॥ राजन्नुक्तंत्वयासत्यंनभावोदूषितस्तव ॥ वह्निनाप्रेरितेनेत्थंभवताऽव्या
हृतंवचः ॥ ५५ ॥ अद्यपृष्टोमयावह्निःकोऽस्याभर्त्ताभविष्यति ॥ तेनोक्तंदुर्दमोराजाभवितास्याःपतिर्ध्रुवम् ॥ ५६ ॥ तदादत्स्वमयादत्तामिमांक
न्यांमहीपते ॥ प्रियेत्यामंत्रितापूर्वंमाविचारंकुरुष्वभोः ॥ ५७ ॥ श्रुत्वैतत्सोऽभवत्तूष्णींचिंतयन्मुनिभाषितम् ॥ वैवाहिकंविधितस्यमुनिःकर्तुंस
मुद्यतः ॥ ५८ ॥ अथोद्यतंविवाहायदृष्ट्वाकन्याब्रवीन्मुनिम् ॥ रेवत्यृक्षेविवाहोमेतातकर्तुंत्वमर्हसि ॥५९॥ ऋषिरुवाच ॥ वत्सेविवाहयोग्यानि
संत्यन्यर्क्षाणिभूरिशः ॥ रेवत्यांकथमुद्वाहःपौष्णभंनदिविस्थितम् ॥ ६० ॥ कन्योवाच ॥ रेवत्यृक्षंविनाकालोममोद्वाहोचितोनहि ॥ अतःसंप्रा
र्थयाम्येतद्विवाहंपौष्णभेकुरु ॥ ६१ ॥ ऋषिरुवाच ॥ ऋतवाङ्मुनिनापूर्वंरेवतीभंनिपातितम् ॥ भान्तरेचेन्नतेप्रीतिर्विवाहःस्यात्कथंतव ॥ ६२ ॥
कन्योवाच ॥ तपः किंतत्तवानेकऋतवागेवकेवलम् ॥ भवताकिंतपोनेदृक्तत्तवाक्कायमानसैः ॥ ६३ ॥ जगत्स्रष्टुंसमर्थस्त्वंवेद्म्यहंतेतपोबलम् ॥
रेवत्यृक्षंदिविस्थाप्यममोद्वाहंपितःकुरु॥६४॥ऋषिरुवाच ॥ एवंभवतुभद्रंतेयथैवत्वंब्रवीषिमाम्॥त्वत्कृतेसोममार्गेहंस्थापयाम्यद्यपौष्णभम्॥६५॥
स्कन्दउवाच ॥ एवमुक्त्वामुनिस्तूर्णंपौष्णभंस्वतपोबलात् ॥ यथापूर्वंतथाचक्रेसोममार्गेघटोद्भवः ॥ ६६॥ रेवतीनाम्निनक्षत्रेविवाहविधिनामुनिः

रेवतींप्रददौराज्ञेदुर्द्दमायमहात्मने॥६७॥कृत्वाविवाहंकन्यायामुनीराजानमब्रवीत्॥किंतेऽभिलषितंवीरवदतत्पूरयाम्यहम्॥६८॥राजोवाच॥ मनोः
स्वायंभुवस्याहंवंशजातोस्मिहेमुने॥मन्वंतराधिपंपुत्रंत्वत्प्रसादाच्चकामये ॥६९॥ मुनिरुवाच ॥ यद्येषाकामनातेस्तिदेव्याआराधनंकुरु॥भविष्य
त्येवतेपुत्रोमनुर्मन्वंतराधिपः॥७०॥देवीभागवतंनामपुराणंयत्तुपंचमम्॥पंचकृत्वस्तुतच्छ्रुत्वालप्स्यसेभिमतंसुतम्॥७१॥ रेवत्यांरैवतोनामपंचमोभ
वितामनुः॥वेदविच्छास्त्रतत्त्वज्ञोधर्मवानपराजितः॥७२॥इत्युक्तोमुनिनाराजाप्रणम्यमुदितोमुनिम्॥भार्ययासहमेधावीजगामनगरंनिजम् ॥७३ ॥
पितृपैतामहंराज्यंचकारसमहामतिः॥ पालयामासधर्मात्माप्रजाःपुत्रानिवौरसान् ॥७४॥ एकदालोमशोनाममहात्मामुनिरागतः ॥ प्रणिपत्यतम
भ्यर्च्यप्रांजलिश्चाब्रवीन्नृपः॥७५॥ राजोवाच॥भगवंस्त्वत्प्रसादेनश्रोतुमिच्छामिभोमुने॥देवीभागवतंनामपुराणंपुत्रलिप्सया॥७६॥ श्रुत्वावाचंप्र
जाभर्तुःप्रीतःप्रोवाचलोमशः॥धन्योसिराजंस्तेभक्तिर्जातात्रैलोक्यमातरि ॥७७॥ सुरासुरनराराध्यायापराजगदम्बिका॥तस्यांचेद्भक्तिरुत्पन्नाकार्य
सिद्धिर्भविष्यति॥७८॥अतस्त्वांश्रावयिष्यामिश्रीमद्भागवतंनृप ॥ यस्यश्रवणमात्रेणनकिंचिदपिदुर्लभम् ॥७९॥ इत्युक्त्वासुदिनेब्रह्मन्कथारंभम
थाकरोत्॥पंचकृत्वस्सशुश्रावविधिवद्भार्ययासह॥८०॥समाप्तिदिवसेराजापुराणंचमुनिंतथा॥पूजयामासधर्मात्मामुदापरमयायुतः॥८१॥ हुत्वान
वार्णमंत्रेणभोजयित्वाकुमारिकाः॥वाडवांश्चसपत्नीकान्दक्षिणाभिरतोषयत्॥८२॥अथकालेनकियताभगवत्याःप्रसादतः॥ गर्भंन्दधारसाराज्ञीलो
ककल्याणकारकम्॥८३॥पुण्येथसमयेप्राप्तेग्रहैःसुस्थानसंगतैः॥सर्वमंगलसंपन्नेरेवतीसुषुवेसुतम्॥८४॥श्रुत्वापुत्रस्यजननंस्नात्वाराजामुदान्वितः॥
ससुवर्णांभसाचक्रेजातकर्म्मादिकाःक्रियाः ॥८५॥ यथाविधिचदानानिदत्त्वाविप्रानतोषयत् ॥ कृतोपनयनंराजासांगान्वेदानपाठयत्॥८६॥सर्व
विद्यानिधिर्जातोधर्मिष्ठोस्त्रविदांवरः ॥ धर्मस्यवक्ताकर्त्ताचरैवतोनामवीर्यवान् ॥ ८७ ॥ नियुक्तवानथब्रह्मारैवतंमानवेपदे ॥ मन्वंतराधिपःश्रीमा
न्गांशशाससधर्मतः ॥८८॥ इत्थंदेव्याःप्रभावोयंसंक्षेपेणोपवर्णितः ॥ पुराणस्यचमाहात्म्यंकोवक्तुंविस्तरात्क्षमः ॥ ८९ ॥ सूतउवाच ॥ कुंभयो
निस्तुमाहात्म्यंविधिंभागवतस्यच॥ श्रुत्वाकुमारंचाभ्यर्च्यस्वाश्रमंपुनराययौ॥९०॥इदंमयाभागवतस्यविप्रामाहात्म्यमुक्तंभवतांसमक्षम्॥शृणोति
भक्त्यापठतीहभोगान्भुक्त्वाखिलान्मुक्तिमुपैतिचांते ॥९१॥ इति श्रीस्कंदपुराणेमानसखण्डे श्रीदेवीभागवतमाहात्म्ये चतुर्थोध्यायः॥४॥ ऋषय
ऊचुः॥ सूतसूतमहाभागश्रुतंमाहात्म्यमुत्तमम्॥अधुनाश्रोतुमिच्छामःपुराणश्रवणेविधिम्॥१॥सूतउवाच ॥ श्रूयतांमुनयस्सर्वेपुराणश्रवणेविधिम्॥
नराणांशृण्वतांयेनसिद्धिःस्यात्सार्वकामिकी॥२॥ आदौदैवज्ञमाहूयमुहूर्त्तंकल्पयेत्सुधीः॥आरभ्यशुचिमासंतुमासषट्कंशुभावहम् ॥३॥ हस्ताश्वि
मूलपुष्यर्क्षेब्रह्ममैत्रेन्दुवैष्णवे॥ सत्तिथौशुभवारेचपुराणश्रवणंशुभम् ॥४॥ गुरुभाद्रेद४वेदा४ब्ज१शरां५गा६ब्धि४ गुणः३क्रमात् ॥ धर्मात्तिरिंदिरा

प्रातिःकथासिद्धिःपरंसुखम् ॥ ५ ॥ पीडाथभूपतिभयंज्ञानप्रप्तिःक्रमात्फलम् ॥ पुराणश्रवणेचक्रंशोधयेच्छिवभाषितम् ॥ ६ ॥ अथवाप्रीतये
देव्यानवरात्रचतुष्टये ॥ शृणुयादन्यमासेपितिथिवारर्क्षशोधिते ॥ ७ ॥ संभारंयादृशंकार्यंविवाहादौचतादृशम् ॥ नवाहयज्ञेचाप्यस्मिन्विधेयंय
त्नतोबुधैः ॥ ८ ॥ सहायाबहवःकार्यादंभलोभविवर्जिताः ॥ चतुराश्चवदान्याश्चदेवीभक्तिपरानराः ॥ ९ ॥ प्रेष्यायत्नेनवार्त्तेयंदेशेदेशेजनेजने ॥
आगन्तव्यमिहावश्यंकथादेव्याभविष्यति ॥ १० ॥ सौराश्चगाणपत्याश्चशैवाश्शाक्ताश्चवैष्णवाः ॥ सर्वेषामपिसेव्येयंयतोदेवास्सशक्तयः ॥ ११ ॥
श्रीमद्देवीभागवतपीयूषरसलोलुपैः ॥ आगंतव्यंविशेषेणकथार्थंप्रेमतत्परैः ॥ १२ ॥ ब्राह्मणाद्याश्चयेवर्णाःस्त्रियश्चाश्रमिणस्तथा ॥ सकामाश्चापि
निष्कामाःपातव्यंतैःकथामृतम् ॥ १३ ॥ नावकाशःकदाचित्स्यान्नवाहश्रवणेपितैः ॥ आगंतव्यंयथाकालंयज्ञेपुण्याक्षणस्थितिः ॥ १४ ॥ विनये
नैवकर्त्तव्यमेवमाकारणंनृणाम् ॥ आगतानांचकर्त्तव्यंवासस्थानंयथोचितम् ॥ १५ ॥ कथास्थानंप्रकर्त्तव्यंभूमौमार्जनपूर्वकम् ॥ लेपनंगोमये
नाथविशालायांमनोरमम् ॥ १६ ॥ कार्यस्तुमण्डपोरम्योरंभास्तंभोपशोभितः ॥ वितानमुपरिष्टात्तुपताकाध्वजराजितः ॥ १७ ॥
वक्तुश्चैवासनंदिव्यंसुखास्तरणसंयुतम् ॥ रचितव्यंप्रयत्नेनप्राङ्मुखंवाप्युदङ्मुखम् ॥ १८ ॥ यथोचितानिकुर्वीतश्रोतॄणामासनानिच ॥ नृणां
चैवाथनारीणांकथाश्रवणहेतवे ॥ १९ ॥ वाग्ग्मीदांतश्चशास्त्रज्ञोदेव्याराधनतत्परः ॥ दयालुर्निस्पृहोदक्षोधीरोवक्तोत्तमोमतः ॥ २० ॥ ब्रह्मण्योदे
वताभक्तःकथारसपरायणः ॥ उदारोऽलोलुपोनम्रःश्रोताहिंसादिवर्जितः ॥ २१ ॥ पाखण्डनिरतोलुब्धःस्त्रैणोधर्मध्वजस्तथा ॥ निष्ठुरःक्रोधनो
वक्तादेवीयज्ञेनशस्यते ॥ २२ ॥ संशयच्छेदनायैकःपण्डितश्चतथागुणः ॥ श्रोतृबोधकृदव्यग्रःकार्य्योवक्तुस्सहायकृत् ॥ २३ ॥ मुहूर्त्तदिवसा
दर्वाग्वक्तृश्रोतादिभिर्जनैः ॥ कर्त्तव्यंक्षौरकर्मादिततोनियमकल्पनम् ॥ २४ ॥ अरुणोदयवेलायांस्नायाच्छौचंविधायच ॥ संध्यांतर्पणकार्यंचनित्यं
संक्षेपतश्चरेत् ॥ २५ ॥ कथाश्रवणयोग्यत्वसिद्धयेगाश्चदापयेत् ॥ समस्तविघ्नहर्तारमादौगणपतिंयजेत् ॥ २६ ॥ कलशांश्चापिसंस्थाप्यपूजयेत्तत्रदि
ग्धवान् ॥ बटुकंक्षेत्रपालंचयोगिनीर्मातृकास्तथा ॥ २७ ॥ तुलसींचापिसंपूज्यग्रहान्विष्णुंचशंकरम् ॥ नवाक्षरेणमनुनापूजयेज्जगदम्बिकाम् ॥ २८ ॥
सर्वोपचारैस्संपूज्यश्रीभागवतपुस्तकम् ॥ श्रीदेव्यावाङ्मयींमूर्तिंयथावच्छोभनाक्षरम् ॥ २९ ॥ कथाविघ्नोपशांत्यर्थंवृणुयात्पंचवाडवान् ॥ जाप्यो
नवार्णमंत्रस्तैःपाठ्यस्सप्तशतीस्तवः ॥ ३० ॥ प्रदक्षिणनमस्कारान्कृत्वांतेस्तुतिमाचरेत् ॥ कात्यायनिमहामायेभवानिभुवनेश्वरि ॥ ३१ ॥
संसारसागरेमग्नंमामुद्धरकृपामये ॥ ब्रह्मविष्णुशिवाराध्येप्रसीदजगदंबिके ॥ ३२ ॥ मनोभिलषितंदेविवरंदेहिनमोस्तुते ॥ इतिसंप्राथ्यर्यशृणुया

२

त्कथांनियतमानसः ॥ ३३ ॥ वक्तारंचापिसंपूज्यव्यासबुद्ध्यायतात्मवान् ॥ माल्यालंकारवस्त्राद्यैस्संभूष्यप्रार्थयेच्चतम् ॥ ३४ ॥ सर्वशास्त्रे
तिहासज्ञव्यासरूपनमोस्तुते ॥ कथाचंद्रोदयेनांतस्तमस्तोमंनिराकुरु ॥ ३५ ॥ तदग्रेतुनवाहान्तंकर्त्तव्यानियमास्तदा ॥ विप्रादीनुपवेश्यादौ
संपूज्योपविशेत्स्वयम् ॥ ३६ ॥ श्रोतव्यंसावधानेनचतुर्वर्गफलाप्तये ॥ गृहपुत्रकलत्राप्तधनचिंतामपास्यच ॥ ३७ ॥ सूर्योदयंसमारभ्यकिंचि
त्सूर्येऽवशेषिते ॥ मुहूर्त्तमात्रेविश्राम्यमध्याह्नेवाचयेत्सुधीः [॥ ३८ ॥ मलमूत्रजयायैषांलघुभोजनमिष्यते ॥ हविष्यान्नंवरंभोज्यंसकृदे
वकथार्थिना ॥ ३९ ॥ अथवास्यात्फलाहारीपयोभुग्वाघृताशनः ॥ यथास्यान्नकथाविघ्नस्तथाकार्यंविचक्षणैः ॥ ४० ॥ कथाश्रवणनिष्ठानां
वक्ष्यामिनियमंद्विजाः ॥ ब्रह्मविष्णुमहेशानांमध्येयेभेददर्शिनः ॥ ४१ ॥ देवीभक्तिविहीनायेपाखण्डाहिंसकाःखलाः ॥ विप्रद्रुहोनास्तिकायेनते
योग्याःकथाश्रवे ॥ ४२ ॥ ब्रह्मस्वहरणेलुब्धाःपरदारधनेषुच ॥ देवस्वहरणेतेषांनाधिकारःकथाश्रवे ॥ ४३ ॥ ब्रह्मचारीचभूशायीसत्यवक्ताजितेंद्रि
यः ॥ कथासमाप्तौभुंजीतपत्रावल्यांयतात्मवान् ॥ ४४ ॥ वृंताकंचकलिन्दंचद्विदतैलंचलंमधु ॥ दग्धमन्नंपर्युषितंभावदुष्टंत्यजेद्व्रती ॥ ४५ ॥
आमिषंचमसूरान्नमुदक्यादृष्टमेवच ॥ रसोनंमूलकंहिंगुंपलांडुंगृंजनंतथा ॥ ४६ ॥ कूष्मांडंनलिकाशाकंनभुंजीतकथाव्रती ॥ कामंक्रोधंमदंलोभं
दंभंमानंचवर्जयेत् ॥ ४७ ॥ विप्रध्रुक्पतितव्रात्यश्वपाकयवनांत्यजैः ॥ उदक्ययावेदबाह्यैर्नवदेद्यःकथाव्रती ॥ ४८ ॥ वेदगोगुरुविप्राणांस्त्रीराज्ञां
महतांतथा ॥ देवानांदेवभक्तानांनिंदांशृणुयादपि ॥ ४९ ॥ विनयंचार्जवंशौचंदयांचमितभाषणम् ॥ उदारंमानसंचैवकुर्याद्यस्तुकथाव्रती॥५०॥
श्वित्रीकुष्ठीक्षयीरुग्णोभाग्यहीनश्चपापकृत् ॥ दरिद्रश्चानपत्यश्चभक्त्येमांशृणुयात्कथाम् ॥ ५१ ॥ वंध्यावाकाकवंध्यावादुर्भगावामृतार्भका ॥
पतद्गर्भागनार्याचताभिःश्राव्यातथाकथा ॥ ५२ ॥ धर्मार्थकाममोक्षांश्चयोवांछतिविनाश्रमम् ॥ भगवत्याभागवतंश्रोतव्यंतेनयत्नतः ॥ ५३ ॥
कथादिनानिचैतानिनवयज्ञैःसमानिहि ॥ तेषुदत्तंहुतंजप्तमनन्तफलदंभवेत् ॥ ५४ ॥ एवंव्रतंनवाहंतुकृत्वोद्यापनमाचरेत् ॥ महाष्टमीव्रतंयद्व
त्तथाकार्यंफलेप्सुभिः ॥ ५५ ॥ निष्कामाःश्रवणेनैवपूतामुक्तिंव्रजन्तिहि ॥ भोगमोक्षप्रदानृणांयतोभगवतीपरा ॥ ५६ ॥ पुस्तकस्यचव
क्तुश्चपूजाकार्यातुनित्यशः ॥ वक्त्रादत्तंप्रसादंतुगृह्णीयाद्भक्तिपूर्वकम् ॥ ५७ ॥ कुमारीःपूजयेन्नित्यंभोजयेत्प्रार्थयेच्चयः ॥ सुवासिनीश्चविप्रांश्चतस्य
सिद्धिर्नसंशयः ॥ ५८ ॥ गायत्र्यानामसाहस्रंसमाप्तावथवापठेत् ॥ विष्णोर्नामसहस्रंचसर्वदोषोपशान्तये ॥ ५९ ॥ यस्यस्मृत्याचनामोक्त्या
तपोयज्ञक्रियादिषु ॥ न्यूनंसंपूर्णतांयातितस्माद्विष्णुंचकीर्तयेत् ॥ ६० ॥ देव्याःसप्तशतीमंत्रैःसमाप्तौहोममाचरेत् ॥ देवीमाहात्म्यमूलेननवार्ण

मनुनाथवा ॥ ६१ ॥ गायत्र्यात्वथवाहोमःपायसेनससर्पिषा ॥ यतोभागवतंत्वेतद्गायत्रीमयमीरितम् ॥ ६२ ॥ वाचकंतोषयेत्सम्यग्वस्त्रभूषाधना
दिभिः ॥ प्रसन्नेवाचकेसर्वाःप्रसन्नास्तस्यदेवताः ॥ ६३ ॥ ब्राह्मणान्भोजयेद्भक्त्यादक्षिणाभिश्चतोषयेत् ॥ पृथिव्यांदेवरूपास्तेतुष्टेष्वेष्वीप्सितं
फलम् ॥ ६४ ॥ सुवासिनीःकुमारीश्चदेवीभक्त्याचभोजयेत् ॥ ताभ्योपिदक्षिणांदत्त्वाप्रार्थयेत्सिद्धिमात्मनः ॥ ६५ ॥ दद्याद्दानानिचान्यानि
सुवर्णंगाःपयस्विनीः ॥ हयानिभान्मेदिनींचतस्यस्यादक्षयंफलम् ॥ ६६ ॥ देवीभागवतंचैतल्लिखितंशोभनाक्षरम् ॥ हेमसिंहासनेस्थाप्यपट्टव
स्त्रेणवेष्टितम् ॥ ६७ ॥ अष्टम्यांवानवम्यांचवाचकायार्चितायच ॥ दद्यात्सभोगान्भुक्त्वेहदुर्लभंमोक्षमाप्नुयात् ॥ ६८ ॥ दरिद्रोदुर्बलो
बालस्तरुणोजरठोपिवा ॥ पुराणवेत्तावंद्यःस्यात्पूज्योमान्यश्चसर्वदा ॥ ६९ ॥ सन्तिलोकस्यबहवोगुरवोगुणजन्मतः ॥ सर्वेषामपितेषां
चपुराणज्ञःपरोगुरुः ॥ ७० ॥ पौराणिकोब्राह्मणस्तुव्यासासनसमाश्रितः ॥ असमाप्तेप्रसंगेतुनमस्कुर्यान्नकस्यचित् ॥ ७१ ॥ पौराणिकींकथां
दिव्यांयेपिशृण्वंत्यभक्तितः ॥ तेषांपुण्यफलंनास्तिदुःखदारिद्र्यचभागिनाम् ॥ ७२ ॥ असंपूज्यपुराणंतुताम्बूलकुसुमादिभिः ॥ येशृण्वंतिकथांदे
व्यास्तेदरिद्राभवंतिहि ॥ ७३ ॥ कीर्त्यमानांकथांत्यक्त्वायेव्रजंत्यन्यतोनराः ॥ भोगान्तरेप्रणश्यंतितेषांदाराश्चसम्पदः ॥ ७४ ॥ येचतुंगासना
रूढाःकथांशृण्वंतिदांभिकाः ॥ तेवायसाभवंत्यत्रभुक्त्वानिरययातनाः ॥ ७५ ॥ येचाढ्यासनसंस्थाश्चयेवीरासनसंस्थिताः ॥ शृण्वंतिचकथां
दिव्यांतेस्युरर्जुनशाखिनः ॥ ७६ ॥ कथायांकीर्त्यमानायांयेवदंतिदुरुत्तरम् ॥ रासभास्तेभवंतीहकृकलासास्ततःपरम् ॥ ७७ ॥ निंदंतियेपुराण
ज्ञान्कथांवापापहारिणीम् ॥ तेतुजन्मशतंदुष्टाःशुनकाःस्युर्नसंशयः ॥ ७८ ॥ येशृण्वंतिकथांवक्तुःसमानासनसंस्थिताः ॥ गुरुतल्पसमंपापंलभंते
नरकालयाः ॥७९॥ येचाप्रणम्यशृण्वंतितेभवंतिविषद्रुमाः ॥ शयानायेपिशृण्वंतिभवंत्यजगराह्वयः ॥ ८० ॥ येकदाचनपौराणींनशृण्वंतिकथांन
राः ॥ तेघोरंनरकंभुक्त्वाभवन्तिवनसूकराः ॥८१॥ येकथांनानुमोदंतेविघ्नंकुर्वन्तियेशठाः ॥ कोट्यब्दंनिरयंभुक्त्वाभवन्तिग्रामसूकराः ॥ ८२ ॥
आसनंभाजनंद्रव्यंफलंवस्त्राणिकम्बलम् ॥ पुराणज्ञाययच्छन्तितेव्रजन्तिहरेःपदम् ॥ ८३ ॥ पुराणपुस्तकस्यापियेपट्टंवसनंनवम् ॥ प्रयच्छन्ति
शुभंसूत्रंतेनरास्सुखभागिनः ॥ ८४ ॥ पुराणानांतुसर्वेषांश्रवणाद्यत्फलंलभेत् ॥ तस्माच्छतगुणंपुण्यंदेवीभागवताल्लभेत् ॥ ८५ ॥ यथासरित्सुप्र
वरागंगादेवेषुशंकरः ॥ काव्येरामायणंयद्वज्ज्योतिष्मत्सुयथारविः ॥ ८६ ॥ आह्लादकानांचन्द्रश्चधनानांचयथायशः ॥ क्षमावतांयथाभूमिर्गां
भीर्येसागरोयथा ॥ ८७ ॥ मंत्राणांचैवसावित्रीपापनाशेहरिस्मृतिः ॥ अष्टादशपुराणानांदेवीभागवतंतथा ॥८८॥ येनकेनाप्युपायेननवकृत्वःशृ

णोतिचेत्॥नशक्यंतत्फलंवक्तुंजीवन्मुक्तस्सएवहि ॥८९॥ राजशत्रुभयेप्राप्तेमहामारीभयेतथा ॥ दुर्भिक्षेराष्ट्रभंगेचतच्छांत्यैशृणुयादिदम् ॥९० ॥ भूतप्रेतविनाशायराज्यलाभायशत्रुतः॥ पुत्रलाभायशृणुयाद्देवीभागवतंद्विजाः ॥ ९१ ॥ श्रीमद्भागवतंयस्तुपठेद्वाशृणुयादपि॥श्लोकार्द्धश्लोकपादंवासयातिपरमांगतिम् ॥ ९२ ॥ भगवत्याःस्वयंदेव्याःश्लोकार्द्धेनप्रकाशितम् ॥ शिष्यप्रशिष्यद्वारेणतदेवविपुलीकृतम् ॥ ९३ ॥ नगायत्र्याःपरोधर्मोनगायत्र्याःपरन्तपः ॥ नगायत्र्याःसमोदेवोनगायत्र्याःपरोमनुः ॥ ९४ ॥ गातारंत्रायतेयस्माद्गायत्रीतेनसोच्यते ॥ सात्रभागवतेदेवीसरहस्याप्रतिष्ठिता ॥ ९५ ॥ अतोभागवतस्यास्यदेव्याःप्रीतिकरस्यच ॥ महांत्यपिपुराणानिकलांनार्हन्तिषोडशीम् ॥ ९६ ॥ श्रीमद्भागवतंपुराणममलंयद्ब्राह्मणानांधनंधर्मोधर्मसुतेनयत्रगदितोनारायणेनामलः ॥ गायत्र्याश्चरहस्यमत्रचमणिद्वीपश्चसंवर्णितःश्रीदेव्याहिमभूभृतेभगवतीगीताचगीतास्वयम् ॥ ९७ ॥ तस्मान्नास्यपुराणस्यलोकेन्यत्सदृशम्परम् ॥ अतस्सदैवसंसेव्यंदेवीभागवतंद्विजाः ॥ ९८ ॥ यस्याःप्रभावमखिलंनहिवेदधातानोवाहरिर्नगिरिशोनहिचाप्यनन्तः ॥ अंशांशकाअपिचतेकिमुतान्यदेवास्तस्यैनमोस्तुसततंजगदम्बिकायै ॥ ९९ ॥ यत्पादपंकजरजस्समवाप्यविश्वंब्रह्मासृजत्यनुदिनंचबिभार्तिविष्णुः ॥ रुद्रश्चसंहरतिनेतरथासमर्थास्तस्यैनमोस्तुसततंजगदम्बिकायै ॥ १०० ॥ सुधाकूपारांतस्त्रिदशतरुवाटीविलसितेमणिद्वीपेचिन्तामणिमयगृहेचित्ररुचिरे ॥ विराजन्तीमम्बांपरशिवहृदिस्मेरवदनांनरोध्यात्वाभोगंभजतिखलुमोक्षंचलभते ॥ १०१ ॥ ब्रह्मेशाच्युतशक्राद्यैर्महर्षिभिरुपासिता ॥ जगतांश्रेयसेसास्तुमणिद्वीपाधिदेवता ॥ १०२ ॥ इति श्रीस्कन्दपुराणेमानसखण्डेदेवीभागवतमाहात्म्ये श्रवणविधिवर्णनंनामपञ्चमोऽध्यायः ॥ ५ ॥ समाप्तमिदंस्कान्दीयंमाहात्म्यम् ॥ वेदांगाग्निकुशैलशैलशिखिनांमूलेतुसंवत्सरेराधेमासिचमेचकेहरितिथौसप्तार्चिषोवासरे ॥ माहात्म्यंजगदम्बिकांघ्रियुगलंनत्वाम्बिकाप्रीतयेपूर्तिरामपदेननीतममलंस्कान्दीयमेतच्छुभम् ॥ १ ॥ श्रीभगवतीमणिद्वीपाधिदेवताजगदम्बिकाविजयते ॥ शुभमस्तु ॥



इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मजक्षेमराजेन स्वकीये "श्रीवेङ्कटेश्वर"
( स्टीम् ) मुद्रणालये मुद्रितम्। संवत् १९७५.

॥ अथ श्रीमद्देवीभागवते महापुराणे तृतीयस्कन्धः प्रारभ्यते ॥

श्रीगणेशायनमः ॥ ॥ पाशांकुशवराभीतिधरांदेवींचिदात्मिकाम् ॥ वंदेसमंदहसितांमणिद्वीपाधिवासिनीम् ॥१॥ पंचाशत्पद्यैकैरर्धश्लोकोनैर्भुवनेश्वरीम् ॥ सम्यक्पृष्टवतेराज्ञेनिर्णयः
सम्यगुच्यते ॥ २ ॥ सर्वैर्भगवत्येवाराध्यापूज्याचेतिव्यासवाक्यंश्रुत्वाजनमेजयःपृच्छति भगवन्निति ॥ यज्ञंयजनीयंपूज्यामित्यर्थः । अंबाभिधमंबासंज्ञकंतत्त्वमित्यर्थः । यत्त्वयाप्रोक्तं
तत्रकासाअंबाकिंस्वरूपाकथंकेनप्रकारेणोत्पन्ना कुत्रकस्मिन्देशेकालेवाउत्पन्ना कस्मात्कारणादुत्पन्ना किंगुणाकिंगुणवतीसाच ॥ १ ॥ तस्यादेव्यामखोयज्ञोयस्त्वयाप्रोक्तःसकीदृशस्तस्य
मखस्यस्वरूपंकीदृशंतथाविधानंचकीदृशं तत्सर्वंविधिवद्ब्रूहि यतस्त्वंसर्वज्ञोसि ॥२॥ यथोक्तंयादृशंपृष्टंमयातत्सर्वं त्वंवेत्सि ॥३॥४॥ ते किंस्वतंत्राआहोस्वित्परतंत्राइत्यपिपाराशर्य

श्रीगणेशाय नमः ॥ ॥ जनमेजयउवाच ॥ ॥ भगवन्भवताप्रोक्तंयज्ञमंबाभिधंमहत् ॥ साकाकथंसमुत्पन्नाकुत्रकस्माच्चकिंगुणा ॥ १ ॥ कीदृशश्चमखस्तस्याःस्वरूपंकीदृशंतथा ॥ विधानंविधिवद्ब्रूहिसर्वज्ञोसिदयानिधे ॥ २ ॥ ब्रह्माण्डस्यतथोत्पत्तिंवदविस्तरतस्तथा ॥ यथोक्तंयादृशंब्रह्मन्नखिलंवेत्सिभूसुर ॥ ३ ॥ ब्रह्माविष्णुश्चरुद्रश्चत्रयोदेवामयाश्रुताः ॥ सृष्टिपालनसंहारकारकाःसगुणास्त्वमी ॥ ४ ॥ स्वतंत्रास्तेमहात्मानःपाराशर्यवदस्वमे ॥ आहोस्वित्परतंत्राःस्तेश्रोतुमिच्छामिसांप्रतम् ॥ ५ ॥ मृत्युधर्माश्चतेनोवासच्चिदानंदरूपिणः ॥ अधिभूतादिभिर्युक्तानवादुःखैस्त्रिधात्मकैः ॥ ६ ॥ कालस्यवशगानोवातेसुरेंद्रा महाबलाः ॥ कथंतेवैसमुत्पन्नाःकस्मादितिचसंशयः ॥ ७ ॥ हर्षशोकयुतास्तेवैनिद्रालस्यसमन्विताः ॥ सप्तधातुमयास्तेषांदेहाःकिंवान्यथामुने ॥ ८ ॥ कैर्द्रव्यैर्निर्मितास्तेवैकैर्गुणैरिंद्रियैस्तथा ॥ भोगश्चकीदृशस्तेषांप्रमाणमायुषस्तथा ॥ ९ ॥ निवासस्थानमप्येषांविभूतिंचवदस्वमे ॥ श्रोतुमिच्छाम्यहंब्रह्मन्विस्तरेणकथामिमाम् ॥ १० ॥ व्यासउवाच ॥ दुर्गमःप्रश्नभारोयंकृतोराजंस्त्वयाऽधुना ॥ ब्रह्मादीनांसमुत्पत्तिःकस्मादितिमहामते ॥११॥ एतदेवमयापूर्वंपृष्टोऽसौनारदोमुनिः ॥ विस्मितःप्रत्युवाचेदमुत्थितःशृणुभूपते ॥ १२ ॥ कस्मिंश्चसमयेचाहंगंगातीरेस्थितंमुनिम् ॥ अपश्यंनारदंशांतंसर्वज्ञंवेदवित्तमम् ॥ १३ ॥ दृष्ट्वाऽहंमुदितोगत्वापादयोरपतंमुनेः ॥ तेनाज्ञप्तःसमीपेऽस्यसंविष्टश्चवरासने ॥ १४ ॥ श्रुत्वाकुशल वार्तांवैतमपृच्छंविधेःसुतम् ॥ निविष्टंजाह्नवीतीरेनिर्जनेसूक्ष्मवालुके ॥ १५ ॥

वद॥५॥मृत्युधर्मा जीवा वा आहोस्वित्सच्चिदानंदरूपिणस्ते ब्रह्मादयः ॥ तथाधिभौतिकाधिदैविकाध्यात्मिकैस्त्रिधात्मकैस्त्रिविधैर्दुःखैस्तेयुक्ताअथवानयुक्ताः॥६॥इतिचसंशयोस्तीतिशेषः ॥ ७ ॥ हर्षशोकयुतास्तेसंति किमन्यथावेतिपादत्रयेणसंबध्यते ॥ ८ ॥ कैर्द्रव्यैरिति ॥ तेषांदेहाःपांचभौतिकाउतन ॥ ९ ॥ १० ॥ ब्रह्मादीनामिति ॥ इदमुपलक्षणंजनमेजयेनकृतानांसर्वेषांप्रश्नानाम् ॥ ११ ॥ एतदेवेति ॥ ननुजनमेजयेनप्रश्नाअन्यविधाःकृताःव्यासस्यनारदंप्रतिप्रश्नास्त्वन्यविधाः संति तत्कथमुच्यते एतदेवमयेतिचेन्न ॥ एतदेवेत्यस्यैतत्सदृशमित्यर्थात् ॥ येत्वयाप्रश्नाःकृतास्तत्सदृशाएवप्रश्नामयानारदंप्रतिकृतास्तेषांप्रश्नानांप्रत्युत्तरंनारदोदत्तवांस्तेनैवत्वत्प्रश्नानांसमाधानंभविष्यति ॥ नत्वत्प्रश्नानांपृथक्प्रतिवचनंदेयंभवतीतिभावः ॥ अतएवजनमेजयेनकृतप्रश्नानांप्रत्येकंप्रतिवचनंव्यासोनदत्तवानितिबोध्यम् ॥ उत्थितआविर्भूतोमदग्रेप्रकटीभूतः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

॥ १६ ॥ १७ ॥ विरोधोयमिति ॥ कृतिजन्यत्वाभावेकार्यत्वमेवनस्यादितिविरोधः ॥ १८ ॥ १९ ॥ याविकल्पकोटीस्ताअहमुक्तवानित्याह ॥ ब्रुवंतिशंकरमिति ॥ २० ॥ २१ ॥

मुनेऽतिविततस्यास्यब्रह्मांडस्यमहामते ॥ कःकर्तापरमःप्रोक्तस्तन्मेब्रूहिविधानतः ॥ १६ ॥ कस्मादेतत्समुत्पन्नंब्रह्मांडंमुनिसत्तम ॥ अनित्यं वातथानित्यंतदाचक्ष्वद्विजोत्तम ॥ १७ ॥ एककर्तृकमेतद्वाबहुकर्तृकमन्यथा ॥ अकर्तृकंनकार्यंस्याद्विरोधोऽयंविभातिमे ॥ १८ ॥ इतिसंदेहसदोहेमग्नंमांतारयाधुना ॥ विकल्पकोटीःकुर्वाणंसंसारेस्मिन्प्रविस्तरे ॥ १९ ॥ ब्रुवंतिशंकरंकेचिन्मत्वाकारणकारणम् ॥ सदाशिवंमहादेवं प्रलयोत्पत्तिवर्जितम् ॥२० ॥ आत्मारामंसुरेशंचत्रिगुणंनिर्मलंहरम् ॥ संसारतारकंनित्यंसृष्टिस्थित्यंतकारणम् ॥२१॥ अन्येविष्णुंस्तुवंत्येनं सर्वेषांप्रभुमीश्वरम् ॥ परमात्मानमव्यक्तंसर्वशक्तिसमन्वितम् ॥ २२ ॥ भुक्तिदंमुक्तिदंशांतंसर्वादिंसर्वतोमुखम् ॥ व्यापकंविश्वशरणमनादिनिधनंहरिम् ॥ २३ ॥ धातारंचतथाचान्येब्रुवंतिसृष्टिकारणम् ॥ तमेवसर्ववेत्तारंसर्वभूतप्रवर्तकम् ॥ २४ ॥ चतुर्मुखंसुरेशानंनाभिपद्मभवं विभुम् ॥ स्रष्टारंसर्वलोकानांसत्यलोकनिवासिनम् ॥२५॥ दिनेशंप्रवदंत्यन्येसर्वेशंवेदवादिनः ॥ स्तुवंतिचैवगायंतिसायंप्रातरतंद्रिताः ॥२६॥ यजंतिचतथायज्ञेवासवंचशतक्रतुम् ॥सहस्राक्षंदेवदेवंसर्वेषांप्रभुमुल्बणम् ॥ २७ ॥ यज्ञाधीशंसुराधीशंत्रिलोकेशंशचीपतिम् ॥ यज्ञानांचैवभोक्तारंसोमपंसोमपप्रियम् ॥२८॥ वरुणंचतथासोमंपावकंपवनंतथा ॥ यमंकुबेरंधनदंगणाधीशंतथापरे ॥ २९ ॥ हेरंबगजवक्त्रंचसर्वकार्यप्रसाधकम् ॥ स्मरणात्सिद्धिदंकार्यकामदंकामगंपरम् ॥ ३० ॥ भवानींकेचनाचार्याः प्रवदंत्यखिलार्थदाम् ॥ आदिमायांमहाशक्तिंप्रकृतिं पुरुषानुगाम् ॥ ३१ ॥ ब्रह्मैकतासमापन्नांसृष्टिस्थित्यंतकारिणीम् ॥ मातरंसर्वभूतानांदेवतानांतथैवच ॥ ३२ ॥ अनादिनिधनांपूर्णांव्यापिकांसर्वजंतुषु ॥ ईश्वरींसर्वलोकानांनिर्गुणांसगुणांशिवाम् ॥ ३३ ॥ वैष्णवींशांकरींब्राह्मींवासवींवारुणींतथा ॥ वाराहींनारसिंहींचमहालक्ष्मींतथाऽद्भुताम् ॥ ३४ ॥ वेदमातरमेकांचविद्यांभवतरोःस्थिराम् ॥ सर्वदुःखनिहंत्रींचस्मरणात्सर्वकामदाम् ॥ ३५ ॥ मोक्षदांचमुमुक्षूणांकामदांचफलार्थिनाम् ॥ त्रिगुणातीतरूपांचगुणविस्तारकारकाम्॥३६॥ निर्गुणांसगुणांतस्मात्तांध्यायंतिफलार्थिनः ॥ निरंजनंनिराकारंनिर्लेपंनिर्गुणं किल ॥ ३७ ॥ अरूपंव्यापकंब्रह्मप्रवदंतिमुनीश्वराः॥वेदोपनिषदिप्रोक्तस्तेजोमयइतिक्वचित् ॥ ३८॥ सहस्रशीर्षापुरुषःसहस्रनयनस्तथा ॥ सहस्रकरकर्णश्वसहस्रास्यःसहस्रपात् ॥ ३९ ॥ विष्णोःपादमथाकाशंपरमंसमुदाहृतम्॥विराजंविरजंशांतंप्रवदंतिमनीषिणः ॥ ४० ॥

॥ २२ ॥२३॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ वेदांतिमतमाह । निरंजनमिति ॥ ३७ ॥ ३८ ॥ विराट्स्वरूपवादिमतमाह ॥ सहस्रशीर्षेति ॥ ३९ ॥ ४० ॥

अनेकेश्वरवादिमतमाहनैकोपीति ॥ गृहप्रासादादिविचित्रंकार्यमनेककर्तृकंदृष्टंतथेदंजगत्कार्यमप्यनेककर्तृकमेवेतिभावः ॥ ४१ ॥ अनीश्वरंस्वभावादेवेदंजगदभूदितिकेषांचिन्मतमाह ॥
अनीश्वरमिति॥तन्मतसाधकमाह॥नकदापीशजन्यमिति॥यदीदंजगदीशजन्यंस्यात्तदाऽचिंतितमनिर्वचनीयंकिमितिस्यान्नहिकुलालकर्तृकोघटोऽनिर्वचनीयोऽस्ति तस्मादचिंतितत्वादनिर्व
चनीयत्वात्स्वभावादेवजन्यंनत्वीशजन्यमित्यर्थः ॥ ४२ ॥ सांख्यमतंप्राह ॥ अकर्तेति ॥ तथाचसेति ॥ कर्त्रीत्यर्थः ॥ ४३ ॥ ४४ ॥ ४५ ॥ यत्रकल्याणंतिष्ठतितत्रधर्मोपितिष्ठतिधर्मस्य
कल्याणंचिह्नंज्ञेयमितिचेत्तत्राह । देवाःसत्त्वगुणोत्पन्नाइति ॥ ४६ ॥ धर्मिष्ठानांदेवानांममवंशजानांपांडवानांचधर्मिष्ठत्वेऽप्यकल्याणोपहतत्वाद्यत्रकल्याणंतत्रधर्मस्तिष्ठतीत्यत्रव्याप्त्यभा
वान्नधर्मचिह्नंज्ञातुंशक्यतइतिभावः ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ इतिश्रीदेवीभागवततिलकेतृतीयस्कंधेप्रथमोऽध्यायः ॥ १ ॥ चत्वारिंशच्छ्लोकवर्यैरर्धश्लोकाधिकैरथ ॥ विमानेनग

पुरुषोत्तमंतथाचान्येप्रवदंतिपुराविदः॥नैकोपीतिवदंत्यन्येप्रभुरीशःकदाचन ॥ ४१ ॥ अनीश्वरमिदंसर्वंब्रह्मांडमितिकेचन ॥ नकदापीशजन्यं
यज्जगदेतदचिंतितम् ॥ ४२ ॥ सदैवेदमनीशंचस्वभावोत्थंसदेदृशम् ॥ अकर्तासौपुमान्प्रोक्तःप्रकृतिस्तुतथाचसा ॥ ४३ ॥ एवंवदंतिसांख्या
श्चमुनयःकपिलादयः ॥ एतेसंदेहसदोहाःप्रभवंतितथाऽपरे ॥४४॥ विकल्पोपहतंचेतःकिंकरोमिमुनीश्वर ॥ धर्माधर्मविवक्षायांनमनोमेस्थिरं
भवेत् ॥ ४५ ॥ कोधर्मःकीदृशोऽधर्मश्चिह्नंनैवोपलभ्यते ॥ देवाःसत्त्वगुणोत्पन्नाःसत्यधर्मव्यवस्थिताः ॥ ४६ ॥ पीड्यतेदानवैःपापैःकुत्र
धर्मव्यवस्थितिः ॥ धर्मस्थिताःसदाचाराःपांडवाममवंशजाः ॥ ४७ ॥ दुःखंबहुविधंप्राप्तास्तत्रधर्मस्यकास्थितिः ॥ अतोमेहृदयंतातवेपतेऽ
तीवसंशये ॥ ४८ ॥ कुरुमेऽसंशयंचेतःसमर्थोऽसिमहामुने ॥ त्राहिसंसारवार्धेस्त्वंज्ञानपोतेनमांमुने ॥ ४९ ॥ मज्जंतंचोत्पतंतंचमग्नंमोहज
लाविले ॥ ५० ॥ इति श्रीदेवीभागवतेमहापुराणेऽष्टादशसाहस्र्यांसंहितायांतृतीयस्कंधेजनमेजयप्रश्नेप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥
व्यासउवाच ॥ यत्त्वयाचमहाबाहोपृष्टोऽहंकुरुसत्तम ॥ तान्प्रश्नान्नारदःप्राहमयापृष्टोमुनीश्वरः ॥ १ ॥ नारदउवाच ॥ व्यासकिंतेब्रवीम्यद्य
पुराऽयंसंशयोमम ॥ उत्पन्नोहृदयेऽत्यर्थंसंदेहासारपीडितः ॥ २ ॥ गत्वाऽहंपितरंस्थानेब्रह्माणममितौजसम् ॥ अपृच्छंयत्त्वयापृष्टंव्यासाद्य
प्रश्नमुत्तमम् ॥ ३ ॥ पितःकुतःसमुत्पन्नंब्रह्मांडमखिलंविभो ॥ भवत्कृतेनवासम्यक्किंवाविष्णुकृतंत्विदम् ॥ ४ ॥

तिर्ब्रह्मादीनामिहतुकथ्यते ॥ १ ॥ यत्त्वयेति ॥ हेमहाबाहोयत्त्वयाऽहंपृष्टोयान्यान्प्रश्नांस्त्वंमांप्रत्यकार्षीस्तान्सर्वान्प्रश्नान्मुनीश्वरोनारदोमयापृष्टोनारदंप्रतितान्सर्वान्प्रश्नान्कृतवा
नित्यर्थः ॥ अत्रव्यासउवाचेत्यतउत्तरंयत्त्वयाचेत्यतःपूर्वमेकादशश्लोकादाक्षिणात्यपाठेसंतिपरंतुसोऽपपाठः ॥ संगत्यग्रहात्पुनरुक्तिदोषाच्चगौडपाठेप्राचीनपुस्तकेषुचतेषामनुपलंभाच्च
॥ १ ॥ ततस्तदुत्तरंनारदःकिमुवाचतदाह ॥ व्यासकिंतेइति ॥ संदेहासारेणसंदेहधारासंपातेन ॥२॥ अद्ययत्त्वयापृष्टंतंप्रश्नमपृच्छमित्यन्वयः ॥ अद्ययस्त्वयापृष्टःप्रश्नस्तथाविधमन्य
प्रश्नंब्रह्माणंप्रत्यहंकृतवांस्तत्प्रत्युत्तरंस्वदेवब्रह्मामाहतदेवत्वत्प्रश्नानांप्रतिवचनंभविष्यतीतिभावः ॥ ३ ॥ भवत्कृतेनभवद्व्यापारेणेत्यर्थः ॥ अस्योत्पन्नमितिशेषः ॥ ४ ॥

आराधनीयःपूज्यःसर्वदेवेषूत्कृष्टःसर्वोत्कृष्टश्चकः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ हेसूत त्वयाकृतंदुर्बोधंप्रश्नंकिंब्रवीमियदिविष्णोरपिनिश्चयाद्वक्तुमशक्यंभवतीत्यन्वयः ॥ ११ ॥ एतस्यज्ञातारागीबहिर्मुखःकोपिनास्तिकिंतुयोंतर्मुखोज्ञानीसएवजानाति ॥ तथाचश्रुतिः तेध्यानयोगानुगताअपश्यन्देवात्मशक्तिंस्वगुणैर्निगूढामिति ॥ १२॥ तत्रविष्ण्वादिभिरप्यज्ञेयत्वेपूर्वकथामाहएकार्णवेइति ॥ नष्टेस्थावरजंगमेसतिप्रलयकालेऽनंतरमात्मनआकाशःसंभूतइत्येवंरीत्याभूतमात्रेपंचमहाभूतमात्रेऽन्यपदार्थरहितेउत्पन्नेसति तदानीमहंकमलाज्जज्ञेउ

रुद्रकृतंवाविश्वात्मन्ब्रूहिसत्यंजगत्पते ॥ आराधनीयःकःकामंसर्वोत्कृष्टश्चकःप्रभुः ॥५॥ तत्सर्ववदमेब्रह्मन्संदेहांश्छिधिचानघ ॥ निमग्नोह्यस्मिसंसारेदुःखरूपेऽनृतोपमे ॥ ६ ॥ संदेहांदोलितंचेतोनप्रशाम्यतिकुत्रचित ॥ नतीर्थेषुनदेवेषुसाधनेष्वितरेषुच ॥ ७ ॥ अविज्ञायपरंतत्त्वंकुतःशांतिःपरंतप ॥ विकीर्णंबहुधाचित्तंनैकत्रस्थिरतांव्रजेत् ॥ ८ ॥ कंस्मरामियजेकंवाकंव्रजाम्यर्चयामिकम् ॥ स्तौमिकंनाभिजानामिदेवंसर्वेश्वरेश्वरम् ॥ ९ ॥ ततोमांप्रत्युवाचेदंब्रह्मालोकपितामहः ॥ मयासत्यवतीसूनोकृतेप्रश्नेसुदुस्तरे ॥ १० ॥ ब्रह्मोवाच ॥ किंब्रवीमिसुताद्याहंदुर्बोधंप्रश्नमुत्तमम् ॥ त्वयाशक्यंमहाभागविष्णोरपिसुनिश्चयात् ॥ ११ ॥ रागीकोऽपिनजानातिसंसारेऽस्मिन्महामते ॥ विरक्तश्चविजानातिनिरीहोयोविमत्सरः ॥ १२ ॥ एकार्णवेपुराजातेनष्टेस्थावरजंगमे ॥ भूतमात्रेसमुत्पन्नेसंजज्ञेकमलादहम् ॥ १३ ॥ नापश्यंतरणिंसोमंनवृक्षान्नचपर्वतान् ॥ कर्णिकायांसमाविष्टश्चिंतामकरवंतदा ॥ १४ ॥ कस्मादहंसमुद्भूतःसलिलेऽस्मिन्महार्णवे ॥ कोमेत्राताप्रभुःकर्तासंहर्तावायुगात्यये ॥ १५ ॥ नचभूर्विद्यतेस्पष्टायदाधारंजलंत्विदम् ॥ पंकजंकथमुत्पन्नंप्रसिद्धंरूढियोगयोः ॥ १६ ॥ पश्याम्यद्यास्यपंकंतंमूलंवैपंकजस्यच ॥ भविष्यतिधरातत्रमूलंनास्त्यत्रसंशयः ॥१७॥ उत्तरन्सलिलेतत्रयावद्वर्षसहस्रकम् ॥ अन्वेषमाणोधरणींनावापंतांयदातदा ॥१८॥ तपस्तपेतिचाकाशेवागभूदशरीरिणी ॥ ततोमयातपस्तप्तंपद्मेवर्षसहस्रकम् ॥ १९ ॥ सृजेतिपुनरुद्भूतावाणीतत्रश्रुतामया ॥ विमूढोहंतदाकर्ण्यकंसृजामिकरोमिकिम् ॥२०॥ तदादैत्यावतिप्राप्तौदारुणौमधुकैटभौ ॥ ताभ्यांविभीषितश्चाहंयुद्धायमकरालये ॥ २१ ॥ ततोऽहंनालमालंब्यवारिमध्यमवातरम् ॥ तदातत्रमयादृष्टःपुरुषःपरमाद्भुतः ॥ २२ ॥ मेघश्यामशरीरस्तुपीतवासाश्चतुर्भुजः ॥ शेषशायीजगन्नाथोवनमालाविभूषितः ॥ २३ ॥ शंखचक्रगदापद्माद्यायुधैःसुविराजितः ॥ तमद्राक्षंमहाविष्णुंशेषपर्यंकशायिनम् ॥ २४ ॥ योगनिद्रासमाक्रांतमविस्पंदिनमच्युतम् ॥ शयानंतंसमालोक्यभोगिभोगोपरिस्थितम् ॥ २५ ॥

त्पन्नः ॥ १३ ॥ १४ ॥ ॥ १५ ॥ पंकजंहिपंकाज्जातम् ॥ पंकस्त्वत्रनास्तिततःपंकजंकथमुत्पन्नम् ॥ १६ ॥ माद्दश्यतामत्रपंकस्तथापिकार्येणपंकजेनकारणस्यपंकस्यानुमानादस्त्येव ॥ सकुत्रचिदितिनिश्चित्यतंपंकंपश्यामीतिनिश्चयंकृतवानित्याह । पश्यामीति ॥ पंकस्यापिधरामूलंसापितत्रस्यादितिपंकान्वेषणेनधराऽपिप्राप्ताभवेदितिभावः ॥१७॥ नावापं तांधरणींतंपंकंचनावापंनप्राप्तवानहम् ॥ १८ ॥ १९ ॥ २० युद्धाययुद्धंकर्तुम् ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

॥ २६ ॥ २७ ॥ २८ ॥ तदाविलोकितौदेव्याकटाक्षेणप्रथमंविलोकितौततोविमोहितौततोहरिणानिपातितावितिपूर्ववृत्तांतःस्मारितः ॥ २९ ॥ रुद्रस्तत्रैवसंप्राप्तइतिवचनेनायंरुद्रोब्र
ह्मललाटादुत्पन्नाद्वक्ष्यमाणाद्रुद्रादन्यएवेति निःसंशयमेवबोध्यते ॥ अतएवकूर्मपुराणादिपुराणेषुब्रह्मविष्णुरुद्रात्मकत्रिमूर्तिराहितस्तुरीयोरुद्रोस्तीत्युक्तम् ॥ एतावांस्तुविशेषः ॥ क्वचि

चिंताममाद्भुताजाताकिंकरोमीतिनारद ॥ मयास्मृतातदादेवीस्तुतानिद्रास्वरूपिणी॥२६॥देहान्निर्गत्यसादेवीगगनेसंस्थिताशिवा॥अवितर्क्य
शरीरासादिव्याभरणमंडिता ॥ २७ ॥ विष्णोर्देहंविहायाशुविरराजनभःस्थिता ॥ उदतिष्ठदमेयात्मातयामुक्तोजनार्दनः ॥ २८ ॥ पंचवर्षसह
स्राणिकृतवान्युद्धमुत्तमम् ॥ तदाविलोकितौदैत्यौहरिणाविनिपातितौ ॥ २९ ॥ उत्संगंविमलंकृत्वातत्रैवनिहतौचतौ ॥ रुद्रस्तत्रैवसंप्राप्तोयत्रा
ऽऽवांसंस्थितावुभौ ॥३०॥ त्रिभिःसंवीक्षितास्माभिःस्वस्थादेवीमनोहरा ॥ संस्तुतापरमाशक्तिरुवाचास्मानवस्थितान् ॥३१॥ कृपावलोकनैः
कृत्वापावनैर्मुदितानथ ॥ देव्युवाच ॥ काजेशाःस्वानिकार्याणिकुरुध्वंसमतंद्रिताः ॥३२॥ सृष्टिस्थितिविशिष्टानिहतावेतौमहासुरौ ॥ कृत्वा
स्वानिनिकेतानिवसध्वंविगतज्वराः ॥३३॥ प्रजाश्चतुर्विधाःसर्वाःसृजध्वंस्वविभूतिभिः ॥ ब्रह्मोवाच ॥ तच्छ्रुत्वावचनंतस्याःपेशलंसुखदं
मृदु ॥ ३४ ॥ अब्रूमतामशक्ताःस्मःकथंकुर्मस्त्विमाःप्रजाः ॥ नमहीविततामातः सर्वत्रविततंजलम् ॥ ३५ ॥ नभूतानिगुणाश्चापितन्मात्राणीं
द्रियाणिच ॥ तदाकर्ण्यवचोस्माकंशिवाजातास्मितानना ॥ ३६ ॥ झटित्येवागतंतत्रविमानंगगनाच्छुभम् ॥ सोवाचास्मिन्सुराःकामंवि
शध्वंगतसाध्वसाः ॥ ३७ ॥ विमानेब्रह्मविष्ण्वीशादर्शयाम्यद्यचाद्भुतम् ॥ तन्निशम्यवचस्तस्याओमित्युक्त्वापुनर्वयम् ॥ ३८ ॥ समारुह्यो
पविष्टाःस्मोविमानेरत्नमंडिते ॥ मुक्तादामसुसंवीतेकिंकिणीजालशब्दिते ॥ ३९ ॥ सुरसद्मनिभेरम्येत्रयस्तत्राविशंकिताः ॥ सोपविष्टांस्ततो
दृष्ट्वादेव्यस्मान्विजितेंद्रियान् ॥ ४० ॥ स्वशक्त्यातद्विमानंवैनोदयामासचांबरे ॥ ४१ ॥ ॥ इति श्रीदेवीभागवते महापुराणेअष्टादशसाह
स्र्यांसंहितायांतृतीयस्कंधेद्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥ ब्रह्मोवाच ॥ विमानंतन्मनोवेगंयत्रस्थानांतरेगतम् ॥ नजलंतत्रपश्यामोविस्मिताः
स्मोवयंतदा ॥ १ ॥ वृक्षाःसर्वफलारम्याःकोकिलारावमंडिताः ॥ महीमहीधराःकामंवनान्युपवनानिच ॥ २ ॥ नार्यश्चपुरुषाश्चैवपशवश्च
सरिद्वराः ॥ वाप्यःकूपास्तडागाश्चपल्वलानिचनिर्झराः ॥ ३ ॥

त्पुराणेषुब्रह्मललाटोद्भवस्यमूर्तित्रयांतर्गतत्वमस्यतुरीयत्वंक्वचित्त्वस्यैवमूर्तित्रयांतर्गतस्यब्रह्मललाटोद्भवस्यतुनतुरीयत्वंनापितृतीयत्वमिति ॥ ३० ॥ ३१ ॥ ३२ ॥ विशिष्टानिसृष्टिस्थि
तिसंहाररूपाणीत्यर्थः ॥ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ गतसाध्वसागतभयाः ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ इति श्रीदेवीभागवततिलकेतृतीयस्कंधेद्वितीयोऽध्यायः ॥२॥
सप्तषष्टिश्लोकवर्यैर्विमानस्थाहरादयः॥ददृशुस्तेदेवदेवीमितिसम्यगिहोच्यते ॥१॥ विमानस्यांबरगमनानंतरंजातंवृत्तमाह।विमानंतन्मनोवेगमिति ॥१॥२॥निर्झरागिरिप्रस्रवणानि॥३॥

॥ ४ ॥ स्वर्गोयमित्यस्माकंप्रत्यभिज्ञाजाता परंतुसस्वर्गोयमस्मत्सृष्टिस्थस्वर्गापेक्षयाऽन्यःकेननिर्मितइत्यद्भुतमाश्चर्यंतदाजातम् ॥ ५ ॥ तत्रयदाविमानमागतंतस्मिन्समयेतत्स्वर्गस्थो देवराजोमृगयांकर्तुंबहिर्निर्गतःसोस्माभिर्दृष्टः ॥ तस्मिन्नेवस्थलेस्थितैरस्माभिःपूर्वदृष्टायांऽबिकासाऽपिविमानोपरिस्थितादृष्टा ॥ ६ ॥ मृगयांकर्तुंगतमित्यनेनस्वर्गाद्बहुदूरंयदाविमानं स्थितंतत्कालिकोवृत्तांतएतत्पर्यंतमुपपादितोऽथयदामुहूर्तांतरेणविमानंस्वर्गनिकटेगतंतत्कालिकंवृत्तांतमाह । क्षणाच्चचालेति ॥ देशेचान्यइति ॥ स्वर्गनिकटेदेशइत्यर्थः ॥ ७ ॥ सुर

पुरतोनगरंरम्यंदिव्यप्राकारमंडितम् ॥ यज्ञशालासमायुक्तनानाहर्म्यविराजितम् ॥ ४ ॥ प्रत्यभिज्ञातदाजाताप्यस्माकंप्रेक्ष्यतत्पुरम् ॥ स्वर्गो यमितिकेनासौनिर्मितोस्तितदाद्भुतम् ॥ ५ ॥ राजानंदेवसंकाशंव्रजंतंमृगयांवने ॥ अस्माभिःसंस्थितादृष्टाविमानोपरिचांबिका ॥ ६ ॥ क्षणाच्चचालगगनेविमानंपवनेरितम् ॥ मुहूर्ताद्गाततःप्राप्तंदेशेचान्येमनोहरे ॥ ७ ॥ नंदनंचवनंतत्रदृष्टमस्माभिरुत्तमम् ॥ पारिजाततरुच्छाया संश्रितासुरभिः स्थिता ॥ ८ ॥ चतुर्दंतोगजस्तस्याःसमीपेसमवस्थितः ॥ अप्सरसांतत्रवृंदानिमेनकाप्रभृतीनिच ॥ ९ ॥ क्रीडंतिविविधै र्भावैर्गाननृत्यसमन्वितैः ॥ गंधर्वाःशतशस्तत्रयक्षाविद्याधरास्तथा ॥ १० ॥ मंदारवाटिकामध्येगायंतिचरमंतिच ॥ दृष्टःशतक्रतुस्तत्रपौ लोम्यासहितःप्रभुः ॥ ११ ॥ वयंतुविस्मितास्त्वास्मदृष्ट्वात्रैविष्टपंतदा ॥ यादःपतिंकुबेरंचयमंसूर्यंविभावसुम् ॥ १२ ॥ विलोक्यविस्मिता श्चास्मवयंतत्रसुरान्स्थितान् ॥ तदाविनिर्गतोराजापुरात्तस्मात्सुमंडितात् ॥ १३ ॥ देवराजइवाक्षोभ्योनरवाह्यावनौस्थितः ॥ विमानस्था वयंतच्चचालतरसागतम् ॥ १४ ॥ ब्रह्मलोकंतदादिव्यंसर्वदेवनमस्कृतम् ॥ तत्रब्रह्माणमालोक्यविस्मितौहरकेशवौ ॥ १५ ॥ सभायांतत्रवे दाश्चसर्वेसांगाःस्वरूपिणः ॥ सागराःसरितश्चैवपर्वताःपन्नगोरगाः ॥ १६ ॥ मामूचतुश्चतुर्वक्त्रकोऽयंब्रह्मासनातनः ॥ ताववोचमहंनैवजाने सृष्टिपतिंपतिम् ॥ १७ ॥ कोऽहंकोऽयंकिमर्थंवाभ्रमोऽयंममचेश्वरौ ॥ क्षणादथविमानंतच्चचालाशुमनोजवम् ॥ १८ ॥ कैलासशिखरेप्रांतंरम्ये यक्षगणान्विते ॥ मंदारवाटिकारम्येकीरकोकिलकूजिते ॥ १९ ॥ वीणामुरजवाद्यैश्चनादितेसुखदेशिवे ॥ यदाप्राप्तंविमानंतत्तदैवसदनाच्छु भात् ॥ २० ॥ निर्गतोभगवाञ्छंभुर्वृषारूढस्त्रिलोचनः ॥ पंचाननोदशभुजःकृतसोमार्धशेखरः ॥ २१ ॥ व्याघ्रचर्मपरीधानोगजचर्मोत्तरी यकः ॥ पार्ष्णिरक्षौमहावीरौगजाननषडाननौ ॥ २२ ॥ शिवेनसहपुत्रौद्वौव्रजमानौविरेजतुः ॥ नंदिप्रभृतयःसर्वे गणपाश्चवराश्चते ॥ २३ ॥

भिःस्थितादृष्टेत्यर्थः ॥ ॥ ८ ॥ ९ ॥ १० ॥ रमंतिचेति ॥ तेचदृष्टाइत्यर्थः ॥ इंद्रासनेइंद्रोऽपिदृष्टइत्याह । शतक्रतुरिति ॥ मृगयांकृत्वागतः स्वासनेस्थितोदृष्टइत्यर्थः ॥ ११ ॥ या दःपतिंवरुणम् ॥ १२ ॥ विस्मिताइति । अस्मत्सृष्टिस्थदेवतापेक्षयाऽन्यएतेकस्मादागताइतिविस्मिताइत्यर्थः तस्मिन्नेवसमयेयःसिंहासनोस्थितइंद्रोदृष्टःसतस्मात्पुरान्निर्गतोदेवराजः ॥ इवशब्दोनिश्चयार्थकः देवराजएवनरवाह्यायावनिःशिबिकारूपातस्यांस्थितोदृष्टः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

शंकरमिति ॥ एतच्छंकराद्विमानस्थाच्छंकरादन्यमित्यर्थः ॥ २४ ॥ मातृभिः सहितंशंकरमित्यन्वयः ॥ २५ ॥ २६ ॥ सदनाग्रेइति ॥ यद्वैकुंठास्थितोविष्णुस्तद्वैकुंठसदनाग्रेइत्यर्थः ॥ ययौप्राप्तवान् ॥ इमेब्रह्मादयोऽन्यब्रह्मांडस्थाएतैर्दृष्टाइतिबोध्यम् ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ मंदारपारिजातेति ॥ अतिशोभितोमणिद्वीपदेशइतिशेषः ॥ अतएवाग्रेतस्मिन् द्वीपइत्युक्तंसंगच्छते ॥ ३२ ॥ ३३ ॥ ३४ ॥ शिवाकारःपर्यंकः ब्रह्मविष्णुरुद्रेश्वराःपर्यंकखुराः सदाशिवस्तुफलकस्थानीयः ततःशिवाकारोजातः ॥ इदंसप्तमस्कंधेस्पष्टम् ॥ अत्रमणिद्वीपस्थानंब्रह्मांडाद्बहिरस्तीतिद्वादशस्कंधेवक्ष्यते ॥ सुमेरुमध्यशृंगेभवतीतितुब्रह्मांडपुराणेललितोपाख्यानेस्पष्टम् ॥ तत्परिमाणंतद्वर्णनंचतत्रैवस्पष्टम् ॥ दुर्वासः

जयशब्दंप्रयुंजानाव्रजंतिशिवपृष्ठगाः ॥ तंवीक्ष्यशंकरंचान्यंविस्मितास्तत्रनारद ॥ २४ ॥ मातृभिःसंशयाविष्टस्तत्राहंन्यवसंमुने ॥ क्षणात्त स्माद्गिरेःशृंगाद्विमानंवातरंहसा ॥ २५ ॥ वैकुंठमुदनंप्राप्तंरमारमणमंदिरम् ॥ असंभाव्याविभूतिश्चतत्रदृष्टामयासुत ॥ २६ ॥ विसिस्मियेत दाविष्णुर्दृष्ट्वातत्पुरमुत्तमम् ॥ सदनाग्रेययौतावद्धरिःकमललोचनः ॥ २७ ॥ अतसीकुसुमाभासःपीतवासाश्चतुर्भुजः ॥ द्विजराजाधिरूढश्च दिव्याभरणभूषितः ॥ २८ ॥ वीज्यमानस्तदालक्ष्म्याकामिन्याचामरैःशुभैः ॥ तंवीक्ष्यविस्मिताःसर्वेवयंविष्णुंसनातनम् ॥ २९ ॥ परस्परं निरीक्षंतःस्थितास्तस्मिन्वरासने ॥ ततश्चालतरसाविमानंवातरंहसा ॥ ३० ॥ सुधासमुद्रःसंप्राप्तोमिष्टवारिमहोर्मिमान् ॥ यादोगणसमा कीर्णश्चलद्वीचिविराजितः ॥ ३१ ॥ मंदारपारिजाताद्यैःपादपैरतिशोभितः ॥ नानास्तरणसंयुक्तोनानाचित्रविचित्रितः ॥ ३२ ॥ मुक्तादाम परिक्लिप्तोनानादामविराजितः ॥ अशोकबकुलाख्यैश्चवृक्षैःकुरुबकादिभिः ॥ ३३ ॥ संवृतःसर्वतःसौम्यैःकेतकीचंपकैर्वृतः ॥ कोकिलारावसंघुष्टोदि व्यगंधसमन्वितः ॥ ३४ ॥ द्विरेफातिरणत्कारैरंजितःपरमाद्भुतः ॥ तस्मिन्द्वीपेशिवाकारःपर्यंकःसुमनोहरः ॥ ३५ ॥ रत्नालिखचितोऽत्यर्थं नानारत्नविराजितः ॥ दृष्टोऽस्माभिर्विमानस्थैर्दूरतःपरिमंडितः ॥ ३६ ॥ नानास्तरणसंछन्नइंद्रचापसमन्वितः ॥ पर्यंकप्रवरेतस्मिन्नुपविष्टा वरांगना ॥ ३७ ॥ रक्तमाल्यांबरधरारक्तगंधानुलेपना ॥ सुरक्तनयनाकांताविद्युत्कोटिसमप्रभा ॥ ३८ ॥ सुचारुवदनारक्तदंतच्छदविराजि ता ॥ रमाकोटचधिकाकांत्यासूर्यबिंबनिभाखिला ॥ ३९ ॥ वरपाशांकुशाभीष्टधराश्रीभुवनेश्वरी ॥ अदृष्टपूर्वादृष्टासासुंदरीस्मितभूषणा ॥ ४० ॥

कृतेस्तवरत्नेशिवरहस्ये द्वितीयांशेच ॥ ३५ ॥ रत्नाऽलयोरत्नभ्रमराः ॥ ३६ ॥ इंद्रचापसमन्वितःइंद्रचापवदनेकवर्णविशिष्टमणिसमान्वितइत्यर्थः ॥ ३७ ॥ ३८ ॥ ३९ ॥ वरपाशां कुशेति ॥ आयुधस्थानानिवामाधःकरमारभ्यदक्षिणाधःकरपर्यंतम् ॥ तदुक्तंमहासंमोहनेतंत्रे ॥ दक्षिणेचांकुशंदद्याद्वामेपाशंप्रदापयेत् ॥ अभयंदक्षिणेदद्याद्वरंवामेप्रदापयेदिति ॥ दश पटल्यामपिभुवनेशीध्याने दक्षेंऽकुशाभयेप्रोक्तेवामेपाशमथेष्टदमिति ॥ इष्टदंवरम् ॥ आयुधार्थस्तुप्रपंचसारेभुवनेश्वरीपटलेश्रीमच्छंकरभगवत्पादैर्विस्तरेणोपपादितइतिततएवावधा र्यः ॥ भुवनेश्वरीसर्वभुवनेश्वरीत्यर्थः ॥ भुवनेश्वरीपदनिरुक्तिस्तुभुवनेश्वरीपारिजातेभुवनेश्वरीहृदयेदक्षिणामूर्तिसंहितायांच ॥ इदंचध्यानंदेव्यथर्वशिरसि हृत्पुंडरीकमध्यस्थांप्रातःसूर्य समप्रभाम् ॥ पाशांकुशधरांसौम्यांवरदाभयहस्तकाम् ॥ त्रिनेत्रांरक्तवसनांभक्तकामदुघांभजेइत्युक्तम् ॥ ४० ॥

ह्रींकारजपनिष्ठैस्त्विति ॥ यदापक्षिगणोपिह्रींकारंजपतितदाऽन्येजपंतिह्रींकारबीजमित्यत्रकिंवक्तव्यम्॥४१॥उद्यत्पीनेति ॥ स्तनद्वयेनकमलकुड्मलेजितेइत्यर्थः ॥४२॥४३॥ कनच्छ्री चक्रताटंकेति ॥ कनतीदीप्यमानेयेश्रीचक्राकारेत्रिपुरसुंदरीचक्राकारेताटंकेरत्नकुंडलेताभ्यांविटंकंसुंदरंवदनारविंदंयस्याःसा॥हृल्लेखाभुवनेशीति ॥ हृल्लेखापदव्युत्पत्तिस्तुभुवनेश्वरीरहस्ये उक्ता॥हृदिलेखेवजागर्तिप्राणशक्तिरियंपरा ॥ हृल्लेखाकथ्यतेतस्मादिति ॥ त्रिपुरतापनीयश्रुतिरपि ॥ हृदयागारवासिनीहृल्लेखेति ॥ भुवनेशीपदव्युत्पत्तिस्तुभुवनेशीपारिजातेभुवनेशी हृदयेदक्षिणामूर्तिसंहितायांच॥व्योमबीजेमहेशानिकैलासादिप्रतिष्ठितम्॥वह्निबीजात्सुवर्णादिनिष्पन्नंबहुधाप्रिये॥तेनायंवर्ततेलोकोभूमंडलसमस्थितः । तुर्यस्वरेणपातालेशेषरूपेणधार्यते ॥ महाभूमंडलंतस्मात्पातालस्याऽपिनायिका॥ अतएवमहेशानिभुवनेशीतिकथ्यते॥ बिंदुचंद्रामृतंदेविप्लावयंतीजगत्त्रयम्॥ द्रवरूपाभवेत्तस्मात्सृजंतीचार्धमात्रया ॥ अतएवमहेशानिभुवनेशीतिकथ्यतइति॥ भुवनेश्वर्युपनिषदिभुवनाधीश्वरीतुर्यातीताविश्वविमोहिनीति॥ मंत्रार्थस्तुहालास्यमाहात्म्येउक्तः॥सचोपोद्घातेएवदर्शितः॥४४॥हृल्लेखाद्याअमरकन्याः॥४५॥

ह्रींकारजपनिष्ठैस्तुपक्षिवृंदैर्निषेविता ॥ अरुणाकरुणामूर्तिःकुमारीनवयौवना ॥ ४१ ॥ सर्वशृंगारवेषाढ्यामंदस्मितमुखांबुजा ॥ उद्यत्पीनकुचद्वंद्वनिर्जितांभोजकुड्मला ॥ ४२ ॥ नानामणिगणाकीर्णभूषणैरुपशोभिता ॥ कनकांगदकेयूरकिरीटपरिशोभिता ॥ ४३॥ कनच्छ्रीचक्रताटंकविटंकवदनांबुजा ॥ हृल्लेखाभुवनेशीतिनामजापपरायणैः ॥ ४४ ॥ सखीवृंदैःस्तुतानित्यंभुवनेशीमहेश्वरी ॥ हृल्लेखाद्याभिरमरकन्याभिःपरिवेष्टिता॥४५॥अनंगकुसुमाद्याभिर्देवीभिः परिवेष्टिता ॥ देवीषट्कोणमध्यस्थायंत्रराजोपरिस्थिता ॥ ४६ ॥ दृष्ट्वातांविस्मिताःसर्वेवयंतत्रस्थिताभवन् ॥ केयंकांताचकिंनामनजानीमोऽत्रसंस्थिता ॥ ४७ ॥ सहस्रनयनारामासहस्रकरसंयुता ॥ सहस्रवदनारम्याभातिदूरादसंशयम् ॥ ४८ ॥ नाप्सरानापिगंधर्वीनेयंदेवांगनाकिल ॥ इतिसंशयमापन्नास्तत्रनारदसंस्थिताः ॥ ४९ ॥ तदाऽसौभगवान्विष्णुर्दृष्ट्वातांचारुहासिनीम् ॥ उवाचांबांस्वविज्ञानात्कृत्वामनसिनिश्चयम् ॥ ५० ॥ एषाभगवतीदेवीसर्वेषांकारणंहिनः ॥ महाविद्यामहामायापूर्णाप्रकृतिरव्यया ॥ ५१ ॥

अनंगकुसुमाद्याश्चयंत्रावरणदेवताः॥इदमुपलक्षणंसेवार्थमागतानामन्यदेवतानामपि॥तदुक्तं ब्रह्माण्डपुराणे॥सेवार्थमागतास्तत्रब्रह्माणीब्रह्मकोटयः ॥ लक्ष्मीनारायणानांचकोटयःसमुपागताः॥गौरीकोटिसहस्राणांरुद्राणामपिकोटयइति ॥यंत्रमाह॥ देवीषट्कोणेति॥षड्गुणितयंत्रमध्यस्थेत्यर्थः॥तच्चयंत्रप्रपंचसारेस्पष्टम्॥ यद्वा पद्ममष्टदलंबाह्येवृत्तंषोडशभिर्दलैः॥विलिखेत्कर्णिकामध्येषट्कोणमतिसुंदरमितिशारदोक्तंग्राह्यम् ॥ ४६ ॥ ४७॥ इतियावच्चतुर्भुजांपश्यंतितावद्देवस्यैवमूर्तिर्विराड्रूपेणदृश्यमानाऽभवदित्याह ॥ सहस्रनयनारामेति ॥ विराट्स्वरूपंदेव्यास्तुसप्तमस्कंधेस्पष्टम् ॥४८॥४९॥ स्वविज्ञानात्स्वकीयस्मरणात् ॥५०॥ एषेति ॥ यन्नोऽस्माकंकारणंसाम्यावस्थमायोपाधिकब्रह्मरूपंतदिदंतर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यांव्याक्रियतइत्यादिश्रुतिप्रतिपाद्यंमायावाएषानारासिंहीसर्वमिदंसृजतिसर्वमिदंरक्षतिसर्वमिदंसंहरतितस्मान्मायामेतांशक्तिंविद्यादिति ॥ अजामेकांलोहितशुक्लकृष्णां नतस्यकार्यंकरणंचेत्यादिश्रुतिप्रतिपाद्यंच ॥ तदेषाभगवतीतस्यैवमुख्यामूर्तिरियमितिभावः ॥ परंब्रह्मैवसर्वकारणमायाशबलितंभक्तानुग्रहार्थमिदंरूपंदधारेत्यर्थः ॥ ५१ ॥

इच्छेति ॥ इच्छाशक्तिरुमाकुमारीतिशिवसूत्रप्रतिपाद्या॥तत्किंजडानेत्याह ॥ नित्यानित्यस्वरूपिणीति॥ नित्यंब्रह्मानित्यंमायातदुभयरूपिणी ॥ मायाशबलब्रह्मरूपिणीत्यर्थः॥ तथा च भगवत्याउभयात्मकत्वात्कदाचिद्ब्रह्मरूपेणैववर्णनंकदाचित्तच्छाक्तिरूपेणैववर्णनामितीच्छाशाक्तिरूपत्वेनवर्णनेनवर्णनेपिदोषाभावः ॥ तथाचस्मृतिः॥ ह्रींकारउभयात्मकइति ॥ शिवशक्त्यात्मकइत्यर्थः । ह्रींब्रह्मेतिश्रुतेश्च ॥ ५२ ॥ वेदगर्भावेदजनयित्री ॥ अस्यमहतोभूतस्यनिःश्वसितमेतद्यदृग्वेदइत्यादिश्रुतेः ॥ ममैवाज्ञापराशक्तिर्वेदसंज्ञापुरातनी ॥ ऋग्यजुःसामरूपेणसर्गादौसंप्रवर्ततेइतिकूर्मपुराणेद्वादशाध्यायेश्रीभगवत्युक्तेश्च ॥ ५३ ॥ कारणस्वरूपंभगवत्याविशदयति ॥ एषासंहृत्येति ॥ सर्वजीवानामिति ॥ व्यष्टिलिंगशरीराणितद्वासनाश्चसमष्टौसूत्रात्मानिस्थापयित्वातत्समष्टिलिंगशरीरंसवासनंस्वशरीरेप्रलयकालेसंनिवेश्यस्थापयित्वाएकाकिनीक्रीडाति ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ मूलप्रकृतिरेवै

दुर्ज्ञेयाऽल्पधियांदेवीयोगगम्यादुराशया॥इच्छापरात्मनःकामंनित्यानित्यस्वरूपिणी ॥ ५२ ॥ दुराराध्याऽल्पभाग्यैश्चदेवीविश्वेश्वरीशिवा॥ वेदगर्भाविशालाक्षीसर्वेषामादिरीश्वरी ॥ ५३ ॥ एषासंहृत्यसकलंविश्वंक्रीडतिसंक्षये ॥ लिंगानिसर्वजीवानांस्वशरीरेनिवेश्यच ॥ ५४ ॥ सर्वबीजमयीह्येषाराजतेसांप्रतंसुरौ ॥ विभूतयःस्थिताःपार्श्वेपश्यतांकोटिशःक्रमात् ॥ ५५ ॥ दिव्याभरणभूषाढ्यादिव्यगंधानुलेपनाः ॥ परिचर्यापराःसर्वाःपश्यतांब्रह्मशंकरौ ॥ ५६॥धन्यावयंमहाभागाःकृतकृत्याःस्मसांप्रतम् ॥ यदत्रदर्शनंप्राप्तभवगत्याःस्वयंत्विदम् ॥५७॥ तपस्तप्तंपुरायत्नात्तस्येदंफलमुत्तमम् ॥ अन्यथादर्शनंकुत्रभवेदस्माकमादरात् ॥ ५८ ॥ पश्यंतिपुण्यपुंजायेयेवदान्यास्तपस्विनः॥ रागिणो नैवपश्यंतिदेवींभगवतींशिवाम् ॥ ५९ ॥ मूलप्रकृतिरेवैषासदापुरुषसंगता ॥ ब्रह्मांडंदर्शयत्येषाकृत्वावैपरमात्मने ॥ ६० ॥ द्रष्टाऽसौदृश्यमखिलंब्रह्मांडंदेवतास्सुरौ ॥ तस्यैषाकारणंसर्वामायासर्वेश्वरीशिवा ॥ ६१ ॥ क्वाहंवाक्सुराःसर्वेरमाद्याःसुरयोषितः ॥ लक्षांशेनतुलामस्यान भवामःकथंचन ॥ ६२ ॥ सैषावरांगनानामयादृष्टावैमहार्णवे ॥ बालभावेमहादेवीदोलयंतीवमांमुदा ॥ ६३ ॥ शयानंवटपत्रेचपर्यंकेसुस्थिरेदृढे ॥ पादांगुष्ठंकरेकृत्वानिवेश्यमुखपंकजे ॥ ६४ ॥ लेलिहंतंचक्रीडंतमनेकैर्बालचेष्टितैः ॥ रममाणंकोमलांगंवटपत्रपुटेस्थितम् ॥ ६५ ॥ गायंतीदोलयंतीचबालभावान्मयिस्थिते ॥ सेयंसुनिश्चितंज्ञानंजातंमेदर्शनादिव ॥ ६६ ॥ कामंनोजननीसैषाशृणुतंप्रवदाम्यहम् ॥ अनुभूतं मयापूर्वंप्रत्यभिज्ञासमुत्थिता ॥ ६७ ॥ इतिश्रीदेवीभा० म० अष्टादशसाहस्र्यांसंहितायांतृतीयोऽध्यायः ॥ ३ ॥

षेति ॥ एवंवर्णनंजडशक्तिरूपत्वेनक्रियते ॥ भुवनेश्वर्याजडाजडरूपत्वेनविद्यमानत्वात् ॥ ६० ॥ द्रष्टाऽसौजीवोदृश्यमिदंसर्वंविश्वंतस्योभयविधस्याप्येषैवकारणम् ॥ यथासुदीप्तात्पावकाद्विस्फुलिंगाइतिश्रुतेर्जीवविश्वविभागस्यकारणब्रह्माधीनत्वात् ॥६१॥६२॥ सैषेति ॥ अनयैवममार्धश्लोकात्मकभागवतस्यरहस्यभूतस्योपदेशःकृतइत्यस्यामूर्तिदर्शनेनममप्रत्यभिज्ञासमुत्थिता ॥ तस्यश्लोकार्धस्यार्थस्तु ॥ सर्वंखल्विदंब्रह्माहमेवेति ॥ तस्माद्यामयादृष्टासैवेयंसाचसर्वकारणत्वंस्वस्याह ॥ तस्मादियंसर्वकारणमेवेतिभावः ॥ ननुकस्यामवस्थायामियंत्वयादृष्टातत्राह ॥ बालभावेइति ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ इतिश्रीदेवीभागवततिलके तृतीयस्कंधे तृतीयोऽध्यायः ॥ ३ ॥

एकोनपंचाशत्पद्यैः स्त्रीभावगमनोत्तरम् ॥ विष्णुनाऽथकृतंस्तोत्रंश्रीदेव्याइतिकथ्यते॥ १ ॥ श्रीदेवीदर्शनोत्तरंब्रह्मादीनांवृत्तमाह। इत्युक्तेति ॥ इतिपूर्वोक्तांबालावस्थाकथांब्रह्मणेविष्णुरु
क्त्वापुनर्ब्रह्माणंविष्णुराह ॥ १ ॥ २ ॥ तत्रस्थायद्देशेवारयिष्यंतितास्मिन्नेवदेशेस्थिताःस्तुतिंकरिष्यामस्तावतादयार्द्रासर्वज्ञादेवीज्ञास्यत्यस्माकंस्तुतिंकृपांचकरिष्यतीत्यर्थः ॥ ३ ॥ नारदं
प्रतिब्रह्माऽऽह ॥ इत्युक्तेइति ॥ हरिवाक्यंश्रुत्वाअहंहरश्चोभौप्रमुदितौजातौनिकटेश्रीदेवीसमीपेगमनायतदाहरिंप्रत्योमित्यंगीकारवाक्यमुक्त्वास्थितौ ॥ ४ ॥ ततःसर्वेवयंविमानादु

ब्रह्मोवाच॥इत्युक्त्वाभगवान्विष्णुःपुनराहजनार्दनः॥वयंगच्छेमपार्श्वेऽस्याःप्रणमंतःपुनःपुनः॥१॥ सेयंवरामहामायादास्यत्येषावरान्हिनः॥
स्तुवामःसंनिधिंप्राप्यनिर्भयाश्चरणांतिके ॥२॥यदिनोवारयिष्यंतिद्वारस्थाःपरिचारकाः ॥ पठिष्यामश्चतत्रस्थाःस्तुतिंदेव्याःसमाहिताः॥३॥
ब्रह्मोवाच ॥ इत्युक्तेहरिणावाक्येसुप्रहृष्टौसुसंस्थितौ॥जातौप्रमुदितौकामंनिकटेगमनायच ॥४॥ ओमित्युक्त्वाहरिंसर्वेविमानात्त्वरितास्त्रयः॥
उत्तीर्यनिर्गताद्वारिशंकमानामनस्यलम्॥५॥द्वारस्थान्वीक्ष्यतान्सर्वान्देवीभगवतीतदा ॥ स्मितंकृत्वाचकाराशुतांस्त्रीन्स्त्रीरूपधारिणः॥ ६ ॥
वयंयुवतयोजाताःसुरूपाश्चारुभूषणाः॥विस्मयंपरमंप्राप्तागतास्तत्संनिधिंपुनः॥७॥साहृष्टानःस्थितांस्तत्रस्त्रीरूपांश्चरणांतिके ॥ व्यलोकयतचा
र्वंगीप्रेमसंपूर्णयादृशा॥८॥प्रणम्यतांमहादेवींपुरतःसंस्थितावयम्॥परस्परंलोकयंतःस्त्रीरूपाश्चारुभूषणाः॥९॥पादपीठंप्रेक्षमाणानानामणिविभू
षितम्॥सूर्यकोटिप्रतीकाशंस्थितास्तत्रवयंत्रयः॥१०॥काश्चिद्रक्तांबरास्तत्रसहचर्यःसहस्रशः॥काश्चिन्नीलांबरानार्यस्तथापीतांबराःशुभाः॥११॥
देव्यःसर्वाःशुभाकाराविचित्रांबरभूषणाः ॥ विरेजुःपार्श्वतस्तस्याःपरिचर्यापराःकिल ॥ १२ ॥ जगुश्चननृतुश्चान्याःपर्युपासंतताःस्त्रियः॥वीणा
मारुतवाद्यानिवादयंत्योमुदान्विताः॥१३॥शृणुनारदवक्ष्यामियद्दृष्टंतत्रचाद्भुतम्॥नखदर्पणमध्येवैदेव्याश्चरणपंकजे॥१४॥ब्रह्मांडमखिलंसर्वंत
त्रस्थावरजंगमम् ॥ अहंविष्णुश्चरुद्रश्चवायुरग्निर्यमोरविः॥१५॥ वरुणःशीतगुस्त्वष्टाकुबेरःपाकशासनः ॥ पर्वताःसागरानद्योगंधर्वाप्सरसस्त
था ॥१६॥ विश्वावसुश्चित्रकेतुःश्वेतश्चित्रांगदस्तथा ॥ नारदस्तुंबुरुश्चैवहाहाहूहूस्तथैवच ॥१७॥ अश्विनौवसवःसाध्याःसिद्धाश्चपितरस्तथा॥
नागाःशेषादयःसर्वेकिंनरोरगराक्षसाः ॥ १८ ॥ वैकुंठोब्रह्मलोकश्चकैलासःपर्वतोत्तमः ॥ सर्वंतदखिलंदृष्टंनखमध्यस्थितंचन ॥ १९ ॥

तीर्यतत्रगताइत्याह ॥ ओमित्युक्त्वेति ॥ ५ ॥ स्त्रीरूपधारिणइति ॥ तेवयंत्रयःस्त्रीरूपाजाताइत्यर्थः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ पादपीठंसिंहासनम् ॥ अनेनदासमर्यादाबोधिता ॥
यद्दासेनस्वामिमुखानिरीक्षणंनविधेयंकिंतुपादयोरेवदृष्टिःस्थापनीयेति ॥ १० ॥ ११ ॥ १२ ॥ मारुतवाद्यंवेण्वादिकम् ॥ १३ ॥ तदुत्तरंश्रीभुवनेश्वर्याःस्वपादनखमध्येएवानेककोटि
ब्रह्मांडानिदर्शितानीत्याह शृणुनारदेति ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ चनेत्यव्ययमप्यर्थकं नखमध्यस्थितमपीत्यर्थः ॥ १९ ॥

॥ २० ॥ २१ ॥ इतिदर्शनेनेयमेवसर्वकारणमित्यस्माकंनिश्चयोजातइत्याह ॥ विश्वस्यमातरमिति ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ संसारारणयेसंसारयोनये ॥ पंचकृत्यविधात्र्यै ॥ पंचविधंतत्कृत्यंसृष्टिस्थितिसंहृतितिरोभावाः ॥ तद्वदनुग्रहकरणंप्रोक्तंसततोदितस्यास्येतिवचनोक्तानिपंचकृत्यानितेषांविधात्रीकर्त्री ॥ २८ ॥ सर्वाधिष्ठानरूपायैसर्वविवर्तरूपंमिथ्याजगत्तदधिष्ठानाविकृतब्रह्मरूपायैइत्यर्थः ॥ तथाचब्रह्मांडपुराणेमिथ्याजगदधिष्ठानेति ॥ कूटस्थायैदेहद्वयाधिष्ठानंकूटवन्निर्विकारंचैतन्यंकूटस्थंतद्रूपायै ॥ अर्धमात्रार्थःपरंब्रह्म ॥ अर्धमात्रात्मिकादेवीब्रह्मानंदैकविग्रहा ॥ भुवनाधीश्वरीतुर्यातीताविश्वविमोहिनीतिश्रुतेः ॥ अकारोभगवान्ब्रह्माउकारोविष्णुरुच्यते ॥ मकारोभगवान्रुद्रअर्धमात्रापरंपदम् ॥ अर्धमात्रास्थितानित्येतिस्मृतेश्चतद्रूपिण्यै ॥ हृल्लेखायैप्रत्यगात्मभूतायै ॥२९॥ इत्थंनिर्गुणब्रह्मरूपत्वेनवर्णयित्वाकारणब्रह्मत्वेनस्तौति ॥ ज्ञातमिति ॥ त्वयिसन्निविष्टंस्थितमित्यर्थः ॥ तेब्रह्मरूपिण्याअस्यजगतःकरणेयाशक्तिर्मायाख्यासकललोकमयीतिप्रसिद्धाऽस्तिसाज्ञाताम्या ॥ नखदर्पणमध्येऽनेकब्रह्मांडदर्शनात् ॥ सर्वंखल्विदमेवाहंनान्यदस्तिसनात

मज्जन्मपंकजंतत्रस्थितोऽहंचतुराननः ॥ शेषशायीजगन्नाथस्तथाचमधुकैटभौ ॥ २० ॥ श्रीभगवानुवाच ॥ एवंदृष्टंमयातत्रपादपद्मनखेस्थितम् ॥ विस्मितोऽहंततोवीक्ष्यकिमेतदितिशंकितः ॥ २१ ॥ विष्णुश्चविस्मयाविष्टः शंकरश्चतथास्थितः ॥ तांतदामेनिरेदेवींवयंविश्वस्यमातरम् ॥ २२॥ ततोवर्षशतंपूर्णंव्यतिक्रांतंप्रपश्यतः ॥ सुधामयेशिवेद्वीपेविहारंविविधंतदा ॥२३॥ सख्यइवतदातत्रमेनिरेऽस्मानवस्थितान् ॥ देव्यः प्रमुदिताकारानानाभरणमंडिताः ॥२४ ॥ वयमप्यतिरम्यत्वाद्भूविमविमोहिताः ॥ प्रहृष्टमनसःसर्वेपश्यन्भावान्मनोरमान् ॥२५ ॥ एकदातांमहादेवींदेवींश्रीभुवनेश्वरीम् ॥ तुष्टावभगवान्विष्णुर्युवतीभावसंस्थितः ॥२६॥ श्रीभगवानुवाच ॥ नमोदेव्यैप्रकृत्यैचविधात्र्यैसततंनमः ॥ कल्याण्यैकामदायैचवृद्ध्यैसिद्ध्यैनमोनमः ॥ २७ ॥ सच्चिदानंदरूपिण्यैसंसारारणयेनमः ॥ पंचकृत्यविधात्र्यैतेभुवनेश्यैनमोनमः ॥ २८ ॥ सर्वाधिष्ठानरूपायैकूटस्थायैनमोनमः ॥ अर्धमात्रार्थभूतायैहृल्लेखायैनमोनमः ॥२९॥ ज्ञातंमयाऽखिलमिदंत्वयिसन्निविष्टंत्वत्तोऽस्यसंभवलयावपिमातरद्य ॥ शक्तिश्चतेऽस्यकरणेविततप्रभावाज्ञाताऽधुनासकललोकमयीतिनूनम् ॥ ३० ॥ विस्तार्यसर्वमखिलंसदसद्विकारंसंदर्शयस्यविकलंपुरुषायकाले ॥ तत्त्वैश्चषोडशभिरेवचसप्तभिश्चभासींद्रजालमिवनः किलरंजनाय ॥ ३१॥ नत्वामृतेकिमपिवस्तुगतंविभातिव्याप्यैवसर्वमखिलंत्वमवस्थिताऽसि ॥ शक्तिंविनाव्यवहृतौपुरुषोप्यशक्तोबंभण्यतेजननिबुद्धिमताजनेन ॥ ३२ ॥

नमितिभगवत्युक्तेश्च ॥ तस्मात्सर्वकारणभूतात्वमेवासीतिभावः ॥ ३० ॥ इत्थंकारणब्रह्मरूपिणींवर्णयित्वामायाशक्तिमात्रांवर्णयति ॥ विस्तार्येति ॥ सत्आकाशवायुरूपममूर्तभूतद्वयम् ॥ असत्तेजोजलभूमिरूपंमूर्तभतत्रयम् ॥ तयोर्विकारंतत्परिणामरूपंसर्वंजगत्विस्तार्यपुरुषायचेतनायभोक्रेदर्शयसि ॥ किमर्थंरंजनायतस्यनानाप्रकारैर्भोगंकर्तुमित्यर्थः॥ एतादृशी षोडशभिस्तत्त्वैःसांख्योक्तैस्तद्रूपैःपरिणता तथासप्तभिश्चमहदाद्यैस्तत्त्वैस्तद्रूपैःपरिणतात्वंनोऽस्माकमिंद्रजालमिवविलक्षणाभासि ॥ अनिर्वचनीयेत्यर्थः ॥ यदाहुःसांख्याः ॥ मूलप्रकृतिरविकृतिर्महदाद्याःप्रकृतिविकृतयःसप्त ॥ षोडशकस्तुविकारइति ॥ ३१ ॥ त्वामृतेकिमपिवस्तुनैवास्तीतिव्याप्तिमाह ॥ नत्वामिति ॥ यद्वस्तुभासतेतन्नामरूपविशिष्टमेवभासते तच्चनामरूपंत्वद्रूपमेवततस्तवव्याप्तिरव्याहतेतिभावः ॥ ३२ ॥

प्रीणासीति ॥ इदंविश्वंप्रकटीकरोष्युत्पादयसितथाप्रीणासिअंतर्भावितण्यर्थात्तोषयसितेनत्वंकरुणावत्यसीतिभाति ॥ प्रलयकालेसर्वमत्सिभक्षयसितेनचक्रूरेतिभासीतितेवैभवस्यैश्वर्यं स्यचरितंकोवेदनकोपीत्यर्थः ॥ ३३ ॥ अस्त्वन्यत्रकथंचिदस्मासुतु त्वमतिकरुणावत्यसीतिनिदर्शनमाह ॥ त्रातावयमिति ॥ रक्षिता मधुकैटभाभ्यांसकाशात् ॥ सुखस्यभवनेमणिद्वीपे नीताआनीताःपरमांचकोटिंनीताः प्रापिताः ॥ यद्यस्मात्तवमहाप्रभावंदर्शनंजातंतस्मादित्यर्थः ॥ नह्येतत्करुणामंतरासंभवतितस्मादस्मासुकरुणावत्येवेतिभावः ॥ ३४ ॥ नाहंभवइति ॥ यानीहनखदर्पणेदृष्टानिभुवनानिताहृशान्यन्यानिकानिकतिसंख्यानितत्रास्मिन्प्रभावेचरितेरचनाकलापरूपेसंतितानिकोवेदनकोपीत्यर्थः ॥ ३५ ॥ अस्माभिरिति ॥ यथास्मिन्भुवने अस्माभिर्ब्रह्मादयोदृष्टाःसंतितथाऽन्येषुभुवनेषुकिंनसंतिसंत्येव ॥ कथमिदंभविष्यतीतिचेत्तववैभवस्यचरितंकोवेदनकोऽपीत्यर्थः ॥ तववैभवेनसंभविष्यतीतिभावः ॥ ३६ ॥ ३७ ॥

प्रीणासिविश्वमखिलंसततंप्रभावैःस्वैस्तेजसाचसकलंप्रकटीकरोषि ॥ अत्स्येवदेवितरसाकिलकल्पकालेकोवेददेविचरितंतववैभवस्य ॥ ३३ ॥ त्राता वयं जननितेमधुकैटभाभ्यां लोकाश्चतेसुवितताःखलुदर्शितावै ॥ नीताःसुखस्यभवनेपरमांचकोटिंयद्दर्शनंतवभवानिमहाप्रभावम् ॥ ३४ ॥ नाहंभवोनच विरिंचिविवेदमातःकोऽन्योहिवेत्तिचरितंतवदुर्विभाव्यम् ॥ कानीहसंतिभुवनानिमहाप्रभावेह्यस्मिन्भवानिचरितेरचनाकलापे॥ ३५ ॥ अस्माभिरत्र भुवनेहरिरन्यएवदृष्टःशिवःकमलजःप्रथितप्रभावः ॥ अन्येषुदेविभुवनेषुनसंतिकिंतेकिंविद्मदेवि विततंतवसुप्रभावम् ॥ ३६ ॥ याचेंऽबतेऽङ्घ्रिकमलंप्रणिपत्यकामंचित्तेसदावसतुरूपमिदंतवैतत् ॥ नामापिवक्त्रकुहरेसततंतवैवसंदर्शनंतवपदांबुजयोःसदैव ॥ ३७ ॥ भृत्योऽयमस्तिसततंमयिभावनीयंत्वांस्वामिनीतिमनसानुचिंतयामि ॥ एषावयोरविरताकिलदेविभूयाद्व्याप्तिःसदैवजननीसुतयोरिवार्ये ॥ ३८ ॥ त्वंवेत्सिसर्वमखिलंभुवनप्रपंचंसर्वज्ञतापरिसमाप्तिनितांतभूमिः ॥ किंपामरेणजगदंबनिवेदनीयंयद्युक्तमाचरभवानित्वेंगितंस्यात् ॥ ३९ ॥ ब्रह्मासृजत्यवतिविष्णुरुमापतिश्चसंहारकारकइयंतुजने प्रसिद्धिः ॥ किंसत्यमेतदपिदेवितवेच्छयावैकर्तुंक्षमावयमजेतवशक्तियुक्ताः ॥ ४० ॥ धात्रीधराधरसुतेनजगद्बिभर्तिआधारशक्तिरखिलंतववैबिभर्ति ॥ सूर्योऽपिभातिवरदेप्रभयायुतस्तेत्वंसर्वमेतदखिलंविरजाविभासि ॥ ४१ ॥ ब्रह्माहमीश्वरवरःकिलतेप्रभावात्सर्वेवयंजनियुतानयदातुनित्याः ॥ केऽन्ये सुराःशतमखप्रमुखाश्चनित्यानित्यात्वमेवजननीप्रकृतिःपुराणा ॥ ४२ ॥

जननीसुतयोर्मातापुत्रयोरिवव्याप्तिःसंबंधःस्वस्वामिभावःसदैवभूयात् ॥ ३८ ॥ यतः सर्वज्ञतायाःपरिसमाप्तेर्नितांतभूमिश्चरमभूमिस्त्वमसि ॥ इंगितमभिप्रेतम् ॥ ३९ ॥ किंसत्यमेतन्नसत्यमित्यर्थः ॥ यतस्तवेच्छयातवशक्तियुक्तावयंकर्तुंक्षमानान्यथातस्मादित्यर्थः ॥ ४० ॥ त्वंप्रथमतोविरजानिर्गुणात्मरूपिणीविभासिपश्चात्तेप्रभयायुतःसूर्योविभाति ॥ तथाचश्रुतिः तमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंविभातीति ॥ ४१ ॥ तेप्रभावात्तवशक्तेर्वयंसर्वेंजानिमंतोजन्मवन्तोननित्यास्ततोऽन्योस्मदपेक्षयाजन्मवान्कोनित्यःस्यान्न-कोपीत्यर्थः किंतुत्वमेवनित्येत्यर्थः ॥ ४२ ॥

त्वंचेदिति ॥ यदिपुरुषंपुराणंत्वंदयसेदयांकरोषिब्रह्माकारमनोवृत्तिरूपब्रह्मविद्याप्रदानेनतदासस्वरूपंजानीयादितिशेषः ॥ इदंतवसन्निधिगोऽहंजानेनिश्चिनोमि ॥ अन्यथाविद्यावत्त्वे नानेकाहंकारादिधर्मवांस्तमःप्रकृतिर्मूढप्रकृतिरेवस्यात् विभुरहमनादिरहमनीहोऽहमीशोऽहमित्यादयोऽहंकारधर्मास्तद्वानस्यात्सपुरुषस्तथानंक्ष्यत्येवेतिभावः ॥ ४३ ॥ ४४ ॥ सुरपूर्व जानांदेवादिजीवानामपिसंजीवनायरक्षणायमोक्षायचाम्नायरूपःशास्त्ररूपोऽन्नसत्रस्थानीयोनिगमएवविहितोभवत्यैताहशीत्वंदयावत्यसीत्यर्थः ॥ ४५ ॥ मोक्षार्थमेवेति ॥ समुद्रतरंग वदनादिनिधनस्यब्रह्मणोयेंऽशाजीवभावंगतास्तेषांमोक्षप्राप्त्यर्थमेवस्वप्रयोजनाभावेऽपिप्रपंचंकष्टेनरचयस्येताहश्यतिदयावत्यसीतिभावः ॥ ४६ ॥ जीवोयदेति ॥ यदाजीवः कृत्यं कर्तृत्वादिकंतवैवत्वत्कर्तृकमेवपरिवेत्तिजानातिनस्वकर्तृकम् ॥ स्वयंत्वसंगोदासीनएवाहमितिविवेकतोजानाति ॥ तथाअखिलमतत्त्वमेवसंहरसीत्यपिप्रसिद्धंजानाति ॥ तदात्वंजीव

त्वंचेद्भवानिदयसेपुरुषंपुराणंजानेऽहमद्यतवसंनिधिगःसदैव॥ नोचेदहंविभुरनादिरनीहईशोविश्वात्मधीरितितमःप्रकृतिःसदैव॥४३॥विद्यात्व मेवननुबुद्धिमतांनराणांशक्तिस्त्वमेवकिलशक्तिमतांसदैव ॥ त्वंकीर्तिकांतिकमलामलतुष्टिरूपामुक्तिप्रदाविरतिरेवमनुष्यलोके ॥४४॥गायत्र्य सिप्रथमवेदकलात्वमेवस्वाहास्वधाभगवतीसगुणार्धमात्रा ॥ आम्नायएवविहितोनिगमोभवत्यासंजीवनायसततंसुरपूर्वजानाम् ॥४५॥ मोक्षा र्थमेवरचयस्यखिलंप्रपंचंतेषांगताःखलुयतोननुजीवभावम् ॥ अंशाअनादिनिधनस्यकिलानघस्यपूर्णार्णवस्यविततताहियथातरंगाः ॥ ४६ ॥ जीवोयदातुपरिवेत्तितवैवकृत्यंत्वंसंहरस्यखिलमेतदितिप्रसिद्धम् ॥ नाट्यंनटेनरचितंवितथेऽतरंगेकार्येकृतेविरमसेप्रथितप्रभावा ॥ ४७ ॥ त्रातात्वमेवममामोहमयाद्भवाब्धेस्त्वामंबिकेसततमेमिमहार्तिदेच ॥ रागादिभिर्विरचितेवितथेकिलांतेमामेवपाहिबहुदुःखकरेचकाले ॥ ४८ ॥ नमोदेविमहाविद्येनमामिचरणौतव ॥ सदाज्ञानप्रकाशंमेदेहिसर्वार्थदेशिवे ॥ ४९ ॥ इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यांसंहिता यांतृतीयस्कंधेचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ब्रह्मोवाच ॥ इत्युक्त्वाविरतेविष्णौदेवदेवेजनार्दने ॥ उवाचशंकरःशर्वःप्रणतःपुरतःस्थितः ॥ १ ॥ शिवउवाच ॥ यदिहरिस्तवदेविविभावजस्तदनुपद्मजएवतवोद्भवः ॥ किमहमत्रतवापिनसद्गुणः सकललोकविधौचतुराशिवे ॥ २ ॥

स्यासंगत्वादिज्ञानस्यसत्त्वाद्विरमसेउपशमंप्राप्नोषिस्वकृत्यात् ॥ तत्रदृष्टांतोयथावितथेमिथ्यारूपेंऽतरंगेऽतिरहस्येचमत्काररूपेकार्येकृतेनटेनरचितंनाट्यंयथाविरमतितथेत्यर्थः ॥ ४७ ॥ त्रातात्वमेवेति ॥ मोहमयाद्भवाब्धेःसकाशान्ममत्रातात्वमेवनाऽन्यः ॥ एमिअस्यशरणमितिशेषः ॥ महार्तिदेचेत्युत्तरेणकालेइत्यनेनान्वेति ॥ अंतकालेनाशकालेइत्यर्थः ॥४८॥४९॥ इतिश्रीदेवीभागवततिलकेतृतीयस्कंधेचतुर्थोऽध्यायः ॥ ४ ॥ चत्वारिंशत्पद्यकैस्तुषट्पद्यैरधिकैरथ ॥ हरस्तुत्युत्तरंब्रह्मस्तुतिरत्रापिवर्ण्यते ॥ १ ॥ ब्रह्मानारदंप्रत्याह ॥ इत्युक्त्वेति ॥ ॥ १ ॥ यदीति ॥ हेदेवियदिहरिस्तवविभावजःपराक्रमाज्जातस्तर्हितदनुतस्यविष्णोरनुपश्चाज्जायमानःपद्मजोब्रह्मापितवोद्भवस्त्वज्जन्यएव ॥ यदेवमस्तितत्राहंसद्गुणस्तमोगुणवान्तव त्वज्जन्योनकिमपितुस्त्वज्जन्यएव ॥ गुणत्रयस्यत्वत्संबंधित्वादस्माकंचतदात्मकत्वात् ॥ यतस्त्वंसकललोकविधानेचतुरासि ततोऽस्माकंजननंत्वयाकथंकृतमित्यत्रकिमाश्चर्यम् ॥ २ ॥

त्वमसीति ॥ वह्निगुणस्वरूपताप्रतिपादनंवह्निस्वरूपताप्रतिपादनस्याप्युपलक्षणम् ॥ करणानिज्ञानेंद्रियकर्मेंद्रियाणि ॥ अथअहंकृतिरहंकारः ॥ शकंध्वादित्वात्पररूपम् ॥ ३ ॥ नच विदंतीति ॥ येनिखिलंजगद्विष्णुहरब्रह्मकृतमित्यन्यथावदंतितेनशास्त्रसिद्धांतंविदंतिजानंति ॥ यतस्तेत्रयस्तवकृतास्त्वयाकृताएवजगद्विरचयंति ॥ तस्मात्त्वमेवसकलजगत्कर्त्रीति सिद्धांतइत्यर्थः ॥ ४ ॥ ननुपंचमहाभूतैरेवजगदुत्पद्यतांनेश्वरस्योपयोगइतिचेत्तत्राह अवनीति ॥ यदिपंचभूतैर्विषयसहितैःगुणसहितैःशब्दस्पर्शादिसहितैश्चजगद्भवेदितिमतंतदातद्भूत पंचकंतवकलांचिदंशरूपामृतेकथंस्फुटंभवेत् तस्यभूतपंचकस्यदृश्यत्वेनकार्यत्वात्कार्यस्यकर्त्रपेक्षत्वात्कश्चिच्चेतनःकर्ताऽपेक्षितएवेतित्वमेवजगत्कर्त्रीतिभावः ॥ ५ ॥ एकोहंबहुस्यांप्रजा येय इंद्रोमायाभिःपुरुरूपईयतइतिश्रुतिरेकैवत्वमनेकरूपाभवसीत्याह ॥ भवसीति ॥ विविधवेषैर्येविलासाःक्रीडास्तासुकुतूहलैराश्चर्यैरमसेक्रीडसेविरमसेक्रीडानंतरंप्रलयकालेविरामंच प्राप्नोषि ॥ तथाचव्याससूत्रम् ॥ लोकवत्तुलीलाकैवल्यमिति ॥ ६ ॥ अस्मासुयत्कर्तृत्वंतत्तुत्वत्सृष्टपदार्थेष्वेवाकारांतरोत्पादकत्वंघटंप्रतिकुलालस्येवेत्याह ॥ सकललोकेति ॥ एतेवयं

त्वमसिभूःसलिलंपवनस्तथाखमपिवह्निगुणश्चतथापुनः ॥ जननितानिपुनःकरणानिचत्वमसिबुद्धिमनोप्यथहंकृतिः ॥ ३ ॥ नचविदंतिवदंतिचये ऽन्यथाहरिहरजकृतंनिखिलंजगत् ॥ तवकृतास्त्रयएवसदैवतेविरचयंतिजगत्सचराचरम् ॥ ४ ॥ अवनिवायुखवह्निजलादिभिःसविषयैःसगुणै श्चजगद्भवेत् ॥ यदि तदाकथमद्यचतत्स्फुटंप्रभवतीतितवांबकलामृते ॥ ५ ॥ भवसिसर्वमिदंसचराचरंत्वमजविष्णुशिवाकृतिकल्पितम् ॥ विविधवेषविलासकुतूहलैर्विरमसेरमसेंऽबयथारुचि ॥ ६ ॥ सकललोकसिसृक्षुरहंहरिःकमलभूश्चभवामयदांऽबिके ॥ तवपदांबुजपांसुपरिग्रहं समधिगम्यतदाननचक्रिम ॥ ७ ॥ यदिदयार्द्रमनानसदांबिकेकथमहंविहितश्चतमोगुणः ॥ कमलजश्चरजोगुणसंभवःसुविहितःकिमुसत्त्वगु णोहरिः ॥ ८ ॥ यदिनतेविषमामतिरंबिकेकथमिदंबहुधाविहितंजगत ॥ सचिवभूपतिभृत्यजनावृतंबहुधनैरधनैश्चसमाकुलम् ॥ ९ ॥ तव गुणास्त्रयएवसदाक्षमाःप्रकटनावनसंहरणेषुवै ॥ हरिहरद्रुहिणाश्चक्रमात्त्वयाविरचितास्त्रिजगतांकिलकारणम् ॥ १० ॥

भवामजगत्कर्तारोभवाम ॥ कदा ॥ यदात्वत्पदरजोभूजलादिकंसमधिगम्यप्राप्यतस्याकारविशेषंचाक्रिमकृतवंतस्तदेत्यर्थः ॥ इतिपूर्वकल्पीयकथास्मारिता ॥ ७ ॥ यदिदयार्द्रेति ॥ यदिदेवीत्वंदयावतीनासि ॥ तदाप्रलयकालेसुषुप्तिमूर्च्छांगतेभ्योऽस्मभ्यंतत्तद्गुणोपाधिकंज्ञानयोग्यंदेहंकोदद्याद्यतोदेहोदत्तस्तस्माद्दयावतीत्वात्तवमय्यपिदयांकुर्वितिभावः ॥ ८ ॥ ननुममसर्वेप्राणिनःसमाएवेतिकथंतान्विहायत्वदुपर्येवदयाकर्तव्येतिचेत्तत्राह ॥ यदिनतेइति ॥ यदितवविषमामतिर्नास्तिकिंतुसमैवतर्हिसर्वेप्राणिनःसमदुःखसुखाः किमितिनकृता विषमाश्चकृतास्तत्तत्प्राणिकृतकर्मवशात्तस्मात्तवापिजगत्कर्मवशाद्विषमामतिरस्त्येवेतिमय्यपिभक्तिप्रेमयुक्तेदयांकुर्वितिभावः ॥ ९ ॥ ननुयुष्मत्पूर्वंजगन्मयाकेनसाधनेननिर्मितंतत्राह ॥ तवगुणाइति ॥ तवगुणत्रयमेवजगत्कर्तुंसमर्थमित्यर्थः ॥ तर्हिभवंतःकथंजगतांकारणमितिचेत्तत्राह ॥ हरिहरेति ॥ त्वत्सृष्टपदार्थानांपंचमहाभूतानामाकारविशेषरूपाणांत्रिजगतां कारणंवयंत्वयारचिताः ॥ त्वत्सृष्टपदार्थेष्वहंकारादिषुजगदाकारविशेषोत्पादकत्वमेवास्माकंकारणत्वंनततोऽतिरिक्तमित्यर्थः ॥ १० ॥

यदित्वद्गुणानांकर्तृत्वंनस्यात्तदाह ॥ परिचितानीति ॥ मयाहरिणाचविमानगतेनकमलजेनचएतैरस्माभिःपथिगतानिनवानिभुवनानिदृष्टानितानिकेनकृतानीतिकथय ॥ नह्यस्माकंतत्कर्तृ
त्वंकिंतुत्वद्गुणानामेवेतिभावः ॥ ११ ॥ तस्मात्त्वमेवजगत्स्रष्ट्रीत्याह ॥ सृजसीति ॥ कथंजगदेकाकिनी सृजसीतितवलीलांनविद्मइतिभावः ॥ १२॥ भगवतीसान्निध्यंप्रार्थयते ॥ जन
नीति ॥१३॥१४॥१५॥ परिचितंसेवितम् ॥ १६ ॥ १७ ॥ एतादृशंत्वत्पदांबुजंयेनभजंतितेहतभाग्याइत्याह तपसीति ॥ विभवेऐश्वर्येतपोरूपेसत्यपिपराभवोमोक्षात्सकाशात्परिक
ल्पितोजातस्तेषामित्यर्थः ॥ १८॥ तस्मान्नतपसेति ॥ नकर्मणानप्रजयाधनेनत्यागेनैकेअमृतत्वमानशुरित्यादिश्रुतेः ॥ अहमेवस्वयमिदंवदामिजुष्टंदेवेभिरुतमानुषेभिः ॥ यंकामयेतंतं

परिचितानिमयाहरिणातथाकमलजेनविमानगतेनवै ॥ पथिगतैर्भुवनानिकृतानिवाकथयकेनभवानिनवानिच ॥ ११ ॥ सृजसिपासिजग
ज्जगदंबिकेस्वकलयाकियदिच्छसिनाशितुम् ॥ रमयसेस्वपतिंपुरुषंसदातवगतिंनहिविद्मवयंशिवे ॥ १२ ॥ जननिदेहिपदांबुजसेवनंयुवति
भावगतानपिनःसदा ॥ पुरुषतामधिगम्यपदांबुजाद्विरहिताःक्वलभेमसुखंस्फुटम् ॥ १३ ॥ नरुचिरस्तिममांबपदांबुजंतवविहायशिवेभुवनेष्व
लम् ॥ निवसितुंनरदेहमवाप्यचत्रिभुवनस्यपतित्वमवाप्यवै ॥ १४ ॥ सुदतिनास्तिमनागपिमेरतिर्युवतिभावमवाप्यतवांतिके ॥ पुरुषताक्व
सुखायभवत्यलंतवपदंनयदीक्षणगोचरः ॥ १५ ॥ त्रिभुवनेषुभवत्वियमंबिकेममसदैवहिकीर्तिरनाविला ॥ युवतिभावमवाप्यपदांबुजंपरिचि
तंतवसंसृतिनाशनम् ॥ १६ ॥ भुविविहायतवांतिकसेवनंकइहवांछतिराज्यमकंटकम् ॥ त्रुटिरसौकिलयातियुगात्मतांननिकटंयदितेऽङ्घ्रिसरो
रुहम् ॥ १७ ॥ तपसियेनिरतामुनयोऽमलास्तवविहायपदांबुजपूजनम् ॥ जननितेविधिनाकिलवंचिताःपरिभवोविभवेपरिकल्पितः ॥१८॥
नतपसानदमेनसमाधिनानचतथाविहितैःक्रतुभिर्यथा ॥ तवपदाब्जपरागनिषेवणाद्भवतिमुक्तिरजेभवसागरात् ॥ १९ ॥ कुरुदयांदयसेयदि
देविमांकथयमंत्रमनाविलमद्भुतम् ॥ समभवंप्रजपन्सुखितोह्यहंसुविशदंचनवार्णमनुत्तमम् ॥ २० ॥ प्रथमजन्मनिचाधिगतोमयातदधुनानवि
भातिनवाक्षरः ॥ कथयमांमनुमद्यभवार्णवाज्जननितारयतारयतारके ॥२१॥ ब्रह्मोवाच ॥ इत्युक्तासातदादेवीशिवेनाद्भुततेजसा ॥ उच्चचारांबि
कामंत्रंप्रस्फुटंचनवाक्षरम् ॥२२॥ तंगृहीत्वामहादेवःपरांमुदमवापह ॥ प्रणम्यचरणौदेव्यास्तत्रैवावस्थितःशिवः ॥ २३ ॥ जपन्नवाक्षरंमंत्रंकाम
दंमोक्षदंतथा ॥ बीजयुक्तंशुभोच्चारंशंकरस्तत्रस्थिवांस्तदा ॥ २४ ॥

मुग्रंकृणोमितंब्रह्माणंतमृषिंतंसुमेधामितिश्रुतेश्च ॥ तवपदाब्जानिषेवणाद्यथामुक्तिःसाचझटितिभवतितथानकुत्रापीतिभावः ॥ १९ ॥ प्रजपन्सुखितःसमभवमित्यन्वयः ॥ २० ॥ न
नुनवार्णमंत्रोस्तीत्येवप्रथमतस्त्वयाकथंज्ञातामितिचेत्तत्राह ॥ प्रथमजन्मनीति ॥ पूर्वजन्मनिमयागुरोःसकाशादधिगतःप्राप्तःस्थितः ॥ सइहजन्मन्यधुनानविभातिविस्मृतत्वात्तथापिसं
स्कारस्तुतिष्ठतितस्मात्स्मरणंजातामितिभावः ॥ नवाक्षरइति ॥ नवार्णश्चंडिकामंत्रइत्यर्थः ॥ तद्विधानंचनवमस्कंधांतिमाध्यायेवक्ष्यति ॥ अनेनचब्रह्मादीनांजीवत्वंस्पष्टमेवोक्तम्
॥ २१ ॥ २२ ॥ २३ ॥ बीजयुक्तंवाक्कामममायायुक्तम् ॥ २४ ॥

॥ २५ ॥ नवेदाइति ॥ वेदास्त्वामेवंसर्वज्ञत्वादिविशिष्टांकलयितुंज्ञातुंपटवोनासन्इतिन किंतर्हिपटवएव ॥ यतस्त्वांसकलजनधात्रीमविकलांक्षुद्रकर्मणियज्ञादिषुनोचुस्तदेतत्त्वन्महि मज्ञानाभावेसंभवतिकिं नैवसंभवति तस्माज्ज्ञानतएवते ॥ ननुतर्हिसर्वथानजानंतिमामतोनोचुरित्येवकिंनस्यात्तत्राह ॥ स्वाहाभूतेति ॥ यदित्वांसर्वथानजानंतितर्हित्वदेकदेशभूतश क्तिःस्वाहाभूताकथं सकलमखहोमेषुविहितातैस्तस्माज्ज्ञानतएवते ॥ अतएवतववेदैकवेद्यत्वमस्त्येव ॥ यतस्त्वंक्षुद्रकर्मणिनविहिताततएवत्वंसर्वज्ञासर्वोत्तराजाता नत्विंद्रादिक्षुद्रदेवग णपंक्तिस्थाजातेतिभावः ॥ २६ ॥ भक्त्यभिनिवेशात्स्वधन्यतांवर्णयति कर्ताहमितिश्लोकद्वयेन ॥ कर्ताहंधन्योस्मीत्याद्येतादृशाभिमानेनकेवलगर्वाभिनिवेशान्मोहसागरेमग्नःस्थितः विलक्षणगुणाभावेऽभिमानस्यमूर्खधर्मत्वात् ॥ २७ ॥ यद्यप्येतावत्कालपर्यंतमेतादृशःस्थितस्तथाप्यद्याहंधन्योऽस्मीतिवक्ता ॥ यथार्थवादनिपुणोयथार्थवक्ताजातोस्मिमहागुणला भात् ॥ कोसौमहागुणस्तत्राह ॥ तवपादपंकजपरागस्यादानंग्रहणंतस्ययोगर्वःसएवमहान्गुणस्तेन ॥ अनेनचभक्तिनिर्भरोदर्शितः ॥ यतएतादृशीभक्तिर्निर्गुणस्यापिदुराचारवतोम

तंतथाऽवस्थितंदृष्ट्वाशंकरंलोकशंकरम् ॥ अवोचंतांमहामायांसंस्थितोऽहंपदांतिके ॥ २५ ॥ नवेदास्त्वामेवंकलयितुमिहासन्नपटवोयतस्तेनो चुस्त्वांसकलजनधात्रीमविकलाम् ॥ स्वाहाभूतादेवीसकलमखहोमेषुविहितातदात्वंसर्वज्ञाजननिखलुजातात्रिभुवने ॥ २६ ॥ कर्ताऽहंप्रक रोमिसर्वमखिलंब्रह्मांडमत्यद्भुतंकोऽन्योस्तीहचराचरेत्रिभुवनेमत्तःसमर्थःपुमान् ॥ धन्योस्म्यत्रनसंशयःकिलयदाब्रह्मास्मिलोकातिगोमग्नोऽहं भवसागरेप्रविततेगर्वाभिवेशादिति ॥२७॥ अद्याहंतवपादपंकजपरागादानगर्वेणवैधन्योऽस्मीतियथार्थवादनिपुणोजातःप्रसादाच्चते ॥ याचे त्वांभवभीतिनाशचतुरांमुक्तिप्रदांचेश्वरींहित्वामोहकृतंमहार्तिनिगडंत्वद्भक्तियुक्तंकुरु ॥ २८ ॥ अतोऽहंचजातोविमुक्तःकथंस्यांसरोजादमेया त्वदाविष्कृताद्वै ॥ तवाज्ञाकरःकिंकरोऽस्मीतिनूनंशिवेपाहिमांमोहमग्नंभवाब्धौ ॥ २९ ॥ नजानंतियेमानवास्तेवदन्तिप्रभुंमांतवाद्यंचरित्रंप वित्रम् ॥ यजंतीहयेयाजकाःस्वर्गकामानतेतेप्रभावंविदंत्येवकामम् ॥ ३० ॥ त्वयानिर्मितोऽहंविधित्वेविहारंविकर्तुंचतुर्धाविधायादिसर्गम् ॥ अहंवेद्मिकोऽन्योविवेदादिमायेक्षमस्वापराधंत्वहंकारजंमे ॥ ३१ ॥

हत्त्वप्रदा तस्मान्महार्तिनिगडंहित्वात्वद्भक्तियुक्तंकुरुइत्येवप्रार्थनाममेतिभावः ॥ २८ ॥ अतइति ॥ हेशिवेत्वदाविष्कृतात्सरोजादहंजातःकथंमुक्तःस्यामितिचिंतयायुक्तस्तवाज्ञाकरः किंकरोस्मीतिनूनंमांनिश्चित्यभवाब्धौमोहेनाविवेकेनमग्नंमामतोभक्तिप्रदानेनपाहिरक्षय ॥ २९ ॥ येतवाद्यंपवित्रंचरित्रंजगत्सर्जनादिरूपंनजानंतितेमांप्रभुंवदंति ॥ तथायेयाजकाःस्व र्गकामास्तेपितेप्रभावंनजानंति ॥ यतोमोक्षार्थंत्वामनाराध्यस्वर्गार्थमिंद्रादिदेवानेवयथेष्टंयजंतिमोहिताएवतवमाययैतेइतिभावः ॥ तदुक्तंब्रह्मांडपुराणे ॥ अश्रुतासःश्रुतासश्चयज्वानो येप्ययज्वनः ॥ स्वर्यंतोनाप्यपेक्षंतेइंद्रमग्निंचयेविदुः ॥ सिकताइवसंयंतिरश्मिभिःसमुदीरिताः ॥ अस्माल्लोकादमुष्माच्चेत्याहचारण्यकश्रुतिरिति ॥ ३० ॥ त्वयेति ॥ विहारंसंसारस र्जनादिरूपंविशेषणकर्तुमहंविधित्वेविधित्वपदव्यांत्वयानिर्मितउत्पादितःसन्नप्यादिसर्गंचतुर्धाऽडजस्वेदजजरायुजोद्भिज्जादिरूपेणविधायाहंकारादहमेववेद्मिसर्वं मत्तःकोन्योविवेदेतिवृ त्तिमान्जातस्तदहंकारजमपराधंक्षमस्व ॥ नहित्वयानिर्मितस्यैवमपराधोयुक्तइतिभावः ॥ ३१ ॥

श्रममिति ॥ मिषेणापिव्याजेनापियन्नामश्रीदेव्याःसमुच्चारितंजातुकदाचिदपिननिरंतरंतथापितन्नामोच्चारितंमोक्षप्रदंभवति ॥ इत्थंसतिमोक्षार्थंयेऽष्टांगयोगादिसाधनश्रमंकुर्वंतितेमूढा एव ॥ तदुक्तंमहाकालसंहितायाम् ॥ सहेलंवासलीलंवायस्याःस्मरणमात्रतः ॥ करामलकवन्मुक्तिस्तांनसेवेतकोजनइति ॥ ३२ ॥ विचारेपरेइति ॥ यथायोगिनोमूढाएवंसांख्याअ पिमूढाएवेत्याह ॥ विचारेइति ॥ तत्त्वसंख्याविधानेतत्त्वसंख्याविधानवतिविचारेपदेस्थानेमोहिताएतेभवाब्धौकिंनमूढाअपितुमूढाएव ॥ यतःसंसारमुक्तिप्रदात्वमेवासिततस्त्वन्नाम विहायतस्मिन्पदेमोहितामूढाः कथंनस्युरित्यर्थः ॥ ३३ ॥ अस्तुमूढानामियंवार्तापूर्णाज्ञानिनस्तुत्वयिप्रेम्णोऽतिशयात्त्वन्नामकदापिनत्यजंतीत्याह ॥ परंतत्त्वेति ॥ आद्यैर्हरिहरादि- भिर्जनैर्यैःपरंतत्त्वज्ञानमनुभूतंतेऽपिकिंनिमेषार्धमपिशिवाचांबिकाशक्तिरीशेतिनामत्यजंतिनैवत्यजंतीत्यर्थः ॥ तदुक्तंभुवनेशीसंहितायाम् ॥ आत्मानुभूतिनिष्णाताद्वैतभावविवर्जिताः॥

श्रमंयेऽष्टधायोगमार्गेप्रवृत्ताःप्रकुर्वंतिमूढाःसमाधौस्थितावै ॥ नजानंतितेनाममोक्षप्रदंवासमुच्चारितंजातुमातर्मिषेण॥ ३२ ॥ विचारेपरेतत्त्व संख्याविधानेपदेमोहितानामतेसंविहाय ॥ नकिंतेविमूढाभवाब्धौभवानित्यमेवासिससारमुक्तिप्रदावै ॥ ३३ ॥ परंतत्त्वविज्ञानमाद्यैर्जनैर्यैर जेचानुभूतंत्यजंत्येवतेकिम् ॥ निमेषार्धमात्रंपवित्रंचरित्रंशिवाचांबिकाशक्तिरीशेतिनाम॥३४॥नकिंत्वंसमर्थाऽसिविश्वंविधातुंदृशैवाशुसर्वंचतु र्धाविभक्तम् ॥ विनोदार्थमेवंविधिंमांविधायादिसर्गेकिलेदंकरोषीतिकामम् ॥३५॥ हरिःपालकःकिंत्वयाऽसौमधोर्वातथाकैटभाद्रक्षितःसिंधु मध्ये ॥ हरःसंहृतःकिंत्वयासौनकालेकथंमेभ्रुवोर्मध्यदेशात्सजातः ॥ ३६ ॥ नतेजन्मकुत्रापिदृष्टंश्रुतंवाकुतःसंभवस्तेनकोपीहवेद ॥ किला द्यासिशक्तिस्त्वमेकाभवानिस्वतंत्रैः समस्तैरतोबोधिताऽसि ॥ ३७ ॥ त्वयासंयुतोऽहंविकर्तुंसमर्थोहरिस्त्रातुमंबत्वयासंयुतश्च ॥ हरःसंप्र हर्तुंत्वयैवेहयुक्तःक्षमानाद्यसर्वेत्वयाविप्रयुक्ताः ॥ ३८ ॥ यथाऽहंहरिःशंकरःकिंतथाऽन्येनजातानसंतीहनोवाभविष्यन् ॥ नमुह्यंतिकेऽस्मि स्तवात्यंतचित्रेविनोदेविवादास्पदेऽल्पाशयानाम् ॥ ३९ ॥ अकर्तागुणस्पृष्टएवाद्यदेवोनिरीहोनुपाधिःसदेवाकलश्च ॥ तथापीश्वरस्तेविती र्णंविनोदंसुसंपश्यतीत्याहुरेवंविधिज्ञाः ॥ ४० ॥

तेऽपिप्रेम्णाभजंत्येनामित्थंसर्वोत्तमाशिवेति ॥ ३४ ॥ ३५ ॥ हरिःपालकइति ॥ यःसिंधुमध्येत्वयामधोर्वाकैटभाद्वारक्षितोहरिरसौजगतःपालकःकिंभवतिनैवभवतीत्यर्थः ॥ यःस्वर क्षणेसमर्थोनसकथमन्यपालनेसमर्थःस्यादितिभावः ॥ तथासर्वसंहारकोयदिहरस्तर्हित्वयासौकिंकालेप्रलयकालेसंहृतोनाशितः यदिननाशितस्तर्हिकथंमेभ्रुवोर्मध्यदेशात्संजातस्तस्मा त्सोऽपिसर्वसंहारकोन ॥ नहिसर्वसंहारकमन्यःसंहरेत्तस्मान्मुख्यासृष्टिस्थितिसंहारकर्त्रीत्वमेवासीतिभावः ॥ ३६ ॥ स्वतंत्रैर्वेदैरित्यर्थः ॥ ३७ ॥ त्वयाविप्रयुक्तावियुक्ताःक्षमानेत्यन्व यः ॥ ३८ ॥ अल्पाशयानामल्पबुद्धीनांविवादास्पदेसद्वाऽसद्वेत्यादिविकल्पास्पदे ॥ ३९ ॥ निर्गुणोऽपीश्वरस्तवविनोदंसंपश्यतीतिविधिज्ञाःशास्त्रज्ञावदंतीत्यन्वयः ॥ एतादृशीत्वंम हाचमत्कारकर्त्री ॥ यस्याश्चमत्कृतिंनिरीहोऽपीश्वरोवेदितुमिच्छतीति ॥ ४० ॥

इत्थंदेवींस्तुत्वास्वमनसिस्थितांशंकांदूरीकर्तुंपृच्छति ॥ दृष्टादृष्टविभेदेऽस्मिन्निति ॥ दृष्टादृष्टयोर्मूर्तामूर्तयोर्विभेदोयस्मिन्संसारेदृश्यादृश्यराशिद्वयात्मकेइत्यर्थः ॥ तस्मिन्संसारेत्वत्तः प्रागाधारभूतस्तवपरःपुमान्भवति ॥ आधाराधेययोःपूर्वापरीभावस्यलोकदृष्टयोक्तत्वात् ॥ नतुवास्तविकःपूर्वापरीभावः उभयोरप्यनादित्वस्यवेदसिद्धत्वात् ॥ तथाचैकात्वंसचैकइति तत्त्वद्वयंसिद्धम् ॥ अनेनतत्त्वद्वयेनैवसर्वप्रपंचनिर्वाहेतृतीयस्योपयोगाभावान्नान्यःकोपितृतीयोस्ति ॥ इत्थंप्रमेयेपदार्थेश्रुत्यायुक्त्यालाघवेनत्वविचारितेपदार्थद्वयमेवसिध्यति ॥ अविचारितेतुमतांतरेऽनेकानितत्त्वानिजातान्येवेतितदुपयोगाभावः ॥ ४१ ॥ तत्रैकमेवाद्वितीयंब्रह्म नेहनानास्तिकिंचनेतिश्रुतिवाक्यंकदापिमिथ्यानैवकल्पनीयम् ॥ सर्वप्रमाणमूर्धन्यत्वात् ॥ तत्रैवंसतिपदार्थद्वयमनुभवेनभासतेश्रुतिस्त्वद्वैतंवक्ति ॥ तस्माच्छ्रुत्यनुभवयोर्महान्विरोधोमयाहृदयेविशंकितस्तर्किंतइत्यर्थः ॥ ४२ ॥ तत्रश्रुतिप्रामाण्यादात्मव्यतिरिक्तस्यमिथ्यात्वं

दृष्टादृष्टविभेदेऽस्मिन्प्राक्त्वत्तोवैपुमान्परः ॥ नान्यःकोऽपितृतीयोऽस्तिप्रमेयेसुविचारिते ॥ ४१ ॥ नमिथ्यावेदवाक्यंवैकल्पनीयंकदाचन ॥ विरोधोऽयंमयाऽत्यंतंहृदयेतुविशंकितः ॥ ४२ ॥ एकमेवाद्वितीयंयद्ब्रह्मवेदावदंतिवै ॥ साकिंत्वंवाप्यसौवाकिंसंदेहंविनिवर्तय ॥ ४३ ॥ निःसंशयंनमेचेतःप्रभवत्यविशंकितम् ॥ द्वित्वैकत्वविचारेऽस्मिन्निमग्नंक्षुल्लकंमनः ॥ ४४ ॥ स्वमुखेनापिसंदेहंछेत्तुमर्हसिमामकम् ॥ पुण्ययोगाच्चमेप्राप्तासंगतिस्तवपादयोः ॥ ४५ ॥ पुमानसित्वंस्त्रीवाऽसिवदविस्तरतोमम ॥ ज्ञात्वाऽहंपरमांशक्तिंमुक्तःस्यांभवसागरात् ॥ ४६ ॥ इति श्रीदेवीभागवतेमहापुराणेऽष्टादशसाहस्र्यांसंहितायांतृतीयस्कंधेपंचमोऽध्यायः ॥ ५ ॥ ॥ ब्रह्मोवाच ॥ इति पृष्टामयादेवीविनयावनतेनच ॥ उवाचवचनंश्लक्ष्णमाद्याभगवतीहिसा ॥ १ ॥

वक्तव्यंतदाकिंत्वमात्मरूपास्युतासौपुरुषइतिसंदेहंविनिवर्तय ॥ मिथ्यापदार्थभजनेश्रद्धायाअजायमानत्वादितिनिर्णयआवश्यकइतिभावः ॥ ४३ ॥ द्वित्वैकत्वेति ॥ द्वैतंसत्यंवाऽद्वैतंसत्यंवेतिविचारेइत्यर्थः ॥ ४४ ॥ स्वमुखेनापिस्वमुखेनैवेत्यर्थः ॥ बहुपुण्ययोगेनतवपादयोःसंगतिर्लब्धाऽस्तिततएतादृशंरहस्यमेवप्रष्टव्यमितिभावः ॥ ४५ ॥ येनज्ञानेनत्वांपरमांशक्तिंज्ञात्वाभवसागरान्मुक्तःस्यामित्यर्थः ॥ ४६ ॥ इतिश्रीदेवीभागवततिलकेतृतीयस्कंधे पंचमोऽध्यायः ॥ ५ ॥ ॥ पंचाशीतिमहापद्यैरर्धश्लोकाधिकैरथ ॥ श्रीदेव्याउपदेशश्चब्रह्मणेकृतईर्यते ॥ १ ॥ ब्रह्मप्रश्नोत्तरंश्रीदेवीनिजरूपोपदेशंचकारेत्याह ॥ इतिपृष्टेति ॥ १ ॥

सदैकत्वमिति ॥ यत्त्वयोक्तमद्वैतंसत्यंचेद्वैतस्यमिथ्यात्वाद्वैतांतर्गतएवमायादिपदार्थः संभवतीतिमिथ्यापदार्थभजनेश्रद्धानजायतइतित्वंब्रह्मरूपिण्यसिवाततोभिन्नाऽसिचेति तत्रैतदु
च्यते ॥ सत्यमद्वैतमेवतथाप्यद्वैतरूपाद्ब्रह्मणोनाहंभिन्नाऽस्मिशक्तेश्शक्ताव्यतिरेकात् ॥ अग्न्यादिशक्तीनाममेर्व्यतिरेकेणादर्शनात् ॥ द्विविधंहिशक्तिरूपंकार्यंकारणंच ॥ तत्रकार्यरूप
मावरणविक्षेपादिरूपंततुशक्तिमद्रूपात्पृथगेवभासते ॥ अहमज्ञोहंसुखीदुःखीचेत्याद्यनुभवात् ॥ अग्निरूपाद्भिन्नत्वेनभासमानदाहस्फोटादिशक्तिकार्यवत् ॥ यच्चकारणभूतंमहामायारू
पंनतच्छक्तिमतोब्रह्मणः पृथगवभासतेअग्नेर्दाहादिकार्यभिन्नदाहादिकार्यजनकशक्तेर्भेदेनादर्शनात्स्वात्मन्यावरणविक्षेपभिन्नावरणविक्षेपजनकमहामायाशक्तेरनुभवाच्च ॥ तस्याः सद्भा
वेतर्हिकिंप्रमाणमितिचेत्तदावरणविक्षेपरूपकार्यान्यथानुपपत्तिः ॥ श्रुत्यादिकंचेतिब्रूमः ॥ तत्रैवंसति यथाग्नौहोमेग्निशक्त्यांहोमोऽर्थसिद्धोयथावाऽग्निशक्तौहोमेऽग्नौहोमोऽर्थसिद्धएवंब्रह्मो
पासनायामपिममोपासनार्थादेवसिद्धाममोपासनायामपिब्रह्मोपासनार्थादेवसिद्धा ॥ तथाचोभयत्रमायोपासनायांब्रह्मोपासनायांचमायाविशिष्टब्रह्मरूपमेवोपास्यंभवति ॥ तथाचम
मोभयात्मकत्वादेकस्यभागस्यमायारूपस्यममिथ्यात्वेऽपिद्वितीयभागस्यब्रह्मरूपस्यममसत्यत्वान्नाद्वैतश्रुतिविरोधोनवोपासनायामश्रद्धास्यात् ॥ अयंतुभ्रमः सर्वेषाम् ॥ मायोपास
नामायायाएवब्रह्मोपासनाब्रह्मणएवेति॥तस्मात्केवलमायायाः कारणभूतायाब्रह्मानधिष्ठितायाउपास्यत्वासंभवेनमायाविशिष्टंब्रह्मैवसर्वेषामुपास्यमिति ॥ तदेवचममपुरुषस्वरूपमिति

देव्युवाच ॥ सदैकत्वंनभेदोऽस्तिसर्वदैवममास्यच ॥ योऽसौसाहमहंयोसौभेदोऽस्तिमतिविभ्रमात् ॥ २ ॥ आवयोरंतरंसूक्ष्मंयोवेदमति
मान्हिसः ॥ विमुक्तःसतुसंसारान्मुच्यतेनात्रसंशयः ॥ ३ ॥ एकमेवाद्वितीयंवैब्रह्मनित्यंसनातनम् ॥ द्वैतभावंपुनर्यातिकालउत्पित्सुसंज्ञके
॥ ४ ॥ यथादीपस्तथोपाधेर्योगात्संजायतेद्विधा ॥ छायेवादर्शमध्येवाप्रतिबिंबंतथाऽऽवयोः ॥ ५ ॥

नकश्चिद्दोषलेशइति ॥ इदंसर्वमुपोद्घातएवस्पष्टीकृतंतदेतत्सर्वंमनसिनिधायश्रीदेव्युवाच ॥ सदैकत्वमिति ॥ तदुक्तंपावकस्योष्णतेवेयमुष्णांशोरिवदीधितिः ॥ चंद्रस्यचंद्रिकेवेयंशि
वस्यसहजाध्रुवेति ॥ योऽसौपरमात्मासएवाहमस्मि अहंयास्मिसएवयोऽसौपरमात्मासोऽस्ति ॥ शक्तिशक्तिमतोरभेदात् ॥ मातविभ्रमादिति ॥ शक्तिःशक्तिमतोभिन्नेतिभेदोभ्रममूल
कएवेत्यर्थः ॥ २ ॥ आवयोःशक्तिशक्तिमतोरंतरंभेदः ॥ कार्यरूपेणशक्तिःशक्ताद्भिन्नेतिरूपस्तंयोवेदअर्थात्कारणशाक्तरूपस्यब्रह्मणासहाऽभेदंयोवेद सपुरुषोमायाशक्तिज्ञानसमयेएव
तदभिन्नब्रह्मज्ञानवान्सन्ज्ञानसमयेएवविमुक्तःसन्नपिदेहांतेसंसारान्मुच्यते ॥ विदेहकैवल्यंप्राप्नोतीत्यर्थः ॥ यद्वाऽऽवयोरंतरंनाम्नैवभेदोनस्वरूपतोभेदस्तंयोवेदेतिसमानार्थम् ॥ ३ ॥
यद्येकमेवब्रह्मतर्हीदंद्वैतंकस्मादागतमितिचेत्तत्राह ॥ एकमेवेति ॥ कालेउत्पित्सुसंज्ञकेउत्पादनेच्छावतिकालेसृष्टिकालेइत्यर्थः ॥ ४ ॥ यथादीपइति ॥ यथादीपएकःसन्नप्युपा
धियोगादनेकधाभवति ॥ तथामायातत्कार्योपाधिभेदादात्मैकोऽपिद्विधाऽनेकदृश्यादृश्यकोटिभेदेनद्विधाभवति ॥ यथामुखमेकमप्युपाधिदर्पणभेदात्प्रतिबिंबरूपेणबहुधाभवतियथा
वापुरुषस्यछायोपाधिभेदादनेकधाभवतितथैवावयोःप्रतिबिंबंमायाकार्यांतःकरणरूपोपाधिष्वनेकधाभवति ॥ ५ ॥

किमर्थमयंभेदोभवतितत्राह ॥ सर्गार्थमिति ॥ अयंभावः ॥ नियतकालपरिपाकानांकर्मणांमध्येपरिपक्कानामुपभोगेनक्षयादितरेषांचापरिपक्कानांभोगासंभवेनतदर्थायाः सृष्टेरनुपयोगात्प्राकृतः प्रलयो भवति तस्मिन्प्रलयेसर्वंजगद्बीजरूपेणमायायांलीनंभवति मायाचग्रस्तसमस्तप्रपंचाब्रह्माभेदेनतिष्ठति ॥ तदानिस्तरंगसमुद्रकल्पंब्रह्मनिरीहंतथैवातिष्ठति यदधिकृत्योच्यते ॥ नासदासीन्नोसदासीत्तदानींनासीद्रजोनोव्योमापरोयदित्यादितुच्छयेनाभ्वपिहितमित्यंतम् ॥ परिपक्केषुतुकर्मसुतत्तत्कालकर्मवशात्क्षेत्रस्थंबीजंयथोच्छूनंभवति तथैवाद्वैतंनिरीहंब्रह्मापि कालकर्मवशादुच्छूनंभवति ॥ पश्चादंकुरस्ततःशाखास्ताभ्यःपत्राणि ततःपुष्पंततःफलमेवक्षेत्रबीजवदत्रापिमायाबीजादंकुरादिकंजायते ॥सचोच्छूनतादिपरिणामोमायायाएवन ब्रह्मणस्तस्यनिरवयत्वान्मायायाश्चसावयवत्वात्परिणामेसावयववस्तुनएवापेक्षणात् ॥ ब्रह्मतुविवर्तोपादानं तद्विनामायायाःसत्तास्फूर्त्योरभावेनपरिणामायोगात् ॥ तथाचमायायांतत्कार्येचब्रह्मणोनुस्यूतत्वाद्यावंतोमायाभेदास्तावंतएवब्रह्मणोभेदाःसर्गार्थंजाताइति ॥ यदैवंजातंतदाद्वैविध्येसतिदृश्यादृश्यभेदोऽपिसर्वथाजातः ॥ ६ ॥ तथाचाहं

भेदउत्पत्तिकालेवैसर्गार्थंप्रभवत्यज॥दृश्यादृश्यविभेदोऽयंद्वैविध्येसतिसर्वथा॥६॥नाहंस्त्रीनपुमांश्चाहंनक्लीबंसर्गसंक्षये॥सर्गेसतिविभेदःस्यात्कल्पितोऽयंधियापुनः॥७॥अहंबुद्धिरहंश्रीश्चधृतिःकीर्तिः स्मृतिस्तथा॥श्रद्धामेधादयालज्जाक्षुधातृष्णातथाक्षमा॥८॥कांतिःशांतिःपिपासाचनिद्रातंद्राजराऽजरा॥विद्याविद्यास्पृहावांछाशक्तिश्चाशक्तिरेवच ॥९॥वसामज्जाचत्वक्चाहंदृष्टिर्वागनृतानृता॥परामध्याचपश्यंतीनाड्योऽहंविविधाश्चयाः॥१०॥किंनाहंपश्यसंसारेमद्वियुक्तंकिमस्तिहि॥सर्वमेवाहमित्येवंनिश्चयंविद्धिपद्मज॥११॥एतैर्मेनिश्चितैरूपैर्विहीनंकिंवदस्वमे॥तस्मादहंविधेचास्मिन्सर्गेवैवितताऽभवम्॥१२॥नूनंसर्वेषुदेवेषुनानानामधराह्यहम्॥ भवामिशक्तिरूपेणकरोमिचपराक्रमम् ॥१३॥ गौरीब्राह्मीतथारौद्रीवाराहीवैष्णवीशिवा ॥ वारुणीचाथकौबेरीनारसिंहीचवासवी ॥१४॥ उत्पन्नेषुसमस्तेषुकार्येषुप्रविशामितान्॥करोमिसर्वकार्याणिनिमित्तंतंविधायवै॥१५॥जलेशीतंतथावह्नावौष्ण्यंज्योतिर्दिवाकरे॥निशानाथेहिमाकामंप्रभवामियथातथा॥१६॥मयात्यक्तंविधेनूनंस्पंदितंनक्षमंभवेत्॥जीवजातंचसंसारेनिश्चयोऽयंब्रुवेत्वयि॥१७॥अशक्तःशंकरोहंतुंदैत्यान्किलमयोज्झितः॥शक्तिहीनंनरंब्रूतेलोकश्चैवातिदुर्बलम् ॥ १८ ॥

मायाविशिष्टब्रह्मरूपिण्येवनपुरुषरूपाक्लीबरूपावानवास्त्रीरूपेत्याह ॥ नाहंस्त्रीति ॥ सर्वसंक्षयेप्रलयेइदंकिमपिनास्तिअहंपुरुषोवास्त्रीवेति पुनःसर्गेसतिजीवानुग्रहार्थमयंभेदोमयाधियास्ववृत्त्यात्मिकयाकल्पितः ॥ ७ ॥ भेदानामानंत्येप्युदाहरणार्थंकांश्चिद्भेदानाह ॥ अहंबुद्धिरिति ॥ ८ ॥ ९॥१०॥ सर्वमेवाहमिति एकोहंबहुस्यांप्रजायेय इंद्रोमायाभिःपुरुरूपईयतइतिश्रुतेर्मायाविशिष्टंब्रह्मैवसर्वाकारेणभासतइतिमद्वियुक्तंवस्तुकिमस्ति नैवास्तीत्यर्थः ॥ यदिस्यात्तर्हितद्वंध्यापुत्रोपममसदेवस्यादिति ॥ ११ ॥ वितताव्यापिका ॥१२॥ १३ ॥ १४ ॥ प्रविशामितानिति ॥ तत्सृष्ट्वातदेवानुप्राविशदितिश्रुतेः ॥ तान्पदार्थानित्यर्थः ॥ अनेनचांतर्यामित्वंभगवत्यास्वास्योक्तम् ॥ निमित्तंतमिति ॥ सकरोतीतितंपुरुषंनिमित्तमात्रंविधायाहमेवसर्वंकरोमीत्यर्थः ॥ १५ ॥ हिमाशीतलाचंद्रिकेत्यर्थः ॥ १६ ॥ १७ ॥ १८ ॥

॥ १९॥ २०॥ २१॥ २२॥ २३॥२४॥ यदिच्छामीति ॥ यद्यदिच्छामितत्तत्सर्वस्वातंत्र्येणकरोमिनमत्तोन्यः कोप्यस्तीत्यर्थः ॥ २५ ॥ ननुयदित्वमेवसर्वस्वरूपात्तर्हितर्वनिरंतरंविद्य मानत्वात्सर्वप्रपंचस्यापिविद्यमानताऽस्त्येवेति जगन्मयोत्पाद्यतेइतितववचनंनसंगच्छेत ॥ अथचयदित्वत्सकाशात्त्वत्तोऽतिरिक्तमेवजगदपूर्वमुत्पद्यतइति मतम् तदात्वंसर्वरूपासी तिवचनंनसंगच्छेतेतिशंकांनिराकर्तुमाह ॥ तत्त्वानांचैवेति ॥ हेब्रह्मन्सर्वेषांतत्त्वानामसतांभावसंदेहउत्पत्तिसंदेहःकदापिनैवकर्तव्यः ॥ असतउत्पत्त्याद्याश्रयत्वायोगात् ॥ नह्यसन्वं ध्यापुत्रउत्पत्त्याद्याश्रयोभवति ॥ किंतुसद्रूपेणसतांविद्यमानानामेवतत्त्वानामुत्पत्तिरितिजानीहि ॥ २६ ॥ ननुतर्हिसतांविद्यमानानांतत्त्वानामुत्पत्त्याद्याश्रयत्वमपिनसंभवतीतिचेदावि र्भावतिरोभावावेवसत्कार्यवादेउत्पत्तिप्रलयौनान्यावित्याह ॥ कदाचिदिति ॥ यथाविद्यमानस्यैवघटस्यमृत्पिंडेष्वभावःप्रागभावआविर्भावजनकः ॥ यथावाकपालेषुघटादेर्विद्यमानस्यै

रुद्रहीनंविष्णुहीनंनवदंतिजनाःकिल ॥ शक्तिहीनंयथासर्वेप्रवदंतिनराधमम् ॥१९॥ पतितःस्खलितोभीतःशांतःशत्रुवशंगतः॥अशक्तःप्रोच्यते लोकेनारुद्रःकोपिकथ्यते ॥२०॥ तद्विद्धिकारणंशक्तिर्यथात्वंचसिसृक्षसि ॥ भविताचयदायुक्तःशक्त्याकर्तातदाऽखिलम् ॥२१॥ तथाहरिस्त थाशंभुस्तथेंद्रोऽथविभावसुः ॥ शशीसूर्योयमस्त्वष्टावरुणःपवनस्तथा ॥२२ ॥ धरास्थिरातदाधर्तुंशक्तियुक्तायदाभवेत् ॥ अन्यथाचेदशक्ता स्यात्परमाणोश्चधारणे ॥ २३ ॥ तथाशेषस्तथाकूर्मोयेऽन्येसर्वेचदिग्गजाः ॥ मद्युक्तावैसमर्थाश्चस्वानिकार्याणिसाधितुम् ॥ २४ ॥ जलंपि बामिसकलंसंहरामिविभावसुम् ॥ पवनंस्तंभयाम्यद्ययदिच्छामितथाचरम् ॥ २५॥ तत्त्वानांचैवसर्वेषांकदापिकमलोद्भव ॥ असतांभावसंदेहः कर्तव्योनकदाचन ॥२६ ॥ कदाचित्प्रागभावःस्यात्प्रध्वंसाभावएववा ॥ मृत्पिंडेषुकपालेषुघटाभावोयथातथा ॥ २७ ॥ अद्यात्रपृथिवीना स्तिक्कगतेतिविचारणे ॥ संजाताइतिविज्ञेयाअस्यास्तुपरमाणवः ॥ २८॥ शाश्वतंक्षणिकंशून्यनित्यानित्यंसकर्तृकम् ॥ अहंकाराग्रिमंचै वसप्तभेदैर्विवक्षितम् ॥ २९ ॥ गृहाणाजमहत्तत्त्वमहंकारस्तदुद्भवः ॥ ततःसर्वाणिभूतानिरचयस्वयथापुरा ॥ ३० ॥ व्रजंतुस्वानिधिष्ण्यानि विरच्यनिवसंतुवः ॥ स्वानिस्वानिचकार्याणिकुर्वंतुदैवभाविताः ॥ ३१ ॥

वाभावःप्रध्वंसाभावस्तिरोभावजनकः ॥ तथैवकारणात्मनांविद्यमानानांतत्त्वानामाविर्भावतिरोभावावेवोत्पत्तिप्रलयौनान्याविति नसत्कारणवादेसर्वात्मत्वमव्याहतमितिभावः ॥२७॥ अत्रसत्कार्यवादेऽनुभवमाह ॥ अद्यात्रेति ॥ अद्यात्रपृथिवीघटरूपानास्तिध्वंसेसतिसाक्कगतेतिविचारणेसति लोकाअस्यघटरूपायाःपृथिव्याःपरमाणवोजाताइतिवदंति ॥ तथाचपर माणुरूपेणघटस्यविद्यमानताऽस्त्येवेतिलोकसिद्धएवसत्कार्यवादइति ॥ २८ ॥ इत्थंभगवत्युपदिश्याज्ञापयति ॥ शाश्वतमिति ॥ शाश्वतमित्यादिपरस्परविरुद्धविशेषणैर्महत्त त्त्वस्यापिमायाजन्यत्वादनिर्वचनीयत्वंसूचितम् ॥ अहंकारस्याग्रेप्रथमतोभवंसप्तभेदैर्महदाद्याःप्रकृतिविकृतयःसप्तेत्येवंरूपैर्भेदैर्विवक्षितम् ॥ महत्तत्त्वादेरन्येषांतत्त्वानांसत्त्वात्स्वस्यापि स्वांतर्भावविवक्षयासप्ततोक्तिः ॥ २९ ॥ ३० ॥ इतःपरमस्मात्स्थानाद्भवंतोव्रजंतुनिर्गत्यचेदंकुर्वंत्वित्याह ॥ व्रजंत्विति ॥ दैवभाविताः प्रारब्धेनोत्पादिताः ॥ ३१ ॥

॥३२॥३३॥३४॥बीजान्महत्तत्त्वात्॥३५॥तस्मिन्बीजेकिंकिमस्तितत्राह ॥ लिंगेति ॥ लिंगशरीराणिकर्मजीवसहितानिसंतितानियथापुरापूर्ववत्पृथक्कुरु ॥ ३६ ॥ सामग्र्यंतरमाह ॥ कालकर्मस्वभावाख्यैःकारणैरिति ॥ एभिःकारणैःस्वभावभूताःस्वगुणाःसत्त्वादयःशब्दादयश्चतैश्चयुक्तंपूर्ववत्कुर्वित्यर्थः ॥ योयस्यगुणोयद्यस्यप्रारब्धंयोयस्यफलभोगस्यकालोयोयस्यस्व

गृहाणेमांविधेशक्तिंसुरूपांचारुहासिनीम् ॥ महासरस्वतींनाम्नारजोगुणयुतांवराम् ॥ ३२ ॥ श्वेतांबरधरांदिव्यांदिव्यभूषणभूषिताम् ॥ वरासनसमारूढांक्रीडार्थंसहचारिणीम् ॥३३॥ एषासहचरीनित्यंभविष्यतिवरांगना ॥ माऽवमंस्थाविभूतिंमेमत्वापूज्यतमांप्रियाम् ॥ ३४ ॥ गच्छत्वमनयासार्धंसत्यलोकंबताशुवै ॥ बीजाच्चतुर्विधंसर्वंसमुत्पादयसांप्रतम् ॥३५॥ लिंगकोशाश्चजीवैस्तैःसहिताःकर्मभिस्तथा ॥ वर्ततेसंस्थिताःकालेतान्कुरुत्वंयथापुरा ॥ ३६ ॥ कालकर्मस्वभावाख्यैःकारणैःसकलंजगत् ॥ स्वभावस्वगुणैर्युक्तंपूर्ववत्सचराचरम् ॥ ३७ ॥ माननीयस्त्वयाविष्णुःपूजनीयश्चसर्वदा ॥ सत्त्वगुणप्रधानत्वादधिकःसर्वतःसदा ॥३८॥ यदायदाहिकार्यंवोभविष्यतिदुरत्ययम् ॥ करिष्यतिपृथिव्यांवैअवतारंतदाहरिः ॥३९॥ तिर्यग्योनावथान्यत्रमानुषींतनुमाश्रितः ॥ दानवानांविनाशंवैकरिष्यतिजनार्दनः ॥४०॥भवोऽयंतेसहायश्चभविष्यतिमहाबलः ॥ समुत्पाद्यसुरान्सर्वान्विहरस्वयथासुखम् ॥४१॥ ब्राह्मणाःक्षत्रियावैश्यानानायज्ञैःसदक्षिणैः ॥ यजिष्यंतिविधानेनसर्वान्वःसुसमाहिताः ॥४२॥ मन्नामोच्चारणात्सर्वेमखेषुसकलेषुच ॥ सदातृप्ताश्चसंतुष्टाभविष्यध्वंसुराःकिल ॥४३॥ शिवश्चमाननीयोवैसर्वथायत्तमोगुणः॥यज्ञकार्येषुसर्वेषुपूजनीयःप्रयत्नतः॥४४॥ यदापुनःसुराणांवैभयं दैत्याद्भविष्यति ॥ शक्तयोमेतदोत्पन्नाहरिष्यंतिसुविग्रहाः ॥ ४५ ॥ वाराहीवैष्णवीगौरीनारसिंहीसदाशिवा॥एताश्चान्याश्चकार्याणिकुरुत्वंकमलोद्भव ॥४६॥ नवाक्षरमिमंमंत्रंबीजध्यानयुतंसदा ॥जपन्सर्वाणिकार्याणिकुरुत्वंकमलोद्भव ॥४७॥ मंत्राणामुत्तमोयंवैत्वंजानीहिमहामते ॥ हृदयेतेसदाधार्यःसर्वकामार्थसिद्धये ॥४८॥ इत्युक्त्वामांजगन्माताहरिंप्राहशुचिस्मिता ॥ विष्णोव्रजगृहाणेमांमहालक्ष्मींमनोहराम् ॥४९॥ सदावक्षःस्थलेस्थानेभवितानात्रसंशयः॥ क्रीडार्थंतेमयादत्ताशक्तिःसर्वार्थदाशिवा ॥५०॥ त्वयेयंनावमंतव्यामाननीयाचसर्वदा ॥ लक्ष्मीनारायणाख्योऽयंयोगोवैविहितोमया ॥५१॥ जीवनार्थंकृतायज्ञादेवानांसर्वथामया ॥ अविरोधेनसंगेनवार्तितव्यंत्रिभिःसदा ॥५२॥ त्वचवेधाःशिवस्त्वेतेदेवामद्गुणसंभवाः ॥ मान्याःपूज्याश्चसर्वेषांभविष्यंतिनसंशयः ॥ ५३ ॥ येविभेदंकरिष्यंतिमानवामूढचेतसः ॥ निरयंतेगमिष्यंतिविभेदान्नात्रसंशयः ॥ ५४ ॥

भावभूतोगुणस्तस्मिन्कालेतादृशकर्मगुणानुरोधेनतादृशंफलंदेयमित्यर्थः ॥ ३७ ॥ ३८॥३९॥४०॥४१॥४२॥ मन्नामस्वाहेति ॥४३॥४४॥४५॥ एताश्चान्याश्चेत्यस्यहरिष्यंतीतिपूर्वेणान्वयः ॥ ४६ ॥ नवाक्षरमिमंमंत्रमिति ॥ सचदुर्गायानवार्णःप्रसिद्धः ॥ एतद्विधानंनवमस्कंधांतिमाध्यायेवक्ष्यति ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥

॥ ५५ ॥ अपरोगुणभेदोऽस्तीति ॥ यूयंतत्तत्कार्येषुतत्तद्गुणयुक्ताभावितारः ॥ अन्यकार्येषुत्वन्यगुणयुक्ताइतिगुणत्रयात्मकत्वमेवसर्वेषामितिभावः ॥ ५६ ॥ यदायोगुणोमुख्यस्तदाऽन्यौगुणौगौणत्वेएवस्थितौस्याताम् ॥ ५७ ॥ ५८ ॥ वाग्बीजंकामराजंचेति ॥ अयंचत्र्यक्षरोभुवनेशीमन्त्रोभुवनेशीसंहितायांप्रसिद्धः ॥ ध्यानपूजादियंत्रादिकंचतत्रैवस्पष्टम् ॥५९॥ ॥ ६० ॥ विहारःक्रीडाजगत्सर्जनादिरूपा ॥ ६१ ॥ ६२ ॥ उद्गीथेनेति ॥ प्रणवेनसंयुक्तोऽयंमंत्रोजप्यइत्यर्थः ॥ तथाच प्रणवादिचतुरक्षरोमंत्रः सम्पन्नः ॥ ६३॥६४॥६५॥६६ ॥

योहरिःसशिवःसाक्षाद्यःशिवःसस्वयंहरिः ॥ एतयोर्भेदमातिष्ठन्नरकायभवेन्नरः ॥ ५५ ॥ तथैवद्रुहिणोज्ञेयोनात्रकार्याविचारणा ॥ अपरो गुणभेदोऽस्तिशृणुविष्णोब्रवीमिते ॥ ५६ ॥ मुख्यःसत्त्वगुणस्तेऽस्तुपरमात्मविचिंतने ॥ गौणत्वेऽपिपरौख्यातौरजोगुणतमोगुणौ ॥ ५७ ॥ लक्ष्म्यासहविकारेषुनानाभेदेषुसर्वदा ॥ रजोगुणयुतोभूत्वाविहरस्वानयासह ॥ ५८ ॥ वाग्बीजंकामराजंचमायाबीजंतृतीयकम् ॥ मंत्रोऽयंत्वंरमाकांत मद्दत्तःपरमार्थदः ॥ ५९ ॥ गृहीत्वाजपतंनित्यंविहरस्वयथासुखम् ॥ नतेमृत्युभयंविष्णोनकालप्रभवंभयम् ॥ ६० ॥ यावदेषविहारोमेभविष्यतिसुनिश्चयः ॥ संहरिष्याम्यहंसर्वंयदाविश्वंचराचरम् ॥ ६१ ॥ भवंतोऽपितदानूनंमयिलीनाभविष्यथ ॥ स्मर्तव्योऽयंसदामंत्रःकामदोमोक्षदस्तथा ॥ ६२ ॥ उद्गीथेनचसंयुक्तःकर्तव्यःशुभमिच्छता ॥ कारयित्वाथवैकुंठंवस्तव्यंपुरुषोत्तम ॥ ६३ ॥ विहरस्वयथाकामंचिंतयन्मांसनातनीम् ॥ ब्रह्मोवाच ॥ इत्युक्त्वावासुदेवंसात्रिगुणाप्रकृतिःपरा ॥ ६४ ॥ निर्गुणाशंकरंदेवमवोचदमृतंवचः ॥ देव्युवाच ॥ गृहाणहरगौरींत्वंमहाकालींमनोहराम् ॥ ६५ ॥ कैलासंकारयित्वाचविहरस्वयथासुखम् ॥ मुख्यस्तमोगुणस्तेऽस्तुगौणौसत्त्वरजोगुणौ ॥ ६६ ॥ विहरासुरनाशार्थंरजोगुणतमोगुणौ ॥तपस्तप्तंतथाकर्तुंस्मरणंपरमात्मनः ॥ ६७ ॥ शर्वसत्त्वगुणःशान्तोगृहीतव्यःसदाऽनघ ॥ सर्वथात्रिगुणायूयंसृष्टिस्थित्यंतकारकाः ॥ ६८ ॥ एभिर्विहीनंसंसारेवस्तुनैवात्रकुत्रचित् ॥ वस्तुमात्रंतुयद्दृश्यंसंसारेत्रिगुणंहितत् ॥ ६९ ॥ दृश्यंचनिर्गुणंलोकेनभूतंनोभविष्यति ॥ निर्गुणःपरमात्माऽसौनतुदृश्यःकदाचन ॥ ७० ॥ सगुणानिर्गुणाचाहंसमयेशंकरोत्तमा ॥ सदाऽहंकारणंशंभोनचकार्यंकदाचन ॥ ७१ ॥ सगुणाकारणत्वाद्वैनिर्गुणापुरुषांतिके ॥ महत्तत्त्वमहंकारोगुणाःशब्दादयस्तथा ॥ ७२ ॥

॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ समयइति ॥ सृष्ट्यादिसमयेसगुणासमाधिसमयेनिर्गुणा ॥ सदाऽहमिति ॥ अहंहेशंभोकार्यंकदापिनास्मिममानादिसिद्धत्वेनोत्पत्त्यभावात्किंतुसर्वकारणरूपैवास्मीत्यर्थः ॥ ननुनिर्गुणायास्तवकारणत्वमपिकथमितिचेत्तत्राह सगुणेति ॥नममसदानिर्गुणत्वं किंतुपरमात्माभिन्नांतर्हितगुणत्रयसाम्यावस्थायामुद्भूतगुणाभावेननिर्गुणाऽहम् ॥ सृष्ट्यादिदशायांतुसगुणैवास्मि ॥ ततश्चकारणत्वंनविरुध्यतइतिभावः ॥ ७१ ॥ कारणत्वंविशदयति । महत्तत्त्वमिति ॥ शब्दादयःशब्दस्पर्शादयोगुणाइत्यर्थः ॥ ७२ ॥

कार्यकारणरूपेणेति ॥ पूर्वपूर्वस्यकारणत्वमुत्तरोत्तरस्यकार्यत्वंतद्रूपेणसंसरंतेपरिणमंत्यहर्निशंनकदाचिद्विरामोस्ति ॥ तत्रमहत्तत्त्वमव्यक्तात्केनक्रमेणोत्पद्यतेतत्राह ॥ सदुद्भूतस्त्वहंकारइति ॥ अहंकारोद्विविधः ॥ एकःपराहंतारूपोद्वितीयोमहत्तत्त्वादुत्पन्नः ॥ पराहंतारूपश्चबृहदारण्यकेसोवेदहंब्रह्मास्मीतिवृत्तिरूपउक्तः ॥ तथाचसृष्टिसमयेयःप्रथमोभावोव्यक्तस्यपरावाणीरूपोयमहमस्मीत्युत्पन्नःपराहंतारूपःसोहंकारःसदुद्भूतः ॥ सदेवसोम्येदमग्रआसीदित्यत्रोक्तात्सतउत्पन्नइत्यर्थः ॥ तेनहेतुनाऽहमव्यक्तरूपाकारणंपराहंतारूपाहंकारस्येत्यर्थः ॥ ७३ ॥ सचपराहंतारूपोऽहंकारोऽपिमत्कार्यभूतोगुणत्रयात्मकःप्रतिष्ठितोऽस्ति ॥ सर्वस्यैवपदार्थजातस्यगुणत्रयात्मकत्वात् ॥ तथाचाव्यक्तात्प्रथमंपराहंतारूपोऽहंकारउत्पन्नस्ततोहंकारान्महत्तत्त्वमुत्पन्नमित्याह ॥ अहंकारान्महत्तत्त्वामिति ॥ बुद्धिःसमष्टिबुद्धिरित्यर्थः ॥ एतेनसांख्योक्तंमहत्तत्त्वमनाश्रितंभवति ॥ ७४ ॥ तन्महत्तत्त्वंहिकार्यम् अहंकारोहिपराहंतारूपस्तस्यमहत्तत्त्वस्यकारणमित्यर्थः ॥ तस्मादहंकारोद्वितीयउत्पन्नस्तस्मादहंकारात्तन्मात्रापरपर्यायाणिसूक्ष्मभूतान्युत्पन्नानि ॥ द्वितीयाहंकारस्योत्पत्तिरनेनवाक्येनार्थाद्बोधिता ॥ ७५ ॥ कारणंपंचभूतानांतानीति ॥ तानिसूक्ष्मभूतानिपंचीकृतानांपंचभूतानांकारणंभवंति ॥ अपंचीकृतभूतेभ्यःपंचीकृतपंचमहाभूतोत्पत्तिर्भवतीत्यर्थः ॥ सर्वप्रपंचस्यसमुद्भवेउत्पत्तिसमये ॥ तत्रपंचभूतानांसात्त्विकांशेभ्यःपंचज्ञानेंद्रियाणिभवंति ॥ पंचभूतानांराजसांशेभ्यःकर्मेंद्रियाणिभवंति ॥ मनस्तुपंचभूतानांमिलितसात्त्विकांशेभ्योभवतितथाप्राणोऽ

कार्यकारणरूपेणसंसरंतेत्वहर्निशम् ॥ सदुद्भूतस्त्वहंकारस्तेनाहंकारणंशिवा ॥७३॥ अहंकारश्चमेकार्यंत्रिगुणोऽसौप्रतिष्ठितः ॥ अहंका
हत्तत्त्वंबुद्धिःसापरिकीर्तिता ॥७४॥ महत्तत्त्वंहिकार्यंस्यादहंकारोहिकारणम् ॥ तन्मात्राणित्वहंकारादुत्पद्यंतेसदैवहि ॥ ७५ ॥ कारणंपंचभूतानांतानिसर्वसमुद्भवे ॥ कर्मेंद्रियाणिपंचैवपंचज्ञानेंद्रियाणिच ॥ ७६ ॥ महाभूतानिपंचैवमनःषोडशमेवच ॥ कार्यंचकारणंचैवगणोऽयंषोडशात्मकः ॥ ७७ ॥ परमात्मापुमानाद्योनकार्यंनचकारणम् ॥ एवंसमुद्भवःशंभोसर्वेषामादिसंभवे ॥ ७८ ॥ संक्षेपेणमयाप्रोक्तस्तवतत्रसमुद्भवः ॥व्रजंत्वद्यविमानेनकार्यार्थंममसत्तमाः॥७९॥स्मरणाद्दर्शनंतुभ्यंदास्येऽहंविषमेस्थिते ॥ स्मर्तव्याऽहंसदादेवाःपरमात्मासनातनः ॥८०॥

पिपंचभूतानांमिलितराजसांशेभ्योभवति ॥ ७६ ॥ तत्रकर्मेंद्रियाणिपंचपंचज्ञानेंद्रियाणिपंचभूतानिमनश्चषोडशमित्येवंकार्यमिंद्रियरूपंकारणंमहाभूतरूपंमिलित्वाऽयंगुणसमुदायःषोडशात्मकोभवति ॥ यदधिकृत्योच्यतेषोडशकस्तुविकारइति ॥ ७७ ॥ एवमष्टौप्रकृतयःषोडशविकाराश्चोक्ताः ॥ सोऽयंसर्वोऽपिपरिणामोमायायाएवनपरमात्मनइत्याह ॥ परमात्मेति ॥ परमात्मानकस्यचित्कार्यम् ॥ नकस्यापिकारणमुपादानंभवति ॥ किंतुविवर्तकारणमेवभवतीत्यर्थः ॥ एवंसमुद्भवइति ॥ आदिसंभवेआदिसर्गेईश्वरकृतसृष्टौसर्वेषामुद्भवोमत्तःसकाशादेवंभवतीतिसंक्षेपेणात्रोक्तमित्यर्थः ॥ ७८ ॥ पूर्वोक्तं श्रीदेव्यादत्तंमहत्तत्त्वंगृहीत्वाचतुर्मुखादिभिःक्रियमाणाव्यष्टिदेहादिसृष्टिर्जीवसृष्टिः ॥ इत्थंमहासृष्टिंव्याष्टिसृष्टिंचोक्त्वाऽनंतरमाह ॥ व्रजंत्विति ॥ ७९ ॥ विषमेसंकटे ॥ इदानीमुपासनास्वरूपमाह ॥ स्मर्तव्याऽहमिति ॥ परमात्मोपासनायामपिनकेवलंपरमात्मास्मर्तव्योमायायास्तदभिन्नायावह्निशक्तिवत्त्यक्तुमशक्यत्वात्तथाशक्त्युपासनायामपिनकेवलाशक्तिः स्मर्तव्या परमात्मनस्तदभिन्नस्यवह्निवत्त्यक्तुमशक्यत्वात्तस्मान्मायाविशिष्टंब्रह्मैवोभयत्रदेवतेतिब्रह्मोपासकैःशक्त्युपासकैश्चतदेवोपास्यंध्येयंज्ञेयंचेति ॥ ८० ॥

तदभिप्रायेणाह ॥ उभयोरिति ॥ सर्वचेदमुपोद्घातेस्पष्टम् ॥ ८१ ॥ मह्यंदत्त्वेतिशेषः ॥ ८२ ॥ ८३ ॥८४॥८५॥ इति श्रीदेवीभागवततिलकेतृतीयस्कंधेषष्ठोऽध्यायः ॥ ६ ॥ द्विपंचाशत्पद्यैकैस्तुप्रोक्तंतत्त्वस्वरूपकम् ॥ गुणानांभिदसंस्थानैःसाधिदैवमथोच्यते ॥ १ ॥ तास्तादेव्यआवरणदेवताः ॥१॥२॥ अच्युतिर्नाशरहितः ॥ दृष्टश्चैवेति ॥ स्वनेत्रेणदृष्टोऽनुभूतश्चस्यात्तंयथादृष्टंयथानुभूतंचवद ॥ ३ ॥ यथात्रिगुणास्थूलरूपाशक्तिर्मणिद्वीपेकरचरणादिविशिष्टादृष्टा तथानिर्गुणाऽपिदृष्टास्यात्तथाचसानिर्गुणाकीदृशीतितस्याअपिस्वरूपंब्रूहि ॥

उभयोःस्मरणादेवकार्यसिद्धिरसंशयम् ॥ ब्रह्मोवाच ॥ इत्युक्त्वाविससर्जास्मान्दत्त्वाशक्तीःसुसंस्कृतान् ॥ ८१ ॥ विष्णवेऽथमहालक्ष्मींमहाकालींशिवायच ॥ महासरस्वतींमह्यंस्थानात्तस्माद्विसर्जिताः ॥ ८२ ॥ स्थलांतरंसमासाद्यतेजाताःपुरुषावयम् ॥ चिंतयंतःस्वरूपंतत्प्रभावंपरमाद्भुतम्॥८३॥विमानंतत्समासाद्यसंरूढास्तत्रवैत्रयः॥नद्वीपोऽसौनसादेवीसुधासिंधुस्तथैवच॥पुनर्दृष्टंविमानंवैतत्रास्माभिर्नचान्यथा॥८४॥ आसाद्यतस्मिन्विततेविमानेप्राप्तावयंपंकजसन्निधौच ॥ महार्णवेयत्रहतौदुरत्ययौमुरारिणातौमधुकैटभाख्यौ ॥ ८५ ॥ इति श्रीदेवीभागवते महापुराणे तृतीयस्कंधे षष्ठोऽध्यायः॥६॥ब्रह्मोवाच॥एवंप्रभावासादेवीमयादृष्टाऽथविष्णुना॥शिवेनापिमहाभागतास्तादेव्यःपृथक्पृथक्॥१॥ व्यासउवाच ॥ इत्याकर्ण्यपितुर्वाक्यंनारदोमुनिसत्तमः ॥ पप्रच्छपरमप्रीतःप्रजापतिमिदंवचः ॥२॥ नारदउवाच ॥ पुमानाद्योविनाशीयोनिर्गुणोऽच्युतिरव्ययः ॥ दृष्टश्चैवानुभूतश्चतद्वदस्वपितामह ॥३॥ त्रिगुणावीक्षिताशक्तिर्निर्गुणाकीदृशीपितः ॥ तस्याःस्वरूपंमेब्रूहिपुरुषस्यचपद्मज ॥ ४ ॥ यदर्थंचमयातप्तंश्वेतद्वीपेमहातपः ॥ दृष्टाःसिद्धामहात्मानस्तापसागतमन्यवः ॥५॥ परमात्मानसंप्राप्तोमयाऽसौदृष्टिगोचरः ॥ पुनःपुनस्तपस्तीव्रंकृतंतत्रप्रजापते ॥ ६ ॥ भवतासगुणाशक्तिर्दृष्टातातमनोरमा ॥ निर्गुणानिर्गुणश्चैवकीदृशौतौवदस्वमे ॥ ७ ॥ व्यासउवाच॥ इति पृष्टःपितातेननारदेनप्रजापतिः ॥ उवाचवचनंतथ्यंस्मितपूर्वंपितामहः ॥८॥ ब्रह्मोवाच ॥ निर्गुणस्यमुनेरूपंनभवेद्दृष्टिगोचरम् ॥ दृश्यंचनश्वरंयस्मादरूपंदृश्यतेकथम् ॥ ९ ॥ निर्गुणादुर्गमाशक्तिर्निर्गुणश्चतथापुमान् ॥ ज्ञानगम्यौमुनीनांतुभावनीयौतथापुनः ॥ १० ॥ अनादिनिधनौविद्धिसदाप्रकृतिपूरुषौ ॥ विश्वासेनाभिगम्यौतौनाविश्वासेनकर्हिचित ॥ ११ ॥ चैतन्यंसर्वभूतेषुयत्तद्विद्धिपरात्मकम् ॥ तेजःसर्वत्रगंनित्यंनानाभावेषुनारद ॥ १२ ॥

॥४॥ एतत्परमात्मदेव्यादर्शनार्थंबहुतपस्तप्तंतथापितौनलब्धावित्याह ॥ यदर्थमिति॥५॥६॥७॥८॥दृश्यंचनश्वरमिति ॥ यस्माद्धेतोर्यद्यद्दृश्यंतत्तन्नश्वरमितिव्याप्तिस्तस्मात्परमात्मनोनश्वरत्वाभावान्नदृश्यत्वंदृश्यत्वेनश्वरत्वंस्यादेवेत्यर्थः ॥ एतेनप्रथमाध्यायोक्तस्यसाकाकथमुत्पन्नेतिजनमेजयप्रश्नस्योत्तरंव्यासेननारदब्रह्मसंवादमुखेनोक्तमितिबोध्यम् ॥ ९ ॥ १० ॥ विश्वासेनेति अस्तीत्येवोपलब्धव्यस्तत्त्वभावेनचोभयोरितिश्रुत्यनुभवविश्वासेनैवज्ञेयावित्यर्थः ॥ ११ ॥ तत्रतयोर्व्यापकत्वमाह ॥ चैतन्यमिति ॥ नानाभावेषु नानाजीवेषु ॥ १२ ॥

यथाचैतन्यंव्यापकंतथातांतदाभिन्नांशक्तिमपिव्यापिकांविद्धितस्मादुभावपिव्यापकौ॥ताभ्यांविहीनमिति ॥तथाचश्रुतिःमायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वरम् ॥ तयोर्विभूतिलेशोवैज गदेतच्चराचरमिति॥१३॥ताविति ॥ तौचपृथङ्नोपास्यौकिंतुमिश्रीभूतावेवोपास्यौ ॥ तयोर्निरंतरंमिश्रीभूतयोरेवसत्त्वात्पृथक्त्वेनैकस्याप्यवस्थानाभावादितिभावः ॥ अतएवशास्त्रेदे व्याउपासनार्थोक्तासाजडायामिथ्याभूतायाउक्तेतिनभ्रमितव्यम् ॥ तथाचमायाविशिष्टंब्रह्मैवदेवीपदवाच्यंमायापदशक्त्यादिपदवाच्यमितिसिद्धांतः॥स्पष्टंचेदमुपोद्घाते ॥१४॥ तदेव स्पष्टयति॥याशक्तिरिति॥अंतरंभेदः॥सूक्ष्ममपिनवेद ॥१५॥ यावत्पर्यंतंसत्त्वादिशुद्ध्यावैराग्यंनास्तितावत्पर्यंतंसर्वशास्त्राण्यप्यधीत्यतयोःपरमात्मदेव्योर्नाममात्रकृतंसूक्ष्ममंतरंभेदंनजा नाति किंतुस्वरूपतएवमूढोभेदंजानाति ॥ विरक्तःसत्त्वशुद्धस्तु तयोःस्वरूपतोभेदंनैवजानातीतिभावः॥१६॥ननुतद्वैराग्यंकुतोदुर्लभमितिचेत्तत्राऽऽह ॥ अहंकारेति॥ सर्वंविश्वंदेहादिष्व

तंचतांचमहाभागव्यापकौविद्धिसर्वगौ ॥ ताभ्यांविहीनंसंसारेनकिंचिद्वस्तुविद्यते ॥ १३ ॥ तौविचिंत्यौसदादेहेमिश्रीभूतौसदाऽव्ययौ ॥ एक रूपौचिदात्मानौनिर्गुणौनिर्मलावुभौ ॥ १४ ॥ याशक्तिःपरमात्माऽसौयोऽसौसापरमामता ॥ अंतरंनैतयोःकोऽपिसूक्ष्मंवेदचनारद ॥ १५ ॥ अधीत्यसर्वशास्त्राणिवेदान्सांगांश्चनारद ॥ नजानातितयोःसूक्ष्ममंतरंविरतिंविना ॥ १६ ॥ अहंकारकृतंसर्वंविश्वंस्थावरजंगमम् ॥ कथं तद्रहितंपुत्रभवेत्कल्पशतैरपि ॥ १७ ॥ निर्गुणंसगुणःपुत्रकथंपश्यतिचक्षुषा ॥ सगुणंचमहाबुद्धेचेतसासंविचारय ॥ १८ ॥ पित्तेनाच्छादिता जिह्वाचक्षुश्चमुनिसत्तम ॥ कटुपित्तंविजानातिरसंरूपंनतत्तथा ॥ १९ ॥ गुणैःसमावृतंचेतःकथंजानातिनिर्गुणम् ॥ अहंकारोद्भवंतच्चतद्विहीनं कथंभवेत् ॥ २० ॥ यावन्नगुणविच्छेदस्तावत्तद्दर्शनंकुतः ॥ तंपश्यतितदाचित्तेयदाऽहंकारवर्जितः ॥ २१ ॥ नारदउवाच ॥ स्वरूपंदेवदेवे शत्रयाणामेवविस्तरात् ॥ गुणानांयत्स्वरूपोऽस्तित्वहंकारस्त्रिरूपकः ॥ २२ ॥ सात्त्विकोराजसश्चैवतामसश्चतथापरः ॥ विभेदेनस्वरूपाणिवद स्वपुरुषोत्तम॥२३॥यज्ज्ञात्वाविप्रमुच्येऽहंज्ञानंतद्वदमेप्रभो ॥ गुणानांलक्षणान्येवविततानिविभागशः ॥ २४ ॥ ब्रह्मोवाच ॥ त्रयाणांशक्तय स्तिस्रस्तद्ब्रवीमितवानघ ॥ ज्ञानशक्तिःक्रियाशक्तिरर्थशक्तिस्तथापरा ॥ २५ ॥ सात्त्विकस्यज्ञानशक्तीराजसस्यक्रियात्मिका ॥ द्रव्यश क्तिस्तामसस्यतिस्रश्चकथितास्तव ॥२६॥ तेषांकार्याणिवक्ष्यामिशृणुनारदतत्त्वतः ॥ तामस्याद्द्रव्यशक्तेश्चशब्दस्पर्शसमुद्भवः ॥ २७ ॥

हंकारेणव्याप्तंतद्विश्वंकल्पशतैरपिकथंतद्रहितंस्यान्नचतत्सत्त्वेवैराग्यंभवति ततोवैराग्यंदुर्लभमिति ॥१७॥ तस्मान्निर्गुणंपरमात्मानंस्वयंसगुणोऽहंकारादिविशिष्टःपुरुषःकथंचक्षुषापश्यति नकथमपीत्यर्थः ॥ तस्माद्योग्यताभावात्सगुणमेवाधिकारप्राप्तिपर्यंतंचेतसासंविचारयोपास्व॥१८॥दृष्टांतमाह॥पित्तेनेति॥रसंरूपंनेति ॥ यथार्थरसंयथार्थरूपंनजानातीत्यर्थः ॥ १९ ॥ दार्ष्टांतिकमाह ॥ गुणैरिति॥तद्विहीनंगुणविहीनम्॥अहंकारस्यगुणत्रयात्मकत्वेनतदुद्भूतस्यचेतसस्तन्मयत्वेनकथंतस्यचेतसोगुणरहितत्वंस्यादित्यर्थः॥२०॥ नयावद्गुणविच्छेदस्ताव त्तयोःपरमात्मदेव्योर्दर्शनाशाऽपिनास्तीत्याह । यावन्नेति ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ त्रयाणामहंकाराणाम् ॥ तिस्रःशक्तयः॥ज्ञानजनिकाशक्तिःसात्त्विकस्य क्रियाजनिकाशक्तीरा जसस्य पृथिव्याद्यर्थरूपकार्यजनिकाशक्तिस्तामसस्येत्याह ॥ त्रयाणामिति ॥ २५ ॥२६॥ तामस्याइतितामसाहंकारसंबंधिद्रव्यजनकशक्तेःसकाशाच्छब्दादिगुणानामुत्पत्तिः ॥२७॥

एतेभ्योगुणेभ्यःशब्दैकगुणमाकाशमित्यादिक्रमेणसूक्ष्माणितन्मात्रापरपर्यायाणिपंचभूतान्युत्पद्यंतइत्याह ॥ शब्दैकगुणमिति ॥ २८ ॥ २९ ॥ पुनर्वक्ष्यमाणरीत्यापंचीकरणेकृतेस
तिद्रव्यशक्तियुततामसाहंकारानुवृत्तियुक्तोब्रह्मांडसर्गोजायतइत्याह ॥ दशैतानीति ॥ ३० ॥ राजसाहंकारसंबंधिक्रियाजनकशक्तेःकार्याण्याह ॥ राजस्याइति ॥ पंचज्ञानेंद्रियाणिपंच
कर्मेन्द्रियाणिपंचप्राणाश्चोत्पद्यंतइत्यर्थः ॥ ३१ ॥ ३२ ॥ ३३ ॥ साधनानिकिलेति ॥ साधनानिकरणसंज्ञकानींद्रियाण्येतानीत्यर्थः ॥ किंचक्रियाशक्तियुक्तत्वात्क्रियाश
क्तिमयानि ॥ एतेषांसर्वेषामुपादानंविवर्तोपादानंतुचिदनुवृत्तिश्चिदेववर्ततइत्यर्थः ॥ यद्वाउपादानंसमवायिकारणंतुचिदनुवृत्तिश्चितोनुवृत्तिरनुस्यूतता यस्यांमायायांसामायोच्य
तइत्यर्थः ॥ मायैवसर्वेषांपरिणामोपादानमित्यर्थः ॥ ३४ ॥ समुद्भवाअर्शआद्यजंतम् ॥ सात्त्विकादहंकारादधिष्ठातृदेवतादिशोवायुश्चेतिवक्ष्यमाणाउत्पन्नाइत्यर्थः ॥ ३५ ॥ अत्रज्ञा
नेन्द्रियाधिष्ठातृदेवताकथनंकर्मेन्द्रियाधिष्ठातृदेवतानामुपलक्षणम् ॥ वैकारिकादहंकाराद्द्वयोरप्युत्पन्नत्वात् ॥ चंद्रोब्रह्मेतिचतुष्टयंतुवृत्तिभेदेनचतुर्धाभिन्नस्यांतःकरणस्याधिष्ठात्रितिबो

रूपंरसश्चगंधश्चतन्मात्राणिप्रचक्षते ॥ शब्दैकगुणमाकाशंवायुःस्पर्शगुणस्तथा ॥ २८ ॥ सुरूपैकगुणोऽग्निश्चजलंरसगुणात्मकम् ॥ पृथ्वीगंधगु
णाज्ञेया सूक्ष्माण्येतानिनारद ॥ २९ ॥ दशैतानिमिलित्वातुद्रव्यशक्तियुतानिवै ॥ तामसाहंकारजःस्यात्सर्गस्तदनुवृत्तिकः ॥ ३० ॥ राज
स्याश्चक्रियाशक्तेरुत्पन्नानिशृणुष्वमे ॥ श्रोत्रंत्वग्रसनाचक्षुर्घ्राणंचैवचपंचमम् ॥ ३१ ॥ ज्ञानेंद्रियाणिचैतानितथाकर्मेंद्रियाणिच ॥ वाक्पाणि
पादपायुश्चगुह्यांतानिचपंचवै ॥ ३२ ॥ प्राणोऽपानश्चव्यानश्चसमानोदानवायवः ॥ पंचदशमिलित्वैवराजसःसर्गउच्यते ॥ ३३ ॥ साधना
निकिलैतानिक्रियाशक्तिमयानिच ॥ उपादानंकिलैतेषांचिदनुवृत्तिरुच्यते ॥३४॥ ज्ञानशक्तिसमायुक्ताःसात्त्विकाच्चसमुद्भवाः ॥ दिशोवायु
श्चसूर्यश्चवरुणश्चाश्विनावपि ॥ ३५ ॥ ज्ञानेंद्रियाणांपंचानांपंचाधिष्ठातृदेवताः ॥ चंद्रोब्रह्मातथारुद्रःक्षेत्रज्ञश्चचतुर्थकः ॥३६॥ इत्यंतःकरणा
ख्यस्यबुद्ध्यादेश्चाधिदैवतम् ॥ चत्वार्येवतथाप्रोक्ताःकिलाधिष्ठातृदेवताः ॥ ३७ ॥ मनसासहचैतानिनूनंपंचदशैवतु ॥ सात्त्विकस्यतुसर्गोऽ
यंसात्त्विकाख्यःप्रकीर्तितः ॥ ३८ ॥ स्थूलसूक्ष्मादिभेदेनद्वेरूपेपरमात्मनः॥ ज्ञानरूपंनिराकारंनिदानंतत्प्रचक्षते ॥ ३९ ॥

ध्यम् ॥ ३६ ॥ ३७ ॥ वृत्तिभेदेनैवमनसश्चतुष्टयात्मकत्वंनस्वरूपतः ॥ स्वरूपतस्त्वेकत्वमेवेति ॥ पंचज्ञानेंद्रियाणिपंचकर्मेंद्रियाणिपंचइतिपंचदशवस्तूनिएकेनमनसायुक्तानिषोडशवि
कारेगणितानिषोडशैवभवंति नत्वधिकानीतिप्राणः॥तदुक्तम्—मूलभूतात्ततोव्यक्ताद्विकृतात्परवस्तुनः ॥ आसीत्किलमहत्तत्त्वंगुणांतःकरणात्मकम् ॥ अभूत्तस्मादहंकारस्त्रिविधःसृष्टि
भेदतः ॥ वैकारिकस्तैजसश्चतामसश्चेत्यहंत्रिधा ॥ वैकारिकादहंकाराद्देवावैकारिकादश ॥ दिग्वातार्कप्रचेतोश्विवह्नींद्रोपेंद्रमित्रकाः॥तैजसादिंद्रियाण्यासंस्तन्मात्राक्रमयोगतः॥भूतादि
कादहंकारात्पंचभूतानिजज्ञिरइतिशारदायाम् ॥ अत्रेंद्रियसृष्टिविषयेपंचभूतसृष्टिविषयेचशैवसांख्यवेदांतिनांपरस्परंबहुविरोधोदृश्यतेतथापिसृष्टेर्मायिकत्वेनमिथ्यात्वात्तत्रादराभावेन
यथाकथंचिदिंद्रजालवद्दृश्यमानस्यनिरुक्तिर्मूढजनबुद्धिशंकानिवारणार्थंकांचिदपिप्रक्रियामाश्रित्यकर्तव्येत्यभिप्रायेणग्रंथकृदुक्तासृष्टिर्मतांतरविरुद्धेतिनमंतव्यमिति ॥३८॥ इत्थंतत्त्वसृ
ष्टिमुपपाद्योपासनार्थंमायाशक्तिविशिष्टब्रह्मणोभगवतीपदवाच्यस्यद्विविधंरूपमाह । स्थूलसूक्ष्मादिभेदेनेति ॥ निदानमिति॥ज्ञानरूपंसर्वाधिष्ठानंनिदानंविवर्तादिकारणमित्यर्थः॥३९॥

तत्रूत्तमाधिकारिज्ञानगम्यमेवनतुमध्यमाधिकारिध्यानगम्यम् ॥ ततोमध्यमाधिकारिणउपासनार्थंद्वितीयंस्थूलरूपमस्तीत्याह । साधकस्येति ॥ सूक्ष्ममेवेति ॥ मायाशक्तेरूपद्वयमंत
र्मुखबहिर्मुखरूपभेदेन ॥ तत्रांतर्मुखंरूपंतुपराहंतारूपमुत्तमाधिकारीज्ञानविषयोबहिर्मुखंरूपंतु तदपेक्षयास्थूलंभवति ततोबहिर्मुखमायाशक्त्याकारविशिष्टंब्रह्मरूपंमध्यमाधिकारिभि
रुपास्यमित्यर्थः ॥ अक्षरार्थस्तु पुरुषस्यपरमात्मनोलिंगदेहापेक्षयासूक्ष्ममेवेदंबहिर्मुखमायाकाररूपंमंतर्मुखमायाकारापेक्षयातुस्थूलंशरीरंप्रकीर्तितंततस्तदुपास्यमित्यर्थः ॥ ४० ॥
ममचेति ॥ ममचयच्छरीरंसूत्रंसूत्रसंज्ञकंतदपिपरमात्मनः स्थूलंशरीरमित्यभिधियते ॥ ततस्तद्विशिष्टःपरमात्माप्युपास्यइत्यर्थः ॥ अथस्थूलतमंविराट्शरीरमाह । स्थूलंशरीरमिति
॥ ४१ ॥ प्रथमस्योत्पत्तिमाह । शृण्विति ॥ ४२ ॥ तान्येवेति ॥ तान्येवसूक्ष्मभूतानीश्वरेणपंचीकृत्यपंचभूतसमसुद्भवःकृतइत्यर्थः ॥ ४३ ॥ प्रथमंरसतन्मात्रामितिरसतन्मात्रांमन
स्युपादायनिश्चित्यतद्द्वेधाकल्पयेदितिशेषः ॥ अनंतरंयथातत्स्थूलमुदकंभवतितथाकल्पयेत् ॥ ४४ ॥ कयाकल्पनयातथाभवतितत्स्वयमेवाह । शिष्टानामिति ॥ यथारसतन्मात्राद्वि
धाकृतातथाऽवशिष्टाभूततन्मात्राअपिद्विधाकर्तव्याः ॥ तत्रसर्वेष्वर्धभागस्तथैवस्थापनीयोऽवशिष्टार्धभागस्यांशान्पृथक्पृथक्चतुर्धाकृत्वास्वस्वार्धभागरहितेऽर्धभागेतानंशान्मेलयेत् ॥

साधकस्यतुध्यानादौस्थूलरूपंप्रचक्षते ॥ शरीरंसूक्ष्ममेवेदंपुरुषस्यप्रकीर्तितम् ॥ ४० ॥ ममचैवशरीरंवैसूत्रमित्यभिधीयते ॥ स्थूलंशरीरंव
क्ष्यामिब्रह्मणःपरमात्मनः ॥ ४१ ॥ शृणुनारदयत्नेनयच्छ्रुत्वाविप्रमुच्यते ॥ तन्मात्राणिपुरोक्तानिभूतसूक्ष्मणियानिवै ॥ ४२ ॥ पंचीकृ
त्यतुतान्येवपंचभूतसमुद्भवः ॥ पंचीकरणभेदोऽयंशृणुसंवदतःकिल ॥ ४३ ॥ प्रथमंरसतन्मात्रामुपादायमनस्यपि ॥ कल्पयेच्चतथातद्द्वैध
थाभवतिचोदकम् ॥ ४४ ॥ शिष्टानांचैवभूतानामंशान्कृत्वापृथक्पृथक् ॥ उदकेमिश्रयेच्चांशान्कृतेरसमयेततः ॥ ४५ ॥ तदाभूतविभागेचचै
तन्येचप्रकाशिते ॥ चैतन्यस्यप्रवेशात्तुतदाऽहमितिसंशयः ॥ ४६ ॥ प्रतीयमानेतेनैवविशेषेणाभिमानतः ॥ आदिनारायणोदेवोभगवा
नितिचोच्यते ॥ ४७ ॥ घनीभूतेऽथभूतानांविभागेस्पष्टतांगते ॥ वृद्धिंप्राप्यगुणैश्चेत्थमेकैकगुणवृद्धितः ॥ ४८ ॥ आकाशस्यगुणश्चैकः
शब्दएवनचापरः ॥ शब्दस्पर्शौचवायोश्चद्वौगुणौपरिकीर्तितौ ॥ ४९ ॥ अग्नेःशब्दश्चस्पर्शश्चरूपमेतेत्रयोगुणाः ॥ शब्दस्पर्शरूपरसाश्चत्वा
रोवैजलस्यच ॥ ५० ॥

ततःस्थूलजलेजातइत्यर्थः ॥ ४५ ॥ ततोऽनंतरमेवमेवतदाभूतविभागेइतरेषां
तथाचरसतन्मात्रार्धभागेउदकेरसतन्मात्रातिरिक्तभूततन्मात्रार्धभागचतुःखंडान्मिश्रयेन्मेलयेदेवंकृतेरसमयेस्थूलजलेजातइत्यर्थः ॥ ४५ ॥ ततोऽनंतरमेवमेवतदाभूतविभागेइतरेषां
चतुर्णांभूतानांपंचीकरणेनविभागेजातेतस्मिन् पंचीकृतपंचभूतात्मकेऽधिष्ठानतयाचैतन्यस्यप्रवेशेजातेऽपिप्रतिबिंबतयाप्रवेशउच्यते चैतन्येचप्रवेशितइति ॥ तस्यप्रतिबिंबरूपचैतन्य
स्यप्रवेशात्पंचभूतात्मकेदेहेअहमितिसंशयस्तादात्म्यरूपःसंशयोमनोवृत्तिरूपउत्पद्यते ॥ तस्यदेहेऽहमितितादात्म्यमुत्पद्यतइतिफलितम्॥४६॥तत्स्थूलदेहाभिमानविशिष्टंचैतन्यंवैश्वानर
इत्यादिनारायणइत्यादिसंज्ञाभिरुच्यते ॥४७॥ पंचीकृतपंचभूतानांगुणवृद्ध्यास्वरूपमाह । घनीभूतइति ॥ घनीभूतेपश्चीकरणेनदृढीभूतेसति विभागेआकाशादिरूपेणविभागेस्पष्टतां
गतेसतिपूर्वोक्तरसतन्मात्रागुणैःकारणभूतैर्वृद्धिंप्राप्यकारणगुणाःकार्यगुणानारभंतइतिन्यायाद्गुणवृद्धिंप्राप्यैकैकगुणवृद्धितोयुक्तान्येकैकभूतानिभवंतीत्यर्थः ॥ ४८ ॥ कयाकयागुणवृद्ध्या
किंकिंभूतंयुक्तमस्तितन्नाम्नानिर्दिशति । आकाशस्येति ॥ ४९ ॥ ५० ॥

एवमिति।एवंपंचीकृतभूतात्मकमेवब्रह्मांडमुत्पद्यतइत्यर्थः॥५१॥सर्वेजीवाइति॥एतेसर्वेजीवामिलित्वैवसर्वजीवाविद्याभिरेवब्रह्मांडस्योत्पत्तिरित्यर्थः ॥ जीवाविद्याभिरेवब्रह्मांडंकल्पित
स्वकर्मफलभोगार्थमितिभावः॥नत्वीश्वरस्यतत्कल्पनेकिंचित्फलमस्ति॥किंबहुनेश्वरोऽपिजीवाविद्याभिरेवकल्पितइतिरहस्यम्॥कतिजीवाःसंतितत्राह।चतुरशीतीति ॥ तदेतत्स्थूलतमंरू
पमप्युपास्यम् .॥ तथाचएतावतासर्वग्रंथेनसर्वामहासृष्टिरीश्वरकर्तृकाजीवसृष्टिश्चोपपादितातस्यांसृष्टौविद्यमानजीवानामुत्तमाधिकारिणांज्ञानघनंतुरीयंप्रणवमायाबीजवाच्यंब्रह्मज्ञेयमु
क्तम्॥मध्यमाधिकारिणांतुस्थूलसूक्ष्मकारणदेहावच्छिन्नंब्रह्मवैश्वानरसूत्रहिरण्यगर्भाव्याकृतसंज्ञकंव्यष्टौविश्वतैजसप्राज्ञसंज्ञकंप्रणवमायाबीजावयववर्णत्रयवाच्यमुपास्यमुक्तंभवति ॥चतु
ष्पादेवचब्रह्ममांडूक्यादिषुप्रतिपादितंतद्वाचकावर्णाश्चप्रतिपादिताइतिबोध्यम् ॥५२॥ इतिश्रीदेवीभा० तृ०सप्तमोऽध्यायः ॥ ७ ॥ ॥ एकाधिकैश्चपंचाशत्पद्यैरथचतुर्मुखः ॥ गुणानां

स्पर्शशब्दरसारूपंगंधश्चपृथिवीगुणाः ॥ एवंमिलितयोगैश्चब्रह्मांडोत्पत्तिरुच्यते ॥ ५१ ॥ सर्वेजीवामिलित्वैवब्रह्मांडांशसमुद्भवाः ॥ चतु
रशीतिलक्षाश्चप्रोक्तावैजीवजातयः ॥ ५२ ॥ इतिश्रीदेवीभागवतेमहापुराणेतृतीयस्कंधेसप्तमोऽध्यायः ॥ ७ ॥ ब्रह्मोवाच ॥ सर्गोऽयंकथित
स्तातयत्पृष्टोहंत्वयाऽधुना ॥ गुणानांरूपसंस्थांवैशृणुष्वैकाग्रमानसः ॥ १ ॥ सत्त्वंप्रीत्यात्मकंज्ञेयंसुखात्प्रीतिसमुद्भवः॥आर्जवंचतथासत्यं
शौचंश्रद्धाक्षमाधृतिः ॥ २ ॥ अनुकंपातथालज्जाशांतिःसंतोषएवच ॥ एतैःसत्त्वप्रतीतिश्चजायतेनिश्चलासदा ॥ ३ ॥ श्वेतवर्णंतथासत्त्वंधर्मे
प्रीतिकरःसदा ॥ सच्छ्रद्धोत्पादकंनित्यमसच्छ्रद्धानिवारकम् ॥ ४ ॥ सात्त्विकीराजसीचैवतामसी चतथापरा ॥ श्रद्धातुत्रिविधाप्रोक्तामुनि
भिस्तत्त्वदर्शिभिः ॥ ५ ॥ रक्तवर्णंरजःप्रोक्तमप्रीतिकरमद्भुतम् ॥ अप्रीतिर्दुःखयोगत्वाद्भवत्येवसुनिश्चिता ॥६॥ प्रद्वेषोऽथतथाद्रोहोमत्सरःस्तं
भएवच ॥ उत्कंठाचतथानिद्राश्रद्धातत्रचराजसी ॥७॥ मानोमदस्तथागर्वोरजसाकिलजायते ॥ प्रत्येतव्यंरजस्त्वेतैर्लक्षणैश्चविचक्षणैः ॥८॥
कृष्णवर्णंतमःप्रोक्तंमोहनंचविषादकृत् ॥ आलस्यंचतथाज्ञानंनिद्रादैन्यंभयंतथा ॥ ९ ॥ विवादश्चैवकार्पण्यंकौटिल्यंरोषएवच ॥ वैषम्यंवा
तिनास्तिक्यंपरदोषानुदर्शनम् ॥ १० ॥ प्रत्येतव्यंतमस्त्वेतैर्लक्षणैःसर्वथाबुधैः ॥ तामस्याश्रद्धयायुक्तंपरतापोपपादकम् ॥ ११ ॥

रूपसंस्थांवैकथयामासविस्तरात् ॥ १ ॥ सर्गोयमिति ॥ दृश्यमात्रस्यसर्गइत्यर्थः ॥१॥ गुणानांमुमुक्षुभिर्हेयोपादेयत्वज्ञानार्थंस्वरूपंकार्यंचाह । प्रीत्यात्मकमिति॥सत्त्वाद्धिसर्वत्रसुखं
भवति ॥ सुखेजातेसर्वपदार्थस्यसुखदत्वात्तत्रप्रीतिरुत्पद्यते ॥ तस्माद्धेतोःसत्त्वंप्रीत्यात्मकमित्यर्थः ॥२॥.एतैर्लक्षणैःसत्त्वकार्यभूतैःकारणस्यसत्त्वस्यप्रतीतिर्निश्चयोजायतेमयिसत्त्वंनिश्च
लमुत्पन्नमिति॥३॥ सत्त्वस्यकार्यांतराण्यप्याह। श्वेतवर्णमिति ॥४॥ ननुश्रद्धाकिमनेकविधाऽस्तियस्मादत्रोच्यतेऽसच्छ्रद्धानिवारकमितिचेदस्त्येवेत्याह।सात्त्विकीति॥सात्त्विक्यतिरिक्ता
सतीश्रद्धेत्यर्थः ॥५॥ अप्रीतिकरमिति ॥ रजोहिदुःखप्रदंसर्वत्रदुःखेजातेसर्वपदार्थेष्वप्रीतिर्जायतइत्यप्रीतिकरमुच्यते ॥ तदेवाह । अप्रीतिरिति ॥ ६ ॥ ७॥ रजसेति ॥ रजःकाया
ण्येतानीत्यर्थः ॥ प्रत्येतव्यमिति ॥ एतैर्लक्षणैरजःकार्यभूतैर्मयिकारणभूतोरजोगुणोऽस्तीतिज्ञेयमित्यर्थः ॥ ८ ॥ ९॥ १० ॥ परतापोपपादकमितिपूर्वान्वयितमोगुणलक्षणम् ॥११॥

किमर्थमेतानिलक्षणान्युक्तानितत्राह । सत्त्वंप्रकाशयितव्यमिति ॥ सत्त्ववृद्धियथाभवतितथाकर्तव्यमित्यर्थः ॥ नहितत्सत्त्वलक्षणज्ञानमंतरासंभवति ॥ हेयोपादेययोःस्वरूपज्ञानस्या पेक्षितत्वादितिभावः ॥ १२ ॥ अन्योन्येति ॥ एतेऽन्योन्याभिभवात्परस्पराभिभवात्विरुध्यंतीतिस्वभावएषाम् ॥ ततश्चसत्त्वस्थैर्येणेतरयोरभिभवः कर्तव्यइतिभावः ॥ १३ ॥ १४ ॥ ॥ १५ ॥ मयेत्युक्तंवचोज्ञात्वेत्यन्वयः ॥ ज्ञातंतदनुभूतमिति ॥ हेमहामतेश्रवणाद्दर्शनाच्चैवसपदितत्कालमेवफलेसतियत्परिज्ञातंफलजनकत्वेनपरिज्ञातंतदेवज्ञातंश्रुतमनुभूतंचभवति ॥ यत्तुसंस्कारानुभवात्संस्कारजन्यस्मरणाज्ज्ञातंतत्रतत्कालेतत्पदार्थस्यानुभवाभावेफलस्याभावान्नतज्ज्ञानंजायते ॥ नहिगंगातीरेआम्राद्दृष्टाइतिस्मरणेनकिंचित्फलमस्तितदुत्तरंतदनुभव स्यैवसफलत्वात् तथाचयत्रकर्मणिफलंनदृश्यतेतत्कृतमकृतमेव ॥ तादृशं च राजसंतामसंवाकर्मभवतीतिभावः॥१६॥१७॥ तदेवाह श्रुतमिति ॥ राजसीति ॥ फलंभवतु वा मा वा

सत्त्वंप्रकाशयितव्यंनियंतव्यंरजःसदा ॥ संहर्तव्यंतमःकामंजनेनशुभमिच्छता ॥१२॥अन्योन्याभिभवाच्चैतेविरुध्यंतिपरस्परम् ॥ तथाऽन्यो न्याश्रयाःसर्वेनतिष्ठंतिनिराश्रयाः ॥ १३ ॥ सत्त्वंनकेवलंक्वापिनरजोनतमस्तथा ॥ मिलिताश्चसदासर्वेतेनान्योन्याश्रयाःस्मृताः ॥ १४ ॥ अन्योन्यमिथुनाश्चैवविस्तारंकथयाम्यहम् ॥ शृणुनारदयज्ज्ञात्वामुच्यतेभवबंधनात् ॥ १५ ॥ संदेहोऽत्रनकर्तव्योज्ञात्वेत्युक्तंमयावचः ॥ ज्ञातंतदनुभूतंयत्परिज्ञातंफलेसति ॥ १६ ॥ श्रवणाद्दर्शनाच्चैवसपद्येवमहामते ॥ संस्कारानुभवाच्चैवपरिज्ञातंनजायते ॥१७॥ श्रुतंतीर्थंपवित्रं चश्रद्धोत्पन्नाचराजसी ॥ निर्गतस्तत्रतीर्थेवैदृष्टंचैवयथाश्रुतम् ॥ १८ ॥ स्नातस्तत्रकृतंकृत्यंदत्तंदानंचराजसम् ॥ स्थितस्तत्रकियत्कालंरजो गुणसमावृतः ॥ १९ ॥ रागद्वेषान्ननिर्मुक्तःकामक्रोधसमावृतः ॥ पुनरेवगृहंप्राप्तोयथापूर्वंतथास्थितः ॥ २० ॥ श्रुतंचनानुभूतंवैतेनतीर्थंमुनी श्वर ॥ नप्राप्तंचफलंयस्मादश्रुतंविद्धिनारद ॥ २१ ॥ निष्पापत्वंबलंविद्धितीर्थस्यमुनिसत्तम ॥ कृषेःफलंयथालोकेनिष्पन्नान्नस्यभक्षणम् ॥ ॥ २२ ॥ पापदेहविकारायेकामक्रोधादयःपरे ॥ लोभोमोहस्तथातृष्णाद्वेषोरागस्तथामदः॥२३॥असूयेर्ष्याक्षमाऽशांतिःपापान्येतानिनारद ॥ ननिर्गतानिदेहात्तुतावत्पापयुतोनरः ॥ २४ ॥ कृतेतीर्थेयदैतानिदेहान्ननिर्गतानिचेत् ॥ निष्फलःश्रमएवैकःकर्षकस्ययथातथा ॥ २५ ॥ श्रमेणापीडितंक्षेत्रंकृष्टाभूमिःसुदुर्घटा ॥ उप्तंबीजंमहार्घंचहितावृत्तिरुदाहृता ॥२६॥ अहोरात्रंपरिक्लिष्टोरक्षणार्थंफलोत्सुकः॥ कालेसुप्तस्तुहेमंते वनेव्याघ्रादिभिर्भृशम् ॥ २७ ॥ भक्षितंशलभैःसर्वंनिराशश्चकृतःपुनः ॥ तद्वत्तीर्थश्रमःपुत्रकष्टदोनफलप्रदः ॥ २८ ॥

लोकागच्छंतिमयापिगंतव्यमित्येवंरूपेत्यर्थः ॥ राजसंफलंभवतुवामावेत्युक्तरूपम् ॥ १८ ॥ १९ ॥ २० ॥ तत्रफलाभावात्ततीर्थंतेननश्रुतंनाप्यनुभूतमित्यर्थः ॥ २१ ॥ किंतत्रतीर्थ स्यफलंतत्राह । निष्पापत्वमिति ॥ २२ ॥ ननुपापस्यामूर्तत्वात्पापंनगतमितिकथंज्ञायतइतिचेत्पापकार्याणांकामादीनांदृश्यमानत्वेतेनकार्येणकारणस्यपापस्यानुमानादित्याह । पाप देहविकाराइति ॥ २३ ॥ २४ ॥ २५ ॥ आपीडितमासमंताद्बद्धम् ॥ महार्घममूल्यंबीजमित्यर्थः ॥ हितावृत्तिरियंवृत्तिर्हिताकल्याणकरीउदाहृतायद्यपितथापिफलाभावेनिराशः कृतइत्यर्थः ॥ २६ ॥ २७ ॥ दार्ष्टांतिकेयोजयति । तद्वदिति ॥ २८ ॥

एकैकस्यकारणवशादुत्कटत्वेजातेऽन्ययोरभिभवोभवतीत्याह । सत्त्वमिति ॥ शास्त्रंविवेकशास्त्रंवेदांतस्तद्दर्शनंसत्त्वोद्रेकेकारणमुक्तम्॥तेनदर्शनेनतामसार्थेषुराजसेषुचवैराग्यंफलम्॥ २९॥
तत्सत्त्वंप्रसह्यबलात्कारेण ॥ ३० ॥ ३१ ॥ ३२ ॥ विवृद्धसत्त्वस्यलक्षणमाह । यदासत्त्वमिति ॥ ३३ ॥ नचान्यथारजस्तमःसमुद्भूतंबाह्यार्थंनगृह्णातीत्यर्थः ॥ ३४ ॥ मोक्षार्थीसन्राजसे
षुतामसेषुचकामंकुरुतइत्यर्थः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ परस्परजनकत्वमुपपादयतिसत्त्वंकदाचिच्चेति ॥ ४६ ॥ ४७ ॥

सत्त्वंसमुत्कटंजातंप्रवृद्धंशास्त्रदर्शनात् ॥ वैराग्यंतत्फलंजातंतामसार्थेषुनारद ॥ २९ ॥ प्रसह्याभिभवत्येवतद्रजस्तमसीउभे ॥ रजःस
मुत्कटंजातंप्रवृत्तंलोभयोगतः ॥ ३० ॥ तत्तथाभिभवत्येवतमःसत्त्वेतथाउभे ॥ तमस्तथोत्कटंभूत्वाप्रवृद्धंमोहयोगतः ॥ ३१ ॥ तत्सत्त्वर
जसीचोभेसंगम्याभिभवत्यपि ॥ विस्तरंकथयाम्यद्ययथाभिभवतीतिवै ॥ ३२ ॥ यदासत्त्वंप्रवृद्धंवैमतिर्धर्मेस्थितातदा ॥ नचिंतयतिबाह्यार्थं
रजस्तमःसमुद्भवम् ॥ ३३ ॥ अर्थंसत्त्वसमुद्भूतंगृह्णातिचनचान्यथा ॥ अनायासकृतंचार्थंधर्मंयज्ञंचवांछति ॥ ३४ ॥ सात्त्विकेष्वेवभोगेषुका
मंवैकुरुतेतदा ॥ राजसेषुनमोक्षार्थीतामसेषुपुनःकुतः ॥ ३५ ॥ एवंजित्वारजःपूर्वंततश्चतमसोजयः ॥ सत्त्वंचकेवलंपुत्रतदाभवतिनिर्मलम् ॥
॥ ३६ ॥ यदारजःप्रवृद्धंवैत्यक्त्वाधर्मान्सनातनान् ॥ अन्यथाकुरुतेधर्मान्श्रद्धांप्राप्यतुराजसीम् ॥ ३७ ॥ राजसादर्थसंवृद्धिस्तथाभोगस्तु
राजसः ॥ सत्त्वंविनिर्गतंतेनतमसश्चापिनिग्रहः ॥ ३८ ॥ यदातमोविवृद्धंस्यादुत्कटंसंबभूवह ॥ तदावेदेनविश्वासोधर्मशास्त्रेतथैवच ॥ ३९ ॥
श्रद्धांचतामसींप्राप्यकरोतिचधनात्ययम् ॥ द्रोहंसर्वत्रकुरुतेनशांतिमधिगच्छति ॥ ४० ॥ जित्वासत्त्वरजश्चैवक्रोधनोदुर्मतिःशठः ॥ वर्तते
कामचारेणभावेषुविततेषुच ॥ ४१ ॥ एकंसत्त्वंनभवतिरजश्चैकंतमस्तथा ॥ सहैवाश्रित्यवर्तंतेगुणामिथुनधर्मिणः ॥ ४२ ॥ रजोविनानस
त्त्वंस्याद्रजःसत्त्वंविनाक्वचित् ॥ तमोविनानचैवैतेवर्तंतेपुरुषर्षभ ॥ ४३ ॥ तमस्ताभ्यांविहीनंतुकेवलंनकदाचन ॥ सर्वेमिथुनधर्माणोगुणाः
कार्यांतरेषुवै ॥ ४४ ॥ अन्योन्यसंश्रिताःसर्वेतिष्ठंतिनवियोजिताः ॥ अन्योन्यजनकाश्चैवयतःप्रसवधर्मिणः ॥ ४५ ॥ सत्त्वंकदाचिच्चरज
स्तमसीजनयत्युत ॥ कदाचित्तुरजःसत्त्वतमसीजनयत्यपि ॥ ४६ ॥ कदाचित्तुतमःसत्त्वरजसीजनयत्युभे ॥ जनयंत्येवमन्योन्यंमृत्पिंड
श्चघटंयथा ॥ ४७ ॥ बुद्धिस्थास्तेगुणाःकामान्बोधयंतिपरस्परम् ॥ देवदत्तविष्णुमित्रयज्ञदत्तादयोयथा ॥ ४८ ॥ यथास्त्रीपुरुषश्चैवमिथुनौ
चपरस्परम् ॥ तथागुणाःसमायांतियुग्मभावंपरस्परम् ॥ ४९ ॥

कस्मिन्स्थलेस्थितागुणाइत्थंकार्यंकुर्वंतितत्राह । बुद्धिस्थाइति॥यथाएकैकोत्कटत्वेप्येकैकंस्वकार्यंचोक्तंकुर्वंतितथामिथुनीभूयाप्युभयगुणकंकार्यमुत्पादयंतीतिदृष्टांतमुखेनाह । देवदत्तेति।
यथादेवदत्तादयस्त्रयोमिलित्वाकार्यंकुर्वंतियथावास्त्रीपुरुषौमिथुनीभूयकार्यमुत्पादयतस्तथेत्यर्थः ॥ ४८ ॥ युग्मभावंमिथुनीभावंपरस्परंयांतीत्यर्थः ॥ ४९ ॥

तदेवदर्शयति । रजसोमिथुनेसत्त्वमिति ॥ रजःसत्त्वरूपमेकंमिथुनमित्यर्थः ॥ एवमन्यदप्यूह्यम् ॥ यथारजसोमिथुनेसत्त्वंगौणस्त्रीस्थानापन्नयंथावासत्त्वस्यामिथुनेरजोगौणंस्त्रीस्थानापन्नंतथैवसत्त्वतमोमिथुनंरजस्तमोमिथुनमित्याह । उभेतेसत्त्वरजसीइति ॥ सत्त्वस्यमिथुनेतमस्तमसोमिथुनेसत्त्वंतथारजसोमिथुनेतमस्तमसोमिथुनेरजइत्यर्थः ॥ एकंप्रधानंपुरुषभावापन्नमितरद्वौणंस्त्रीभावापन्नमित्यर्थः ॥ एतेषांमिथुनानांबुद्धौवर्तमानतोत्पद्यमानोभयात्मककार्येणप्रत्येतव्या ॥५०॥५१॥ इतिश्रीदेवीभागवततिलकेतृतीयस्कंधेऽष्टमोध्यायः ॥ ८ ॥ अष्टाधिकैस्तुचत्वारिंशत्पद्यैर्नारदेनच ॥ गुणानांलक्षणंपृष्टंपुनरेवोपवर्ण्यते ॥ १ ॥ मुमुक्षुभिर्गुणानांहेयोपादेयत्वज्ञानार्थंस्वरूपंकार्यंचपुनराह ॥ गुणानामिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ सत्त्वंतुकेवलमिति ॥ एकैकगुणोऽन्यगुणासहायःक्कुत्रापिनतिष्ठति ॥ तेषांगुणानांपरस्परंमिश्रीभावात्तुमिश्रत्वमेवसर्वदाऽस्ति ॥ ५ ॥ मिश्रीभावादेवगुणानांसुखदुःखमोहात्मकत्वंभवति नान्यथेतिदृष्टांतमुखेनाहयथाकाचिदिति ॥ ६ ॥ ७॥ यथैकैवस्त्रीसुखदुःखमोहात्मिकाव्यक्तिभेदेनभिन्नंप्रतिकालभेदेनवाएकांव्यक्तिंप्रतिभवतितथैवसत्त्वंभवतीत्याह । एवंसत्त्वेनेति ॥

रजसोमिथुनेसत्त्वंसत्त्वस्यमिथुनेरजः ॥ उभेतेसत्त्वरजसीतमसोमिथुनेविदुः ॥ ५० ॥ नारदउवाच ॥ इत्येतत्कथितंपित्रागुणरूपमनुत्तमम् ॥ श्रुत्वाप्येतत्सएवाहंततोऽपृच्छंपितामहम् ॥ ५१ ॥ इति श्रीदेवीभा०म०तृ०अष्टमोऽध्यायः ॥ ८ ॥ नारदउवाच ॥ गुणानांलक्षणंतातभवताकथितंकिल ॥ नतृप्तोऽस्मिपिबन्मिष्टंत्वन्मुखात्प्रच्युतंरसम् ॥ १ ॥ गुणानांतुपरिज्ञानंयथावदनुवर्णय ॥ येनाहंपरमांशांतिमधिगच्छामिचेतसि ॥ २ ॥ व्यासउवाच ॥ इतिपृष्टस्तु पुत्रेणनारदेनमहात्मना ॥ उवाचचजगत्कर्तारजोगुणसमुद्भवः ॥ ३ ॥ ब्रह्मोवाच ॥ शृणुनारदवक्ष्यामिगुणानांपरिवर्णनम् ॥ सम्यङ्नाहंविजानामियथामतिवदामिते ॥ ४ ॥ सत्त्वंतुकेवलंनैवकुत्रापिपरिलक्ष्यते ॥ मिश्रीभावात्तुतेषांवैमिश्रत्वंप्रतिभातिवै ॥ ५ ॥ यथाकाचिद्वरानारीसर्वभूषणभूषिता ॥ हावभावयुता कामंभर्तुःप्रीतिकरीभवेत् ॥ ६॥ मातापित्रोस्तथासैवबंधुवर्गस्यप्रीतिदा ॥ दुःखमोहंसपत्नीषुजनयत्यपिसैवहि ॥ ७ ॥ एवंसत्त्वेनतेनैवस्त्रीत्वमापादितेनच ॥ रजसस्तमसश्चैवजनितावृत्तिरन्यथा ॥ ८ ॥ रजसास्त्रीकृतेनैवंतमसाचतथापुनः ॥ अन्योन्यस्यसमायोगादन्यथाप्रतिभातिवै ॥९॥ अवस्थानात्स्वभावेषुनवै जात्यंतराणिच ॥ लक्ष्यंतेविपरीतानियोगान्नारदकुत्रचित् ॥ १० ॥ यथारूपवतीनारीयौवनेनविभूषिता ॥ लज्जामाधुर्ययुक्ताचतथाविनयसंयुता ॥ ११ ॥

स्त्रीत्वमापादितेनेतिस्त्रीस्थानापन्नमित्यर्थः ॥ तेनसत्त्वेनकस्यचित्पुरुषस्यसुखजनिकावृत्तिर्जनिताभवति तस्यैवपुरुषस्यकालांतरेऽन्यथादुःखमोहात्मिकरजसःसंबंधिनीतमसोवासंबन्धिनीवृत्तिर्जनिताभवति ॥ ८ ॥ एवंरजोयदास्त्रीकृतंस्त्रीभावापन्नंतथातमोयदास्त्रीभावापन्नंस्त्रीस्थानत्वेनकल्पितंतदातेनरजसातमसावादुःखात्मिकामोहात्मिकावाकस्यचित्पुरुषस्यवृत्तिर्जनिताभवतितस्यैवपुरुषस्यकालांतरेसुखवृत्तिरुत्पाद्यते ॥ नचैतद्गुणानामन्यगुणसहायताभावेसंभवति तस्मान्मिश्रीभूताएवगुणाइतिज्ञेयमित्याह ॥ अन्योन्यस्येति ॥९॥ अवस्थानात्स्वभावेष्विति ॥ यदिगुणाएकैकाएवस्युर्नमिश्रीभूतास्तदातेषांस्वभावेष्ववस्थानादेकरूपैववृत्तिःस्यान्नजात्यंतराणिस्युःलक्ष्यंतेतुविपरीतानिजात्यंतराणि ॥ कदाचित्सुखात्मकंकदाचिदुःखात्मकंकदाचिन्मोहात्मकमितितस्मान्मिश्रीभूताएवगुणाइतिभावः ॥ १० ॥ यथारूपवतीत्यारभ्यचौरैरुपद्रुतेतिपर्यंतपाठःपुनरुक्तार्थकोऽपिदृष्टांतदार्ष्टांतिकयोरुपसंहारार्थमितिबोध्यम् ॥ ११ ॥

॥ १२ ॥ १३ ॥ दृष्टांतांतरमाह । चौरैरिति ॥ सेनाराजसेना ॥१४॥ जनयंतिएतेदृष्टांतार्थायथातथागुणाःविपरीतप्रतीतिंजनयंतीत्यर्थः ॥ यथेति ॥ दुर्दिनंमेघच्छन्नोदिवसः॥१५॥ तमोरूपंनिविडांधकारप्रायम् ॥ १६ ॥ १७ ॥ १८ ॥ प्रोषितभर्तृकाणांविरहिणीनांकामिनीनाम् ॥ स्वभावस्थाइति ॥ एतेयथादृष्टांताएवमेतेगुणाःस्वभावस्थाअन्यगुणसाहाय्येनविपरीताभांतितस्मान्मिश्रीभूताएवेतिभावः ॥ १९ ॥ सत्त्वादिगुणोद्रेकेसतिजायमानानिलक्षणान्याह ॥ लक्षणानीति ॥२०॥ लघुस्वरूपमाह ॥ यदांऽगानीति ॥ लघून्येवनभारवंति ॥ तान्राजसांस्तामसान्वाविषयान्नगृह्णातीत्यर्थः ॥ २१ ॥ जृंभामिति ॥ जृंभांस्तंभंशरीरगुरुतांतंद्रांचयदापश्यतितदाचलंरजःसमुत्कटंजातमित्यन्वयः ॥ २२ ॥ तमोलक्षणमाह ॥

कामशास्त्रविधिज्ञाचधर्मशास्त्रेऽपिसंमता ॥ भर्तुःप्रीतिकरीभूत्वासपत्नीनांचदुःखदा ॥१२॥मोहदुःखस्वभावस्थासत्त्वस्थेत्युच्यतेजनैः॥तथा सत्त्वंविकुर्वाणमन्यभावंविभातिवै ॥१३ ॥ चौरैरुपद्रुतानांहिसाधूनांसुखदाभवेत् ॥ दुःखामूढाचदस्यूनांसैवसेनातथागुणा ॥१४॥ विपरीत प्रतीतिंवैजनयंतिस्वभावतः ॥ यथाचदुर्दिनंजातंमहामेघघनावृतम् ॥ १५ ॥ विद्युत्स्तनितसंयुक्तंतिमिरेणावगुंठितम् ॥ सिंचद्भूमिंप्रवर्षद्वैतमो रूपमुदाहृतम् ॥ १६ ॥ यदेतत्कर्षकाणांवैतदेवातीवदुर्दिनम् ॥ बीजोपस्करयुक्तानांसुखदंप्रभवत्युत ॥ १७ ॥ अप्रच्छन्नगृहाणांचदुर्भगानां विशेषतः ॥ तृणकाष्ठगृहीतानांदुःखदंगृहमेधिनाम् ॥ १८ ॥ प्रोषितभर्तृकाणांवैमोहदंप्रवदंत्यपि ॥ स्वभावस्थागुणाःसर्वेविपरीताविभांति वै ॥ १९ ॥ लक्षणानिपुनस्तेषांशृणुपुत्रब्रवीम्यहम् ॥ लघुप्रकाशकंसत्त्वंनिर्मलंविशदंसदा ॥ २० ॥ यदांऽगानिलघून्येवनेत्रादीनींद्रियाणि च ॥ निर्मलंचतथाचेतोगृह्णातिविषयान्नतान् ॥ २१ ॥ तदासत्त्वंशरीरेवैमंतव्यंचसमुत्कटम् ॥ जृंभांस्तंभंचतंद्रांचचलंचैवरजः पुनः ॥२२ ॥ यदातदुत्कटंजातंदेहेयस्यचकस्यचित् ॥ कलिंमृगयतेकर्तुंगंतुंग्रामांतरंतथा ॥ २३ ॥ चलचित्तश्चसोऽत्यर्थंविवादेचोद्यतस्तथा ॥ गुरुमावर णंकामंतमोभवतितद्यदा ॥ २४ ॥ तदांऽगानिगुरूण्याशुप्रभवंत्यावृतानिच ॥ इंद्रियाणिमनःशून्यंनिद्रांनैवाभिवांछति ॥ २५ ॥ गु णानांलक्षणान्येवंविज्ञेयानीहनारद ॥ नारदउवाच ॥ विभिन्नलक्षणाःप्रोक्ताःपितामहगुणास्त्रयः ॥ २६ ॥ कथमेकत्रसंस्थानेकार्यंकुर्वंतिशा श्वतम् ॥ परस्परंमिलित्वाहिविभिन्नाःशत्रवःकिल ॥ २७ ॥ एकत्रस्थाःकथंकार्यंकुर्वंतीतिवदस्वमे ॥ ब्रह्मोवाच ॥ शृणुपुत्रप्रवक्ष्यामिगुणास्ते दीपवृत्तयः ॥ २८ ॥ प्रदीपश्चयथाकार्यंप्रकरोत्यर्थदर्शनम् ॥ वर्तिस्तैलं यथार्चिश्चविरुद्धाश्चपरस्परम् ॥ २९ ॥

कलिमितिकलिःकलहः ॥ एतानिलक्षणानियदाभवंतितदातत्तमउत्कटंजातमितिज्ञेयामित्यर्थः ॥ २३ ॥ २४ ॥ गुरुमावरणमित्यस्यार्थमाह । तदांगानीति ॥ आवृतानितमसेत्यर्थः ॥ शून्यंज्ञानशून्यम् ॥ २५ ॥ मिश्रीभूतागुणाःकार्यंकुर्वंतीतिश्रुत्वानारदःशंकते । विभिन्नेति ॥ यथाशत्रवोमिलिताःकार्यंनकुर्वंति तथागुणाःपरस्परंशत्रवःसंतःकथंमिलित्वाकार्यंकुर्वंतीत्यर्थः ॥ २६ ॥ २७ ॥ दीपवृत्तयइति ॥ तथाचयथादीपवर्तिकातैलानिपरस्परविरुद्धान्यपिमिलित्वाघटार्थप्रकाशनमेकंकुर्वंतितद्वद्गुणाअपीतिभावः ॥ २८ ॥ २९ ॥

॥ ३० ॥ इत्थमेतावत्पर्यंतंब्रह्मणानारदंप्रत्युक्तंनारदोव्यासंप्रत्युक्तवानित्याह । एवंप्रकृतिजाइति ॥ अत्रनारदउवाचेत्यनेनैवब्रह्मनारदसंवादसमाप्तेःसिद्धत्वात्सापुराणेनोक्तेतिबोध्यम्॥ ॥ ३१ ॥ तेवैविश्वस्यकारणंतेवप्रकृतिसंबंधिनोगुणाएवनान्योविश्वस्यकारणमित्यर्थः ॥ इत्युक्तमिति ॥ हेराजन्जनमेजय यत्त्वयापृष्टंतदेवोद्दिश्यमयापृष्टोनारदोमांप्रत्येवमुक्तवानि त्यर्थः ॥ ३२ ॥ इत्थंसंवादश्रवणेनजनमेजयस्यसर्वप्रश्नसमाधानेजातेऽपिसंवादनिर्गलितार्थनिगमनस्थानीयंव्यासआह आराध्येति ॥ हेराजन्यतोययादेव्यासर्वमिदंव्याप्तंयाचजगत्स्र ष्टिस्थितिक्षयतिरोधानानुग्रहपंचकृत्यकर्त्रीउत्पत्तिस्थितिक्षयरहितागुणत्रयसमुद्भूतपंचभूतसमुद्भूतदेहवतामेकैकगुणाभिमानिब्रह्मादिजीवानां सृष्टिस्थितिक्षयकारिणीसाम्यावस्थमायोपा धिकब्रह्मरूपिणीश्रीदेवीहेयगुणांस्तत्कार्याणिचज्ञात्वाकर्मोपासनादिभिर्वेदांतशास्त्रश्रवणादिभिश्चहेयगुणांस्तत्कार्याणिचनिरुध्यग्राह्यंसत्त्वगुणंतत्कार्याणिचज्ञात्वातं संपाद्यसत्त्वगुणोद्रेकेण

विरुद्धंहितथातैलमग्निनासहसंगतम् ॥ तैलंवर्तिविरोध्येवपावकोऽपिपरस्परम् ॥३०॥ एकत्रस्थाःपदार्थानांप्रकुर्वंतिप्रदर्शनम् ॥ नारदउवाच॥ एवंप्रकृतिजाःप्रोक्तागुणाःसत्यवतीसुत ॥ ३१ ॥ विश्वस्यकारणंतेवैमयापूर्वंयथाश्रुतम् ॥ व्यासउवाच ॥ इत्युक्तंनारदेनाथममसर्वंसविस्त रम् ॥ ३२ ॥ गुणानांलक्षणंसर्वंकार्यंचैवविभागशः ॥ आराध्यापरमाशक्तिर्ययासर्वमिदंततम् ॥ ३३ ॥ सगुणानिर्गुणाचैवकार्यभेदेसदैवहि ॥ अकर्तापुरुषःपूर्णोनिरीहःपरमोऽव्ययः ॥ ३४ ॥ करोत्येषामहामायाविश्वंसदसदात्मकम् ॥ ब्रह्माविष्णुस्तथारुद्रःसूर्यश्चंद्रःशचीपतिः ॥३५॥ अश्विनौवसवस्त्वष्टाकुबेरोयादसांपतिः ॥ वह्निर्वायुस्तथापूषासेनानीश्चविनायकः ॥ ३६ ॥ सर्वेशक्तियुताःशक्ताःकर्तुंकार्याणिस्वानिच ॥ अन्यथातेप्यशक्तावैप्रस्पंदितुमनीश्वराः ॥ ३७ ॥ साचैवकारणंराजन्जगतःपरमेश्वरी ॥ समाराधयतांभूपकुरुयज्ञंजनाधिप ॥ ३८ ॥ पूजनं परयाभक्त्यातस्याएवविधानतः ॥ महालक्ष्मीर्महाकालीतथामहासरस्वती ॥ ३९ ॥ ईश्वरीसर्वभूतानांसर्वकारणकारणम् ॥ सर्वकामार्थदा शांतासुखसेव्यादयान्विता ॥ ४० ॥ नामोच्चारणमात्रेणवांछितार्थफलप्रदा ॥ देवैराराधितापूर्वंब्रह्मविष्णुमहेश्वरैः ॥ ४१ ॥ मोक्षकामैश्चविवि धैस्तापसैर्विजितात्मभिः ॥ अस्पष्टमपियन्नामप्रसंगेनापिभाषितम् ॥ ४२ ॥ ददातिवांछितानर्थान्दुर्लभानपिसर्वथा ॥ ऐऐइतिभयार्तेन दृष्ट्वाव्याघ्रादिकंवने ॥ ४३ ॥ बिंदुहीनमपीत्युक्तंवांछितंप्रददातिवै ॥ तत्रसत्यव्रतस्यैवदृष्टांतोनृपसत्तम ॥ ४४ ॥

युक्तेनपुरुषेणसैवसर्वोत्कृष्टादेवीसर्ववेदांततात्पर्यभूमिराराध्याज्ञेयाचमोक्षकामेनेत्यर्थः ॥ ३३ ॥ कार्यभेदेमोक्षरूपेकार्येब्रह्माभिन्नानिर्गुणाआराध्यातदन्यकामेतुसगुणागुणविशिष्टेयमेव मायाविशिष्टब्रह्मरूपिणीश्रीदेवीजगत्कर्त्री नकेवलंब्रह्मनवाब्रह्मादयोदेवाइत्याह ॥ अकर्तेति ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ साचैवकारणमिति ॥ यानिमयानारदंप्रतिजगत्कारणानि शंकितानितानितानिसर्वाणिनस्वस्वशक्तिंविहायजगत्कर्तुंसमर्थानितस्मात्साशक्तिरेवजगत्कारणंसैवसर्वोत्कृष्टाध्येयाज्ञेयाचेतिममनारदस्यसंवादेनारदस्यब्रह्मणश्चसंवादेनिर्णीतमित्यर्थः॥ यज्ञमंबामखमित्यर्थः ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ अस्पष्टंयथावद्वर्णरहितमित्यर्थः ॥ प्रसंगेनापिदेवतानामबुद्धिरहितेनापिपुरुषेणान्यप्रसंगेनापीत्यर्थः ॥ ४२ ॥ इतरदेवतास्त्वा राधनेनैवयत्किंचित्फलंददति ॥ इयंतुअशुद्धनामोच्चारणेप्रसंगेनापिकृतेपुरुषार्थचतुष्टयंददातीतिकथंनसर्वैःसेव्येतिभावः ॥ तदुदाहरणमाह ॥ ऐ ऐ इति ॥ ४३ ॥ ४४ ॥

प्रत्यक्षएवेति ॥ अस्माकंमुनीनांभगवतीनाममहिमस्वरूपंनानाप्रकारकजातसिद्धिभिर्वारंवारंप्रत्यक्षमेवास्ति नसंशयोस्माकंतत्रेतिभावः ॥ ४५ ॥ ४६ ॥ अक्षरमिति॥ऐकाराक्षरमि
त्यर्थः ॥ ४७ ॥ हेराजन्नेतादृशीदयार्द्राभगवतीसर्वोत्कृष्टाभक्तकामकल्पद्रुमाऽस्तीतिसैवाराध्येतिभावः ॥ ४८ ॥ इतिश्रीदेवीभागवततिलकेतृतीयस्कंधेनवमोध्यायः ॥ ९ ॥ ॥ ॥ ॥
पंचषष्टिश्लोकवर्यैर्वाग्बीजमहिमामहान् ॥ सत्यव्रतकथायोगात्प्रोच्यतेभक्तिकारकः ॥ १ ॥ पूर्वाध्यायांतेप्रश्नबीजमुपलभ्यकोऽसौसत्यव्रतःकथंतेनप्रसंगेनास्पष्टनामोच्चारणंकृतंकाचतेन
सिद्धिर्जातेतिपरमभावुकोराजापृच्छति । कोसाविति ॥ १ ॥२॥३॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥८॥९॥१०॥ आराधनीयतमःसर्वोत्कृष्टःपूज्यतमश्चेत्यर्थः ॥११॥१२॥१३॥ पराप्रकृतिः

प्रत्यक्षएवचास्माकंमुनीनांभावितात्मनाम् ॥ ब्राह्मणानांसमाजेषुतस्योदाहरणंबुधैः ॥ ४५ ॥ कथ्यमानंमयाराजञ्छ्रुतंसर्वंसविस्तरम् ॥
अनक्षरोमहामूर्खोनाम्नासत्यव्रतोद्विजः ॥ ४६ ॥ श्रुत्वाऽक्षरंकोलमुखात्समुच्चार्यस्वयंततः ॥ बिंदुहीनंप्रसंगेनजातोऽसौविबुधोत्तमः ॥ ४७ ॥
ऐकारोच्चारणाद्देवीतुष्टाभगवतीतदा ॥ चकारकविराजंतंदयार्द्रापरमेश्वरी ॥ ४८ ॥ इति श्रीदेवीभागवते महापुराणे तृतीयस्कंधे नवमो
ऽध्यायः ॥ ९ ॥ ॥ जनमेजय उवाच ॥ कोऽसौसत्यव्रतोनामब्राह्मणोद्विजसत्तमः ॥ कस्मिन्देशेसमुत्पन्नःकीदृशश्चवदस्वमे ॥ १ ॥ कथं
तेनश्रुतःशब्दःकथमुच्चारितःपुनः ॥ सिद्धिश्चकीदृशीजातातस्यविप्रस्यतत्क्षणात् ॥ २ ॥ कथंतुष्टाभवानीसासर्वज्ञासर्वसंस्थिता ॥ विस्तरेण
वदस्वाद्यकथामेतांमनोरमाम् ॥ ३ ॥ सूतउवाच ॥ इतिपृष्टस्तदाराज्ञाव्यासःसत्यवतीसुतः ॥ उवाचपरमोदारंवचनंरसवच्छुचि ॥ ४ ॥
व्यासउवाच ॥ शृणुराजन्प्रवक्ष्यामिकथांपौराणिकींशुभाम् ॥ श्रुतामुनिसमाजेषुमयापूर्वंकुरूद्वह ॥ ५ ॥ एकदाऽहंकुरुश्रेष्ठकुर्वंस्तीर्थाटनं
शुचि ॥ संप्राप्तोनैमिषारण्यंपावनंमुनिसेवितम्॥६॥ प्रणम्याहंमुनीन्सर्वान्स्थितस्तत्रवराश्रमे ॥विधिपुत्रास्तुयत्रासञ्जीवन्मुक्तामहाव्रताः॥७॥
कथाप्रसंगएवासीत्तत्रविप्रसमागमे ॥ जमदग्निस्तुपप्रच्छमुनीनेवंसमास्थितः ॥ ८ ॥ जमदग्निरुवाच ॥ संदेहोऽस्तिमहाभागममचेतसिता
पसाः ॥ समाजेषुमुनीनां वै निःसंदेहोभवाम्यहम् ॥९॥ ब्रह्माविष्णुस्तथारुद्रोमघवावरुणोऽनलः ॥ कुबेरःपवनस्त्वष्टासेनानीश्चगणाधिपः॥
॥ १० ॥ सूर्योऽश्विनौभगःपूषानिशानाथोग्रहास्तथा ॥ आराधनीयतमःकोऽत्रवांछितार्थफलप्रदः ॥ ११॥ सुखसेव्यश्चसततंचाशुतोषश्चमा
नदाः ॥ ब्रुवंतुमुनयःशीघ्रंसर्वज्ञाःसंशितव्रताः ॥ १२ ॥ एवंप्रश्नेकृतेतत्रलोमशोवाक्यमब्रवीत् ॥ जमदग्नेशृणुष्वैतद्यत्पृष्टंवैत्वयाऽधुना॥१३॥
सेवनीयतमाशक्तिःसर्वेषांशुभमिच्छताम् ॥ पराप्रकृतिराद्याचसर्वगासर्वदाशिवा ॥ १४ ॥

साम्यावस्थमायोपाधिकब्रह्मरूपिणी ॥ तदुक्तंगीतासु ॥ भूमिरापोऽनलोवायुःखंमनोबुद्धिरेवच ॥ अहंकारइतीयंमेभिन्नाप्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यांविद्धिमेप्रकृतिंपराम्॥जीव
रूपांमहाबाहोययेदंधार्यतेजगदिति ॥ जीवरूपांचैतन्यरूपाम् ॥ तथासूतसंहितायाम् ॥ चिन्मात्राश्रयमायायाःशक्त्याकारेद्विजोत्तमाः ॥ अनुप्रविष्टायासंविन्निर्विकल्पास्वयंप्रभा ॥
सदाकारासदानंदासंसारोच्छेदकारिणी ॥ साशिवापरमादेवीशिवाभिन्नाशिवंकरीति ॥ शिवाभिन्नाब्रह्माभिन्नेत्यर्थः ॥ जगदंकुररूपिण्याशक्त्यायदवच्छिन्नंचैतन्यंसामूलप्रकृतिः परा
शक्तिरितिचोच्यतेइतितट्टीकायांमाधवः ॥ १४ ॥

संसारवृक्षस्यमूलंमूलभूतेत्यर्थः ॥ सेवितासतीवरदानार्थसदैवाऽऽर्द्रचित्तायाभवतीत्यर्थः ॥ १५ ॥ १६ ॥ यथाप्राप्तंफलमित्यर्थः ॥ १७ ॥ पुत्रायपुत्रार्थम् ॥ १८ ॥ तमसानाम्नीनदीतत्तीरम् ॥ १९॥ २०॥ २१॥ २२॥ २३॥ २४॥ काम्यकर्मभ्रंशेकाम्यसिद्धिर्नस्यादितिभावः ॥ संजातेप्राप्ते ॥ २५ ॥ शब्दविवर्जितोमूकः ॥ २६ ॥ सर्वप्राणिशरीरेश्वासोच्छ्वासः

देवानांजननीसैवब्रह्मादीनांमहात्मनाम् ॥ आदिप्रकृतिर्मूलंसासंसारपादपस्यवै ॥ १५ ॥ स्मृताचोच्चारितादेवीददातिकिलवांछितम् ॥ सर्वदेवाऽऽर्द्रचित्तासावरदानायसेविता ॥ १६ ॥ इतिहासंप्रवक्ष्यामिशृण्वंतुमुनयःशुभम् ॥ अक्षरोच्चारणादेवयथाप्राप्तंद्विजेनवै ॥ १७॥ कोसलेषुद्विजःकश्चिद्देवदत्तेतिविश्रुतः ॥ अनपत्यश्चकारेष्टिंपुत्रायविधिपूर्वकम् ॥१८ ॥ तमसातीरमास्थायकृत्वामंडपमुत्तमम् ॥ द्विजानाहूयवेदज्ञान्सत्रकर्मविशारदान्॥ १९॥कृत्वावेदिंविधानेनस्थापयित्वाविभावसून् ॥पुत्रेष्टिंविधिवत्तत्रचकारद्विजसत्तमः ॥२०॥ ब्रह्माणंकल्पयामाससुहोत्रंमुनिसत्तमम् ॥ अध्वर्युंयाज्ञवल्क्यंचहोतारंचबृहस्पतिम् ॥२१॥ प्रस्तोतारंतथापैलमुद्गातारंचगोभिलम् ॥ सभ्यानन्यान्मुनीन्कृत्वाविधिवत्प्रददौवसु॥२२॥उद्गातासामगःश्रेष्ठःसप्तस्वरसमन्वितम्॥रथंतरमगायत्तुस्वारितेनसमन्वितम्॥२३॥तदाऽस्यस्वरभंगोऽभूत्कृतेश्वासेमुहुर्मुहुः ॥ देवदत्तश्चुकोपाऽऽशुगोभिलंप्रत्युवाचह ॥२४॥ मूर्खोऽसिमुनिमुख्याद्यस्वरभंगस्त्वयाकृतः ॥ काम्यकर्मणिसंजातेपुत्रार्थंयजतश्चमे ॥ २५ ॥ गोभिलस्तुतदोवाचदेवदत्तंसुकोपितः ॥ मूर्खस्तेभवितापुत्रःशठःशब्दविवर्जितः ॥ २६ ॥ सर्वप्राणिशरीरेतुश्वासोच्छ्वासःसुदुर्ग्रहः ॥ नमेऽत्रदूषणंकिंचित्स्वरभंगेमहामते ॥ २७ ॥ तच्छ्त्वावचनंतस्यगोभिलस्यमहात्मनः ॥ शापाद्भीतोदेवदत्तस्तमुवाचातिदुःखितः ॥ २८ ॥ कथंक्रुद्धोऽसिविप्रेंद्रवृथामयिनिरागसि ॥ अक्रोधनाहिमुनयोभवंतिसुखदाःसदा ॥ २९॥ स्वल्पेऽपराधेविप्रेंद्रकथंशप्तस्त्वयाह्यहम् ॥ अपुत्रोहंसुतप्तःप्राक्तापयुक्तःपुनःकृतः॥३०॥मूर्खपुत्रादपुत्रत्वंवरंवेदविदोविदुः ॥ तथाऽपिब्राह्मणोमूर्खःसर्वेषांनिंद्यएवहि॥३१॥पशुवच्छूद्रवच्चैवनयोग्यःसर्वकर्मसु ॥ किंकरोमीहमूर्खेणपुत्रेणद्विजसत्तम॥३२॥ यथाशूद्रस्तथामूर्खोब्राह्मणोनात्रसंशयः ॥ नपूजार्होनदानार्होनिंद्यश्चसर्वकर्मसु ॥ ३३ ॥ देशेवैवसमानश्चब्राह्मणोवेदवर्जितः ॥ करदःशूद्रवच्चैवमंतव्यःसचभूभुजा ॥ ३४ ॥ नासनेपितृकार्येषुदेवकार्येषुसद्विजः ॥ मूर्खःसमुपवेश्यश्चकार्यस्यफलमिच्छता॥३५॥राज्ञाशूद्रसमोज्ञेयोनयोज्यःसर्वकर्मसु ॥ कर्षकस्तुद्विजःकार्योब्राह्मणोवेदवर्जितः ॥३६॥ विनाविप्रेणकर्तव्यंश्राद्धंकुशचटेनवै॥नतुविप्रेणमूर्खेणश्राद्धंकार्यंकदाचन ॥ ३७ ॥ आहारादधिकंचान्नंनदातव्यमपंडिते॥दातानरकमाप्नोतिग्रहीतातुविशेषतः ॥३८॥

सुदुर्ग्रहःस्वाधीनोनास्तितथाचमदपराधाभावेदुर्वाक्यंवदतस्तवपुत्रस्तथैवस्यादिति ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ तदुक्तंवरंपुत्रादपुत्रत्वंमूर्खश्चेद्भवितासुतइति ॥ ३१॥ ३२॥ ३३॥ देशेवसमानोवासंकुर्वाणः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

देशेऽबुधाइतिच्छेदः ॥३९॥४०॥४१॥ असतामिति ॥ यथापिचुमंदोनिंबःफलाढ्योपिकाकैरेवोपभुज्यतेसयथाऽसतांकाकानामुपकारायतथेत्यर्थः ॥४२॥४३॥ ४४ ॥ ४५ ॥ ४६ ॥

धिग्राज्यंतस्यराज्ञोवैयस्यदेशेऽबुधाजनाः ॥ पूज्यंतेब्राह्मणामूर्खादानमानादिकैरपि ॥३९॥ आसनेपूजनेदानेयत्रभेदोनचाण्वपि॥मूर्खपंडितयोर्भेदोज्ञातव्योविबुधेनवै ॥ ४० ॥ मूर्खायत्रसुगर्विष्ठादानमानपरिग्रहैः ॥ तस्मिन्देशेनवस्तव्यंपंडितेनकथंचन ॥४१ ॥ असतामुपकारायदुर्जनानांविभूतयः ॥ पिचुमंदःफलाढ्योऽपिकाकैरेवोपभुज्यते ॥ ४२ ॥ भुक्त्वान्नंवेदविद्विप्रोवेदाभ्यासंकरोतिवै ॥ क्रीडंतिपूर्वजास्तस्यस्वर्गेप्रमुदिताःकिल ॥ ४३ ॥ गोभिलातःकिमुक्तंवैत्वयावेदविदुत्तम ॥ संसारेमूर्खपुत्रत्वंमरणादतिगर्हितम् ॥ ४४ ॥ कृपांकुरुमहाभागशापस्यानुग्रहंप्रति ॥ दीनोद्धारणशक्तोऽसि पतामितवपादयोः ॥ ४५ ॥ लोमशउवाच ॥ इत्युक्त्वादेवदत्तस्तुपतितस्तस्यपादयोः ॥ स्तुवन्दीनहृदत्यर्थंकृपणःसाश्रुलोचनः ॥ ४६ ॥ गोभिलस्तुतदातत्रदृष्ट्वातंदीनचेतसम्॥क्षणकोपामहांतोवैपापिष्ठाःकल्पकोपनाः ॥ ४७ ॥ जलंस्वभावतःशीतंपावकातपयोगतः॥उष्णंभवतितच्छीघ्रंतद्विनाशिशिरंभवेत् ॥४८॥ दयावान्गोभिलस्त्वाहदेवदत्तंसुदुःखितम् ॥ मूर्खोभूत्वासुतस्तेवैविद्वानपिभविष्यति ॥ ४९ ॥ इतिदत्तवरःसोऽथमुदितोभूद्द्विजर्षभः ॥ इष्टिंसमाप्यविप्रान्वैविससर्जयथाविधि ॥५०॥ कालेनकियतातस्यभार्यारूपवतीसती ॥ गर्भंदधारकालेसारोहिणीरोहिणीसमा ॥५१॥ गर्भाधानादिकंकर्मचकारविधिवद्द्विजः ॥ पुंसवनविधानंचशृंगारकरणंतथा॥५२॥सीमंतोन्नयनंचैवकृतंवेदविधानतः॥ ददौदानानिमुदितोमत्वेष्टिंसफलांतथा॥५३॥शुभेह्निसुषुवेपुत्रंरोहिणीरोहिणीयुते ॥ दिनेलग्नेशुभेऽत्यर्थंजातकर्मचकारसः॥५४॥पुत्रदर्शनकंकृत्वानामकर्मचकारच॥उतथ्यइतिपुत्रस्यकृतंनामपुराविदा॥५५॥सचाष्टमेतथावर्षेशुभेवैशुभवासरे ॥ तस्योपनयनंकर्मचकारविधिवत्पिता॥५६॥वेदमध्यापयामासगुरुस्तंवैव्रतेस्थितम्॥नोच्चचारतथोतथ्यःसंस्थितोमुग्धवत्तदा ॥५७॥ बहुधापाठितःपित्रानदधारमतिंशठः ॥ मूढवत्तिष्ठतेऽत्यर्थंतंशुशोचपितातदा॥५८॥एवंकुर्वन्सदाऽभ्यासंजातोद्वादशवार्षिकः॥ नवेदविधिवत्कर्तुंसंध्यावंदनकंविधिम् ॥ ॥५९॥ मूर्खोऽभूदतिलोकेषुगतावार्ताऽतिविस्तरम्॥ब्राह्मणेषुचसर्वेषुतापसेष्वितरेषुच॥६०॥जहासलोकस्तंविप्रंयत्रतत्रगतंवने ॥ पितामातानिनिंदाथमूर्खंतमतिभर्त्सयन्॥६१॥निंदितोऽथजनैःकामंपितृभ्यामथबांधवैः ॥ वैराग्यमगमद्विप्रोजगामवनमप्यसौ ॥६२॥ अंधोवरस्तथापंगुर्नमूर्खस्तुवरःसुतः ॥ इत्युक्तोऽसौपितृभ्यांवैविवेशकाननंप्रति ॥ ६३ ॥ गंगातीरेशुभेस्थानेकृत्वोटजमनुत्तमम् ॥ वन्यांवृत्तिंचसंकल्प्यस्थितस्तत्रसमाहितः ॥ ६४ ॥

कल्पकोपनाःबहुकालपर्यंतंकोपवंतः॥४७॥४८॥४९॥५०॥५१॥५२॥५३॥५४॥५५॥५६॥५७॥५८॥५९॥६०॥६१॥६२॥६३॥ उटजंकुटीम् ॥ वन्यांवृत्तिंफलमूलाशनरूपाम् ॥ ६४ ॥

॥ ६५ ॥ इतिश्रीदेवीभागवततिलकेतृतीयस्कन्धेदशमोऽध्यायः ॥ १० ॥ अष्टपंचाशद्भिरेवपद्यैः सत्यव्रतस्यह ॥ वाग्बीजोच्चारणात्सिद्धिर्जातेतिपरिगीयते ॥ १ ॥ वनंगतस्योतथ्य स्यवृत्तमाहलोमशः । नवेदेति ॥ १ ॥ कारणंसर्वेश्वरंचनवेद ॥ २ ॥ ३ ॥ ४ ॥ तर्हितत्रकिमकरोत्तत्राह । सोऽकरोदिति ॥ ५ ॥ ६ ॥ सत्यमेवतपोयस्यससत्यतपाअयंचऋषिःसत्य इति सत्यतपाराथीतरइतितैत्तिरीयश्रुतिप्रसिद्धः ॥ ७ ॥ नाहितंकस्यचित्कुर्यादिति ॥ जानातीतिशेषः ॥ चिंतयन्निति ॥ इतिवक्ष्यमाणप्रकारेण ॥ ८ ॥९॥१० ॥ अदुग्धदोहेदोहने

नियमंचपरंकृत्वानासत्यंप्रब्रवीम्यहम्॥स्थितस्तत्राश्रमेरम्येब्रह्मचर्यव्रतोहिसः॥६५॥ इतिश्रीदेवीभागवतेमहापुराणेतृतीयस्कंधेदशमोऽध्यायः ॥१०॥ लोमशउवाच॥नवेदाध्ययनंकिंचिज्जानातिनजपंतथा॥ध्यानंनदेवतानांचनचैवाराधनंतथा॥ १॥ नासनंवेदविप्रोसौप्राणायामंतथापु नः॥प्रत्याहारं तुनोवेदभूतशुद्धिंचकारणम्॥२॥नमंत्रंकीलकंजाप्यंगायत्रींचनवेदसः॥शौचंस्नानविधिंचैवतथाऽऽचमनकंपुनः ॥३॥प्राणाग्निहो त्रंनोवेदबलिदानंनचातिथिम् ॥ नसंध्यांसमिधोहोमंविवेदचतथामुनिः॥४॥सोऽकरोत्प्रातरुत्थाययत्किंचिद्दंतधावनम्॥स्नानंचशूद्रवत्तत्रगंगा यांमंत्रवर्जितम् ॥५॥फलान्यादायवन्यानिमध्याह्नेऽपियदृच्छया॥भक्ष्याभक्ष्यपरिज्ञानंनजानातिशठस्तथा॥६॥सत्यंब्रूतेस्थितस्तत्रनानृतंवद तेपुनः॥जनैःसत्यतपानामकृतमस्यद्विजस्यवै ॥७॥नाहितंकस्यचित्कुर्यान्नतथाऽविहितंक्कचित्॥सुखंस्वपितितत्रैवनिर्भयश्चिंतयन्निति ॥ ८ ॥ कदामेमरणंभाविदुःखंजीवामिकानने॥जीवितंधिक्चमूर्खस्यतरसामरणंध्रुवम्॥९॥दैवेनाहंकृतोमूर्खोनान्योऽत्रकारणंमम॥प्राप्यचवोत्तमंजन्म वृथाजातंममाधुना॥१०॥यथावंध्यासुरूपाचयथावानिष्फलोद्रुमः॥अदुग्धदोहाधेनुश्चतथाऽहंनिष्फलःकृतः ॥११॥ किंनुनिंदाम्यहंदैवंनूनंक र्ममभेदृशम् ॥ नदत्तंपुस्तकंकृत्वाब्राह्मणायमहात्मने ॥१२॥ नवैविद्यामयादत्तापूर्वजन्मनिनिर्मला ॥ तेनाहंकर्मयोगेनशठोऽस्मिचाद्विजाधमः ॥१३॥नचतीर्थेतपस्तप्तंसेवितानचसाधवः॥नद्विजाःपूजिताद्रव्यैस्तेनजातोऽस्मिदुष्टधीः ॥१४॥ वर्ततेमुनिपुत्राश्चवेदशास्त्रार्थपारगाः॥अहंसु मूढःसंजातोदैवयोगेनकेनचित् ॥१५॥नजानामितपस्तप्तुंकिंकरोमिसुसाधनम्॥मिथ्यायंमेऽत्रसंकल्पोनमेभाग्यंशुभंकिल॥१६॥दैवमेवपरंम न्येधिक्पौरुषमनर्थकम् ॥ वृथाश्रमकृतंकार्यंदैवाद्भवतिसर्वथा॥१७॥ब्रह्माविष्णुश्चरुद्रश्चशक्राद्याःकिलदेवताः॥कालस्यवशगाःसर्वेकालोहिदुर तिक्रमः ॥ १८ ॥ एवंविधान्वितर्कांस्तुकुर्वाणोऽहर्निशंद्विजः ॥ स्थितस्तत्राश्रमेतीरेजाह्नव्याः पावनेस्थले ॥ १९ ॥ विरक्तःसतुसंजातः स्थितस्तत्राऽऽश्रमेद्विजः ॥ कालातिवाहनंशांतश्चकारविजनेवने ॥ २० ॥

यस्याःसा ॥ ११ ॥ किंन्विति ॥ दैवंविधिंकिन्तुकिमर्थंनिंदामि यतोममकर्मैवेदृशंभवतिविधेःकर्मानुरूपमेवफलदातृत्वात् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ इदंनमयाकृतमितिसंकल्पः पश्चात्तापोऽपिमिथ्यैवयतोभाग्यंमेशुभंनास्ति ततःपश्चात्तापेऽपिनसत्कर्मभवितुमर्हतीति ॥१६॥ वृथेति ॥ श्रमेणपौरुषेणकृतंकार्यंदैवात्सर्वथावृथाभवति ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

॥ २१ ॥ सत्यंवदतीतिव्रतमित्यन्वयः ॥ अतएवसत्यतपाइतिनामजातमित्यर्थः ॥ २२ ॥ २३ ॥ कोलोवराहः ॥ २४ ॥ २५ ॥ सारस्वतंबीजमिति ॥ ऐंऐंइतिशब्दंचकारेत्यर्थः ॥
स्वभावएवायंमनुष्याणांदुःखातुरंदृष्ट्वाऐंऐंइतिशब्दउच्चारणीयइति ॥ २६ ॥ नज्ञातवानिति ॥ मयायदुच्चारितंतद्बीजमस्तीतिनज्ञातवान् ॥ अथचतंसूकरंदृष्ट्वाशोकेममज्जच॥ २७ ॥
निकुंजेनिबिडवृक्षदेशेप्रविलीयादृश्योभूत्वा ॥ २८ ॥ ततइति ॥ सूकरेआश्रमंप्रविश्यानंतरंनिबिडवनेगतेसतिततोऽनंतरमेवाकरणांतंकृष्टं करणंश्रोत्रेंद्रियंतत्पर्यंतकृष्टंचापंदधानइत्यर्थः ॥

एवंस्थितस्यतुवनेविमलोदकेवैवर्षाणितत्रनवपंचगतानिकामम् ॥ नाराधनंनचजपंनविवेदमंत्रंकालातिवाहनमसौकृतवान्वनेवै ॥२१॥ जानातितस्यविततंव्रतमेवलोकःसत्यंवदत्यपिमुनिःकिलनामजातम् ॥ जातंयशश्वसकलेषुजनेषुकामंसत्यव्रतोऽयमनिशंनमृषाभिभाषी ॥ २२ ॥ तत्रैकदातुमृगयांरममाणएवप्राप्तोनिषाद्निशठोधृतचापबाणः॥क्रीडन्वनेऽतिविपुलेयमतुल्यदेहःक्रूराकृतिर्हननकर्मणिचातिदक्षः ॥ २३॥ तेनातिकृष्टेनशरेणविद्धःकोलःकिरातेनधनुर्धरेण ॥ पलायमानोभयविह्वलश्चमुनेःसमीपंविद्रुतोजगाम ॥ २४ ॥ विकंपमानोरुधिरार्द्रदेहोयदाजगामाश्रममंडलंवै ॥ कोलस्तदातीवदयार्द्रभावंप्राप्तोमुनिस्तत्रसमीक्ष्यदीनम् ॥ २५ ॥ अग्रेव्रजंतंरुधिरार्द्रदेहंदृष्ट्वामुनिःसूकरमाशुविद्धम् ॥ दयाभिवेशादतिकंपमानःसारस्वतंबीजमथोच्चचार ॥ २६ ॥ अज्ञातपूर्वंचतथाश्रुतंचदैवान्मुखेवैसमुपागतंच ॥ नज्ञातवान्बीजमसौविमूढोममज्जशोकेसमुनिर्महात्मा ॥ २७ ॥ कोलःप्रविश्याऽऽश्रममंडलंतद्गतोनिकुंजेप्रविलीयगूढम् ॥ अप्राप्तमार्गोदृढनिर्विण्णचेताःप्रवेपमानःशरपीडितत्वात् ॥ २८ ॥ ततःक्षणादाकरणांतकृष्टंचापंदधानोऽतिकरालदेहः ॥ प्राप्तस्तदंतेसचमृग्यमाणोनिषादराजःकिलकालएव ॥ २९ ॥ दृष्ट्वामुनितत्रकुशासनेस्थितंनाम्नातुसत्यव्रतमद्वितीयम् ॥ व्याधःप्रणम्यप्रमुखेस्थितोऽसौपप्रच्छकोलःक्वगतोद्विजेश॥ ३० ॥ जानामितेऽहंसुव्रतंप्रसिद्धंतेनाद्यपृच्छेममबाणविद्धः ॥ क्षुधार्दितंमेसकलंकुटुंबंबिभर्तुकामःकिलआगतोऽस्मि ॥३१ ॥ वृत्तिर्ममैषाविहिताविधात्रानान्याऽस्तिविप्रेन्द्रऋतंब्रवीमि ॥ भर्तव्यमेवेहकुटुंबमंजसाकेनाप्युपायेनशुभाशुभेन ॥ ३२ ॥ सत्यंब्रवीत्वद्यसत्यव्रतोऽसिक्षुधातुरोवर्ततेपोष्यवर्गः ॥ क्वसौगतःसूकरोबाणविद्धःपृच्छाम्यहंवाडवब्रूहितूर्णम् ॥ ३३ ॥ तेनेतिपृष्टःसमुनिर्महात्मावितर्कमग्नःप्रबभूवकामम् ॥ सत्यव्रतंमेऽद्यभवेन्नभग्नंनदृष्टइत्युच्चरितेनकिंवै ॥ ३४ ॥ गतोऽत्रकोलःशरविद्धदेहःकथंब्रवीम्यद्यमृषाऽमृषावा ॥ क्षुधार्दितोऽयंपरिपृच्छतीवदृष्ट्वाहनिष्यत्यपिसूकरंवै ॥३५॥

॥ २९ ॥ ३० ॥ किलआगतोऽस्मीत्यत्रसंध्यभावआर्षः ॥ ३१ ॥ ३२ ॥ सत्यामिति ॥ भवान्सत्यंब्रवीतु ॥ ३३ ॥ वितर्कमग्नः संदेहमग्नः ॥ संदेहमेवाऽऽह । सत्यमिति ॥ नदृष्टइत्युच्चरितेममसत्यव्रतंभग्नंनभवेत्किम् अपितुभवेदेव ॥३४ ॥ अतोगतःकोलःशरविद्धदेहइत्यमृषासत्यंवक्तव्यमितिचेत्तत्राऽऽह । कथंब्रवीमीति ॥ हिंसादोषभयादपिसत्यंकथंब्रवीमीति ॥ ततउभयतोदोषान्मृषावाऽमृषाकथंब्रवीमीति ॥ कथंब्रवीमीतिवाक्यस्य देहलीदीपकन्यायेनान्वयः ॥ सत्येउक्तेऽयंहनिष्यत्येवेत्याह ॥ क्षुधार्दितइति ॥ ३५ ॥

सत्यंनसत्यामिति॥येनसत्यभाषणेनहिंसाभवति तत्सत्यंसत्यंनभवति किंतुदयान्वितंदययाऽन्यकल्याणार्थंप्रयुज्यमानमप्यनृतंसत्यमेवभवति ॥३६॥ यद्यप्यन्यकल्याणार्थमनृतमपिसत्यं तथाचममानृतकथनेऽत्रदोषोनास्तितथाप्युभयंसंरक्षितंस्याच्चेत्सर्वतोवरमितिमनसिविचारयन्नाह । हितंकथंस्यादिति॥उभयोर्विरुद्धयोःप्रसंगेममहितंकथंस्यात्तस्योत्तरंचमयाकिंवक्तव्यं येनममवचोमृषानस्यादितिविचारयन्सन्हेवाडवहेजमदग्ने धर्मसंकटेयथोचितंवचनंवक्तुंनप्रापनसमर्थोबभूव ॥३७॥ बाणाहतमिति॥हेजमदग्ने अस्मिन्समयेनिजबीजतोनिजबीजवा ग्भवबीजोच्चारतोदेवीप्रसन्नासतीविद्यांब्रह्मविद्यांदुरापांददौतस्मैसत्यव्रताय॥यया विद्ययाबाणाहतंदयान्वितंकोलंवीक्ष्यतदंतेविचारांतेतेनसत्यव्रतेनवचःसमुदाहृतम्॥यद्वायद्वचःऐंऐइति समुदाहृतंतेनवचसेत्यन्वयः ॥ ३८ ॥ तदेवाऽऽह । बीजोच्चारणेति ॥३९॥४०॥ यदुक्तंत्वयावराहःकेनमार्गेणगतइतितत्रदर्शनवदनयोरेककर्तृत्वेएवेदंसंभवति नचदर्शनवदनकर्तृत्वमेके स्यास्तिकिंतुभिन्नस्यैवेत्याह । यापश्यतीति॥याअनश्वन्नन्योअभिचाकशीतिश्रुतिप्रतिपाद्यासर्वसाक्षिणीसापश्यति ॥ तमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंविभातीतिश्रुत्यासर्वप्रका शकत्वस्याचितिशक्तेरेवप्रतिपादनात्॥तथाचसापश्यतिसायापश्यतिनसाब्रूते वदनकर्तृत्वंबुद्धेरेवनाचीतिशक्तेः॥याब्रूतेबुद्धिर्नसापश्यतिनविषयंप्रकाशयति॥तस्याःजडत्वात्ननुसत्यानृतेमि

सत्यंनसत्यंखलुयत्रहिंसादयान्वितंचानृतमेवसत्यम् ॥ हितंनराणांभवतीहयेनतदेवसत्यंनतथाऽन्यथैव ॥ ३६ ॥ हितंकथंस्यादुभयोर्विरुद्ध योस्तदुत्तरंकिंनयथामृषावचः ॥ विचारयन्वाडवधर्मसंकटेनप्रापवक्तुंवचनंयथोचितम् ॥ ३७ ॥ बाणाहतंवीक्ष्यदयान्वितंचकोलंतदंतेसमुदा हृतंवचः ॥ तेनप्रसन्नानिजबीजतःशिवाविद्यांदुरापांप्रददौचतस्मै ॥ ३८ ॥ बीजोच्चारणतोदेव्याविद्याप्रस्फुरिताऽखिला ॥ वाल्मीकेश्चयथा पूर्वंतथासद्यभवत्कविः ॥ ३९ ॥ तमुवाचद्विजोव्याधंसंमुखस्थंधनुर्धरम् ॥ सत्यकामस्तुधर्मात्माश्लोकमेकंदयापरः ॥४०॥ यापश्यतिनसा ब्रूतेयाब्रूतेसानपश्यति ॥ अहोव्याधस्वकार्यार्थिन्किंपृच्छसिपुनःपुनः ॥ ४१ ॥ इत्युक्तस्तुतदातेनगतोऽसौपशुहापुनः ॥ निराशःसूक रेतस्मिन्परावृत्तोनिजालये ॥ ४२ ॥ ब्राह्मणस्तुकविर्जातःप्राचेतसइवापरः ॥ प्रसिद्धःसर्वलोकेषुनाम्नासत्यव्रतोद्विजः ॥ ४३ ॥ सार स्वतंततोबीजंजजापविधिपूर्वकम् ॥ पंडितश्चातिविख्यातोद्विजोऽसौधरणीतले ॥ ४४ ॥ प्रतिपर्वसुगायंतिब्राह्मणायद्यशःसदा ॥ आख्यानं चातिविस्तीर्णंस्तुवंतिमुनयःकिल ॥ ४५ ॥ तच्छ्रुत्वासदनंतस्यसमागम्यतदाश्रमे ॥ येनत्यक्तःपुरातेनगृहंनीतोऽतिमानितः ॥ ४६ ॥

थुनीकृत्ययथालोकेचितिशक्तिजडशक्त्योरेकत्वमाध्यासिकंस्वीकृत्ययएवपश्यतिसएवब्रूतेइतिव्यवहारोदृश्यतेतथाभवताप्यवहारःकुतोनाक्रियतइतिचेदध्यासकारणस्याविद्यारूपस्यमय्य भावादित्यभिप्रायः ॥ इत्थंसत्यहोव्याधस्वकार्यार्थिन्मांप्रतिपुनःपुनःकिंपृच्छसिनैतत्प्रष्टुंयोग्यमित्यर्थः ॥ ४१ ॥ परावृत्तइति ॥ अयंज्ञानीवर्ततेपूज्योनातिशयप्रश्नार्होऽयमितिमत्वापरा वृत्तइत्यर्थः ॥ ४२ ॥ प्रचेतावरुणःसचश्रुतिसिद्धोज्ञानी ॥ ४३ ॥ ४४ ॥ ४५ ॥ अत्रत्यमेवसत्यव्रतमुनेराख्यानंलघुस्तवेश्रीमदाचार्यैरपिसंगृहीतम् ॥ दृष्ट्वासंभ्रमकारिवस्तुसहसाऐऐ इतिव्याहृतंयेनाकूतवशादपीहवरदेबिंदुंविनाप्यक्षरम् ॥ तस्यापिध्रुवमेवदेवितरसाजातेत्तवानुग्रहेवाचःसूक्तिसुधारसद्रवमुचोनिर्यंतिवक्त्रांबुजात् ॥ यन्नित्येतवकामराजमपरंमंत्राक्षरंनि ष्कलंतत्सारस्वतमित्यवैतिविरलःकश्चिज्जनश्चेद्भुवि ॥ आख्यानंप्रतिपर्वसत्यतपसोयत्कीर्तयंतोद्विजाःप्रारंभेप्रणवास्पदप्रणयतांनीत्वोच्चरंतिस्फुटामिति ॥ तथापृथ्वीधराचार्यैरपि ऋक्सा मयोर्यजुषिसंधिवशादुदीर्णबीजंसरस्वतिसकृत्तवयेजपंति ॥ तेसत्यवाक्यमुनिवद्विदितत्रयीकाआथर्वणादिकमवाप्यसुखीभवंतीति ॥ येनत्यक्तस्तेनपित्रेत्यर्थः ॥ ४६ ॥

एतादृशमहाफलदात्रीयत्किंचिन्निमिषेणस्मृताभगवतीतस्मादन्यदेवतांविहायेयमेवाऽऽराध्येत्याह । तस्मादिति ॥ ४७ ॥ ४८ ॥ तेनकारणेनकामदेतिलोकेकीर्त्यते ॥ ४९ ॥ सुखिन
जनान् दृष्ट्वैतैर्भगवत्याराधिताऽस्तीत्यनुमानंकर्त्तव्यम् ॥ दुःखिनोदृष्ट्वायतएतेदुःखिनस्तस्मादेतैर्भगवतीनाराधितेत्यनुमानंकर्तव्यमितिसमुदायार्थः ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥
॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ इति श्रीदेवीभागवततिलकेतृतीयस्कंधेएकादशोऽध्यायः ॥ ११ ॥ ॥ सप्ताशीतिमहापद्यैरंबायज्ञविधिर्महान् ॥ यथावत्प्रोच्यतेयेनमु

तस्माद्राजन्सदासेव्यापूजनीयाचभक्तितः ॥ आदिशक्तिःपरादेवीजगतांकारणंहिसा ॥ ४७॥ तस्यायज्ञंमहाराजकुरुवेदविधानतः ॥ सर्वकाम
प्रदंनित्यंनिश्चयंकथितंपुरा ॥ ४८ ॥ स्मृतासंपूजिताभक्त्याध्याताचोच्चारितास्तुता ॥ ददातिवांछितानर्थान्कामदातेनकीर्त्यते ॥४९॥ अनु
मानमिदंराजन्कर्तव्यंसर्वथाबुधैः ॥ दृष्ट्वारोगयुतान्दीनान्क्षुधितान्निर्धनाञ्छठान् ॥ ५० ॥ जनानार्तांस्तथामूर्खान्पीडितान्वैरिभिःसदा ॥
दासानाज्ञाकरान्क्षुद्रान्विकलान्विह्वलानथ ॥ ५१ ॥ अतृप्तान्भोजनेभोगेसदार्तानजितेंद्रियान् ॥ तृष्णाधिकानशक्तांश्चसदाधिपरिपीडितान्
॥ ५२ ॥ तथाविभवसंपन्नान्पुत्रपौत्रविवर्धनान् ॥ पुष्टदेहांश्चसंभोगैःसंयुतान्वेदवादिनः ॥ ५३ ॥ राजलक्ष्म्यायुताञ्छूरान्वशीकृतजनानथ॥
स्वजनैरवियुक्तांश्चसर्वलक्षणलक्षितान् ॥ ५४ ॥ व्यतिरेकान्वयाभ्यांचविचेतव्यंविचक्षणैः ॥ एभिर्नपूजितादेवीसर्वार्थफलदाशिवा ॥ ५५ ॥
समाराधिताचतथानृभिरेभिःसदांऽबिका ॥ यतोऽमीसुखिनःसर्वेसंसारेऽस्मिन्नसंशयः ॥ ५६ ॥ व्यासउवाच ॥ इतिराजञ्छ्रुतंतत्रमयामुनिस
मागमे ॥ लोमशस्यमुखात्कामदेवीमाहात्म्यमुत्तमम् ॥५७॥ इतिसंचिंत्यराजेंद्रकर्तव्यंचसदाऽर्चनम् ॥ भक्त्यापरमयादेव्याःप्रीत्याचपुरुषर्षभ
॥५८॥ इतिश्रीदेवीभागवतेमहापुराणेतृतीयस्कंधेएकादशोऽध्यायः ॥११॥ राजोवाच ॥ वदयज्ञविधिंसम्यग्देव्यास्तस्याःसमंततः ॥ श्रुत्वा
करोम्यहंस्वामिन्यथाशक्तिह्यतंद्रितः ॥ १ ॥ पूजाविधिंचमंत्रांश्चहोमद्रव्यमसंशयम् ॥ ब्राह्मणाःकतिसंख्याश्चदक्षिणाश्चतथापुनः ॥२॥ व्यास
उवाच ॥ शृणुराजन्प्रवक्ष्यामिदेव्यायज्ञंविधानतः ॥ त्रिविधंतुसदाज्ञेयंविधिदृष्टेनकर्मणा ॥३॥ सात्त्विकंराजसंचैवतामसंचतथापरम् ॥ मुनी
नांसात्त्विकंप्रोक्तंनृपाणांराजसंस्मृतम् ॥ ४ ॥ तामसंराक्षसानांवैज्ञानिनांतुगुणोज्झितम् ॥ विमुक्तानांज्ञानमयंविस्तरात्प्रब्रवीमिते ॥५॥ देशः
कालस्तथाद्रव्यंमंत्राश्चब्राह्मणास्तथा ॥ श्रद्धाचसात्त्विकीयत्रतंयज्ञंसात्त्विकंविदुः ॥ ६ ॥

क्तोभवतिमानवः ॥ १ ॥ पूर्वाध्यायांतेअंबायज्ञस्यमहाफलत्वंश्रुत्वातद्यज्ञविधिंराजापृच्छति । वदयज्ञेति ॥ १ ॥ २ ॥ त्रिविधमिति ॥ सर्वकर्मविधिदृष्टेनकर्मणाऽनुष्ठानेन त्रिविधं
ज्ञेयमित्यर्थः ॥ ३ ॥ त्रैविध्यमाह । सात्त्विकमिति ॥ ४ ॥ ज्ञानिनांविमुक्तानांगुणोज्झितंज्ञानमयमित्यर्थः ॥५॥ तत्रसात्त्विकस्वरूपमाह । देशइति ॥ सात्त्विकोदेशोवाराणस्यादिः
कालउत्तरायणादिः ॥ द्रव्यंन्यायार्जितम् ॥ मंत्रावैदिकाः ॥ ब्राह्मणाःश्रोत्रियाः ॥ श्रद्धाऽऽस्तिक्यबुद्धिःसात्त्विकीविषयसौंदर्यजनितरागाद्यकलुषिता ॥ ६ ॥

॥ ७ ॥ ८ ॥ ९ ॥ यद्येतादृशीसामग्रीनास्तितर्हितत्रतत्कर्मणःफलंनैवभवति ॥ तत्रदृष्टांतमाह । प्रत्यक्षंतवेति ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ किमत्रेति ॥
परमेश्वरेकेशवेसत्यपिधर्ममूर्त्तौयुधिष्ठिरेसत्यपितादृशयज्ञोत्तरमेतादृशोमहाननर्थोजातस्तस्मात्तत्रधर्मवैगुण्यंजातमितिकिमत्रचिंतनीयंविचारणीयम् ॥ जातमेवधर्मवैगुण्यमित्येवनिश्चे
तव्यमित्यर्थः ॥ १७ ॥ ननुधर्मवैगुण्यंतत्रनजातंकिंतुतेषांपांडवानांभवितव्यंप्रारब्धंतथैवस्थितमतस्तथाफलंजातमितिचेत्तत्राऽऽह भवितव्यमितिप्रोक्तेइति ॥ यदिप्रारब्धमेवमुख्यं
पुरुषार्थइतिमतंस्वीक्रियतेतदाऽऽगमोनुष्ठानप्रतिपादकोव्यर्थएवस्यात् ॥ यथाप्रारब्धंस्यात्तथाभविष्यत्यागमस्तत्राकिंकरिष्यतीति ॥ १८ ॥ वचनेवेदवचनेफलप्रतिपादकेसत्यपितत्र

द्रव्यशुद्धिःक्रियाशुद्धिर्मंत्रशुद्धिश्चभूमिप ॥ भवेद्यदितदापूर्णंफलंभवतिनान्यथा ॥७॥ अन्यायोपार्जितेनैवद्रव्येणसुकृतंकृतम्॥ नकीर्तिरिहलो
केचपरलोकेनतत्फलम् ॥८॥ तस्मान्न्यायार्जितेनैवकर्तव्यंसुकृतंसदा ॥ यशसेपरलोकायभवत्येवसुखायच॥९ ॥प्रत्यक्षंतवराजेंद्रपांडवैस्तुमखः
कृतः ॥ राजसूयःक्रतुवरःसमाप्तवरदक्षिणः ॥ १० ॥ यत्रसाक्षाद्धरिःकृष्णोयादवेंद्रोमहामनाः ॥ ब्राह्मणाःपूर्णविद्याश्चभारद्वाजादयस्तथा ॥
॥ ११ ॥ कृत्वायज्ञंसुसंपूर्णंमासमात्रेणपांडवैः ॥ प्राप्तंमहत्तरंकष्टंवनवासश्चदारुणः ॥ १२ ॥ पीडनंचैवपांचाल्यास्तथाद्यूतेपराजयः ॥ वनवा
सोमहत्कष्टंक्कगतंमखजंफलम् ॥ १३ ॥ दासत्वंचविराटस्यकृतंसर्वैर्महात्मभिः ॥ कीचकेनपरिक्लिष्टाद्रौपदीचप्रमद्वरा ॥ १४ ॥ आशीर्वादा
द्विजातीनांक्कगताःशुद्धचेतसाम् ॥ भक्तिर्वावासुदेवस्यक्कगतातत्रसंकटे ॥ १५ ॥ नरक्षितातदाबालाकेनापिद्रुपदात्मजा ॥ प्राप्तकेशग्रहाकाले
साध्वीचवरवर्णिनी ॥१६॥ किमत्रचिंतनीयंवैधर्मवैगुण्यकारणम् ॥ केशवेसतिदेवेशेधर्मपुत्रेयुधिष्ठिरे ॥१७॥ भवितव्यमितिप्रोक्तेनिष्फलःस्या
त्तदागमः ॥ वेदमंत्रास्तथाऽन्येवैवितथाःस्युरसंशयम् ॥ १८ ॥ साधनंनिष्फलंसर्वमुपायश्चनिरर्थकः ॥ भवितव्यंभवत्येववचनेप्रतिपादके॥
॥१९॥ आगमोप्यर्थवादःस्यात्क्रियाःसर्वानिरर्थकाः ॥ स्वर्गार्थंचतपोव्यर्थंवर्णधर्मश्चवैतथा ॥२०॥ सर्वप्रमाणंव्यर्थंस्याद्भवितव्येकृतेहृदि ॥
उभयंचापिमंतव्यंदैवचोपायएवच ॥ २१ ॥ कृतेकर्मणिचेत्सिद्धिर्विपरीतायदाभवेत् ॥ वैगुण्यंकल्पनीयंस्यात्प्राज्ञैःपंडितमौलिभिः ॥ २२ ॥
तत्कर्मबहुधाप्रोक्तंविद्वद्भिःकर्मकारिभिः ॥ कर्तृभेदान्मंत्रभेदाद्द्रव्यभेदात्तथापुनः ॥ २३ ॥ यथामघवतापूर्वंविश्वरूपोवृतोगुरुः ॥ विपरीतंकृतं
तेनकर्ममातृहितायवै ॥ २४ ॥ देवेभ्योदानवेभ्यस्तुस्वस्तीत्युक्त्वापुनः पुनः ॥ असुरामातृपक्षीयाःकृतंतेषांचरक्षणम् ॥ २५ ॥

विश्वासःकस्यापिनस्यात् ॥ यद्यस्माकंप्रारब्धंस्यात्तदाऽनुष्ठानमंतराऽपितत्कार्यंभविष्यति नोचेदनुष्ठानेकृतेऽपिनभविष्यतीति ॥ भवितव्यंभवत्येववचनेप्रतिपादकेसत्यपिकिंफलमित्यक्ष
रार्थः ॥ १९ ॥ ननुतर्हिफलप्रतिपादकवेदःकिमर्थमितिचेत्सोऽपित्वन्मतेऽर्थवादःस्यादित्याह । आगमोऽपीति ॥ एतानिसर्वाणिदूषणानित्वस्मन्मतेस्युरित्यर्थः ॥ भवितव्यमेवमुख्य
मितिमतेहृदिकृतेसति ॥ २० ॥ उभयमिति ॥ तस्माद्दैवंपुरुषकारश्चेत्युभयंफलसिद्धिंप्रतिकारणमितिवक्तव्यम् ॥ ततश्चपुरुषव्यापारेव्यंगमेवफलंभवतीतिसिद्धम् ॥ २१ ॥ तदे
वाऽऽह । कृतेकर्मणीति ॥ २२ ॥ २३ ॥ अत्रानेकोदाहरणान्याह । यथेति ॥ मातृहिताय मातृपक्षीयदैत्यहितायेत्यर्थः ॥ २४ ॥ २५ ॥

तस्यविश्वरूपस्य ॥ २६ ॥ वैगुण्येसतिविपरीतंफलंभवतीत्युक्त्वानोचेद्वैगुण्यंतदाधिकंफलंभवतीत्याह । नोचेदिति ॥ कर्मवैगुण्यंनचेदित्यर्थः ॥ २७ ॥ भारद्वाजोद्रोणः॥ पुत्रोऽपिलब्धो द्रौपद्यप्यधिकालब्धा ॥ २७ ॥ पुरेति ॥ एकपुत्रार्थंकृतेयज्ञेचत्वारःपुत्राउत्पन्नाइत्यर्थः ॥२९॥ उपसंहरति अतइति ॥३०॥३१॥३२॥ किंतत्रवैगुण्यंपांडवानांमखेजातमितिचेत्तत्राऽऽह कुद्रव्येति ॥ अनेकराजवधपूर्वकंसंपादितत्वात्कुद्रव्यत्वंधनस्येत्यर्थः ॥ ३३ ॥ तस्माद्दुर्लभःसात्त्विकोयज्ञोऽस्तिसचवैखानसादिसात्त्विकमुनीनामेवसंभवतिनान्यस्येत्याह ॥ सात्त्विक

दैत्यान्दृष्ट्वाऽतिसंपुष्टांश्चुकोपमघवातदा ॥ शिरांसितस्यवज्रेणचिच्छेदतरसाहरिः ॥२६॥ क्रियावैगुण्यमत्रैवकर्तृभेदादसंशयम् ॥ नोचेत्पंचालराजेनरोषेणापिकृताक्रिया॥२७॥भारद्वाजविनाशायपुत्रस्योत्पादनायच ॥ धृष्टद्युम्नःसमुत्पन्नोवेदिमध्याच्चद्रौपदी ॥ २८ ॥ पुरादशरथेनापिपुत्रेष्टिस्तुकृतायदा ॥ अपुत्रस्यसुतास्तस्यचत्वारःसंप्रजज्ञिरे॥ २९ ॥अतःक्रियाकृतायुक्त्यासिद्धिदासर्वथाभवेत् ॥ अयुक्त्याविपरीतास्यात्सर्वथानृपसत्तम ॥ ३० ॥ पांडवानांयथायज्ञेकिंचिद्वैगुण्ययोगतः ॥ विपरीतंफलंप्राप्तंनिर्जितास्तेदुरोदरे ॥ ३१ ॥ सत्यवादीतथाराजन्धर्मपुत्रोयुधिष्ठिरः ॥ द्रौपदीचतथासाध्वीतथाऽन्येप्यनुजाःशुभाः ॥ ३२ ॥ कुद्रव्ययोगाद्वैगुण्यंसमुत्पन्नंमखेऽथवा ॥ साभिमानैःकृताद्वापिदूषणंसमुपस्थितम् ॥ ३३ ॥ सात्त्विकस्तुमहाराजदुर्लभोवैमखःस्मृतः ॥ वैखानसमुनीनांहिविहितोऽसौमहामखः ॥ ३४ ॥ सात्त्विकंभोजनंयेवैनित्यंकुर्वंतितापसाः ॥ न्यायार्जितंचवन्यंचतथाऋष्यंसुसंस्कृतम् ॥ ३५॥ पुरोडाशपरानित्यंवियूपामंत्रपूर्वकाः ॥ श्रद्धाधिकामखाराजन्सात्त्विकाःपरमाःस्मृताः ॥३६॥ राजसाद्रव्यबहुलाःसयूपाश्चसुसंस्कृताः ॥ क्षत्रियाणांविशांचैवसाभिमानाश्चवैमखाः॥३७॥तामसादानवानांवैसक्रोधामदवर्धकाः ॥ सामर्षाःसंस्कृताःक्रूरामखाःप्रोक्तामहात्मभिः ॥३८॥ मुनीनांमोक्षकामानांविरक्तानांमहात्मनाम् ॥ मानसस्तुस्मृतोयागःसर्वसाधनसंयुतः ॥३९॥ अन्येषुसर्वयज्ञेषुकिंचिन्न्यूनंभवेदपि॥ द्रव्येणश्रद्धयावाऽपिक्रिययाब्राह्मणैस्तथा॥४०॥देशकालपृथग्द्रव्यसाधनैःसकलैस्तथा ॥ नान्योभवतिपूर्णोवैतथाभवतिमानसः ॥ ४१ ॥ प्रथमंतुमनःशोध्यंकर्तव्यंगुणवर्जितम् ॥ शुद्धेमनसिदेहोवैशुद्धएवनसंशयः ॥ ॥ ४२ ॥ इंद्रियार्थपरित्यक्तंयदाजातंमनःशुचि ॥ तदातस्यमखस्यासौप्रभवेदधिकारवान् ॥४३॥ तदाऽसौमंडपंकृत्वाबहुयोजनविस्तृतम् ॥ स्तंभैश्चविपुलैःश्लक्ष्णैर्यज्ञियद्रुमसंभवैः ॥ ४४ ॥ वेदिंचविशदांतत्रमनसापरिकल्पयेत् ॥ अग्नयोऽपितथास्थाप्याविधिवन्मनसाकिल॥४५॥

स्त्विति ॥ ३४ ॥ ऋष्यमृषिभ्योहितम् ॥ ३५ ॥ वियूपाःपशुबंधनस्तंभरहिताइत्यर्थः ॥ अपशुकायज्ञाइतितात्पर्यम् ॥ ३६ ॥ ३७ ॥ ३८ ॥ तत्रसात्त्विकेदेवीमखोऽपिबाह्याभ्यंतरभेदेनद्विविधः ॥ बाह्यस्तुवैदिकमंत्रादिपूर्वोक्तसात्त्विकसाधननिर्वृत्तोगृहस्थानांस्वकल्याणार्थिनामाभ्यंतरस्तुमोक्षकामानामित्याह । मुनीनामिति ॥ ३९ ॥ मानसमंबायज्ञंस्तौति । अन्येष्विति ॥ ४० ॥ ४१ ॥ मानसांबायज्ञस्याधिकारिणमाह । प्रथमंत्विति ॥ ४२ ॥ ४३ ॥ मंडपंमानसम् ॥ ४४ ॥ ४५ ॥

तथैवमानसमेव ॥ ४६ ॥ ४७ ॥ वायुष्वेवाग्निभावनाकार्येत्याह । पावकाइति ॥ ४८ ॥ ४९ ॥ उदानःसभ्यः ॥ आर्षउकारलोपः ॥ निर्गुणंदोषरहितमित्यर्थः ॥५० ॥ मनएवेति ॥ संकल्पविकल्पात्मकमित्यर्थः ॥ तथैवतदिति ॥ तदहंकारवृत्तिविशिष्टंमनएवयजमानइत्यर्थः ॥५१॥ निर्गुणाशक्तिरिति ॥ साम्यावस्थमायारूपिणीफलदात्रीयाशक्तिःसाचदेवतेत्यर्थः ॥ तथाच साम्यावस्थमायोपाधिकब्रह्मरूपिणीभगवतीदेवतेतिफलितम् ॥ ५२ ॥ तदुद्देशेनमायाविशिष्टब्रह्मरूपभगवत्युद्देशेनद्रव्यंमनसाकल्पितंयत्स्यात्तदिदंद्रव्यमेतावदाहुतिकमेतैर्मंत्रैरेतेष्वग्निषुमयाहूयतेइतिभावनामयएवहोमोभगवतीप्रीत्यर्थंकर्तव्यइतिमानसिकहोमोत्तरंपश्चान्निजंचित्तंनिरालंबंनिराश्रयंनिर्विषयंकृत्वाकुंडलीमुखमार्गेणसुषुम्नारंध्रेणतान्प्राणाग्नीन्ब्रह्माणि भगवतीपदवाच्येहुनेद्विलापयेत् ॥५३॥ इत्थंप्राणलयेजातेसंकल्पविकल्पावपिमनसोऽनायासेनलीनौभवतएवप्राणमनसोर्दुग्धांबुवन्मिलितत्वात् ॥तदुक्तम्॥ दुग्धांबुवत्संमिलितावुभौतौ तुल्यक्रियौमानसमारुतौतौ ॥ तत्रैकनाशादपरस्यनाशस्तत्रैकवृत्तेरपरप्रवृत्तिरिति ॥ इत्थंप्राणलयेसंकल्पविकल्पलयेचसमाधिर्भवति ॥ तस्मिन्समाधौस्वात्मभूतांमहेश्वरींस्वाभिन्नांभगवतींनिर्विकल्पचेतसिध्यायेत् ॥ ५४ ॥ इत्थंध्यायतोयदैवंज्ञानंभवतितदाऽऽत्मस्वरूपभगवत्याःसाक्षात्कारोजातइतिज्ञेयमित्याह । सर्वभूतस्थमात्मानमिति ॥ सर्वभूतेष्वधिष्ठानतयास्थितमात्मानंयदाऽनुभवतिसर्वभूतानिचरज्जुसर्पवन्मयिकल्पितानीतियदापश्यति तदाभगवतीसाक्षात्कारोजातइतिबोध्यमित्यर्थः ॥ ५५ ॥ इत्थमात्मरूपिण्याभगवत्याःसाक्षात्कारे जातेसनरोब्रह्माविद्भूयात् ॥ आत्मनोब्रह्मणश्चैकत्वात् ॥ ५६ ॥ इत्थंयदाभगवत्याःसाक्षात्कारोभवतितदामायाविद्याद्यंधकाररूपसकलसंसारकारणंदग्धंभवतीत्याह । तदामायादिकमिति ॥ तर्हिदेहःकथंतिष्ठतीतिचेत्प्रारब्धकर्मशेषादित्याह ॥ प्रारब्धकर्ममात्रंत्विति ॥ तस्यमुक्तेषुवत्सवेगसमाप्तिंविनापतनाभावात् ॥ ५७ ॥ तावताज्ञानेनजीवन्मुक्तःसन्मृतोमोक्षमवाप्नुयात् तत्रनसंदेहइत्याह । जीवन्मुक्तइति ॥ ५८ ॥ श्रोतव्याचसैवेत्यर्थः ॥ ५९ ॥

ब्राह्मणानांचवरणंतथैवप्रतिपाद्यच ॥ ब्रह्माऽध्वर्युतथाहोताप्रस्तोताविधिपूर्वकम् ॥४६॥ उद्गाताप्रतिहर्ताचसभ्याश्चान्येयथाविधि॥ पूजनीयाः प्रयत्नेनमनसैवद्विजोत्तमाः ॥४७॥ प्राणोऽपानस्तथाव्यानःसमानोदानएवच ॥ पावकाःपंचएवैतेस्थाप्यावेद्यांविधानतः ॥ ४८ ॥ गार्हपत्यस्तदाप्राणोऽपानश्चाहवनीयकः ॥ दक्षिणाग्निस्तथाव्यानःसमानश्चावसथ्यकः॥४९॥सभ्योदानःस्मृताह्येतेपावकाःपरमोत्कटाः॥ द्रव्यंचमनसाभाव्यंनिर्गुणंपरमंशुचि ॥ ५० ॥ मनएवतदाहोतायजमानस्तथैवतत् ॥ यज्ञाधिदेवताब्रह्मनिर्गुणंचसनातनम् ॥५१॥ फलदानिर्गुणाशक्तिःसदानिर्वेददाशिवा ॥ ब्रह्मविद्याऽखिलाधाराव्याप्यसर्वत्रसंस्थिता ॥ ५२ ॥ तदुद्देशेनतद्द्रव्यंहुनेत्प्राणाग्निषुद्विजः ॥ पश्चाच्चित्तंनिरालंबंकृत्वा प्राणानपिप्रभो ॥ ५३ ॥ कुंडलीमुखमार्गेणहुनेद्ब्रह्मणिशाश्वते ॥ स्वानुभूत्यास्वयंसाक्षात्स्वात्मभूतांमहेश्वरीम् ॥ ५४ ॥ समाधिनैवयोगेनध्यायेच्चेतस्यनाकुलः ॥ सर्वभूतस्थमात्मानंसर्वभूतानिचात्मनि ॥ ५५ ॥ यदापश्यतिभूतात्मातदापश्यतितांशिवाम् ॥ दृष्ट्वातांब्रह्मविद्भूयात्सच्चिदानंदरूपिणीम् ॥ ५६ ॥ तदामायादिकंसर्वंदग्धंभवतिभूमिप ॥ प्रारब्धकर्ममात्रंतुयावद्देहंचतिष्ठति ॥ ५७ ॥ जीवन्मुक्तस्तदाजातोमृतोमोक्षमवाप्नुयात् ॥ कृतकृत्योभवेत्तातयोभजेज्जगदंबिकाम् ॥ ५८ ॥ तस्मात्सर्वप्रयत्नेनध्येयाश्रीभुवनेश्वरी ॥ श्रोतव्याचैवमंतव्यागुरुवाक्यानुसारतः ॥ ५९ ॥

॥ ६० ॥ क्षयोन्मुखत्वमेवाऽऽह । अग्निष्टोमेनेति ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ देवीबीजंमायाबीजंतद्विधानज्ञाः ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ कपूणा निकुत्सितानि ॥ इमानिसर्वाणिदुष्टसाधनानिसंतिचेत्संतु यद्येकंसाधनंस्यात्तर्हिमनुष्योमुक्तएव तदपिसाधनंतस्यनजातमितिप्राह । तत्रैकंकारणमिति ॥ ७२ ॥ किंतन्मोक्षकारणंत

राजन्नेवंकृतोयज्ञोमोक्षदोनात्रसंशयः ॥ अन्येयज्ञाःसकामास्तुप्रभवंतिक्षयोन्मुखाः ॥६०॥ अग्निष्टोमेनविधिवत्स्वर्गकामोयजेदिति ॥ वेदानुशासनंचैतत्प्रवदंतिमनीषिणः ॥ ६१ ॥ क्षीणेपुण्येमृत्युलोकंविशंतिचयथामति ॥ तस्मात्तुमानसःश्रेष्ठोयज्ञोप्यक्षयएवसः॥ ६२ ॥ नराज्ञासाधितुंयोग्योमखोसौजयमिच्छता ॥ तामसस्तुकृतःपूर्वंसर्पयज्ञस्त्वयाऽधुना ॥ ६३ ॥ वैरंनिर्वाहितंराजंस्तक्षकस्यदुरात्मनः ॥ यत्कृतेनिहताः सर्पास्त्वयाऽग्नौकोटिशःपरे ॥ ६४॥ देवीयज्ञंकुरुष्वाद्यवितंतंविधिपूर्वकम् ॥ विष्णुनायःकृतःपूर्वंसृष्ट्यादौनृपसत्तम ॥ ६५ ॥ तथात्वंकुरुराजेंद्रविधिंतेप्रब्रवीम्यहम् ॥ ब्राह्मणाःसंतिराजेंद्रविधिज्ञावेदवित्तमाः ॥ ६६ ॥ देवीबीजविधानज्ञामंत्रमार्गविचक्षणाः ॥ याजकास्तेभविष्यंति यजमानस्त्वमेवहि ॥ ६७॥ कृत्वायज्ञंविधानेनदत्त्वापुण्यंमखार्जितम् ॥ समुद्धरमहाराजपितरंदुर्गतिंगतम् ॥ ६८ ॥ विप्रावमानजंपापंदुर्घटं नरकप्रदम् ॥ तथैवशापजोदोषःप्राप्तःपित्रातवाऽनघ ॥६९॥ तथादुर्मरणंप्राप्तंसर्पदंशेनभूभुजा ॥ अंतरालेतथामृत्युर्नभूमौकुशसंस्तरे ॥७०॥ नसंग्रामेनगंगायांस्नानदानादिवर्जितम् ॥ मरणंतेपितुस्तत्रसौधेजातंकुरूद्वह ॥ ७१ ॥ कपूणानिचसर्वाणिनरकस्यनृपोत्तम ॥ तत्रैकंकारणंतस्यनजातंचातिदुर्लभम् ॥ ७२ ॥ यत्रयत्रस्थितःप्राणीज्ञात्वाकालंसमागतम् ॥ साधनानामभावेऽपिह्यवशश्चातिसंकटे ॥ ७३ ॥ यदानिर्वेदमायातिमनसानिर्मलेनवै ॥ पंचभूतात्मकोदेहोममकिंचात्रदुःखदम् ॥ ७४ ॥ पतत्वद्ययथाकामंमुक्तोऽहंनिर्गुणोव्ययः ॥ नाशात्मकानितत्त्वानितत्रकापरिदेवना ॥ ७५ ॥ ब्रह्मैवाहंनसंसारीसदामुक्तःसनातनः ॥ देहेनममसंबंधःकर्मणाप्रतिपादितः ॥७६ ॥ तानिसर्वाणिभुक्तानिशुभानिचेतराणिच ॥ मनुष्यदेहयोगेनसुखदुःखानुसाधनात् ॥ ७७॥ विमुक्तोऽतिभयाद्घोरादस्मात्संसारसंकटात् ॥ इत्येवंचिंत्यमानस्तुस्नानदानविवर्जितः॥ ७८ ॥ मरणंचेदवाप्नोतिसमुच्येज्जन्मदुःखतः ॥ एषाकाष्ठापराप्रोक्तायोगिनामपिदुर्लभा ॥ ७९ ॥ पितातेनृपशार्दूलश्रुत्वाशापंद्विजोदितम् ॥ देहेममत्वंकृतवान्ननिर्वेदमवाप्तवान् ॥ ८० ॥ नीरोगोममदेहोऽयंराज्यंनिहतकंटकम् ॥ कथंजीवाम्यहंकामंमंत्रज्ञानानयंतुवै ॥ ८१ ॥ औषधंमणिमंत्रेचयंत्रंपरमकंतथा ॥ आरोहणंतथासौधेकृतवान्नृपतिस्तदा ॥ ८२ ॥

दाह । यत्रयत्रस्थितइति ॥ यत्रकुत्रापिस्थितइत्यर्थः ॥ ७३ ॥ ममकिंचात्रदुःखदमिति ॥ देहातिरिक्तोऽहमस्मि ॥ ममदुःखदंकिमत्रास्तिनकिमपीत्यर्थः ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ निर्वेदंवैराग्यम् ॥ ८० ॥ ८१ ॥ ८२ ॥

दैवंप्रारब्धंमुख्यंमत्वावैराग्यमास्थायनस्थितइत्यर्थः ॥ ८३ ॥ अहिनासर्पेणहतः ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ इतिश्रीदेवीभागवततिलकेतृतीयस्कंधेद्वादशोऽध्यायः ॥ १२ ॥
अर्धाधिकैरष्टपंचाशत्पद्यैरंबिकामखः ॥ विष्णुनाचकृतःस्वार्थमितिसम्यगिहोच्यते ॥१॥ पूर्वाध्यायांतेविष्णुनादेवीमखःकृतइतिश्रुत्वापरमभावुकोजनमेजयःपृच्छति । हरिणात्विति॥

नस्नानंनकृतंदानंनदेव्याःस्मरणंकृतम् ॥ नभूमौशयनंचैवदैवंमत्वापरंतथा ॥ ८३ ॥ मग्नोमोहार्णवेघोरेमृतःसौधेऽहिनाहतः ॥ कृत्वापापंकलेर्योगात्तापसस्यावमानजम् ॥ ८४ ॥ अवश्यमेवनरकएतैराचरणैर्भवेत् ॥ तस्मात्त्वंपितरंपापात्समुद्धरनृपोत्तम ॥ ८५ ॥ सूतउवाच ॥ इतिश्रुत्वावचस्तस्यव्यासस्यामिततेजसः ॥ साश्रुकंठोऽतिदुःखार्तोबभूवजनमेजयः ॥८६॥ धिगिदंजीवितंमेऽद्यपितामेनरकेस्थितः ॥ तत्करोमियथैवाद्यस्वर्गंयात्युत्तरासुतः ॥८७॥ इति श्रीदेवीभागवते महापुराणे तृतीयस्कंधे द्वादशोऽध्यायः ॥१२॥ राजोवाच ॥ हरिणातुकथंयज्ञःकृतःपूर्वंपितामह ॥ जगत्कारणरूपेणविष्णुनाप्रभविष्णुना ॥१॥ केसहायास्तुतत्राऽऽसन्ब्राह्मणाःकेमहामते ॥ ऋत्विजोवेदतत्त्वज्ञास्तन्मेब्रूहिपरंतप ॥२॥ पश्चात्करोम्यहंयज्ञंविधिदृष्टेनकर्मणा ॥ श्रुत्वाविष्णुकृतंयागमंबिकायाःसमाहितः ॥ ३ ॥ व्यासउवाच ॥ राजञ्छृणुमहाभागविस्तरंपरमाद्भुतम् ॥ यथाभगवतायज्ञःकृतश्चविधिपूर्वकः ॥४॥ विसर्जितायदादेव्यादत्त्वाशक्तीश्चतास्त्रयः ॥काजेशाःपुरुषाजाताविमानवरमास्थिताः॥५॥ प्राप्तामहार्णवंघोरंत्रयस्तेविबुधोत्तमाः ॥ चक्रुःस्थानानिवासार्थंसमुत्पाद्यधरांस्थिताः ॥ ६ ॥ आधारशक्तिरचलामुक्तादेव्यास्वयंततः ॥ तदाधारास्थिताजाताधरामेदःसमन्विता ॥ ७ ॥ मधुकैटभयोर्मेदःसंयोगान्मेदिनीस्मृता ॥ धारणाच्चधराप्रोक्तापृथ्वीविस्तारयोगतः ॥ ८ ॥महीचापिमहीयस्त्वाद्धृतासाशेषमस्तके ॥ गिरयश्चकृताःसर्वेधारणार्थंप्रविस्तराः ॥ ९ ॥ लोहकीलंयथाकाष्ठेतथातेगिरयःकृताः ॥ महीधरामहाराजप्रोच्यंतेविबुधैर्जनैः ॥ १० ॥ जातरूपमयोमेरुर्बहुयोजनविस्तरः ॥ कृतोमणिमयैःशृंगैःशोभितःपरमाद्भुतः ॥ ११ ॥ मरीचिर्नारदोऽत्रिश्चपुलस्त्यःपुलहःक्रतुः ॥ दक्षोवसिष्ठइत्येतेब्रह्मणःप्रथिताःसुताः ॥ १२ ॥ मरीचेःकश्यपोजातोदक्षकन्यास्त्रयोदश ॥ ताभ्योदेवाश्चदैत्याश्चसमुत्पन्नाह्यनेकशः ॥ १३ ॥ ततस्तुकाश्यपीसृष्टिःप्रवृत्ताचातिविस्तरा ॥ मनुष्यपशुसर्पादिजातिभेदैरनेकधा ॥ १४ ॥ ब्रह्मणश्चार्धदेहात्तुमनुःस्वायंभुवोऽभवत् ॥ शतरूपातथानारीसंजातावामभागतः ॥ १५ ॥ प्रियव्रतोत्तानपादौसुतौतस्याबभूवतुः ॥ तिस्रःकन्यावरारोहाह्यभवन्नतिसुंदराः ॥ १६ ॥ एवंसृष्टिंसमुत्पाद्यभगवान्कमलोद्भवः ॥ चकारब्रह्मलोकंचमेरुशृंगेमनोहरम् ॥ १७ ॥

पितामहहेपूर्वजव्यास ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ कदायज्ञःकृतइत्याशंकांनिवर्तयन्प्रथमंतत्समयमाह । विसर्जिताइति ॥ यदामणिद्वीपाधिवासिन्याभुवनेश्वर्याशक्तीर्दत्त्वातेत्रयोब्रह्मादयोविसर्जितास्तदनंतरंतेत्रयोयुवतीभावंविहायपुरुषाजाताः ॥ तदनंतरमितिसर्वत्रयोज्यम् ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ दक्षकन्यास्त्रयोदशकश्यपस्यस्त्रियस्ताभ्योदेवादैत्याश्चोत्पन्नाः ॥ १३ ॥ १४ ॥ १५ ॥ अतिसुंदराःकन्याः ॥ १६ ॥ १७ ॥

रमारमणंरमाक्रीडास्थानंवैकुंठम् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ इत्थमेतावत्पर्यंतंब्रह्मविष्णुरुद्रानस्वतंत्राःकिंतुपरशक्त्यधीनाःपराशक्ते रुत्पन्नत्वान्मृत्युधर्माणस्तापत्रययुक्ताः पांचभौतिकदेहवंतोयावत्कल्पपर्यंतमायुष्यवंतोवैकुंठब्रह्मलोककैलासवासिनइतिप्रथमाध्यायोक्तप्रश्नस्योत्तरमुक्तंभवतिब्रह्मांडोत्पत्तिकथनेनचत त्प्रश्नस्याप्युत्तरंनिरूपितम्अंबायज्ञविषयप्रश्नस्योत्तरंकिंचित्पूर्वंदत्तमग्रेचदास्यतीतिबोध्यम् एतावत्पर्यंतंपूर्वंजातेकथितेसत्यनंतरंजातंवृत्तमाह ॥ एकस्मिन्समयइति ॥ २८ ॥ २९ ॥ ॥३०॥३१॥३२॥ ३३ ॥ देव्याबीजंमायाबीजंहृल्लेखाशक्तिदेव्यारूयाइतिमंत्रकोशात् ॥ मायाबीजस्यनामानिमालिनीशिववल्लरी ॥ वातावर्तिःकलावाणीबीजंशक्तिश्चकुंडलीतिमंत्र

वैकुंठभगवान्विष्णूरमारमणमुत्तमम् ॥ क्रीडास्थानंसुरम्यंचसर्वलोकोपरिस्थितम् ॥१८॥ शिवोऽपिपरमंस्थानंकैलासाख्यंचकारह ॥ समासाद्यभूतगणंविजहारयथारुचि ॥ १९ ॥ स्वर्गस्त्रिविष्टपोमेरुशिखरोपरिकल्पितः ॥ तच्चस्थानंसुरेंद्रस्यनानारत्नविराजितम् ॥ २० ॥ समुद्रमथनात्प्राप्तःपारिजातस्तरूत्तमः ॥ चतुर्दंतस्तथानागःकामधेनुश्चकामदा ॥ २१ ॥ उच्चैःश्रवास्तथाऽश्वोवैरंभाद्यप्सरसस्तथा ॥ इंद्रेणोपात्तमखिलंजातंवैस्वर्गभूषणम् ॥२२॥ धन्वंतरिश्चंद्रमाश्चसागराच्चसमुद्भवौ ॥ स्वर्गेस्थितौविराजेतेदेवौबहुगणैर्वृतौ ॥२३॥ एवंसृष्टिःसमुत्पन्नात्रिविधानृपसत्तम ॥ देवतिर्यङ्मनुष्यादिभेदैर्विविधकल्पिता ॥२४॥ अंडजाःस्वेदजाश्चैवचोद्भिज्जाश्चजरायुजाः ॥ चतुर्भेदैःसमुत्पन्नाजीवाःकर्मयुताःकिल ॥ २५ ॥ एवंसृष्टिंसमासाद्यब्रह्मविष्णुमहेश्वराः ॥ विहारंस्वेषुस्थानेषुचक्रुःसर्वेयथेप्सितम् ॥ २६ ॥ एवंप्रवर्तितेसर्गेभगवान्प्रभुरच्युतः॥ महालक्ष्म्यासमंतत्रचिक्रीडभुवनेस्वके ॥ २७ ॥ एकस्मिन्समयेविष्णुर्वैकुंठेसंस्थितः पुरा ॥ सुधासिंधुस्थितंद्वीपंसस्मारमणिमांडितम् ॥ २८ ॥ यत्रदृष्टामहामायांमंत्रश्चासादितःशुभः ॥ स्मृत्वातांपरमां शक्तिंस्त्रीभावंगमितोयया ॥ २९ ॥ यज्ञंकर्तुंमनश्चक्रेअंबिकायारमापतिः ॥ उत्तीर्यभुवनात्तस्मात्समाहूयमहेश्वरम् ॥ ३० ॥ ब्रह्माणंवरुणंशक्रंकुबेरं पावकंयमम् ॥ वसिष्ठंकश्यपंदक्षंवामदेवंबृहस्पतिम् ॥ ३१ ॥ संभारंकल्पयामासयज्ञार्थंचातिविस्तरम् ॥ महाविभवसंयुक्तंसात्त्विकंचमनोहरम् ॥ ३२ ॥ मंडपंविततंतत्रकारयामासशिल्पिभिः ॥ ऋत्विजोवरयामाससप्तविंशतिसुव्रतान् ॥ ३३ ॥ चितिंचकारयामासवेदीश्चैवसुविस्तराः ॥ प्रजेपुर्ब्राह्मणामंत्रान्देव्याबीजसमन्वितान् ॥ ३४ ॥ जुहुवुस्तेहविःकामंविधिवत्परिकल्पिते ॥ कृतेतुवितहोमेवागुवाचाशरीरिणी ॥ ३५ ॥ विष्णुंतदासमाभाष्यसुस्वरामधुराक्षरा ॥ विष्णोत्वंभवदेवानांहरेश्रेष्ठतमःसदा ॥ ३६ ॥ मान्यश्चपूजनीयश्चसमर्थश्चसुरेष्वपि ॥ सर्वेत्वामर्चयिष्यंतिब्रह्माद्याश्चसवासवाः ॥ ३७ ॥

कोशाच्चतेनसमन्वितान् ॥३४॥ जुहुवुरिति ॥ तेब्राह्मणाविधिवत्परिकल्पितेवह्नौयथेष्टंहविरष्टद्रव्यरूपंजुहुवुःकोटिहोमादिकंचक्रुरित्यर्थः ॥ तदुक्तंभुवनेश्वरीसंहितायाम् ॥ अश्वत्थोदुंबरप्लक्षन्यग्रोधसमिधस्तिलाः ॥ सिद्धार्थपायसाज्यानिद्रव्याण्यष्टौविदुर्बुधाः ॥ यथेष्टसंख्यापूर्तिरेकैकद्रव्येणयथाविभागंकृत्वाकर्तव्या द्रव्यन्यूनतायामंतिमद्रव्यावृत्तिराधिक्येतिमद्रव्याहुतिद्वयंत्रयंवाएकीकृत्यैकैकमंत्रेणहोमः ॥ ३५ ॥ ३६ ॥ ३७ ॥

प्रभविष्यंतीति ॥ त्वयीतिशेषः ॥ भक्त्यातत्सहितामानवाइत्यन्वयः ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ अतएवदेवीप्रसादाद्विष्णोरधिकालोकेप्रसिद्धिः ॥ ४३ ॥ ४४ ॥४५ ॥

प्रभविष्यंतिभोभक्त्यामानवाभुविसर्वतः ॥ वरदस्त्वंचसर्वेषांभवितामानवेषुवै ॥ ३८ ॥ कामदःसर्वदेवानांपरमःपरमेश्वरः ॥ सर्वयज्ञेषुमुख्य स्त्वंपूज्यःसर्वैश्चयाज्ञिकैः ॥ ३९ ॥ त्वांजनाःपूजयिष्यंतिवरदस्त्वंभविष्यसि ॥ श्रयिष्यंतिचदेवास्त्वांदानवैरतिपीडिताः ॥ ४० ॥ शरण स्त्वंचसर्वेषांभवितापुरुषोत्तम ॥ पुराणेषुचसर्वेषुवेदेषुविततेषुच ॥ ४१ ॥ त्वंवैपूज्यतमःकामंकीर्तिस्तवभविष्यति ॥ यदायदाहिधर्मस्यग्ला निर्भवतिभूतले ॥ ४२ ॥ तदांऽशेनावतीर्याशुकर्तव्यंधर्मरक्षणम् ॥ अवताराःसुविख्याताःपृथिव्यांतवभागशः ॥ ४३ ॥ भविष्यंतिधरायां वैमाननीयामहात्मनाम् ॥ अवतारेषुसर्वेषुनानायोनिषुमाधव ॥ ४४ ॥ विख्यातःसर्वलोकेषुभवितामधुसूदन ॥ अवतारेषुसर्वेषुशक्तिस्तेसह चारिणी ॥ ४५ ॥ भविष्यतिममांशेनसर्वकार्यप्रसाधिनी ॥ वाराहीनारसिंहीचनानाभेदैरनेकधा ॥ ४६ ॥ नानायुधाःशुभाकाराःसर्वाभ रणमंडिताः ॥ ताभिर्युक्तःसदाविष्णोसुरकार्याणिमाधव ॥४७॥ साधयिष्यसितत्सर्वंमद्दत्तवरदानतः ॥ तास्त्वयानावमंतव्याःसर्वदागर्वलेश तः॥४८॥ पूजनीयाःप्रयत्नेनमाननीयाश्चसर्वथा ॥ नूनंताभारतेखंडेशक्तयःसर्वकामदाः ॥ ४९ ॥ भविष्यंतिमनुष्याणांपूजिताःप्रतिमासुच ॥ तासांतवचदेवेशकीर्तिःस्यादखिलेष्वपि ॥ ५० ॥ द्वीपेषुसप्तस्वपिचविख्याताभुविमंडले ॥ ताश्चत्वांवैमहाभागमानवाभुविमंडले ॥ ५१ ॥ अर्चयिष्यंतिवांछार्थंसकामाःसततंहरे ॥ अर्चासुचोपहारैश्चनानाभावसमन्विताः ॥ ५२ ॥ पूजयिष्यंतिवेदोक्तैर्मंत्रैर्नामजपैस्तथा ॥ महिमा तवभूर्लोकेस्वर्गेचमधुसूदन ॥ ५३ ॥ पूजनाद्देवदेवेशवृद्धिमेष्यतिमानवैः ॥ व्यासउवाच ॥ इतिदत्त्वावरान्वाणीविरराम खसंभवा ॥ ५४ ॥ भगवानपिप्रीतात्माह्यभवच्छ्रवणादिव ॥ समाप्यविधिवद्यज्ञंभगवान्हरिरीश्वरः ॥ ५५ ॥ विसर्जयित्वातान्देवान्ब्रह्मपुत्रान्मुनीनथ ॥ जगामा नुचरैःसार्धंवैकुंठंगरुडध्वजः ॥ ५६ ॥ स्वानिस्वानिचधिष्ण्यानिपुनःसर्वेसुरास्ततः ॥ मुनयोविस्मितावार्तांकुर्वंतस्तेपरस्परम् ॥ ५७ ॥ ययुःप्रमुदिताःकामंस्वाश्रमान्पावनानथ ॥५८॥ श्रुत्वावाणींपरमविशदांव्योमजांश्रोत्ररम्यांसर्वेषांवैप्रकृतिविषयेभक्तिभावश्चजातः ॥ चक्रुः सर्वेद्विजमुनिगणाःपूजनंभक्तियुक्तास्तस्याःकामंनिखिलफलदंचागमोक्तंमुनींद्राः ॥ ५९ ॥ इति श्रीदेवीभागवते महापुराणे तृतीयस्कंधे त्रयो दशोऽध्यायः ॥ १३ ॥

॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ महिमेति ॥ एवंतवमहिमाभविष्यतीत्यर्थः ॥ ५३ ॥ खसंभवाआकाशजन्या ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ प्रकृ तिविषयेमूलप्रकृतौ ॥ तस्याःप्रकृतेर्भुवनेश्वर्याः ॥ ५९ ॥ इतिश्रीदेवीभागवततिलकेतृतीयस्कंधेत्रयोदशोऽध्यायः ॥ १३ ॥

त्रिपंचाशत्पद्यकैस्तुराजप्रश्नोत्तरंततः ॥ वैभवंप्रोच्यतेसम्यग्यथावद्भुवनेशितुः ॥ १ ॥ विष्णुकृतमंबायज्ञंश्रुत्वापुनर्भगवतीमहिम्नोबुभुत्सुर्जनमेजयःपृच्छति ॥ श्रुतइति ॥ १ ॥ २ ॥
॥ ३ ॥ ४ ॥ ५ ॥ धर्मतोधर्मेणयुक्ताअभवन्नित्यर्थः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ मंदभाग्यादिति ॥ सुदर्शनस्यमं

जनमेजयउवाच ॥ श्रुतोवैहरिणाक्लृप्तोयज्ञोविस्तरतोद्विज ॥ महिमानंतथांऽबायावदविस्तरतोमम ॥ १ ॥ श्रुत्वादेव्याश्चरित्रंवैकुर्वेमखमनुत्तमम् ॥ प्रसादात्तवविप्रेंद्रभविष्यामिचपावनः ॥ २ ॥ व्यासउवाच ॥ शृणुराजन्प्रवक्ष्यामिदेव्याश्चरितमुत्तमम् ॥ इतिहासपुराणंचकथयामिसुविस्तरम् ॥ ३ ॥ कोसलेषुनृपश्रेष्ठःसूर्यवंशसमुद्भवः ॥ पुष्पपुत्रोमहातेजाध्रुवसंधिरितिस्मृतः ॥ ४ ॥ धर्मात्मासत्यसंधश्चवर्णाश्रमहितेरतः ॥ अयोध्यायांसमृद्धायांराज्यंचक्रेशुचिव्रतः ॥५॥ ब्राह्मणाःक्षत्रियावैश्याःशुद्राश्चान्येतथाद्विजाः ॥ स्वांस्वांवृत्तिंसमास्थायतद्राज्येधर्मतोऽभवन् ॥ ६ ॥ नचौरापिशुनाधूर्तास्तस्यराज्येचकुत्रचित् ॥ दंभाःकृतघ्नामूर्खाश्चवसंतिकिलमानवाः ॥ ७ ॥ एवंवैवर्तमानस्यनृपस्यकुरुसत्तम ॥ द्वेपत्न्यौरूपसंपन्नेह्यास्तुःकामभोगदे॥८॥ मनोरमाधर्मपत्नीसुरूपाऽतिविचक्षणा ॥ लीलावतीद्वितीयाचसाऽपिरूपगुणान्विता॥॥ ९ ॥ विजहारसपत्नीभ्यांगृहेषूपवनेषुच ॥ क्रीडागिरौदीर्घिकासुसौधेषुविविधेषुच ॥१०॥ मनोरमाशुभेकालेसुषुवेपुत्रमुत्तमम् ॥ सुदर्शनाभिधंपुत्रंराजलक्षणसंयुतम् ॥ ११ ॥ लीलावत्यपितत्पत्नीमासेनैकेनभामिनी ॥ सुषुवेसुन्दरंपुत्रंशुभेपक्षेदिनेतथा ॥ १२ ॥ चकारनृपतिस्तत्रजातकर्मादिकंद्वयोः ॥ ददौदानानिविप्रेभ्यःपुत्रजन्मप्रमोदितः ॥ १३ ॥ प्रीतिंतयोःसमांराजाचकारसुतयोर्नृप ॥ नृपश्चकारसौहार्देष्वंतरंनकदाचन ॥ १४ ॥ चूडाकर्मतयोश्चक्रेविधिनानृपसत्तमः ॥ यथाविभवमेवासौप्रीतियुक्तःपरंतपः ॥१५॥ कृतचूडौसुतौकामंजह्रतुर्नृपतेर्मनः॥क्रीडमानावुभौकांतौलोकानामनुरंजकौ॥१६॥तयोःसुदर्शनोज्येष्ठोलीलावत्याःसुतःशुभः॥शत्रुजित्संज्ञकःकामंचाटुवाक्योबभूवह ॥॥१७॥ नृपतेःप्रीतिजनकोमञ्जुवाक्चारुदर्शनः ॥ प्रजानांवल्लभःसोऽभूत्तथामंत्रिजनस्यवै॥१८॥यथातस्मिन्नृपःप्रीतिंचकारगुणयोगतः॥ मंदभाग्यान्मंदभावोनतथावैसुदर्शने ॥१९॥ एवंगच्छतिकालेतुध्रुवसंधिर्नृपोत्तमः ॥ जगामवनमध्येऽसौमृगयाभिरतःसदा॥२०॥निघ्नन्मृगान्रुरून्कंबून्सूकरान्गवयाञ्छशान् ॥ महिषाञ्छरभान्खड्गांश्चिक्रीडनृपतिर्वने॥२१॥क्रीडमानेनृपेतत्रवनेघोरेऽतिदारुणे ॥ उदतिष्ठन्निकुंजात्तुसिंहःपरमकोपनः ॥२२॥ राज्ञाशिलीमुखेनादौविद्धःक्रोधवशंगतः ॥ दृष्ट्वाऽग्रेनृपतिंसिंहोननादमेघनिःस्वनः ॥२३॥कृत्वाचोर्ध्वंसलांगूलंप्रसारितबृहत्सटः ॥ हंतुंनृपतिमाकाशादुत्पपातातिकोपनः ॥२४॥ नृपतिस्तरसावीक्ष्यदधारासिंकरेतदा ॥ वामेचर्मसमादायस्थितःसिंहइवापरः॥२५॥

दभाग्यात्तस्मिन्सुदर्शनेमंदभावोनृपतिर्यथाशत्रुजितिप्रीतिंचकारतथासुदर्शनेप्रीतिंनचकारेत्यर्थः ॥ १९ ॥ २० ॥ कंबूनिति ॥ कंबुःशंखेस्त्रियांपुंसिशंबूकेवलयेगजइतिमेदिनीकोशाद्गजानित्यर्थः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

॥ २६ ॥ २७ ॥ सोऽपिराजाऽपि ॥ तत्राऽऽगत्य सिंहेनेतिशेषः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ साध्वससंस्थितौ भयसंस्थितौ

सेवकास्तस्ययेसर्वेतेऽपिबाणान्पृथक्पृथक् ॥ अमुंचन्कुपिताःकामंसिंहोपरिरुषान्विताः ॥ २६ ॥ हाहाकारोमहानासीत्संप्रहारश्चदारुणः ॥ उत्पपात ततःसिंहोनृपस्योपरिदारुणः ॥ २७ ॥ तंपतंतंसमालोक्यखड्गेनाभ्यहनन्नृपः ॥ सोऽपिक्रूरैर्नखाग्रैश्चतत्राऽऽगत्यविदारितः ॥२८॥ सनखैराहतोराजापपातचममारवै ॥ चुक्रुशुःसैनिकास्तेतुनिर्जघ्नुर्विशिखैस्तदा ॥ २९ ॥ मृतःसिंहोऽपितत्रैवभूपतिश्चतथामृतः ॥ सैनिकैर्मंत्रिमुख्याश्चतत्राऽऽगत्यनिवेदिताः ॥ ३० ॥ परलोकगतंभूपंश्रुत्वातेमंत्रिसत्तमाः ॥ संस्कारंकारयामासुर्गत्वातत्रवनांतिके ॥ ३१ ॥ परलोकक्रियांसर्वांवसिष्ठोविधिपूर्वकम् ॥ कारयामासतत्रैवंपरलोकसुखावहम् ॥ ३२ ॥ प्रजाःप्रकृतयश्चैववसिष्ठश्चमहामुनिः ॥ सुदर्शनंनृपंकर्तुंमंत्रंचक्रुःपरस्परम् ॥ ३३ धर्मपत्नीसुतःशांतःपुरुषश्चसुलक्षणः ॥ अयंनृपासनार्हश्चह्यब्रुवन्मंत्रिसत्तमाः ॥ ३४ ॥ वसिष्ठोऽपितथैवाऽऽहयोग्योऽयंनृपतेःसुतः ॥ बालोऽपिधर्मवान्राजानृपासनमिहार्हति ॥ ३५ ॥ कृतेमंत्रेमंत्रिवृद्धैर्युधाजिन्नामपार्थिवः ॥ तत्राऽऽजगामतरसाश्रुत्वातूज्जयिनीपतिः ॥ ३६ मृतंजामातरंश्रुत्वालीलावत्याःपितातदा ॥ तत्राऽऽजगामत्वरितोदौहित्रप्रियकाम्यया ॥ ३७ ॥ वीरसेनस्तथाऽऽयातःसुदर्शनहितेच्छया ॥ कलिंगाधिपतिश्चैवमनोरमापितानृपः ॥ ३८ ॥ उभौतौसैन्यसंयुक्तौनृपौसाध्वससंस्थितौ ॥ चक्रतुर्मंत्रिमुख्यैस्तैर्मंत्रंराज्यस्यकारणात् ॥ ३९ ॥ युधाजित्तुतदापृच्छज्ज्येष्ठःकःसुतयोर्द्वयोः ॥ राज्यंप्राप्नोतिज्येष्ठोवैनकनीयान्कदाचन ॥ ४० ॥ वीरसेनोऽपितत्राऽऽहधर्मपत्नीसुतःकिल ॥ राज्यार्हःसयथाराजञ्छास्त्रज्ञेभ्योमयाश्रुतम् ॥ ४१ ॥ युधाजित्पुनराहेदंज्येष्ठोऽयंचयथागुणैः ॥ राजलक्षणसंयुक्तोनतथाऽयंसुदर्शनः ॥ ४२ ॥ विवादोऽत्रसुसंपन्नोनृपयोस्तत्रलुब्धयोः ॥ कःसंदेहमपाकर्तुंक्षमःस्यादतिसंकटे ॥४३॥ युधाजिन्मंत्रिणःप्राह यूयंस्वार्थपराःकिल ॥ सुदर्शनंनृपंकृत्वाधनंभोक्तुंकिलेच्छथ ॥ ४४ ॥ युष्माकंतुविचारोऽयंमयाज्ञातस्तथेंगितैः ॥ शत्रुजित्सबलस्तस्मात्संमतोवोनृपासने ॥ ४५ ॥ मयिजीवतिकःकुर्यात्कनीयांसंनृपंकिल ॥ त्यक्त्वाज्येष्ठंगुणार्हंचसेनयाचसमन्वितम् ॥ ४६ ॥ नूनंयुद्धंकरिष्यामितस्मिन्खड्गस्यमेदिनी ॥ धारयाच द्विधाभूयाद्युष्माकंतत्रकाकथा ॥ ४७॥ वीरसेनस्तुतच्छ्रुत्वायुधाजितमभाषत ॥ बालौद्वौसदृशप्रज्ञौकोभेदोऽत्रविचक्षण ॥ ४८ ॥ एवंविवदमानौतौसंस्थितौ नृपतीसदा ॥ प्रजाश्चऋषयश्चैवबभूवुर्व्यग्रमानसाः ॥ ४९ ॥ समाजग्मुश्चसामंताःससैन्याःक्लेशतत्पराः ॥ विग्रहंचाभिकांक्षंतःपरस्परमतंद्रिताः ॥ ५० ॥

भयंकरावित्यर्थः ॥ ३९ ॥ ज्येष्ठःकइति ॥ यद्यपिवयसाज्येष्ठःसुदर्शनस्तथाऽपिगुणेनज्येष्ठःशत्रुजिदेवभवतीतियुधाजितोऽभिप्रायः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ तस्मात्सुदर्शनात्सबलोधर्मपत्नीजन्यत्वाच्छत्रुजिदेवनृपासनेसंमतोनान्यइत्यर्थः ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥

॥ २५ ॥ २६ ॥ बहुयदित्वयाप्रार्थ्यतेतर्हीदंस्वीकरोमीत्याह । सुदर्शनमृतइति ॥ सुदर्शनंविहाययंवाकंवानृपतिमियंकन्यावरिष्यतितदाऽसौविग्रहोनस्यात्तदातवेप्सितोविवाहोऽस्तुनो चेन्नेतिभावः ॥ २७ ॥ विरोधःकीदृशइति ॥ विरोधःकिंविषयइत्यर्थः ॥ स्वयमेववदतिएनंवृणोद्यतीति ::॥: एनंसुदर्शनमियंकन्यायदिवृणोद्वृणुयात्तर्हितद्विषयेविरोधोनान्यराजविषय

"कुलंवित्तंबलंरूपंराज्यंदुर्गंसुहृज्जनम् ॥ दृष्ट्वाकन्याप्रदातव्यानान्यथासुखमृच्छति ॥ १ ॥ " परिचिंतयधर्मंत्वंराज्यनीतिंचशाश्वतीम् ॥ कुरुकार्यंयथायोग्यंमाकृथामतिमन्यथा ॥ २५ ॥ सुहृदसिममात्यर्थंहितंतेप्रब्रवीम्यहम् ॥ समानयसुतांराजन्मंडपेतांसखीवृताम् ॥ २६ ॥ सुदर्शनमृतेचेयंवरिष्यतियदाप्यसौ ॥ विग्रहोमेतदानस्याद्विवाहोऽस्तुतवेप्सितः ॥२७ ॥ अन्येनृपतयःसर्वेकुलीनाःसबलाःसमाः ॥ विरोधः कीदृशस्त्वेनंवृणोद्यदिनृपोत्तम ॥ २८ ॥ अन्यथाऽहंहरिष्येऽद्यबलात्कन्यामिमांशुभाम् ॥ माविरोधंसुदुःसाध्यंगच्छपार्थिवसत्तम॥ २९ ॥ व्यासउवाच ॥ युधाजितासमादिष्टःसुबाहुःशोकसंयुतः ॥ निःश्वसन्भवनंगत्वाभार्यांप्राहशुचावृतः ॥ ३० ॥ पुत्रींब्रूहिसुधर्मज्ञेकलहेसमुप स्थिते ॥ किंकर्त्तव्यंमयाशक्यंत्वद्वशोऽस्मिसुलोचने ॥ ३१ ॥ व्यासउवाच ॥ साश्रुत्वापतिवाक्यंतुगत्वाप्राहसुतांतिकम् ॥ वत्सेराजातिदु खार्तःपितातेऽद्यापिवर्तते ॥ ३२ ॥ त्वदर्थेविग्रहःकामंसमुत्पन्नोऽद्यभूभृताम् ॥ अन्यंवरयसुश्रोणिसुदर्शनमृतेनृपम् ॥ ३३॥ यदिसुदर्शनंवत्से हठात्त्वंवैवरिष्यसि ॥ युधाजित्त्वांचमांचैवहनिष्यतिबलान्वितः ॥ ३४॥ सुदर्शनंचराजाऽसौबलमत्तःप्रतापवान् ॥ द्वितीयस्तेपतिःपश्चाद्भ विताकलहेसति ॥ ३५ ॥ तस्मात्सुदर्शनंत्यक्त्वावरयान्यंनृपोत्तमम् ॥ सुखमिच्छसिचेन्मह्यंतुभ्यंवामृगलोचने ॥ इतिमात्राबोधितांतांपश्चात्पित्रा जाप्यबोधयत् ॥ ३६ ॥ उभयोर्वचनंश्रुत्वानिर्भयोवाचकन्यका ॥ कन्योवाच ॥ सत्यमुक्तंनृपश्रेष्ठजानासिचव्रतंमम ॥ ३७ ॥ नान्यंवृणो मिभूपालंसुदर्शनमृतेक्वचित् ॥ बिभेषियदिराजेंद्रनृपेभ्यःकिलकातरः ॥ ३८ ॥ सुदर्शनायदत्त्वामांविसर्जयपुराद्बहिः ॥ समांरथेसमारोप्य निर्गमिष्यतितेपुरात् ॥ ३९ ॥ भवितव्यंतुपश्चाद्वैभविष्यतिनचान्यथा ॥ नात्रचिंतात्वयाकार्याभवितव्येनृपोत्तम ॥ ४० ॥ यद्भावितद्भव त्येवसर्वथात्रनसंशयः ॥ राजोवाच ॥ नपुत्रिसाहसंकार्यंमतिमद्भिःकदाचन ॥ ४१ ॥ बहुभिर्नविरोद्धव्यमितिवेदविदोविदुः ॥ विस्रक्ष्यामि कथंकन्यांदत्त्वाराजसुतायच ॥ ४२ ॥ राजानोवैरसंयुक्ताःकिंनकुर्युरसांप्रतम् ॥ यदितेरोचतेवत्सेपणंसंविदधाम्यहम् ॥ ४३ ॥ जनकेनय थापूर्वंकृतःसीतास्वयंवरे ॥ शैवंधनुर्यथातेनधृतंकृत्वापणंतथा ॥ ४४ ॥

इत्यर्थः ॥ २८ ॥ अन्यथेति ॥ यदिसुदर्शनायदास्यसीत्यर्थः ॥ अतोनिरर्थकंमयासहविरोधंदुःसाध्यंमागच्छमाव्रजेत्यर्थः ॥ २९ ॥ ३० ॥ पुत्रींब्रूहीति ॥ एतादृशेकलहेजातेप्राप्तेम याशक्यंयत्किंकर्तव्यंतस्मात्त्वद्वशोऽस्मितवयद्युक्तंभासतेतत्तथाकुर्वितिपुत्रींब्रूहीत्यर्थः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ पणेकृते कलहोनभविष्यतीत्याह । यदितइति ॥ ४३ ॥ ४४ ॥

॥ ४५ ॥ कामंपणम् ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ सर्वेषामिति ॥ येयेपणंसाधयिष्यंतितेषांसर्वेषांवशगाभविष्यामीत्यर्थः ॥ नह्येकेनैवपणःसाधनीयइतिपणसमयेनियमःक्रियते किंतुसमुदायोद्देशेनेति ॥ ५० ॥ एतदेवाऽऽह । एकःपालयितेति ॥ त्रिभिर्यदिवाद्वाभ्यांवापणःसाध्यतेतदैकाकन्याकस्यभविष्यतीतिविवादेसमुपस्थितेकिंकर्तव्यम् ॥ नकश्चिदत्रोपा योविद्यतेतस्माद्वाभ्यांत्रिभ्योवासाकन्यादेयेतिप्रसंगः स्यात्ततश्चमहाननर्थः पणेकृतेसतिभविष्यतीत्यर्थः ॥ ५१ ॥ संशयाधिष्ठितेसंशयविषयइत्यर्थः । अयंवापतिरयंवापतिरितिपति

तथाऽहमपितन्वंगिकरोम्यद्यदुरासदम् ॥ विवादोयेनराज्ञांवैकृतेसतिशमंव्रजेत् ॥ ४५ ॥ पालयिष्यतियःकामंसतेभर्ताभविष्यति ॥ सुदर्शन स्तथान्योवायःकश्चिद्बलवत्तरः ॥ ४६ ॥ पालयित्वापणंत्वांवैवरयिष्यतिसर्वथा ॥ एवंकृतेनृपाणांतुविवादःशमितोभवेत् ॥४७॥ सुखेनाहंवि वाहंतेकरिष्यामिततःपरम् ॥ कन्योवाच ॥ संदेहेनैवमज्ञाभिमूर्खकृत्यमिदंयतः ॥ ४८ ॥ मयासुदर्शनःपूर्वंधृतश्चेतसिनान्यथा ॥ कारणंपुण्य पापानांमनएवमहीपते ॥ ४९ ॥ मनसाविधृतंत्यक्त्वाकथमन्यंवृणेपितः ॥ कृतेपणेमहाराजसर्वेषांवशगाह्यम् ॥५०॥ एकःपालयिताद्वौवाब हवोवाभवंतिचेत् ॥ किंकर्तव्यंतदातातविवादेसमुपस्थिते ॥५१॥ संशयाधिष्ठितेकार्येमतिंनाहंकरोम्यतः ॥ माचिंतांकुरुराजेंद्रदेहिसुदर्शनाय माम् ॥ ५२ ॥ विवाहंविधिनाकृत्वाशंविधास्यतिचंडिका ॥ यन्नामकीर्तनादेवदुःखौघोविलयंव्रजेत् ॥५३॥ तांस्मृत्वापरमांशक्तिंकुरुकार्यं मतंद्रितः ॥ गत्वावदनृपेभ्यस्त्वंकृतांजलिपुटोऽद्यवै ॥ ५४ ॥ आगंतव्यंचश्वःसर्वैरिहभूपैःस्वयंवरे ॥ इत्युक्त्वात्वंविसृज्याशुसर्वंनृपतिमंड लम् ॥ ५५ ॥ विवाहंकुरुरात्रौमेवेदोक्तविधिनानृप ॥ पारिबर्हंयथायोग्यंदत्त्वातस्मैविसर्जय॥५६॥गमिष्यतिगृहीत्वामांध्रुवसंधिसुतःकिल॥ कदाचित्तेनृपाःक्रुद्धाःसंग्रामंकर्त्तुमुद्यताः ॥५७॥ भविष्यंतितदादेवीसाहाय्यंनःकरिष्यति ॥ सोऽपिराजसुतैस्तैस्तुसंग्रामंसंविधास्यति॥५८॥ दैवान्मृधेमृतेतस्मिन्मरिष्याम्यहमप्युत ॥स्वस्तितेस्तुगृहेतिष्ठदत्त्वामांसहसैन्यकः॥५९॥ एकैवाहंगमिष्यामितेनसार्धंरिरंसया॥व्यासउवाच॥ इतितस्यावचःश्रुत्वाराजाऽसौकृतनिश्चयः ॥ ६० ॥ मतिंचक्रेतथाकर्तुंविश्वासंप्रतिपद्यच ॥ इति श्रीदेवीभागवतेमहापुराणेतृतीयस्कंधेएक विंशोऽध्यायः ॥ २१ ॥ व्यासउवाच ॥ श्रुत्वासुतावाक्यमनिंदितात्मानृपांश्चगत्वानृपतिर्जगाद॥व्रजंतुकामंशिबिराणिभूपाःश्वोवाविवाहंकि लसंविधास्ये ॥ १ ॥ भक्ष्याणिपेयानिमयाऽर्पितानिगृह्णंतुसर्वेमयिसुप्रसन्नाः ॥ श्वोभाविकार्यंकिलमंडपेऽत्रसमेत्यसर्वैरिहसंविधेयम् ॥ २ ॥

विषयेसंशयेकुलटावदहंगतिंनकरोमिपतिव्रता सतीतिभावः ॥ ५२ ॥ विवाहंविधिनाकृत्वासुदर्शनायमांदेहीतिपूर्वेणान्वयः ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ॥ ६० ॥ इतिश्रीदेवीभागवततिलकेतृतीयस्कंधेएकविंशोऽध्यायः ॥ २१ ॥ अष्टाधिकैश्चचत्वारिंशत्पद्यैरथवर्ण्यते ॥ सुदर्शनविवाहश्चसुबाहोश्चैवकन्यया ॥ १ ॥ कन्यावाक्यंश्रुत्वा यच्चकारराजातदाह । श्रुत्वेति ॥ कामंयथेष्टम् ॥ श्वोवाश्व एव ॥ १ ॥ कार्यंविवाहरूपम् ॥ २ ॥

नयिष्येआनयिष्ये ॥ ३ ॥ नविग्रहइति विग्रहोनयुक्तइतिशेषः ॥ प्रातरिहसुतामानयिष्ये ॥ अधुनातांकृपांविधाययथेष्टंनृपागच्छंतु ॥ ४ ॥ कथंश्वोविवाहंकरिष्यसीतिचेत्तत्राऽऽह ॥ इच्छापणंवेति ॥ इच्छापणंवाशौर्यपणंवायथाभवतांमनीषितंवर्ततेतथाचित्तेपणंपरिचिंत्येत्यर्थः ॥ ५ ॥ अवितथंसत्यंनगरस्यपार्श्वेआसमंताद्रक्षांविधायकदाचिद्राजाछलंविधास्यतीतिशंकया ॥ ६ ॥ आर्यजनैःपुरोहितादिभिः ॥ ७ ॥ तस्यजामातुः ॥ अर्हणांपूजाम् ॥ ८ ॥ ९ ॥ मनोरमायाश्रितामभपुत्रायकन्यांदास्यतिवानदास्यतीतिसाशशाम ॥ निधिक

नायातिपुत्रीकिलमंडपेऽद्यकरोमिकिंभूपतयोत्रकामम् ॥ प्रातःसमाश्वास्यसुतांनयिष्येगच्छंतुतस्माच्छिबिराणिभूपाः ॥३॥ नविग्रहोबुद्धिमतांनिजाश्रितेकृपाविधेयासततंह्यपत्ये ॥ विधायतांप्रातरिहानयिष्येसुतांतुगच्छंतुनृपायथेष्टम् ॥४॥ इच्छापणंवापरिचिंत्यचित्तेप्रातःकरिष्याम्यथसंविवाहम् ॥ सर्वैःसमेत्यात्रनृपैःसमेतैःस्वयंवरःसर्वमतेनकार्यः ॥५॥ श्रुत्वानृपास्तेऽवितथंविदित्वावचोययुःस्वानिनिकेतनानि॥विधायपार्श्वेनगरस्यरक्षांचक्रुःक्रियामध्यदिनोदिताश्च ॥ ६ ॥ सुबाहुरप्यार्यजनैःसमेतश्चकारकार्याणिविवाहकाले ॥ पुत्रींसमाहूयगृहेसुगुप्तेपुरोहितैर्वेदविदांवरिष्ठैः ॥७॥ स्नानादिकंकर्मवरस्यकृत्वाविवाहभूषाकरणंतथैव ॥ आनाय्यवेदीरचितेगृहेवैतस्यार्हणांभूमिपतिश्चकार ॥८॥सविष्टरंचाचमनीयमर्घ्यंवस्त्रद्वयंगामथकुंडलेद्वे ॥ समर्प्यतस्मैविधिवन्नरेंद्रऐच्छत्सुतादानमहीनसत्त्वः॥९॥ सोप्यग्रहीत्सर्वमदीनचेताःशशामचिंताऽथमनोरमायाः ॥ कन्यांसुकेशींनिधिकन्यकासमांमेनेतदाऽऽत्मानमनुत्तमंच ॥१०॥ सुपूजितंभूषणवस्त्रदानैर्वरोत्तमंतंसचिवास्तदानीम् ॥ निन्युश्चतेकौतुकमंडपांतर्मुदान्वितावीतभयाश्चसर्वे॥११॥समाप्तभूषांविधिवद्विधिज्ञाःस्त्रियश्चतांराजसुतांसुयाने ॥ आरोप्यनिन्युर्वरसंनिधानंचतुष्कयुक्तेकिलमंडपेवै ॥१२॥ अग्निंसमाधायपुरोहितःसद्हुत्वायथावच्चतदंतराले॥आह्वाययत्तौकृतकौतुकौतुवधूवरौप्रेमयुतौनिकामम्॥१३॥ लाजाविसर्गंविधिवद्विधायकृत्वाहुताशस्यप्रदक्षिणांच॥ तौचक्रतुस्तत्रयथोचितंतत्सर्वंविधानंकुलगोत्रजातम् ॥ १४ ॥ शतद्वयंचाश्वयुजांरथानांसुभूषितंचापिशरौघसंयुतम् ॥ ददौनृपेंद्रस्तुसुदर्शनायसुपूजितंपारिबर्हंविवाहे ॥१५॥ मदोत्कटान्हेमविभूषितांश्चगजान्गिरेःशृंगसमानदेहान्॥ शतंसपादंनृपसूनवेऽसौददावथप्रेमयुतोनृपेंद्रः॥१६॥ दासीशतंकांचनभूषितंचकरेणुकानांचशतंसुचारु ॥ समर्पयामासवरायराजाविवाहकालेमुदितोऽनुवेलम् ॥ १७ ॥ अदात्पुनर्दाससहस्रमेकंसर्वायुधैःसंभृतभूषितंच॥ रत्नानिवासांसियथोचितानिदिव्यानिचित्राणितथाऽऽविकानि ॥ १८ ॥ ददौपुनर्वासगृहाणितस्मैरम्याणिदीर्घाणिविचित्रितानि ॥ सिंधूद्भवानांतुरगोत्तमानामदात्सहस्रद्वितयंसुरम्यम् ॥ १९॥ क्रमेलकानांचशतत्रयंवैप्रत्यादिशद्भारभृतांसुचारु ॥ शतद्वयंवैशकटोत्तमानांतस्मैददौधान्यरसैःप्रपूरितम् ॥ २० ॥

न्यकासमांकुबेरकन्यकासमांमेने ॥ आत्मानंत्वनुत्तममल्पंकन्यापेक्षयामेने महतांविवाहेएषैवरीतिः ॥ १० ॥ ११ ॥ चतुष्कयुक्तेवेदीयुक्तेइत्यर्थः ॥१२॥ आह्वाययत्पित्रादिनेत्यर्थः ॥ ॥ १३ ॥ लाजाविसर्गलाजाहोमम् ॥ १४ ॥ १५ ॥ सपादंपंचविंशत्यधिकंशतमित्यर्थः ॥ १६ ॥ करेणुकानांशतम् ॥ १७ ॥ संभृतभूषितमितिकर्मधारयः ॥ आविकानिऊर्णावस्त्राणि ॥ १८ ॥ १९ ॥ क्रमेलकानामुष्ट्राणांच ॥ २० ॥

इत्थंपारिबर्हंवरायदत्त्वावरमातरंतोषयति । मनोरमामिति ॥ २१ ॥ हेभूपतेकुलस्यवृद्धिरप्यस्त्वित्यर्थः ॥ ममदुर्भगायाः सूनवेत्वयाकन्यादत्तातततस्तवकल्याणंभवत्वस्माच्चाधिकंनाकिं
चिन्ममाभिलषणीयमस्ति ॥ २२ ॥ अथास्मिन्समयेतवमहत्तरास्तुतिःकर्तव्यापरंतुसास्तुतिःस्तुतिविषयस्यपरकीयत्वेस्तुतिंकर्तुंबंदिजनवत्कविताशक्तिमत्त्वेएवसंभवतिनचात्रैतदुभय
मास्तितवस्वजनत्वान्ममचकुलीनायाबंदिजनत्वाभावादित्याह । नबंदिपुत्रीति ॥ २३ ॥ पूज्यस्यसुता ॥ २४ ॥ कथंभूतायममसुतायतत्राऽऽह । वनाधिवासायेति ॥ २५ ॥ बलेबल
वतीत्यर्थः ॥ हेभूपमेर्थहीनेसुतेनकोपिदद्यादित्यन्वयः ॥ २६ ॥ २७ निशम्येति ॥ राज्यंत्वंगृहाणाहंतुतवसेनाधिपतिर्भवामिभविष्यामीत्यर्थः ॥ २८ ॥ वनेऽथवापुरेसवासोमेनमान्योऽ

मनोरमांराजसुतांप्रणम्यजगादवाक्यंविहितांजलिःपुरः॥दासोऽस्मितेराजसुतेवरिष्ठेतद्ब्रूहियत्स्यात्तुमनोगतंते॥२१॥तंचारुवाक्यंनिजगादसा
पिस्वस्त्यस्तुतेभूपकुलस्यवृद्धिः॥संमानिताऽहंममसूनवेत्वयादत्तायतोरत्नवरास्वकन्या॥२२॥नबंदिपुत्रीनृपमागधीवास्तौमीहकिंत्वांस्वजनंम
हत्तरम्॥सुमेरुतुल्यस्तुकृतःसुतोऽद्यमेसंबंधिनाभूपतिनोत्तमेन ॥ २३ ॥ अहोऽतिचित्रंनृपतेश्चरित्रंपरंपवित्रंतवकिंवदामि॥ यद्भ्रष्टराज्यायसुता
यमेऽद्यदत्तात्वयापूज्यसुतावरिष्ठा ॥२४॥ वनाधिवासायकिलाधनायपित्राविहीनायविसैन्यकाय ॥ सर्वानिमान्भूमिपतीन्विहायफलाशना
यार्थविवर्जिताय ॥ २५ ॥ समानवित्तेऽथकुलेबलेचददातिपुत्रींनृपतिश्चभूयः॥नकोऽपिमेभूपसुतेऽर्थहीनेगुणान्वितांरूपवतींचदद्यात्॥ २६ ॥
वैरंतुसर्वैःसहसंविधायनृपैर्वरिष्ठैर्बलसंयुतैश्च ॥ सुदर्शनायाथसुताऽर्पितामेकिंवर्णयेधैर्यमिदंत्वदीयम् ॥ २७॥ निशम्यवाक्यानिनृपःप्रहृष्टःकृतां
जलिर्वाक्यमुवाचभूयः ॥ गृहाणराज्यंममसुप्रसिद्धंभवामिसेनापतिरद्यचाहम् ॥२८॥ नोचेत्तदर्धंप्रतिगृह्यचात्रसुतान्वितोराज्यफलानिभुंक्ष्व॥
विहायवाराणसिकानिवासंवनेपुरेवासमतोनमेऽस्ति॥२९॥नृपास्तुसंत्येवरुषान्वितावैगत्वाकरिष्येप्रथमंतुसांत्वनम्॥ ततःपरंद्वावपरावुपायौ
नोचेत्ततोयुद्धमहंकरिष्ये॥३०॥जयाजयौदैववशौतथाऽपिधर्मेजयोनैवकृतेप्यधर्मे॥तेषांकिलाधर्मवतांनृपाणांकथंभविष्यत्यनुचिंतितंवै ॥३१॥
आकर्ण्यतद्भाषितमर्थवच्चजगादवाक्यंहितकारकंतम् ॥ मनोरमामानमवाप्यतस्मात्सर्वात्मनामोदयुताप्रसन्ना ॥३२॥ राजन्छिवंतेऽस्तुकुरुष्व
राज्यंत्यक्त्वाभयंत्वंस्वसुतैःसमेतः ॥ सुतोऽपिमेनूनमवाप्यराज्यंसाकेतपुर्यांप्रचरिष्यतीह ॥ ३३ ॥ विसर्जयास्मान्निजसद्मगंतुंशिवंभवानीत
वसंविधास्यति ॥ नकाऽपिचिंताममभूपवर्ततेसंचिंतयंत्याःपरमांबिकां वै ॥ ३४ ॥

स्ति ॥ एतादृशक्षेत्रवासंविहायनान्यत्रगंतव्यमित्यर्थः ॥ २९ ॥ कुपितनृपभयंत्वयानैवकर्तव्यमित्याह । नृपास्त्विति ॥ द्वावपरावुपायौदानभेदौतैस्त्रिभिस्तेषांसांत्वनंजातंचेद्वरम्॥
नोचेद्युद्धमहंकरिष्येत्वयानभीतिःकर्त्तव्येत्यर्थः ॥ ३० ॥ ननुयुद्धेतवपराजयेममभयंतदवस्थमेवेतिचेत्तत्राऽऽह । जयाजयाविति ॥ यद्यपितौदैववशौतथाऽपियतोधर्मस्ततोजयइति
नियमाद्धर्मेमयैतादृशेकृतेजयएवममभविष्यति ॥ अधर्मेपिअधर्मेतुकृतेनैवजयस्तस्मात्तेषामनुचिंतितमभिलषितंकथंभवेन्नकथमपीत्यर्थः ॥ ३१ ॥ ३२ ॥राज्यमवाप्येति ॥ अनंतकोटि
ब्रह्मांडनायिकाश्रीभुवनेश्वरीभगवतीप्रसादादितिरहस्यम् । साकेतपुर्यामयोध्यायाम् ॥ ३३ ॥ तदेवाह ॥ विसर्जयेति ॥ परमांबिकांसच्चिदानंदरूपिणीम् ॥ ३४ ॥

दोषागतेति ॥ एवंवदतोःसंबंधिनोर्भाषणैरेवदोषारात्रिर्गताऽनंतरंप्रातःकृतंविवाहंनृपाःसमधिगम्यज्ञात्वानगरबाह्यगतास्तथावक्ष्यमाणप्रकारेणोचुः ॥ ३५ ॥ अद्यैवेति ॥ अस्मत्प्रतारण कर्तारंसुबाहुंतंबालंसुदर्शनंचहत्वातांकन्यांलक्ष्मींराज्ञोलक्ष्मींचगृह्णीमोयद्येतन्नक्रियतेतर्हिलज्जामवाप्यनिजगृहंकथंव्रजेम ॥ ३६ ॥ विवाहनिश्चयःकथंभवताज्ञातइतिचेत्तत्रोचुःशृण्वंत्विति ॥ मृदंगशब्दामधुराअपिनिजवाद्युल्यात्क्रूराञ्छंखस्वनानाभिभवंतिएतैर्लक्षणैर्विवाहःकृतइतिमन्यामहे ॥ ३७ ॥ करपीडनंकन्याकरग्रहणंचकारअंतर्भावितणिजर्थत्वात्कारयामासेत्यर्थः ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ हेनृपतेस्वगृहंव्रजेत्येवास्माकंप्रार्थनाभवतोन्यत्सर्वमेवास्माभिर्लब्धंपूर्णकामावयंजाताइत्यर्थः ॥ ४३ ॥ सुकृतंकृतंहेराजंस्त्वयासुकृतंपुण्यं

दोषागताविविधवाक्यपदैरसालैरन्योन्यभाषणपदैरमृतोपमैश्च ॥ प्रातर्नृपाःसमधिगम्यकृतंविवाहंरोषान्वितानगरबाह्यगतास्तथोचुः ॥ ३५ ॥ अद्यैवतंनृपकलंकधरंचहत्वाबालंतथैवकिलतंनविवाहयोग्यम् ॥ गृह्णीमतांशशिकलांनृपतेश्चलक्ष्मींलज्जामवाप्यनिजसद्मकथंव्रजेम ॥ ३६ ॥ शृण्वंतुतूर्यनिनदान्किलवाद्यमानाञ्छंखस्वनानभिभवंतिमृदंगशब्दाः ॥ गीतध्वनिंचविविधंनिगमस्वनंचमन्यामहेनृपतिनाऽत्रकृतोविवाहः ॥ ३७ ॥ अस्मान्प्रतार्यवचनैर्विधिवच्चकारवैवाहिकेनविधिनाकरपीडनं वै ॥ कर्तव्यमद्यकिमहोप्रविचिंतयंतुभूपाःपरस्परमतिंचसमर्थयंतु ॥ ३८ ॥ एवंवदत्सुनृपतिष्वथकन्यकायाःकृत्वाविवाहविधिमप्रतिमप्रभावः ॥ भूपान्निमंत्रयितुमाशुजगामराजाकाशीपतिःस्वसुहृदैःप्रथितप्रभावैः ॥ ३९ ॥ आगच्छंतंचतंदृष्ट्वानृपाःकाशीपतिंतदा ॥ नोचुःकिंचिदपिक्रोधान्मौनमाधायसंस्थिताः ॥ ४० ॥ सगत्वाप्रणिपत्याहकृतांजलिरभाषत ॥ आगंतव्यंनृपैःसर्वैर्भोजनार्थंगृहेमम ॥ ४१ ॥ कन्ययाऽसौवृतोभूपःकिंकरोमिहिताहितम् ॥ भवद्भिस्तुशमःकार्योमहांतोहिदयालवः ॥ ४२ ॥ तन्निशम्यवचस्तस्यनृपाःक्रोधपरिप्लुताः ॥ प्रत्यूचुर्भुक्तमस्माभिःस्वगृहंनृपतेव्रज ॥ ४३ ॥ कुरुकार्याण्यशेषाणियथेष्टंसुकृतंकृतम् ॥ नृपाःसर्वेप्रयांत्वद्यस्वानिस्वानिगृहाणिवै ॥ ४४ ॥ सुबाहुरपितच्छ्रुत्वाजगामशंकितोगृहम् ॥ किंकरिष्यंतिसंविग्नाःक्रोधयुक्तानृपोत्तमाः ॥ ४५ ॥ गतेतस्मिन्महीपालाश्चक्रुश्चसमयंपुनः ॥ रुद्ध्वामार्गंग्रहीष्यामःकन्यांहत्वासुदर्शनम् ॥ ४६ ॥ केचनोचुःकिमस्माकंहंततेननृपेणवै ॥ दृष्ट्वातुकौतुकंसर्वंगमिष्यामोयथागतम् ॥ ४७ ॥ इत्युक्त्वातेनृपाःसर्वेमार्गमाक्रम्यसंस्थिताः ॥ चकारोत्तरकार्याणिसुबाहुःस्वगृहंगतः ॥ ४८ ॥ इतिश्रीदेवीभागवतेम० तृ० द्वाविंशोऽध्यायः ॥ ॥ २२ ॥ व्यासउवाच ॥ तस्मैगौरवभोज्यानिविधायविधिवत्तदा ॥ वासराणिचषड्राजाभोजयामासभक्तितः ॥ १ ॥ एवंविवाहकार्याणिकृत्वासर्वाणिपार्थिवः ॥ पारिबर्हंप्रदत्त्वाऽथमंत्रयन्सचिवैःसह ॥ २ ॥

कृतंसम्यक्संपादितम् ॥ अस्मदवज्ञयेत्यर्थः ॥ इत्थंराजानमुक्त्वापरस्परंवदंतिनृपाइति ॥ ४४ ॥ तच्छ्रुत्वास्तुतिनिंदाफलकंवाक्यंश्रुत्वानेमेसांत्वनयोग्याइतिमत्वैतेसंविग्नादुःखेनक्रोधयुक्ताःकिंकरिष्यंतीतिनजानेइतिशंकितोगृहंजगाम ॥ ४५ ॥ समयंसंकेतम् ॥ ४६ ॥ केचनोचुरिति ॥ उदासीनाइत्यर्थः ॥ ४७ ॥ उत्तरकार्याणिवरवधूप्रस्थापनविषयाणि ॥ ४८ ॥ इतिश्रीदेवीभागवततिलकेतृतीयस्कंधेद्वाविंशोऽध्यायः ॥ २२ ॥ पंचाधिकैश्चपंचाशत्पद्यैरथमहारणे ॥ शत्रवोनिहतादेव्येत्येवमर्थोऽत्रवर्ण्यते ॥ १ ॥ तस्मैइति ॥ गौरवभोज्यानिगौरवेणमानेनभोज्यानिमानपुरःसरंभोज्यानीत्यर्थः ॥ १ ॥ २ ॥

मार्गरोधनंकृतंराजभिरितिशेषः ॥ ३ ॥ ४ ॥ भारद्वाजाश्रममिति ॥ भारद्वाजमुनेराज्ञयावयमत्रागताः पुनस्तमृषिंद्रष्टुंभारद्वाजाश्रमंगत्वास्थास्यामःपश्चादस्माभिस्तस्मिन्नाश्रमेस्थे
यमुतस्वगृहेस्थेयमितिविचारःकर्तव्योनमध्येइतिभावः ॥ ५ ॥ इदमुत्तरंपूर्वंराज्ञामद्गृहेस्थेयमित्युक्तंतस्येतिबोध्यम् ॥ ६ ॥ सोऽपिसुदर्शनोऽपि ॥ ७ ॥ अनुपश्चान्नृपोत्तमः सुबाहुः ॥
वृतोविवाहितः ॥ ८ ॥ ९ ॥ सुदर्शनःशिवांशरणंजगामपत्न्यासहनिर्भयोजातोमंत्रजपप्रभावादित्यर्थः ॥ १० ॥ ११ ॥ १२ ॥ राघवेणसुदर्शनेन ॥ १३ ॥ परस्परजिघांसतांराज्ञांश

दूतैस्तुकथितंश्रुत्वामार्गसंरोधनंकृतम् ॥ बभूवविमनाराजासुबाहुरमितद्युतिः ॥ ३ ॥ सुदर्शनस्तदोवाचश्वशुरंसंशितव्रतः ॥. अस्मान्विसर्ज
याशुत्वंगमिष्यामोह्यशंकिताः ॥ ४ ॥ भारद्वाजाश्रमंपुण्यंगत्वातत्रसमाहिताः ॥ निवासायविचारोवैकर्तव्यःसर्वथानृप ॥ ५ ॥ नृपेभ्यश्चन
कर्तव्यंभयंकिंचित्त्वयाऽनघ ॥ जगन्माताभवानीमेसाहाय्यंवैकरिष्यति ॥ ६ ॥ व्यासउवाच ॥ तस्येतिमतमाज्ञायजामातुर्नृपसत्तमः ॥
विससर्जधनंदत्त्वाप्रतस्थेसोऽपिसत्वरः ॥ ७ ॥ बलेनमहताविष्टोययावनुनृपोत्तमः ॥ सुदर्शनोवृतस्तत्रचचालपथिनिर्भयः ॥ ८ ॥ रथैःपरि
वृतःशूरःसदारोरथसंस्थितः ॥ गच्छन्ददर्शसैन्यानि नृपाणांरघुनंदनः ॥ ९ ॥ सुबाहुरपितान्वीक्ष्यचिंताविष्टोबभूवह ॥ विधिवत्सशिवांचि
तेजगामशरणंमुदा ॥ १० ॥ जजापैकाक्षरंमंत्रंकामराजमनुत्तमम् ॥ निर्भयोवीतशोकश्चपत्न्यासहनवोढया ॥ ११ ॥ ततःसर्वेमहीपालाःकृ
त्वाकोलाहलंतदा ॥ उत्थिताःसैन्यसंयुक्ताहन्तुकामास्तुकन्यकाम् ॥ १२ ॥ काशीराजस्तुतान्दृष्ट्वाहंतुकामोबभूवह ॥ निवारितस्तदाऽत्यर्थं
राघवेणजिगीषता ॥ १३ ॥ तत्रापिनेदुःशंखाश्चभेर्यश्चानकदुंदुभिः ॥ सुबाहोश्चनृपाणांचपरस्परजिघांसताम् ॥ १४ ॥ शत्रुजित्तुसुसंवृत्तः
स्थितस्तत्रजिघांसया ॥ युधाजित्तत्सहायार्थंसन्नद्धःप्रबभूवह ॥ १५ ॥ केचिच्चप्रेक्षकास्तस्यसहानीकैःस्थितास्तदा ॥ युधाजिदग्रतोगत्वासु
दर्शनमुपस्थितः ॥ १६ ॥ शत्रुजित्तेनसहितोहंतुंभ्रातरमातुजः ॥ परस्परंतेबाणौघैस्ततक्षुःक्रोधमूर्छिताः ॥ १७ ॥ संमर्दःसुमहांस्तत्रसंप्रवृत्तः
सुमार्गणैः ॥ काशीपतिस्तदातूर्णंसैन्येनबहुनावृतः ॥१८॥ साहाय्यार्थंजगामाशुजामातरमनिंदितम् ॥ एवंप्रवृत्तेसंग्रामेदारुणेलोमहर्षणे॥१९॥
प्रादुर्बभूवसहसादेवीसिंहोपरिस्थिता ॥ नानायुधधरारम्यावराभूषणभूषिता ॥ २० ॥ दिव्यांबरपरीधानामंदारस्रक्सुसंयुता ॥ तांदृष्ट्वातेऽथ
भूपालाविस्मयंपरमंगताः ॥ २१ ॥ केयंसिंहसमारूढाकुतोवेतिसमुत्थिता ॥ सुदर्शनस्तुतांवीक्ष्यसुबाहुमितिचाब्रवीत् ॥ २२ ॥ पश्यराज
न्महादेवीमागतांदिव्यदर्शनाम् ॥ अनुग्रहायमेनूनंप्रादुर्भूतादयान्विता ॥ २३ ॥

खाभेर्यश्चनेदुरित्यर्थः ॥ १४ ॥ १५ ॥ अग्रतःसर्वसैन्यस्यतुसुदर्शनमुपस्थितः प्राप्तस्तेनयुधाजितासहितः शत्रुजिच्चोपस्थितइतिपूर्वेणान्वयः ॥ १६ ॥ किमर्थंभ्रातरंसुदर्शनंहंतुम् ॥
अनुजएवानुजःप्रज्ञादित्वादण् ॥ ततक्षुश्छिच्छिदुस्तेत्रयः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ विस्मयमेवाऽऽह । केयमिति ॥ २२ ॥ २३ ॥

॥ २४ ॥ तस्यादर्शनेनमुदितावित्यन्वयः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ केसरिणाआदत्तांगृहीताम् ॥ आदत्तामितिच्छेदः ॥ ३३ ॥ ३४ ॥ कमारेणलोहकारेणपरिमार्जितांस्तीक्ष्णीकृतान् ॥ ३५ ॥ सुदर्शनंहंतुकामःसुदर्शनस्यैवोपरीत्यर्थः ॥ ३६ ॥ ३७ ॥ तत्रसंप्राप्ताजगदंबिकातुमुलंयुद्धंचकारेत्यन्वयः ॥ यद्यपिपामरेषुमनुष्येषु भगवत्याःशस्त्रधारणमनुचितंतथापिभक्तवात्सल्यादनुचितमपिकर्मभगवतीकरोतीत्यनेनबोधितम् ॥ ३८ ॥ ३९ ॥ मातुलस्यापीति ॥ मातुलभागिनेयौसुबाहोराज्ञः ॥ तौचयुधाजि

निर्भयोऽहंमहाराजजातोस्मिनिर्भयादपि ॥ सुदर्शनःसुबाहुश्चतामालोक्यवराननाम् ॥ २४ ॥ प्रणामंचक्रतुस्तस्यामुदितौदर्शनेनच ॥ ननादचतथासिंहोगजास्त्रस्ताश्चकंपिरे ॥ २५ ॥ ववुर्वातामहाघोरादिशश्चाऽऽसन्सुदारुणाः ॥ सुदर्शनस्तदाप्राहनिजसेनापतिंप्रति ॥ २६ ॥ मार्गंव्रजत्वंतरसाभूपालायत्रसंस्थिताः ॥ किंकरिष्यंतिराजानःकुपितादुष्टचेतसः ॥ २७ ॥ शरणार्थंचसंप्राप्तादेवीभगवतीहिनः ॥ निरातंकैश्चगंतव्यंमार्गेऽस्मिन्भूपसंकुले ॥ ॥ २८ ॥ स्मृतामयामहादेवीरक्षणार्थमुपागता ॥ तच्छ्रुत्वावचनंसेनापतिस्तेनपथाऽव्रजत् ॥ २९ ॥ युधाजित्तुसंक्रुद्धस्तानुवाचमहीपतीन् ॥ किंस्थिताभयसंत्रस्तानिघ्नंतुकन्यकान्वितम् ॥ ३० ॥ अवमन्यचनःसर्वान्बलहीनोबलाधिकान् ॥ कन्यांगृहीत्वासंयातिनिर्भयस्तरसाशिशुः ॥ ३१ ॥ किंभीताः कामिनींवीक्ष्यसिंहोपरिसुसंस्थिताम् ॥ नोपेक्ष्योहिमहाभागाहंतव्योऽत्रसमाहितैः ॥ ३२ ॥ हत्वैनंसंग्रहीष्यामःकन्यांचारुविभूषणाम् ॥ नायंकेसरिणाऽऽदत्तांछेत्तुमर्हतिजंबुकः ॥ ३३ ॥ इत्युक्त्वासैन्यसंयुक्तःशत्रुजित्सहितस्तदा ॥ योद्धुकामःसुसंप्राप्तोयुधाजित्क्रोधसंवृतः ॥ ३४ ॥ मुमोचविशिखांस्तूर्णंसमपुंखाञ्छिलाशितान् ॥ धनुराकृष्यकर्णांतंकमारपरिमार्जितान् ॥ ३५ ॥ हंतुकामःसुदुर्मेधाःसुदर्शनमथोपरि ॥ सुदर्शनस्तुतान्बाणैश्चिच्छेदापततःक्षणात् ॥ ३६ ॥ एवंयुद्धेप्रवृत्तेथचुकोपचंडिकाभृशम् ॥ दुर्गादेवीमुमोचाथबाणान्युधाजितंप्रति ॥ ३७ ॥ नानारूपातदाजातानानाशस्त्रधराशिवा ॥ संप्राप्तातुमुलंतत्रचकारजगदंबिका ॥ ३८ ॥ शत्रुजिन्निहतस्तत्रयुधाजिदपिपार्थिवः ॥ पतितौतौरथाभ्यांतुजयशब्दस्तदाऽभवत् ॥ ३९ ॥ विस्मयंपरमंप्राप्ताभूपाःसर्वेविलोक्यतान् ॥ निधनंमातुलस्यापिभागिनेयस्यसंयुगे ॥ ४० ॥ सुबाहुरपितद्दृष्ट्वानिधनंसंयुगेतयोः ॥ तुष्टावपरमप्रीतोदुर्गांदुर्गतिनाशिनीम् ॥ ४१ ॥ सुबाहुरुवाच ॥ नमोदेव्यैजगद्धात्र्यैशिवायैसततंनमः ॥ दुर्गायैभगवत्यैतेकामदायैनमोनमः ॥ ४२ ॥ नमःशिवायैशांत्यैतेविद्यायैमोक्षदेनमः ॥ विश्वव्याप्त्यैजगन्मातर्जगद्धात्र्यैनमःशिवे ॥ ४३ ॥ नाहंगतिंतवधियापरिचिंतयन्वैजानामिदेविसगुणःकिलनिर्गुणायाः ॥ किंस्तौमिविश्वजननिप्रकटप्रभावांभक्तार्तिनाशनपरांपरमांचशक्तिम् ॥ ४४ ॥

त्पक्षपातिनौस्थितौ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ नाहमिति ॥ अहंसगुणोगुणत्रयबद्धात्ममतिर्धियातवनिर्गुणायाःसाम्यावस्थमायोपाधिकब्रह्मरूपिण्यागतिंपराक्रमंव्याप्तिंवापरिचिंतयन्वाङ्मनसयोरविषयत्वान्नजानामि ॥ तदाकिंस्तौमि स्तुतिविषयस्यैवज्ञानाभावात् ॥ ४४ ॥

त्वांस्तौमीति ॥ यतस्त्वंसर्वमनोनियंत्रीततस्त्वांकिंस्तौमि मनसोविषयत्वाभावादितिभावः ॥ किंस्तूयतइति ॥ सर्वव्यापकमात्मरूपंकिंस्तूयतेनस्तूयते ॥ मनोविषयत्वाभावात् ॥ तथै वतदात्मभिन्नांत्वांमनोविषयत्वाभावात्किंस्तौमिनकिमपीत्यर्थः ॥४५॥ ब्रह्माहरश्चेति ॥ एतादृशाब्रह्मादयोमहांतोऽनिशंस्तुवंतोऽपितवगुणानामंतंनगताः॥तथाचश्रुतिः॥ यस्याःस्वरूपं ब्रह्मादयोनविजानंतितस्मादुच्यतेऽज्ञेयायस्याअंतोनविद्यतेतस्मादुच्यतेऽनंतेति ॥ यदेत्थमस्तितदाहमप्रसिद्धोगुणैःसत्त्वादिभिर्बद्धोविभेदमतिर्जीवब्रह्मभेदमतिरज्ञस्तवचरित्रंवक्तुंकक स्मिन्कालेक्षमोनकस्मिन्नपीत्यर्थः ॥४६॥ ममचित्तशुद्ध्यभावाद्यद्यपिभवत्यादर्शनयोग्यतानास्तितथाऽपिभवच्चरणकमलनिमग्नांतःकरणानांसतांसंगत्याकःकामोनासिध्येदपितुसिध्यत्ये वेत्याह । सत्संगतिरिति ॥ सत्संगतिःकामंमनोरथंकथंनकरोतिसंपादयति अपितुकरोत्येव ॥ भगवत्याःस्वस्मिन्भक्तिंकुर्वाणापेक्षयास्वभक्तेभक्तिंकुर्वाणेऽधिकप्रेमयुक्तत्वात् ॥ तदुक्तंदेवी

वाग्देवतात्वमसिसर्वगतैवबुद्धिर्विद्यामतिश्चगतिरप्यसिसर्वजंतोः॥त्वांस्तौमिकिंत्वमसिसर्वमनोनियंत्रीकिंस्तूयतेहिसततंखलुचात्मरूपम् ४५॥ ब्रह्माहरश्चहरिरप्यनिशंस्तुवन्तोनांतंगताःसुरवराःकिलतेगुणानाम् ॥ काहंविभेदमतिरंबगुणैर्वृतोवैवक्तुंक्षमस्तवचरित्रमहोऽप्रसिद्धः॥४६॥ सत्सं गतिःकथमहोनकरोतिकामंप्रासंगिकापिविहिताखलुचित्तशुद्धिः ॥ जामातुरस्यविहितेनसमागमेनप्राप्तंमयाऽद्भुतमिदंतवदर्शनंवै ॥४७॥ ब्रह्मा ऽपिवांछतिसदैवहरोहरिश्चसेंद्राःसुराश्चमुनयोविदितार्थतत्त्वाः ॥ यद्दर्शनंजननितेऽयमयादुरापंप्राप्तंविनादमशमादिसमाधिभिश्च॥४८॥ क्वाहं सुमंदमतिराशुतवावलोकःक्वेदंभवानिभवभेषजमद्वितीयम् ॥ ज्ञाताऽसिदेविसततंकिलभावयुक्ताभक्तानुकंपनपरामरवर्गपूज्या ॥ ४९॥ किंवर्ण यामितवदेविचरित्रमेतद्यद्रक्षितोऽस्तिविषमेऽत्रसुदर्शनोऽयम् ॥ शत्रूहतौसुबलिनौतरसात्वयायद्भक्तानुकंपिचरितंपरमंपवित्रम् ॥ ५० ॥ नाश्च र्यमेतदितिदेविचारितेऽर्थेत्वंपासिसर्वमखिलस्थिरजगमंवै॥ त्रातस्त्वयाचविनिहत्यरिपुर्दयातःसंरक्षितोऽयमधुनाध्रुवसंधिसूनुः॥५१॥भक्तस्य सेवनपरस्ययशोऽतिदीप्तंकर्तुंभवानिरचितंचरितंत्वयैतत् ॥ नोचेत्कथंसुपरिगृह्यसुतांमदीयांयुद्धेभवेत्कुशलवाननवद्यशीलः ॥ ५२ ॥ शक्ताऽ सिजन्ममरणादिभयान्विहंतुंकिंचित्रमत्रकिलभक्तजनस्यकामम् ॥ त्वंगीयसेजननिभक्तजनैरपारात्वंपापपुण्यरहितासगुणागुणाच ॥ ५३ ॥ त्वद्दर्शनादहमहोसुकृतीकृतार्थोजातोऽस्मिदेविभुवनेश्वरिधन्यजन्मा ॥ बीजंनतेनभजनंकिलवेद्मिमातर्ज्ञातस्तवाद्यमहिमाप्रगटप्रभावः ॥५४॥

पुराणेमद्भक्त्यपेक्षयाभक्तेममभक्तिस्तुसिद्धिदेति ॥ ननुचित्तशुद्धिंविनाकथंमद्दर्शनार्हेतेतिचेत्साचित्तशुद्धिर्भवद्भक्तदर्शनप्रसंगेनानायासेनापिविहिताभवतिकृताभवति ॥ एतादृशोभवद्भ क्तदर्शनमहिमेतिभावः॥कोऽसौममभक्तस्तवैतादृशोमिलितइतिचेदस्यजामातुःसुदर्शनस्यतवभक्तस्ययद्दैवेनविहितेनसमागमेनचप्राप्तंमयाऽद्भुतमिदंतवदर्शनंवै॥४७॥इदानींस्वस्यधन्यतां वर्णयति ॥ ब्रह्माऽपीति ॥ शमदमादिसमाधिभिर्विनापि प्राप्तं ततोमत्समोन्यःकोवाधन्योऽस्तीतिभावः ॥४८॥ ज्ञाताऽसीति ॥ अथापिमयाज्ञाताऽसिदृष्टासिततोमदन्यःकोस्तिधन्यः॥ कथंभूतात्वंभावयुक्तभक्तेष्वनुकंपनपरा ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ कामंमनोरथंकर्तुंशक्ताऽसीतिकिंचित्रमित्यन्वयः ॥ अतएवत्वंभक्तैर्गीयसे ॥ ५३ ॥ ५४ ॥

॥ ५५ ॥ इतिश्रीदेवीभागवततिलकेतृतीयस्कंधेत्रयोविंशोऽध्यायः ॥ २३ ॥ पंचाशद्भिस्तथाश्लोकैःश्रीदेवीमहिमोच्यते ॥ दुर्गादेव्यानिवासश्चकाश्यांकृतइतीर्यते ॥ १ ॥ तस्याइति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ त्वंपराशक्तिर्दुर्गादेवीतिनाम्नासंस्थिताभवेतिशेषः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ अथोइत्योकारांतोनिपातः ॥ १२ ॥ भक्तानुकंपीति ॥

व्यासउवाच ॥ एवंस्तुतातदादेवीप्रसन्नवदनाशिवा ॥ उवाचचनृपंदेवीवरंवरयसुव्रत ॥ ५५॥ इतिश्रीदेवीभागवतेमहापुराणेतृतीयस्कंधेत्रयोविंशोऽध्यायः ॥२३॥ व्यासउवाच ॥ ॥ तस्यास्तद्वचनंश्रुत्वाभवान्याःसनृपोत्तमः ॥ प्रोवाचवचनंतत्रसुबाहुर्भक्तिसंयुतः ॥१॥ सुबाहुरुवाच॥ एकतोदेवलोकस्यराज्यंभूमंडलस्यच ॥ एकतोदर्शनंतेवैनचतुल्यंकदाचन ॥ २ ॥ दर्शनात्सदृशंकिंचित्त्रिषुलोकेषुनास्तिमे ॥ कंवरंदेवियाचेऽहंकृतार्थोऽस्मिधरातले॥ ३ ॥ एतदिच्छाम्यहंमातर्याचितुंवांछितवरम् ॥ तवभक्तिःसदामेऽस्तुनिश्चलाह्यनपायिनी ॥४॥ नगरेऽत्रत्वयामातःस्थातव्यंममसर्वदा ॥ दुर्गादेवीतिनाम्नावैत्वंशक्तिरिहसंस्थिता ॥ ५ ॥ रक्षात्वयाचकर्तव्यासर्वदानगरस्यह ॥ यथासुदर्शनस्त्रातोरिपुसंघाद्नामयः ६ ॥ तथाऽत्ररक्षाकर्तव्यावाराणस्यास्त्वयांबिके ॥ यावत्पुरीभवेद्भूमौसुप्रतिष्ठासुसंस्थिता॥७॥ तावत्त्वयाऽत्रस्थातव्यंदुर्गेदेविकृपानिधे॥ वरोऽयंममतेदेयःकिमन्यत्प्रार्थयाम्यहम् ॥८॥ विविधान्सकलान्कामान्देहिमेविद्विषोजहि ॥ अभद्राणांविनाशंचकुरुलोकस्यसर्वदा ॥ ९ ॥ व्यासउवाच ॥ इतिसंप्रार्थितादेवीदुर्गादुर्गार्तिनाशिनी ॥ तमुवाचनृपंतत्रस्तुत्वावैसंस्थितंपुरः॥१०॥ दुर्गोवाच ॥ राजन्सदानिवासोमेमुक्तिपुर्यांभविष्यति ॥ रक्षार्थंसर्वलोकानांयावत्तिष्ठतिमेदिनी ॥११॥ अथोसुदर्शनस्तत्रसमागम्यमुदान्वितः ॥ प्रणम्यपरयाभक्त्यातुष्टावजगदंबिकाम् ॥१२॥ अहोकृपातेकथयाम्यहंकिंत्रातस्त्वयायत्किलभक्तिहीनः ॥ भक्तानुकंपीसकलोजनोऽस्तिविमुक्तभक्तेरवनंव्रतंते॥१३॥ त्वंदेविसर्वंसृजसिप्रपंचंश्रुतंमयापालयसिस्वसृष्टम् ॥ त्वमत्सिसंहारपरेचकालेनतेऽत्रचित्रंममरक्षणंवै॥ १४॥ करोमिकिंतेवददेविकार्यंक्ववाव्रजामीत्यनुमोदयाशु ॥ कार्येविमूढोस्मितवाज्ञयाहंगच्छामितिष्ठेविहरामिमातः ॥१५॥ व्यासउवाच ॥ तंतथाभाषमाणंतुदेवीप्राहदयान्विता ॥ गच्छायोध्यांमहाभागकुरुराज्यंकुलोचितम्॥ १६॥स्मरणीयासदाऽहंतेपूजनीयाप्रयत्नतः॥शंविधास्याम्यहंनित्यंराज्येतेनृपसत्तम॥ १७॥अष्टम्यांचचतुर्दश्यांनवम्यांचविशेषतः ॥ ममपूजाप्रकर्तव्याबलिदानविधानतः ॥१८ ॥ अर्चामदीयानगरेस्थापनीयात्वयाऽनघ ॥ पूजनीयाप्रयत्नेनत्रिकालंभक्तिपूर्वकम् ॥ १९ ॥ शरत्कालेमहापूजाकर्तव्याममसर्वदा ॥ नवरात्रविधानेनभक्तिभावयुतेनच ॥ २० ॥ चैत्रेऽश्विनेतथाऽऽषाढेमाघेकार्योमहोत्सवः ॥ नवरात्रेमहाराजपूजाकार्याविशेषतः ॥ २१ ॥

सकलोऽपिजनोदेवादिलोकोभक्तानुकंप्यास्तिविमुक्तभक्तेर्भक्तिरहितस्यपुरुषस्यत्ववनंनकोपिकरोतितितवव्रतंतुतादृशभक्तिरहितस्यपुरुषस्याप्यवनंकर्त्तव्यमिति ॥ १३॥ १४ ॥ करोमीति॥ किंतेकार्यंमयाकर्तव्यमितिवदेत्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ अर्चाप्रतिमा ॥ १९ ॥ २० ॥ चैत्रेमाघेऽश्विने आषाढे नवरात्रेइत्यन्वयः ॥ इतिनवरात्रचतुष्टयेपीत्यर्थः ॥ २१॥

बुधैर्महोत्सवपूजाकार्येत्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥ अयोध्याधिपतिंसुदर्शनम् ॥ २५ ॥ २६ ॥ २७ ॥ त्वत्कृतेत्वदर्थम् ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ भवत्वंनौश्चेति ॥ त्वंसंसा
रेसंसाररूपेसमुद्रेनौर्भवनौकाभवास्मांस्तारयितुम् ॥ यतःसाधवोऽतिदयापराभवंति ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ चतुर्व्यूहात्मकंहिभगवत्याःस्वरूपंक्रमेणदर्शयति ॥ सर्वस्याऽ
द्येति ॥ एकापालयित्रीसात्त्विकीमहालक्ष्मीर्विष्णुशक्तिःसर्वप्रपंचस्याद्येयम् ॥ द्वितीयातुसृजतेयारजोरूपासत्त्वरूपाचपालनेइति पुनरुक्तिरनुवादरूपा ॥ संहारेतमोरूपायासेयंतृती
याशक्तिः ॥ एतासांनामानिप्रथमस्कंधएवोक्तानि ॥ तस्यास्तुसात्त्विकीशक्तीराजसीतामसीतथा ॥ महालक्ष्मीःसरस्वतीमहाकालीतितास्त्रियइति ॥ ननुरहस्येतुसत्त्वाख्येनातिशुद्धेन

कृष्णपक्षेचतुर्दश्यांममभक्तिसमन्वितैः ॥ कर्तव्यानृपशार्दूलतथाऽष्टम्यांसदाबुधैः ॥ २२ ॥ व्यासउवाच ॥ इत्युक्त्वांतर्हितादेवीदुर्गादुर्गार्ति
नाशिनी ॥ नतासुदर्शनेनाथस्तुताचबहुविस्तरम् ॥ २३ ॥ अंतर्हितांतुतांदृष्ट्वाराजानःसर्वएवते ॥ प्रणेमुस्तंसमागम्ययथाशक्रंसुरास्तथा ॥२४॥
सुबाहुरपितं नत्वा स्थितश्चाग्रेमुदान्वितः ॥ ऊचुःसर्वेमहीपालाअयोध्याधिपतिंतदा ॥२५॥ त्वमस्माकंप्रभुःशास्तासेवकास्तेवयंसदा ॥ कुरुरा
ज्यमयोध्यायांपालयास्मान्नृपोत्तम ॥ २६ ॥ त्वत्प्रसादान्महाराजदृष्टाविश्वेश्वरीशिवा ॥ आदिशक्तिर्भवानीसाचतुर्वर्गफलप्रदा ॥ २७ ॥
धन्यस्त्वंकृतकृत्योऽसिबहुपुण्योधरातले ॥ यस्माच्चत्वत्कृतेदेवीप्रादुर्भूतासनातनी ॥ २८ ॥ नजानीमोवयंसर्वेप्रभावंनृपसत्तम ॥ चंडिकाया
स्तमोयुक्तामाययामोहिताःसदा ॥ २९ ॥ धनदारसुतानांचचिंतनेऽभिरताःसदा ॥ मग्नामहार्णवेघोरेकामक्रोधझषाकुले ॥ ३० ॥ पृच्छाम
स्त्वांमहाभागसर्वज्ञोऽसिमहामते ॥ केयंशक्तिःकुतोजाताकिंप्रभावावदस्वतत् ॥ ३१ ॥ भवत्वंनौश्चसंसारेसाधवोऽतिदयापराः ॥ तस्मान्नोव
दकाकुत्स्थदेवीमाहात्म्यमुत्तमम् ॥ ३२ ॥ यत्प्रभावाचसादेवीयत्स्वरूपा यदुद्भवा ॥ तत्सर्वंश्रोतुमिच्छामस्त्वंब्रूहिनृवरोत्तम ॥३३॥ व्यासउ
वाच ॥ इतिपृष्टस्तदातैस्तुध्रुवसंधिसुतोनृपः ॥ विचिंत्यमनसादेवींतानुवाचमुदान्वितः ॥३४॥ सुदर्शनउवाच ॥ किंब्रवीमिमहीपालास्तस्या
श्चरितमुत्तमम् ॥ ब्रह्मादयोनजानंतिसेशाःसुरगणास्तथा ॥ ३५ ॥ सर्वस्याऽऽद्यामहालक्ष्मीर्वरेण्याशक्तिरुत्तमा ॥ सात्त्विकीयंमहीपालजग
त्पालनतत्परा ॥ ३६ ॥ सृजतेयारजोरूपासत्त्वरूपाचपालने ॥ संहारेचतमोरूपात्रिगुणासासदामता ॥ ३७ ॥ निर्गुणापरमाशक्तिःसर्वकामफ
लप्रदा ॥ सर्वेषांकारणंसाहिब्रह्मादीनांनृपोत्तमाः ॥ ३८ ॥

गुणेनेंदुप्रभांदधावितिवचनेनमहालक्ष्मीरजोगुणासरस्वतीसत्त्वगुणेतिलभ्यतइतिचेन्न ॥ कल्पभेदेनगुणभेदव्यवस्थायाःसुस्थत्वात् ॥ एतासांशक्तीनांशक्तस्वरूपाव्यतिरेकाद्ब्रह्माश्रयंवि
हायावस्थानासंभवेनतद्गुणविशिष्टंब्रह्मैवमहालक्ष्म्यादिनामकमितिबोध्यम् ॥३६॥३७॥ निर्गुणेति ॥ अथयागुणत्रयकारणभूतासाम्यावस्थात्मिकासानिर्गुणा ॥ तस्याअपिपराशक्तित्वेन
ब्रह्माश्रयंविनावस्थानासंभवेनसाम्यावस्थमायोपाधिकंब्रह्मैवपराशक्तिर्मायाभुवनेश्वरीशब्दवाच्यंभवति ॥ सर्वंचेदमुपोद्घातेस्पष्टम् ॥ तत्रनिर्गुणासर्वेषांकारणमित्याह ॥ सर्वेषांकारणं
साहीति सर्वकारणस्यानवस्थाभियाकस्मादप्युत्पत्त्यभावेनानित्यत्वमुक्तंतेनचकेयंशक्तिःकुतोजातेत्यस्योत्तरंदत्तंभवति ॥ ३८ ॥

रूपचतुष्टयमध्येप्याह । निर्गुणेति ॥ अयोगिभिरितिच्छेदः ॥ अयोगिभिर्निर्विकल्पसमाधिरहितैर्निर्गुणाज्ञातुमशक्यायोगिबुद्धिगम्यैवसेत्यर्थः । तथाचश्वेताश्वतरेतेध्यानयोगानुगता अपश्यन्देवात्मशक्तिंस्वगुणैर्निगूढामिति ॥ मध्यमाधिकारिणांयोगिनांतुसगुणामहालक्ष्म्यादिरूपाचिंतनीयेत्यर्थः ॥ तद्वारामूलप्रकृतेरेवसर्वत्रोपास्यत्वमितिरहस्यम् ॥ सर्वंचेदंमत्कृत शक्तितत्त्वविमर्शिन्यांस्पष्टम् ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ प्रकृतयोऽयोध्यावासिनोमहाजनाः ॥ ४८ ॥ ४९ ॥ सुमनसैःपुष्पैः ॥ ५० ॥

निर्गुणासर्वथाज्ञातुमशक्यायोगिभिर्नृपाः ॥ सगुणासुखसेव्यासाचिंतनीयासदाबुधैः ॥ ३९ ॥ राजानऊचुः ॥ बालएववनंप्राप्तस्त्वंतुनूनंभयातुरः ॥ कथंज्ञातात्वयादेवीपरमाशक्तिरुत्तमा ॥ ४० ॥ उपासिताकथंचैवपूजिताचकथंनृप ॥ याप्रसन्नातुसाहाय्यंचकारत्वरयान्विता ॥ ४१ ॥ सुदर्शनउवाच ॥ बालभावान्मयाप्राप्तंबीजंतस्याःसुसंमतम् ॥ स्मरामिप्रजपन्नित्यंकामबीजाभिधंनृपाः ॥ ४२ ॥ ऋषिभिःकथ्यमानासामयाज्ञाताऽबिकाशिवा ॥ स्मरामितांदिवारात्रंभक्त्यापरमयापराम् ॥ ४३ ॥ व्यासउवाच ॥ तन्निशम्यवचस्तस्यराजानोभक्तितत्पराः ॥ तांमत्वापरमांशक्तिंनिर्ययुःस्वगृहान्प्रति ॥ ४४ ॥ सुबाहुरगमत्काश्यांतमापृच्छ्यसुदर्शनम् ॥ सुदर्शनोऽपिधर्मात्मानिर्जगामसुकोसलान् ॥ ४५ ॥ मंत्रिणस्तुनृपंश्रुत्वाहतंशत्रुजितंमृधे ॥ जितंसुदर्शनंचैवबभूवुःप्रेमसंयुताः ॥ ४६ ॥ आगच्छंतंनृपंश्रुत्वातंसाकेतनिवासिनः ॥ उपायनान्युपादायप्रययुःसंमुखेजनाः ॥ ४७ ॥ तथाप्रकृतयःसर्वेनानोपायनपाणयः ॥ ध्रुवसंधिसुतंमत्वामुदिताःप्रययुःप्रजाः ॥ ४८ ॥ स्त्रियोपसंयुतःसोऽथप्राप्यायोध्यांसुदर्शनः ॥ संमान्यसर्वलोकांश्चययौराजनिवेशनम् ॥ ४९ ॥ बंदिभिःस्तूयमानस्तुवंद्यमानश्चमंत्रिभिः ॥ कन्याभिःकीर्यमाणश्चलाजैःसुमनसैस्तथा ॥ ५० ॥ इतिश्रीदेवीभागवतेमहापुराणेतृतीयस्कंधेचतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ व्यासउवाच ॥ गत्वाऽयोध्यांनृपश्रेष्ठोगृहंराज्ञःसुहृद्वृतः ॥ शत्रुजिन्मातरंप्राहप्रणम्यशोकसंकुलाम् ॥ १ ॥ मातर्नतेमयापुत्रःसंग्रामेनिहतःकिल ॥ नपितातेयुधाजिच्चशपेतेचरणौतथा ॥ २ ॥ दुर्गयातौहतौसंख्येनापराधोममात्रवै ॥ अवश्यंभाविभावेषुप्रतीकारोनविद्यते ॥ ३ ॥ नशोकोऽत्रत्वयाकार्योमृतपुत्रस्यमानिनि ॥ स्वकर्मवशगोजीवोभुंक्तेभोगान्सुखासुखान् ॥ ४ ॥ दासोऽस्मितवभोमातर्यथाममनोरमा ॥ तथात्वमपिधर्मज्ञेनभेदोऽस्तिमनागपि ॥ ॥ ५ ॥ अवश्यमेवभोक्तव्यंकृतंकर्मशुभाशुभम् ॥ तस्मान्नशोचितव्यंतेसुखेदुःखेकदाचन ॥ ६ ॥ दुःखेदुःखाधिकान्पश्येत्सुखेपश्येत्सुखाधिकम् ॥ आत्मानंशोकहर्षाभ्यांशत्रुभ्यामिवनार्पयेत् ॥ ७ ॥

इतिश्रीदेवीभागवततिलकेतृतीयस्कंधेचतुर्विंशोऽध्यायः ॥ २४ ॥ षट्श्लोकैरधिकैश्चत्वारिंशत्पद्यैर्निजांबिकाम् ॥ तोषयित्वापुरेदेवीस्थापितेत्युच्यतेपरा ॥ १ ॥ सुदर्शनस्यायोध्यागमनोत्तरंकृत्यमाह । गत्वेति ॥ १ ॥ २ ॥ संख्येयुद्धे ॥ ३ ॥ सुखासुखानित्यर्शआद्यजंतम् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

आत्माधीनमंतःकरणाधीनं न नात्मानंनांतःकरणंशोषयेत् ॥ ८ ॥ दारुमयीपुत्तली ॥ नटादीनामित्यस्यवशगेतिशेषः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ तदाशी राजभोगाशी ॥ १६ ॥ यथाननरकंव्रजेत्तथाधर्माचरणंकर्तव्यमित्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ लीलावतीतुतवनापराधः किंतुममैवेत्याह । सापराधाऽस्मीति ॥ २१ ॥

दैवाधीनमिदंसर्वंनात्माधीनंकदाचन ॥ नशोकेनतदाऽऽत्मानंशोषयेन्मतिमान्नरः ॥ ८ ॥ यथादारुमयीयोषानटादीनांप्रचेष्टते ॥ तथास्वकर्मवशगोदेहीसर्वत्रवर्तते ॥ ९ ॥ अहंवनगतोमातर्नाभवंदुःखमानसः ॥ चिंतयन्स्वकृतंकर्मभोक्तव्यमितिवेद्मिच ॥ १० ॥ मृतोमातामहोऽत्रैवविधुराजननीमम ॥ भयातुरागृहीत्वामांनिर्ययौगहनंवनम् ॥ ११ ॥ लुंठितातस्करैर्मार्गेवस्त्रहीनातथाकृता ॥ पाथेयंचहृतंसर्वंबालपुत्रानिराश्रया ॥ १२ ॥ मातागृहीत्वामांप्राप्ताभारद्वाजाश्रमंप्रति ॥ विदद्धोऽयंसमायातस्तथाधात्रेयिकाऽबला ॥ १३ ॥ मुनिभिर्मुनिपत्नीभिर्दयायुक्तैः समंततः ॥ पोषिताःफलनीवारैर्वयंतत्रस्थितास्त्रयः ॥ १४ ॥ दुःखंनमेतदाह्यासीत्सुखंनाद्यधनागमे ॥ नवैरंनचमात्सर्यममचित्तेतुकर्हिचित् ॥ ॥ १५ ॥ नीवारभक्षणंश्रेष्ठराजभोगात्परंतपे ॥ तदाशीनरकंयातिननीवाराशनःक्वचित् ॥ १६ ॥ धर्मस्याचरणंकार्यंपुरुषेणविजानता ॥ संजित्येंद्रियवर्गंवैयथाननरकंव्रजेत् ॥ १७ ॥ मानुष्यंदुर्लभंमातःखंडेऽस्मिन्भारतेशुभे ॥ आहारादिसुखंनूनंभवेत्सर्वासुयोनिषु ॥ १८ ॥ प्राप्यतंमानुषंदेहंकर्तव्यंधर्मसाधनम् ॥ स्वर्गमोक्षप्रदंनृणांदुर्लभंचान्ययोनिषु ॥ १९ ॥ व्यासउवाच ॥ इत्युक्तासातदातेनलीलावत्यतिलज्जिता ॥ पुत्रशोकपरित्यज्यतमाहाश्रुविलोचना ॥ २० ॥ सापराधाऽस्मिपुत्राहंकृतापित्रायुधाजिता ॥ हत्वामातामहंतेऽत्रहृतंराज्यंतुयेनवै ॥ २१ ॥ नतंवारयितुशक्तातदाऽहंनसुतंमम ॥ यत्कृतंकर्मतेनैवनापराधोस्तिमेसुत ॥ २२ ॥ तौमृतौस्वकृतेनैवकारणंत्वंतयोर्नच ॥ नाहंशोचामितंपुत्रंसदाशोचामितत्कृतम् ॥ २३ ॥ पुत्रत्वमसिकल्याणभगिनीमेमनोरमा ॥ नक्रोधोनचशोकोमेत्वयिपुत्रमनागपि ॥ २४ ॥ कुरुराज्यंमहाभागप्रजाःपालयसुव्रत ॥ भगवत्याःप्रसादेनप्राप्तमेतदकंटकम् ॥ २५ ॥ तदाकर्ण्यवचोमातुर्नत्वातांनृपनंदनः ॥ जगामभुवनंरम्यंयत्रपूर्वंमनोरमा ॥ २६ ॥ न्यवसत्तत्रगत्वातुसर्वानाहूयमंत्रिणः ॥ दैवज्ञानथपप्रच्छमुहूर्तंदिवसंशुभम् ॥ २७ ॥ सिंहासनंतथाहैमंकारयित्वामनोहरम् ॥ सिंहासनेस्थितांदेवींपूजयिष्येसदाप्यहम् ॥ २८ ॥ स्थापयित्वाऽऽसनेदेवींधर्मार्थकाममोक्षदाम् ॥ राज्यंपश्चात्करिष्यामियथारामादिभिःकृतम् ॥ २९ ॥ पूजनीयासदादेवीसर्वैर्नागरिकैर्जनैः ॥ माननीयाशिवाशक्तिःसर्वकामार्थसिद्धिदा ॥ ३० ॥

नसुतंशत्रुजितंवारयितुंशक्ताऽहंतदातस्यमातिपित्रधीनत्वादितिभावः ॥ यत्कृतमिति ॥ यद्यद्दुष्टंकर्मकृतंतत्तत्सर्वंतेनैवयुधाजिताकृतम् ॥ २२ ॥ त्वंतयोर्मरणेकारणंनैवासि ॥ २३ ॥ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ कस्मैप्रयोजनायमुहूर्तप्रश्नइतिचेत्तत्राह ॥ सिंहासनंतथाहैममिति ॥ देवीस्थापनार्थमित्यर्थः ॥ २८ ॥ २९ ॥ अथमंत्रिणआज्ञापयति ॥ पूजनीयेति ॥ ३० ॥

॥ ३१ ॥ ३२ ॥ प्रासादेमतिमान्देव्याइति ॥ मूर्तिमितिशेषः ॥ पूर्वंसामान्यतःस्थापनमुक्तमत्रतुक्रमेणेतिनपुनरुक्तिः ॥ ३३ ॥ ३४ ॥ ३५ ॥ कृत्वेति ॥ कृत्वाविख्यातोबभूवेत्यन्वयः ॥ अंबिकाचदेवीविख्याताबभूवेत्यर्थः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ इतिश्रीदेवीभागवततिलकेतृतीयस्कंधेपंचविंशो॰

इत्युक्तामंत्रिणस्तेतुचक्रुर्वैराजशासनम् ॥ प्रासादंकारयामासुःशिल्पिभिःसुमनोरमम् ॥ ३१ ॥ प्रतिमांकारयित्वाऽथमुहूर्तेऽथशुभेदिने ॥ द्विजानाहूयवेदज्ञान्स्थापयामासभूपतिः ॥ ३२ ॥ हवनंविधिवत्कृत्वापूजयित्वाऽथदेवताम् ॥ प्रासादेमतिमान्देव्याःस्थापयामासभूमिपः ॥ ३३ ॥ उत्सवस्तत्रसंवृत्तो वादित्राणांचनिःस्वनैः ॥ ब्राह्मणानांवेदघोषैर्गानैस्तुविविधैर्नृप ॥ ३४ ॥ व्यासउवाच ॥ प्रतिष्ठाप्यशिवां देवींविधिवद्वेदवादिभिः ॥ पूजांनानाविधांराजा चकारातिविधानतः ॥ ३५ ॥ कृत्वापूजाविधिंराजाराज्यंप्राप्यस्वपैतृकम् ॥ विख्यातश्चांबीकादेवीकोसलेषुबभूवह ॥ ३६ ॥ राज्यंप्राप्यनृपःसर्वसामंतकनृपानथ ॥ वशेचक्रेऽतिधर्मिष्ठान्सद्धर्मविजयीनृपः ॥ ३७ ॥ यथारामः स्वराज्येऽभूद्दिलीपस्यरघुर्यथा ॥ प्रजानांवैसुखंतद्वन्मर्यादाऽपितथाऽभवत् ॥ ३८ ॥ धर्मोवर्णाश्रमाणांचचतुष्पादभवत्तथा ॥ नाधर्मेरमतेचित्तंकेषामपिमहीतले ॥ ३९ ॥ ग्रामेग्रामेचप्रासादांश्चक्रुःसर्वेजनाधिपाः ॥ देव्याःपूजातदा प्रीत्याकोसलेषुप्रवर्तिता ॥ ४० ॥ सुबाहुरपिकाश्यांतुदुर्गायाःप्रतिमांशुभाम् ॥ कारयित्वाचप्रासादंस्थापयामासभक्तितः ॥ ४१ ॥ तत्रतस्याजनाःसर्वे प्रेमभक्तिपरायणाः ॥ पूजांचक्रुर्विधानेनयथाविश्वेश्वरस्यह ॥ ४२ ॥ विख्यातासाबभूवाथदुर्गादेवीधरातले ॥ देशेदेशेमहाराजतस्याभक्तिर्व्यवर्धत ॥ ४३ ॥ सर्वत्रभारतेलोकेसर्ववर्णेषुसर्वथा ॥ भजनीयाभवानीतुसर्वेषामभवत्तदा ॥ ४४ ॥ शक्तिभक्तिरताःसर्वेमानिनश्चाभवन्नृप ॥ आगमोक्तैरथस्तोत्रैर्जपध्यानपरायणाः ॥ ४५ ॥ नवरात्रेषुसर्वेषु चक्रुःसर्वेविधानतः ॥ अर्चनंहवनंयागंदेव्याभक्तिपराजनाः ॥ ४६ ॥ इतिश्रीदे॰महापुराणेतृतीयस्कंधेपंचविंशोऽध्यायः ॥ २५ ॥ ॥ जनमेजयउवाच ॥ नवरात्रेतुसंप्राप्तेकिंकर्तव्यंद्विजोत्तम ॥ विधानंविधिवद्ब्रूहिशरत्कालेविशेषतः ॥ १ ॥ किंफलंखलुकस्तत्रविधिःकार्योमहामते ॥ एतद्विस्तरतोब्रूहिकृपयाद्विजसत्तम ॥ २ ॥ व्यासउवाच ॥ शृणुराजन्प्रवक्ष्यामिनवरात्रव्रतंशुभम् ॥ शरत्कालेविशेषेणकर्तव्यंविधिपूर्वकम् ॥ ३ ॥ वसंतेचप्रकर्तव्यंतथैवप्रेमपूर्वकम् ॥ द्वावृतूयमदंष्ट्राख्यौनूनंसर्वजनेषुवै ॥ ४ ॥ शरद्वसंतनामानौदुर्गमौप्राणिनामिह ॥ तस्माद्यत्नादिदंकार्यंसर्वत्रशुभमिच्छता ॥ ५ ॥ द्वावेवसुमहाघोरावृतूरोगकरौनृणाम् ॥ वसंतशरदावेवजननाशकरावुभौ ॥ ६ ॥

ध्यायः ॥ २५ ॥ ॥ द्विषष्टिश्लोकवर्यैस्तुनवरात्रविधिंनृपः ॥ पप्रच्छतस्मैप्रोवाचव्यासइत्येतदुच्यते ॥ १ ॥ नवरात्रोत्सवःकर्तव्यइतिपूर्वाध्यायांतेउक्तंतस्यविधिंजनमेजयःपृच्छति ॥ नवरात्रेतुसंप्राप्तइति ॥ १ ॥ २ ॥ ३ ॥ ऋतुद्वयेकिमित्यवश्यंकर्तव्यंतत्राह । द्वावृतूइति ॥ ४ ॥ ५ ॥ ६ ॥

॥ ७ ॥ अमावास्यांचेति ॥ पूर्वेद्युरमावास्यांपूजासामग्रीसंपादनीयेत्यर्थः ॥ एकभुक्तंत्विति ॥ अमावास्यामेकवारंभोजनंहविष्याशनरूपंकार्यम् ॥ ८ ॥ अमावास्यायामेवमंडपादि कंकार्यंकर्तव्यमित्याह मंडपस्त्विति ॥ शुभेस्थलेइत्यनेनभूशोधनादिकमुक्तंभवति ॥ समेस्थलेनिम्नोन्नतराहितेप्राचीसाधनयुतेइत्यर्थः ॥ हस्तषोडशेति॥ तदुक्तंशारदायाम् ॥ पंचाभिः सप्तभिर्हस्तैर्नवभिर्वाभितांतरम् ॥ षोडशस्तंभसंयुक्तंचत्वारस्तेषुमध्यगाइति ॥ तत्रसप्तभिर्नवभिर्हस्तैर्मिलित्वाषोडशहस्ताःसंपन्नाः ॥ इदंचोत्तममानम् ॥ ९ ॥ १० ॥ ११ ॥ अमा वास्यायामेवरात्रावृत्विङ्निमंत्रणंकार्यमित्याह । रात्राविति ॥ १२ ॥ १३ ॥ मधुपूर्वकंमधुपर्कपूर्वकमित्यर्थः १४ ॥ १५ ॥ विप्रैःसंतोषितैःकार्यंनिजंसंपूर्णंभवेन्नान्यथातस्मात्तेषांसं तोषःकार्यइत्यर्थः ॥ देव्याःपाठेसप्तशत्याख्यस्तोत्रपाठेकर्तव्येदेवीभागवतपाठेकर्तव्येचेत्यर्थः ॥ तदुक्तंदुर्गातरंगिण्यांयामले ॥ नवरात्रेतुदेवेशिदौर्गंभागवतंपठेत् ॥ जपेत्सप्तशतींचंडीं

तस्मात्तत्रप्रकर्तव्यंचंडिकापूजनंबुधैः ॥चैत्रेऽश्विनेशुभेमासेभक्तिपूर्वंनराधिप॥७॥अमावास्यांचसंप्राप्यसंभारंकल्पयेच्छुभम् ॥ हविष्यंचाशनं कार्यमेकभुक्तंतुतद्दिने ॥८॥ मंडपस्तुप्रकर्तव्यःसमेदेशेशुभेस्थले ॥ हस्तषोडशमानेनस्तंभध्वजसमन्वितः॥९॥ गौरमृद्गोमयाभ्यांचलेपनंकार येत्ततः ॥ तन्मध्येवेदिकाशुभ्राकर्तव्याचसमास्थिरा ॥१०॥ चतुर्हस्ताचहस्तोच्छ्रापीठार्थंस्थानमुत्तमम् ॥ तोरणानिविचित्राणिवितानंचप्रक ल्पयेत् ॥११॥ रात्रौद्विजानथामंत्र्यदेवीतत्त्वविशारदान् ॥ आचारनिरतान्दांतान्वेदवेदांगपारगान् ॥ १२ ॥ प्रतिपद्दिवसेकार्यंप्रातःस्नानं विधानतः॥नद्यांनदेतडागेवावाप्यांकूपेगृहेऽथवा॥१३॥प्रातर्नित्यंपुरःकृत्वाद्विजानांवरणंततः॥ अर्घ्यपाद्यादिकंसर्वंकर्तव्यंमधुपूर्वकम्॥१४॥ वस्त्रालंकरणादीनिदेयानिचस्वशक्तितः ॥ वित्तशाठ्यंनकर्तव्यंविभवेसतिकर्हिचित् ॥१५॥ विप्रैःसंतोषितैःकार्यंसंपूर्णंसर्वथाभवेत् ॥ नवपंच त्रयश्चैकोदेव्याःपाठेद्विजाःस्मृताः ॥१६॥ वरयेद्ब्राह्मणंशांतंपारायणकृतेतदा ॥ स्वस्तिवाचनकंकार्यंवेदमंत्रविधानतः ॥१७॥ वेद्यांसिंहासनं स्थाप्यक्षौमवस्त्रसमन्वितम् ॥ तत्रस्थाप्यांऽबिकादेवीचतुर्हस्तायुधान्विता ॥१८॥ रत्नभूषणसंयुक्तामुक्ताहारविराजिता ॥ दिव्यांबरधरासौ म्यासर्वलक्षणसंयुता ॥१९॥ शंखचक्रगदापद्मधरासिंहेस्थिताशिवा ॥ अष्टादशभुजावाऽपिप्रतिष्ठाप्यासनातनी ॥२०॥ अर्चाभावेतथायंत्रंन वार्णमंत्रसंयुतम् ॥ स्थापयेत्पीठपूजार्थंकलशंतत्रपार्श्वतः ॥ २१ ॥

नियमेनसमाहितइति ॥ महेशठक्कुरकृतदुर्गाप्रदीपेदेवीयामलेच ॥ देवीभागवतंभक्त्यापठेन्नित्यमतंद्रितः ॥ नवरात्रेविशेषेणश्रीदवीप्रीतयेमुदेति॥ द्विजाःस्मृताःशक्त्यनुसारेणलघुगुर्व नुष्ठानानुसारेणच ॥ १६ ॥ एकब्राह्मणपक्षेआह । वरयेदिति ॥ तत्राऽऽदौस्वस्तिवाचनंकार्यमित्याह ॥ १७ ॥ तदनंतरंदेवीस्थापनमाह । वेद्यामिति ॥ १८ ॥ १९ ॥ अष्टादशभु जावाप्रतिमाकार्या ॥ तद्ध्यानंत्वक्षस्रक्परशूगदेषुकुलिशमित्यादिकंप्राधानिकरहस्याज्ज्ञेयम् ॥ २० ॥ अर्चाभावेप्रतिमायाअप्यभावेतस्मिन्सिंहासनेनवार्णमंत्रसंयुतंमध्येलिखितंनवा र्णमंत्रेणसंयुतंप्रत्यासत्त्यानवार्णमंत्रस्यैवयंत्रंस्थापयेदित्यर्थः । तद्यंत्रंतदावरणदेवताश्चमंत्रमहोदध्यादिग्रंथेषुस्पष्टाः स्थापयेदिति ॥ तत्रवेद्यांपार्श्वतःसिंहासनस्यदक्षिणभागेकलशंकल शस्थापनविधानेनस्थापयेत् ॥ सचविधिर्ग्रंथांतरेस्पष्टएव ॥ क्वचित्सिंहासनस्याग्रेऽपिकलशस्थापनमुक्तम् ॥ ननुस्थानद्वयेदेवीस्थापनस्यकिंप्रयोजनमितिचेन्न॥ सिंहासनेनित्यपूजामूर्तेः स्थापनस्यकलशेतुनैमित्तिकनवरात्रपूजार्थंदेव्याःस्थापनस्याभिहितत्वात्तथाचकलशेएवप्राणादिस्थापनंसिंहासनस्थमूर्तौतुपूर्वंजातमेवेतिनतत्रतद्विधेयम् ॥ तदुक्तंदेवीपुराणे ॥ नित्यपू जाकृतेरग्रेकलशंस्थापयेत्ततइतिनित्यपूजाकृतेर्नित्यपूजामूर्तेरित्यर्थः ॥ २१ ॥

कलशस्थापनप्रकारमाह । पंचपल्लवेति ॥ २२ ॥ पार्श्वेस्वस्येतिशेषः ॥ २३ ॥ नंदायांहस्तनक्षत्रयुतानंदाप्रतिपत्तिथिस्तस्यांपूजनंसर्वोत्तममित्यर्थः ॥ २४ ॥ नियमंसंकल्पम् ॥ तत्स्व रूपमाह ॥ उपवासेनेति ॥ २५ ॥ २६ ॥ उपवासाद्यशक्तावाह । यथाशक्तीति ॥ २७ ॥ करजंपुष्पजातिविशेषः ॥२८॥ ब्रह्मकापुष्पैर्ब्राह्मीपुष्पैरित्यर्थः॥२९॥३०॥ पूर्णफलैःबिल्व फलैः॥ ३१ ॥ मांसाशनंयेकुर्वंतीति ॥ यद्यपिमांसाशनंब्राह्मणैरपिक्रियतेतथाऽपिब्राह्मणस्यकालिकापुराणादिषुसाक्षाद्बलिदानस्यनिषेधकथनात्क्षत्रियविषयकएवायंविधिरितिबोध्यम्॥ तथाचशारदायाम् । ब्राह्मणोनियतःशुद्धःसात्त्विकंबलिमाहरेदिति ॥ तथा हिंसायुक्तोबलिस्त्वाद्यवर्णहित्वाप्रशस्यतेइति ॥ आद्यवर्णब्राह्मणवर्णंहित्वात्यक्त्वेत्यर्थः॥ तथाकालिकापुरा णे ॥ सिंहव्याघ्रादिकंदत्त्वाचात्मवध्यामवाप्नुयात् ॥ मद्यंदत्त्वाब्राह्मणस्तुब्राह्मण्यादेवहीयते ॥ अवश्यंविहितोयत्रबलिस्तत्रद्विजःपुनः ॥ पिष्टेनाऽपिघृतेनापिनिर्मितंतुसमर्पयेदिति ॥

पंचपल्लवसंयुक्तंवेदमंत्रैःसुसंस्कृतम् ॥ सुतीर्थजलसंपूर्णंहेमरत्नैःसमन्वितम् ॥२२॥ पार्श्वंपूजार्थसंभारान्परिकल्प्यसमंततः ॥ गीतवादित्रनिर्घो षान्कारयेन्मंगलायवै ॥२३॥ तिथौहस्तान्वितायांचनंदायांपूजनंवरम्॥प्रथमेदिवसेराजन्विधिवत्कामदंनृणाम् ॥ २४ ॥ नियमंप्रथमंकृत्वाप श्चात्पूजांसमाचरेत् ॥ उपवासेननक्तेनचैकभुक्तेनवापुनः ॥ २५ ॥ करिष्यामिव्रतंमातर्नवरात्रमनुत्तमम् ॥ साहाय्यंकुरुमेदेविजगदंबममाखि लम् ॥२६॥ यथाशक्तिप्रकर्तव्योनियमोव्रतहेतवे ॥ पश्चात्पूजाप्रकर्तव्याविधिवन्मंत्रपूर्वकम् ॥ २७ ॥ चंदनागुरुकर्पूरैःकुसुमैश्चसुगंधिभिः ॥ मंदारकरजाशोकचंपकैःकरवीरकैः ॥२८॥ मालतीब्रह्मकापुष्पैस्तथाबिल्वदलैःशुभैः ॥ पूजयेज्जगतांधात्रींधूपैर्दीपैर्विधानतः॥२९॥ फलैर्नाना विधैरर्घ्यंप्रदातव्यंचतत्रवै ॥ नारिकेलैर्मातुलिंगैर्दाडिमीकदलीफलैः ॥ ३०॥ नारंगैःपनसैश्चैवतथापूर्णफलैःशुभैः ॥ अन्नदानंप्रकर्तव्यंभक्तिपूर्वं नराधिप ॥ ३१ ॥ मांसाशनंयेकुर्वंतितैःकार्यंपशुहिंसनम् ॥ महिषाजवराहाणांबलिदानंविशिष्यते ॥ ३२॥ देव्यग्रेनिहतायांतिपशवःस्वर्ग मव्ययम् ॥ नहिंसापशुजातत्रनिघ्नतांतत्कृतेऽनघ ॥ ३३ ॥ अहिंसायाज्ञिकीप्रोक्तासर्वशास्त्रविनिर्णये ॥ देवतार्थेविसृष्टानांपशूनांस्वर्गतिर्ध्रुवा ॥ ३४ ॥ होमार्थंचैवकर्तव्यंकुंडंचैवत्रिकोणकम् ॥ स्थंडिलंवाप्रकर्तव्यंत्रिकोणंमानतःशुभम् ॥३५॥ त्रिकालंपूजनंनित्यंनानाद्रव्यैर्मनोहरैः ॥ गीतवादित्रनृत्यैश्चकर्तव्यश्चमहोत्सवः ॥ ३६ ॥ नित्यंभूमौचशयनकुमारीणांचपूजनम् ॥ वस्त्रालंकरणैर्दिव्यैर्भोजनैश्चसुधामयैः ॥ ३७॥

छांदोग्यश्रुतिरपि ॥ अहिंसन्सर्वभूतान्यन्यत्रतीर्थेभ्यइति नहिंस्यात्सर्वभूतानीत्यपि ॥ ३२ ॥ ननुदेव्यतिरिक्तदेवतासुशास्त्रेबलिदानमनुक्त्वादेव्युपासनायामेवकिमितिबलिदानंशास्त्रे पूक्तमितिचेदत्रसमाहितं दुर्गाप्रदीपेयामले ।। ब्रह्मविद्याजीवदशानिहंत्रीतिश्रुतौश्रुतंतत्तस्मात्कारणाद्देव्याबलिदानंप्रियंमतामिति ॥ यतः कारणाद्देवीब्रह्मविद्याधिष्ठात्रीभवतिब्रह्मवि द्यायाश्चस्वभावोजीवदशानाशयितव्येतितस्माद्देव्याःप्रियोबलिर्भवतीतितदर्थः॥३३॥ नहिंसापशुजातत्रेति ॥ अहिंसायाज्ञिकीप्रोक्तेतिचक्षत्रियोद्देशेनैवतस्यचित्तेजायमानहिंसाशंकानि वृत्त्यर्थंनब्राह्मणाद्देशेनेतिबोध्यम् ॥ ३४ ॥ मानतइति ॥ होमानुसारेणैकहस्तादिदशहस्तांतमानतइत्यर्थः ॥ तदुक्तंशारदायाम् ॥ दशहस्तांतमन्येषामिति ॥ मुष्टिमात्रंमितंकुंडंशतार्धे संप्रचक्षते ॥ शतहोमेऽरत्निमात्रामित्यादि ॥ अत्रहोमस्तुतत्तत्कल्पोक्तएवग्राह्योयोयत्रोक्तोनित्यनैमित्तिककाम्यभेदेन ॥ ३५ ॥ ३६ ॥ सुधामयैरमृतमयैर्मिष्टैरित्यर्थः ॥ ३७ ॥

कुमारीपूजनपक्षानाह ॥ एकैकामिति ॥ प्रत्यहमेकैकामित्येकः पक्षः ॥ एकैकवृद्ध्येतितुद्वितीयः ॥ द्विगुणत्रिगुणवृद्ध्येतितुतृतीयचतुर्थपक्षौ ॥ प्रत्येकंप्रत्यहंनवकंचवानवनवकुमारी णांपूजनमित्युत्तमः पक्षः ॥ ३८ ॥ शक्तिमखेंऽबायज्ञे ॥ ३९ ॥ एकवर्षानकर्तव्येति ॥ तत्रहेतुर्यतःसागंधादिभोगानामज्ञाततः ॥ ४० ॥ द्विवर्षादिदशवर्षातानांपूज्यानांकुमारिणांना मानितत्पूजाफलंतासांपूजामंत्राश्चोच्यंते ॥ कुमारिकातुसेति ॥ ४१ ॥ ४२ ॥ नकर्तव्यापूजार्थनकर्तव्येत्यर्थः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥५१ ॥

एकैकांपूजयेन्नित्यमेकवृद्ध्यातथापुनः॥द्विगुणंत्रिगुणंवाऽपिप्रत्येकंनवकंचवा॥३८॥विभवस्यानुसारेणकर्तव्यंपूजनंकिल।वित्तशाठ्यंनकर्तव्यं राजञ्छक्तिमखेसदा॥३९॥एकवर्षानकर्तव्याकन्यापूजाविधौनृप॥परमज्ञातुभोगानांगंधादीनांचबालिका॥४०॥ कुमारिकातुसाप्रोक्ताद्विवर्षा याभवेदिह॥त्रिमूर्तिश्चत्रिवर्षाचकल्याणीचतुरब्दिका॥४१॥रोहिणीपंचवर्षाचषड्वर्षाकालिकास्मृता ॥ चंडिकासप्तवर्षास्यादष्टवर्षाचशांभवी ॥४२॥नववर्षाभवेद्दुर्गासुभद्रादशवार्षिकी॥अतऊर्ध्वंनकर्तव्यासर्वकार्यविगर्हिता॥४३॥एभिश्चनामभिःपूजाकर्तव्याविधिसंयुता ॥ तासांफला निवक्ष्यामिनवानांपूजनेसदा॥४४॥कुमारीपूजिताकुर्याद्दुःखदारिद्र्यनाशनम्॥शत्रुक्षयंधनायुष्यंबलवृद्धिंकरोतिवै ॥४५॥ त्रिमूर्तिपूजनादायु स्त्रिवर्गस्यफलंभवेत्॥धनधान्यागमश्चैवपुत्रपौत्रादिवृद्ध्यः॥४६॥ विद्यार्थीविजयार्थीचराज्यार्थीयश्चपार्थिवः ॥ सुखार्थीपूजयेन्नित्यंकल्याणीं सर्वकामदाम्॥४७॥कालिकांशत्रुनाशार्थंपूजयेद्भक्तिपूर्वकम्॥ऐश्वर्यधनकामश्चचंडिकांपरिपूजयेत्।४८।पूजयेच्छांभवींनित्यंनृपसंमोहनायच॥ दुःखदारिद्र्यनाशायसंग्रामेविजयायच॥४९॥क्रूरशत्रुविनाशार्थंतथोग्रकर्मसाधने ॥ दुर्गांचपूजयेद्भक्त्यापरलोकसुखायच॥५०॥वांछितार्थस्य सिद्ध्यर्थंसुभद्रांपूजयेत्सदा॥रोहिणींरोगनाशायपूजयेद्विधिवन्नरः॥५१॥श्रीरस्त्वितिचमंत्रेणपूजयेद्भक्तितत्परः ॥ श्रीयुक्तमंत्रैरथवाबीजमंत्रैरथा पिवा॥५२॥कुमारस्यचतत्त्वानियासृजत्यपिलीलया॥कादीनपिचदेवांस्तान्कुमारींपूजयाम्यहम् ॥५३॥ सत्त्वादिभिस्त्रिमूर्तिर्यातैर्हिनानास्व रूपिणी॥त्रिकालव्यापिनीशक्तिस्त्रिमूर्तिंपूजयाम्यहम्॥५४॥कल्याणकारिणीनित्यंभक्तानांपूजिताऽनिशम्॥ पूजयामिचतांभक्त्याकल्याणींस र्वकामदाम्॥५५॥रोहयंतीचबीजानिप्राग्जन्मसंचितानिवै॥यादेवीसर्वभूतानांरोहिणींपूजयाम्यहम् ॥५६॥ कालीकालयतेसर्वंब्रह्मांडंसचराच रम्॥कल्पांतसमयेयातांकालिकांपूजयाम्यहम्॥५७॥चंडिकांचंडरूपांचचंडमुंडविनाशिनीम्॥ तांचंडपापहारिणींचंडिकांपूजयाम्यहम् ॥५८॥

श्रीमंत्रयुक्तैरन्यैर्मंत्रैर्वा ॥ ५२ ॥ तान्मंत्रानेवाऽऽह। कुमारस्यचेति ॥ कुमारस्यबालकस्यस्कंदस्यवातत्त्वानिरहस्यभूतानिवस्तूनियासृजतीत्यर्थः ॥ कादीन्ब्रह्मादीनपिदेवान् ॥५३॥ सत्त्वादिभिःसत्त्वादिगुणैस्त्रिमूर्तिर्महालक्ष्म्यादिरूपिणी ॥ तैःसत्त्वादिगुणैरेवनानारूपिणीप्रस्ताररीत्यात्रिकालव्यापिनीकालत्रयाबाध्याचिद्रूपिणी ॥ ५४ ॥ ५५ ॥ रोहयंतीअंकुरी भूतानिकुर्वती ॥ ५६ ॥ ५७ ॥ ५८ ॥

अकारणादिति ॥ यस्याःसमुत्पत्तिर्यन्मयैर्यत्स्वरूपैर्वेदैरकारणादेवपरिकीर्तिता ॥ यस्याआविर्भावोऽकारणादेवभवति ॥ स्वस्मादेवस्वयमाविर्भवतिनान्यतइत्यर्थः ॥ ५९ ॥ ६० ॥ ॥ ६१ ॥ नवरात्रपूजाक्रमस्त्वनुष्ठानग्रंथादवसेयः ॥ गौरवादत्रनलिख्यते ॥ ६२ ॥ इतिश्रीदेवीभागवततिलकेतृतीयस्कंधेषड्विंशोऽध्यायः ॥ २६ ॥ सप्ताधिकैस्तुपंचाशत्पद्यैरथकुमारिकाः ॥ कथयित्वावर्जनीयामाहात्म्यमपिचोच्यते ॥ १ ॥ वर्जनीयाःकुमारिकाआह । हीनांगीमिति ॥ न्यूनांगीमित्यर्थः ॥ गंधेनदुर्गंधेनस्फुरितंयुक्तमतएवहीनमंगंयस्यास्ताम् ॥ विशालंवेःशालच्छंकटचौ ॥ विशालकुलसंभवांदुष्टकुलसंभवामित्यर्थः ॥ १ ॥ रक्तपुष्पादिनांऽकितांरक्तपुष्पंस्त्रीरजआदियौवनचिह्नंतेनान्विताम् ॥ २ ॥ क्षामां

अकारणात्समुत्पत्तिर्यन्मयैःपरिकीर्तिता॥यस्यास्तांसुखदांदेवींशांभवींपूजयाम्यहम्॥५९॥दुर्गात्त्रायतिभक्तंयासदादुर्गार्तिनाशिनी ॥ दुर्ज्ञेयासर्वदेवानांतांदुर्गांपूजयाम्यहम्॥६०॥सुभद्राणिचभक्तानांकुरुतेपूजितासदा॥अभद्रनाशिनींदेवींसुभद्रांपूजयाम्यहम् ॥६१॥ एभिर्मंत्रैःपूजनीयाःकन्यकाःसर्वदाबुधैः॥वस्त्रालंकरणैर्माल्यैर्गंधैरुच्चावचैरपि॥६२॥इतिश्रीदेवी०भ०तृतीयस्कंधेषड्विंशोऽध्यायः॥२६॥॥व्यासउवाच॥हीनांगींवर्जयेत्कन्यांकुष्ठयुक्तांव्रणांकिताम्॥गंधस्फुरितहीनांगींविशालकुलसंभवाम् ॥१॥ जात्यंधांकेकरांकाणींकुरूपांबहुरोमशाम्॥संत्यजेद्रोगिणींकन्यांरक्तपुष्पादिनांऽकिताम्॥२॥क्षामांगर्भसमुद्भूतांगोलकांकन्यकोद्भवाम्॥वर्जनीयाःसदाचैताःसर्वपूजादिकर्मसु॥३॥अरोगिणींसुरूपांगींसुंदरींव्रणवर्जिताम्॥एकवंशसमुद्भूतांकन्यांसम्यक्प्रपूजयेत्॥४॥ब्राह्मणीसर्वकार्येषुजयार्थेनृपवंशजा ॥ लाभार्थेवैश्यवंशोत्थामतावाशूद्रवंशजा ॥५॥ ब्राह्मणैर्ब्रह्मजाःपूज्याराजन्यैर्ब्रह्मवंशजाः॥वैश्यैस्त्रिवर्गजाःपूज्याश्चतस्रःपादसंभवैः॥६॥कारुभिश्चैववंशोत्थायथायोग्यंप्रपूजयेत्॥नवरात्रविधानेनभक्तिपूर्वंसदैवहि॥७॥अशक्तोनियतंपूजांकर्तुंचेन्नवरात्रके ॥ अष्टम्यांचविशेषेणकर्तव्यंपूजनंसदा॥८॥पुराऽष्टम्यांभद्रकालीदक्षयज्ञविनाशिनी॥प्रादुर्भूतामहाघोरायोगिनीकोटिभिःसह॥९॥अतोऽष्टम्यांविशेषेणकर्तव्यंपूजनंसदा॥नानाविधोपहारैश्चगंधमाल्यानुलेपनैः॥१०॥पायसैरामिषैर्होमैर्ब्राह्मणानांचभोजनैः॥फलपुष्पोपहारैश्चतोषयेज्जगदंबिकाम्॥११॥उपवासेह्यशक्तानांनवरात्रव्रतेपुनः ॥ उपोषणत्रयंप्रोक्तंयथोक्तंफलदंनृप॥१२॥ सप्तम्यांचतथाऽष्टम्यांनवम्यांभक्तिभावतः ॥ त्रिरात्रकरणात्सर्वंफलंभवतिपूजनात् ॥ १३ ॥

कृशाम् ॥ गर्भसमुद्भूतामतिबालामेकदिनादिजाताम् ॥ गोलकांमृतभर्तृमातृजातांविधवाजन्यामित्यर्थः ॥ कन्यकोद्भवामविवाहितकन्याजन्याम् ॥ ३ ॥ एकवंशसमुद्भूतामजारजामित्यर्थः ॥ ४ ॥ ५ ॥ पादसंभवैःशूद्रैश्चतस्रोवर्णचतुष्टयजन्याःकन्याःपूज्याइत्यर्थः ॥ ६ ॥ कारुभिरिति ॥ कारुर्विश्वकर्मणिनात्रिषुकारकशिल्पिनोरितिमेदिनीकोशात्कारुभिःशिल्पिभिःस्वस्ववंशोत्थाः पूज्याः ॥ शूद्रापेक्षयैतेष्वयंविशेषः ॥ ७ ॥ ८ ॥ ९ ॥ अतइति ॥ तदुक्तमीशानसंहितायाम् ॥ एकादशीकोटिसहस्रतुल्याजन्माष्टमीपर्वतराजपुत्र्याः ॥ ततोऽपिशुक्लागणिताशतेनपराशरव्यासवसिष्ठमुख्यैरिति ॥ १० ॥ आमिषैर्मांसैः ॥ इदंक्षत्रियादिपरम् ॥ ११ ॥ १२ ॥ १३ ॥

विप्राणांचैवभोजनैरेतैःसर्वैर्व्रतंसंपूर्णंभवतीत्यर्थः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ इयंविधवाव्रतंनक्तवतीत्यनुमाऽनुमितिःकर्तव्येत्यर्थः ॥ यतइयंविधवाजातातइतिभा
वः॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ सर्वार्थानांसमाप्तिःसमवाप्तिःप्राप्तिस्तयानंदिताइत्यर्थः ॥ २४ ॥ स्वाहेति ॥ स्वाहास्वधानामरूपोयोमनुस्तत्प्रभावैर्मुदाहर्षेणहरांतिवदंति ॥ यन्नाम
युग्मंस्वाहास्वधेत्येवंरूपंश्रुतिभिर्वेदमंत्रांतिइत्यर्थः ॥ यतस्तृप्यंतिततोयज्ञेषुश्राद्धेषुचवेदमंत्रांतेस्वाहास्वधेतिप्रयुंजतइत्यर्थः ॥ २५ ॥ व्यासोजनान्छोचति । यस्येच्छयेति ॥ २६ ॥
नैकोऽस्तीति ॥ तयाशक्त्याविहीनःसन्यथेच्छंस्पंदितुंशक्तियुतःसामर्थ्ययुतोभवतिएतादृशोनैकोप्यस्तीत्यर्थः ॥ २७ ॥ अर्थचतुष्टयंधर्मार्थकाममोक्षरूपंवांछन्नित्यर्थः ॥ २८ ॥ मुच्यत

पूजाभिश्चैवहोमैश्चकुमारीपूजनैस्तथा ॥ संपूर्णंतद्व्रतंप्रोक्तंविप्राणांचैवभोजनैः ॥ १४ ॥ व्रतानियानिचान्यानिदानानिविविधानिच ॥ नव
रात्रव्रतस्यास्यनैवतुल्यानिभूतले ॥ १५ ॥ धनधान्यप्रदंनित्यंसुखसंतानवृद्धिदम् ॥ आयुरारोग्यदंचैवस्वर्गदंमोक्षदंतथा ॥ १६ ॥ विद्यार्थी
वाधनार्थीवापुत्रार्थीवाभवेन्नरः ॥ तेनेदंविधिवत्कार्यंव्रतंसौभाग्यदंशिवम् ॥ १७ ॥ विद्यार्थीसर्वविद्यांवैप्राप्नोतिव्रतसाधनात् ॥ राज्यभ्रष्टो
नृपोराज्यंसमवाप्नोतिसर्वथा ॥ १८ ॥ पूर्वजन्मनियैर्नूनंनक्तंव्रतमुत्तमम् ॥ तेव्याधिनोदरिद्राश्चभवंतिपुत्रवर्जिताः ॥ १९ ॥ वंध्याचयाभवे
न्नारीविधवाधनवर्जिता ॥ अनुमातत्रकर्तव्यानेयंक्तवतीव्रतम् ॥ २० ॥ नवरात्रव्रतंप्रोक्तंनक्तंयेनभूतले ॥ सकथंविभवंप्राप्यमोदतेचतथा
दिवि ॥ २१ ॥ रक्तचंदनसंमिश्रैःकोमलैर्बिल्वपत्रकैः ॥ भवानीपूजितायेनसभवेन्नृपतिःक्षितौ ॥ २२ ॥ नाराधितायेनशिवासनातनीदुःखा
र्तिहासिद्धिकरीजगद्धरा ॥ दुःखावृतःशत्रुयुतश्चभूतलेनूनंदरिद्रोभवतीहमानवः ॥ २३ ॥ यांविष्णुरिंद्रोहरपद्मजौतथावह्निःकुबेरोवरुणोदिवा
करः ॥ ध्यायंतिसर्वार्थसमाप्तिनंदितास्तांकिंमनुष्यानभजंतिचंडिकाम् ॥ २४ ॥ स्वाहास्वधानाममनुप्रभावैस्तृप्यंतिदेवाःपितरस्तथैव ॥
यज्ञेषुसर्वेषुमुदाहरंतियन्नामयुग्मश्रुतिभिर्मुनींद्राः ॥ २५ ॥ यस्येच्छयासृजतिविश्वमिदंप्रजेशोनानावतारकलनंकुरुतेहरिश्च ॥ नूनंकरोतिज
गतःकिलभस्मशंभुस्तांशर्मदांनभजतेनुकथंमनुष्यः ॥ २६ ॥ नैकोऽस्तिसर्वभवनेषुतयाविहीनोदेवोनरोऽथविहगःकिलपन्नगोवा ॥ गंधर्वरा
क्षसपिशाचनगेषुनूनंयःस्पंदितुंभवतिशक्तियुतोयथेच्छम् ॥ २७ ॥ तांनसेवेतकश्चंडींसर्वकामार्थदांशिवाम् ॥ व्रतंतस्यानकःकुर्याद्वांछन्नर्थचतु
ष्टयम्॥२८॥ महापातकसंयुक्तोनवरात्रव्रतंचरेत् ॥ मुच्यतेसर्वपापेभ्योनात्रकार्याविचारणा॥२९॥ पुराकश्चिद्वणिक्छीनोधनहीनःसुदुःखितः॥
कुटुंबीचाभवत्कश्चित्कोसलेनृपसत्तम॥३०॥ अपत्यानिबहून्यस्याभवन्क्षुत्पीडितानिच ॥ भक्ष्यंकिंचित्तुसायाह्नेप्रापुस्तस्यचबालकाः॥३१॥

इति ॥ तदुक्तमुमासंहितायाम् ॥ प्रायश्चित्तंनपापानांयेषांतेषांतुनाशने ॥ प्रायश्चित्तमिदंप्रोक्तंजगदंबापदस्मृतिः ॥ स्मरणेनैवदुर्गायानिमिषार्धेनयत्फलम्॥ नतद्वक्तुंसमर्थोऽस्तिशिवोव
र्षशतैरपि ॥ विष्णुनामसहस्रेभ्यःशिवनामविशिष्यते ॥ शिवनामसहस्रेभ्योदेवीनामविशिष्यते ॥ ससाधकोमहाज्ञानीयश्चदुर्गापदानुगः ॥ नचमुक्तिर्नवामुक्तिर्नगतिर्नगनंदिनि ॥ विना
दुर्गांजगद्धात्रींनिष्फलंजीवनंभवेदिति । चरमेजन्मनिपरंश्रीदेवीभक्तिमान्भवेदिति ॥ २९ ॥ शीनोदुःखी ॥ ३० ॥ सायाह्नेकिंचित्प्रापुर्नोदरपरिमितमित्यर्थः ॥ ३१ ॥

भुंक्तेस्मेति ॥ बुभुक्षितःपरस्यकार्यकर्ताऽसावपिसायाह्नेएवभुंक्तेस्मेत्यन्वयः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ मयाविसर्जितोयतोरुदन्बालोगेहाद्गतोऽतइत्यन्वयः॥

भुंक्तेस्मकार्यकर्ताऽसौपरस्याथबुभुक्षितः ॥ कुटुंबभरणंतत्रचकारातिनिराकुलः ॥ ३२ ॥ सदाधर्मरतःशांतःसदाचारश्चसत्यवाक् ॥ अक्रोधनश्चधृतिमान्निर्मदश्चानसूयकः ॥ ३३ ॥ संपूज्यदेवतानित्यंपितृनप्यतिथींस्तथा ॥ भुंजानेपोष्यवर्गेऽथकृतवान्भोजनंवणिक् ॥३४॥ एवंगच्छतिकालेवैसुशीलोनामतोगुणैः ॥ दारिद्र्यार्तोद्विजंशांतंपप्रच्छातिबुभुक्षितः॥३५॥सुशीलउवाच॥भोभूदेवकृपांकृत्वावदस्वाद्यमहामते॥कथंदारिद्र्यनाशःस्यादितिमेनिश्चयेनवै ॥३६॥ धनेषणामेनैवास्तिधनीस्यामितिमानद ॥ कुटुंबभरणार्थंवैपृच्छामित्वांद्विजोत्तम ॥ ३७ ॥ पुत्रीसुतस्तुमेबालोभक्षार्थीरोदतेभृशम् ॥ तावन्मात्रंगृहेनान्नंमुष्टिमेकांददाम्यहम् ॥३८॥ विसर्जितोयतोगेहाद्गतोबालोरुदन्मया ॥ अतोमेदह्यतेऽत्यर्थंकिंकरोमिधनंविना ॥ ३९ ॥ विवाहोऽस्तिसुतायामेनास्तिवित्तंकरोमिकिम् ॥ दशवर्षाधिकायास्तुदानकालोऽपियात्यलम् ॥ ४० ॥ तेनशोचामिविप्रेंद्रसर्वज्ञोऽसिदयानिधे ॥ तपोदानंव्रतंकिंचिद्ब्रूहिमंत्रजपंतथा ॥ ४१ ॥ येनाहंपोष्यवर्गस्यकरोमिद्विजपोषणम् ॥ तावन्मेस्याद्धनप्राप्तिर्नाधिकंप्रार्थयेकिल ॥४२॥ त्वत्प्रसादात्कुटुंबंमेसुखितंप्रभवेदिह ॥ तत्कुरुष्वमहाभागज्ञानेनपरिचिंत्यच ॥४३॥ व्यासउवाच॥ इतिपृष्टस्तथातेनब्राह्मणःसंशितव्रतः ॥ उवाचपरमप्रीतस्तंवैश्यंनृपसत्तम ॥ ४४ ॥ वैश्यवर्यकुरुष्वाद्यनवरात्रव्रतंशुभम् ॥ पूजनंभगवत्याश्चहवनंभोजनंतथा ॥ ४५ ॥ वेदपारायणंशक्तिजपहोमादिकंतथा ॥ कुरुष्वाद्ययथाशक्तितवकार्यंभविष्यति ॥ ४६ ॥ एतस्मादपरंकिंचिद्व्रतंनास्तिधरातले ॥ नवरात्राभिधंवैश्यपावनंसुखदंतथा ॥ ४७ ॥ ज्ञानदंमोक्षदंचैवसुखसंतानवर्धनम् ॥ शत्रुनाशकरंकामंनवरात्रव्रतंसदा ॥४८॥ राज्यभ्रष्टेनरामेणसीताविरहितेनच ॥ किष्किंधायांव्रतंचैतत्कृतंदुःखातुरेणवै ॥ ४९ ॥ प्रतप्तेनापिरामेणसीताविरहवह्निना ॥ विधिवत्पूजितादेवीनवरात्रव्रतेनवै ॥ ५० ॥ तेनप्राप्ताऽथवैदेहीकृत्वासेतुंमहार्णवे ॥ हत्वामंदोदरीनाथंकुंभकर्णंमहाबलम् ॥५१॥ मेघनादंसुतंहत्वाकृत्वाभूपंविभीषणम् ॥ पश्चादयोध्यामागत्यप्राप्तंराज्यमकंटकम् ॥ ५२ ॥ नवरात्रव्रतस्यास्यप्रभावेणविशांवर ॥ सुखंभूमितलेप्राप्तंरामेणामिततेजसा ॥५३॥ व्यासउवाच ॥ इतिविप्रवचःश्रुत्वासवैश्यस्तंद्विजंगुरुम् ॥ कृत्वाजग्राहसन्मंत्रंमायाबीजाभिधंनृप ॥५४॥ जजापपरयाभक्त्यानवरात्रमतंद्रितः॥नानाविधोपहारैश्चपूजयामाससादरम्॥५५॥ नवसंवत्सरंचैवमायाबीजपरायणः॥नवमेवत्सरांतेतुमहाष्टम्यांमहेश्वरी ॥५६॥ अर्धरात्रेतुसंजातेप्रत्यक्षंदर्शनंददौ ॥ नानावरप्रदानैश्चकृतकृत्यंचकारतम् ॥ ५७ ॥ इतिश्रीदे० म० तृतीयस्कंधेसप्तविंशोऽध्यायः ॥ २७ ॥

॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ मायाबीजाभिधंभुवनेश्वरीमंत्रमित्यर्थः ॥ ५४ ॥ ५५ ॥ ५६ ॥ ॥५७ ॥ इतिश्रीदेवीभागवततिलकेतृतीयस्कंधेसप्तविंशोऽध्यायः ॥ २७ ॥

एकोनसप्ततिश्लोकैर्नवरात्रप्रसंगतः ॥ रामायणकथाराज्ञापृष्टाव्यासेनचोच्यते ॥ १ ॥ पूर्वाध्यायेराज्यभ्रष्टेनरामेणनवरात्रव्रतंकृतंतेनतत्कल्याणंजातमितिवर्णितंतत्प्रश्नबीजमुपलभ्यरा
जापृच्छतिकथंरामेणतच्चीर्णमिति ॥ १ ॥ सूर्यवंशेवरउत्कृष्टः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ कौशिकेनविश्वामित्रेण ॥ रघुनंदनोदशरथः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ मारीचसुबाहूदैत्यौ

जनमेजयउवाच ॥ कथंरामेणतच्चीर्णंव्रतंदेव्याःसुखप्रदम् ॥ राज्यभ्रष्टःकथंसोऽथकथंसीताहृतापुनः ॥१॥ व्यासउवाच ॥ राजादशरथःश्रीमान
योध्याधिपतिःपुरा ॥ सूर्यवंशवरश्चासीद्देवब्राह्मणपूजकः ॥२॥ चत्वारोजज्ञिरेतस्यपुत्रालोकेषुविश्रुताः ॥ रामलक्ष्मणशत्रुघ्नाभरतश्चेतिनामतः
॥३॥ राज्ञःप्रियकराःसर्वेसदृशागुणरूपतः ॥ कौसल्यायाःसुतोरामःकैकेय्याभरतःस्मृतः ॥४॥ सुमित्रातनयौजातौयमलौद्वौमनोहरौ ॥ तेजा
तावैकिशोराश्चधनुर्बाणधराःकिल ॥५॥ सूनवःकृतसंस्काराभूपतेःसुखवर्धकाः॥कौशिकेनतदाऽऽगत्यप्रार्थितोरघुनंदनः ॥६॥ राघवंमखरक्षा
र्थंसूनुंषोडशवार्षिकम् ॥ तस्मैसोऽयंददौरामंकौशिकायसलक्ष्मणम् ॥७॥ तौसमेत्यमुनिंमार्गेजग्मतुश्चारुदर्शनौ ॥ ताटकानिहतामार्गेराक्षसी
घोरदर्शना ॥८॥रामेणैकेनबाणेनमुनीनांदुःखदासदा ॥यज्ञरक्षाकृतातत्रसुबाहुर्निहतःशठः ॥ ९ ॥ मारीचोऽथमृतप्रायोनिक्षिप्तोबाणवेगतः॥
एवंकृत्वामहत्कर्मयज्ञस्यपरिरक्षणम्॥ १० ॥गतास्तेमिथिलांसर्वेरामलक्ष्मणकौशिकाः ॥ अहल्यामोचिताशापान्निष्पापासाकृताऽबला॥ ११॥
विदेहनगरेतौतुजग्मतुर्मुनिनासह ॥ बभंजशिवचापंचजनकेनपणीकृतम् ॥१२॥उपयेमेततःसीतांजानकींचरमांशजाम् ॥ लक्ष्मणायददौराजा
पुत्रीमेकांतथोर्मिलाम् ॥१३॥ कुशध्वजसुतेकन्येप्रापतुर्भ्रातरावुभौ ॥ तथाभरतशत्रुघ्नौसुशीलौशुभलक्षणौ ॥ १४॥ एवंदारक्रियास्तेषांभ्रातॄणां
चाभवन्नृप॥चतुर्णांमिथिलायांतुयथाविधिविधानतः॥ १५॥राज्ययोग्यंसुतंदृष्ट्वाराजादशरथस्तदा॥राघवायधुरंदातुंमनश्चक्रेनिजायवै ॥१६॥
संभारंविहितंदृष्ट्वाकैकेयीपूर्वकल्पितौ ॥ वरौसंप्रार्थयामासभर्तारंवशवर्तिनम् ॥१७॥ राज्यंसुतायचैकेनभरतायमहात्मने ॥ रामायवनवासंच
चतुर्दशसमास्तथा ॥१८॥ रामस्तुवचनात्तस्याःसीतालक्ष्मणसंयुतः ॥ जगामदंडकारण्यंराक्षसैरुपसेवितम् ॥१९॥ राजादशरथःपुत्रविरहेण
प्रपीडितः॥जहौप्राणानमेयात्मापूर्वशापमनुस्मरन् ॥ २०॥ भरतःपितरंदृष्ट्वामृतंमातृकृतेनवै ॥ राज्यमृद्धंनजग्राहभ्रातुःप्रियचिकीर्षया ॥२१॥
पंचवट्यांवसन्रामोरावणावरजांवने ॥ शूर्पणखांविरूपांवैचकारातिस्मरातुराम् ॥२२॥ खरादयस्तुतांदृष्ट्वाछिन्ननासांनिशाचराः ॥ चक्रुःसंग्रा
ममतुलंरामेणामिततेजसा ॥२३॥ सजघानखरादींश्चदैत्यानतिबलान्वितान्॥मुनीनांहितमन्विच्छन्रामःसत्यपराक्रमः ॥ २४ ॥ गत्वाशूर्पण
खालंकांखरदूषणघातनम् ॥ दूषिताकथयामासरावणायचराघवात् ॥२५ ॥

॥ १० ॥ ११ ॥ १२ ॥ उपयेमेविवाहंकृतवान्स्वीकृतवानितिवा ॥ १३ ॥ कुशध्वजोजनकबंधुः॥ १४ ॥ १५ ॥ धुरंराज्यभारम् ॥ १६ ॥ १७ ॥ एकेनवरेणभरतायराज्यंद्वितीये
नवरेणार्थाद्रामायवनवासंवव्रेइत्यर्थः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

॥ २६ ॥ कृत्वेति ॥ सीताप्रलोभनप्रयोजनायतंहेममृगंकृत्वासीतांनेतुमित्यन्वयः ॥ रामंदूरदेशंनेतुमितिवा ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ सारंगोमृगरूपःपशुः ॥ ३१ ॥ ३२ ॥ समारीचोमृगरूपस्तेनरामेणनिहतोऽतिबलाच्चुक्रोश ॥ ३३ ॥ ३४ ॥ ३५ ॥ रामबधादपीति ॥ रामवधेजातेऽपित्वामसहायामाश्रमेमुक्त्वाऽहंनगच्छे ॥ आत्मनेपदमार्षम् ॥ किंपुनःरामेजीवतिसतीत्यर्थः ॥ ३६ ॥ ३७ ॥ हृतंवैइति ॥ यदावधेजातेपिनगमिष्यामितदाहृतमेवदूरदेशंप्रतिमायाविनेतिज्ञात्वाकथंगमिष्यामीतिभावः ॥ यद्वाराघवसदृशंपराक्र

सोपिश्रुत्वाविनाशंतंजातःक्रोधवशःखलः ॥ जगामरथमारुह्यमारीचस्याऽऽश्रमंतदा ॥२६॥ कृत्वाहेममृगंनेतुंप्रेषयामासरावणः॥ सीताप्रलोभनार्थायमायाविनमसंभवम् ॥२७॥ सोऽथहेममृगोभूत्वासीतादृष्टिपथंगतः ॥ मायावीचातिचित्रांगश्चरन्प्रबलमंतिके॥२८ ॥तंदृष्ट्वाजानकीप्राहराघवंदैवनोदिता ॥ चर्मानयस्वकान्तेतिस्वाधीनपतिकायथा ॥२९॥ अविचार्याथरामोऽपितत्रसंस्थाप्यलक्ष्मणम्॥ सशरंधनुरादायययौमृगपदानुगः ॥३०॥ सारंगोऽपिहरिंदृष्ट्वामायाकोटिविशारदः ॥ दृश्यादृश्योबभूवाथजगामचवनांतरम् ॥३१ ॥ मत्वाहस्तगतंरामःक्रोधाकृष्टधनुःपुनः ॥ जघानचातितीक्ष्णेनशरेणकृत्रिमंमृगम् ॥ ३२ ॥ सहतोतिबलात्तेनचुक्रोशभृशदुःखितः ॥ हालक्ष्मणहतोऽस्मीतिमायावीनश्वरःखलः ॥३३॥ सशब्दस्तुमुलस्तावज्जानक्यासंश्रुतस्तदा ॥ राघवस्येतिसामत्वादीनादेवरमब्रवीत् ॥ ३४ ॥ गच्छलक्ष्मणतूर्णंत्वंहतोऽसौरघुनंदनः ॥ त्वामाह्वयतिसौमित्रेसाहाय्यंकुरुसत्वरम् ॥३५ ॥ तत्राऽऽहलक्ष्मणःसीतामंबरामवधादपि ॥ नाहंगच्छेऽद्यमुक्त्वात्वामसहायामिहाश्रमे ॥३६॥ आज्ञामेराघवस्यात्रतिष्ठेतिजनकात्मजे ॥ तदतिक्रमभीतोऽहंनत्यजामितवांतिकम् ॥३७॥ हृतंवैराघवंदृष्ट्वावनेमायाविनाकिलः॥त्यक्त्वात्वांनाधिगच्छामिपदमेकंशुचिस्मिते ॥३८॥ कुरुधैर्यंनमन्येऽद्यरामंहंतुंक्षमंक्षितौ ॥ नाहंत्यक्त्वागमिष्यामिविलंघ्यरामभाषितम् ॥ ३९ ॥ व्यासउवाच ॥ रुदतीसुदतीप्राहतंतदाविधिनोदिता ॥ अक्रूरावचनंक्रूरंलक्ष्मणंशुभलक्षणम् ॥ ४० ॥ अहंजानामिसौमित्रेसानुरागंचमांप्रति॥ प्रेरितंभरतेनैवमदर्थमिहसंगतम् ॥४१॥नाहंतथाविधानारीस्वैरिणीकुहकाधम ॥ मृतेरामेपतिंत्वांनकर्तुमिच्छामिकामतः ॥ ४२ ॥ नागमिष्यतिचेद्रामोजीवितंसंत्यजाम्यहम् ॥ विनातेननजीवामिविधुरादुःखिताभृशम् ॥ ४३ ॥ गच्छवातिष्ठसौमित्रेनजानेऽहंतवेप्सितम् ॥ क्वगतंतेऽत्रसौहार्दंज्येष्ठेधर्मरतेकिल ॥ ४४ ॥ तच्छ्रुत्वावचनंतस्यालक्ष्मणोदीनमानसः ॥ प्रोवाचरुद्धकंठस्तुतांतदाजनकात्मजाम् ॥ ४५ ॥ किमात्थक्षितिजेवाक्यंमयिक्रूरतरंकिल ॥ किंवदस्यत्यनिष्टंतेभाविजानेधियाह्यहम् ॥ ४६ ॥

मिणंमायाविनाकेनचिद्दैत्येनदृष्ट्वोपद्रवयुक्तेतादृशेदेशेत्वांत्यक्त्वापदमेकमपिनाधिगच्छामिनगमिष्यामीत्यर्थः ॥३८ ॥ रामंहंतुंक्षितौक्षमःसमर्थस्तंनमन्येनैवतादृशोस्तीत्यर्थः ॥ ३९ ॥ ॥४०॥ मदर्थंमत्प्राप्त्यर्थम् ॥४१॥ हेकुहकहेअधम ॥ स्वैरिणीकुलटा ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ किंवदसीति ॥ एतादृशवदनेनतेऽत्यनिष्टंभाविभवतीत्यहंधियाजानेजानामि ॥४६॥

अग्रजस्यरामस्यचिह्नांकितौपादौभूम्यांपश्यंस्तेनमार्गेणययावित्यर्थः ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ सौधार्हासौधयुक्तमहागृहेवस्तुमर्हा ॥ ५२ ॥ दिव्यंदिष्टेचेति ॥ मन्दा
दर्याःपतिंरावणंदिष्टचाप्रारब्धवशेनयतिंदिव्यंज्ञात्वा ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ रुद्रचापभ

इत्युक्त्वानिर्ययौवीरस्तांत्यक्त्वाप्ररुदन्भृशम् ॥ अग्रजस्यययौपश्यञ्छोकार्तःपृथिवीपते ॥४७॥ गतेऽथलक्ष्मणेतत्ररावणःकपटाकृतिः ॥भिक्षु
वेषंततःकृत्वाप्रविवेशतदाश्रमे ॥४८॥ जानकीतंयतिंमत्वादत्त्वार्घंवन्यमादरात ॥ भैक्ष्यंसमर्पयामासरावणायदुरात्मने ॥४९॥तांपप्रच्छसदु
ष्टात्मानम्रपूर्वंमृदुस्वरम् ॥ काऽसिपद्मपलाशाक्षिवनेचैकाकिनीप्रिये ॥५०॥ पिताकस्तेऽथवामोरुभ्राताकःकःपतिस्तव ॥ मूढेवैकाकिनीचात्र
स्थिताऽसिवरवर्णिनि॥५१॥निर्जनेविपिनेकिंत्वंसौधार्हात्वमसिप्रिये ॥ उटजेमुनिपत्नीवद्देवकन्यासमप्रभा ॥५२॥ व्यासउवाच॥इतितद्वचनं
श्रुत्वाप्रत्युवाचविदेहजा ॥ दिव्यंदिष्ट्यायतिंज्ञात्वामंदोदर्याःपतिंतदा॥५३॥राजादशरथःश्रीमांश्चत्वारस्तस्यवैसुताः ॥ तेषांज्येष्ठःमतिमेंऽस्ति
रामनामेतिविश्रुतः ॥५४॥ विवासितोऽथकैकेय्याकृतेभूपतिनावरे ॥ चतुर्दशसमारामोवसतेऽत्रसलक्ष्मणः ॥५५॥ जनकस्यसुताचाहंसीता
नाम्नीतिविश्रुता ॥ भंक्त्वाशैवंधनुःकामंरामेणाहंविवाहिता ॥५६॥रामबाहुबलेनात्रवसामोनिर्भयावने॥ कांचनंमृगमालोक्यहंतुंमेनिर्गतःपतिः
॥५७॥ लक्ष्मणोऽपिपुनःश्रुत्वारवंभ्रातुर्गतोऽधुना ॥ तयोर्बाहुबलादत्रनिर्भयाऽहंवसामिवै ॥५८॥मयेदंकथितंसर्वंवृत्तांतंवनवासके ॥ तेऽत्राग
त्यार्हणांतेवैकरिष्यंतियथाविधि ॥ ५९ ॥ यतिर्विष्णुस्वरूपोऽसितस्मात्त्वंपूजितोमया ॥ आश्रमोविपिनेघोरेकृतोऽस्तिरक्षसांकुले ॥ ६० ॥
तस्मात्त्वांपरिपृच्छामिसत्यंब्रूहिममाग्रतः ॥ कोऽसित्रिदंडिरूपेणविपिनेत्वंसमागतः ॥६१॥ रावणउवाच ॥ लंकेशोऽहंमरालाक्षिश्रीमान्मंदोद
रीपतिः ॥ त्वत्कृतेतुकृतंरूपंमयेत्थंशोभनाकृते ॥६२॥ आगतोऽहंवरारोहेभगिन्याप्रेरितोऽत्रवै ॥ जनस्थानेहतौश्रुत्वाभ्रातरौखरदूषणौ॥६३॥
अंगीकुरुनृपंमांत्वंत्यक्त्वातंमानुषंपतिम् ॥ हृतराज्यंगतश्रीकंनिर्बलंवनवासिनम् ॥६४॥ पट्टराज्ञीभवत्वंमेमंदोदर्युपरिस्फुटम् ॥ दासोऽस्मित
वतन्वंगिस्वामिनीभवभामिनि ॥ ६५ ॥ जेताऽहंलोकपालानांपतामितवपादयोः ॥ करंगृहाणमेद्यत्वंसनाथंकुरुजानकि ॥ ६६ ॥ पितातेया
चितःपूर्वंमयावैत्वत्कृतेऽबले ॥ जनकोमामुवाचेत्थंपणबंधोमयाकृतः ॥ ६७ ॥ रुद्रचापभयान्नाहंसंप्राप्तस्तुस्वयंवरे ॥ मनोमेसंस्थितंतावन्नि
मग्नंविरहातुरम् ॥ ६८ ॥ वनेऽत्रसंस्थितांश्रुत्वापूर्वानुरागमोहितः ॥ आगतोऽस्म्यसितापांगिसफलंकुरुमेश्रमम् ॥ ६९ ॥ इतिश्रीदेवीभागव
तेमहापुराणेतृतीयस्कंधेअष्टाविंशोऽध्यायः ॥ २८ ॥

यादिति ॥ ममाऽऽराध्योयोरुद्रस्तस्यचापभंगेमयाकृतेतस्यावमानोभविष्यतीतिहेतोर्मयास्वयंवरेनागतंनपुनर्ममबलंनास्तीतिभावः ॥ ६८ ॥ ६९ ॥ इतिश्रीदेवीभागवततिलकेतृतीय
स्कन्धेऽष्टाविंशतितमोऽध्यायः ॥ २८ ॥

पञ्चाधिकैश्चपंचाशत्पद्यैःसीताहृतेःपरम् ॥ रामःशोकंचकारेतिभण्यतेविस्तरादिह ॥ १ ॥ रावणवाक्यश्रवणोत्तरंयज्जातंतदाह । तदाकर्ण्येति ॥ १ ॥ २ ॥ ३ ॥ वह्निसन्निधावग्निहो त्रसंबंधिगार्हपत्यसंनिधौ ॥ लोकान्दुःखादिनारावयतिसलोकरावणः ॥ ४ ॥ निजंराक्षसरूपम् ॥ ५ ॥ ६ ॥ ७ ॥ तंजटायुषंहत्वातांजानकींचगृहीत्वागतइत्यन्वयः ॥ लंकायामित्य

व्यासउवाच॥तदाकर्ण्यवचोदुष्टंजानकीभयविह्वला॥वेपमानास्थिरंकृत्वामनोवाचमुवाचह॥१॥पौलस्त्यकिमसद्वाक्यंत्वमात्थस्मरमोहितः॥ नाहंवैस्वैरिणीकिंतुजनकस्यकुलोद्भवा ॥२॥ गच्छलंकांदशास्यत्वंरामस्त्वांवैहनिष्यति॥मत्कृतेमरणंतत्रभविष्यतिनसंशयः ॥३॥ इत्युक्त्वा पर्णशालायांगतासावह्निसन्निधौ ॥ गच्छगच्छेतिवदतीरावणंलोकरावणम् ॥ ४ ॥ सोऽथकृत्वानिजंरूपंजगामोटजमंतिकम् ॥ बलाज्जग्राहतां बालांरुदतींभयविह्वलाम् ॥५॥ रामरामेतिक्रंदंतींलक्ष्मणेतिमुहुर्मुहुः ॥ गृहीत्वानिर्गतःपापोरथमारोप्यसत्वरः ॥ ६ ॥ गच्छन्नरुणपुत्रेणमार्गेरु द्धोजटायुषा ॥ संग्रामोऽभून्महारौद्रस्तयोस्तत्रवनांतरे ॥७ ॥ हत्वातंतांगृहीत्वाचगतोऽसौराक्षसाधिपः ॥ लंकायांक्रंदतीतातकुररीवदुरात्म ना ॥८॥अशोकवनिकायांसास्थापिताराक्षसीयुता ॥ स्ववृत्तान्नैवचलितासामदानादिभिःकिल ॥ ९ ॥ रामोऽपितंमृगंहत्वाजगामाऽऽदायनि वृतः ॥ आयांतंलक्ष्मणंवीक्ष्यकिंकृतंतेऽनुजासमम् ॥ १० ॥ एकाकिनींप्रियांहित्वाकिमर्थंत्वमिहागतः ॥ श्रुत्वास्वनंतुपापस्यराघवस्त्वब्रवी दिदम् ॥११॥ सौमित्रिस्त्वब्रवीद्वाक्यंसीतावाग्बाणताडितः ॥ प्रभोऽत्राहंसमायातःकालयोगान्नसंशयः ॥१२॥ तदातौपर्णशालायांगत्वावी क्ष्यातिदुःखितौ ॥ जानक्यन्वेषणेयत्नमुभौकर्तुंसमुद्यतौ ॥१३॥ मार्गमाणौतुसंप्राप्तौयत्रासौपतितःखगः ॥ जटायुःप्राणशेषस्तुपतितःपृथिवी तले ॥१४॥तेनोक्तंरावणेनाद्यहृताऽसौजनकात्मजा ॥ मयानिरुद्धःपापात्मापातितोऽहंमृधेपुनः ॥१५॥ इत्युक्त्वाऽसौगतप्राणःसंस्कृतोराघवे णवै ॥ कृत्वौर्ध्वदैहिकंरामलक्ष्मणौनिर्गतौततः ॥ १६ ॥ कबंधंघातयित्वासौशापाच्चामोचयत्प्रभुः ॥ वचनात्तस्यहरिणासख्यंचक्रेऽथराघवः ॥१७॥ हत्वाचवालिनंवीरंकिष्किंधाराज्यमुत्तमम् ॥ सुग्रीवायददौरामःकृतसख्यायकार्यतः ॥१८ ॥ तत्रैववार्षिकान्मासांस्तस्थौलक्ष्मणसं युतः॥चिंतयञ्जानकींचित्तेदशाननहृतांप्रियाम्॥१९॥लक्ष्मणंप्राहरामस्तुसीताविरहपीडितः ॥ सौमित्रेकैकयसुताजातापूर्णमनोरथा ॥ २० ॥ नप्राप्ताजानकीनूनंनाहंजीवामितांविना॥नागमिष्याम्ययोध्यायामृतेजनकनंदिनीम्॥२१॥गतंराज्यंवनेवासोमृतस्तातोहृताप्रिया ॥पीडयन्मां सदुष्टात्मादैवाग्रेकिंकरिष्यति ॥ २२ ॥ दुर्ज्ञेयंभवितव्यंहिप्राणिनांभरतानुज ॥ आवयोःकागतिस्तातभविष्यतिसुदुःखदा ॥ २३ ॥

स्योत्तरेणान्वयः ॥ दुरात्मनालंकायामशोकवनिकायांकुररीवक्रंदतीस्थापितेत्यर्थः ॥ ८ ॥ ९ ॥ हेअनुजलक्ष्मणासमंविषमम् ॥ १० ॥ श्रुत्वेति ॥ पापस्यदुष्टस्यमारीचस्यस्वनंश्रुत्वा प्रिया मेकाकिनींहित्वाकिमर्थंत्वमिहागतइतीदंराघवोऽब्रवीत् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ पातितस्तेनेतिशेषः ॥ १५ ॥ १६ ॥ तस्यकबन्धस्य ॥ हरिणावानरेणसुग्रीवेण ॥१७॥ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ कथंदुःखंभविष्यतीत्यनुभविष्यतीत्यर्थः ॥ तन्नवेद्म्यहमितिशेषः ॥ ३१ ॥ ३२ ॥ नियंतृत्वेरावणेननियंतृत्वेस्वीकृतेसतीत्यर्थः

प्राप्यजन्ममनोर्वंशेराजपुत्रावुभौकिल ॥ वनेऽतिदुःखभोक्तारौजातौपूर्वकृतेनच॥२४॥त्यक्त्वात्वमपिभोगांस्तुमयासहविनिर्गतः॥ दैवयोगाच्च
सौमित्रेभुंक्ष्वदुःखंदुरत्ययम्॥२५॥नकोप्यस्मत्कुलेपूर्वंमत्समोदुःखभाङ्नरः॥अकिंचनोऽक्षमःक्लिष्टोनभूतोनभविष्यति॥२६॥किंकरोम्यद्यसौ
मित्रेमग्नोऽस्मिदुःखसागरे॥नचास्तितरणोपायोह्यसहायस्यमेकिल॥२७॥नवित्तंनबलंवीरत्वमेकःसहचारकः ॥ कोपंकस्मिन्करोम्यद्यभोगेऽ
स्मिन्स्वकृतेनुज॥२८॥गतंहस्तगतंराज्यंक्षणादिंद्रसभोपमम्॥वनेवासस्तुसंप्राप्तः कोवेदविधिनिर्मितम्॥२९॥बालभावाच्चवैदेहीचलिताचाव
योःसह॥नीतादैवेनदुष्टेनश्यामादुःखतरांदशाम् ॥ ३० ॥ लंकेशस्यगृहेश्यामाकथंदुःखंभविष्यति ॥ पतिव्रतासुशीलाचमयिप्रीतियुताभृशम्
॥३१॥नचलक्ष्मणवैदेहीसातस्यवशगाभवेत्॥स्वैरिणीववरारोहाकथंस्याज्जनकात्मजा॥३२॥त्यजेत्प्राणान्नियंतृत्वेमैथिलीभरतानुज ॥ नराव
णस्यवशगाभवेदितिसुनिश्चितम्॥३३॥मृताचेज्जानकीवीरप्राणांस्त्यक्ष्याम्यसंशयम्॥मृताचेदसितापांगीकिंमेदेहेनलक्ष्मण ॥३४॥ एवंविलप
मानंतंरामंकमललोचनम् ॥ लक्ष्मणःप्राहधर्मात्मासांत्वयन्नृतयागिरा ॥३५॥ धैर्यंकुरुमहाबाहोत्यक्त्वाकातरतामिह॥आनयिष्यामिवैदेहींह
त्वातंराक्षसाधमम्॥३६॥आपदिसंपदितुल्याधैर्याद्भवंतितेधीराः॥अल्पधियस्तुनिमग्नाःकष्टेभवंतिविभवेऽपि ॥३७॥ संयोगोविप्रयोगश्चदैवा
धीनावुभावपि॥शोकस्तुकीदृशस्तत्रदेहेनाऽऽत्मनिचक्वचित्॥३८॥राज्याद्यथावनेवासोवैदेह्याहरणंयथा ॥तथाकालेसमीचीनेसंयोगोऽपिभवि
ष्यति॥३९॥प्राप्तव्यंसुखदुःखानांभोगान्निर्वर्तनंक्वचित् ॥ नान्यथाजानकीजानेतस्माच्छोकंत्यजाधुना॥४०॥वानराःसंतिभूयांसोगमिष्यंति
चतुर्दिशम्॥शुद्धिंजनकनंदिन्याआनयिष्यंतितेकिल ॥४१॥ ज्ञात्वामार्गस्थितिंतत्रगत्वाकृत्वापराक्रमम्॥ हत्वातंपापकर्माणमानयिष्यामिमै
थिलीम्॥४२॥ससैन्यंभरतंवाऽपिसमाहूयसहानुजम् ॥ हनिष्यामोवयंशत्रुंकिंशोचसिवृथाग्रज ॥४३॥ रघुणैकरथेनैवजिताःसर्वादिशःपुरा ॥
तद्वंशजःकथंशोकंकर्तुमर्हसिराघव॥४४॥एकोऽहंसकलाञ्जेतुंसमर्थोऽस्मिसुरासुरान्॥किंपुनःससहायोवैरावणंकुलपांसनम् ॥४५॥ जनकंवास
मानीयसाहाय्येरघुनंदन॥हनिष्यामिदुराचाररावणंसुरकंटकम्॥४६॥सुखस्याऽनंतरंदुःखंदुःखस्याऽनंतरंसुखम् ॥ चक्रनेमिरिवैकंतन्नभवेद्रघुनं
दन ॥ ४७ ॥ मनोऽतिकातरंयस्यसुखदुःखसमुद्भवे॥सशोकसागरेमग्नोनसुखीस्यात्कदाचन ॥ ४८ ॥

नियंतृत्वंस्वीकृत्ययदिबलात्कारंकुर्यादितितात्पर्यम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ आपदिसंपदीति ॥ आपदिसत्यांसंपदिसत्यामित्यर्थः ॥ तुल्याःसमचित्ताइत्यर्थः ॥ निमग्नाः
कष्टेइति ॥ अल्पधियस्तुविभवेऽपिसतिकष्टेनिमग्नाभवंति ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

॥ ४९ ॥ अज्ञातवासंकृतवानितिशेषः ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ अत्यर्थमतिशयितम् ॥ ५५ ॥ इतिश्रीदे॰ नृतीयस्कंधेएकोनत्रिंशोऽध्यायः ॥ २९ ॥ त्रिषष्टिश्लोकव
र्यैस्तुनारदोत्रतमाहहि ॥ रामश्चकारतच्चापिसम्यगेतदिहोच्यते ॥ १ ॥ लक्ष्मणभाषणानंतरंजायमानंकृत्यमाह ॥ एवंताविति ॥ संविदंविचारम् ॥ १ ॥ तंराममुपतस्थिवान् ॥२॥
रामस्तंदृष्ट्वोत्थायवृषंश्रेष्ठमासनंददौ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ कबरंकेशपाशम् ॥ १० ॥ संस्पर्शदूषितंपरस्पर्शदूषितंदेहंत्यक्तुमिच्छंतीत्यन्वयः ॥ ११ ॥ १२ ॥

इंद्रेणव्यसनंप्राप्तंपुरावैरघुनंदन॥नहुषःस्थापितोदेवैःसर्वैर्मघवतःपदे॥४९॥स्थितःपंकजमध्येचबहुवर्षगणानपि ॥ अज्ञातवासंमघवाभीतस्त्य
क्त्वानिजंपदम्॥५०॥पुनःप्राप्तंनिजस्थानंकालेविपरिवर्तिते॥नहुषःपतितोभूमौशापादजगराकृतिः॥५१॥इंद्राणींकामयानस्तुब्राह्मणानवमन्य
च॥अगस्तिकोपात्संजातःसर्पदेहोमहीपतिः॥५२॥तस्माच्छोकोनकर्तव्योव्यसनेसतिराघव॥उद्यमेचित्तमास्थायस्थातव्यंवैविपश्चिता॥५३॥
सर्वज्ञोऽसिमहाभागसमर्थोऽसिजगत्पते॥किंप्राकृतइवात्यर्थंकुरुषेशोकमात्मनि॥५४॥व्यासउवाच॥ इतिलक्ष्मणवाक्येनबोधितोरघुनंदनः ॥
त्यक्त्वाशोकंतथाऽत्यर्थंबभूवविगतज्वरः॥५५॥इतिश्रीदे॰म॰ तृ॰ एकोनत्रिंशोऽध्यायः ॥२९॥ ॥ व्यासउवाच ॥ एवंतौसंविदंकृत्वायाव
त्तूष्णींबभूवतुः॥आजगामतदाऽऽकाशान्नारदोभगवानृषिः॥१॥रणयन्महतींवीणांस्वरग्रामविभूषिताम्॥ गायन्बृहद्रथंसामतदातमुपतस्थिवान्
॥२॥दृष्ट्वातंरामउत्थायददावथवृषंशुभम्॥आसनंचार्घपाद्यंचकृतवानमितद्युतिः॥३॥पूजांपरमिकांकृत्वाकृतांजलिरुपस्थितः॥ उपविष्टः समी
पेतुकृताज्ञोमुनिनाहरिः॥४॥उपविष्टंतदारामंसानुजंदुःखमानसम्॥ पप्रच्छनारदःप्रीत्याकुशलंमुनिसत्तमः ॥५॥ कथंराघवशोकार्तोयथावैप्रा
कृतोनरः॥हृतांसीतांचजानामिरावणेनदुरात्मना॥६॥सुरसद्मगतश्चाहंश्रुतवाञ्जनकात्मजाम्॥ पौलस्त्येनहृतांमोहान्मरणंस्वमजानता ॥७॥
तवजन्मचकाकुत्स्थपौलस्त्यनिधनायवै ॥ मैथिलीहरणंजातमेतदर्थंनराधिप ॥८॥ पूर्वजन्मनिवैदेहीमुनिपुत्रीतपस्विनी॥ रावणेनवनेदृष्टातप
स्यंतीशुचिस्मिता ॥ ९ ॥ प्रार्थितारावणेनासौभवभार्येतिराघव ॥ तिरस्कृतस्तयाऽसौवैजग्राहकबरंबलात् ॥१०॥ शशापतत्क्षणंरामरावणं
तापसीभृशम् ॥ कुपितात्यक्तुमिच्छंतीदेहंसंस्पर्शदूषितम्॥११॥दुरात्मंस्तवनाशार्थंभविष्यामिधरातले॥अयोनिजावरानारीत्यक्त्वादेहंजहाव
पि ॥१२॥ सेयंरमांशसंभूताग्रहीतातेनरक्षसा ॥ विनाशार्थंकुलस्यैवव्यालीस्रगिवसंभ्रमात्॥१३॥तवजन्मचकाकुत्स्थतस्यनाशायचामरैः ॥
प्रार्थितस्यहरेरंशादजवंशेप्यजन्मनः ॥ १४ ॥ कुरुधैर्यंमहाबाहोतत्रसावर्ततेवशा ॥ सतीधर्मरतासीतात्वांध्यायंतीदिवानिशम् ॥ १५ ॥

व्यालीस्रगिवेति ॥ संभ्रमाद्व्यालीस्रगिवस्रग्बुद्ध्यामालाबुद्ध्यागृहीताव्यालीवसर्पिणीवेत्यर्थः ॥ रमायाःशापेनपूर्वजन्मनिमुनिपुत्रीत्वंजातंतत्कथातुस्कांदेप्रसिद्धा सैवद्वितीयजन्म
निसीताऽभवत् ॥ १३ ॥ अजोनामरघुपुत्रस्तस्यवंशे ॥ १४ ॥ :यतएतादृशःपरमेश्वरस्त्वंसीताचपरमेश्वर्यंशभूताततःकुरुधैर्यमित्याह ॥ कुरुधैर्यमिति ॥ त्वांध्यायंतीत्यनेनपाति
व्रत्यभंगोनजातइति बोधितम् ॥ १५ ॥

उदरक्षुधयापीडितासतीरावणस्यवश्याभविष्यतीतिचेत्तत्राऽऽह ॥ कामधेनुपयइति ॥ १६ ॥ १७ ॥ अस्त्वेतत्तस्याःपातिव्रत्यंयदिसाप्राप्स्यतितर्हितदुपयोगायनोचेन्ममाकिंफलंतस्योतच तत्राऽऽह । उपायमिति ॥१८॥१९॥ विशंसितैःशस्तैः ॥ दशांशंहवनंजपदशांशमित्यर्थः ॥ २० ॥ २१ ॥ २२॥ २३॥ २४॥ २५ ॥ मधुनाशायेति ॥ यद्यपितस्मिन्समयेव्रतंकर्तुमव काशोनजातोनिद्रोत्तरमव्यवहितकालेएवयुद्धस्यजायमानत्वात् तथापिममजयोभवत्वहंव्रतंकरिष्यामीतितास्मिन्समयेसंकल्पानंतरंकृतमित्यत्रतात्पर्यात् ॥ २६॥ २७ ॥ प्रश्नचतुष्टयस्य क्रमेणोत्तरमाह । शृणुरामेति ॥ हेरामयानित्याकालत्रयाबाध्या अद्यासर्वादिकारणभूताब्रह्मरूपायाचसनातन्यनादिसिद्धाशक्तिर्जडरूपामायाख्यावह्नौवह्निशक्तिवद्ब्रह्मणिस्थिता॥एतदुभ यात्मकमायाविशिष्टंब्रह्मरूपंतत्त्वंसादेवीदेवीपदवाच्यंभवति ॥ यथागजशरीरेप्रविष्टंचैतन्यंगजनामकंभवति ॥ तथाजगत्कारणमायाशरीरेप्रविष्टंप्रथमतश्चैतन्यंमुख्यतयामायाशक्तिप्रकृति संज्ञकंभवतिअतएवसर्वोत्कृष्टंप्रथमंदेवीतत्त्वंभवतितदनंतरंदेवीतत्त्वमेवतत्तद्गुणोपाधिषुप्रविष्टंब्रह्मविष्ण्वादिसंज्ञांभजतेतदेवपंचतन्मात्रासुप्रविष्टंतथामहाभूतेषुप्रविष्टंतत्तत्संज्ञांभजतेइति देवीरूपमेवसर्वमितिसर्ववेदसिद्धांतोजागर्ति नपुनर्वैष्णवशैवमतापभ्रंशाः ॥ कीदृशीसा यापूजितासतीदुःखनाशिनीजननमरणादिसर्वसंसारदुःखनाशिनीसर्वकामप्रदाधर्मकामार्थमोक्ष

कामधेनुपयःपात्रेकृत्वामघवतास्वयम् ॥ पानार्थं प्रेषितंतस्याःपीतंचैवामृतंतथा॥ १६॥ सुरभीदुग्धपानात्साक्षुत्तृड्दुःखविवर्जिता ॥ जाताक मलपत्राक्षीवर्ततेवीक्षितामया ॥१७॥ उपायंकथयाम्यद्यतस्यनाशायराघव॥व्रतंकुरुष्वश्रद्धावानाश्विनेमासिसांप्रतम् ॥१८॥ नवरात्रोपवासं चभगवत्याःप्रपूजनम् ॥ सर्वसिद्धिकरंरामजपहोमविधानतः ॥ १९ ॥ मेध्यैश्चपशुभिर्देव्याबलिंदत्त्वाविशंसितैः ॥ दशांशंहवनंकृत्वासुशक्त स्त्वंभविष्यसि ॥२०॥ विष्णुनाचरितंपूर्वंमहादेवेनब्रह्मणा ॥ तथामघवताचीर्णंस्वर्गमध्यस्थितेनवै ॥ २१॥ सुखिनारामकर्तव्यंनवरात्रव्रतंशु भम् ॥ विशेषेणचकर्तव्यंपुंसाकष्टगतेनवै ॥२२॥विश्वामित्रेणकाकुत्स्थकृतमेतन्नसंशयः ॥ भृगुणाऽथवसिष्ठेनकश्यपेनतथैवच ॥२३॥ गुरुणा हृतदारेणकृतमेतन्महाव्रतम् ॥ तस्मात्त्वंकुरुराजेंद्ररावणस्यवधायच ॥ २४ ॥ इंद्रेणवृत्रनाशायकृतंव्रतमनुत्तमम् ॥ त्रिपुरस्यविनाशायशिवेना पिपुराकृतम् ॥ २५ ॥ हरिणामधुनाशायकृतंमेरौमहामते ॥ विधिवत्कुरुकाकुत्स्थव्रतमेतदतंद्रितः ॥२६॥ श्रीरामउवाच ॥कादेवीकिंप्रभावा साकुतोजाताकिमाह्वया ॥ व्रतंकिंविधिवद्ब्रूहिसर्वज्ञोऽसिदयानिधे॥२७॥नारदउवाच ॥ शृणुरामसदानित्याशक्तिराद्यासनातनी ॥ सर्वका मप्रदादेवीपूजितादुःखनाशिनी ॥ २८ ॥

प्रदाभवति ॥ एतेनकादेवीतिरामप्रश्नस्योत्तरंदत्तंभवति ॥ इदंभगवत्याःस्वरूपंबृहदारण्यकेगार्गिब्राह्मणेस्पष्टम् ॥ तत्रहि पृथिव्यादिकंकस्मिन्नोतंप्रोतंचेतिगार्ग्याप्रथमेप्रश्नेकृतेयाज्ञव ल्क्येनपराकाशशब्दितायांचिदंबरशक्तौमायायामोतंप्रोतंचेत्युत्तरितेपुनःसाचिदंबरशक्तिःपराकाशशब्दितामायाकस्मिन्नोताचप्रोताचेत्यभिप्रायेणसाहोवाच ॥ यदूर्ध्वंयाज्ञवल्क्यदिवोय दवाक्पृथिव्यांयदंतरा द्यावापृथिवीइमेयद्भूतंचभवच्चभविष्यच्चेत्याचक्षतेकस्मिन्नेवतदोतंचप्रोतंचेतिगार्ग्याप्रश्नेकृतेब्रह्मण्येवसाशक्तिरोताचप्रोताचेत्यभिप्रायेणयाज्ञवल्क्यःसहोवाचयदू र्ध्वंगार्गिदिवोयदवाक्पृथिवीइमेयद्भूतंचभवच्चेत्याचक्षते ॥ आकाशएवतदोतंचप्रोतंचेतिकस्मिन्वाऽऽकाशओतश्चप्रोतश्चेतिसहोवाचएतद्वैतदक्षरंगार्गिब्राह्मणाअभिवदंत्यस्थूलमनण्वह्रस्व मित्यादिनोत्तरंदत्तवान् ॥ तेनचग्रंथेनेदमेवभगवतीस्वरूपंप्रतिपादितंभवतिस्पष्टीकृतंचैतदस्माभिर्बृहदारण्यकटीकायांनीलकंठयामितीहोपरम्यते ॥ अथकिंप्रभावासेतिपृष्टस्योत्तरमाह । कारणमितिसर्वजंतूनामितिदंसर्वंजडाजडप्रपंचस्योपलक्षणम् ॥ तथाचसर्वकर्तृत्वमेवास्याःप्रभावइत्यर्थः ॥ तथाच श्रुतिः तथाक्षरात्संभवतीहविश्वमिति ॥ मायांतुप्रकृतिंविद्यान्मा यिनंतुमहेश्वरम् ॥ तयोर्विभूतिलेशोवैजगदेतच्चराचरमिति ॥ २८ ॥

अधुनाकुतोजातेतिपृष्टस्योत्तरमाह । तस्याः शक्तिंविनेति ॥ तस्याब्रह्मरूपिण्याभगवत्याःसंविदःशक्तिर्मायाख्यातांविनाकोऽपिप्राणीस्पंदितुंचलितुंक्षमःसमर्थोनैवभवेत् ॥ २९॥ किंच विष्णोरिति ॥ विष्णवादीनांशक्तित्रयमपिसैवेत्यर्थः ॥ कासातत्राऽऽह ॥ अन्याशक्तिरिति ॥ पराशिवायात्वन्याशक्तिःपरब्रह्मशक्तिःसैवविष्ण्वादिशक्तित्रयरूपिणीत्यर्थः ॥ ३० ॥ किंवहुनायच्चकिंचिदिति ॥ यदैतादृशोयदीयायाःशक्तेर्महिमातदातादृशशक्तिमत्याब्रह्मरूपिण्याभगवत्याउत्पत्तिःकुतोभवेन्नकुतोऽपीत्यर्थः ॥ नहिसर्वकारणस्योत्पत्तिःकस्मादपिसंभवत्यनवस्थाषातादितिभावः ॥ ३१ ॥ सर्वादित्वमेववर्णयन्नुत्पत्तिराहित्यंद्रढयति । नब्रह्मेति ॥ ३२ ॥ यदासर्वाभावस्तदासाप्रकृतिःपूर्णापुरुषेणपरचिद्रूपेणसंयतानिर्गुणासाम्यावस्थारूपायुगादौविहरति ॥ ३३ ॥ साभूत्वेति ॥ सैवपश्चात्सगुणागुणत्रयसंभिन्नाभूत्वातत्तद्गुणोपाधिभिःपूर्वंब्रह्मादीन्संसृज्योत्पादयित्वातेभ्यःशक्तीश्चदत्त्वाभुवनत्रयंकरोति ॥ ३४ ॥ तांज्ञात्वेति ॥ तांब्रह्मरूपिणींज्ञात्वानिर्विकल्पचेतसास्वाभेदेनसाक्षात्कृत्यजंतुर्जीवोजन्मादिरूपसंसाररूपबंधनान्मुच्यते ॥ तथाचश्रुतिः ब्रह्मवेदब्रह्मैवभवतीति ॥ साविद्येति ॥

कारणंसर्वजंतूनांब्रह्मादीनांरघूद्वह ॥ तस्याःशक्तिंविनाकोऽपिस्पंदितुंनक्षमोभवेत् ॥ २९ ॥ विष्णोःपालनशक्तिःसाकर्तृशक्तिःपितुर्मम॥ रुद्रस्यनाशशक्तिःसात्वन्यशक्तिःपराशिवा ॥ ३० ॥ यच्चकिंचित्क्वचिद्वस्तुसदसद्भुवनत्रये ॥ तस्यसर्वस्ययाशक्तिस्तदुत्पत्तिःकुतोभवेत् ॥ ३१॥ नब्रह्मानयदाविष्णुर्नरुद्रोनदिवाकरः ॥ नचेंद्राद्याःसुराःसर्वेनधरानधराधराः ॥३२॥ तदासाप्रकृतिःपूर्णापुरुषेणपरेणवै ॥ संयुताविहरत्येवयुगादौनिर्गुणाशिवा ॥ ३३ ॥ साभूत्वासगुणापश्चात्करोतिभुवनत्रयम् ॥ पूर्वंसंसृज्यब्रह्मादीन्दत्त्वाशक्तीश्चसर्वशः ॥ ३४ ॥ तांज्ञात्वामुच्यतेजंतुर्जन्मसंसारबंधनात् ॥ साविद्यापरमाज्ञेयावेदाद्यावेदकारिणी ॥ ३५ ॥ असंख्यातानिनामानितस्याब्रह्मादिभिःकिल ॥ गुणकर्मविधानैस्तुकल्पितानिचकिंब्रुवे ॥ ३६ ॥ अकारादिक्षकारांतैःस्वरैर्वर्णैस्तुयोजितैः ॥ असंख्येयानिनामानिभवंतिरघुनंदन ॥ ३७ ॥ रामउवाच ॥ विधिंमेब्रूहिविप्रर्षेव्रतस्यास्यसमासतः ॥ करोम्यद्यैवश्रद्धावाञ्छ्रीदेव्याःपूजनंतथा ॥ ३८ ॥ नारदउवाच ॥ पीठंकृत्वासमेस्थानेसंस्थाप्यजगदंबिकाम् ॥ उपवासान्नवैवत्वंकुरुरामविधानतः ॥ ३९ ॥ आचार्योऽहंभविष्यामिकर्मण्यस्मिन्महीपते ॥ देवकार्यविधानार्थमुत्साहंप्रकरोम्यहम् ॥ ४० ॥ व्यासउवाच ॥ तच्छ्रुत्वावचनंसत्यंमत्वारामःप्रतापवान् ॥ कारयित्वाशुभपीठंस्थापयित्वांऽबिकांशिवाम् ॥ ४१ ॥ विधिवत्पूजनंतस्याश्चकारव्रतवान्हरिः ॥ संप्राप्तेचाश्विनेमासितस्मिन्गिरिवरेतदा ॥ ४२ ॥

परमायाविद्यानिर्विकल्पवृत्तिरूपासाभगवतीब्रह्मरूपिणीज्ञेया ॥ ब्रह्मणोविद्याशरीरत्वात् ॥ तदुक्तं–शक्तिःशरीरमधिदैवतमंतरात्माज्ञानंक्रियाःकरणमासनजालमिच्छा ॥ ऐश्वर्यमायतनमावरणानिचत्वंकिंतन्नयद्भवसिदेविशशांकमौलेः ॥ एतादृश्याभगवत्याश्चिद्रूपिण्याउत्पत्तिर्मनसापिनसंभाव्येत्यर्थः ॥ ३५ ॥ अथकिमाह्वयेतिपृष्टस्योत्तरमाह ॥ असंख्यातानीति ॥ हेरामश्रीभगवत्यानामैकमस्तीतिचेन्मयावक्तव्यंकिंतुयावंतःपदार्थास्तेसर्वेभगवतीरूपाः ॥ एकैवसर्वत्रवर्ततेतस्मादुच्यतेएकेतिश्रुतेः ॥ एकोहंबहुस्यांप्रजायेयेतिश्रुतेः ॥ तथाचयावंतःपदार्थास्तेषांगुणकर्मभेदेनविधानेनब्रह्मादिभिरसंख्येयानिनामानिकल्पितानियदेत्थंरामवर्ततेतदेदंनामभवतीदंनेतिकथंब्रुवेतस्मात्सर्वाणिनामान्यस्याएवभवंतीत्यर्थः ॥ तथाचश्रुतिः ॥ तन्नामरूपाभ्यामेवव्याक्रियतइति ॥ ३६ ॥ तदेवस्पष्टयति । अकारादिक्षकारांतैरिति ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ अकूपारःसमुद्रः ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ द्विजेद्विजाधिकरणे ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ इत्युक्तेति ॥ इतिवरंदस्वेत्यर्थः ॥ ५९ ॥ ६० ॥ ६१॥ ६२ ॥ नतुल्यानीति ॥ तानिपुराणान्येकैकगुणोपाधिब्रह्मविष्ण्वादिप्रतिपादकानीदंतुदेवीभागवतंतद्गुणमूलभूतसाम्यावस्थमायोपाधिकब्रह्म रूपपराशक्तिप्रतिपादकमतोनैतत्तुल्यानितानिपुराणानीतिभावः ॥ ६३ ॥ श्रीमच्छैवकुलोत्पन्नरंगनाथात्मजःसुधीः ॥ श्रीलक्ष्मीगर्भसंभूतोनीलकंठोऽभिधानतः ॥ १ ॥ देवीभागव ।

उपवासपरोरामःकृतवान्व्रतमुत्तमम् ॥ होमंचविधिवत्तत्रबलिदानंचपूजनम् ॥ ४३ ॥ भ्रातरौचक्रतुःप्रेम्णाव्रतंनारदसंमतम् ॥ अष्टम्यांमध्यरात्रेतुदेवीभगवतीहिसा ॥ ४४ ॥ सिंहारूढाददौतत्रदर्शनंप्रतिपूजिता ॥ गिरिशृंगेस्थितोवाचराघवंसानुजंगिरा ॥ ४५ ॥ मेघगंभीरयाचेदंभक्तिभावेनतोषिता ॥ देव्युवाच ॥ रामराममहाबाहोतुष्टास्म्यद्यव्रतेनते ॥ ४६ ॥ प्रार्थयस्ववरंकामंयत्तेमनसिवर्तते ॥ नारायणांशसंभूतस्त्वंवंशेमानवेऽनघे ॥ ४७ ॥ रावणस्यवधायैवप्रार्थितस्त्वमरैरसि ॥ पुरामत्स्यतनुंकृत्वाहत्वाघोरंचराक्षसम् ॥ ४८ ॥ त्वयावैरक्षितावेदाःसुराणांहितमिच्छता ॥ भूत्वाकच्छपरूपस्तुधृतवान्मन्दरंगिरिम् ॥ ४९ ॥ अकूपारंप्रमंथानंकृत्वादेवानपोषयः ॥ कोलरूपंपुराकृत्वादशनाग्रेणमेदिनीम् ॥ ५० ॥ धृतवानसियद्रामहिरण्याक्षंजघानच ॥ नारसिंहींतनुंकृत्वाहिरण्यकशिपुंपुरा ॥ ५१ ॥ प्रह्लादंरामरक्षित्वाहतवानसिराघव ॥ वामनंवपुरास्थायपुराछलितवान्बलिम् ॥ ५२ ॥ भूत्वेंद्रस्यानुजःकामंदेवकार्यप्रसाधकः ॥ जमदग्निसुतस्त्वंमेविष्णोरंशेनसंगतः ॥ ५३ ॥ कृत्वांऽतंक्षत्रियाणांतुदानंभूमेरदाद्विजे ॥ तथेदानींतुकाकुत्स्थजातोदशरथात्मजः ॥ ५४ ॥ प्रार्थितस्तुसुरैःसर्वैरावणेनातिपीडितैः ॥ कपयस्तेसहायावैदेवांशाबलवत्तराः ॥ ५५ ॥ भविष्यंतिनरव्याघ्रमच्छक्तिसंयुताह्यमी ॥ शेषांशोप्यनुजस्तेऽयंरावणात्मजनाशकः ॥ ५६ ॥ भविष्यतिनसंदेहःकर्तव्योऽत्रत्वयानघ ॥ वसंतेसेवनंकार्यंत्वयातत्रातिश्रद्धया ॥ ५७ ॥ हत्वाऽथरावणंपापंकुरुराज्यंयथासुखम् ॥ एकादशसहस्राणिवर्षाणिपृथिवीतले ॥ ५८ ॥ कृत्वाराज्यंरघुश्रेष्ठगंतासित्रिदिवंपुनः ॥ व्यासउवाच ॥ इत्युक्त्वांतर्दधेदेवीरामस्तुप्रीतमानसः ॥ ५९ ॥ समाप्यतद्व्रतंचक्रेप्रयाणंदशमीदिने ॥ विजयापूजनंकृत्वादत्त्वादानान्यनेकशः ॥ ६० ॥ कपिपतिबलयुक्तःसानुजःश्रीपतिश्चप्रकटपरमशक्त्याप्रेरितःपूर्णकामः ॥ उदधितटगतोसौसेतुबंधंविधायात्यहनदमरशत्रुंरावणंगीतकीर्तिः ॥ ६१ ॥ यःशृणोतिनरोभक्त्यादेव्याश्चरितमुत्तमम् ॥ सभुक्त्वाविपुलान्भोगान्प्राप्नोतिपरमंपदम् ॥ ६२ ॥ संत्यन्यानिपुराणानिविस्ताराणिबहूनिच ॥ श्रीमद्भागवतस्यास्यनतुल्यानीतिमेमतिः ॥ ६३ ॥

इतिश्रीदेवीभागवतेमहापुराणेऽष्टादशसाहस्र्यांसंहितायांतृतीयस्कन्धेत्रिंशोऽध्यायः ॥ ३० ॥

देव्याभागवतस्यास्यतृतीयस्कंधविस्तरम् ॥ सार्धैःषडब्धिशैलेंदु १७४६ ॥ पद्यैर्व्यासोव्यरीरचत् ॥

स्यास्यव्याख्यानरहितस्यच ॥ तिलकाख्यांमहाव्याख्यांसम्यग्यःकृतवाञ्छुभाम् ॥ २ ॥ तृतीयस्कंधएतस्याःसमाप्तोभूच्छुभार्थदः ॥ तेनतुष्यतुसादेवीसच्चिदानन्दरूपिणी ॥ ३ ॥ इतिश्रीश्रीशैवकुलोत्पन्नरंगनाथात्मजश्रीलक्ष्मीगर्भजनीलकंठकृतेदेवीभागवतव्याख्यानेतिलकाभिधेतृतीयस्कंधेत्रिंशोऽध्यायः ॥ ३० ॥ श्रीजगदंबार्पणमस्तु ॥

श्रीगणेशायनमः ॥ यदुन्मेषनिमेषाभ्यांजगतःप्रलयोद्भवौ ॥ वंदेतांभुवनेशानींसच्चिदानंदरूपिणीम् ॥ १ ॥ अष्टाधिकैश्चचत्वारिंशद्भिःपद्यैरनन्तरम् ॥ कृष्णाऽवतारसंप्रश्नोराज्ञाकृतउदीर्यते ॥ २ ॥ पूर्वाऽध्यायान्तेरामाऽवतारपर्यंतमवताराःश्रीभगवत्यधीनास्तयायथायथाप्रेर्यंते तथातथातेकुर्वंतीत्युक्तंनतुकृष्णाऽवतारस्तदधीनउक्तः ॥ तथाच तस्येश्वरशक्तियुक्तत्वेन तस्यदुर्दशातदाश्रितानांयादवानांपांडवानांदुर्दशाकिमितिजातेत्यभिप्रायेण ॥ किंचजगतःकारणंश्रीभुवनेश्वरीभगवतीमायाविशिष्टब्रह्मरूपिणीतिसर्ववेदसिद्धं तस्याश्चवैषम्यनैर्घृण्यराहित्येनोच्चावचसृष्टिकल्पनंकिंनिमित्तमभवदितितन्निमित्तपरिचयार्थंचजनमेजयःपृच्छति । वासवेयमुनिश्रेष्ठेति ॥ वासव्याःसुगन्धायाःअपत्यंवासवेयः ॥ स्त्रीभ्योढगितिढक् ॥ हेव्यास ॥ १ ॥ २ ॥ ३ ॥ आगोऽपराधः ॥ येनापराधेनकारागारेबद्धस्तादृशमागःकिंकृतवानित्यर्थः ॥ ४ ॥ ययातेःकुलमुत्तममेवतद्भुद्भवेनाऽपिकंसेनकुलीनेनेत्यर्थः ॥ ५ ॥ गतोजन्मांतरमि

श्रीगणेशायनमः॥जनमेजयउवाच॥वासवेयमुनिश्रेष्ठसर्वज्ञाननिधेऽनघ॥प्रष्टुमिच्छाम्यहंस्वामिन्नस्माकंकुलवर्धन॥१॥ शूरसेनसुतःश्रीमान्वसुदेवःप्रतापवान्॥श्रुतंमयाहरिर्यस्यपुत्रभावमवाप्तवान् ॥२॥ देवानामपिपूज्योऽभून्नाम्नाचाऽऽनकदुंदुभिः॥ कारागारेकथंबद्धःकंसस्यधर्मतत्परः ॥३॥देवक्याभार्ययासार्धंकिमागःकृतवानसौ॥देवक्याबालषट्कस्यविनाशश्चकृतःपुनः॥४॥ तेनकंसेनकस्माद्वैययातिकुलजेनच॥कारागारेकथंजन्मवासुदेवस्यवैहरेः॥५॥गोकुलेचकथंनीतोभगवान्सात्वतांपतिः॥गतोजन्मांतरंकस्मात्पितरौनिगडेस्थितौ॥६॥ देवकीवसुदेवौचकृष्णस्याऽमिततेजसः॥कथंनमोचितौवृद्धौपितरौहरिणाऽमुना ॥७॥ जगत्कर्तुंसमर्थेनस्थितेनजनकोदरे॥प्राक्तनंकिंतयोःकर्मदुर्विज्ञेयंमहात्मभिः ॥८॥ जन्मवैवासुदेवस्ययत्राऽऽसीत्परमात्मनः॥केतेपुत्राश्चकाबालायाकंसेनविपोथिता॥९॥ शिलायांनिर्गताव्योम्निजाताऽत्वष्टभुजापुनः॥गार्हस्थ्यंचहरेर्ब्रूहिबहुभार्यस्यचानघ॥१०॥कार्याणितत्रतान्येवदेहत्यागंचतस्यवै॥किंवदंत्याश्रुतंयत्तन्मनोमोहयतीवमे ॥ ११ ॥ चरितंवासुदेवस्यत्वमाख्याहियथातथम्॥ नरनारायणौदेवौपुराणावृषिसत्तमौ ॥१२॥ धर्मपुत्रौमहात्मानौतपश्चेरतुरुत्तमम् ॥ यौमुनीबहुवर्षाणिपुण्येबदरिकाश्रमे॥१३॥निराहारौजिताऽऽत्मानौनिःस्पृहौजितषड्गुणौ ॥ विष्णोरंशौजगत्स्थेम्नेतपश्चेरतुरुत्तमम्॥१४॥ तयोरंशावतारौहिजिष्णुकृष्णौमहाबलौ॥प्रसिद्धौमुनिभिःप्रोक्तौसर्वज्ञैर्नारदादिभिः॥१५॥ विद्यमानशरीरौतौकथंदेहांतरंगतौ॥ नरनारायणौदेवौपुनःकृष्णार्जुनौकथम् ॥१६॥

ति॥क्षत्रियवंशजःसन्गोपालवंशजत्वविशिष्टंलोकदृष्ट्याजन्मांतरंकस्माद्गतइत्यर्थः ॥ पितरावित्यस्योत्तरत्रान्वयः ॥६॥७॥ ननुप्राक्तनकर्मवशात्तौबद्धौतत्रहरिःकिंकरिष्यतीतिचेत्तत्राऽऽह ॥ प्राक्तनंकिमिति ॥ यत्रपरमात्मनोजन्माऽभवत्तत्रप्राक्तनंकिमवशिष्टम् ॥ यन्महात्मभिरपिदुर्ज्ञेयम् ॥ नहितस्मिन्सतिपरमेश्वरस्यजन्मस्यादितिभावः ॥ ८ ॥ किंचकेतेपुत्राइति ॥ शिलायांयेविपोथिताइतिशेषः ॥ तेकिंपूर्वजन्मनिस्थिताइत्यर्थः ॥ ९ ॥ १० ॥ किंवदंत्याजनश्रुत्यामनोमोहयतीवेति क्वचिदीश्वरवच्चरितेनक्वचिज्जीववच्चरितेनाकिमयमीश्वरोवाजीवोवेतिमनसोमोहोभवतीत्यर्थः ॥ ११ ॥ किंचनरनारायणाविति ॥ १२ ॥ १३ ॥ जितषड्गुणौजितकामक्रोधादिषट्कौजगत्स्थेम्नेजगत्कल्याणाय ॥ १४ ॥ १५ ॥ विद्यमानशरीरौताविति ॥ पूर्वदेहंपरित्यज्यैवदेहान्तरगमनंसंभवतिनचतादृिहास्ति ॥ तथाच कथंतयोर्देहांतरगमनमित्यर्थः ॥ १६ ॥

किंच यौचक्रतुरिति ॥ मुक्त्यर्थंतपस्यतोर्देहांतरगमनफलंविरुद्धंकथमभूदितिप्रश्नार्थः ॥ १७ ॥ यद्यत्तपसायद्यत्फलंभवतितदाह । शूद्रइति ॥ १८ ॥ एवंनियमेसतिनरनारायणयोर्ब्रा
ह्मणयोर्ज्ञानिनोर्विपरीतंक्षत्रियजन्मफलंकथमभूदित्याह । विपरीतमिति ॥ १९ ॥ विपरीतफलकारणंतर्कयति ॥ केनताविति ॥२०॥ किंचयादवानामिति ॥ सकथंजातइतिवदेति
शेषः ॥ २१ ॥ कृष्णस्यापीति ॥ गांधार्याःशापेनेश्वरस्यापिकृष्णस्यकुलक्षयःकथंजातइत्यपिवदेत्यर्थः ॥ २२ ॥ वासुदेवेवर्तमानेपुत्रस्यहरणंकथंकृतमित्यन्वयः ॥ २३ ॥ किंचतेन
कृतंहरणंवासुदेवेनदिव्यचक्षुषाकथंनज्ञातम् । यदर्थंमहामोहेनिमग्नइत्याह । नज्ञातमिति ॥ २४ ॥ किंचयत्पत्न्यइति ॥ २५ ॥ स्वर्गतेवैकुंठंगते ॥ २६ ॥ किंच ॥ विष्णोरिति ॥

यौचक्रतुस्तपश्चोग्रंमुक्त्यर्थंमुनिसत्तमौ॥तौकथंप्रापतुर्देहौप्राप्तयोगौमहातपौ॥१७॥शूद्रःस्वधर्मनिष्ठस्तुदेहान्तेक्षत्रियस्तुसः॥ शुभाऽऽचारोमृतो
योवैसशूद्रोब्राह्मणोभवेत्॥१८॥ब्राह्मणोनिःस्पृहःशांतोभवरोगाद्विमुच्यते॥विपरीतमिदंभातिनरनारायणौचतौ॥१९॥ तपसाशोषितात्मानौक्ष
त्रियौतौबभूवतुः॥केनतौकर्मणाशांतौजातौशापेनवापुनः॥२०॥ब्राह्मणौक्षत्रियौजातौकारणंतन्मुनेवद ॥ यादवानांविनाशश्चब्रह्मशापादितिश्रु
तः॥२१॥कृष्णस्याऽपिहिगांधार्याःशापेनैवकुलक्षयः॥प्रद्युम्नहरणंचैवशंबरेणकथंकृतम्॥२२॥वर्तमानेवासुदेवेदेवदेवेजनार्दने ॥ पुत्रस्यसूतिका
गेहाद्धरणंचाऽतिदुर्घटम्॥२३॥द्वारकादुर्गमध्याद्वैहरिवेश्माद्दुरत्ययात्॥नज्ञातंवासुदेवेनतत्कथंदिव्यचक्षुषा ॥२४॥ संदेहोऽयंमहान्ब्रह्मन्निःसंदे
हंकुरुप्रभो॥यत्पत्न्योवासुदेवस्यदस्युभिर्लुंठिताहृताः॥२५॥स्वर्गतेदेवदेवेतुतत्कथंमुनिसत्तम॥संशयोजायतेब्रह्मंश्चित्तांदोलनकारकः ॥२६॥वि
ष्णोरंशःसमुद्भूतःशौरिर्भूभारहारकृत्॥सकथंमथुराराज्यंभयात्त्यक्त्वाजनार्दनः॥२७॥द्वारवत्यांगतःसाधोससैन्यःससुहृद्गणः॥ अवतारोहरेःप्रो
क्तोभूभारहरणायवै॥२८॥पापात्मनांविनाशायधर्मसंस्थापनायच॥तत्कथंवासुदेवेनचौरास्तेननिपातिताः॥२९॥यैर्हृतावासुदेवस्यपत्न्यःसंलुं
ठिताश्चताः॥स्तेनास्तेकिंनविज्ञाताःसर्वज्ञेनसतापुनः ॥३०॥ भीष्मद्रोणवधःकामंभूभारहरणेमतः ॥ अविताश्चमहात्मानःपांडवाधर्मतत्पराः
॥३१॥कृष्णभक्ताःसदाचारायुधिष्ठिरपुरोगमाः॥तेकृत्वाराजसूयंचयज्ञराजंविधानतः॥३२॥ दक्षिणाविविधादत्त्वाब्राह्मणेभ्योऽतिभावतः॥ पांडु
पुत्रास्तुदेवांशावासुदेवाश्रितामुने ॥३३॥घोरंदुःखंकथंप्राप्ताःक्वगतंसुकृतंचतत्॥किंतत्पापंमहारौद्रंयेनतेपीडिताःसदा ॥३४॥

॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ भीष्मद्रोणादयोधर्मात्मानोऽपिभूभारकारकाइतिज्ञात्वातेषांवधस्तस्यमतइष्टोजातस्तथासतितेषांस्तेनानांकथंतेनवधोनकृतइतिवदेत्यभिप्रायः ॥३१॥
किंचकृष्णभक्ताइति ॥ ३२ ॥ ३३ ॥ क्वगतंसुकृतंचतदिति ॥ ननुपूर्वमेवोक्तंराजसूयःसांगोयज्ञोनजातइतितत्कथमत्रशंक्यते क्वगतंसुकृतंचतदितिचेन्न ॥ एतादृशवासुदेवादिसर्वज्ञ
पुरुषसान्निध्येकथंसांगोयज्ञोनजातइत्यत्रैवप्रश्नतात्पर्यात् ॥ तदेवाह । किंतत्पापमिति ॥ येनपापेनसांगोयज्ञोनजातइतिकृत्वादुःखेनपीडितास्तत्पापंकिमित्यर्थः ॥ ३४ ॥

किंचद्रौपदीति ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ किंचराजसूयमिति ॥ ४० ॥ ममपूर्वजाःपूर्वजन्मकृतपापेनदुःखंप्राप्ताइतिवक्तव्यं तदपिनसंभवति ॥ देवांशानांतेषांपूर्वजन्माभावाद्देवानांचपरमेश्वराधिकारिपुरुषत्वात्पापसंभावनाऽभावस्तथाचदेवांशानांतेषांकथंदुःखसंभवइत्ययंसंशयोमेवर्ततइत्यर्थः ॥ ४१ ॥ किंचसदाचारैस्त्विति ॥ नश्वरंमिथ्याजगज्ज्ञानैर्ज्ञानवद्भिःसदाचारैःकथंहताइत्यर्थः ॥ ४२ ॥ किंचप्रेरिताइति ॥ वासुदेवेनेश्वरेणकथंपापेप्रेरिताइत्यर्थः ॥ ४३ ॥ लोभेनयोधान्नहत्वानविनाश्यभिक्षाटनादिनाजीवनंवरम् ॥ नतुलोभेनयोधान्हत्वाराज्यभोगोवरइत्यर्थः ॥ ४४ ॥ किंचविच्छिन्नस्त्विति ॥ ४५ ॥ त्वादृशमहानुभावादुत्पन्नेवंशेजायमानःसविराटतनयाउत्तरातस्याःसुतःपरीक्षित्तापसस्यगलेसर्प

द्रौपदीचमहाभागावेदीमध्यात्समुत्थिता॥रमांशजाचसाध्वीचकृष्णभक्तियुतातथा॥३५॥साकथंदुःखमतुलंप्रापघोरंपुनःपुनः ॥दुःशासनेनसा केशेगृहीतापीडिताभृशम् ॥३६॥ रजस्वलासभायांतुनीताभीतैकवाससा ॥ विराटनगरेदासीजातामत्स्यस्यसापुनः ॥ ३७॥ धर्षिताकीचकेनाथरुदतीकुररीयथा ॥ हृताजयद्रथेनाऽथक्रंदमानाऽतिदुःखिता ॥ ३८ ॥ मोचितापांडवैःपश्चाद्बलवद्भिर्महात्मभिः ॥ पूर्वजन्मकृतंपापंकिंतद्येनचपीडिताः ॥ ३९ ॥ दुःखान्यनेकान्याप्तास्तेकथयाऽद्यमहामते ॥ राजसूयंक्रतुवरंकृत्वातेममपूर्वजाः ॥ ४० ॥ दुःखंमहत्तरंप्राप्ताःपूर्वजन्मकृतेनवै ॥ देवांशानांकथंतेषांसंशयोऽयंमहान्हिमे ॥ ४१ ॥ सदाचारैस्तुकौंतेयैर्भीष्मद्रोणादयोहताः ॥ छलेनधनलोभार्थंजानानैर्नश्वरंजगत् ॥ ४२ ॥ प्रेरितावासुदेवेनपापेघोरेमहात्मना ॥ कुलंक्षयितवंतस्तेहरिणापरमात्मना ॥ ४३ ॥ वरंभिक्षाटनंसाधोर्नीवारैर्जीवनंवरम् ॥ योधान्नहत्वालोभेनशिल्पेनजीवनंवरम् ॥ ४४ ॥ विच्छिन्नस्तुत्वयावंशोरक्षितोमुनिसत्तम ॥ समुत्पाद्यसुतानाऽऽशुगोलकाञ्छत्रुनाशनान् ॥ ॥ ४५ ॥ सोऽल्पेनैवतुकालेनविराटतनयासुतः ॥ तापसस्यगलेसर्पंन्यस्तवान्कथमद्भुतम् ॥४६॥ नकोऽपिब्राह्मणंद्वेष्टिक्षत्रियस्यकुलोद्भवः॥ तापसंमौनसंयुक्तंपित्राकिंतत्कृतंमुने ॥ ४७ ॥ एतैरन्यैश्चसंदेहैर्विकलंमेमनोऽधुना ॥ स्थिरंकुरुपितःसाधोसर्वज्ञोऽसिदयानिधे ॥ ४८ ॥ इति श्रीदे० चतुर्थस्कंधेजनमेजयप्रश्नोनामप्रथमोऽध्यायः ॥ १ ॥ सूतउवाच ॥ एवं पृष्टःपुराणज्ञोव्यासःसत्यवतीसुतः ॥ परीक्षितसुतंशांतंततोवैजनमेजयम् ॥ १ ॥ उवाचसंशयच्छेत्तृवाक्यंवाक्यविशारदः ॥ व्यासउवाच ॥ राजन्किमेतद्वक्तव्यंकर्मणांगहनागतिः ॥ २ ॥ दुर्ज्ञेयाकिलदेवानांमानवानांचकाकथा ॥ यदासमुत्थितंचैतद्ब्रह्माण्डंत्रिगुणात्मकम् ॥ ३ ॥

कथंन्यस्तवानित्यर्थः ॥ ४६ ॥ ४७ ॥ इतिश्रीदे०चतुर्थस्कंधेप्रथमोऽध्यायः ॥ १ ॥ षष्टिश्लोकैर्विचित्रस्यप्रपंचस्यचकारणम् ॥ देवादीनांचसर्वेषांकर्मैवेत्येतदुच्यते ॥ १ ॥ इत्थंजनमजयेनानेकविधान्कृतान्प्रश्नान् श्रुत्वा तेषांसर्वेषांप्रश्नानांसमाधानंप्रपंचस्यदेवादीनांचकर्माधीनत्वमिति व्यासउवाचेतिशौनकादीन्प्रतिसूतआह । एवंपृष्टःपुराणज्ञइति ॥ १ ॥ किमुवाचतदाह । राजन्किमिति ॥ एतत्त्वयापृष्टंकिंवक्तव्यंयतोदेवानामपिकर्मणांगहनाकष्टागतिर्दुर्ज्ञेयाभवति ॥ यदादेवादीनामपिकर्मणैवंगतिस्तदामानवानांकाकथा ॥ तस्मात्किंवक्तव्यमित्यर्थः ॥ २ ॥ कर्माधीनत्वमेवसर्वेषामाह यदेति अत्रतदेतिशेषः ॥ ३ ॥

कर्मबीजसमुद्भवाःकर्मरूपकारणजन्याः ॥ ४ ॥ देहसंयोगोऽयंत्रिविधकर्मरहितःकदापिनातिष्ठति ॥ ५ ॥ तत्रकर्माणित्रिविधानिसंतीत्याह । शुभाशुभैरिति ॥ शुभानिसात्त्विकानि ॥ अशुभानितामसानि ॥ मिश्राणिराजसानि तेषांस्वरूपंचतृतीयस्कंधेसत्त्वादिगुणनिरूपणप्रकरणेस्पष्टीकृतम् ॥ ६ ॥ तानिचप्रत्येकंत्रिविधानीत्याह । संचितानीति ॥ एवं कर्मणांत्रैविध्यंभवतीत्यर्थः ॥ ७ ॥ यद्यपिब्रह्मादयईश्वराःसंतितथाऽपितेकर्मणैवेश्वराजाताइतिकर्मवश्यत्वंतेषामस्त्येवेत्याह । ब्रह्मादीनामिति ॥ पूर्वजन्मनिकश्चिद्विद्यमानोजीवःकर्मोपासनाऽतिशयेनहिरण्यगर्भोभवति ॥ सोबिभेत्सनैवरेमेइतिबृहदारण्यकश्रुतेः ॥ कर्ममिर्बद्धएवसपूर्वजन्मकृतश्रवणादिसाधनसंस्कारवशादेवहिरण्यगर्भजन्मनिज्ञानवांश्चभवतीत्येतदपिबृहदारण्यकएवोक्तम् ॥ कर्माधीनस्यतस्यहिरण्यगर्भस्यैवावताराएतेब्रह्मविष्णुहरादयइतिहिरण्यगर्भःसमवर्तताग्रेइत्यादिश्रुत्योक्तम् ॥ तथाच कर्माधीनहिरण्यगर्भांशत्वाद्ब्रह्मादीनामपिकर्माधीनत्वंभवत्येवेतिभावः ॥ ८ ॥ दैवाधीनाःकर्माधीनाइत्यर्थः ॥ ९ ॥ देवानांमानवानांचतिरश्चांसर्वेषामपिकर्माधीनत्वस्यतुल्यत्वादित्याह देवानामिति ॥ १० ॥ पूर्ववैरानुयोगेनेत्यर्धपूर्वान्वयि ॥ ११ ॥ कर्माधीनत्वंनिगमयति । उत्पत्तिरिति ॥ १२ ॥ ननुकस्मादेतादृशंदुर्घटंकर्मोत्पन्नमितिचेत्तत्राह । अनादीति ॥ बीजांकुरवदेतस्याऽनादित्वादनादित्वम् ॥

कर्मणैवसमुत्पत्तिःसर्वेषांनात्रसंशयः ॥ अनादिनिधनाजीवाःकर्मबीजसमुद्भवाः ॥ ४ ॥ नानायोनिषुजायंतेम्रियंतेचपुनःपुनः ॥ कर्मणारहितोदेहसंयोगोनकदाचन ॥ ५ ॥ शुभाशुभैस्तथामिश्रैःकर्मभिर्वेष्टितंत्विदम् ॥ त्रिविधानिहितान्याहुर्बुधास्तत्त्वविदश्चये ॥ ६ ॥ संचितानिभविष्याणिप्रारब्धानितथापुनः ॥ वर्तमानानिदेहेऽस्मिंस्त्रैविध्यंकर्मणांकिल ॥ ७ ॥ ब्रह्मादीनांचसर्वेषांतद्वशत्वंनराधिप ॥ सुखदुःखजरामृत्युहर्षशोकादयस्तथा ॥ ८ ॥ कामक्रोधौचलोभश्चसर्वे देहगतागुणाः ॥ दैवाधीनाश्चसर्वेषांप्रभवंतिनराधिप ॥ ९ ॥ रागद्वेषादयोभावाःस्वर्गेपिप्रभवंतिहि ॥ देवानांमानवानांचतिरश्चांचतथापुनः ॥ १० ॥ विकाराःसर्व एवैतेदेहेनसहसंगताः ॥ पूर्ववैरानुयोगेनस्नेहयोगेनवैपुनः ॥ ११ ॥ उत्पत्तिःसर्वजंतूनांविनाकर्मनविद्यते ॥ कर्मणाभ्रमतेसूर्यः शशांकःक्षयरोगवान् ॥ १२ ॥ कपालीचतथारुद्रःकर्मणैवनसंशयः ॥ अनादिनिधनंचैतत्कारणंकर्मसंभवे ॥ १३ ॥ तेनेदंशाश्वतंसर्वंजगत्स्थावरजंगमम् ॥ नित्यानित्यविचारेऽत्रनिमग्नामुनयःसदा ॥ १४ ॥ नजानंतिकिमेतद्वैनित्यंवाऽनित्यमेवच ॥ मायायांविद्यमानायांजगन्नित्यंप्रतीयते ॥ १५ ॥ कार्याभावःकथंवाच्यःकारणेसतिसर्वथा ॥ मायानित्याकारणंचसर्वेषांसर्वदाकिल ॥ १६ ॥

अनिधनत्वंतुमोक्षपर्यंतावस्थानात् ॥ तदेतादृशकर्मसंभवेसर्वस्योत्पत्तौकारणंभवतीत्यर्थः ॥ तेनकारणेनसर्वंजगच्छाश्वतंप्रवाहरूपेणनित्यंभवतीत्यर्थः ॥ तथाचकैवल्यश्रुतिः पुनश्चजन्मांतरकर्मयोगात्सएवजीवःस्वपितिप्रबुद्धइतिकर्मणएवकारणत्वंदर्शयति ॥ तथाचनैतादृशंकर्मकस्मादप्युत्पन्नंभवितुमर्हतीत्यर्थः ॥ अतएवाहुः । जीवईशोविशुद्धाचित्तथाजीवेशयोर्भिदा । अविद्यातच्चितोर्भेदः षडस्माकमनादयइति ॥ १३ ॥ इत्थंकर्मसद्भावेआगमंप्रदर्श्याऽर्थापत्तिमप्याह । नित्यानित्येति ॥ इदंजगन्नित्यंप्रलयरहितमाहोस्विदनित्यंप्रलयसहितंभवतिइतिविचारेसदामुनयोनिमग्नाः ॥ १४ ॥ कुतोनिमग्नास्तत्राऽऽह । नजानंतीति ॥ यतोनित्यंवाऽनित्यंवेतिनजानंतिततोनिमग्नाइत्यर्थः ॥ ननुजगन्नश्वरंभाति ततोनित्यकोटिःकथमुत्थितेतिचेदनुमित्येत्याह । मायायामिति ॥ कारणस्यनित्यत्वेकार्यमपिसदेवस्यादित्यर्थः ॥ १५ ॥ तदेवाह । कार्याभावइति ॥ अतोहेतोर्नित्यत्वकोटिःसमुत्थितेत्यर्थः ॥ ननुमायैवाऽनित्यास्यादितिचेन्नेत्याह । मायानित्येति ॥ मोक्षपर्यंतंनित्येत्यर्थः ॥ १६ ॥

तर्हिप्रत्यक्षोपलभ्यमानस्यजगतोनश्वरत्वस्यकागतिरितिचेत्तदन्यथाऽनुपपत्त्याकर्मरूपबीजस्यसहकारिकारणस्याऽनित्यत्वंकल्पनीयमित्याह । कर्मबीजंततोनित्यमिति ॥ अनित्यंकर्मबीजेसहकारिकारणंबुद्धौचिंतनीयमित्यर्थः ॥ तस्माज्जगतउत्पत्तिप्रलयान्यथाऽनुपपत्त्यापिकर्मसद्भावःसिद्धइतिभावः ॥ तस्मिंश्चानित्येकर्मणिस्वीकृतेयदाप्रारब्धंकर्मोत्तिष्ठतितदामायाविसृजति यदाप्रारब्धंसर्वप्राणिनांनश्यति तदाकारणभूतायामायायानित्यत्वेऽपिसहकारिकारणस्यकर्मणोऽभावाज्जगतःप्रलयोभवतीतिसर्वंसमंजसम् ॥ १७ ॥ यदिकर्मनियंत्रितं

कर्मबीजंततोनित्यंचिंतनीयंसदाबुधैः॥भ्रमत्येवजगत्सर्वंराजन्कर्मनियंत्रितम् ॥१७॥ नानायोनिषुराजेंद्रनानाधर्ममयेषुच ॥ इच्छयाचभवेज्जन्मविष्णोरमिततेजसः॥१८॥युगेयुगेष्वनेकासुनीचयोनिषुतत्कथम्॥त्यक्त्वावैकुंठसंवासंसुखभोगाननेकशः॥१९॥विण्मूत्रमंदिरेवासंसंत्रस्तःकोऽभिवांछति॥पुष्पावचयलीलाचजलकेलिःसुखासनम्॥२०॥त्यक्त्वागर्भगृहेवासंकोऽभिवांछतिबुद्धिमान्॥ तूलिकांमृदुसंयुक्तांदिव्यांशय्यांविनिर्मितां॥२१॥त्यक्त्वाऽधोमुखवासंचकोऽभिवांछतिपंडितः॥गीतंनृत्यंचवाद्यंचनानाभावसमन्वितम्॥२२॥मुक्त्वाकोनरकेवासंमनसाऽपिविचिंतयेत्॥सिंधुजाद्भुतभावानांरसंत्यक्त्वासुदुस्त्यजम्॥२३॥ विण्मूत्ररसपानंचकइच्छेन्मतिमान्नरः॥गर्भवासात्परोनास्तिनरकोभुवनत्रये॥२४॥तद्भीताश्चप्रकुर्वंतिमुनयोदुस्तरंतपः॥हित्वाभोगंचराज्यंचवनेयांतिमनस्विनः॥२५॥यद्भीतास्तुविमूढात्माकस्तंसेवितुमिच्छति॥गर्भेतुदंतिकृमयोजठराग्निस्तपत्यधः॥२६॥वपासंवेष्टनंक्रूरंकिंसुखंतत्रभूपते॥वरंकारागृहेवासोबन्धनंनिर्गडैर्वरम्॥२७॥अल्पमात्रंक्षणंनैवगर्भवासःक्वचिच्छुभः॥गर्भवासेमहद्दुःखंदशमासनिवासनम्॥२८॥ तथानिःसरणेदुःखंयोनियंत्रेऽतिदारुणे॥बालभावेतदादुःखमूकाज्ञभावसंयुतम्॥२९॥क्षुत्तृडावेदनाशक्तःपरतंत्रोऽतिकातरः ॥ क्षुधितेरुदितेबालेमाताचिंतातुरातदा ॥ ३० ॥ भैषजंपातुमिच्छंतीज्ञात्वाव्याधिव्यथांदृढाम् ॥ नानाविधानिदुःखानिबालभावेभवंतिवै ॥ ३१ ॥ किंसुखंविबुधाद्दृष्ट्वाजन्मवांछंतिचेच्छया ॥ संग्राममममरैःसार्धंसुखंत्यक्त्वानिरंतरम् ॥३२॥ कर्तुमिच्छेच्चकोमूढःश्रमदंसुखनाशनम् ॥ सर्वथैवनृपश्रेष्ठसर्वेब्रह्मादयःसुराः ॥ ३३ ॥ कृतकर्मविपाकेनप्राप्नुवंतिसुखाऽसुखे ॥ अवश्यमेवभोक्तव्यंकृतंकर्मशुभाऽशुभम् ॥ देहवद्भिर्नृभिर्देवैस्तिर्यग्भिश्चनृपोत्तम ॥ ३४ ॥ तपसादानयज्ञैश्चमानवश्चेन्द्रतांव्रजेत् ॥ क्षीणेपुण्येऽथशक्रोऽपिपतत्येवनसंशयः ॥ ३५ ॥

जगन्नस्यात्तदेश्वराणांकथमेतादृशीगतिर्भवेदित्याह । नानायोनिष्विति ॥ इच्छयायदिनानायोनिषुअधर्ममयेषुदेशेषुजन्मनस्यात्तदादेवादीनांकर्मनियंत्रितत्वंनस्यान्नचेच्छयाकश्चनदुःखेषुपततितस्माद्देवादीनामपिकर्मनियंत्रितत्वमेवेतिभावः ॥ १८ ॥ इच्छयादेवादीनांनानाजन्मभोक्तृत्वमितिवक्तारमुपहसति युगेयुगेष्विति ॥ १९ ॥ २० ॥ २१ ॥ अधोमुखवासंबाल्यावस्थायांगर्भेवा ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ यद्भीतास्त्विवतिपूर्वेणान्वयः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

॥ ३६ ॥ ३७ ॥ रथचक्रवत्परिवर्तनमित्यर्थः ॥ ३८ ॥ ३९ ॥ ४० ॥ इत्थंसर्वप्रपंचस्यसामान्यतःकर्मजन्यत्वमुपपादितम् ॥ अयंभावः ॥ सच्चिदानंदरूपिण्याभगवत्यानित्यतृप्ता याजगत्कल्पनेनकिंचित्फलमस्ति किंतुनानाकर्मभिर्बद्धाःप्राणिनोजगत्सर्जनाऽभावेविषयाभावाद्भोगासंभवेनतथैवबद्धाःस्युरितितेषांभोगेनकर्मक्षयार्थंस्वप्रयोजनाभावेऽपिकेवलंप्राणिदया मवलंब्यैवभगवत्याजगत्सर्जनेप्रवृत्तिः ॥ तत्रयथायथायस्यकर्मवर्ततेतथातथातस्यफलंदेयमिति नभगवत्यावैषम्यनैर्घृण्यदोषप्रसक्तिः ॥ नचप्रपंचेसतिकर्मोद्भवस्तस्मिन्सतितन्निमित्तः प्रपञ्चइत्यन्योन्याश्रयोवैषम्यनैर्घृण्यदोषप्रसक्तिश्चतदवस्थैवेतिचेन्न ॥ बीजांकुरवत्कर्मणांप्रपंचस्यचानादित्वात् ॥ यदाहुः—जीवईशोविशुद्धाचित्तथाजीवेशयोर्भिदा । अविद्यातच्चितोर्भे दःषडस्माकमनादयइति ॥ अतएवबृहदारण्यके पूर्वजन्मनिकृतकर्मोपासनस्ययजमानस्याहिरण्यगर्भपदप्राप्तौसत्यांकर्मबद्धत्वादेवेश्वरस्याऽपिहिरण्यगर्भस्यभयारत्यादिकंसोबिभेत्सनैवरे

रामावतारयोगेनदेवावानरतांगताः ॥ तथाकृष्णसहायार्थंदेवायादवतांगताः ॥ ३६ ॥ एवंयुगेयुगेविष्णुरवताराननेकशः ॥ करोतिधर्मरक्षार्थं ब्रह्मणाप्रेरितोभृशम् ॥ ३७ ॥ पुनःपुनर्हरेरेवंनानायोनिषुपार्थिव ॥ अवताराभवंत्यन्येरथचक्रवदद्भुताः ॥ ३८ ॥ दैत्यानांहननंकर्मकर्तव्यं हरिणास्वयम् ॥ अंशांशेनपृथिव्यांवैकृत्वाजन्ममहात्मना ॥ ३९ ॥ तदहंसंप्रवक्ष्यामिकृष्णजन्मकथांशुभाम् ॥ सएवभगवान्विष्णुरवतीर्णोयदोःकुले ॥ ४० ॥ कश्यपस्यमुनेरंशोवसुदेवःप्रतापवान् ॥ गोवृत्तिरभवद्राजन्पूर्वशापानुभावतः ॥ ४१ ॥ कश्यपस्यचद्वेपत्न्यौशापादत्रमहीतले ॥ अदितिःसुरसाचैवमासतुःपृथिवीपते ॥ ४२ ॥ देवकीरोहिणीचोभेभगिन्यौभरतर्षभ ॥ वरुणेनमहाञ्छापोदत्तःकोपादितिश्रुतम् ॥ ४३ ॥ राजोवाच॥ किंकृतंकश्यपेनाऽऽगोयेनशप्तोमहानृषिः ॥ सभार्यःसकथंजातस्तद्वदस्वमहामते ॥ ४४ ॥ कथंचभगवान्विष्णुस्तत्रजातोऽस्तिगोकुले ॥ वासीवैकुण्ठनिलयेरमापतिरखंडितः ॥ ४५ ॥ निदेशात्कस्यभगवान्वर्ततेप्रभुरव्ययः ॥ नारायणःसुरश्रेष्ठोयुगादिःसर्वधारकः ॥ ४६ ॥ सकथंसदनंत्यक्त्वाकर्मवानिवमानुषे ॥ करोतिजननंकस्मादत्रमेसंशयोमहान् ॥ ४७ ॥ प्राप्यमानुषदेहंतुकरोतिचविडंबनम्॥ भावान्नानाविधांस्तत्रमानुषेदुष्टजन्मनि ॥ ४८ ॥ कामःक्रोधोऽमर्षशोकौवैरंप्रीतिश्चकर्हिचित् ॥ सुखंदुःखंभयंनृणांदैन्यमार्जवमेवच ॥ ४९॥ दुष्कृतंसुकृतंचैववचनंहननंतथा ॥ पोषणंचलनंतापोविमर्शश्चविकत्थनम् ॥ ५० ॥ लोभोदंभस्तथामोहःकपटंशोचनंतथा ॥ एतेचान्येतथाभावामानुष्येसंभवंतिहि ॥ ५१ ॥

मेइत्यादिनोक्तम् ॥ अनंतरंचसोवेदाहंब्रह्मास्मि इत्यनेनतत्त्वज्ञानमप्युक्तम् ॥ यदाहिरण्यगर्भस्यापिकर्मबद्धत्वंतदातदवतारेषुहरिब्रह्मादिषुतदवतारावतारेषुरामकृष्णादिषुकर्मबद्धत्वे काकथेति ॥ अधुनाशापादिविशेषकर्मबद्धत्वंचवदन्पूर्वप्रश्नानामुत्तरमप्याह॥कश्यपस्यमुनेरंशइति ॥ गोवृत्तिःपशुपालवृत्तिः ॥४१॥ कश्यपस्यऋषेःपत्न्यावदितिःसुरसाचेत्येवंनाम्नाबभूवतुस्तेवरुणशापाद्देवकीरोहिण्यौजातेइत्यर्थः ॥ ४२ ॥ ४३॥ येनशप्तइति ॥ येनागसाऽपराधेनसभार्यःसऋषिःकथंशप्तोजातइत्यन्वयः ॥४४॥ गोकुलेवैकुण्ठापेक्षयाऽतिनिकृष्टे॥४५॥ कस्यनिदेशादाज्ञयैताहृशोवर्ततेभवतीत्यर्थः ॥४६॥४७॥४८॥ दुष्टत्वमेवोपपादयति कामःक्रोधइति॥४९॥वचनंविश्वासभाषणम् ॥ विमर्शोविचारः ॥ विकत्थनंवल्गनम्॥५०॥५१॥

॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ एवमिदंसर्वमनुभूतमित्यर्थः ॥ ५७ ॥ रक्षागृहेकारागृहे ॥ ५८ ॥ ५९ ॥ नह्येतत्स्वेच्छयाकश्चित्करोतिकिंत्वन्याऽधीनतयैवेत्याह । स्वेच्छ
येति ॥ ६० ॥ इतिश्रीदेवीभागवततिलकेचतुर्थस्कंधेद्वितीयोऽध्यायः ॥ २ ॥ सार्धपंचाऽधिकैः पंचाशद्भिः पद्यैरनंतरम् ॥ अदितेःशापकथनंविस्तरादिहवर्ण्यते ॥ १ ॥ देवकीकेनशापे
नजातेतिराज्ञापृष्टेव्यासउवाच । कारणानीति ॥ मुख्यंकारणंतुकर्मेत्युक्तमवांतरकारणानितुबहूनिसंतीत्यर्थः ॥ नहरेर्देवक्याएवकिंतुसर्वेषांदेवानामवतारेष्वित्यर्थः ॥ १ ॥ २ ॥ धेनु

सकथंभगवान्विष्णुस्त्यक्त्वासुखमनश्वरम् ॥ करोतिमानुषजन्मभावैरेतैरभिद्रुतम् ॥ ५२ ॥ किंसुखंमानुषंप्राप्यभुविजन्ममुनीश्वर ॥ किंनि
मित्तंहरिःसाक्षाद्गर्भवासंकरोतिवै ॥ ५३ ॥ गर्भदुःखंजन्मदुःखंबालभावेतथापुनः ॥ यौवनेकामजंदुःखंगार्हस्थ्येऽतिमहत्तरम् ॥ ५४ ॥ दुःखा
न्येतान्यवाप्नोतिमानुषेद्विजसत्तम ॥ कथंसभगवान्विष्णुरवतारान्पुनःपुनः ॥ ५५ ॥ प्राप्यरामाऽवतारंहिहरिणाब्रह्मयोनिना ॥ दुःखंमहत्तरं
प्राप्तंवनवासेऽतिदारुणे ॥ ५६ ॥ सीताविरहजंदुःखंसंग्रामश्चपुनःपुनः ॥ कांतात्यागोऽप्यनेनैवमनुभूतोमहात्मना ॥ ५७ ॥ तथाकृष्णाऽवतारेऽ
पिजन्मरक्षागृहेपुनः ॥ गोकुलेगमनंचैवगवांचारणमित्युत ॥ ५८ ॥ कंसस्यहननंकष्टाद्द्वारकागमनंपुनः ॥ नानासंसारदुःखानिमुक्तवान्भ
गवान्कथम् ॥ ५९ ॥ स्वेच्छयाकःप्रतीक्षेतमुक्तोदुःखानिज्ञानवान् ॥ संशयंछिंधिसर्वज्ञममचित्तप्रशांतये ॥ ६० ॥ इतिश्रीदे॰महापुराणेच
र्थस्कंधेद्वितीयोऽध्यायः ॥ २ ॥ ॥ व्यासउवाच ॥ कारणानिबहून्यत्राप्यवतारेहरेःकिल ॥ सर्वेषांचैवदेवानामंशाऽवतरणेष्वपि ॥ १ ॥
वसुदेवावतारस्यकारणंशृणुतत्त्वतः ॥ देवक्याश्चैवरोहिण्याअवतारस्यकारणम् ॥ २ ॥ एकदाकश्यपःश्रीमान्यज्ञार्थंधेनुमाहरत् ॥ याचितोऽ
यंबहुविधंनददौधेनुमुत्तमाम् ॥ ३ ॥ वरुणस्तुततोगत्वाब्रह्माणंजगतःप्रभुम् ॥ प्रणम्योवाचदीनात्मास्वदुःखंविनयान्वितः ॥ ४ ॥ किंकरो
मिमहाभागमत्तोऽसौनददातिगाम् ॥ शापोमयाविसृष्टोऽस्मैगोपालोभवमानुषे ॥ ५ ॥ भार्येद्वेअपितत्रैवभवेतांचातिदुःखिते ॥ यतोवत्सारु
दंत्यत्रमातृहीनाःसुदुःखिताः ॥ ६ ॥ मृतवत्साऽदितिस्तस्माद्भविष्यतिधरातले ॥ कारागारनिवासाचतेनापिबहुदुःखिता ॥ ७ ॥ व्यासउवा
च ॥ तच्छ्रुत्वावचनंतस्ययादोनाथस्यपद्मभूः ॥ समाहूयमुनिंतत्रतमुवाचप्रजापतिः ॥ ८ ॥ कस्मात्त्वयामहाभागलोकपालस्यधेनवः ॥
हृताःपुनर्नदत्ताश्चकिमन्यायंकरोषिवै ॥ ९ ॥ जानन्न्यायंमहाभागपरवित्तापहारणम् ॥ कृतवान्कथमन्यायंसर्वज्ञोऽसिमहामते ॥ ॥ १० ॥
अहोलोभस्यमहिमामहतोऽपिनमुंचति ॥ लोभंनरकदंनूनंपापाकरमसंमतम् ॥ ११ ॥

मितिजात्येकवचनम् उत्तरत्रधेनवइतिवचनात् ॥ वरुणस्यसंबंधिनीमाहरदाहृतवान् ॥ वरुणेनस्वधेन्वर्थंयाचमानोऽपिकश्यपोनददावित्यर्थः ॥ ३ ॥ ४ ॥ मत्तउन्मत्तःअतोमयाशा
पोविसृष्टः ॥ ५ ॥ तत्रैवमानुषेएव ॥ वत्सारुदंतित्वयाऽऽदत्तानांगवामित्यर्थः ॥ ६ ॥ तस्मात् तेनकारणेनेत्यर्थः ॥ तेनापितेनैवकारणेनइतिशापेदत्तेऽपिनददातीत्याश्चर्यंब्रह्माणंप्रत्यु
क्तवानितिभावः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ अहोलोभस्येति ॥ योलोभोमहतोऽपीतिद्वितीयाबहुवचनम् ॥ तानपिनमुंचतीत्यर्थः ॥ लोभंनरकदमित्यस्योत्तरत्रतमित्यनेनाऽन्वयः ॥ ११ ॥

॥ १२ ॥ १३ ॥ अमेध्यवरइतिच्छेदः । यतोदुरात्मनाकृतस्नेहस्ततोदुराचारइत्यर्थः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ अदितेःशापांतरमप्याह । तथेति ॥ १८ ॥ शोकस्त्विति ॥

कश्यपोऽपिनतंत्यक्तुंसमर्थःकिंकरोम्यहम् ॥ सर्वदेवाधिकस्तस्माल्लोभोवैकलितोमया॥१२॥धन्यास्तेमुनयःशांताजितोयैर्लोभएवच ॥ वैखानसैःशमपरैःप्रतिग्रहपराङ्मुखैः॥१३॥संसारेबलवाञ्छत्रुर्लोभोऽमेध्यवरःसदा॥ कश्यपोऽपिदुराचारःकृतस्नेहोदुरात्मना ॥१४॥ ब्रह्मापितंशशापाऽथकश्यपंमुनिसत्तमम्॥मर्यादारक्षणार्थंहिपौत्रंपरमवल्लभम् ॥१५॥ अंशेनत्वंपृथिव्यांवैप्राप्यजन्मयदोःकुले॥भार्याभ्यांसंयुतस्तत्रगोपालत्वंकरिष्यसि॥१६॥व्यासउवाच॥एवंशप्तःकश्यपोऽसौवरुणेनचब्रह्मणा ॥ अंशावतरणार्थायभूभारहरणायच॥१७॥तथादित्याऽदितिःशप्ताशोकसंतप्तयाभृशम्॥जाताजाताविनश्येरंस्तवपुत्रास्तुसप्तवै॥१८॥जनमेजयउवाच ॥ कस्मादित्याचभगिनीशप्तेंद्रजननीमुने॥कारणंवदशापेचशोकस्तुमुनिसत्तम॥१९॥सूतउवाच॥पारीक्षितेनपृष्टस्तुव्यासःसत्यवतीसुतः॥ राजानंप्रत्युवाचेदंकारणंसुसमाहितः ॥ २० ॥ व्यासउवाच॥राजन्दक्षसुतेद्वेतुदितिश्चाऽदितिरुत्तमे॥कश्यपस्यप्रियेभार्येबभूवतुरुरुक्रमे॥२१॥अदित्यांमघवापुत्रोयथाऽभूदतिवीर्यवान् ॥ तदातुताहृशंपुत्रंचकमेदितिरोजसा॥२२॥पतिमाहाऽसितापांगीपुत्रंमेदेहिमानद॥इंद्रतुल्यबलंवीरंधर्मिष्ठंवीर्यवत्तमम् ॥२३॥ तामुवाचमुनिःकान्तेस्वस्थाभवमयोदिते॥व्रतांतेभवितातुभ्यंशतक्रतुसमःसुतः॥२४॥सातथेतिप्रतिश्रुत्यचकारव्रतमुत्तमम् ॥ निषिक्तंमुनिनागर्भंबिभ्राणासुमनोहरम् ॥२५॥ भूमौचकारशयनंपयोव्रतपरायणा॥पवित्राधारणायुक्ताबभूववरवर्णिनी॥२६॥ एवंजातःसुसंपूर्णोयदागर्भोऽतिवीर्यवान्॥शुभ्रांशुमतिदीप्तांगींदितिंदृष्ट्वातुदुःखिता॥२७॥मघवत्सदृशःपुत्रोभविष्यतिमहाबलः॥दित्यास्तदाममसुतस्तेजोहीनोभवेत्किल ॥२८॥ इतिचिंतापरापुत्रमिंद्रंचोवाचमानिनी॥शत्रुस्तेऽद्यसमुत्पन्नोदितिगर्भेऽतिवीर्यवान्॥२९॥उपायंकुरुनाशायशत्रोरद्यविचिंत्यच॥उत्पत्तिरेवहंतव्यादित्यागर्भस्यशोभन ॥३०॥ वीक्ष्यतामसितापांगींसपत्नीभावमास्थिताम् ॥ दुनोतिहृदयेचिंतासुखमर्मविनाशिनी॥३१॥राजयक्ष्मेवसंवृद्धोनष्टोनैवभवेद्रिपुः ॥ तस्मादंकुरितंहन्याद्बुद्धिमानहितंकिल ॥३२॥ लोहशंकुरिवक्षिप्तोगर्भोवैहृदयेमम ॥ येनकेनाऽप्युपायेनपातयाद्यशतक्रतो ॥ ३३ ॥ सामदानबलेनापिहिंसनीयस्त्वयासुतः ॥ दित्यागर्भोमहाभागममचेदिच्छसिप्रियम् ॥ ३४ ॥ व्यासउवाच ॥ श्रुत्वामातृवचःशक्रोविचिन्त्यमनसाततः ॥ जगामापरमातुःससमीपममराधिपः ॥ ३५ ॥

अस्मिन्विषयेममशोकोभवतीत्यर्थः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ मयोदितंयद्व्रतंतस्यांतेइत्यर्थः ॥ तस्याःकिंचित्पुत्रजनकंव्रतमुक्तमितितात्पर्यम् ॥ २४ ॥ २५ ॥ २६ ॥ शुभ्रांशुंश्वेतवर्णां गर्भिणीस्वभावत्वाच्छुक्लवर्णस्य ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ अहितंशत्रुम् ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

॥ ३६ ॥ ३७ ॥ ३८ ॥ अदित्याममममात्रासहतवभेदःकिमपिमेनास्तीत्यर्थः ॥ ३९ ॥ ४० ॥ ४१ ॥ पविनायकःपविधारकः ॥४२॥ मघवानमुमिति ॥ मघवाबहुलमितिसिद्धम् ॥ अमुंबालम् ॥ ४३ ॥ सप्तधेति ॥ सप्तशकलेषुमध्येएकैकंशकलंसप्तधासप्तधाकृत्वेत्यर्थः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ मरीचिनंदनःकश्यपः ॥ ५० ॥ ५१ ॥ मघवत्सखाः ॥ राजाहःसखिभ्यष्टजितिटच्समासांतः ॥ ५२ ॥ ५३ ॥ इयमदितिः ॥ ५४ ॥ ५५ ॥ इतिश्रीदेवीभागवततिलकेचतुर्थस्कंधेतृतीयोऽध्यायः ॥ ३ ॥ अर्धाधिकैर्द्विपंचाश

ववदेविनयात्पादौदित्याःपापमतिर्नृप ॥ प्रोवाचविनयेनाऽसौमधुरंविषगर्भितम् ॥३६॥ इंद्रउवाच॥मातस्त्वंव्रतयुक्ताऽसिक्षीणदेहाऽतिदुर्बला॥ सेवार्थमिहसंप्राप्तःकिंकर्तव्यंवदस्वमे ॥ ३७ ॥ पादसंवाहनंतेऽहंकरिष्यामिपतिव्रते ॥ गुरुशुश्रूषणात्पुण्यंलभतेगतिमक्षयाम् ॥ ३८ ॥ नमेकिमपिभेदोऽस्तितथादित्याशपेकिल ॥ इत्युक्त्वाचरणौस्पृष्ट्वासंवाहनपरोऽभवत् ॥ ३९ ॥ संवाहनसुखंप्राप्यनिद्रामापसुलोचना ॥ श्रांताव्रतकृशासुप्ताविश्वस्तापरमासती ॥ ४० ॥ तांनिद्रावशमापन्नांविलोक्यप्राविशत्तनुम् ॥ रूपंकृत्वाऽतिसूक्ष्मंचशस्त्रपाणिःसमाहितः ॥ ४१ ॥ उदरंप्रविवेशाऽऽशुतस्यायोगबलेनवै ॥ गर्भंचकर्तवज्रेणसप्तधापविनायकः ॥ ४२ ॥ रुरोदचतदाबालोवज्रेणाभिहतस्तथा ॥ मारुदेतिशनैर्वाक्यमुवाचमघवानमुम् ॥ ४३ ॥ शकलानिपुनःसप्तसप्तधाकर्तितानिच ॥ तदाचैकोनपंचाशन्मरुतश्चाभवन्नृप ॥ ४४ ॥ तदाप्रबुद्धासुदतीज्ञात्वागर्भंतथाकृतम् ॥ इंद्रेणच्छलरूपेणचुकोपभृशदुःखिता ॥४५॥ भगिनीकृतंतुसाबुद्ध्वाशशापकुपितातदा॥अदितिंमघवंतंचसत्यव्रतपरायणा ॥४६॥यथामेकर्तितोगर्भस्तवपुत्रेणछद्मना ॥ तथातन्नाशमायातुराज्यंत्रिभुवनस्यतु ॥ ४७ ॥ यथागुप्तेनपापेनममगर्भोनिपातितः ॥ अदित्यापापचारिण्यायथामेघातितःसुतः ॥ ४८ ॥ तस्याःपुत्रास्तुनश्यंतुजाताजाताःपुनःपुनः ॥ कारागारेवसत्वेषापुत्रशोकातुराभृशम् ॥४९॥ अन्यजन्मनिचाऽप्येवमृतापत्याभविष्यति ॥ व्यासउवाच ॥ इत्युत्सृष्टंतदाश्रुत्वाशापंमरीचिनंदनः ॥ ५० ॥ उवाचप्रणयोपेतोवचनंशमयन्निव ॥ माकोपंकुरुकल्याणिपुत्रास्तेबलवत्तराः ॥५१॥ भविष्यंतिसुराःसर्वेमरुतोमघवत्सखाः ॥ शापोऽयंतववामोरुत्वष्टाविंशेऽथद्वापरे ॥ ॥ ५२ ॥ अंशेनमानुषंजन्मप्राप्यभोक्ष्यतिभामिनी ॥ वरुणेनाऽपिदत्तोऽस्तिशापःसंतापितेनच ॥ ५३ ॥ उभयोःशापयोगेनमानुषीयंभविष्यति ॥ व्यासउवाच ॥ पतिनाऽऽश्वासितादेवीसंतुष्टासाऽभवत्तदा ॥ ५४ ॥ नोवाचविप्रियंकिंचित्ततःसावरवर्णिनी ॥ इतितेकथितंराजन्पूर्वशापस्यकारणम् ॥ ५५ ॥ अदितिर्देवकीजातास्वांशेननृपसत्तम ॥ ॥ इतिश्रीदेवीभागवतेमहापुराणेचतुर्थस्कंधेतृतीयोऽध्यायः ॥३॥ छ॥ राजोवाच ॥ विस्मितोऽस्मिमहाभागश्रुत्वाऽऽख्यानंमहामते ॥ संसारोऽयंपापरूपःकथंमुच्येतबंधनात् ॥ १ ॥

त्पद्यैरथनिरंतरम् ॥ अधर्मेंचस्थितंसर्वजगदित्येतदीर्यते ॥ १ ॥ पूर्वाध्यायेइंद्रादीनामपिमहतांगर्भहननाद्यधर्माचरणंदृष्ट्वाविस्मितोराजापृच्छति । विस्मितोस्मीति ॥ अयंपापरूपःसंसारः ॥ अस्माद्बंधनात्संसाररूपान्मनुष्यःकथंमुच्येत ॥ नास्मान्मोचनाशाभवतीत्यर्थः ॥ १ ॥

॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ तमादाययथावाशुइति ॥ ननु जातंजातंसुतंतुभ्यंनदास्यामियदिप्रभो ॥ कुंभीपाकेतदाघोरेपतंतुममपूर्वजाइतिवसुदेवेनप्रतिज्ञा तत्वात्स्वसत्यपालनार्थंकंसायपुत्रःकथंनदत्तइतिचेन्न स्वसत्यत्वपालनापेक्षयासत्यसंकल्पस्याऽऽकाशवाणीरूपेणवदतोभगवतोवचनपालनस्याऽभ्यर्हितत्वात्पितॄणामुद्धारंतुभगवान्करि ष्यतीत्याशयात् ॥ २९ ॥ कटिदघ्नीकटिप्रमाणा ॥ प्रमाणेद्वयसजितिदघ्नच्प्रत्ययः ॥ ३० ॥ ३१ ॥ पशुसंज्ञितांगवांविभूतिमित्यर्थः ॥ ३२ ॥ ३३ ॥ तत्रागत्येति ॥ देवकार्यार्थं

पतिंप्राहमहाभागाहर्षोत्फुल्लकलेवरा ॥ पश्यपुत्रमुखंकांतदुर्लभंहितवप्रभो ॥ २२ ॥ अद्यैनंकालरूपोऽसौघातयिष्यतिभ्रातृजः ॥ वसुदेवस्तथे त्युक्त्वातमादायकरेसुतम् ॥ २३ ॥ अपश्यच्चाऽऽननंतस्यसुतस्याद्भुतकर्मणः ॥ वीक्ष्यपुत्रमुखंशौरिश्चिंताविष्टोबभूवह ॥ २४ ॥ किंकरोमिक थंनस्याद्दुःखमस्यकृतेमम ॥ एवंचिंताऽऽतुरेतस्मिन्वागुवाचाशरीरिणी ॥ २५ ॥ वसुदेवंसमाभाष्यगगनेविशदाक्षरा ॥ वसुदेवगृहीत्वैनंगोकु लंनयसत्वरः ॥ २६ ॥ रक्षपालास्तथासर्वेमयानिद्राविमोहिताः ॥ विवृतानिकृतान्यष्टकपाटानिचशृंखलाः ॥ २७ ॥ मुक्त्वेनंनंदगेहेत्वंयोग मायांसमानय ॥ श्रुत्वैवंवसुदेवस्तुतस्मिन्कारागृहेगतः॥२८॥विवृतंद्वारमालोक्यबभूवतरसानृप॥तमादाययथावाशुद्वारपालैरलक्षितः॥२९॥ कालिंदीतटमासाद्यपूरंदृष्ट्वासुनिश्चितम् ॥ तदैवकटिदघ्नीसाबभूवाऽऽशुसरिद्वरा ॥ ३० ॥ योगमायाप्रभावेणतताराऽऽनकदुंदुभिः ॥ गत्वातु गोकुलंशौरिर्निशीथेनिर्जनेपथि ॥ ३१ ॥ नन्दद्वारेस्थितःपश्यन्विभूतिंपशुसंज्ञिताम् ॥ तदैवतत्रसंजातायशोदागर्भसंभवा ॥ ३२ ॥ योगमा यांशजादेवीत्रिगुणादिव्यरूपिणी ॥ जातांतांबालिकांदिव्यांगृहीत्वाकरपंकजे ॥ ३३ ॥ तत्राऽऽगत्यददौदेवीसैरंध्रीरूपधारिणी ॥ वसुदेवःसुतं दत्त्वासैरंध्रीकरपंकजे ॥ ३४ ॥ तामादाययौशीघ्रंबालिकांमुदिताऽऽशयः ॥ कारागारेततोगत्वादेवक्याःशयनेसुताम् ॥ ३५ ॥ निक्षिप्यसं स्थितःपार्श्वेचिंताविष्टोभयाऽऽतुरः ॥ रुरोदसुस्वरंकन्यातदैवाऽऽगतसंज्ञकाः ॥३६॥ उत्तस्थुःसेवकाराज्ञःश्रुत्वातद्रुदितंनिशि ॥ तमूचुर्भूपतिं गत्वात्वरितास्तेतिविह्वलाः ॥ ३७ ॥ देवक्याश्चसुतोजातःशीघ्रमेहिमहामते ॥ तदाकर्ण्यवचस्तेषांशीघ्रंभोजपतिर्ययौ॥३८॥प्रावृतंद्वारमालो क्यवसुदेवमथाह्वयत्॥ कंसउवाच॥सुतमानयदेवक्यावसुदेवमहामते॥३९॥मृत्युर्मेचाऽष्टमोगर्भस्तन्निहन्मिरिपुंहरिम् ॥ व्यासउवाच ॥ श्रुत्वा कंसवचःशौरिर्भयत्रस्तविलोचनः ॥४० ॥ तामादायसुतांपाणौददौचाऽऽशुरुदन्निव ॥ दृष्ट्वाऽथदारिकांराजाविस्मयंपरमंगतः ॥ ४१ ॥ देववा णीवृथाजातानारदस्यचभाषितम् ॥ वसुदेवःकथंकुर्यादनृतंसंकटेस्थितः ॥ ४२ ॥ रक्षपालाश्चमेसर्वेसावधानानसंशयः ॥ कुतोऽत्रकन्यकाका मंक्षगतःससुतःकिल ॥ ४३ ॥ संदेहोऽत्रनकर्तव्यःकालस्यविषमागतिः ॥ इतिसंचिंत्यतांबालांगृहीत्वापादयोःखलः ॥ ४४ ॥

सर्वेश्वरीदेवीसैरंध्रीरूपधारिणीसतीतांबालांजातांकरपंकजेगृहीत्वातत्रवसुदेवसमीपआगत्यवसुदेवायददावित्यन्वयः ॥ वसुदेवोपिसुतंसैरंध्रीकरपंकजेदत्त्वातांबालिकामादाययथावि त्वन्वयः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ॥ ४२ ॥ ४३ ॥ ४४ ॥

॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ॥ इतिश्रीदे० भा० ति० चतु० त्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ द्विषष्टिश्लोकवर्यैस्तुकाश्चित्कृष्णकथाःशुभाः ॥ कथ्यन्तेमोहिताःसर्वेमाययेतिबुभुत्सया ॥ १ ॥ पूर्वाध्याये पूतनैषाव्रजत्वद्यबालघ्नीनन्दगोकुलमित्युक्तम् तत्रगोकुलेकृष्णाविर्भावज्ञानंकंसस्यकथंजातमितिराज्ञोमनासिशंकास्यात्तान्निरासार्थंस्वयमेवव्यासआह । प्रातरिति ॥ किंवदंतीजनश्रुतिःसाश्रुताचारमुखादपिपुत्रोत्सवःश्रुतइत्यर्थः ॥ १ ॥ द्वितीयंज्ञानकारणमाह । जानातीति ॥ २ ॥ तेनकारणेनकंसोगो

पोथयामासपाषाणेनिर्घृणःकुलपांसनः ॥ साकरान्निःसृताबालायया्वाकाशमंडलम् ॥ ४५ ॥ दिव्यरूपातदाभूत्वातमुवाचमृदुस्वना ॥ किंमयाहतयापापजातस्तेबलवान्रिपुः ॥ ४६ ॥ हनिष्यतिदुराराध्यःसर्वथात्वांनराधमम् ॥ इत्युक्त्वासागताकन्यागगनंकामगाशिवा ॥ ४७ ॥ कंसस्तुविस्मयाऽऽविष्टोगतोनिजगृहंतदा ॥ आनाय्यदानवान्सर्वानिदंवचनमब्रवीत् ॥ ४८ ॥ बकधेनुकवत्सादीन्क्रोधाविष्टोभयाऽतुरः ॥ गच्छंतुदानवाःसर्वेममकार्यार्थसिद्धये ॥ ४९ ॥ जातमात्राश्चहंतव्याबालकायत्रकुत्रचित् ॥ पूतनैषाव्रजत्वद्यबालघ्नीनंदगोकुलम् ॥ ५० ॥ जातमात्रान्विनिघ्नंतीशिशूंस्तत्रममाऽऽज्ञया ॥ धेनुकोवत्सकःकेशीप्रलंबोबकएवच ॥ ५१ ॥ सर्वेतिष्ठंतुतत्रैवममकार्यचिकीर्षया ॥ इत्याऽऽज्ञाप्याऽसुरान्कंसोययौनिजगृहंखलः ॥ ५२ ॥ चिंताविष्टोऽतिदीनात्माचिंतयित्वैवतंपुनः ॥ इतिश्रीदेवीभागवतेमहापुराणेचतुर्थस्कंधेत्रयोविंशोऽध्यायः ॥ २३ ॥ व्यासउवाच ॥ प्रातर्नंदगृहेजातःपुत्रजन्ममहोत्सवः॥किंवदंत्यथकंसेनश्रुताचारमुखादपि ॥ १ ॥ जानातिवसुदेवस्यदारास्तत्रवसंतिहि ॥ पशवोदासवर्गश्चसर्वेतेनंदगोकुले ॥ २ ॥ तेनशंकासमाविष्टोगोकुलंप्रतिभारत ॥ नारदेनाऽपितत्सर्वंकथितंकारणंपुरा ॥ ३ ॥ गोकुलेयेचनंदाद्यास्तत्पन्यश्चसुरांशजाः ॥ देवकीवसुदेवाद्याःसर्वेतेशत्रवःकिल ॥ ४ ॥ इतिनारदवाक्येनबोधितोऽसौकुलाऽधमः ॥ जातःकोपमनाराजन्कंसःपरमपापकृत् ॥ ५ ॥ पूतनानिहतातत्रकृष्णेनाऽमिततेजसा ॥ बकोवत्सासुरश्चाऽपिधेनुकश्चमहाबलः ॥ ६ ॥ प्रलंबोनिहतस्तेनतथागोवर्धनोधृतः ॥ श्रुत्वैतत्कर्मकंसस्तुमेनेमरणमात्मनः ॥ ७ ॥ तथाविनिहतःकेशीज्ञात्वाकंसोऽतिदुर्मनाः ॥ धनुर्यागमिषेणाऽऽशुतावानेतुंप्रचक्रमे ॥ ८ ॥ अक्रूरंप्रेषयामासक्रूरःपापमतिस्तदा ॥ आनेतुंरामकृष्णौचवधायाऽमितविक्रमौ ॥ ९ ॥ रथमारोप्यगोपालौगोकुलाद्गांदिनीसुतः ॥ आगतोमथुरायांतुकंसादेशेस्थितःकिल ॥ १० ॥ तावागत्यतदातत्रधनुर्भंगंचचक्रतुः ॥ हत्वाऽथरजकंकामंगं चाणूरमुष्टिकम् ॥ ११ ॥ शलंचतोशलंचैवनिजघानहरिस्तदा ॥ जघानकंसंदेवेशःकेशेष्वाकृष्यलीलया ॥ १२ ॥ पितरौमोचयित्वाऽथगतदुःखौचकारह ॥ उग्रसेनायराज्यंतददावरिनिषूदनः॥ १३॥वसुदेवस्तयोस्तत्रमौंजीबन्धनपूर्वकम्॥कारयामासविधिवद्व्रतबंधंमहामनाः॥ १४॥

कुलंप्रतिकृष्णजन्मशंकयासमाविष्टोयुक्तोऽभवदित्यर्थः ॥ तृतीयंज्ञानकारणंप्राह । नारदेनेति ॥ कारणंज्ञानकारणमित्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥ इत्थंगोकुलेकृष्णाविर्भावज्ञानकारणंकंसस्योपपाद्यकृष्णजन्मोत्तरंकृष्णवृत्तंकिंचिद्वर्णयति । पूतनेति ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ गांदिनीसुतोऽक्रूरः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

॥ १५ ॥ १६ ॥ जामातृवधःकंसवधः ॥ १७ ॥ ससप्तेति ॥ कृष्णेनसंग्रामंसप्तदशवारमासाद्यकृत्वाजरासंधोमधुपुर्यांनिवासिनाकृष्णेनजितइत्यन्वयः ॥ १८ ॥ १९ ॥ २० ॥

उपनीतौतदातौतुगतौसांदीपनालयम् ॥ विद्याःसर्वाःसमभ्यस्यमथुरामागतौपुनः ॥ १५ ॥ जातौद्वादशवर्षीयौकृतविद्यौमहाबलौ ॥ मथुरा यांस्थितौवीरौसुतावानकदुंदुभेः ॥ १६ ॥ मागधस्तुजरासंधोजामातृवधदुःखितः ॥ कृत्वासैन्यसमाजंसमथुरामागतःपुरीम् ॥१७॥ ससप्त दशवारंतुकृष्णेनकृतबुद्धिना ॥ जितःसंग्राममासाद्यमधुपुर्यांनिवासिना ॥ १८ ॥ पश्चाच्चप्रेरितस्तेनसकालयवनाऽभिधः ॥ सर्वम्लेच्छा धिपःशूरोयादवानांभयंकरः ॥१९॥ श्रुत्वायवनमायांतंकृष्णःसर्वान्यदूत्तमान् ॥ आनाय्यचतथाराममुवाचमधुसूदनः ॥ २० ॥ भयंनोऽत्र समुत्पन्नंजरासंधान्महाबलात् ॥ किंकर्तव्यंमहाभागायवनःसमुपैतिवै ॥ २१ ॥ प्राणत्राणंप्रकर्तव्यंत्यक्त्वागेहंबलंधनम् ॥ सुखेनस्थीयतेय त्रसदेशःखलुपैतृकः ॥ २२ ॥ सदोद्वेगकरःकामंकिंकर्तव्यःकुलोचितः ॥ शैलसागरसान्निध्येस्थातव्यंसुखमिच्छता ॥ २३ ॥ यत्रवैरिभ यंनस्यात्स्थातव्यतत्रपंडितैः ॥ शेषशय्यांसमाश्रित्यहरिःस्वपितिसागरे ॥ २४ ॥ तथैवचभयाद्भीतःकैलासेत्रिपुरार्दनः ॥ तस्मान्नाऽत्रैवस्था तव्यमस्माभिःशत्रुतापितैः ॥ २५ ॥ द्वारवत्यांगमिष्यामःसहिताःसर्वएववै ॥ कथितागरुडेनाऽद्यरम्याद्वारवतीपुरी ॥ २६॥ रेवताचलसांनि ध्येसिंधुकूलेमनोहरा ॥ व्यासउवाच ॥ तच्छ्रुत्वावचनंतथ्यंसर्वेयादवपुंगवाः ॥ २७ ॥ गमनायमतिंचक्रुःसकुटुंबाःसवाहनाः ॥ शकटानित थोष्ट्राश्ववाम्यश्वमहिषास्तथा॥२८॥धनपूर्णानिकृत्वातेनिर्ययुर्नगराद्बहिः। रामकृष्णौपुरस्कृत्यसर्वेतेसपरिच्छदाः॥२९॥अग्रेकृत्वाप्रजाःसर्वा श्चेलुःसर्वेयदूत्तमाः।कतिचिद्दिवसैःप्रापुःपुरींद्वारवतींकिल॥३०॥शिल्पिभिःकारयामासजीर्णोद्धारंहिमाधवः।संस्थाप्ययादवांस्तत्रतावेतौबलके तिवौ॥३१॥तरसामथुरामेत्यसंस्थितौनिर्जनांपुरीम् ॥ तदातत्रैवसंप्राप्तोबलवान्यवनाधिपः॥३२॥ ज्ञात्वैनमागतंकृष्णोनिर्ययौनगराद्बहिः॥प दातिरग्रेतस्याऽभूद्यवनस्यजनार्दनः॥३३॥पीतांबरधरःश्रीमान्प्राहसन्मधुसूदनः॥तंदृष्ट्वापुरतोयांतंकृष्णंकमललोचनम् ॥३४॥ यवनोऽपिपदा शःसन्पृष्ठतोऽनुगतःखलः॥प्रसुप्तोयत्रराजर्षिर्मुचुकुंदोमहाबलः॥३५॥प्रययौभगवांस्तत्रसकालयवनोहरिः ॥ तत्रैवांतर्दधेविष्णुर्मुचुकुंदंसमीक्ष्य च॥३६॥तत्रैवयवनःप्राप्तःसुप्तभूतमपश्यत॥मत्वातंवासुदेवंसपादेनाताडयन्नृपम् ॥३७॥ प्रबुद्धःक्रोधरक्ताक्षस्तंददाहमहाबलः॥ तंदग्ध्वामुचुकुं दोऽथददर्शकमलेक्षणम्॥३८॥वासुदेवंसुदेवेशंप्रणम्यप्रस्थितोवनम्॥जगामद्वारकांकृष्णोबलदेवसमन्वितः।३९॥उग्रसेनंनृपंकृत्वाविजहारयथा रुचि॥ अहरद्रुक्मिणींकामंशिशुपालस्वयंवरात्॥४०॥राक्षसेनविवाहेनचक्रेदारविधिंहरिः॥ततोजांबवतींसत्यांमित्रविंदांचभामिनीम्॥४१॥

॥ २१ ॥ २२ ॥ २३ ॥ अतएवक्षीराब्धौकैलासेचहरिहरौस्थितावित्याह । शेषेति ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ अहरदिति ॥ शिशुपालस्यस्वयंवराद्रुक्मिणीमहरत् ॥ ४० ॥ तदनंतरंराक्षसेनविवाहेनदारविधिंचक्रेहरिरित्यर्थः ॥ ४१ ॥

॥ ४२ ॥ ॥४३ ॥ ४४ ॥ ४५ ॥ वृत्रासुरादयइति ॥ ययावृत्रासुरादयोऽत्रादिपदेनरक्तासुरादयोगृह्यंते तेदैत्यालीलयैवहतास्तांदेवीमितिपूर्वेणान्वयः ॥ ४६ ॥ ४७ ॥ मातरिति ॥ मया नारायणसंज्ञकेन ॥ हेजननिसभक्तिभावस्तेत्वयाविस्मृतःकिम् ॥४८॥ दुष्टमनसाशत्रुणाअथवाकेनचित्कौतुकान्मानापहारकरणायममाभिमानापहारणंकर्तुंसूतीगृहादपहृतइत्यर्थः॥ उभयथाऽऽपिहेअंब भक्तजनस्यलज्जातवयुक्ताअपेक्षितेत्यर्थः॥ ४९ ॥ ममैवदोषात्प्रारब्धरूपादित्यर्थः ॥ ५० ॥ ५१ ॥ नोवेद्म्यहमिति ॥ यदाहमेवसर्वेश्वरत्वेनाभिमतोनवेद्मितेचरितम तदाल्पविदेवाल्पज्ञएवदेहीकोवेदनकोपीत्यर्थः ॥ हर्तापुत्रहरणकर्ताभटैर्नचवीक्षितइत्यर्थः ॥ इयंतवकल्पिताजवनिकामायांऽतर्धानपटोभवतीत्यर्थः ॥ ५२ ॥ केनापिप्रकारेणान्येनपुत्रोममनीतइतिनैवप्रतिभात्यथपुत्रस्तुनदृश्यतेतस्मात्तवैवेयंमायेतिभावः॥नन्वेतादृशीमायामयाकदार्शिताऽस्तीतिचेद्बलदेवजन्मसमयइत्याह । चित्रमिति ॥ ममपुरतोममैवाग्रदेशे

कालिंदींलक्ष्मणांभद्रांतथानाग्नजितींशुभाम्॥पृथक्पृथक्समानीयाऽप्युपयेमेजनार्दनः॥४२॥ अष्टावेवमहीपालपत्न्यःपरमशोभनाः॥प्रासूतरुक्मिणीपुत्रंप्रद्युम्नंचारुदर्शनम्॥४३॥जातकर्मादिकंतस्यचकारमधुसूदनः॥हृतोसौसूतिकागेहाच्छंबरेणबलीयसा ॥ ४४ ॥ नीतश्चस्वपुरींबालो मायावत्यैसमर्पितः॥ वासुदेवोहृतंदृष्ट्वापुत्रंशोकसमन्वितः ॥४५॥ जगामशरणंदेवींभक्तियुक्तेनचेतसा॥वृत्रासुरादयोदैत्यालीलयैवययाहताः॥ ॥४६॥ततोऽसौयोगमायायाश्चकारपरमांस्तुतिम्॥वचोभिःपरमोदारैरक्षरैःस्तवनैःशुभैः ॥ ४७॥ श्रीकृष्णउवाच॥मातर्मयातितपसापरितोषितात्वंप्राग्जन्मनिप्रसुमनादिभिरर्चिताऽसि॥धर्मात्मजेनबदरीवनखंडमध्येकिंविस्मृतोजननितेत्वयिभक्तिभावः ॥४८ ॥ सूतीगृहादपहृतःकिमु बालकोमेकेनाऽपिदुष्टमनसाऽप्यथकौतुकाद्वा ॥ मानापहारकरणायममाद्यनूनंलज्जातवांबखलुभक्तजनस्ययुक्ता ॥४९॥ दुर्गोमहानतितरांनगरीसुगुप्तातत्राऽपिमेऽतिसदनंकिलमध्यभागे ॥ अंतःपुरेचपिहितंननुसूतिगेहंबालोहृतःखलुतथाऽपिममैवदोषात् ॥५०॥नाऽहंगतःपरपुरंनचयादवाश्चरक्षावतीचनगरीकिलवीरवर्यैः ॥ मायातवैवजननिप्रकटप्रभावामेबालकःपरिहृतःकुहकेनकेन ॥ ५१ ॥ नोवेद्म्यहंजननितेचरितंसुगुप्तंकोवेदसंदमतिरल्पविदेवदेही ॥ क्वाऽसौगतोममभटैर्नचवीक्षितोवाहर्ताऽबिकेजवनिकातवकल्पितेयम् ॥ ५२॥ चित्रंननतेऽत्रपुरतोममगर्भमातृगर्भानीतस्त्वयाऽर्धसमयेकिलमायथाऽसौ ॥ यंरोहिणीहलधरंसुषुवेप्रसिद्धंदूरेस्थितापतिपरामिथुनंविनाऽपि॥५३॥सृष्टिंकरोषिजगतामनुपालनंचनाशंतथैवपुनरप्यनिशंगुणैस्त्वम् ॥ कोवेदतेंऽबचरितंदुरितांतकारिप्रायेणसर्वमखिलंविहितंत्वयैतत् ॥ ५४॥ उत्पाद्यपुत्रजननप्रभवंप्रमोदंदत्त्वापुनर्विरहजंकिलदुःखभारम् ॥ त्वंक्रीडसेसुललितैःखलुतैर्विहारैर्नोचेत्कथंममसुताप्तिरतिर्वृथास्यात् ॥ ५५ ॥

ऽर्धसमयेदशमासात्मकजन्मसमयस्यार्धसमयेपंचमेमासिमातृगर्भाद्देवकीगर्भादसौपुत्रस्त्वयानीतः ॥ कोसावितिचेत्तत्राह । यंरोहिणीति ॥ असावित्यर्थः ॥ ननुदेवक्युदरान्मयानीतःपुत्रस्तदुदरेस्थापितइतिकुतस्तस्याःपत्युःसकाशादेवपुत्रोजातइत्यस्त्विवतिचेत्तत्राऽऽह मिथुनंविनापीति ॥ पत्युर्वसुदेवस्यकारागृहेस्थितत्वेनतत्संयोगासंभवेनपुत्रस्यतन्मिथुनजन्यत्वाभावात् ॥ ननुव्यभिचारेणैवपुत्रोजातोस्त्विवतिचेत्तत्राऽऽह । पतिपरेति ॥ पतिव्रतेत्यर्थः ॥ ततश्चनव्यभिचारसंभवः ॥ तथाचान्यस्याउदराद्गर्भापहरणकर्त्र्यास्तवसूतीगृहात्पुत्राहरणेनचित्रंनाश्चर्यमित्यर्थः ॥ ५३ ॥ किंचजगत्सृष्टिस्थितिसंहारकर्त्र्यास्तवैतादृशकरणेकिंचित्रमित्यभिप्रायेणाऽऽह । सृष्टिंकरोषीति ॥ ५४ ॥ ५५ ॥

॥ ५६ ॥ सीमेति ॥ लोकेसुतजन्मसुखस्यसीमाभवतितदीयनाशःपुत्रस्यनाशोदुःखस्यसीमाभवति ॥ ततोमेप्रथमेपुत्रेनष्टेहृदयंस्फुटतीवद्विधाभवत्येवेत्यर्थः ॥ ५७ ॥ यज्ञंकरोमीति॥ अंबायज्ञंकरिष्यामीत्यर्थः ॥ वर्तमानसामीप्येलट् ॥ पुत्रप्राप्त्युत्तरंत्वत्प्रीत्यर्थंनानायज्ञान्व्रताद्यनुष्ठानानिचकरिष्यामीत्यर्थः ॥ ५८ ॥ ५९ ॥ ६० ६१ ॥६२॥ इतिश्रीदेवीभागवतति° चतुर्थस्कंधेचतुर्विंशोऽध्यायः ॥ २४ ॥ अशीतिपद्यवर्यैस्तुकिंचिज्ज्ञत्वंहरादिषु ॥ प्रतिपाद्यपराशक्तेः सर्वेशत्वमुदीर्यते ॥ १ ॥ इत्थंपूर्वाध्यायांतेश्रीभगवतीप्रसादात्प्रद्युम्नप्राप्तिंकृष्णस्य श्रुत्वासंशयाविष्टोराजापृच्छति । संदेहोमेमुनिश्रेष्ठेति ॥ ननुराज्ञाप्रथमस्कंधारंभेऽप्येतादृशाएवप्रश्नाःकृतामुनिनाचमायाधीनत्वाद्ब्रह्मादिदेवानांसंभवातिसर्वमेतदित्युत्तरंदत्तम्॥पुनर्द्वितीयवारंतृतीयवारंतथैवप्रश्नोराज्ञाकृतोमुनिनाचतथैवोत्तरमाभिहितम्॥पुनरंतेतथैवप्रश्नोराज्ञाक्रियतेमुनिनाचतथैवोत्तरमभिधीयते॥तथाचैतादृशपुनरुक्तेदोषरूपायाःकिंप्रयोजनमितिचेन्न ॥ सर्वप्राणिजातस्याऽवांतरसृष्ट्यादिकर्तृषुब्रह्मादिषुश्रीभगवतीकल्पितसत्त्वाद्यैकैकगुणोपाधिषु श्रीभगवत्यधीनेषुपरिच्छिन्नेषुअसर्वज्ञत्वात्सर्वशक्तिमत्सु श्रीभगवतीसृष्टसमष्टिप्रपंचेऽवांतर

मातास्यरोदितिभृशंकुररीवबालादुःखंतनोतिममसन्निधिगासदैव ॥ कष्टंनवेत्सिललितेप्रमितप्रभावेमातस्त्वमेवशरणंभवपीडितानाम् ॥५६॥ सीमासुखस्यसुतजन्मतदीयनाशोदुःखस्यदेविभवनेविबुधावदंति ॥तत्किंकरोमिजननिप्रथमेप्रनष्टेपुत्रेममाऽद्यहृदयंस्फुटतीवमातः ॥५७॥यज्ञंकरोमितवतुष्टिकरंव्रतंवादेवंचपूजनमथाऽखिलदुःखहात्वम्॥मातःसुतोऽत्रयदिजीवतिदर्शयाऽऽशुत्वंवैक्षमासकलशोकविनाशनाय॥५८॥व्यासउवाच ॥एवंस्तुतातदादेवीकृष्णेनाक्लिष्टकर्मणा॥प्रत्यक्षदर्शनाभूत्वातमुवाचजगद्गुरुम् ॥५९॥ श्रीदेव्युवाच॥शोकंमाकुरुदेवेशशापोऽयंतेपुरातनः॥तस्ययोगेनपुत्रस्तेशंबरेणहृतोबलात्॥६०॥अतस्तेषोडशेवर्षेहत्वातंशंबरंबलात्॥आगमिष्यतिपुत्रस्तेमत्प्रसादान्नसंशयः॥६१॥व्यासउवाच॥इत्युक्त्वांऽतर्दधेदेवीचंडिकाचंडविक्रमा॥भगवानपिपुत्रस्यशोकंत्यक्त्वाऽभवत्सुखी ॥६२॥ इतिश्रीदेवीभागवतेमहापुराणेचतुर्थस्कंधेचतुर्विंशोऽध्यायः॥२४॥राजोवाच ॥ संदेहोमेमुनिश्रेष्ठजायतेवचनात्तव ॥ वैष्णवांशेभगवतिदुःखोत्पत्तिंविलोक्यच ॥१॥ नारायणांशसंभूतोवासुदेवःप्रतापवान् ॥ कथंससूतिकागाराद्धृतोबालोहरेरपि ॥ २ ॥ सुगुप्तनगरेरम्येगुप्तेऽथसूतिकागृहे ॥ प्रविश्यतेनदैत्येनगृहीतोऽसौकथंशिशुः ॥ ३ ॥ नज्ञातोवासुदेवेनचित्रमेतन्ममाद्भुतम् ॥ जायतेमहदाश्चर्यंचित्तेसत्यवतीसुत ॥ ४ ॥

जीवव्यष्टिसृष्ट्यादिकर्तृत्वश्रवणाल्लोकानांसर्वज्ञत्वसर्वशक्तिमत्वसर्वेश्वरत्वभ्रमोबहुकालंप्रवृत्तोऽस्ति तदुच्छेदायपुनःपुनःसमानप्रश्नोत्तरयोःसत्त्वात्॥नहिबहुकालवासनावासितांतःकरणस्यसकृदुपदेशेनिर्वाहोऽस्ति॥राजातुपराशक्तिपरमभक्तोलोकानांतादृशवासनामुच्छेदयितुंप्रवृत्तोनकथंपुनःपुनस्तादृक्प्रश्नान्कुर्यादिति॥ननुकृष्णावतारकथाखंडितैवोक्ता॥तथारामावतारकथाऽपि॥ साप्यनेकवारमुक्तेतिनानिष्प्रयोजनमेतादृशंकथनंकचिदस्तीतिचेन्न ॥ तेषामसर्वज्ञतादिप्रतिपादनार्थंग्रंथस्यसत्त्वेनतत्कथाकथनेआसत्त्यभाववोधनार्थंतथाकथनात्॥नह्यत्रराज्ञोव्यासस्यवाकृष्णरामादिकथावर्णनेतात्पर्यमस्ति किंतुश्रीभगवतीगुणाऽनुवर्णनेएवतात्पर्यम् ॥ तस्याश्चसर्वज्ञत्वंसर्वोत्तमत्वंचप्रतिपादयितुंप्रवृत्तौतत्रयदितदितरत्ररामकृष्णादिषुतत्सर्वज्ञत्वादिकंस्यात्तदाभगवत्यांस्थितंसर्वज्ञत्वादिकमाकुलंभवेत् अतस्तेषामत्रैवयत्किंचित्कथाप्रदर्शनेनासर्वज्ञतादिकंपरतंत्रत्वादिकंतेषांप्रतिपादयितुंतथाकथनात् ॥ तात्पर्यंतुश्रोतृवक्त्रोस्तेषामसर्वज्ञत्वादिकंप्रतिपाद्यसर्वज्ञत्वंसर्वेश्वरत्वंस्वतंत्रत्वंसर्वोत्तमत्वंचश्रीभगवत्यामेवाऽस्तीत्यत्रेति ॥ १ ॥ नारायणांशेति ॥ नारायणांशसंभूतोयस्तस्यहरेरित्यन्वयः ॥ २ ॥३ ॥ ४ ॥

॥ ५ ॥ एतत्पर्यंतंकृष्णस्याऽसर्वज्ञत्वंपरतंत्रत्वंचप्रतिपादितंशंकित्राराज्ञाव्यासस्तुतदेवाऽसर्वज्ञत्वंपरतंत्रत्वंचतेषांस्थापयति मायेति ॥ ६ ॥ नदेवानासुरास्तदेति ॥ तदामानुषभावप्रा
प्तिकालेनदेवानदेवस्वभावास्तिष्ठंति तथानासुरादैत्यस्वभावास्तिष्ठंतीत्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥ नकेवलंकृष्णाऽवतारएवासर्वज्ञत्वंपरतंत्रत्वंच किंतुरामाद्यवतारेऽपीत्याह । यथाहेममृग
मिति ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ कुपितोरघुनंदनइति ॥ अनेनसाधनेनेत्थमग्रेभविष्यतीत्यज्ञात्वैवप्रारब्धवशेनैवेदंसर्वमकरोदितिभावः ॥ १६ ॥ १७ ॥

ब्रूहितत्कारणंब्रह्मन्नज्ञातंकेशवेनयत् ॥ हरणंतत्रसंस्थेनशिशोर्वासूतिकागृहात् ॥ ५ ॥ व्यासउवाच ॥ मायाबलवतीराजन्नराणांबुद्धिमोहिनी॥
शांभवीविश्रुतालोकेकोवामोहंनगच्छति ॥ ६ ॥ मानुषंजन्मसंप्राप्यगुणाःसर्वेऽपिमानुषाः ॥ भवंतिदेहजाःकामंनदेवानाऽसुरास्तदा ॥ ७ ॥
क्षुत्तृण्निदाभयंतंद्राव्यामोहःशोकसंशयः ॥ हर्षश्चैवाऽभिमानश्चजरामरणमेवच ॥ ८ ॥ अज्ञानंग्लानिरप्रीतिरीर्ष्यासूयामदःश्रमः ॥ एतेदेहभ
वाभावाःप्रभवंतिनराधिप ॥ ९ ॥ यथाहेममृगंरामोनबुबोधपुरोगतम् ॥ जानक्याहरणंचैवजटायुमरणंतथा ॥ १० ॥ अभिषेकदिनेरामोव
नवासंनवेदच ॥ तथानज्ञातवान्रामःस्वशोकान्मरणंपितुः ॥ ११ ॥ अज्ञवद्विचचाराऽसौपश्यमानोवनेवने ॥ जानकींनविवेदाऽथरावणेनहृतां
बलात् ॥ १२ ॥ सहायान्वानरान्कृत्वाहत्वाशक्रसुतंबलात् ॥ सागरेसेतुबंधंचकृत्वोत्तीर्यसरित्पतिम् ॥ १३ ॥ प्रेषयामाससर्वासुदिक्षुतान्क
पिकुंजरान् ॥ संग्रामंकृतवान्घोरंदुःखंप्रापरणाऽजिरे ॥ १४ ॥ बंधनंनागपाशेनप्रापरामोमहाबलः ॥ गरुडान्मोक्षणंपश्चादन्वभूद्रघुनंदनः ॥
॥ १५ ॥ अहनद्रावणंसंख्येकुंभकर्णंमहाबलम् ॥ मेघनादंनिकुंभंचकुपितोरघुनंदनः ॥१६॥ अदूष्यत्वंचजानक्यानविवेदजनार्दनः ॥ दिव्यं
चकारयामासज्वलितेऽग्नौप्रवेशनम् ॥ १७ ॥ लोकापवादाच्चपरंततस्तत्याजतांप्रियाम् ॥ अदूष्यांदूषितांमत्वासीतांदशरथात्मजः ॥ १८ ॥
नज्ञातौस्वसुतौतेनरामेणचकुशीलवौ ॥ मुनिनाकथितौतौतुतस्यपुत्रौमहाबलौ ॥ १९ ॥ पातालगमनंचैवजानक्याज्ञातवान्नच ॥ राघवःकोप
संयुक्तोभ्रातरंहंतुमुद्यतः ॥ २० ॥ कालस्याऽऽगमनंचैवनविवेदखरांतकः ॥ मानुषंदेहमाश्रित्यचक्रेमानुषचेष्टितम् ॥ २१ ॥ तथैवमानुषान्भा
वान्नाऽत्रकार्याविचारणा ॥ पूर्वंकंसभयात्प्राप्तोगोकुलेयदुनंदनः ॥ २२ ॥ जरासंधभयात्पश्चाद्द्वारवत्यांगतोहरिः ॥ अधर्मंकृतवान्कृष्णोरु
क्मिण्याहरणंचयत् ॥ २३ ॥ शिशुपालहृतायाश्चजानन्धर्मंसनातनम् ॥ शुशोचबालकंकृष्णःशंबरेणहृतंबलात् ॥ २४ ॥ मुमोदजानन्पुत्रंतं
हर्षशोकयुतस्ततः ॥ सत्यभामाऽज्ञयायत्तुयुयुधेस्वर्गतःकिल ॥ २५ ॥ इंद्रेणपादपार्थंतुस्त्रीजितत्वंप्रकाशयन् ॥ जहारकल्पवृक्षंयःपराभूय
शतक्रतुम् ॥ २६ ॥ मानिनीमानरक्षार्थंहरिश्चित्रधरःप्रभुः ॥ बद्ध्वावृक्षेहरिंसत्यानारदायददौपतिम् ॥ २७ ॥

॥ १८ ॥ १९ ॥ २० ॥ खरांतकःखरदैत्यनाशोरामोमानुषंदेहमाश्रित्यप्रारब्धकर्मयोगान्मानुषचेष्टितंचक्रेइत्यर्थः ॥ २१ ॥ रामावतारदृष्टांतभूतेऽज्ञत्वमसर्वज्ञत्वंपरतंत्रत्वंचाऽऽचरणेन
दर्शयित्वादार्ष्टांतिकेकृष्णावतारेदर्शयति पूर्वंकंसभयादिति ॥२२॥२३॥ धर्मंजानन्सच्छिशुपालेनहृतायारुक्मिण्याइत्यन्वयः ॥ अनेनचाऽधर्मनिष्ठत्वंकृष्णस्यबोधितम् ॥२४॥ स्वर्गतः
स्वर्गंगतइत्यर्थः ॥ सार्वविभक्तिकस्तसिर्वा ॥ २५ ॥ २६ ॥ २७ ॥

॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ पुरतोग्रेस्थितस्यशंभोःस्तुतिंचकारेत्यन्वयः ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥

दत्त्वाथकानकंकृष्णंमोचयामासभामिनी ॥ दृष्ट्वापुत्रान्पुरुगुणान्प्रद्युम्नप्रमुखानथ ॥२८॥ कृष्णंजांबवतीदीनाययाचेसंततिंशुभाम् ॥ सययौपर्वतंकृष्णस्तपस्याकृतनिश्चयः ॥२९॥ उपमन्युर्मुनिर्यत्रशिवभक्तःपरंतपः ॥ उपमन्युंगुरुंकृत्वादीक्षांपाशुपतींहरिः ॥३०॥ जग्राहपुत्रकामस्तुमुंडीदंडीबभूवह ॥ उग्रंतत्रतपस्तेपेमासमेकंफलाशनः ॥ ३१ ॥ जजापशिवमंत्रंतुशिवध्यानपरोहरिः ॥ द्वितीयेतुजलाहारस्तिष्ठन्नेकपदाहरिः ॥ ॥ ३२ ॥ तृतीयेवायुभक्षस्तुपादांगुष्ठाऽग्रसंस्थितः ॥ षष्ठेतुभगवान्रुद्रःप्रसन्नोभक्तिभावतः ॥ ३३ ॥ दर्शनंचददौतत्रसोमःसोमकलाधरः ॥ आजगामवृषारूढःसुरैरिंद्रादिभिर्वृतः ॥ ३४ ॥ ब्रह्मविष्णुयुतःसाक्षाद्यक्षगंधर्वसेवितः ॥ संबोधयन्वासुदेवंशंकरस्तमुवाचह ॥ ३५ ॥ तुष्टोऽस्मिकृष्णतपसातवोग्रेणमहामते ॥ ददामिवांछितान्कामान्ब्रूहियादवनंदन ॥ ३६ ॥ मयिदृष्टेकामपूरेकामशेषोनसंभवेत् ॥ व्यासउवाच ॥ तंदृष्ट्वाशंकरंतुष्टंभगवान्देवकीसुतः ॥ ३७ ॥ पपातपादयोस्तस्यदंडवत्प्रेमसंयुतः ॥ स्तुतिंचकारदेवेशोमेघगंभीरयागिरा ॥ ३८ ॥ स्थितस्तुपुरतःशंभोर्वासुदेवःसनातनः ॥ कृष्णउवाच ॥ देवदेवजगन्नाथसर्वभूताऽऽर्तिनाशन ॥ ३९ ॥ विश्वयोनेसुरारिघ्ननमस्त्रैलोक्यकारक ॥ नीलकंठनमस्तुभ्यंशूलिनेतेनमोनमः ॥ ४० ॥ शैलजावल्लभायाऽथयज्ञघ्नायनमोस्तुते ॥ धन्योऽहंकृतकृत्योऽहंदर्शनात्तवसुव्रत ॥ ४१ ॥ जन्ममेसफलंजातंनत्वातेपादपंकजम् ॥ बद्धोऽहंस्त्रीमयैःपाशैःसंसारेऽस्मिञ्जगद्गुरो ॥ ४२ ॥ शरणंतेऽद्यसंप्राप्तोरक्षणार्थंत्रिलोचन ॥ संप्राप्यमानुषंजन्मखिन्नोऽहंदुःखनाशन ॥ ४३ ॥ त्राहिमांशरणंप्राप्तंभवभीतभवाऽधुना ॥ गर्भवासेमहद्दुःखंप्राप्तंमदनदाहक ॥ ४४ ॥ जन्मतःकंसभयजमनुभूतंचगोकुले ॥ जातोऽहंनंदगोपालोबल्लवाज्ञाकरस्तथा ॥ ४५ ॥ गोरजःकीर्णकेशस्तुभ्रमन्वृंदावनेघने ॥ म्लेच्छराजभयत्रस्तोगतोद्वारवतींपुनः ॥ ४६ ॥ त्यक्त्वापित्र्यंशुभंदेशंमाथुरंदुर्लभंविभो ॥ ययातिशापबद्धेनतस्मैदत्तंभयाद्विभो ॥४७॥ राज्यंसुपुष्टमपिचधर्मरक्षापरेणच ॥ उग्रसेनस्यदासत्वंकृतंवैसर्वदामया ॥४८॥ राजासौयादवानांवैकृतोनःपूर्वजैःकिल ॥ गार्हस्थ्यंदुःखदंशंभोस्त्रीवश्यंधर्मखंडनम् ॥ ४९ ॥ पारतंत्र्यंसदाबंधोमोक्षवार्ताऽत्रदुर्लभा ॥ रुक्मिण्यास्तनयान्दृष्ट्वाभार्याजांबवतीमम ॥ ५० ॥ प्रेरयामासपुत्रार्थंतपसेमदनांतक ॥ सकामेनमयातप्तंतपःपुत्रार्थमद्यवै ॥ ५१ ॥ लज्जाभवतिदेवेशप्रार्थनायांजगद्गुरो ॥ कस्त्वामाराध्यदेवेशंमुक्तिदंभक्तवत्सलम् ॥ ५२ ॥ प्रसन्नंयाचतेमूढःफलंतुच्छंविनाशियत् ॥ सोऽयंमायाविमूढात्मायाचेपुत्रसुखंविभो ॥ ५३ ॥ कामिन्याप्रेरितःशंभोमुक्तिदंत्वांजगत्पते ॥ जानामिदुःखदंशंभोसंसारंदुःखसाधनम् ॥ ५४ ॥ अनित्यंनाशधर्माणंतथाऽपिविरतिर्नमे ॥ शापान्नारायणांशोऽहंजातोऽस्मिन्क्षितिमंडले ॥ ५५ ॥

॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥

॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ एतावत्पर्यंतंकृष्णस्याऽल्पज्ञत्वंपरतंत्रत्वंस्त्रीजितत्वमनीश्वरत्वंमूढत्वंचोपपादितम् ॥ तदेवमुपसंहर
न्श्रीभगवत्याःसर्वज्ञत्वंसर्वोत्तमत्वंसर्वेश्वरत्वंसर्वाराध्यत्वंचश्रुत्याऽऽगमसिद्धमुपसंहरति । तस्मादिति ॥ यस्माद्धेतोरेतादृशीविडंबनैतादृशावताराणांभवतितस्माद्यद्यपिब्रह्मादयोऽस्मद
पेक्षयाऽधीश्वराःपरमेश्वराःसंति ॥ ६६ ॥ तथाऽपिनसर्वापेक्षयापरमेश्वराःकिंतुमायायाःकल्लोलास्तरंगास्तेषांवेगेनक्षुभितांतराःसंति ॥ यथाकाष्ठपुत्तलिकापुरुषाधीनातद्वदुपमायेषामेता
दृशास्तदधीनामायाधीनाःसंति ॥ तस्मान्मुख्यासर्वापेक्षयासर्वेश्वरीसैवाऽस्तीतिभावः ॥ ६७ ॥ साचनस्वातंत्र्येणजगत्प्रेरयति किंतुप्राक्तनकर्माऽनुरोधेनाऽन्यथोच्चावचप्राणिकर्तृत्वेनवैष

भोक्तुंबहुतरंदुःखंमायापाशेनयंत्रितः॥व्यासउवाच॥इत्युक्तवंतंगोविंदंप्रत्युवाचमहेश्वरः ॥५६॥बहवस्तेभविष्यंतिपुत्राःशत्रुनिषूदन ॥ स्त्रीणांषो
डशसाहस्रंभविष्यतिशतार्धकम् ॥५७॥तासुपुत्रादशदशभविष्यंतिमहाबलाः॥इत्युक्त्वोपरराामाऽशुशंकरःप्रियदर्शनः॥५८॥ उवाचगिरिजादेवी
प्रणतंमधुसूदनम्॥कृष्णकृष्णमहाबाहोसंसारेऽस्मिन्नराधिप ॥५९॥ गृहस्थप्रवरोलोकेभविष्यतिभवानिह ॥ ततोवर्षशतांतेतुद्विजशापाज्जनार्दन
॥६०॥गांधार्याश्चतथाशापाद्भवितातेकुलक्षयः॥परस्परंनिहत्याऽजौपुत्रास्तेशापमोहिताः॥६१॥गमिष्यंतिक्षयंसर्वेयादवाश्चतथापरे ॥ सानुज
स्त्वंतथादेहंत्यक्त्वायास्यसिवैदिवम्॥६२॥शोकस्तत्रनकर्तव्योभवितव्यंप्रतिप्रभो॥अवश्यंभाविभावानांप्रतीकारोनविद्यते॥६३॥ तत्रशोकोन
कर्तव्योनूनंममतंसदा॥अष्टावक्रस्यशापेनभार्यास्तेमधुसूदन॥६४॥ चौरेभ्योग्रहणंकृष्णगमिष्यंतिमृतेत्वयि॥व्यासउवाच॥इत्युक्त्वांऽतर्दधेशं
भुःसोमःससुरमंडलः॥६५॥उपमन्युंप्रणम्याऽथकृष्णोऽपिद्वारकांययौ॥तस्माद्ब्रह्मादयोराजन्संतियद्यप्यधीश्वराः ॥६६॥तथापिमायाकल्लोलयो
गसंक्षुभितांतराः॥तदधीनाःस्थिताः सर्वेकाष्ठपुत्तलिकोपमाः ॥ ६७॥ यथायथापूर्वभवंकर्मतेषांतथातथा ॥ प्रेरयत्यनिशंमायापरब्रह्मस्वरूपि
णी॥६८॥नवैषम्यंननैर्घृण्यंभगवत्यांकदाचन॥ केवलंजीवमोक्षार्थंयततेभुवनेश्वरी ॥६९॥ यदिसानैवसृज्येतजगदेतच्चराचरम् ॥ तदामायावि
नाभूतंजडंस्यादेवनित्यशः ॥ ७०॥ तस्मात्कारुण्यमाश्रित्यजगज्जीवादिकंचयत् ॥ करोतिसततंदेवीप्रेरयत्यनिशंचतत् ॥ ७१ ॥

म्यंनैर्घृण्येस्यातामित्याह । यथायथेति ॥ मायापरब्रह्मस्वरूपिणीतिपदेनमायाविशिष्टब्रह्मस्वरूपिणीतिस्पष्टमेवोक्तम् ॥ ६८ ॥ यस्मादेवंतस्मान्नवैषम्यमिति यदितस्याःस्वातंत्र्येणे
च्छानास्तितर्हिकिमर्थमन्यकर्मानुरुध्यसाजगत्करोतीतिचेत्तत्राह । जीवमोक्षार्थमिति ॥ ६९ ॥ तदेवोपपादयति ॥ प्रलयकालेजगन्मायायांलीनंतथैवतिष्ठेन्नतुमुक्तंभवेत्तत्तत्कर्मानुरो
धेन ॥ जगत्सर्जनेतुकर्मोपासनाकरणेनश्रवणमननादिनाचाऽऽत्मसाक्षात्कारेणजगन्मुक्तंभवेत्तस्मात्कारुण्यमवलंब्यस्वेच्छयाविहारेऽपिप्राणिमोक्षार्थंजगज्जीवादिकंकरोतिकर्मानुरोधेनतदेव
प्रेरयतिचेतिभावः ॥ मायाविनाभूतंमायायांलीनमित्यर्थः ॥ जडंबुद्धिरहितमित्यर्थः ॥ ७० ॥ ७१ ॥

तस्माद्धेराजन्ब्रह्मादीनांकथंमोहोभवतीत्यादिपूर्वोक्तःसंशयस्त्वयानैवकर्तव्यइत्याह । तस्मादिति ॥ तत्र हेतुमाह । मायांतःपातिनइति ॥ ७२ ॥ तर्हिस्वतंत्रः कोऽस्तीतिचेत्तत्राऽऽह । स्वतंत्रासैवदेवेशीति ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ आत्मरूपांहृदाज्ञात्वेति ॥ तथाचश्वेताश्वतरोपनिषदि तेध्यानयोगानुगताअपश्यन्देवात्मशक्तिंस्वगुणैर्निगूढामिति ॥ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ देवीलोकेपूर्वोक्तेमणिद्वीपे ॥ ८२ ॥ पुराणंपंचममिति ॥ ब्राह्मंपाद्मंवैष्णवंचशैवंभागवतंतथेति महापुराणसंग्रहवाक्येपुराणांतरेषुपंचमत्वेनगृहीत

तस्माद्ब्रह्मादिमोहेऽस्मिन्कर्तव्यःसंशयोनहि ॥ मायांतःपातिनःसर्वेमायाधीनाःसुराऽसुराः ॥७२॥ स्वतंत्रासैवदेवेशीस्वेच्छाचारविहारिणी॥ तस्मात्सर्वात्मनाराजन्सेवनीयामहेश्वरी ॥७३॥ नातःपरतरंकिंचिदधिकंभुवनत्रये ॥ एतद्धिजन्मसाफल्यंपराशक्तेःपदस्मृतिः ॥ ७४ ॥ माभूत्तत्रकुलेजन्मयत्रदेवीनदैवतम् ॥ अहंदेवीनचान्योऽस्मिब्रह्मैवाऽहंनशोकभाक् ॥७५॥ इत्यभेदेनतांनित्यांचिंतयेज्जगदंबिकाम् ॥ ज्ञात्वागुरुमुखादेनांवेदांतश्रवणादिभिः ॥ ७६॥ नित्यमेकाग्रमनसाभावयेदात्मरूपिणीम् ॥ मुक्तोभवतितेनाऽऽशुनाऽन्यथाकर्मकोटिभिः ॥ ७७ ॥ श्वेताश्वतरादयःसर्वेऋषयोनिर्मलाशयाः ॥ आत्मारूपांहृदाज्ञात्वाविमुक्ताभवबंधनात् ॥७८॥ ब्रह्मविष्ण्वादयस्तद्वद्गौरीलक्ष्म्यादयस्तथा ॥ तामेवसमुपासंतेसच्चिदानंदरूपिणीम् ॥७९॥ इतितेकथितंराजन्यद्यत्पृष्टंत्वयानघ ॥ प्रपंचतापत्रस्तेनकिंभूयःश्रोतुमिच्छसि ॥८०॥ एतत्तेकथितंराजन्मयाख्यानमनुत्तमम् ॥ सर्वपापहरंपुण्यंपुराणंपरमाद्भुतम् ॥८१ ॥ यइदंशृणुयान्नित्यंपुराणंवेदसंमितम् ॥ सर्वपापविनिर्मुक्तोदेवीलोकेमहीयते ॥ ८२॥ सूतउवाच ॥ एतन्मयाश्रुतंव्यासात्कथ्यमानंसविस्तरम् ॥ पुराणंपंचमंनूनंश्रीमद्भागवताऽभिधम् ॥ ८३ ॥ इतिश्रीदेवीभागवते महापुराणे चतुर्थस्कंधे पंचविंशोऽध्यायः ॥ २५ ॥ स्कंधश्चायंसमाप्तः ॥

अर्धाधिकैर्वसुविधुयुगविश्वंभरा ( १४१८॥ ) भिधैः ॥ पद्यैश्चतुर्थस्कंधोऽयंकथितोव्यासनिर्मितैः ॥

मित्यर्थः ॥ ८३ ॥ श्रीमच्छैवकुलोत्पन्नोरंगनाथात्मजःसुधीः ॥ श्रीलक्ष्मीगर्भसंभूतोनीलकंठोऽभिधानतः ॥ १ ॥ देवीभागवतस्याऽस्यव्याख्यानरहितस्यच ॥ व्याख्यांयःकृतवान्सम्यक्तिलकाख्यांशुभार्थदाम् ॥ २ ॥ चतुर्थस्कंधएतस्याःसमाप्तोऽभूच्छुभार्थदः ॥ प्रीयतांतेनमेदेवीभुवनेशीमहेश्वरी ॥ ३ ॥ इतिश्रीशैवकुलोत्पन्नरंगनाथात्मजलक्ष्मीगर्भजनीलकंठविरचितेदेवीभागवतव्याख्यानेतिलकाऽभिधेचतुर्थस्कंधेपंचविंशोऽध्यायः ॥ २५ ॥ ॥ समाप्तोयंचतुर्थस्कंधः ॥ ४ ॥

इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मजक्षेमराजश्रेष्ठिना
स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणालये मुद्रितम् ।
संवत् १९७५ शके १८४०,

श्रीगणेशायनमः ॥ अजांदुस्तरसंसारसमुद्रपरिशोषिणीम् ॥ वंदेसमंदहासितांबालकोटिरविप्रभाम् ॥ १ ॥ चतुर्भिरधिकैःपंचाशद्भिःश्लोकैरथोत्तरम् ॥ विष्णोरपेक्षयारुद्रःश्रेष्ठइत्यवे
कीर्त्यते ॥ २ ॥ पूर्वाध्यायांतेब्रह्मादीनांश्रीभगवत्यधीनत्वमल्पज्ञत्वंपरिच्छिन्नत्वंचोपपाद्यश्रीभगवत्याःश्रुत्यागमयुक्तिभिःस्वतंत्रत्वंसर्वज्ञत्वंसर्वेश्वरत्वंव्यापकत्वंसर्वकारणत्वंचोपपादितं
तदुपपादनप्रसंगेशिवस्यसशक्तिकस्यकृष्णाऽऽराध्यत्वंप्रतिपादितंतत्रऋषयःसाशंकाःपृच्छंति ॥ भवताकथितंसूतेति ॥ १ ॥ अविस्तरेणप्रोच्यमानेनःसंदेहोजायतइत्यन्वयः ॥ २ ॥
तपस्तप्तंपुत्रार्थंतस्मिंस्तपसिशिवस्याऽऽराधनंसर्वोत्तमत्वबुद्ध्याकृतमिदमेकम् ॥ ३ ॥ तथापूर्णायाव्यापिकायाजगन्मातुरंशभूतयापार्वत्यायद्वरप्रदानंकृतमिदंद्वितीयम् ॥ ४ ॥ तत्रई
श्वरेणापीति ॥ ईश्वरेणकृष्णेनस्वतोन्यूनताराहितेनकुतस्तौशक्तिशिवौपूजितौकिंप्रयोजनंतस्यतयोःपूजनेतदेवंप्रकारेणसंशयोममभवतीत्यर्थः ॥ ५ ॥ तत्रकृष्णेनशिवपूजनइत्यर्थः ॥
व्यासश्रुतंव्यासाच्छ्रुतंकारणमित्यर्थः॥६॥ यथामांप्रतिभवद्भिःप्रश्नःकृतएवंव्यासंप्रत्यपिजनमेजयेनप्रश्नःकृतस्तत्रतेनयदुत्तरंदत्तंतदेवभवद्भिरुत्तरंबोध्यमित्याह । वृत्तांतमिति ॥ पूर्वोक्तं

ऋषयऊचुः॥भवताकथितंसूतमहदाऽऽख्यानमुत्तमम्॥कृष्णस्यचरितंदिव्यंसर्वपातकनाशनम्॥१॥संदेहोऽत्रमहाभागवासुदेवकथानके ॥ जाय
तेनःप्रोच्यमानेविस्तरेणमहामते॥२॥वनेगत्वातपस्तप्तंवासुदेवेनदुष्करम् ॥ विष्णोरंशाऽवतारेणशिवस्याऽऽराधनंकृतम् ॥ ३॥ वरप्रदानंदेव्या
चपार्वत्यायत्कृतंपुनः॥जगन्मातुश्चपूर्णायाःश्रीदेव्याअंशभूतया ॥४॥ ईश्वरेणाऽपिकृष्णेनकुतस्तौसंप्रपूजितौ॥न्यूनतावाकिमस्त्यस्यतदेवंसंश
योमम॥५॥सूतउवाच॥शृणुध्वंकारणंतत्रमयाव्यासश्रुतंचयत् ॥प्रब्रवीमिमहाभागाःकथांकृष्णगुणान्विताम् ॥६॥ वृत्तांतंव्यासतःश्रुत्वावैराटी
सुतजस्तदा॥पुनःपप्रच्छमेधावीसंदेहंपरमंगतः ॥७॥ जनमेजयउवाच॥सम्यक्सत्यवतीसूनोश्रुतंपरमकारणम्॥तथाऽपिमनसोवृत्तिःसंशयंनवि
मुंचति ॥८॥कृष्णेनाराधितःशंभुस्तपस्तप्त्वाऽतिदारुणम् ॥ विस्मयोऽयंमहाभागदेवदेवेनविष्णुना ॥९॥ यःसर्वात्माऽपिसर्वेशःसर्वसिद्धिप्रदः
प्रभुः॥सकथंकृतवान्घोरंतपःप्राकृतवद्धरिः॥१०॥जगत्कर्तुंक्षमःकृष्णस्तथापालयितुंक्षमः ॥संहर्तुमपिकस्मात्सदारुणंतपआचरत्॥११॥ व्या
सउवाच॥सत्यमुक्तंत्वयाराजन्वासुदेवोजनार्दनः॥क्षमःसर्वेषुकार्येषुदेवानांदैत्यसूदनः॥१२॥तथाऽपिमानुषंदेहमाश्रितःपरमेश्वरः॥ कृतवान्मा
नुषान्भावान्वर्णाऽऽश्रमसमाश्रितान् ॥ १३ ॥ वृद्धानांपूजनंचैवगुरुपादाऽभिवंदनम् ॥ ब्राह्मणानांतथासेवादेवताराधनंतथा ॥ १४ ॥

वृत्तांतम् ॥ कृष्णेन शिवशक्त्योराराधनाकृतेत्येवंरूपंवैराटीसुतजेवैराटीविराटस्यापत्यंकन्योत्तरातस्याःसुतःपरीक्षित्तस्माज्जातोजनमेजयइत्यर्थः ॥ ७ ॥ परमकारणमुत्कृष्टकारणंमा
याविशिष्टब्रह्मरूपंश्रीभगवतीपदवाच्यमित्यर्थः ॥ तच्छ्रुत्वाऽपिमनोवृत्तिः संशयंनविमुंचति ॥ ८ ॥ कोऽसौसंशयइतिचेत्तत्राह । कृष्णेनेति ॥ ९ ॥ १० ॥ तपआचरदिति ॥ सर्वेश्वर
स्यविष्णोःशिवाऽऽराधनंनेदंयुक्तमित्यर्थः ॥ ११ ॥ व्यासोंगीकरोति । सत्यमिति ॥ देवानांकार्येषुक्षमःसमर्थइत्यर्थः ॥ १२ ॥ यद्यपीत्थमस्तितथाऽपिकारणद्वयसत्त्वात्तपश्चर्याशिवोद्दे
शेनतेनकृतेत्यभिप्रायेणकारणद्वयेप्रथमंकारणमाह । तथापीति ॥ मनुष्यदेहाऽपेक्षयाशिवादिदेवतादेहानामुत्कृष्टत्वान्मनुष्यदेहधारिभिःश्रीरामकृष्णादिभिर्धर्ममार्गप्रवर्तकैःशिवादिपूज
नेनकृतेवरिष्ठपक्षपातित्वात्सर्वेषांकोऽपिशिवादिपूजनंनकुर्युः ॥ अतःकृष्णादिभिःशिवादिपूजनंकृतमित्यर्थः ॥ १३ ॥ १४ ॥

॥ १९ ॥ गुणमयेसत्त्वादिगुणनिर्मितेगुणवृत्तयोनियमेनभविष्यंत्येवेत्यर्थः ॥ १६ ॥ मनुष्यदेहसंबंधादज्ञत्वमप्यतएवागतमित्याह । सौबलीशापजादिति ॥ सौबलीगांधारी ॥ ब्राह्मणोऽष्टावक्रः ॥ १७ ॥ १८ ॥ १९ ॥ इत्थंप्राकृतदृष्ट्याऽपिशिवाराधकत्वंकृष्णस्योपपाद्यपरमार्थदृष्ट्याविष्णोरपेक्षयाशिवएवोत्कृष्टइतिविष्णोरपिशिवाराधकत्वमस्ति ॥ किंपुनस्तदवताराणांरामकृष्णादीनामित्यंभिप्रायेणद्वितीयंकारणमाह । विष्णोरंशावतारेइति ॥ विष्णोरवतारोधर्मात्मजोनारायणस्तदवतारःकृष्णस्तास्मिन्‌शिवसेवनेकिंचित्रमित्यर्थः ॥ २० ॥ शिवस्यविष्णोरपेक्षयोत्कृष्टत्वंप्रतिपादयति । सहिसर्वेश्वरइति ॥ यतःसशिवःसुषुप्तस्थानंकारणदेहस्तस्यनाथोऽधिपतिस्तत्स्वरूपोऽतोलिंगसूक्ष्मदेहाऽभिमानिनस्तत्स्वरूपस्याविष्णोरपिकारणंजनकःशिवः ॥ कारणदेहस्याऽज्ञानरूपस्यलिंगदेहजनकत्वात् ॥ २१ ॥ यतोविष्णोरपिकारणंशिवोविष्णुनाचसर्वदापूजितस्ततोहि तदंशभूतास्तस्यविष्णोरंशभूतायेकृष्णरामाद्यास्तैः कथंनस शिवः पूज्यते अपितुसर्वथापूज्यतएवेत्यर्थः॥ शिवस्यसुषुप्तस्थाननाथत्वमुपपादयति । अकारइति । प्रणवेहिचत्वारोभागाअकारोकारमकारमकारार्धमात्रारूपाः देहेऽपिचत्वारोभागाश्चतुष्पद्ब्रह्मरूपाः स्थूलसूक्ष्मकारणतुरीयरूपाः तेचब्रह्मविष्णुरुद्रपरंब्रह्मपदवाच्यास्तापनीयादिषुप्रसिद्धास्तत्राकारोब्रह्मवाचकउकारोविष्णुवाचकोमकारोरुद्रवाचकोऽर्धमात्रा

शोकेशोकाऽभियोगश्चहर्षेहर्षसमुन्नतिः ॥ दैन्यंनानाऽपवादाश्चस्त्रीषुकामोपसेवनम्॥१५॥ कामःक्रोधस्तथालोभःकालेकालेभवंतिहि॥तथागुणमयेदेहेनिर्गुणत्वंकथंभवेत् ॥१६॥ सौबलीशापजादोषात्तथाब्राह्मणशापजात् ॥ निधनंयादवानांतुकृष्णदेहस्यमोचनम् ॥१७॥ हरणलुंठनंतद्वत्तत्पत्नीनांनराधिप ॥ अर्जुनस्याऽस्त्रमोक्षेचक्लीबत्वंतस्करेषुच ॥ १८ ॥ अज्ञत्वंहरणेगेहात्तत्प्रद्युम्नाऽनिरुद्धयोः ॥ एवंमानुषदेहेऽस्मिन्मानुषंखलुचेष्टितम् ॥१९॥ विष्णोरंशाऽवतारेऽस्मिन्नारायणमुनेस्तथा ॥ अंशजेवासुदेवेऽत्रकिंचित्रंशिवसेवने॥२०॥ सहिसर्वेश्वरोदेवोविष्णोरपिचकारणम् ॥ सुषुप्तस्थाननाथःसविष्णुनाचप्रपूजितः ॥ २१ ॥ तदंशभूताःकृष्णाद्यास्तैःकथंनसपूज्यते ॥ अकारोभगवान्ब्रह्माप्युकारःस्याद्धरिःस्वयम्॥२२॥ मकारोभगवान्रुद्रोप्यर्धमात्रामहेश्वरी ॥ उत्तरोत्तरभावेनाप्युत्तमत्वंस्मृतंबुधैः ॥ २३ ॥ अतःसर्वेषुशास्त्रेषुदेवीसर्वोत्तमास्मृता ॥ अर्धमात्रास्थितानित्यायानुच्चार्याऽविशेषतः ॥ २४ ॥ विष्णोरप्यधिकोरुद्रोविष्णुस्तुब्रह्मणोऽधिकः ॥ तस्मान्नसंशयःकार्यःकृष्णेनशिवपूजने ॥ २५ ॥ इच्छयाब्रह्मणोवक्राद्रुद्रदानार्थमुद्भभौ ॥ मूलरुद्रस्यांशभूतोरुद्रनामाद्वितीयकः ॥ २६ ॥

चिद्रूपश्रीदेवीवाचिकेत्यर्थः॥तुरीयेप्यंतर्मुखस्वाऽभिन्नमायायाःसत्त्वान्मायाविशिष्टब्रह्मरूपत्वपूर्वदेव्याउक्तंनाविरुध्यते॥तुरीयस्यानित्यत्वमपिमायावैशिष्ट्येऽपिमायाकार्यत्वस्याऽभावाद्बोध्यम् ॥ मायारहितंतुतुरीयाऽतीतमितिनृसिंहतापिन्यांस्पष्टम् ॥२२॥ एतेषांचतुर्णांभागानामुत्तरोत्तरभावेनब्रह्माऽपेक्षयाविष्णुरुत्तमस्तदपेक्षयारुद्रस्तदपेक्षयाचिद्रूपासांविद्भगवतीउत्तमेत्येवंरीत्याउत्तमत्वंबुधैःस्मृतमित्यर्थः ॥ तथाचविष्णोरपेक्षयोत्तरस्थानस्थितरुद्रस्योत्तमत्वाद्विष्णुपूज्यत्वमव्याहतमितिभावः ॥२३॥ यतएवमतआह । अतइति ॥ यतःसर्वापेक्षयोत्तरस्थानस्थिताचिद्रूपाभगवतीततोभगवत्येवसर्वशास्त्रेषूत्तमास्मृतेत्यर्थः ॥ साचनित्यात्रिकालाबाध्याऽस्तीत्याह । अर्धमात्रेति ॥ २४ ॥ विष्णोरपेक्षयारुद्रस्योत्तमत्वमुपसंहरति । विष्णोरप्यधिकइति ॥ २५ ॥ ननुब्रह्मणउत्पन्नस्यरुद्रस्यकथंविष्णोराधिकत्वंतत्राह । इच्छयेति ॥ ब्रह्मणासृष्ट्यर्थंशिवस्याऽऽराधनाकृता ॥ तन्मनोरथपूर्त्यर्थंस्वेच्छयास्वांशेनाशिवस्तस्माद्ब्रह्मणोवक्राद्रुद्रदानार्थमुद्बभावुत्पन्नोमूलरुद्रांशभूतोद्वितीयोरुद्रःसइत्यर्थः ॥ २६ ॥

यः पुनर्मूलरुद्रांशभूतोब्रह्मणोललाटादुत्पन्नः सोऽपिसर्वेषांविष्ण्वादीनांपूज्योऽस्ति तदामूलरुद्रः सर्वेषांपूज्योऽस्तीत्यत्रकाकथेत्यर्थः॥शिवस्योत्तमत्वेहेत्वंतरमुपपादयति । देवीतत्त्वस्येति ॥ देवीतत्त्वंसंवित्तत्त्वंतत्सान्निध्यंकारणदेहस्यतदभिमानिनोरुद्रस्यवर्तते ॥ विष्णोर्लिंगदेहाऽभिमानिनोर्लिंगदेहस्यचकारणदेहेनव्यवधानात्तद्वारासान्निध्यमितिविष्णोरपेक्षयारुद्रस्याऽधिक्यं निःसंशयमित्यर्थः ॥ इदंसर्वंसूतसंहितायांसौरसंहितायांचस्पष्टम् । परतत्त्वप्रकाशस्तुरुद्रस्यैवमहत्तरः ॥ नतथासर्वदेवानांसान्निध्याऽभावहेतुतइत्यादि ॥ विष्णोस्तुतत्त्वसंबंधोरुद्रद्वारं कएवहीत्यादिनापुराणांतरेषुचस्पष्टमितिबोध्यम् ॥ २७ ॥ इत्थंविष्णोरपेक्षयाशिवस्योत्तमत्वंप्रतिपाद्यपुनः सर्वाऽपेक्षयाश्रीदेव्याउत्तमत्वंवर्णयति । अवताराइति ॥ २८॥ यानेत्रेति॥ नेत्रोन्मीलनेनेत्यर्थः ॥ परिभूयमानान् नानावतारकलनेग्रहणेदुःखैःपरिभवंप्राप्यमाणानित्यर्थः ॥ २९ ॥ सूतीगृहात्प्रसवगृहाद्व्रजनंगोकुलंप्रतिकृष्णस्येत्यर्थः ॥ पशुपालराज्ञोनंदस्यभ वनेसंगोपितोदैत्यादिभ्योरक्षितःश्रीकृष्णोऽनयैव ॥ भीतचित्तःश्रीकृष्णोननुनिश्चयेनश्रीद्वारकाप्रणयनेऽप्यनयैवदेव्याविनियोजितइत्यर्थः ॥ ३० ॥ निर्मायेति ॥ षोडशसहस्राधिकाः शतार्धकाः पंचाशत्संख्याकानार्योऽपिपंचाशदधिकषोडशसहस्रनार्योऽपिराजकन्यारूपाःस्वयमेवभगवतीनिर्मायतथास्वकलास्वशक्तिस्तस्याःसकाशात्समुत्थाअष्टाष्टसंख्याकानायिकाः

सोऽपिपूज्योऽस्तिसर्वेषांमूलरुद्रस्थकाकथा ॥ देवीतत्त्वस्यसान्निध्यादुत्तमत्वंस्मृतंशिवे ॥ २७ ॥ अवताराहरेरेवंप्रभवंतियुगेयुगे ॥योगमाया प्रभावेननाऽत्रकार्याविचारणा ॥ २८ ॥ यानेत्रपक्ष्मपरिसंचलनेनसम्यग्विश्वंसृजत्यवतिहन्तिनिगूढभावा ॥ सैषाकरोतिसततंद्रुहिणाऽच्युते शान्नानाऽवतारकलनेपरिभूयमानान् ॥ २९ ॥ सूतीगृहाद्व्रजनमप्यनयानियुक्तंसंगोपितश्चभवनेपशुभालराज्ञः ॥ संप्रापितश्चमथुरांविनियोजि तश्चश्रीद्वारकाप्रणयनेननुभीतचित्तः ॥ ३० ॥ निर्मायषोडशसहस्रशतार्धकास्तानार्योऽष्टसंमततराःस्वकलासमुत्थाः ॥ तासांविलासवशगंतु विधायकामंदासीकृतोहिभगवाननयाप्यनंतः ॥ ३१ ॥ एकाऽपिबंधनविधौयुवतीसमर्थापुंसोयथासुदृढलोहमयंतुदाम ॥ किंनामषोडशसह स्रशताऽर्धकाश्चतंस्वीकृतंशुकमिवाऽतिनिबंधयंति ॥ ३२ ॥ सात्राजितीवशगतेनमुदान्वितेनप्राप्तंसुरेंद्रभवनंहरिणातदानीम् ॥ कृत्वामृधंमघ वताविहतस्तरूणामीशःप्रियासदनभूषणतांयआप ॥ ३३ ॥ योभीमजांहिहतवाञ्छिशुपालकादीञ्जित्वाविधिंनिखिलधर्मकृतोविधित्सुः ॥ जग्राहतांनिजबलेनचधर्मपत्नींकोऽसौविधिःपरकलत्रहृतौविजातः ॥ ३४ ॥

स्वयमेवदेवी निर्मायतासांविलासवशगंकृष्णंविधायाऽनयादेव्यालोकाभिमतोभगवान्कृष्णआसांस्त्रीणांदासीकृतइत्यर्थः ॥ सर्वचेष्टितंश्रीभगवतीकृतमेवेतिभावः ॥ ३१ ॥ एकापीति ॥ लोहमयंदामश्रृंखला ॥ इत्थंस्त्रीबंधनेनहिकश्चित्स्वतंत्रःपतेत् ॥ तस्मात्परांबाप्रेरितस्तदधीनएवकृष्णः सर्वंकरोतीत्यर्थः ॥ ३२ ॥ स्त्रीसंबंधादनेकदुःखानिकृष्णे नप्राप्तानितत्रकानिचिद्वर्णयति ॥ सात्राजितीति ॥ सत्राजितस्याऽपत्यंकन्यासत्यभामा ॥ तरूणामीशःपारिजातोयस्तरुःप्रियासदनभूषणतांसत्यभामागृहालंकारतांप्रापेत्यर्थः ॥ ॥ ३३ ॥ कृष्णस्याऽधर्मकारित्वमुपपादयति ॥ योभीमजामिति ॥ निखिलान्धर्मान्करोत्युत्पादयतियोविधिस्तंविधित्सुःकर्तुमिच्छुर्धर्मात्माऽपिभीमजांरुक्मिणींशिशुपालेनवृतां तत्पत्नींताञ्छिशुपालादीञ्जित्वातांरुक्मिणीमन्यपत्नींस्वस्यधर्मपत्नीत्वेनजग्राहाऽसौपरकलत्रहृतौयोविधिर्जातःसकःधर्मोवाऽधर्मोवेतिभावः ॥ नह्येतादृशाऽधर्माचरणेस्त्रीजनितदुःखभो गेचस्वतंत्रःकश्चित्प्रवर्तेत तस्माच्छ्रीभगवत्यधीनएवसर्वव्यवहारःकृष्णरामादीनामितिभावः ॥ ३४ ॥

ननुकेनप्रकृत्यंशेनवशीकृताःकृष्णादयोऽन्यथास्वदुःखजनकमप्यनिष्टाचरणंकुर्वंतीतिचेत्तत्राह । अहंकारवशइति । प्रकृतिजन्याऽहंकारवशइत्यर्थः ॥ ३५ ॥ नकेवलंप्राणिचेष्टाएवाऽहं
कारजन्याः किंतुसर्वःप्रपंचोऽपीत्याह । अहंकाराद्धीति ॥ प्रकृतिसंभवादहंकारादित्यर्थः ॥ उग्रादन्यथाकारिणः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ननुकुतएवमहंकारस्यव्याप्तिरिति
चेत्कारणस्याऽहंकारस्यसर्वप्रपंचरूपकार्येऽनुगमादित्याह । कारणेनेति ॥ ४० ॥ दृष्टांतमाह । यथेति ॥ विष्णुरहंकारेणवशीकृतइत्यत्राऽर्थापत्तिमपिप्रमाणयति । विष्णुरिति ॥४१॥
कथंमयाजगत्पालितंस्यादितिचितायाआकारः ॥ ४२ ॥ ४३ ॥ अहंकारस्यत्रैविध्यमाह । त्रिविधइति ॥ ४४ ॥ ब्रह्मविष्णुशिवादिदेहेषुविद्यमानःपुरुषोऽहंकारः सात्त्विकादिभेदेन

अहंकारवशःप्राणीकरोतिचशुभाऽशुभम्॥विमूढोमोहजालेनतत्कृतेनाऽतिपातिना॥३५॥अहंकाराद्धिसंजातमिदंस्थावरजंगमम्॥मूलाद्धरिहरा
दीनामुग्रात्प्रकृतिसंभवात्॥३६॥अहंकारपरित्यक्तोयदाभवतिपद्मजः॥तदाविमुक्तोभवतिनोचेत्संसारकर्मकृत्॥३७॥ तन्मुक्तस्तुविमुक्तोहिबद्ध
स्तद्वशतांगतः॥ननारीनधनंगेहंनपुत्रानसहोदराः॥३८॥बंधनंप्राणिनांराजन्नहंकारस्तुबंधकः॥अहंकर्तामयाचेदंकृतंकार्यंबलीयसा॥३९॥करि
ष्यामिकरोम्येवंस्वयंबध्नातिप्राणभृत्॥कारणेनविनाकार्यंनसंभवतिकर्हिचित् ॥४०॥यथानदृश्यतेजातोमृत्पिंडेनविनाघटः॥विष्णुःपालयिता
विश्वस्याऽहंकारसमन्वितः ॥४१॥ अन्यथासर्वदाचिंतांबुधौमग्नःकथंभवेत्॥अहंकारविमुक्तस्तुयदाभवतिमानवः॥४२॥अवतारप्रवाहेषुकथंम
ज्जेच्छुभाशयः॥मोहमूलमहंकारःसंसारस्तत्समुद्भवः॥४३॥अहंकारविहीनानांनमोहोनचसंसृतिः॥ त्रिविधःपुरुषःप्रोक्तःसात्त्विकोराजसस्तथा
॥४४॥तामसस्तुमहाराजब्रह्मविष्णुशिवादिषु॥त्रिविधस्त्रिषुराजेंद्रकाऽजेशादिषुसर्वदा ॥४५॥ अहंकारःसदाप्रोक्तोमुनिभिस्तत्त्वदर्शिभिः॥अहं
कारेणतेनैवबद्धाएतेनसंशयः॥४६॥मायाविमोहितामंदाःप्रवदंतिमनीषिणः॥करोतिस्वेच्छयाविष्णुरवताराननेकशः ॥४७॥मंदोऽपिदुःखगह
नेगर्भवासेऽतिसंकटे॥नकरोतिमतिंविद्वान्कथंकुर्यात्सचक्रभृत्॥४८॥कौसल्यादेवकीगर्भेविष्टामलसमाकुले॥स्वेच्छयाप्रवदंत्यद्धागतोहिमधुसू
दनः॥४९॥ वैकुंठसदनंत्यक्त्वागर्भवासेसुखंनुकिम् ॥ चिंताकोटीसमुत्थानेदुःखदेविषसंमिते ॥ ५० ॥ तपस्तप्त्वाक्रतून्कृत्वादत्त्वादानान्यनेक
शः ॥नवांछंतियतोलोकागर्भवासंसुदुःखदम् ॥५१॥ सकथंभगवान्विष्णुःस्ववशश्चेज्जनार्दनः ॥ गर्भवासरुचिर्भूयाद्भवेत्स्ववशतायदि ॥५२॥

त्रिविधइत्यर्थःत्रिषुतेषुत्रिविधाऽहंकारास्तिष्ठतीत्याह । त्रिविधस्त्रिष्विति ॥ ४५ ॥ ४६ ॥ ननुविष्णोरहंकारवशत्वेनजीववज्जीवत्वमेवजातमितिलोकास्तमीश्वरमितिवदंतितत्राह
मायाविमोहिताइति ॥ मनीषिणोऽपियेमायामोहितामंदास्ते विष्णुःस्वेच्छयाऽवतारान्करोतीतिवदंतिनत्वमोहिताःतेतुपरतंत्रएवविष्णुरस्तीतिवदंतीत्यर्थः ॥ ४७ ॥ तत्राऽर्थापत्तिं
प्रमाणयति । मंदोऽपीति ॥ गर्भवासेमंदोऽपिमतिंनकरोतितदाचक्रभृत्स्वतंत्रईश्वरश्चेत्कथंकुर्यात्करोतिचतस्मान्नेश्वरःसइत्यर्थः ॥ ४८ ॥ वैष्णवाविष्णोर्गर्भवासगमनंस्वेच्छयेतिवदंति
नतुपरेच्छयेत्याह । कौसल्येति ॥ ४९ ॥ तत्खंडयति । वैकुंठेति ॥ ५० ॥ ५१ ॥ ५२ ॥

तस्माद्विष्णवादयःपराशक्तिवशाएवनस्वतंत्राः ॥ नकेवलंतएव किंतुसर्वप्रपंचोप्येवमेवेत्याह । जानीहित्वमिति ॥ ५३ ॥ ५४ ॥ इतिश्रीदेवीभागवततिलकेपंचमस्कंधेप्रथमोऽध्यायः ॥ ॥ १ ॥ पंचाशद्भिरथश्लोकैर्देवीमाहात्म्यवर्णने ॥ जनमेजयपृष्टासामहिषोत्पत्तिरुच्यते ॥ १ ॥ पूर्वस्कंधेश्रीभगवत्याएवसर्वोत्तमत्वंसर्वेशत्वंसर्वशक्तिचक्रवर्तित्वंसर्वव्यापकत्वंसर्वज्ञत्वं सर्वांतर्यामित्वंसकलकल्याणगुणरत्नाकरत्वंश्रुतिस्मृतियुक्तिभिरागमाऽनुभवेनचश्रुत्वापरमपराशक्तिभक्तोजनमेजयोराजापराशक्तिकृताऽवताराणामकलंकमहिमानंश्रोतुंपृच्छति । योगेश्वर्याःप्रभावोयमिति ॥ १ ॥ २ ॥ ३ ॥ कदायुद्धमभूदितिचेत्तत्राह । पृथिव्यामिति । महिषाख्येमहीपतौपृथिव्यांसतीत्यर्थः ॥ ४ ॥ महिषस्यदेवसेनयायुद्धेकस्मात्पराक्रमोजात

जानीहित्वंमहाराजयोगमायावशेजगत् ॥ ब्रह्मादिस्तंबपर्यंतंदेवमानुषतिर्यगम् ॥५३॥ मायातंत्रीनिबद्धायेब्रह्मविष्णुहरादयः ॥भ्रमंतिबंधमायां तिलीलयाचोर्णनाभवत् ॥५४॥ ॥ इतिश्रीदेवीभागवतेमहापुराणेपंचमस्कंधेप्रथमोऽध्यायः ॥ १ ॥ ॥ राजोवाच ॥ योगेश्वर्याःप्रभावोऽयंकथितश्चातिविस्तरात् ॥ ब्रूहितच्चरितंस्वामिन्श्रोतुंकौतूहलंमम ॥१॥ महादेवीप्रभावंवैश्रोतुंकोनाऽभिवांछति ॥ योजानातिजगत्सर्वंतदुत्पन्नंचराचरम् ॥२॥ व्यासउवाच॥शृणुराजन्प्रवक्ष्यामिविस्तरेणमहामते ॥ श्रद्दधानायशांतायनब्रूयात्सतुमंदधीः ॥३॥ पुरायुद्धमभूद्घोरंदेवदानसेनयोः ॥ पृथिव्यांपृथिवीपालमहिषाख्येमहीपतौ ॥ ४ ॥ महिषोनामराजेंद्रचकारतपउत्तमम्॥ गत्वाहेमगिरौचोग्रंदेवविस्मयकारकम् ॥५॥ वर्षाणामयुतंपूर्णंचिंतयन्हृदिदेवताम् ॥ तस्यतुष्टोमहाराजब्रह्मालोकपितामहः ॥ ६ ॥ तत्राऽऽगत्याऽब्रवीद्वाक्यंहंसारूढश्चतुर्मुखः ॥ वरंवरय धर्मात्मन्ददामितववांछितम् ॥ ७ ॥ महिषउवाच ॥ अमरत्वंदेवदेववांछामिद्रुहिणप्रभो ॥ यथामृत्युभयंनस्यात्तथाकुरुपितामह ॥ ८ ॥ ब्रह्मोवाच ॥ उत्पन्नस्यध्रुवंमृत्युर्ध्रुवंजन्ममृतस्यच ॥ सर्वथामरणोत्पत्तीसर्वेषांप्राणिनांकिल ॥ ९ ॥ नाशःकालेनसर्वेषांप्राणिनांदैत्यपुंगव ॥ महामहीधराणांचसमुद्राणांचसर्वथा ॥ १० ॥ एकंस्थानंपरित्यज्यमरणस्यमहीपते ॥ प्रब्रूहितंवरंसाधोयस्तेमनसिवर्तते॥११॥महिषउवाच॥ नदेवान्मानुषाद्दैत्यान्मरणंमेपितामह ॥ पुरुषान्नचमेमृत्युर्योषामांकाहनिष्यति ॥ १२ ॥ तस्मान्मेमरणंनूनंकामिन्याःकुरुपद्मज ॥ अबलाहंतमांहंतुंकथंशक्ताभविष्यति ॥ १३ ॥ ब्रह्मोवाच ॥ यदाकदाऽपिदैत्येंद्रनार्यास्तेमरणंध्रुवम् ॥ ननरेभ्योमहाभागमृतिस्तेमहिषाऽसुर ॥ १४ ॥ व्यासउवाच ॥ एवंदत्त्वावरंतस्मैययौब्रह्मानिजाऽऽलयम् ॥ सोऽपिदैत्यवरःप्रापनिजंस्थानंमुदान्वितः ॥ १५ ॥

इतिचेत्तत्राह । महिषोनामेति ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ एकंमरणस्यस्थानंनिमित्तंपरित्यज्ययोयथेच्छंवरस्तंब्रूहीत्यर्थः ॥ ११ ॥ योषामांकाहनिष्यतिनहितस्याःशक्तिरस्तिमांहंतुंतस्मात्पुरुषान्मृत्युर्माऽस्तुयोषितोमृत्युरस्तिचेदस्तु नममततोभयमस्तीत्यर्थः ॥ १२ ॥ १३ ॥ ननरेभ्यइति । पुंस्त्वविशिष्टेभ्योयत्किंचित्प्राणिभ्यइत्यर्थः ॥ नरपदस्यसर्वप्राण्युपलक्षार्थत्वात् ॥ १४ ॥ १५ ॥

माहिषंरूपंमहिषाकाररूपमित्यर्थः ॥ महात्मनेत्यनेनाऽयंशिवाऽवतारइतिकालिकापुराणेउक्तं साकथास्मारिता ॥ तत्रहिरंभासुरतपस्ययाप्रसन्नस्यशिवस्यांशोयंजन्मत्रयेतत्सुतोम हिषः ॥ सचतपसाममदेवीसायुज्यंभवत्वितिवरंप्रार्थितवानित्यादिकम् ॥ आदिसृष्टावुग्रचंडमूर्त्यात्वंनिहतःपुरा ॥ द्वितीयसृष्टौतुभवान्भद्रकाल्यामयाहतः ॥ दुर्गारूपेणाऽधुनात्वांह निष्यामिसहानुगमित्युक्तम् ॥ १६ ॥ १७ ॥ १८ ॥ रसालवटोवटयक्षिणीस्थानंयक्षपुर्यामस्तीतिवटयक्षिणीविधानतंत्रेषुस्पष्टम् ॥ १९ ॥ तत्रकरंभोजलेमग्नस्तपश्चकार ॥ रंभस्तु पंचाग्निसाधनंचकार ॥ सरंभस्त्विति ॥ सप्रसिद्धोरंभइत्यर्थः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ सर्वलोकाऽभिवंदितइति ॥ शिवस्यांश

राजोवाच ॥ महिषःकस्यपुत्रोऽसौकथंजातोमहाबली ॥ कथंचमाहिषंरूपंप्राप्तंतेनमहात्मना ॥ १६ ॥ व्यासउवाच ॥ दनोःपुत्रौमहाराजवि ख्यातौक्षितिमंडले ॥ रंभश्चैवकरंभश्चद्वावास्तांदानवोत्तमौ ॥ १७ ॥ तावपुत्रौमहाराजपुत्रार्थंतेपतुस्तपः ॥ बहून्वर्षगणान्कामंपुण्येपंचनदे जले ॥ १८ ॥ करंभस्तुजलेमग्नश्चकारपरमंतपः ॥ वृक्षंरसालवटंप्राप्यसरंभोऽग्निमसेवत ॥ १९ ॥ पंचाग्निसाधनासक्तःसरंभस्तुयदाऽभवत् ॥ ज्ञात्वाशचीपतिर्दुःखमुद्ययौदानवौप्रति ॥ २० ॥ गत्वापंचनदेतत्रग्राहरूपंचकारह ॥ वासवस्तुकरंभंतंतदाजग्राहपादयोः ॥२१॥ निजवान चतंदुष्टंकरंभंवृत्रसूदनः ॥ भ्रातरंनिहतंश्रुत्वारंभःकोपपरंगतः ॥२२॥ स्वशीर्षंपावकेहोतुमैच्छच्छित्त्वाकरेणह॥केशपाशेगृहीत्वाऽऽशुवामेनक्रो धसंयुतः॥२३॥दक्षिणेनकरेणोग्रंगृहीत्वाखड्गमुत्तमम् ॥ छिनत्तिशीर्षंतत्तावद्वह्निनाप्रतिबोधितः॥२४॥ उक्तश्चदैत्यमूर्खोऽसिस्वशीर्षंछेत्तुमिच्छ सि ॥ आत्महत्याऽतिदुःसाध्याकथंत्वंकर्तुमुद्यतः ॥२५॥ वरंवरयभद्रंतेयस्तेमनसिवर्तते ॥ माम्रियस्वमृतेनाऽद्यकिंतेकार्यंभविष्यति ॥ २६ ॥ व्यासउवाच॥तच्छ्रुत्वावचनंरंभःपावकस्यसुभाषितम्॥ततोब्रवीद्वचोरंभस्त्यक्त्वाकेशकलापकम् ॥२७॥ यदितुष्टोऽसिदेवेशदेहिमेवांछितंवरम्॥ त्रैलोक्यविजयीपुत्रःस्यान्मेपरबलार्दनः ॥ २८ ॥ अजेयःसर्वथासस्याद्देवदानवमानवैः ॥ कामरूपीमहावीर्यःसर्वलोकाभिवंदितः ॥ २९ ॥ पावकस्तंतथेत्याहभविष्यतितवेप्सितम् ॥ पुत्रस्तवमहाभागमरणाद्विरमाऽधुना॥३०॥यस्यांचित्तंतुरंभत्वंप्रमदायांकरिष्यसि ॥ तस्यांपुत्रोम हाभागभविष्यतिबलाऽधिकः॥३१॥व्यासउवाच॥ इत्युक्तोवह्निनारंभोवचनंचित्तरंजनम्॥श्रुत्वाप्रणम्यप्रययौवह्निंतंदानवोत्तमः॥३२॥यक्षैः परिवृतंस्थानंरमणीयंश्रियान्वितम् ॥ दृष्ट्वाचक्रेतदाभावंमहिष्यांदानवोत्तमः ॥ ३३ ॥ मत्तायांरूपपूर्णायांविहायान्यांचयोषितम् ॥ सासमागा च्चतरसाकामयंतीमुदान्विता ॥ ३४ ॥ रंभोऽपिगमनंचक्रेभवितव्यप्रणोदितः ॥ सातुगर्भवतीजातामहिषीतस्यवीर्यतः ॥ ३५ ॥

इत्यर्थः॥ कालिकापुराणेमहिषस्यशिवांशस्यैवोक्तत्वात् ॥ नन्वग्निंप्रतिशिवांशोममपुत्रोभवत्वितिप्रार्थनयाऽपिकथंशिवांशःपुत्रोभविष्यतिनह्यग्न्यधीनःशिवोऽस्तीतिचेन्न ॥ अग्निर्वैरुद्रइति श्रुतेरग्नेःशिवस्वरूपत्वात्स्वप्रार्थनयैवस्वांशस्यजायमानत्वात् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ननुराक्षसस्याऽपिनानाविधसुंदरीर्विहायपशुजातीयमहिषीगमनंकथंरुचि करंजातमितिचेत्तत्राह । भवितव्येति ॥ ३५ ॥

॥ ३६ ॥ ३७॥ ३८॥ ३९ ॥ भर्तरिरंभसंज्ञकेमृतेसतीत्यर्थः ॥ ४० ॥ ॥ ४१ ॥ तंमहिषंतयासहमैथुनार्थधावमानम् ॥ ४२ ॥ हयाऽरिणामहिषेण ॥ शरेण यक्षक्षिप्तशरेण ॥ ४३॥ परमंप्रियंयक्षाणांमित्रवर्गांतर्गतमित्यर्थः ॥ ४४ ॥ ४५ ॥ वार्यमाणाऽपीति ॥ गर्भिण्याःसतीगमनेनाऽधिकारइतिवार्यमाणाऽपिपतिवियोगदुःखमसहमानागर्भवत्येवविभावसुं प्रविवेश ॥ ४६ ॥ तस्मिन्नेवसमयेमहिष्यांहिचितामध्याद्गर्भस्थितोमहिषोबहिःसमुत्तस्थौनिर्गतः ॥ तस्मिन्नेवसमयेमृतोरंभोऽपिपुत्रवात्सल्याद्रक्तबीजस्यरूपान्तरंकृत्वानिर्गतः ॥ ॥ ४७ ॥ रक्तबीजोऽप्यसौजातइति ॥ असौरंभएवचितामध्याद्रूपांतरंकृत्वानिर्गतोरक्तबीजोजातः ॥ महिषासुरोऽपिपूर्वोक्तप्रकारेणैवंजातइत्यर्थः ॥ ४८ ॥ ४९ ॥ ५० ॥

तांगृतीत्वाऽथपातालंप्रविवेशमनोहरम् ॥ महिषेभ्यश्चतांरक्षन्प्रियामनुमतांकिल ॥३६॥ कदाचिन्महिषश्चान्यःकामार्तस्तामुपाद्रवत् ॥ स्वय मागत्यतंहंतुंदानवःसमुपाद्रवत् ॥३७॥ स्वरक्षार्थंसमागम्यमहिषंसमताडयत् ॥ सोऽपितंनिजघानाऽऽशुशृंगाभ्यांकाममोहितः॥३८॥ ताडि तस्तेनतीक्ष्णाभ्यांशृंगाभ्यांहृदयेभृशम् ॥ भूमौपपाततरसाममारचविमूर्छितः ॥३९ ॥ मृतेभर्तरिसादीनाभयार्ताविद्रुताभृशम् ॥ सावेगात्तंवटं प्राप्ययक्षाणांशरणंगता ॥४०॥ पृष्ठतस्तुगतस्तत्रमहिषःकामपीडितः ॥ कामयानस्तुतांकामीबलवीर्यमदोद्धतः॥४१॥ रुदतीसाभृशंदीनादृष्ट्वा यक्षैर्भयातुरा ॥ धावमानंचतंवीक्ष्ययक्षास्त्रातुंसमाययुः ॥४२ ॥ युद्धंसमभवद्घोरंयक्षाणांचहयाऽरिणा ॥ शरेणताडितस्तूर्णंपपातधरणीतले ॥ ॥ ४३ ॥ मृतंरंभंसमानीययक्षास्तेपरमंप्रियम् ॥ चितायांरोपयामासुस्तस्यदेहस्यशुद्धये ॥ ४४ ॥ महिषीसापतिंदृष्ट्वाचितायांरोपितंतदा ॥ प्रवेष्टुंसामतिंचक्रेपतिनासहपावकम् ॥४५॥वार्यमाणाऽपियक्षैःसाप्रविवेशहुताशनम् ॥ ज्वालामालाकुलंसाध्वीपतिमादायवल्लभम् ॥ ४६ ॥ महिषस्तुचितामध्यात्समुत्तस्थौमहाबलः ॥ रंभोप्यन्यद्वपुःकृत्वानिःसृतःपुत्रवत्सलः ॥ ४७ ॥ रक्तबीजोऽप्यसौजातोमहिषोऽपिमहाबलः ॥ अभिषिक्तस्तुराज्येऽसौहयाऽरिरसुरोत्तमैः ॥४८॥ एवंसमाहिषोजातोरक्तबीजश्चवीर्यवान् ॥ अवध्यस्तुसुरैर्दैत्यैर्मानवैश्चनृपोत्तम ॥४९॥ इत्ये तत्कथितंराजञ्जन्मतस्यमहात्मनः ॥ वरप्रदानंचतथाप्रोक्तंसर्वंसविस्तरम् ॥ ५० ॥ इति श्रीदेवीभागवतेम० पंचमस्कंधेमहिषाऽसुरोत्पत्तिर्नाम द्वितीयोऽध्यायः ॥२॥ व्यासउवाच ॥ एवंसमहिषोनामदानवोवरदर्पितः ॥ प्राप्यराज्यंजगत्सर्वंवशेचक्रेमहाबलः॥१॥ पृथिवींपालयामास सागरांतांभुजार्जिताम् ॥ एकच्छत्रांनिरातंकांवैरिवर्गविवर्जिताम् ॥ २ ॥ सेनानीश्चिक्षुरस्तस्यमहावीर्योमदोत्कटः ॥ धनाध्यक्षस्तथाताम्रः सेनाऽयुतसमावृतः ॥ ३ ॥ असिलोमातथोदर्कोबिडालाख्यश्चबाष्कलः ॥ त्रिनेत्रोऽथतथाकालबंधकोबलदर्पितः ॥ ४ ॥

इतिश्रीदेवीभागवततिलकेपंचमस्कन्धेद्वितीयोऽध्यायः ॥ २ ॥ त्रिपञ्चाशतपद्यकैस्तुदेवेन्द्रसमरोद्यतः ॥ महासुरःस्वसैन्यस्यसमुद्योगंचकारह ॥ १ ॥ पूर्वाऽध्यायेमहिषाऽसुरस्यबलाऽऽ धिक्यकरणंतपस्यादिकमुपपाद्यतेनदेवेंद्रेणसाकंकथंयुद्धंकृतमित्याकांक्षायांयुद्धप्रसंगमुपपादयंति । एवमिति ॥ १ ॥ २ ॥ सेनानीःसेनापतिःताम्रोदैत्यस्तुसेनाऽयुतसमावृतः ॥ अत्राऽयुतशब्दोबह्वर्थकोबहुसेनावृतोधनाध्यक्षोभांडारगृहाधिपतिर्महिषासुरस्यासीदित्यर्थः ॥ ३ ॥ असिलोमादयोवांतरसेनापतयः ॥ ४ ॥

॥ ५ ॥ येबलोदग्रावलेनक्रूराः क्षात्रधर्मोंयुद्धेचाप्यपलायनमित्यादिस्तस्मिन्येऽवस्थितास्तेनिहताइत्यर्थः ॥ येतुतदन्येतेतुकरदाःकृताइत्यर्थः ॥ ६ ॥ यज्ञभागसमर्पकायज्ञभागंमहिषासुरायसमर्पयामासुरित्यर्थः ॥ महिषस्यक्षितिमंडलेएवंसर्वेब्राह्मणावशगाजाताइत्यन्वयः ॥ ७ ॥ ८ ॥ प्रणिधिमिति॥ प्रसिद्धेभूषितेख्यातेप्रणिधिर्नानुचरेपरे ॥ इतिमेदिनीकोशात्प्रणिधिमनुचरम् ॥ हयाऽरिर्महिषासुरःशचीपतिंप्रतिप्रमत्तःप्रेषयामासेत्यर्थः ॥ कथंप्रेषयामासतदाह ॥ ससंदेशेति ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ पूर्वैरिति ॥ अस्माकंपूर्वैः पूर्वजैस्त्वंनित्यंजितोऽसि ॥ तवपौरुषंकियद्वर्ततेतदहंनजानामीत्यर्थः॥ १३ ॥अहल्याजारेति ॥ अहल्याजारेत्यनेनस्त्रीयोनिकुट्टनेएवतवपौरुषंनान्यत्रेतिबोधितम् ॥ व्रजवेतिराज्यंत्यक्त्वेत्यर्थः

एतेसैन्ययुताःसर्वेदानवामेदिनींतदा ॥ आवृत्यसंस्थिताःकाममृद्धांसागरमेखलाम् ॥५॥ करदाश्चकृताःसर्वेभूमिपालाःपुरातनाः ॥ निहतायेबलोदग्राःक्षात्रधर्मव्यवस्थिताः॥६॥ब्राह्मणावशगाजातायज्ञभागसमर्पकाः॥महिषस्यमहाराजनिखिलेक्षितिमंडले ॥७॥ एकातपत्रंतद्राज्यंकृत्वासमहिषासुरः ॥ स्वर्गंजेतुंमनश्चक्रेवरदानेनगर्वितः ॥ ८ ॥ प्रणिधिंप्रेषयामासहयारिस्तुशचीपतिम् ॥ ससंदेशहरंशीघ्रमाहूयोवाचदैत्यराट् ॥ ९ ॥ गच्छवीरमहाबाहोदूतत्वंकुरुमेऽनघ ॥ ब्रूहिशक्रंदिवंगत्वानिःशंकःसुरसन्निधौ ॥१०॥ मुञ्चस्वर्गंसहस्राक्षयथेष्टंगच्छमाचिरम् ॥ सेवांवाकुरुदेवेशमहिषस्यमहात्मनः ॥ ११ ॥ सत्वांसंरक्षयेन्नूनंराजाशरणमागतम् ॥ तस्मात्त्वंशरणंयाहिमहिषस्यशचीपते ॥१२॥ नोचेद्वज्रंगृहाणाऽऽशुयुद्धायबलसूदन ॥ पूर्वैर्जितोऽसिचाऽस्माकंजानामितवपौरुषम् ॥ १३ ॥ अहल्याजारविज्ञातंबलंतेसुरसंघप ॥ युध्यस्ववाव्रजवाकामंयत्रतेरमतेमनः ॥ १४ ॥ व्यासउवाच ॥ तच्छ्रुत्वावचनंतस्यशक्रःक्रोधसमन्वितः ॥ उवाचतंनृपश्रेष्ठस्मितपूर्वंवचस्तदा ॥ १५ ॥ नजानेऽहंसुमंदात्मन्यतस्त्वंमदगर्वितः ॥ चिकित्सांसंकरिष्यामिरोगस्याऽस्यप्रभोस्तव ॥ १६ ॥ अतःपरंकरिष्यामिमूलस्याऽस्यनिमूलनम् ॥ गच्छदूततथाब्रूहितस्याऽग्रेममभाषितम् ॥ १७ ॥ शिष्टैर्दूतानहंतव्यास्तस्मात्त्वांविसृजाम्यहम् ॥ युद्धेच्छाचेत्समागच्छत्वरितोमहिषीसुत ॥ १८ ॥ हयारेत्वद्बलंज्ञातंतृणादस्त्वंजडाकृतिः ॥ शृंगयोस्तेकरिष्यामिसुदृढंचशरासनम् ॥ १९ ॥ दर्पःशृंगबलात्तेऽस्तिविदितंकारणंमया॥विषाणेपरिच्छिद्यत्वातेसंहरिष्यामितद्बलम्॥२०॥यद्बलेनाऽतिपूर्णस्त्वंजातोऽसिबलदर्पितः॥कुशलस्त्वंतदाघातेनयुद्धेमहिषाऽधम २१॥ व्यासउवाच॥इत्युक्तोऽसौसुरेन्द्रेणसदूतस्त्वरितोगतः॥जगाममहिषंमत्तंप्रणम्यप्रत्युवाचह॥२२॥दूतउवाच॥राजन्देवाऽधिपःकामंनत्वांविगणयत्यसौ ॥ मन्यतेस्वबलंपूर्णंदेवसैन्यसमावृतः ॥२३॥ यदुक्तंतेनमूर्खेणकथमन्यद्ब्रवीम्यहम् ॥ प्रियंसत्यंचवक्तव्यंभृत्येनपुरतःप्रभोः ॥२४॥

इत्येवंवाक्यंब्रूहिशक्रंप्रतीतिदैत्यराडुवाच ॥ ततःसदूतोऽपिशक्रंप्रतिगत्वेत्थमुवाचेत्यर्थाद्बोध्यमुत्तरश्लोकानुरोधात् ॥१४॥ तदाशक्रःकिमुवाचदूतंप्रतितदाहतच्छ्रुत्वेति ॥१५॥ तवप्रभोःस्वामिनोमहिषाऽसुरस्याऽस्यमदरूपरोगस्याचिकित्सामौषधंसंकरिष्यामि ॥ १६ ॥ १७ ॥ ॥ १८ ॥ तृणादइतितृणभक्षणएवबलंनान्यत्रेतिभावः ॥ १९ ॥ २० ॥ तदाऽऽघातेश्शृंगाभ्यामाघातेएवकुशलोनयुद्धेइत्यर्थः ॥ २१ ॥२२॥२३ ॥ यदुक्तमिति ॥ यत्तेनमूर्खेणेंद्रेणोक्तंतस्मादन्यदन्यथाकथंब्रवीमि ॥ कथंवक्तव्यमित्यर्थः ॥ कुतइतिचेत्तत्राह । प्रियंसत्यमिति ॥ इंद्रोक्तादन्यस्याभिन्नस्यकथनेसत्यबाधःस्यादितिभावः ॥ २४ ॥

तत्रनीतिशास्त्रंप्रमाणयति । प्रियंसत्यमिति ॥ २५ ॥ किंच ॥ सत्यंहित्वादेवराजेनाऽनुक्तमपिकेवलंप्रियंवाक्यंत्वत्संतोषार्थंवक्तव्यम् ॥ तथाऽपितदातवकार्यमिंद्रस्थानलाभोनभवि
ष्यतीत्याह । केवलमिति ॥ ननुतर्हिममकार्यार्थमिंद्रेणयत्परुषंवाक्यमुक्तंतदेववदेतिचेत्तत्राह । परुषंचेति ॥ प्रभोरग्रेशुभमिच्छतापुरुषेणपरुषंवाक्यमपिनवक्तव्यंमर्यादाऽभावप्रसंगा
दितिभावः ॥ २६ ॥ ननुभवतुममाऽमर्यादा तथाऽपियत्तेनोक्तंपरुषंवाक्यंसत्यंतदेववदेतिचेत्तत्राह ॥ यथारिपुमुखादिति ॥ कथंगिरइति ॥ अतिकठोरामयावक्तुमनर्हाअतिनीचावाच

प्रियंसत्यंचवक्तव्यंप्रभोरग्रेशुभेच्छुना॥इतिनीतिर्महाराजजागर्तिशुभकारिणी॥२५॥केवलंचेत्प्रियंब्रूयान्नतेकार्यंभविष्यति॥ परुषंचनवक्तव्यंक
दाचिच्छुभमिच्छता ॥२६॥ यथारिपुमुखाद्वाचःप्रसरंतिविषोपमाः ॥ तथाभृत्यमुखान्नाथनिःसरंतिकथंगिरः ॥ २७ ॥ यादृशानीहवाक्यानि
तेनोक्तानिमहीपते ॥ तादृशानिनमेजिह्वावक्तुमर्हतिकर्हिचित् ॥२८॥ व्यासउवाच ॥ तच्छ्रुत्वावचनंतस्यहेतुगर्भंतृणाशनः ॥ भृशंकोपपरीता
त्माबभूवमहिषासुरः ॥२९॥ समाहूयाऽब्रवीद्दैत्यान्क्रोधसंरक्तलोचनः ॥ लांगूलंपृष्ठदेशेचकृत्वामूत्रंपरित्यजन् ॥ ३०॥ भोभोदैत्याःसुरेंद्रोऽसौ
युद्धकामोऽस्तिसर्वथा ॥ बलोद्योगंकुरुध्वंवैजेतव्योऽसौसुराधमः ॥ ३१ ॥ मदग्रेकोभवेच्छूरःकोटिशश्चेत्तथाविधाः ॥ नबिभेम्येकतःकामंहनि
ष्याम्यद्यसर्वथा ॥३२॥ शूरःशान्तेष्वसौनूनंतपस्विषुबलाधिकः ॥ बलकर्ताहिकुहकोलंपटःपरदारहृत् ॥३३॥ अप्सरोबलसंमत्तस्तपोविघ्नक
रःखलः ॥ छिद्रप्रहरणःपापोनित्यंविश्वासघातकः ॥ ३४ ॥ नमुचिर्निहतोयेनकृत्वासंधिंदुरात्मना ॥ शपथान्विविधानादौकृत्वाभीतेनच्छ
द्मना ॥ ३५ ॥ विष्णुस्तुकपटाचार्यःकुहकःशपथाकरः ॥ नानारूपधरःकामंबलकृद्दंभपंडितः ॥ ३६ ॥ कृत्वाकोलाऽऽकृतिंयेनहिरण्याक्षोनि
पातितः ॥ हिरण्यकशिपुर्येननृसिंहेनचघातितः॥३७॥ नाऽहंतद्वशगोनूनंभवेयंदनुनंदनाः॥ विश्वासंनैवगच्छामिदेवानांकुत्रकर्हिचित् ॥३८॥
किंकरिष्यतिमेविष्णुरिंद्रोवाबलवत्तरः ॥ रुद्रोवाऽपिनमेशक्तःप्रतिकर्तुंरणांगणे ॥ ३९ ॥ त्रिविष्टपंग्रहीष्यामिजित्वेन्द्रंवरुणंयमम् ॥ धनदंपाव
कंचैवचंद्रसूर्यौविजित्यच ॥ ४० ॥ यज्ञभागभुजःसर्वेभविष्यामोऽद्यसोमपाः ॥ जित्वादेवसमूहंचविहरिष्यामिदानवैः ॥ ४१ ॥ नमेभयंसुरे
भ्यश्चवरदानेनदानवाः ॥ मरणंननरेभ्यश्चनारीकिंमेकरिष्यति ॥ ४२ ॥ पातालपर्वतेभ्यश्चसमाहूयवरान्वरान् ॥ दानवान्ममसैन्येशान्कुर्वंतु
त्वरिताश्चराः ॥ ४३ ॥ एकोऽहंसर्वदेवेशान्विजेतुंदानवाःक्षमः ॥ शोभार्थंवःसमाहूयनयामिसुरसंगमे ॥ ४४ ॥

स्तेनोक्ताइत्यर्थः ॥ २७ ॥ तदेवस्पष्टमाह । यादृशानीहेति ॥ २८ ॥ २९ ॥ मूत्रंपरित्यजन्मूत्रयन्नित्यर्थः ॥ वृषभमहिषयोरयंस्वभावोदर्शितः ॥ ३० ॥ ३१ ॥ ३२ ॥ शांतेषुसौ
म्येष्वसौशूरोनमादृशेष्वित्यर्थः ॥ तथातपस्विषुतपःकृशेषुबलाऽधिकोनमादृशेषु ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ प्रतिकर्तुंविपरीतंकर्तुम् ॥ ३९ ॥ ४० ॥ ४१ ॥४२ ॥
हेचराःदूतास्तानाहूतान्दानवान्सैन्येशान्कुर्वंतुभवंतइत्यर्थः ॥ ४३ ॥ वोयुष्मान्शोभार्थंयुद्धशोभार्थंसमाहूयनयामीत्यर्थः ॥ ४४ ॥

॥ ५९ ॥ ६० ॥ ६१ ॥ इतिश्रीदेवीभागवततिलकेपंचमस्कंधेसप्तदशोऽध्यायः ॥ १७ ॥ सप्ततिश्लोकवर्यैस्तुमंदोदर्याःकथानकम् ॥ समाप्यमहिषस्याऽपिवधएवाऽत्रकथ्यते ॥ १ ॥
तस्मिन्राजनिगतेऽनंतरंजातंवृत्तमाह । तस्यास्तुभगिनीति ॥ तस्यामंदोदर्याः ॥ १ ॥ २ ॥ ३ ॥ विटंधूर्तम् ॥ सामंदोदरी ॥ ४ ॥ मद्राधिपंमद्रराजानम् ॥ ५ ॥ तत्परस्तदुद्यो

यद्यद्भवेत्तद्भवतुदैवयोगादसंशयम् ॥ नविवाहंकरिष्येऽहंसर्वथापरिचारिके ॥५९॥ महिषउवाच ॥ इतितस्यास्तुनिर्बंधंज्ञात्वाप्राहनृपंपुनः ॥
गच्छराजन्यथाकामंनेयमिच्छतिसत्पतिम् ॥६०॥ नृपस्तुतद्वचःश्रुत्वानिर्गतःसहसेनया ॥ कोशलान्विमनाभूत्वाकामिनींप्रतिनिःस्पृहः ॥६१॥
इतिश्रीदेवीभागवतेमहापुराणेपंचमस्कंधेसप्तदशोऽध्यायः ॥ १७ ॥ ॥ महिषउवाच ॥ तस्यास्तुभगिनीकन्यानाम्नाचेंदुमतीशुभा ॥ विवाह
योग्यासंजातासुरूपाऽवरजायदा ॥१॥ तस्याविवाहःसंवृत्तःसंजातश्चस्वयंवरः ॥ राजानोबहुदेशीयाःसंगतास्तत्रमंडपे ॥ २ ॥ तयावृतोनृपः
कश्चिद्बलवान्रूपसंयुतः ॥ कुलशीलसमायुक्तःसर्वलक्षणसंयुतः ॥३॥ तदाकामातुराजाताविटंवीक्ष्यनृपंतुसा ॥ चकमेदैवयोगात्तुशठंचातुर्यभूषि
तम् ॥ ४ ॥ पितरंप्राहतन्वंगीविवाहंकुरुमेपितः ॥ इच्छाम्यद्यसमुद्भूतादृष्ट्वामद्राधिपंत्विह ॥ ५ ॥ चंद्रसेनोऽपितच्छ्रुत्वापुत्र्यायद्भाषितंरहः ॥
प्रसन्नेनैवमनसातत्कार्येतत्परोऽभवत् ॥ ६ ॥ तमाहूयनृपंगेहेविवाहविधिनाददौ ॥ कन्यांमंदोदरींतस्मैपारिबर्हंतथाबहु ॥ ७ ॥ चारुदेष्णोपि
तांप्राप्यसुंदरींमुदितोऽभवत् ॥ जगामस्वगृहंतुष्टोराजाऽपिसहितःस्त्रिया ॥ ८ ॥ रेमेनृपतिशार्दूलःकामिन्याबहुवासरान् ॥ कदाचिद्दासपत्न्या
सरममाणोरहःकिल ॥९॥ सैरंध्र्याकथितंतस्यैतयादृष्टःपतिस्तथा ॥उपालंभंददौतस्मैस्मितपूर्वंरुषान्विता॥१०॥कदाचिदपिसामान्यांरहोरूप
वतींनृपः॥क्रीडयल्लाँलयन्दृष्टःखेदंप्रापतदैवसा॥११॥नज्ञातोऽयंशठःपूर्वंयदादृष्टःस्वयंवरे ॥ किंकृतंतुमयामोहाद्वंचिताऽहंनृपेणह ॥१२॥ किंक
रोम्यद्यसंतापंनिर्लज्जेनिर्घृणेशठे ॥ काप्रीतिरीदृशेपत्यौधिगद्यममजीवितम् ॥१३॥ अद्यप्रभृतिसंसारेसुखंत्यक्तंमयाखलु ॥ पतिसंभोगजंसर्वंसं
तोषोऽद्यमयाकृतः ॥१४ ॥ अकर्तव्यंकृतंकार्यंतज्जातंदुःखदंमम ॥ देहत्यागःक्रियतेचेद्धत्याऽतीवदुरत्यया ॥ १५॥ पितृगेहंव्रजाम्याशुतत्राऽ
पिनसुखंभवेत् ॥ हास्ययोग्यासखीनांतुभवेयंनाऽत्रसंशयः ॥ १६ ॥ तस्मादत्रैवसंवासोवैराग्ययुतयामया ॥ कर्तव्यःकालयोगेनत्यक्त्वाका
मसुखंपुनः ॥ १७ ॥ महिषउवाच ॥ इतिसंचिंत्यसानारीदुःखशोकपरायणा ॥ स्थितापतिगृहंत्यक्त्वासुखंसंसारजंततः ॥ १८ ॥ तस्मा
त्त्वमपिकल्याणिमामनादृत्यभूपतिम् ॥ अन्यंकापुरुषंमंदंकामार्तासंश्रयिष्यसि ॥ १९ ॥

गवान् ॥ ६ ॥ तंमद्राधिपम् ॥ ७ ॥ चारुदेष्णोराजामद्राधिपस्तांप्राप्यतयास्त्रियासहितइत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ पतिगृहं
पतिशयनाऽऽगारमित्यर्थः ॥ संसारजंसुखंचहित्वेत्यर्थः ॥ १८ ॥ तस्मादिति ॥ मंदोदरीवत्त्वमपीत्यर्थः ॥ कापुरुषंकुत्सितपुरुषम् ॥ १९ ॥

॥ २० ॥ इत्थंविनोदार्थमंदोदरीकथाभगवत्यापृष्टासाश्रुताऽधुनाविनोदंविहाययथार्थंभाषणमाह । मंदात्मन्निति ॥ अहंनप्राकृताऽस्मि किंतुसर्वेश्वरी ॥ २१ ॥ किमर्थंतर्हिअत्राऽऽगतासीतिचेत्तत्राह । यदायदेति ॥ २२ ॥ तदेवस्पष्टयति । अरूपायाइति ॥ अजन्मायाश्चेत्यत्रडाबुभाभ्यामन्यतरस्यामितिडाप् ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

वचनंकुरुमेतथ्यंनारीणांपरमंहितम् ॥ अकृत्वापरमंशोकंलप्स्यसेनाऽत्रसंशयः ॥ २० ॥ देव्युवाच ॥ मंदात्मन्गच्छपातालंयुद्धंवाकुरुसांप्रतम् ॥ हत्वा त्वामसुरान्सर्वान्गमिष्यामियथासुखम् ॥ २१ ॥ यदायदाहिसाधूनांदुःखंभवतिदानव ॥ तदातेषांचरक्षार्थंदेहंसंधारयाम्यहम् ॥ २२ ॥ अरूपायाश्च मेरूपमजन्मायाश्चजन्मच ॥ सुराणांरक्षणार्थायविद्धिदैत्यविनिश्चितम् ॥ २३ ॥ सत्यंब्रवीमिजानीहिप्रार्थिताऽहंसुरैःकिल ॥ त्वद्वधार्थंहयारे त्वांहत्वास्थास्यामिनिश्चला ॥ २४ ॥ तस्माद्युध्यस्ववागच्छपातालमसुरालयम् ॥ सर्वथात्वांहनिष्यामिसत्यमेतद्ब्रवीम्यहम् ॥ २५ ॥ व्यासउवाच ॥ इत्युक्तःसतयादेव्याधनुरादायदानवः ॥ युद्धकामःस्थितस्तत्रसंग्रामांगणभूमिषु ॥ २६ ॥ मुमोचतरसाबाणान्कर्णाऽऽकृष्टाञ्छिलाशितान् ॥ देवी चिच्छेदतान्बाणैःक्रोधान्मुक्तैरयोमुखैः ॥ २७ ॥ तयोःपरस्परंयुद्धंसंबभूवभयप्रदम् ॥ देवानांदानवानांचपरस्परजयैषिणाम् ॥ २८ ॥ मध्येदुर्धर आगत्यमुमोचचशिलीमुखान् ॥ देवींप्रतिविषासक्तान्कोपयन्नतिदारुणान् ॥ २९ ॥ ततोभगवतीक्रुद्धातंजघानशितैःशरैः ॥ दुर्धरस्तुपपातोर्व्यां गतासुर्गिरिशृंगवत् ॥ ३० ॥ तंतथानिहतंदृष्ट्वात्रिनेत्रःपरमाऽस्त्रवित् ॥ आगत्यसप्तभिर्बाणैर्जघानपरमेश्वरीम् ॥ ३१ ॥ अनागतांस्तुचिच्छेददे वीतान्विशिखैःशरान् ॥ त्रिशूलेनत्रिनेत्रंतुजघानजगदंबिका ॥ ३२ ॥ अंधकस्त्वाजगामाशुहतंदृष्ट्वात्रिलोचनम् ॥ गदयालोहमय्याऽऽशुसिंहं विव्याधमस्तके ॥ ३३ ॥ सिंहस्तुनखघातेनतंहत्वाबलवत्तरम् ॥ चखादतरसामांसमंधकस्यरुषान्वितः ॥ ३४ ॥ तान्रणेनिहतान्वीक्ष्यदानवो विस्मयंगतः ॥ चिक्षेपतरसाबाणानतितीक्ष्णाञ्छिलाशितान् ॥ ३५ ॥ द्विधाचक्रेशरान्देवीतानप्राप्ताञ्छिलीमुखैः ॥ गदयाताडयामासदैत्यं वक्षसिचांबिका ॥ ३६ ॥ सगदाऽभिहतोमूर्छामवापाऽमरबाधकः ॥ विषह्यपीडांपापात्मापुनरागत्यसत्वरः ॥ ३७ ॥ जघानगदयासिंहं मूर्ध्निक्रोधसमन्वितः ॥ सिंहोऽपिनखघातेनतंददारमहाऽसुरम् ॥ ३८ ॥ विहायपौरुषंरूपंसोऽपिसिंहोबभूवह ॥ नखैर्विदारयामासदेवीसिंहंम दोत्कटम् ॥ ३९ ॥ तंचकेसरिणंवीक्ष्यदेवीक्रुद्धाह्ययोमुखैः ॥ शरैरवाकिरत्तीक्ष्णैःक्रूरैराशीविषैरिव ॥ ४० ॥ त्यक्त्वासहरिरूपंतुगजोभूत्वाम दस्रवः ॥ शैलशृङ्गंकरेकृत्वाचिक्षेपचंडिकांप्रति ॥ ४१ ॥ आगच्छंतंगिरेःशृङ्गंदेवीबाणैःशिलाशितैः ॥ चकारतिलशःखंडाञ्जहासजगदं बिका ॥ ४२ ॥ उत्पत्यचतदासिंहस्तस्यमूर्ध्निव्यवस्थितः ॥ नखैर्विदारयामासमहिषंगजरूपिणम् ॥ ४३ ॥

॥ ३० ॥ त्रिनेत्रोदैत्यः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ दानवोविस्मयंगतःसचमहिषासुरः ॥ ३५ ॥ दैत्यंवक्षसीति ॥ महिषाऽसुरमित्यर्थः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ करेकृत्वेतिशुंडायांगृहीत्वेत्यर्थः ॥ ४१ ॥ ४२ ॥ ४३ ॥

अष्टापदीति ॥ अष्टापदीचन्द्रमल्लाशरभेकर्कटेपुमानितिमेदिनीकोशादष्टापदीशरभः ॥ ४४ ॥ ४५ ॥ तयोर्देव्यष्टापदिनोः पुनस्तद्रूपंविहायमाहिषंरूपमास्थायशृंगाभ्यांप्राहरत्॥४६॥
॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ माधवींसुराम् ॥५३॥ हंतुकामामहाऽसुरमित्यस्याऽयमभिप्रायः ॥ महिषाऽसुरस्यकालिकापुराणोक्तरीत्याशिवांशत्वात्तस्यचबुद्धिपुरः

विहायगजरूपंचबभूवाऽष्टापदीतथा ॥ हंतुकामोहरिंकोपाद्दारुणोबलवत्तरः ॥ ४४ ॥ तंवीक्ष्यशरभंदेवीखड्गेनसरुषान्विता ॥ उत्तमांगेजघा
नाऽऽशुसोऽपितांप्राहरत्तदा ॥ ४५ ॥ तयोःपरस्परंयुद्धंबभूवातिभयप्रदम् ॥ माहिषंरूपमास्थायशृंगाभ्यांप्राहरत्तदा ॥ ४६ ॥ पुच्छप्रभ्रमणे
नाशुशृंगाऽऽघातैर्महासुरः ॥ ताडयामासतन्वंगींघोररूपोभयानकः ॥ ४७ ॥ पुच्छेनपर्वताञ्छृंगेगृहीत्वाभ्रामयन्बलात् ॥ प्रेषयामासपापा
त्माप्रहसन्परयामुदा ॥ ४८ ॥ तामुवाचबलोन्मत्तस्तिष्ठदेविरणांगणे ॥ अद्याहंत्वांहनिष्यामिरूपयौवनभूषिताम् ॥ ४९ ॥ मूर्खाऽसिमदम
त्ताऽद्ययन्मयासहसंगरम् ॥ करोषिमोहिताऽतीवमृषाबलवतीखरा ॥ ५० ॥ हत्वात्वांनिहनिष्यामिदेवान्कपटपंडितान् ॥ येनारींपुरतःकृत्वा
जेतुमिच्छंतिमांशठाः ॥ ५१ ॥ देव्युवाच ॥ मागर्वंकुरुमंदात्मंस्तिष्ठतिष्ठरणांगणे ॥ करिष्यामिनिरातंकान्हत्वात्वांसुरसत्तमान्॥५२॥पीत्वा
ऽद्यमाधवीमिष्टांशातयामिरणेऽधम ॥ देवानांदुःखदंपापंमुनीनांभयकारकम्॥५३॥व्यासउवाच॥ इत्युक्त्वाचषकंहैमंगृहीत्वासुरयायुतम्॥पपौ
पुनःपुनःक्रोधाद्धंतुकामामहासुरम् ॥ ५४ ॥ पीत्वाद्राक्षासमंमिष्टंशूलमादायसत्वरा ॥ दुद्रावदानवंदेवीहर्षयन्देवतागणान् ॥ ५५ ॥ देवास्तां
तुष्टुवुःप्रेम्णाचक्रुःकुसुमवर्षणम् ॥ जयजीवेतितेप्रोचुर्दुंदुभीनांचनिःस्वनैः ॥ ५६ ॥ ऋषयःसिद्धगंधर्वाःपिशाचोरगचारणाः ॥ किन्नराःप्रेक्ष्य
संग्रामंमुदितागगनेस्थिताः ५७ ॥ सोऽपिनानाविधान्देहान्कृत्वाकृत्वापुनःपुनः ॥ मायामयाञ्जघानाजौदेवींकपटपंडितः ॥ ५८॥ चंडिकाऽ
पिचतंपापंत्रिशूलेनबलाद्धृदि ॥ ताडयामासतीक्ष्णेनक्रोधादरुणलोचना ॥ ५९ ॥ ताडितोऽसौपपातोर्व्यांमूर्च्छामापमुहूर्तकम् ॥ पुनरुत्थाय
चामुंडांपद्भ्यांवेगादताडयत् ॥ ६० ॥ विनिहत्यपदाघातैर्जहासचमुहुर्मुहुः ॥ रुरावदारुणंशब्दंदेवानांभयकारकम् ॥ ६१ ॥ ततोदेवीसहस्रारं
सुनाभंचक्रमुत्तमम् ॥ करेकृत्वाजगादोच्चैःसंस्थितंमहिषासुरम् ॥ ६२ ॥ पश्यचक्रंमदांधाऽद्यतवकंठनिकृंतनम् ॥ क्षणमात्रंस्थिरोभूत्वायम
लोकंव्रजाऽधुना ॥ ६३ ॥ इत्युक्त्वादारुणंचक्रंमुमोचजगदंबिका ॥ शिरश्छिन्नंरथांगेनदानवस्यतदारणे ॥ ६४ ॥ सुस्रावरुधिरंचोष्णंकंठनाला
द्गिरेर्यथा ॥ गैरिकाद्यरुणंप्रौढंप्रवाहमिवनैर्झरम् ॥ ६५ कबंधस्तस्यदैत्यस्यभ्रमन्वैपतितः क्षितौ ॥ जयशब्दश्चदेवानांबभूवसुखवर्धनः॥ ६६ ॥
सिंहस्त्वतिबलस्तत्रपलायनपरानथ ॥ दानवान्भक्षयामासक्षुधार्तइवसंगरे ॥ ६७ ॥

सरंहननाऽयोग्यत्वादेवंमदिरांपीत्वातद्वधार्थंदेव्यामदांधत्वंस्वीकृतमिति ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥

॥ ६८ ॥ ६९ ॥ ननुमहिषवधोमार्कंडेयपुराणेऽन्यथोक्तोदेवीभागवतेचाऽन्यथोक्तस्तच्चाऽयुक्तम् ॥ पुराकल्पेयथावृत्तंप्रतिकल्पंतथैवच ॥ प्रवर्ततेस्वयंदेवीदैत्यानांनाशनायवै ॥ तथैव जायतेयुद्धंतथैवात्रिदशागमइतिरामवृत्तांतवर्णनकालिकापुराणादितिचेन्न ॥ तत्रवचनेप्रायशइत्यध्याहारेणदोषाऽभावात् ॥ अतएवहरिवंशादिषूत्पत्तिक्रमभेदोऽपिनदोषायाधायकइति ।७०। इतिश्रीदेवीभागवततिलकेपञ्चमस्कन्धेऽष्टादशोऽध्यायः ॥ १८ ॥ अर्धाऽधिकैस्त्रिचत्वारिंशत्सुपद्यैरनन्तरम् ॥ देवैःकृतामहादेव्याःस्तुतिरित्येतदुच्यते ॥ १ ॥ स्तोतुकामादेवाआगत्य किंचक्रुस्तदुच्यते । अथेति ॥ १ ॥ तत्रप्रथमतः सृष्टिस्थितिसंहारकर्तृत्वेनसर्वेश्वरत्वंभगवत्याःसहेतुकंवर्णयन्ति । हेभगवतियस्माद्ब्रह्मातवैवशक्त्यायुक्तोजगत्सृजति ॥ तथा विष्णु रिदंजगदवतिपालयति ॥ तथांतकालेप्रलयकालेतवैवशक्त्यायुक्तोमहेशःशिवोजगत्संहरते ॥ यस्माच्चतयाशक्त्याविहीनास्तेब्रह्मादयोजगत्सृष्टिस्थितिनाशेषुनेशानसमर्थास्तस्मादन्व यव्यतिरेकात्त्वमेवजगतःस्थितिनाशकर्त्री ॥ इदंसृष्टिकर्तृत्वस्याप्युपलक्षणम्॥ त्वमेवसर्वेश्वरीतिभावः ॥ तथाचश्रुतिः ॥कासित्वंमहादेवि॥साब्रवीदहंब्रह्मरूपिणी मत्तःप्रकृतिपुरुषात्म कंजगत् ॥ मायावाएषानारसिंहीसर्वमिदंसृजति सर्वमिदंरक्षति सर्वमिदंसंहरतीत्यादिः ॥ सूतसंहितायांच ॥ यस्तुब्रह्मत्वमापन्नःशिवोयोमुनिसत्तमाः ॥ सातस्याऽपिभवेच्छक्तिस्त

मृतेचमहिषेक्रूरेदानवाभयपीडिताः ॥ मृतशेषाश्चयेकेचित्पातालंतेययुर्नृप ॥ ६८ ॥ आनंदंपरमंजग्मुर्देवास्तस्मिन्निपातिते ॥ मुनयोमानवा श्चैवयेचान्येसाधवः क्षितौ ॥ ६९ ॥ चंडिकाऽपिरणंत्यक्त्वाशुभेदेशेऽथसंस्थिता ॥ देवास्तत्राऽऽययुःशीघ्रंस्तोतुकामाःसुखप्रदाम् ॥ ७० ॥ इतिश्रीदेवीभागवतेमहापुराणेपञ्चमस्कंधेमहिषाऽसुरवधोनामाऽष्टादशोध्यायः॥१८॥व्यासउवाच ॥ अथप्रमुदिताःसर्वे देवाइंद्रपुरोगमाः ॥ म हिषंनिहतंदृष्ट्वातुष्टुवुर्जगदंबिकाम् ॥ १ ॥ देवाऊचुः ॥ ब्रह्मासृजत्यवतिविष्णुरिदंमहेशःशक्त्यातवैवहरतेननुचांतकाले ॥ ईशानतेऽपिचभवं तितयाविहीनास्तस्मात्त्वमेवजगतःस्थितिनाशकर्त्री ॥ २ ॥ कीर्तिर्मतिःस्मृतिगतीकरुणादयात्वंश्रद्धाधृतिश्चवसुधाकमलाजयाच ॥ पुष्टिः कलाऽथविजयागिरिजाजयात्वंतुष्टिःप्रमात्वमसिबुद्धिरुमारमाच ॥ ३ ॥ विद्याक्षमाजगतिकांतिरपीहमेधासर्वंत्वमेवविदिताभुवनत्रयेऽस्मिन्॥ आभिर्विनातवतुशक्तिभिराशुकर्तुंकोवाक्षमःसकललोकनिवासभूमे ॥ ४ ॥ त्वंधारणाननुनचेदसिकूर्मनागौधर्तुंक्षमौकथमिलामपितौभवेताम्। पृथ्वीनचेत्त्वमसिवागगनेकथंस्थास्यत्येतदंबनिखिलंबहुभारयुक्तम् ॥ ५ ॥

याहीनोनिरर्थकः॥यस्तुविष्णुत्वमापन्नःशिवोयोमुनिसत्तमाः ॥ सातस्याऽपिभवेच्छक्तिस्तयाहीनोनिरर्थकः ॥ यस्तुरुद्रत्वमापन्नःशिवोयोमुनिसत्तमाः ॥ सातस्याऽपिभवेच्छक्तिस्तयाही नोनिरर्थकइति ॥ २ ॥ यस्मात्त्वंमहाकारणस्वरूपातस्मात्सर्वकार्यरूपाऽपिजातैव ॥ कार्यस्यकारणानन्यत्वादितिवदन्मुख्यानिरूपाणिविभूतिस्थानापन्नान्युपासनार्थमनुवदति । कीर्ति रिति ॥ स्मृतिगतीइतिद्वंद्वः ॥ अजपाजपामंत्ररूपेत्यर्थः ॥ गिरिजारुद्रशक्तिः ॥ उमाईश्वरशक्तिः ॥ ३ ॥ किंपुनरेतावत्स्वरूपैवाऽहमस्मीतिचेत्तत्राह । सर्वंत्वमेवविदितेति ॥ सर्व कारणरूपायास्तवकार्यमात्रस्वरूपत्वात्सर्वात्मकत्वमस्त्येवेत्यर्थः । ननुतर्दैतच्छक्तिस्वरूपत्वमेवप्रथमतः किमितिप्रतिपादितमितिचेदाभिर्विनाव्यवहारस्याऽसंभवादासांमुख्यत्वेनोपा सकानांविभूतिस्वरूपप्रदर्शनार्थंप्रतिपादितमित्यभिप्रायेणाह । आभिर्विनेति ॥ कर्तुंव्यवहारमित्यर्थः ॥ सकललोकनिवासभूमेइतिदेवीसंबोधनम् ॥ सर्वाऽधिष्ठानरूपिणीत्यर्थः ॥४॥ अधुनाधारणाशक्तिरूपांविभूतिंवर्णयति । त्वंधारणाननुनचेदिति ॥ हेभगवतित्वंधारणाशक्तिरूपाननुनिश्चयेननचेदसितदाकूर्मनागाविलांपृथ्वींधर्तुंकथंक्षमौभवेतांनकथमपीत्यर्थः ॥तथा त्वंपृथ्वीनचेदसितदैतज्जगद्बहुभारयुक्तंगगनेंतरिक्षेकथंस्थास्यति ॥ नकथमपीत्यर्थः ॥ तथाचसर्वाधारशक्तिरूपात्वमसीतिभावः॥तथाचश्रुतिः ॥ अहंरुद्रेभिर्वसुभिश्चराम्यहमादित्यैरु तविश्वदेवैः । अहंमित्रावरुणोभाबिभर्मीत्यादिः ॥ ५ ॥

इत्थंसर्वैश्वर्यात्त्वयिसत्यांयेऽन्येन्यदेवताउपासते ॥ तेतवमायागुणैर्विमूढाएवेत्याह । येवास्तुवंतीति ॥ वाशब्दस्त्वर्थकः ॥ येतुमनुजाअमरांश्चतुर्मुखविष्णुरुद्रांस्तथाशुभ्रांशुश्चंद्रस्तत्प्रभृ
तीन्स्तुवंति ॥ तेतवमायागुणैर्विमूढाएवमोहिताएव ॥ नस्वोपास्यदेवतांकल्याणदायिनींमुख्यत्वेनाराध्यांजानंतीतिभावः ॥ किंत्वांशक्तिरूपामृतेविहायकार्येकार्यविषयेतेदेवाःप्रभवं
तिसमर्थाभवंति ॥ यतोमूढैराराध्यंते किंतुनैवभवंति त्वच्छक्तियुक्ताएवतेभक्तकार्यकर्तुंक्षमास्ततस्त्वामेवकुतोनभजंतीतिभावः ॥ तदुक्तंशिवपुराणेउमासंहितायाम् ॥ येनस्तुवंतिदेवे
शींसर्वकारणकारणाम् ॥ मायागुणैर्मोहिताःस्युर्हतभाग्यानसंशयइति ॥ ६॥ एवमन्यदेवतोपासकोपहासंकृत्वाश्रोत्रियोपहासमाह । येजुह्वतिप्रविततइति ॥ हेभगवति अथानंतरंयेप्र
वितते विस्तृतेयज्ञे सुरानिंद्रादीन्देवान्समधिकृत्योद्दिश्यसमृद्धंविपुलंहविर्जुह्वतितेऽपिअल्पधियएव ॥ यतस्तस्मिन्यज्ञेत्वंस्वाहारूपानचेदसिनप्रयुज्यसेचेत्तदातेदेवाअद्धासाक्षात्तद्धुतंह
विरापुःप्राप्नुयुःकिंनैवप्राप्नुयुः ॥ ततस्त्वदधीनमेवतेषांजीवितमिति ॥ ततस्तस्माद्धेतोस्त्वामेवमूढाःकिंनयजंतिकुतोनयजंतीत्यर्थः ॥यतोनयजंतितितोऽल्पधियएवतेइतिभावः ॥ तथा
चब्रह्मांडपुराणेललितोपाख्याने ॥ अश्रुतासःश्रुतासश्चयज्वानोयेऽप्ययज्वनः ॥ तेस्वर्यंतोनापेक्षंतेइन्द्रमग्निंचयेविदुः ॥ सिकताइवसंयंतिरश्मिभिःसमुदीरिताः ॥ अस्माल्लोकादमुष्माच्चे

येवास्तुवंतिमनुजाअमरान्विमूढामायागुणैस्तवचतुर्मुखविष्णुरुद्रान् ॥ शुभ्रांशुवह्नियमवायुगणेशमुख्यान्किंत्वामृतेजननितेप्रभवंतिकार्ये ॥
॥ ६ ॥ येजुह्वतिप्रविततेऽल्पधियोंबयज्ञेवह्नौसुरान्समधिकृत्यहविःसमृद्धम् ॥ स्वाहानचेत्त्वमसितेकथमापुरद्धात्वामेवकिंनहियजंतिततोहिमू
ढाः ॥ ७ ॥ भोगप्रदाऽसिभवतीह्चराचराणांस्वांशैर्ददासिखलुजीवनमेवनित्यम् ॥ स्वीयान्सुराञ्जननिपोषयसीहयद्वत्त्वद्वत्परानपिचपालय
सीतिहेतोः ॥ ८ ॥ मातःस्वयंविरचितान्विपिनेविनोदाद्वंध्यान्पलाशरहितांश्चकटूंश्चवृक्षान् ॥ नोच्छेदयंतिपुरुषानिपुणाःकथंचित्तस्मात्त्वम
प्यतितरांपरिपासिदैत्यान् ॥ ९ ॥

त्याहचारण्यकश्रुतिरिति ॥ काठकेपि ॥ प्लवाह्येतेदृढायज्ञरूपाअष्टादशोक्तमवरंयेषुकर्मेति ॥ ७ ॥ ननुतेषांदेवानांभोगप्रदत्वाल्लोकास्तानेवभजंतीतिचेत्तत्राह । भोगप्रदासीति ॥
हेभगवतिभवतित्वमेवचराचराणांभोगप्रदासि ॥ यतःस्वांशैःसप्तप्रकृतिविकृतिरूपैः ॥ षोडशविकारैश्चनित्यंप्राणिनांजीवनंप्राणनंददासिप्रारब्धकर्मभोगार्थम् ॥ नहितद्विरहितानांजी
वहीनानांप्रारब्धभोगःसंभवतितस्मात्प्रारब्धकर्मभोगानुसारेणजीवनदातृत्वात्त्वमेवभोगप्रदासीत्यर्थः ॥ तत्रहेतुमप्याह । स्वीयानिति ॥ यथास्वीयान्सुरान्पोषयसि ॥ इहप्रपंचेतद्वत्प
रानसुरानपिभोगजीवितदानेनाऽपिपालयसीतिहेतोस्त्वमेवभोगप्रदासीत्यर्थः ॥ नहिपूर्वोक्तदेवानांभोगप्रदत्वेतेदेवाःस्वशत्रुभ्योदैत्येभ्योऽपिभोगंददतीतियुज्यते ॥ दैत्यभोगप्रणाशार्थमे
वतेषामुद्योगात्तस्माच्चदेवेभ्योव्यतिरिक्तात्वमेवभोगप्रदासीतिभावः ॥ ८ ॥ ननुदुष्टान्दैत्यान्किमित्यहंपालयामीतिचेत्तत्राह । मातःस्वयमिति ॥ हेभगवतिमातर्यस्मात्कारणाद्विपि
नेऽरण्येविनोदाल्लीलयावंध्यानफलान्पलाशरहितान्पत्ररहितान् कटूंश्चवृक्षान्स्वयंविरचितानुत्पादितान्निपुणाःपंडिताःपुरुषानोच्छेदयंतिकथंचित्कथमपि॥ तस्मात्त्वमपितद्वदेवतेषांनिकृष्ट
कर्मभिस्तानुत्पाद्यदैत्यान्नोच्छेदयसिकिंतुपालयस्येवेत्यर्थः ॥ तदुक्तंविषवृक्षोपिसंवर्ध्यस्वयंछेत्तुमसांप्रतमिति ॥ ९ ॥

नन्वेवंचेत्तेषामुच्छेदोऽनुचितएवेतिकथंमयातेनिरंतरंहन्यंतेइतिचेत्तत्राह । यत्त्वंतुहंसीति ॥ हेभगवतित्वंकरुणारसमाददानैवदेहांतरेपिस्वर्गादिष्वपिदेवांगनानांसुरतरूपासुकेलिषुक्री
डासुमतिर्येषामरातीनांशत्रूणांतानरातीन्शरैरणमूर्ध्निहंसि यत्तत्तेचरित्रमिदमनुचितंन । किंत्वीप्सितपूरणायतेषांमनोरथपूरणायैव नद्वेषार्थमित्यर्थः ॥ अयंभावः ॥ यद्यहंदेवानांभोगे
च्छून्दैत्यान्नहनिष्यामितदातेषांकथंतद्भोगसिद्धिः ॥ नहितेतामसप्रकृतयोयागादिभिःस्वर्गंगमिष्यंति ॥ नचतद्विनातत्सुखंप्राप्स्यंति . तस्मादेतान्मच्छस्त्रपूतान्कृत्वास्वर्गंप्रापयिष्या
मीतिमनीषयातेषांकल्याणार्थमेववधोनान्यप्रयोजनइति ॥ तदुक्तम् ॥ लालनेताडनेमातुर्नाऽकारुण्यंयथाऽर्भके ॥ तद्वदेवमहेशस्यनियंतुर्गुणदोषयोरिति ॥ १० ॥ ननुस्वर्गसुखार्थमे
वयदितानहंहन्मितर्हितावन्मात्रंकार्यममेच्छयाऽपिभवितुमर्हति ॥ ममेच्छयैवसर्वसृष्टेर्जातत्वात्तथाचकिमर्थंदैत्यवधफल्गुकार्यार्थमवतारग्रहणमितिचेत्तत्राह । चित्रंत्वमीइति ॥ हेजन
नियेषांकृतेयेषांदैत्यानामर्थेतेतवदेहनिबंधनंदेहग्रहणंभवति ॥ तेदनुजादैत्यास्त्वचिंतितेनत्वदिच्छयाअसुभिःप्राणैरहितानसंतीतियत्तच्चित्रमेवाऽऽश्चर्यमेवत्वदिच्छयैवतेषांमरणंस्वर्गप्रा
प्तिश्चाऽनायासेनैवापेक्षिता ॥ ननुतदर्थमवताराऽपेक्षाऽस्ति ॥ तदेतत्कुतोनजातमित्याश्चर्यमेवाऽस्माकंभाति ॥ तर्हिममाऽवतारग्रहणेकोहेतुर्भवद्भिर्योजितइतिचेत्क्रीडारसएवाऽत्रहेतुर्ना
न्यतरः ॥ स्वार्थेतरप् ॥ नान्यइत्यर्थः ॥ अवतारंगृहीत्वानानालीलाः कर्तव्यास्तल्लीलाकीर्तनेनश्रवणेनच भक्तिवृद्धिःपवित्रताचभविष्यतीतिक्रीडारसएवाऽत्रहेतुरितिभावः ॥ तदुक्तं

यत्त्वंतुहंसिरणमूर्ध्निशरैररातीन्देवांगनासुरतकेलिमतीन्विदित्वा ॥ देहांतरेऽपिकरुणारसमाददानात्तत्तेचरित्रमिदमीप्सितपूरणाय ॥ १० ॥ चित्रं
त्वमीयदसुभीरहितानसंतित्वच्चिंतितेनदनुजाःप्रथितप्रभावाः ॥ येषांकृतेजननिदेहनिबंधनंतेक्रीडारसस्तवनचाऽन्यतरोऽत्रहेतुः ॥ ११ ॥ प्राप्तेक
लावहहदुष्टतरेचकालेनत्वांभजंतिमनुजानतुवंचितास्ते ॥ धूर्तैःपुराणचतुरैर्हरिशंकराणांसेवापराश्चविहितास्तवनिर्मितानाम् ॥ १२ ॥ ज्ञात्वासु
रांस्तववशानसुरार्दितांश्चयेवैभजंतिभुविभावयुताविभग्नान् ॥ धृत्वाकरेसुविमलंखलुदीपकंतेकूपेपतंतिमनुजाविजलेऽतिघोरे ॥ १३ ॥ विद्यात्वमेव
सुखदाऽसुखदाऽप्यविद्यामातस्त्वमेवजननार्तिहरानराणाम् ॥ मोक्षार्थिभिस्तुकलिताकिलमंदधीभिर्नाऽराधिताजननिभोगपरैस्तथाऽज्ञैः ॥ १४ ॥
ब्रह्माहरश्चहरिरप्यनिशंशरण्यंपादांबुजंतवभजंतिसुरास्तथान्ये ॥ तद्वैनयेऽल्पमतयोमनसाभजंतिभ्रांताःपतंतिसततंभवसागरेते ॥ १५ ॥

शिवपुराणेउमासंहितायाम् यदिच्छावैभवंसर्वंतस्यादेहग्रहःस्मृतः ॥ लीलयासाऽपिभक्तानांगुणवर्णनहेतवे ॥ साऽपिलीलाऽपीत्यर्थः ॥ देहग्रहोऽवतारः ॥ ११ ॥ एवमेतादृशवैभवांत्वां
जनानभजंतियतोधूर्तैस्तेवंचिताइतिजनानाक्रोशति । प्राप्तेकलाविति ॥ दुष्टेकलौप्राप्तेसतिसाधनांतररहितस्याऽतिपापिनोऽपि स्मरणमात्रेणचतुर्विधपुरुषार्थदांत्वांभगवतींयेनभजंतिते
धूर्तैः पुराणचतुरैर्ननुनिश्चयेनवंचिताः ॥ वंचयित्वाचतवनिर्मितानांत्वयोत्पादितानांहरिशंकरादीनांसर्वापराश्चविहिता इत्यहहाहोलोकस्यभाग्यमित्थमस्तीतिभावः ॥ १२ ॥ पुनरपि
जनानाक्रोशति । ज्ञात्वेति ॥ तववंशांस्त्वदधीनानसुरार्दितान्दैत्यपीडितान्विभग्नान्खंडिताभिमानान् एतादृशान्देवाञ्ज्ञात्वाऽपियेभजंतीत्यन्वयः ॥ दीपकंदीपमित्यर्थः ॥ अन्योऽ
र्थःस्पष्टः ॥ तदुक्तमुमासंहितायाम् ॥ नभजंतिमहादेवींकरुणारससागराम् ॥ अंधकूपेपतंत्येतेघोरेसंसाररूपिणीति ॥ १३ ॥ ननुतर्हिकैरहमाराधिताऽस्मीतिचेत्तत्राह । विद्यात्वमे
वेति ॥ असुखदाअविद्याऽपिहेमातस्त्वमेवनराणांजननाऽऽर्तिहराऽपित्वमेव ॥ सर्वस्वरूपात्वमेवाऽसीत्यर्थः ॥ सैतादृशीत्वंमोक्षार्थिभिर्मुनिभिः कलिताऽसिआराधितासि ॥ अज्ञै
र्नाऽऽराधितासीत्यार्थिकार्थकथनम् ॥ १४ ॥ तर्हियेमांनभजंतितेषांकागतिर्भवतीतिचेत्तत्राह । ब्रह्माहरश्चेति ॥ १५ ॥

पुनर्जनानाक्रोशति । चंडीति ॥ चडिकोपइतिधातोश्चंडीतिरूपंनिष्पन्नम् ॥ सकलजगद्भयंकरंब्रह्ममायाविशिष्टंचंडीपदवाच्यम् ॥ ब्रह्मणोभयंकरत्वंच भीषास्माद्वातःपवतइतिश्रुतौ॥ महद्भयंवज्रमुद्यतमितिश्रुतौकंपनादित्यधिकरणेचवर्णितम् ॥ त्वदंघ्रिजलजंतवांघ्रिकमलंतस्मादुत्थितंरजः पंचमहाभूतरूपम् । अन्यः स्पष्टोर्थः ॥ १६ ॥ इयंयायथाकथंचिदस्माभिः स्तुतिः क्रियतेसासतीवाऽसतीवेतिनवयंविज्ञोयतोवाग्देवतयात्वयायथासुखेऽस्थितयाप्रेर्यतेतथाकुर्मइत्याह । वाग्देवतेति ॥ हेदेविसुराऽसुराणांवाग्देवतात्वमसि ॥ कुतइतिचेद्यस्मात्ते षांमुखेयदैवयदाऽपित्वंचेन्नैववससिवासंनैवकरोषितदातेऽमरवराउपलक्षणतयादैत्याअपिवक्तुंशक्तानैवप्रभवंतितस्मादित्यर्थः ॥ केयंव्याप्तिर्गृहीतेतिचेद्यस्मान्मनुजास्तद्विहीनावाग्देवता विहीनामूकासुखेसत्यपिनैवब्रुवंतिवदंति तस्मात्तत्रगृहीताव्याप्तिरितिभावः ॥ १७ ॥ अधुनादेवतासुप्रत्येकंदोषंदर्शयंस्तद्भक्तानुपहसति ॥ शप्तोहरिरिति ॥ हेजननिकुपितेनभृगुणाहरिः शप्तस्तुशप्तएवकामंयथेच्छंमीनोबभूव ॥ तथाकमठःकूर्मः ॥ तथासूकरस्तुवराहोपि ॥ पश्चादनंतरंनृसिंहइतिएवंप्रकारेण यश्छलकृद्वामनोपिबभूवेतिपराधीनायेऽवतारास्तान्सेवतांपुरु षाणांमृतिभयंकिंनस्यादपितुस्यादेवयेशापदग्धाःस्वस्यकल्याणंकर्तुंनशक्नुवंतितैःपरस्यकल्याणंकथंक्रियेतइतिभावः॥१८॥शंभोःपपातेति ॥ यस्यशंभोः सतीवियोगादरण्यगतस्यभृगोः शापाल्लिंगंपतितमिदंपुराणादिषुप्रसिद्धम्।स्वलिंगपालनेपियोनसमर्थस्तंशिवंयेभजंतितेषामिहपरत्र कथंसुखंभूयान्नकथमपीत्यर्थः॥१९॥योभूद्गजाननेति॥हेमातः महेशाच्छिवादभूत्को सौ गजाननश्चाऽसौगणाधिपतिश्चतंशिवपुत्रंयेभजंतितेनरावितथप्रपन्नाअकल्याणकरंदेवकल्याणकरत्वदेवबुद्धिमापन्नाभ्रांताएव ॥ शिवाराधनेतुकल्याणंनैवजायते ॥ कुतःपुनस्तत्पुत्रा

चंडित्वदंघ्रिजलजोत्थरजःप्रसादैर्ब्रह्माकरोतिसकलंभुवनंभवादौ ॥ शौरिश्चपातिखलुसंहरतेहरस्तुत्वांसेवतेनमनुजस्त्विहदुर्भगोऽसौ ॥ १६ ॥
वाग्देवतात्वमसिदेविसुराऽसुराणांवक्तुंनतेऽमरवराःप्रभवंतिशक्ताः ॥ त्वंचेन्मुखेवससिनैवयदैवतेषांयस्माद्भवंतिमनुजानहितद्विहीनाः ॥१७॥
शप्तोहरिस्तुभृगुणाकुपितेनकामंमीनोबभूवकमठःखलुसूकरस्तु ॥ पश्चान्नृसिंहइतियश्छलकृद्धरायांतान्सेवतांजननिमृत्युभयंनकिंस्यात्॥१८॥
शंभोःपपातभुविलिंगमिदंप्रसिद्धंशापेनतेनचभृगोर्विपिनेगतस्य ॥ तंयेनराभुविभजंतिकपालिनंतुतेषांसुखंकथमिहाऽपिपरत्रमातः॥१९॥योभू द्गजाननगणाऽधिपतिर्महेशात्तंयेभजंतिमनुजावितथप्रपन्नाः ॥ जानंतितेनसकलार्थफलप्रदात्रींत्वांदेविविश्वजननींसुखसेवनीयाम्॥२०॥ चित्रं त्वयाऽरिजनताऽपिदयार्द्रभावाद्धत्वारणेशितशरैर्गमिताद्युलोकम् ॥नोचेत्स्वकर्मनिचितेनिरयेनितांतंदुःखाऽतिदुःखगतिमापदमापतेत्सा॥२१॥

राधनेनेतिभावः ॥ किमर्थमेतादृशंभवतीतिचेत्तत्राह । जानंतितेनेति ॥ सुखसेवनीयांस्मरणमात्रेणापिचतुर्विधपुरुषार्थदांविश्वमातरंनजानंतीतिहेतोः नहितादृशज्ञानेसतिउत्कृष्टपक्ष पातंविहायनिकृष्टपक्षपातंकश्चित्करोति ॥ तस्मात्तेमूढत्वात्तथाकुर्वंतीतिभावः ॥ तदुक्तंशिवपुराणेउमासंहितायाम् ॥ गंगांविहायतृप्त्यर्थंमरुवारियथाव्रजेत् ॥ विहायदेवीतद्भिन्नंतथा देवांतरंव्रजेदिति॥यस्याः स्मरणमात्रेणपुरुषार्थचतुष्टयम् ॥ अनायासेनलभतेकस्त्यजेत्तांनरोत्तमः॥इति॥सूतसंहितायामपि ॥ करुणासागरामेतांयःपूजयतिशांकरीम्॥किंनसिध्यतित स्येष्टंतस्याएवप्रसादतइति ॥ २० ॥ श्रीदेवींसंतोषयितुंकांचिच्चमत्कारवार्तांकुर्वंति । चित्रमिति ॥ हेदेवि चित्रमयमेकोविलक्षणश्चमत्कारइत्यर्थः ॥ कोसावितिचेच्छृणुत्वयारिजनता पिशत्रुसमूहोपिदयार्द्रभावान्निशितशरैरणेहत्वाद्युलोकंस्वर्गलोकंगमिताप्रापितेति ॥ नाहिदयायांसत्यांदयाविषयस्यवधःसंभवति ॥ नचशत्रुविषयेकस्याऽपिदयोद्भवोभवति ॥ तस्मादि दमुभयमपिविद्यमानमाश्चर्यमेव ॥ ननुकिमर्थंमयातेषांदैत्यानामुपरिआश्चर्यकारणभूतादयासंपादितेतिचेत्तत्राह । नोचेत्स्वकर्मेति ॥ स्वस्यासुरसमूहस्ययत्तामसंकर्मतेनानिचितेसंपादि तेनिरयेनरकेनितांतमत्यंतंयथास्यात्तथादुःखापेक्षयाप्यतिदुःखस्यगतिःप्राप्तिस्तद्रूपामापदंनोचेद्यदिदयानक्रियतेचेत्तदाऽपतेत्प्राप्नुयात्साऽरिजनतेतिहेतोरित्यर्थः ॥ असुरयोनिष्वपिय दैतादृशीदयातदाभक्तेषुकियतीस्यादितिनविद्मइतिगूढोऽभिसंधिः ॥ निरतिशयदयावत्त्वमनेनवर्णितम् ॥ २१ ॥

ननुवीराणांपराक्रमवर्णनएवसंतोषोभवतिततोभवद्भिर्ममपराक्रमः कुतोनवर्ण्यतेतत्राह । ब्रह्माहरश्चेति ॥ गर्वभावादहंकारावृतत्वात्तादृशाः परिच्छिन्नाब्रह्मादयोऽपितवप्रभावंनजानंतिय् दातदातवाऽमितप्रभावैर्गुणैः सत्त्वादिभिः संमोहिताः केऽन्येअस्मदादयः प्रभावंविदितुंसमर्थाभवंति । नकेपीत्यर्थः ॥ तथाचश्रुतिः ॥ यस्याः स्वरूपंब्रह्मादयोनविजानंतितस्मादुच्यतेऽज्ञे यति ॥ २२ ॥ ननुयथामत्प्रभावस्तथामत्स्वरूपमपिकेनापिनज्ञायतेचेत्कथमुच्यतेभगवत्याराधनान्मुक्तोभवतीति ॥ नहिप्रभावस्वरूपज्ञानंविनाराधनंसंभवतीतिचेत्तत्राह । क्लिश्यंति हेमांतः येमुनयस्तवरूपंदुर्विभाव्यमितिमत्वातवपादांबुजंनहिभजंति ॥ अथचदृश्यमानसूर्याग्निसेवनपराअग्निहोत्रादिकर्मनिष्णाताभवंतितेविमूढचित्ताः॥ क्लिश्यंत्येवक्लेशंप्राप्नुवंत्येव॥ तेऽपीति ॥ यतः श्रुतिशतैः सर्ववेदैरपिप्रतिपादितमतएववेदसारंपरमार्थतत्त्वंतैर्नज्ञातंततइत्यर्थः ॥ अयंभावः ॥ नहिब्रह्मरूपिण्याभगवत्यारूपंकेनचिदुपलभ्यतेस्पष्टतया ॥ किंतु अस्तीत्येवोपलब्धव्यस्तत्त्वभावेनचोभयोः ॥ अस्तीत्येवोपलब्धस्यतत्त्वभावः प्रसीदति ॥ इतिश्रुत्युक्तरीत्यातथानेतिनेतीतिप्रतिपादितरीत्याचनिषेधावधिभूताकाचिदस्तिभगवतीति सत्तामात्रोपलब्ध्यैवतदाराधनस्यसंभवात् ॥ तत्रक्लेशंमन्वानायेतांसच्चिदानंदरूपिणींनभजंतितेक्लिश्यंतीतियुक्तमेवेति ॥ तथाश्रुतिः ॥ योवाएतदक्षरमविदित्वागार्गिअस्मिंल्लोकेजुहो ति ददातितपस्यत्यपिबहूनिवर्षसहस्राण्यंतवानेवाऽस्यलोकोभवतीति ॥ २३ ॥ ननुतर्हिसर्वोत्कृष्टांसुलभांसर्वफलदांममोपासनांकिमितिमूढाः परित्यजंतिव्यर्थमितिचेत्तत्राह । मन्ये इति ॥ हेमातस्तवगुणाः सत्त्वादयोहिस्वबुद्धिरचितैर्विविधाऽऽगमैर्नानातंत्रैर्मोहकैर्हेतुभिर्लोकान्विष्णवीशभास्करगणेशदेवतापरान्तत्तत्प्राणिप्रारब्धवशेनतत्तद्देवतोपासकान्विधायतवभ क्तिभावाद्विमुखान्कुर्वंतीतिमन्येहं तत्तस्माद्धेतोस्तवोपासनांपरित्यजंतिसस्वभावइत्यर्थः ॥ २४ ॥ ननुमद्गुणैरेवतेषांबुद्धिर्विपरीतामयैवंकृतेतिभवताकथंज्ञायतइतितत्रोच्यते कुर्वंति

**ब्रह्माहरश्चहरिरप्युतगर्वभावाज्जानंतितेऽपिविबुधानतवप्रभावम्॥केऽन्येभवंतिमनुजाविदितुंसमर्थाःसंमोहितास्तवगुणैरमितप्रभावैः॥२२॥क्लिश्यं तितेऽपिमुनयस्तवदुर्विभाव्यंपादांबुजंनहिभजंतिविमूढचित्ताः॥सूर्याग्निसेवनपराःपरमार्थतत्त्वंज्ञातंनतैःश्रुतिशतैरपिवेदसारम् ॥२३॥मन्येगुणा स्तवभुविप्रथितप्रभावाःकुर्वंतियेहिविमुखान्ननुभक्तिभावात्॥लोकान्स्वबुद्धिरचितैर्विविधाऽऽगमैश्चविष्णवीशभास्करगणेशपरान्विधाय॥२४॥ कुर्वंतियेतवपदाद्विमुखान्नराग्र्यान्स्वोक्तागमैर्हरिहरार्चनभक्तियोगैः॥तेषांनकुप्यसिदयांकुरुषेऽबिकेत्वंतान्मोहमंत्रनिपुणान्प्रथयस्यलंच ॥२५॥ तुर्येयुगेभवतिचाऽतिबलंगुणस्यतुर्यस्यतेनमथितान्यसदागमानि॥त्वांगोपयंतिनिपुणाःकवयःकलौवैत्वत्कल्पितान्सुरगणानपिसंस्तुवंति २६॥**

येतवेतिं ॥ हेंबिकेमातर्ये पुरुषाः स्वोक्तागमैः पुरुषप्रणीतागमैः कथंभूतैर्हरिहरार्चनभक्तियोगैर्हरिहरार्चनभक्तिप्रतिपादकैस्तादृशागमैस्तदुपदेशैरित्यर्थः ॥ नराग्र्यान्ब्राह्मणान्तवपदा द्विमुखान्कुर्वंतितेषाम् । संबंधसामान्येषष्ठी । तान्नकुप्यसीत्यर्थः ॥ किंच ॥ तेषुदयांचकुरुषे ॥ किंच ॥ तान्मोहमंत्रनिपुणान्वश्याकर्षणादिमंत्रनिष्णातानलंपूर्णंप्रथयासिविस्तार यसि ॥ धनादिनावंशवृद्ध्यादिनाचेत्यर्थः अयंभावः ॥ यदित्वदन्यदेवतोपासनातवेष्टानाऽस्तितर्हितद्देवतोपासकानांतद्देवतामंत्रागमोपदेष्टॄणांचकल्याणंकथंकरोषिनाशयोग्याहिते ॥ करोषिचकल्याणंयत्किंचित्क्षुल्लकफलप्रदानेन ॥ तस्मादपितवाभिमतमेवेतिज्ञायते ॥ तस्मात्त्वयैवस्वगुणैः प्रारब्धवशात्तेषांविपरीताबुद्धिः कृतेतिनिश्चीयतइति॥ २५॥ ननुयद्यहमेवस्वगुणै स्तेषांविपरीतबुद्धिंकरोमितर्हिसत्ययुगेऽपितथाविधाः कुतोनसंतिसर्वेमदाराधकाएवकुतः संतीतिचेत्तत्राह। तुर्येयुगेइति॥ तुर्येसत्ययुगेतुर्यगुणस्यातिशुद्धसत्त्वगुणस्यमिश्रितस्यगुणत्रयापेक्षया तुर्यत्वात् ॥ तस्यतुर्यगुणस्याऽतिबलंप्राबलंप्राबल्यंभवति॥ तेनहेतुनासत्ययुगेऽसदागमान्यसच्छास्त्राणिमथितान्युन्मथितानिभवंति॥ कलौतुतुर्यगुणस्याऽऽभावाद्गुणत्रयस्याऽतिप्रबलत्व त्कवयोनिपुणाः कवित्वाभिमानिनस्त्वांगोपयंतिनोपासतेमंदभाग्यत्वादथचत्वत्कल्पितान्हरिब्रह्मादीन्सुरान्संस्तुवंतिभजंतेइत्यर्थः ॥ अयंभावः ॥ सत्ययुगेसर्वेऽत्तमप्रारब्धवंतः पुण्य जनाः संति ततस्त्वयातस्मिन्युगेसुखदायकः सत्त्वगुणएवस्थापितस्तदनुगुणास्वोपासनाचस्थापिता ॥ कलियुगेतुदुष्टप्रारब्धत्वात्तेदुःखदायकागुणास्त्वयास्थापितास्तद्गुणानुरोधेनच स्वाऽतिरिक्तदेवानामल्पफलदानांचोपासनास्थापितेतितस्मिन्युगेसर्वेत्वदाराधकाः संति ॥ नान्यदेवताराधकाइति ॥ २६ ॥

अस्त्वियंपामराणांकथात्वदुपासकास्तुधन्याएवेत्याह । ध्यायंतीति ॥ तदुक्तमुमासंहितायाम् ॥ तेधन्याःकृतकृत्याःस्युर्धन्यास्तेषांप्रसूःकुलम् ॥ येषांचित्तंभवेल्लीनंश्रीदेव्यांपरसंवि
दीति ॥ २७ ॥ अधुनामायाविशिष्टब्रह्मरूपिण्याभगवत्याःपुंप्रकृत्यात्मकत्वात्केवलप्रकृतिरूपत्वेनापितांवर्णयति । चिच्छक्तिरिति ॥ चिच्छक्तिशब्देनचैतन्यमुच्यते ॥ तदुक्तंसंक्षेप
शारीरके ॥ चिच्छक्तिःपरमेश्वरस्यविमलाचैतन्यमेवोच्यतइति ॥ हेमातः साचिच्छक्तिःपरमात्मन्यस्तितेनकारणेनसोपिपरमात्माव्यक्तोनामरूपात्मकोभवतितथाजगत्सुविदितः
प्रसिद्धस्तथाभवकृत्यकर्ता प्रपंचसृष्टिस्थितिसंहृतिकर्ताभवति ॥ कःपुरुषोस्मात्परमात्मनोन्यस्त्वद्विरहितः स्वशक्त्यैवाऽमुष्मिन्प्रपंचेकर्तुंविहर्तुंतथासंचलितुंप्रभवति नकोऽपीत्यर्थः ॥
यद्यस्तितर्हितत्रापित्वंशक्तिरूपाभवस्येव ॥ एतादृशीत्वंसकलकारणामहनीयेतिभावः ॥ तदुक्तंदक्षिणामूर्तिसंहितायाम् ॥ शक्त्याविनाशिवेसूक्ष्मेनामधामनविद्यतइति ॥ २८ ॥ ननु
माभूच्चिच्छक्तिस्तत्त्वान्येवचतुर्विंशतिसंख्यानिमहदादीनिजगत्करिष्यंतीतिचेत्तत्राह । तत्त्वानीति ॥ चिद्विरहितानिचिच्छक्तिविरहितानीत्यर्थः ॥ तान्यपिजडत्वान्नजगत्कर्तुंफलंप्रदा

ध्यायंतिमुक्तिफलदांभुवियोगसिद्धांविद्यांपरांचमुनयोऽतिविशुद्धसत्त्वाः॥ तेनाप्नुवंतिजननीजठरेतुदुःखंधन्यास्तएवमनुजास्त्वयियेविलीनाः
॥ २७ ॥ चिच्छक्तिरस्तिपरमात्मनितेनसोपिव्यक्तोजगत्सुविदितोभवकृत्यकर्ता॥ कोन्यस्त्वयाविरहितःप्रभवत्यमुष्मिन्कर्तुंविहर्तुमपिसंचलि
तुंस्वशक्त्या ॥ २८ ॥ तत्त्वानिचिद्विरहितानिजगद्विधातुंकिंवाक्षमाणिजगदंबयतोजडानि ॥ किंचेंद्रियाणिगुणकर्मयुतानिसंतिदेवित्वयाविर
हितानिफलंप्रदातुम् ॥ २९ ॥ देवामखेष्वपिहुतंमुनिभिःस्वभागंगृह्णीयुरंबविधिवत्प्रतिपादितंकिम् ॥ स्वाहानचेत्त्वमसितत्रनिमित्तभूतातस्मा
त्त्वमेवननुपालयसीवविश्वम् ॥ ३० ॥ सर्वंत्वयेदमखिलंविहितंभवादौत्वंपासिवैहरिहरप्रमुखान्दिगीशान् ॥ कालेऽसिविश्वमपितेचरितंभवाद्यं
जानंतिनैवमनुजाःक्वनुमंदभाग्याः ॥ ३१ ॥ हत्वासुरंमहिषरूपधरंमहोग्रंमातस्त्वयासुरगणःकिलरक्षितोऽयम् ॥ कांतेस्तुतिंजननिमंदधियोवि
दामोवेदागतिंतवयथार्थतयानजग्मुः ॥ ३२ ॥ कार्यंकृतंजगतिनोयदसौदुरात्मावैरीहतोभुवनकंटकदुर्विभाव्यः ॥ कीर्तिःकृतानुजगत्सुकृपा
विधेयाप्यस्मांश्चपाहिजननिप्रथितप्रभावे॥ ३३॥व्यासउवाच॥एवंस्तुतासुरैर्देवीतानुवाचमृदुस्वरा॥अन्यत्कार्यंचदुःसाध्यंब्रुवंतुसुरसत्तमाः।३४।

तुंवासमर्थानीत्यर्थस्तथैवेंद्रियाण्यपीतिसंपिंडितोर्थः ॥ २९ ॥ अस्माकंदेवानांतुसर्वभावेनत्वमेवपालयित्र्यसीत्याह । देवामखेष्वपीति ॥ हेंऽबत्वंचेत्स्वाहारूपातत्रयज्ञेषुनिमित्तभूतासा
धनभूतानाऽसितर्हिमुनिभिर्विधिवत्प्रतिपादितंमखेषुहुतंस्वभार्गंकिंदेवानागृह्णीयुर्नगृह्णीयुरित्यर्थः ॥ यस्मादेवंतस्मात्त्वमेवदेवान्पालयसिदेवेषुपालितेषुदेवपालितंविश्वंत्वयैवपालितं
भवतीत्यर्थः ॥ ३० ॥ हेभगवति वयंस्तुतिंकर्तुंप्रवृत्ताएवकेवलंनस्तुतिंकर्तुंयोग्यास्तवसकलकारणायामनोवाचामगोचरत्वात्तवचरितस्यब्रह्मादिबुद्धीनामप्यविषयत्वादित्याह । सर्वंत्व
येदमिति ॥ मनुजाइत्युपलक्षणंदेवानाम् ॥ ३१ ॥ नकेवलंब्रह्मादयएवत्वांनजानंतीति किंतुवेदाअपितवगतिंयथार्थतयानजानंति तदा कां तेस्तुतिंकर्तुंवयंजानीमइत्याह । हत्वासुर
मिति ॥ यथार्थतयायाथातथ्येननजग्मुःनप्रापुःतथाचश्रुतिः ॥ यतोवाचोनिवर्त्तंतइति ॥ ३२ ॥ अधुनाऽवतारंगृहीत्वादेव्याकृतमुपकारंवर्णयंति । कार्यंकृतमिति ॥ भुवनकंटकश्चा
सौदुर्विभाव्यश्चेतिकर्मधारयः ॥ कृपाविधेयाजगत्सुहेजननि प्रथितप्रभावात्वमस्मांश्चपाहीत्यन्वयः ॥ ३३ ॥ ३४ ॥

॥ ३५ ॥ ३६ ॥ ३७ ॥ अपराधसहस्रेति ॥ सर्वनिजजनेषुसत्स्वपिपुत्रापराधंनिर्व्याजवृत्त्यामातैवसहतेनान्यइतिज्ञात्वा सर्वजगद्योनिंमातरंसर्वजगतोदेवींकुतोजनानभजंते कुतः स्वकल्याणात्प्रच्यवंतेइतिजनानाक्रोशति ॥ तथाचव्याससूत्रम् ॥ योनिश्चगीयतइति ॥ ३८ ॥ नकेवलंभगवत्याजगद्योनित्वंकिंतुसर्वजीवसखित्वमप्यस्तीतिवक्तुंद्वासुपर्णेतिश्रुतिमर्थतःपठति ॥ द्वौसुपर्णाविति ॥ अस्मिन्देहरूपे वृक्षेद्वौसुपर्णौपक्षिसदृशौद्वौजीवपरमात्मानौस्तः ॥ तयोर्निरंतरंसख्यमस्तिकदाप्युभयोर्वियोगाऽभावात् एवंरीत्यानयोस्तृतीयःसखानैवाऽस्ति ॥ यएतस्यजीवस्याऽपराधंसहेतइत्यर्थः ॥ ३९ ॥ यस्मादेवंतस्माज्जीवःस्वसखायंपरमेश्वरींभगवतींपरसंविदंहित्वाकिंनुकरिष्यतिस्वकल्याणं नहिशत्रुतःकल्याणंसंभवति ॥

यदायदाहिदेवानांकार्यंस्याददतिदुर्घटम् ॥ स्मर्तव्याऽहंतदाशीघ्रंनाशयिष्यामिचाऽऽपदम् ॥३५॥ देवाऊचुः ॥ सर्वंकृतंत्वयादेविकार्यंनःखलु सांप्रतम् ॥ यदयंनिहतः शत्रुरस्माकंमहिषासुरः ॥ ३६ ॥ स्मरिष्यामोयथातेंबसदैवपदपंकजम् ॥ तथाकुरुजगन्मातर्भक्तिंत्वय्यप्यचंचलाम् ॥३७॥ अपराधसहस्राणिमातैवसहतेसदा ॥ इतिज्ञात्वाजगद्योनिंनभजंतेकुतोजनाः ॥ ३८ ॥ द्वौसुपर्णौतुदेहेस्मिंस्तयोःसख्यंनिरंतरम् ॥ नान्यःसखातृतीयोस्तियोपराधंसहेतहि ॥ ॥३९॥ तस्माज्जीवःसखायंत्वांहित्वाकिंनुकरिष्यति ॥ पापात्मामंदभाग्योऽसौसुरमानुषयोनिषु ॥४०॥ प्राप्यदेहंसुदुष्प्रापंनस्मरेत्त्वांनराधमः ॥ मनसाकर्मणावाचाब्रूमःसत्यंपुनःपुनः ॥ ४१ ॥ सुखेवाप्यथवादुःखेत्वंनःशरणमद्भुतम् ॥ पाहिनःसततंदेविसर्वैस्तववरायुधैः ॥४२॥ अन्यथाशरणंनास्तित्वत्पदांबुजरेणुतः ॥ व्यासउवाच ॥ एवंस्तुतासुरैर्देवीतत्रैवांतरधीयत ॥४३॥ विस्मयंपरमंजग्मुर्देवास्तांवीक्ष्यनिर्गताम् ॥ इतिश्रीदेवीभागवतेमहापुराणेपंचमस्कंधेएकोनविंशोऽध्यायः ॥१९॥जनमेजयउवाच ॥ अथाऽद्भुतंवीक्ष्यमुनेप्रभावंदेव्याजगच्छांतिकरंवरंच॥ नतृप्तिरस्तिद्विजवर्यशृण्वतःकथाऽमृतंतेमुखपद्मजातम् ॥ १ ॥ अंतर्हितायांचतदाभवान्यांचक्रुश्चकिंदेवपुरोगमास्ते ॥ देव्याश्चरित्रंपरमंपवित्रंदुराऽऽपमेवाल्पपुण्यैर्नराणाम् ॥ २ ॥ कस्तृप्तिमाप्नोतिकथाऽमृतेनभिन्नोऽल्पभाग्यात्पटुकर्णरंध्रः ॥ पीतेनयेनाऽमरतांप्रयातिधिक्तान्नरान्येनपिबंतिसादरम् ॥३॥ लीलाचरित्रंजगदंबिकायारक्षान्वितं देवमहामुनीनाम् ॥संसारवार्धेस्तरणंनराणांकथंकृतज्ञाहिपरित्यजेयुः ॥ ४ ॥ मुक्ताश्चयेचैवमुमुक्षवश्चसंसारिणोरोगयुताश्चकेचित् ॥ तेषांसदाश्रोत्रपुटैश्चपेयंसर्वार्थदंवेदविदोवदंति ॥ ५ ॥ तथाविशेषेणमुनेनृपाणांधर्मार्थकामेषुसदारतानाम् ॥ मुक्ताश्चयस्मात्खलुतत्पिबंतिकथंनपेयंरहितैश्चतेभ्यः ॥ ६ ॥

नवागत्यंतरमस्तीत्यर्थः ॥ तस्मादियमेवभगवतीपितृमातृसखिस्थानासर्वैर्जीवैराराध्येतिभावः ॥ तथाचश्रुतिः ॥ द्वासुपर्णासयुजासखायेति ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ इति श्रीदेवीभागवततिलकेपंचमस्कंधेएकोनविंशोऽध्यायः ॥ १९ ॥ पंचाशद्भिरथश्लोकैरंतर्धानोत्तरंतुयत् ॥ अभूद्वृत्तंजगत्क्षेमतदत्रैवोपवर्ण्यते ॥ १ ॥ श्रीदेव्याअंतर्धानोत्तरंजनमेजयःपृच्छति । अथेति ॥ अद्भुतप्रभावंवीक्ष्यतत्कथामृतंशृण्वतोमेतृप्तिर्नास्तीत्यन्वयः ॥ १ ॥ नराणांमध्येऽल्पपुण्यैरित्यन्वयः ॥ तद्दुरापमेवश्रुत्वेतिशेषः ॥२॥ तच्छ्रुत्वाअल्पभाग्याद्भिन्नः कस्तृप्तिमाप्नोतीत्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥ तेभ्योमुक्तेभ्योरहितैरित्यन्वयः ॥ ६ ॥

इत्येवमनुमेयमित्यन्वयः ॥ ७ ॥ ८ ॥ उदरमेवौदरंतत्पूर्तिमात्रमपिनैवाऽप्नुवंतीत्यर्थः ॥ ९ ॥ १० ॥ भगवत्याआराधनादैवैहिकंपारलौकिकंसुखंधर्मार्थकाममोक्षरूपंचसिद्ध्यतीति प्रकरणार्थः ॥ ११ ॥ १२ ॥ १३ ॥ कथितमिति ॥ तेत्वयांतर्धानंगतेत्युक्तंतत्रांतर्धानोत्तरंसाभुवनेश्वरीस्वर्गेवामृत्युलोकेवाक्वसंस्थितेतिवदेत्यर्थः ॥ १४ ॥ लयंगतेति ॥ तस्मिन्नेव

यैःपूजितापूर्वभवेभवानीसत्कुंदपुष्पैरथचंपकैश्च ॥ बैल्वैर्दलैस्तेभुविभोगयुक्तानृपाभवंतीत्यनुमेयमेवम् ॥ ७ ॥ येभक्तिहीनाःसमवाप्यदेहंतं मानुषंभारतभूमिभागे ॥ यैर्नार्चितातेधनधान्यहीनारोगान्विताःसंततिवर्जिताश्च ॥ ८ ॥ भ्रमंतिनित्यंकिलदासभूताआज्ञाकराःकेवलभार वाहाः ॥ दिवानिशंस्वार्थपराःकदाऽपिनैवाप्नुवंत्यौदरपूर्तिमात्रम् ॥ ९ ॥ अंधाश्चमूकाबधिराश्चखंजाःकुष्ठान्वितायेभुविदुःखभाजः ॥ तत्रा नुमानंकविभिर्विधेयंनाराधितातैःसततंभवानी ॥ १० ॥ येराजभोगान्वितऋद्धिपूर्णाःसंसेव्यमानाबहुभिर्मनुष्यैः ॥ दृश्यंतियेवाविभवैःसमे तास्तैःपूजितांबेत्यनुमेयमेव ॥ ११ ॥ तस्मात्सत्यवतीसूनोदेव्याश्चरितमुत्तमम् ॥ कथयस्वकृपांकृत्वादयावानसिसांप्रतम् ॥ १२ ॥ हत्वा तंमहिषंपापंस्तुतासंपूजितासुरैः ॥ क्वगतासामहालक्ष्मीःसर्वतेजःसमुद्भवा ॥ १३ ॥ कथितंतेमहाभागगतांतर्धानमाशुसा ॥ स्वर्गेवामृत्युलो केवासंस्थिताभुवनेश्वरी ॥ १४ ॥ लयंगतावातत्रैववैकुंठेवासमाश्रिता ॥ अथवाहेमशैलेसातत्त्वतोमेवदाऽधुना ॥ १५ ॥ व्यासउवाच ॥ पूर्वंमयातेकथितंमणिद्वीपंमनोहरम् ॥ क्रीडास्थानंसदादेव्यावल्लभंपरमंस्मृतम् ॥ १६ ॥ यत्रब्रह्माहरिःस्थाणुःस्त्रीभावंतेप्रपेदिरे ॥ पुरुषत्वंपु नःप्राप्यस्वानिकार्याणिचक्रिरे ॥ १७ ॥ यःसुधासिंधुमध्येऽस्तिद्वीपः परमशोभनः ॥ नानारूपैःसदातत्रविहारंकुरुतेंबिका ॥ १८ ॥ स्तुता संपूजितादेवैःसातत्रैवगताशिवा ॥ यत्रसंक्रीडतेनित्यंमायाशक्तिःसनातनी ॥ १९ ॥ देवास्तांनिर्गतांवीक्ष्यदेवींसर्वेश्वरींतथा ॥ रविवंशोद्भ वंचक्रुर्भूमिपालंमहाबलम् ॥ २० ॥ अयोध्याऽधिपतिंवीरंशत्रुघ्नंनामपार्थिवम् ॥ सर्वलक्षणसंपन्नमहिषस्याऽऽसनेशुभे ॥ २१ ॥ दत्त्वाराज्यं तदातस्मैदेवाइंद्रपुरोगमाः ॥ स्वकीयैर्वाहनैःसर्वेजग्मुःस्वान्यालयानिते ॥ २२ ॥ गतेषुतेषुदेवेषुपृथिव्यांपृथिवीपते ॥ धर्मराज्यंबभूवाऽथप्रजा श्चसुखितास्तथा ॥ २३ ॥ पर्जन्यःकालवर्षीचधराधान्यगुणाऽऽवृता ॥ पादपाःफलपुष्पाढ्याबभूवुःसुखदाःसदा ॥ २४ ॥ गावश्चक्षीरसंपन्ना घटोध्न्यःकामदानृणाम् ॥ नद्यःसुमार्गगाःस्वच्छाःशीतोदाःखगसंयुताः ॥ २५ ॥ ब्राह्मणावेदतत्त्वाश्चयज्ञकर्मरतास्तथा ॥ क्षत्रियाधर्मसंयु क्तादानाऽध्ययनतत्पराः ॥ २६ ॥ शस्त्रविद्यारतानित्यंप्रजारक्षणतत्पराः ॥ न्यायदंडधराःसर्वेराजानःशमसंयुताः ॥ २७ ॥

स्थलेलयंगतास्थूलशरीरस्थभूम्यादिक्रमेणस्वात्मनिलीनावेत्यर्थः ॥ हेमशैलेसुमेरौवा ॥१५॥१६॥१७॥१८॥ मायाशक्तिः ॥ मायाशक्तिविशिष्टब्रह्मरूपिणीभगवतीश्रीभुवनेश्वरीयत्रम णिद्वीपेवर्ततेतत्रतदंशभूतासागतेत्यर्थः ॥१९॥२०॥२१॥२२॥२३॥२४॥ घटवद्दूधोयासांताघटोध्न्यः ॥ ऊधसोनङित्यनङादेशेबहुव्रीहेरूधसोङीपितिङीप् ॥ २५ ॥ २६ ॥ २७ ॥

॥ २८ ॥ २९ ॥ ब्राह्मणैःक्षत्रियैःकृतैर्मखैर्धराःपृथिव्यःपूर्णाआसन्नित्यर्थः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥

अविरोधस्तुभूतानांसर्वेषांसंबभूवह ॥ आकराधनदातॄणांव्रजागोयूथसंयुताः ॥ २८ ॥ ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चनृपसत्तम ॥ देवीभक्तिपराःसर्वेसंबभूवुर्धरातले ॥ २९ ॥ सर्वत्रयज्ञयूपाश्चमंडपाश्चमनोहराः ॥ मखैःपूर्णाधराश्चासन्ब्राह्मणैःक्षत्रियैःकृतैः ॥ ३० ॥ पतिव्रतधरानार्यः सुशीलाःसत्यसंयुताः ॥ पितृभक्तिपराःपुत्राआसन्धर्मपरायणाः ॥ ३१ ॥ नपाखंडंनवाऽधर्मःकुत्राऽपिपृथिवीतले ॥ वेदवादाःशास्त्रवादानान्येवादास्तथाऽभवन् ॥ ३२ ॥ कलहोनैवकेषांचिन्नदैन्यंनाऽशुभामतिः ॥ सर्वत्रसुखिनोलोकाःकालेचमरणंतथा ॥ ३३ ॥ सुहृदांनवियोगश्चनापदश्चकदाचन ॥ नाऽनावृष्टिर्नदुर्भिक्षंनमारीदुःखदानृणाम् ॥ ३४ ॥ नरोगोनचमात्सर्यंनविरोधःपरस्परम् ॥ सर्वत्रसुखसंपन्नानरानार्यःसुखान्विताः ॥ ३५ ॥ क्रीडंतिमानवाःसर्वेस्वर्गेदेवगणाइव ॥ नचोरानैवपाखंडावंचकादंभकास्तथा ॥ ३६ ॥ पिशुनालंपटाःस्तब्धानबभूवुस्तदानृप ॥ नवेदद्वेषिणःपापामानवाःपृथिवीपते ॥ ३७॥ सर्वधर्मरतानित्यंद्विजसेवापरायणाः ॥ त्रिधात्वात्सृष्टिधर्मस्यत्रिविधाब्राह्मणास्ततः ॥ ३८ ॥ सात्त्विकाराजसाश्चैवतामसाश्चतथापरे ॥ सर्वेवेदविदोदक्षाःसात्त्विकाःसत्त्ववृत्तयः ॥ ३९ ॥ प्रतिग्रहविहीनाश्चदयादमपरायणाः॥ यज्ञांस्तेसात्त्विकैरन्नैःकुर्वाणाधर्मतत्पराः ॥ ४० ॥ पुरोडाशविधानैश्चपशुभिर्नकदाचन ॥ दानमध्ययनंचैवयजनंतुतृतीयकम् ॥ ४१ ॥ त्रिकर्मरसिकास्तेवैसात्त्विकाब्राह्मणानृप ॥ राजसावेदविद्वांसःक्षत्रियाणांपुरोहिताः ॥ ४२ ॥ षट्कर्मनिरताःसर्वेविधिवन्मांसभक्षकाः ॥ यजनंयाजनंदानंतथैवचप्रतिग्रहः ॥ ४३ ॥ अध्ययनंतुवेदानांतथैवाऽध्यापनंतुषट् ॥ तामसाःक्रोधसंयुक्ताराग‌द्वेषपराःपुनः ॥ ४४ ॥ राज्ञांकर्मकरानित्यंकिंचिदध्ययनेरताः ॥ महिषेनिहतेसर्वेसुखिनोवेदतत्पराः ॥ ४५ ॥ बभूवुर्व्रतनिष्णातादानधर्मपरास्तथा ॥ क्षत्रियाःपालनेयुक्तावैश्यावणिजवृत्तयः ॥४६॥ कृषिवाणिज्यगोरक्षाकुसीदवृत्तयःपरे ॥ एवंप्रमुदितोलोकोमहिषेविनिपातिते ॥४७॥ अनुद्वेगःप्रजानां वैसंबभूवधनाऽऽगमः ॥ बहुक्षीराःशुभागावोनद्यश्चैवबहूदकाः ॥ ४८ ॥ वृक्षाबहुफलाश्चाऽऽसन्मानवारोगवार्जिताः ॥ नाऽधयोनेतयःक्काऽपिप्रजानांदुःखदायकाः ॥ ४९ ॥ ननिधनमुपयांतिप्राणिनस्तेऽप्यकालेसकलविभवयुक्तारोगहीनाःसदैव ॥ निगमविहितधर्मेतत्पराश्चंडिकायाश्चरणसरसिजानांसेवनेदक्षचित्ताः ॥ ५० ॥ इतिश्रीदेवीभागवतेमहापुराणेपञ्चमस्कन्धेविंशोऽध्यायः ॥ २० ॥

॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ इतिश्रीदेवीभागवततिलकेपंचमस्कंधेविंशोऽध्यायः ॥ २० ॥

अर्धाधिकैः षष्टिपद्यैः शुंभासुरकथोच्यते ॥ स्वस्थानाच्चामरादीनांच्यवनंसम्यगीर्यते ॥ १ ॥ देव्याश्चरित्रमेकमुक्त्वापुनरपिदेव्याश्चरित्रंद्वितीयंव्यासःकथयति । शृणुराजन्निति ॥ १ ॥ ॥ २ ॥ ३ ॥ परिचरैःसेवकैःसहहतावित्यन्वयः ॥ ४ ॥ ५ ॥ ६ ॥ हेमाचलेशुभेइत्यंतंसूत्ररूपेणचरित्रमुक्तंतद्व्याख्यानायराजापृच्छति । कावेताविति ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

व्यासउवाच ॥ शृणुराजन्प्रवक्ष्यामिदेव्याश्चरितमुत्तमम् ॥ सुखदंसर्वजंतूनांसर्वपापप्रणाशनम् ॥१॥ यथाशुंभोनिशुंभश्चभ्रातरौबलवत्तरौ ॥ बभूवतुर्महावीरावबध्यौपुरुषैःकिल ॥२ ॥ बहुसेनावृतौशूरौदेवानांदुःखदौसदा ॥ दुराचारौमदोत्सिक्तौबहुदानवसंयुतौ ॥३॥ हतावंबिकया तौतुसंग्रामेऽतीवदारुणे ॥ देवानांचहितार्थायसर्वैःपरिचरैःसह॥४॥चंडमुंडौमहाबाहूरक्तबीजोऽतिदारुणः ॥ धूम्रलोचननामाचनिहतास्तेरणां गणे ॥५॥ तान्निहत्यसुराणांसाजहारभयमुत्तमम् ॥ स्तुतासंपूजितादेवैर्गिरौहेमाऽचलेशुभे ॥६॥ राजोवाच ॥ कावेतावसुरावादौकथंतौबलि नांवरौ ॥ केनसंस्थापितौचेहस्त्रीवध्यत्वंकुतोगतौ ॥७॥ तपसावरदानेनकस्यजातौमहाबलौ ॥ कथंचनिहतौसर्वंकथयस्वसविस्तरम् ॥ ८ ॥ व्यासउवाच ॥ शृणुराजन्कथांदिव्यांसर्वपापप्रणाशिनीम् ॥ देव्याश्चरितसंयुक्तांसर्वार्थफलदांशुभाम् ॥ ९ ॥ पुराशुंभनिशुंभौद्वावसुरौभूमिमं डले ॥ पातालतश्चसंप्राप्तौभ्रातरौशुभदर्शनौ ॥१०॥ तौप्राप्तयौवनौचैवचेरतुस्तपउत्तमम् ॥ अन्नोदकंपरित्यज्यपुष्करेलोकपावने ॥११॥वर्षा णामयुतंयावद्योगविद्यापरायणौ ॥ एकत्रैवाऽऽसनंकृत्वातेपातेपरमंतपः ॥१२॥ तयोस्तुष्टोऽभवद्ब्रह्मासर्वलोकपितामहः ॥ तत्राऽगतश्चभगवा नारुह्यवरटापतिम् ॥१३॥ तावुभौचजगत्स्रष्टादृष्ट्वाध्यानपरौस्थितौ ॥ उत्तिष्ठतंमहाभागौतुष्टोऽहंतपसाकिल ॥१४॥ वाञ्छितंवावरंकामंददा मि ब्रुवतामिह ॥ कामदोऽहंसमायातोदृष्ट्वावांतपसोबलम् ॥ ॥१५॥ व्यासउवाच ॥ इतिश्रुत्वावचस्तस्यप्रबुद्धौतौसमाहितौ ॥ प्रदक्षिणक्रियां कृत्वाप्रणामंचक्रतुस्तदा ॥१६॥ दंडवत्प्रणिपातंचकृत्वातौदुर्बलाकृती ॥ ऊचतुर्मधुरांवाचंदीनौगद्गद्यागिरा ॥ १७ ॥ देवदेवदयासिंधोभक्ता नामभयप्रद ॥ अमरत्वंचनौब्रह्मन्देहितुष्टोऽसिचेद्विभो ॥१८॥ मरणादपरंकिंचिद्भयंनाऽस्तिधरातले ॥ तस्माद्भयाच्चसंत्रस्तौयुष्माकंशरणंग तौ ॥१९॥ त्राहित्वंदेवदेवेशजगत्कर्तःक्षमानिधे ॥ परिस्फोटयविश्वात्मन्सद्योमरणजंभयम् ॥२०॥ ब्रह्मोवाच ॥ किमिदंप्रार्थनीयंवोविपरी तंतुसर्वथा ॥ अदेयंसर्वथासर्वैःसर्वेभ्योभुवनत्रये ॥२१॥ जातस्यहिध्रुवंमृत्युर्ध्रुवंजन्ममृतस्यच ॥मर्यादाविहितालोकेपूर्वंविश्वकृताकिल॥२२॥ मर्तव्यंसर्वथासर्वैःप्राणिभिर्नात्रसंशयः ॥ अन्यंप्रार्थयतांकामंददामियच्चवांछितम् ॥ २३ ॥ व्यासउवाच ॥ तदाकर्ण्यवचस्तस्यसुविमृश्यच दानवौ ॥ ऊचतुःप्रणिपत्याऽथब्रह्माणंपुरतः स्थितम् ॥ २४ ॥

॥ ११ ॥ १२ ॥ वरटापतिंहंसम् ॥ १३ ॥ १४ ॥ तपसोबलमिति ॥ इतिब्रह्मोवाचेतिशेषः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ वोयुष्माकमिदंप्रार्थनीयंसर्वथाविपरीतं किंविपरीतमेवकथमित्यर्थः ॥ विपरीतत्वमेवाह ॥ अदेयमिति ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ संगतःस्थितः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ पाँलांदि

पुरुषैरमराद्यैश्चमानवैर्मृगपक्षिभिः ॥ अवध्यत्वंकृपासिंधोदेहिनौवांछितंवरम् ॥२५॥ नारीबलवतीकाऽस्तियानौनाशंकरिष्यति ॥ नबिभीवः स्त्रियःकामंत्रैलोक्येसचराचरे ॥२६॥ अवध्यौभ्रातरौस्यातांनरेभ्यःपंकजोद्भव ॥ भयंनस्त्रीजनेभ्यश्चस्वभावादबलाहिसा ॥ २७ ॥ व्यासउवाच ॥ इतिश्रुत्वातयोर्वाक्यंप्रददौवांछितवरम् ॥ ब्रह्माप्रसन्नमनसाजगामाथस्वमालयम् ॥२८ ॥ गतेऽथभवनेतस्मिन्दानवौस्वगृहंगतौ ॥ भृगुंपुरोहितंकृत्वाचक्रतुःपूजनंतदा ॥२९॥ शुभेदिनेसुनक्षत्रेजातरूपमयंशुभम् ॥ कृत्वासिंहासनंदिव्यंराज्यार्थंप्रददौमुनिः ॥३०॥ शुभायज्येष्ठभूतायददौराज्यासनंशुभम् ॥ सेवनार्थंतदैवाशुसंप्राप्तादानवोत्तमाः ॥ ३१ ॥ चंडमुण्डौमहावीरौभ्रातरौबलदर्पितौ ॥ संप्राप्तौसैन्यसंयुक्तौरथवाजिगजान्वितौ ॥३२॥ धूम्रलोचननामाचतद्रूपश्चंडविक्रमः ॥ शुंभंचभूपतिंश्रुत्वातदाऽगाद्बलसंयुतः॥३३॥रक्तबीजस्तथाशूरोवरदानबलाधिकः ॥ अक्षौहिणीभ्यांसंयुक्तस्तत्रैवागत्यसंगतः ॥ ३४ ॥ तस्यैकंकारणंराजन्संग्रामेयुध्यतःसदा ॥ देहाद्रुधिरसंपातस्तस्यशस्त्राहतस्यच ॥ ३५ ॥ जायतेचयदाभूमावुत्पद्यंतेह्यनेकशः ॥ तादृशाःपुरुषाःक्रूराबहवःशस्त्रपाणयः ॥३६॥ संभवंतितदाकारास्तद्रूपास्ततपराक्रमाः ॥ युद्धंपुनस्तेकुर्वंतिपुरुषारक्तसंभवाः ॥ ३७ ॥ अतः सोऽपिमहावीर्यः संग्रामेऽतीवदुर्जयः ॥ अवध्यः सर्वभूतानांरक्तबीजोमहासुरः ॥ ३८ ॥ अन्येचबहवःशूराश्चतुरंगसमन्विताः ॥ शुंभंचनृपतिंमत्वाबभूवुस्तस्यसेवकाः ॥ ३९ ॥ असंख्यातातदाजातासेनाशुंभनिशुंभयोः ॥ पृथिव्याः सकलंराज्यंगृहीतंबलवत्तया ॥ ४० ॥ सेनायोगंतदाकृत्वानिशुंभः परवीरहा ॥ जगामतरसास्वर्गेशचीपतिजयायच ॥ ४१ ॥ चकाराऽसौमहायुद्धंलोकपालैःसमंततः ॥ वृत्रहावज्रपातेनताडयामासवक्षसि ॥ ४२ ॥ सवज्राऽभिहतोभूमौपपातदानवाऽनुजः ॥ भग्नंबलंतदातस्यनिशुंभस्यमहात्मनः ॥ ४३ ॥ भ्रातरंमूर्छितंश्रुत्वाशुंभःपरबलार्दनः ॥ तत्राऽगत्यसुरान्सर्वांस्ताडयामाससायकैः ॥४४॥ कृतंयुद्धंमहत्तेनशुंभेनाक्लिष्टकर्मणा ॥ निर्जितास्तुसुराःसर्वेसेंद्राःपालाश्चसर्वशः ॥४५॥ ऐंद्रंपदंतदातेनगृहीतंबलवत्तया ॥ कल्पपादपसंयुक्तंकामधेनुसमन्वितम् ॥ ४६ ॥ त्रैलोक्यंयज्ञभागाश्चहृतास्तेनमहात्मना ॥ नंदनचवनंप्राप्यमुदितोभून्महासुरः ॥ ४७ ॥ सुधायाश्चैवपानेनसुखमापमहाऽसुरः ॥ कुबेरंसचनिर्जित्यतस्यराज्यंचकारह ॥ ४८ ॥ अधिकारंतथाभानोः शशिनश्चचकारह ॥ यमंचैवविनिर्जित्यजग्राहतत्पदंतथा ॥ ४९ ॥ वरुणस्यतथाराज्यंचकारवह्निकर्मच ॥ वायोः कार्यंनिशुंभश्चचकारस्वबलान्वितः ॥ ५० ॥ ततोदेवाविनिर्धूताहृतराज्याहृतश्रियः ॥ संत्यज्यनंदनंसर्वेनिर्ययुर्गिरिगह्वरे ॥ ५१ ॥

क्पाला इंद्रसहिताः ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥

॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ इति श्रीदेवीभागवततिलकेपंचमस्कंधेएकविंशोऽध्यायः ॥२१॥ सप्ताधिकैश्चपंचाशत्पद्यैरथसुरैःस्तुता ॥
प्रादुर्भूतापरादेवीदेवकार्यार्थमुच्यते ॥ १ ॥ देवपराजयोत्तरंजातंवृत्तमाह ॥ पराजिताइति ॥ १ ॥ ॥ गुरुंबृहस्पतिम् ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ हे आंगिरस अंगिरोगोत्रोद्भव

हृताधिकारास्तेसर्वेबभ्रमुर्विजनेवने ॥ निरालंबानिराधारानिस्तेजस्कानिरायुधाः ॥५२॥ विचेरुरमराः सर्वेपर्वतानांगुहासुच ॥ उद्यानेषु वशून्येषुनदीनांगह्वरेषुच॥५३॥नप्रापुस्तेसुखंक्काऽपिस्थानभ्रष्टाविचेतसः ॥ लोकपालामहाराजदैवाधीनंसुखंकिल ॥ ५४ ॥ बलवंतोमहाभागाबुद्धाधनसंयुताः ॥ कालेदुःखंतथादैन्यमाप्नुवंतिनराऽधिप ॥ ५५ ॥ चित्रमेतन्महाराजकालस्यैवविचेष्टितम् ॥ यःकरोतिनरंतावद्राजानंभिक्षुकंततः ॥ ५६ ॥ दातारंयाचकंचैवबलवंतंतथाबलम् ॥ पंडितंविकलंकामंशूरंचाऽतीवकातरम् ॥ ५७ ॥ मखानांचशतंकृत्वाप्राप्यैंद्रासनमुत्तमम् ॥ पुनर्दुःखंपरंप्राप्तंकालस्यगतिरीदृशी ॥५८ ॥कालःकरोतिधर्मिष्ठंपुरुषंज्ञानसंयुतम् ॥ तमेवाऽतीवपापिष्ठंज्ञानलेशविवर्जितम् ॥ ५९ ॥ नविस्मयोऽत्रकर्तव्यःसर्वथाकालचेष्टिते ॥ ब्रह्मविष्णुहरादीनामपीदृक्कष्टचेष्टितम्॥६०॥ विष्णुर्जननमाप्नोतिसूकरादिषुयोनिषु ॥ हरःकपालीसंजातःकालेनैवबलीयसा ॥ ६१ ॥ इतिश्रीदेवीभागवतेमहापुराणेपंचमस्कंधेभगवतीमाहात्म्येएकविंशोऽध्यायः ॥ २१ ॥ व्यासउवाच ॥ पराजिताःसुराःसर्वेराज्यंशुंभःशशासह ॥ एववर्षसहस्रंतुजगामनृपसत्तम ॥१॥भ्रष्टराज्यास्ततोदेवाश्चिंतामापुःसुदुस्तराम् ॥ गुरुंदुःखातुरास्तेतुपप्रच्छुरिदमादृताः॥२॥किंकर्तव्यंगुरोब्रूहिसर्वज्ञस्त्वंमहामुनिः ॥ उपायोऽस्तिमहाभागदुःखस्यविनिवृत्तये॥३॥उपचारपरानूनंवेदमंत्राःसहस्रशः ॥ वांछितार्थकरानूनंसूत्रैःसंलक्षिताःकिल ॥ ४ ॥ इष्टयोविविधाःप्रोक्ताःसर्वकामफलप्रदाः ॥ ताःकुरुष्वमुनेनूनंत्वंजानासिचतत्क्रियाः ॥ ॥५॥ विधिःशत्रुविनाशाययथोद्दिष्टःसदागमे ॥ तंकुरुष्वाऽद्यविधिवद्यथानोदुःखसंक्षयः ॥६॥ भवेदांगिरसाऽद्यैवतथात्वंकर्तुमर्हसि ॥ दानवानांविनाशायअभिचारंयथामति ॥७॥ बृहस्पतिरुवाच ॥ सर्वेमंत्राश्चवेदोक्तादैवाधीनफलाश्रुते॥नस्वतंत्राःसुराधीशतथैकांतफलप्रदाः ॥ ८ ॥ मंत्राणांदेवतायूयंतेतुदुःखैकभाजनम् ॥ जाताःस्मकालयोगेनकिंकरोमिप्रसाधनम् ॥ ॥ ९ ॥ इंद्राग्निवरुणादीनांयजनंयज्ञकर्मसु ॥ तेयूयंविपदंप्राप्ताःकरिष्यतिकिमिष्टयः॥१०॥ अवश्यंभाविभावानांप्रतीकारोनविद्यते ॥ उपायस्त्वथकर्तव्यइतिशिष्टानुशासनम् ॥ ११ ॥ दैवंहिबलवत्केचित्प्रवदंतिमनीषिणः ॥ उपायवादिनोदैवंप्रवदंतिनिरर्थकम् ॥ १२ ॥ दैवंचैवाप्युपायश्चद्वावेवाभिमतौनृणाम् ॥ केवलंदैवमाश्रित्यनस्थातव्यंकदाचन ॥ १३ ॥

॥ ७ ॥ एकांतफलप्रदाःनियमेनफलप्रदाः ॥ ८ ॥ ९ ॥ तदाइष्टयःकिंकरिष्यंतीत्यर्थः ॥ १० ॥ ११ ॥ ननुदैवमेवप्रबलंचेदुपायःकिमितिकर्तव्यइतिचेत्तत्राह ॥ दैवमिति ॥ १२ ॥
सिद्धांतस्त्वयमस्तीत्याह ॥ दैवंचैवाप्युपायश्चेति ॥ १३ ॥

॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ अनुष्ठानेमुख्योमंत्रःकोवाऽस्तीतिचेत्तत्राह ॥ मायाबीजेति ॥ सचमायाविशिष्टब्रह्मणोवाचकः ॥ ह्रींकारउभयात्मकइतिब्रह्मांडपुराणात् ॥ तथाचमायाविशिष्टब्रह्मवाचकभुवनेश्वरीमंत्रेणसामायाविशिष्टब्रह्मरूपिणीभुवनेश्वरीदेवताऽऽराध्येत्यर्थः ॥ तत्पुरश्चरणेमायाबीजपुरश्चरणेरताः आसक्ताइत्यर्थः ॥ तत्संख्याचशारदायाम् ॥ प्रजपेन्मंत्रविन्मंत्रंद्वात्रिंशल्लक्षमानतः ॥ त्रिःस्वादुयुक्तैर्जुहुयादष्टद्रव्यैर्दशांशतइति ॥ दक्षिणामूर्तिसंहितायांतु ॥ रविलक्षंजपेद्विद्यामितिद्वादशलक्षात्मकंपुरश्चरणमुक्तम् ॥ हालास्यमाहात्म्येतु ॥ एकलक्षजपेनैवसालोक्यं स्याद्विलक्षतः ॥ सामीप्यंचैवसायुज्यंचतुर्लक्षजपात्सुते ॥ इत्यनेनलक्षचतुष्टयात्मकमपिपुरश्चरणमभिहितम् ॥ १९ ॥ २० ॥ २१ ॥

उपायःसर्वथाकार्योविचार्यस्वधियापुनः॥तस्माद्ब्रवीमिवःसर्वान्संविचार्यपुनःपुनः ॥१४॥ पुराभगवतीतुष्टाजघानमहिषासुरम् ॥ युष्माभिस्तुस्तुतादेवीवरदानंददावथ ।१५। आपदंनाशयिष्यामिसंस्मृतावासदैवहि॥यदायदावोदेवेशाआपदोदैवसंभवाः॥१६॥प्रभवंतितदाकामंस्मर्तव्याहंसुरैःसदा॥स्मृताहंनाशयिष्यामियुष्माकंपरमापदः॥१७॥तस्माद्धिमाचलेगत्वापर्वतेसुमनोहरे॥आराधनंचंडिकायाःकुरुध्वंप्रेमपूर्वकम्॥१८॥ मायाबीजविधानज्ञास्तत्पुरश्चरणेरताः॥जानाम्यहंयोगबलात्प्रसन्नासाभविष्यति ॥१९॥ दुःखस्यांतोऽद्ययुष्माकंदृश्यतेनाऽत्रसंशयः ॥ तस्मिञ्छैलेसदादेवीतिष्ठतीतिमयाश्रुतम् ॥२०॥स्तुतासंपूजितासद्योवांछितार्थान्प्रदास्यति॥निश्चयंपरमंकृत्वागच्छध्वंवैहिमालयम् ॥ २१ ॥ सुराःसर्वाणिकार्याणिसावःकामंविधास्यति ॥व्यासउवाच॥इतितस्यवचःश्रुत्वादेवास्तेप्रययुर्गिरिम्॥२२॥ हिमालयंमहाराजदेवीध्यानपरायणाः॥ मायाबीजंहृदानित्यंजपंतःसर्वएवहि ॥२३॥नमश्चक्रुर्महामायांभक्तानामभयप्रदाम् ॥ तुष्टुवुःस्तोत्रमंत्रैश्चभक्त्याचापरमयायुताः ॥२४ ॥ नमोदेविविश्वेश्वरिप्राणनाथेसदानंदरूपेसुरानंददेते ॥ नमोदानवांतप्रदेमानवानामनेकार्थदेभक्तिगम्यस्वरूपे ॥२५ ॥ नतेनामसंख्यांनतेरूपमीदृक्तथाकोऽपिवेदादिदेवादिरूपे ॥ त्वमेवाऽसिसर्वेषुशक्तिस्वरूपाप्रजासृष्टिसंहारकालेसदैव ॥ २६ ॥ स्मृतिस्त्वंधृतिस्त्वंत्वमेवाऽसिबुद्धिर्जरापुष्टितुष्टीधृतिःकांतिशांती ॥ सुविद्यासुलक्ष्मीर्गतिःकीर्तिमेधेत्वमेवाऽसिविश्वस्यबीजंपुराणम् ॥ २७ ॥ यदायैःस्वरूपैःकरोषीहकार्यंसुराणांचतेभ्योनमामोऽद्यशांत्यै ॥ क्षमायोगनिद्रादयात्वंविवक्षास्थितासर्वभूतेषुशस्तैःस्वरूपैः ॥ २८ ॥ कृतंकार्यमादौत्वयायत्सुराणांहतोऽसौमहारिर्मदांधोहयारिः ॥ दयातेसदासर्ववदेवेषुदेविप्रसिद्धापुराणेषुवेदेषुगीता ॥ २९ ॥

॥२२॥ २३ ॥ महामायांमायाविशिष्टंब्रह्मरूपिणींभुवनेश्वरीमित्यर्थः ॥ २४ ॥ तेतुभ्यमित्यर्थः ॥ सदानंदरूपेब्रह्मरूपेइत्यर्थः॥२५॥ आदिदेवोहिरण्यगर्भस्तदादयोयेदेवास्तत्स्वरूपे ॥ हिरण्यगर्भःसमवर्तताग्रेइतिश्रुतेः ॥ २६ ॥ कांतिशांतीतिद्वंद्वः ॥ तथाकीर्तिमेधेइत्यत्रापि ॥ विश्वस्यबीजंमायाविशिष्टब्रह्मरूपमव्यक्तम्॥२७॥तेभ्योरूपेभ्यइत्यर्थः ॥ शांत्यैकल्याणार्थमित्यर्थः॥तान्येवरूपाण्याह ॥ क्षमायोगनिद्रेति ॥ २८ ॥ कृतंकार्यमिति ॥ यद्यस्मात्कारणात्त्वयायत्कार्यमादौकृतं किंतत्सुराणांमहारिःशत्रुर्हयारिर्महिषासुरस्त्वयाहतइति तस्मात्कारणात्सर्वदेवेषुतेदयासदा प्रसिद्धा ॥ सादयावेदेषुपुराणेषुचगीता वर्णितेत्यर्थः ॥ २९ ॥

इयंयादयात्वयाकृताऽत्रकिंचित्रम् । मातुःस्वभावएवाऽयंयत्पुत्रेषुदयाकर्तव्येत्याह । किमत्राऽस्तीति ॥ यतस्त्वंसुराणांजनित्रीसहायाचाऽसिततःएकचित्तेनाऽस्माकंसमग्रंसर्वकार्यंकुरुष्व नपुनर्महिषवधःकृतइतितावन्मात्रेणसंतोषंकुर्वित्यर्थः ॥ ३० ॥ एतेषांस्तुतिभक्तिश्रद्धादिकंदृष्ट्वाऽहंकार्यंकरिष्यामीत्याशांमाकुरु अस्माकंतज्ज्ञानाऽभावादित्याह । नवातेइति ॥ तेगु णानामियत्तांतथातवस्वरूपंचनजानीमहेवयं येनस्तुतिंकर्तुंसमर्थाभवेम ॥ तर्हिकिमर्थमयाऽनुग्रहःकर्तव्यइतिचेत्तत्राह । कृपापात्रमिति ॥ ३१ ॥ नन्वत्रमहान्श्रमोभवतितत्तोनाऽहमे तत्कार्यंकरिष्यामीतिचेत्तत्राह । विनाबाणपातैरिति ॥ अनायासेनैवेच्छामात्रेणैवसकलजगत्सर्जनवद्रिपून्हंतुंत्वंशक्तासमर्थाऽसि ॥ किमर्थंतर्हिमयादैत्यनाशार्थमवताराधृताइतिचेल्लो कैरवतारचेष्टावर्णनंकर्तव्यंतेनचतस्यकल्याणंभवितव्यमितिलोकोपकारायैवाऽवतारलीलाइत्याह । तथापीति ॥ ३२ ॥ नन्विदंवाक्यंयोजगत्कर्ताऽस्तितंप्रतिवक्तव्यंनाहंतथाविधाऽस्मी तिचेत्तत्राह ॥ इदंशाश्वतमिति ॥ मूढालोकाअपिइदंजगच्छाश्वतंनैवजानंतिजननमरणादिपरिणामवत्त्वात् ॥ तथाचजगतःकार्यत्वमुत्पत्त्याश्रयत्वात्सिद्धं तच्चकार्यंकारणंविनानैवसंभ वेत् ॥ वानिश्चयेन तच्चकारणंनकेवलआत्मा निर्विकारत्वात् ॥ नकेवलंजडम् ॥ तस्यनानाविधनियतभोगवज्जगज्जनकत्वाऽसंभवात् ॥ अतोऽन्यथाऽनुपपत्तिरूपानुमानेनमायाविशिष्टचे

किमत्राऽस्तिचित्रंयदंबासुतंस्वंमुदापालयेत्पोषयेत्सम्यगेव ॥ यतस्त्वंजनित्रीसुराणांसहायाकुरुष्वैकचित्तेनकार्यंसमग्रम् ॥ ३० ॥ नवातेगुणा नामियत्तांस्वरूपंवयंदेविजानीमहेविश्ववंद्ये ॥ कृपापात्रमित्येवमत्वातथाऽस्मान्भयेभ्यःसदापाहिपातुंसमर्थे ॥ ३१ ॥ विनाबाणपातैर्विना मुष्टिघातैर्विनाशूलखड्गैर्विनाशक्तिदंडैः ॥ रिपून्हंतुमेवाऽसिशक्ताविनोदात्तथाऽपीहलोकोपकारायलीला ॥ ३२ ॥ इदंशाश्वतंनवजानंतिमूढा नकार्यंविनाकारणंसंभवेद्वा ॥ वयंतर्कयामोऽनुमानंप्रमाणंत्वमेवाऽसिकर्ताऽस्यविश्वस्यचेति ॥३३॥ अजःसृष्टिकर्तामुकुंदोऽविताऽयंहरोनाश कृद्वपुराणेप्रसिद्धः ॥ नकिंत्वत्प्रसूतास्त्रयस्तेयुगादौत्वमेवाऽसिसर्वस्यतेनैवमाता ॥ ३४ ॥ त्रिभिस्त्वंपुराराधितादेविदत्तात्वयाशक्तिरुग्राचते भ्यःसमग्रा ॥ त्वयासंयुतास्तेप्रकुर्वंतिकामंजगत्पालनोत्पत्तिसंहारमेव ॥ ३५ ॥ तेकिंनमंदमतयोयतयोविमूढास्त्वांयेनविश्वजननींसमुपा श्रयंति ॥ विद्यांपरांसकलकामफलप्रदांतांमुक्तिप्रदांविबुधवृंदसुवंदितांघ्रिम् ॥३६॥येवैष्णवाःपाशुपताश्चसौरादंभास्तएवप्रतिभांतिनूनम्॥ध्या यंतिनत्वांकमलांचलज्ज्वांकांतिंस्थितिंकीर्तिमथाऽपिपुष्टिम् ॥ ३७ ॥ हरिहरादिभिरप्यथसेवितात्वमिहदेववरैरसुरस्तथा ॥ भुविभजंतिनयेऽ ल्पधियोनराजननितेविधिनाखलुवंचिताः ॥ ३८ ॥

तनब्रह्मरूपिणीत्वमेवजगत्कारणमितिवयंकल्पयामइत्यर्थः ॥ ३३॥ नन्वहंजगत्कर्त्रीचेत्कथंब्रह्मादयःसृष्ट्यादिकर्तारइतिप्रसिद्धमितिचेत्तत्राह॥ अजःसृष्टिकर्तेति ॥ अवितेतिच्छेदः॥ सत्यंतेजगत्कर्तारःपरंतुतेदेहवत्त्वादुत्पत्तिमंतएव ॥ तथाचतेषामपिकार्यत्वात्तत्रापिकारणापेक्षायांत्वमेवसर्वकारणंपर्यवस्यसीतिभावः ॥ तथाचश्रुतिर्मैत्रायणीयानाम्॥तमोवाइदमेकमे वासतत्परेस्यात्तत्परेणेरितंविषमत्वंप्रयातियदेतद्रजइत्यारभ्य ब्रह्मादीनांमायाविशिष्टब्रह्मणएवोत्पत्तिःप्रतिपादितेति ॥३४ ॥ तदेवस्पष्टयति । त्रिभिस्त्वमिति ॥ ३५ ॥ इत्थंयात्वंस र्वेश्वरीत्वांयेनभजंतितेमूढाएवेत्याह । तेकिंनेति ॥ यतयस्तेपीत्यर्थः ॥ तथायेवैष्णवाद्यास्तेऽपिदंभादांभिकाएवमूढाएवेत्याह । येवैष्णवाइति ॥ ३६ ॥ ३७ ॥ ननुकिमितितेमूढाइति चेत्तेवैष्णवाद्यायान्विष्ण्वादिदेवान्भजंतितेदेवाअपियांदेवतांपराशक्तिंभजंतितामभजंतस्तेकथंनमूढाइत्याह ॥ हरिहरादिभिरपीति ॥ नहिराजसेवकसेवनकर्ताराजानंभजतिमुख्य त्वेन ॥ नतेकेवलंमूढा अपितुविधिनावंचिताअपीत्याह । विधिनेति ॥ ३८ ॥

कथंहरिहरादयोभजंतीतितत्स्वरूपमाह । जलधिजेति ॥ जलधिजारमा ॥ जतु लाक्षा॥ स्पष्टमन्यत् ॥ ३९ ॥ एतादृशाब्रह्मादयोमहांतोऽपियदात्वांभजंतितदापरस्यकाकथेत्याह । किमपरस्यनरस्येति ॥ येत्यक्तैषणाज्ञानिनस्तेऽपित्वदंशभूतांदयांक्षमांचभजंतीत्यर्थः ॥ ४० ॥ येत्वांनभजंतितेषांगतिरीदृशीभवतीत्याह ॥ देवित्वदंघ्रीति ॥ भजने न रताइत्यन्वयः

जलधिजापदपंकजरंजनंजतुरसेनकरोतिहरिःस्वयम् ॥ त्रिनयनोऽपिधराधरजांघ्रिपंकजपरागनिषेवणतत्परः ॥ ३९ ॥ किमपरस्यनरस्यकथा नकैस्तवपदाब्जयुगंनभजंतिके ॥ विगतरागगृहाश्वदयांक्षमांकृतधियोमुनयोपिभजंतिते ॥ ४० ॥ देवित्वदंघ्रिभजनेनजनारतायेसंसारकूपपतिताःपतिताःकिलामी ॥ तेकुष्ठगुल्मशिरआधियुताभवंतिदारिद्र्यदैन्यसहितारहिताः सुखौघैः ॥ ४१ ॥ येकाष्ठभारवहनेयवसावहारेकार्येभवंतिनिपुणाधनदारहीनाः ॥ जानीमहेऽल्पमतिभिर्भवदंघ्रिसेवापूर्वेभवेजननितैर्नकृताकदाऽपि ॥ ४२ ॥ व्यासउवाच ॥ एवंस्तुतासुरैःसर्वैरंबिकाकरुणान्विता ॥ प्रादुर्बभूवतरसारूपयौवनसंयुता ॥ ४३ ॥ दिव्यांबरधरादेवीदिव्यभूषणभूषिता ॥ दिव्यमाल्यसमायुक्तादिव्यचंदनचर्चिता ॥ ४४ ॥ जगन्मोहनलावण्यासर्वलक्षणलक्षिता ॥ अद्वितीयस्वरूपासादेवानांदर्शनंगता ॥ ४५॥ जाह्नव्यांस्नातुकामासानिर्गतागिरिगह्वरात् ॥ दिव्यरूपधरादेवीविश्वमोहनमोहिनी ॥ ४६ ॥ देवान्स्तुतिपरानाहमेघगंभीरयागिरा ॥ प्रेमपूर्वंस्मितंकृत्वाकोकिलामंजुवादिनी ॥ ॥ ४७ ॥ देव्युवाच ॥ भोभोःसुरवराःकाऽत्रभवद्भिःस्तूयतेभृशम् ॥ किमर्थंब्रूतवःकार्यंचिंताविष्टाःकुतःपुनः ॥ ४८ ॥ व्यासउवाच ॥ तच्छ्रुत्वाभाषितंतस्यामोहितारूपसंपदा ॥ प्रेमपूर्वंहृदुत्साहास्तामूचुःसुरसत्तमाः ॥ ४९ ॥ देवाऊचुः ॥ देविस्तुमस्त्वांविश्वेशिप्रणताःस्मकृपार्णवे ॥ पाहिनःसर्वदुःखेभ्यःसंविग्नान्दैत्यतापितान् ॥ ५० ॥ पुरात्वयामहादेविनिहत्यासुरकंटकम् ॥ महिषंनोवरोदत्तःस्मर्तव्याऽहंसदाऽऽपदि ॥ ५१ ॥ स्मरणाद्दैत्यजांपीडांनाशयिष्याम्यसंशयम् ॥ तेनत्वंसंस्मृतादेविनूनमस्माभिरित्यपि ॥ ५२ ॥ अद्यशुंभनिशुंभौद्वावसुरौघोरदर्शनौ ॥ उत्पन्नौविघ्नकर्तारावहन्यौपुरुषैःकिल ॥ ५३ ॥ रक्तबीजश्चबलवांश्चंडमुंडौतथाऽसुरौ ॥ एतैरन्यैश्चदेवानांहृतंराज्यंमहाबलैः ॥ ५४ ॥ गतिरन्यानचास्माकंत्वमेवाऽसिमहाबले ॥ कुरुकार्यंसुराणांवैदुःखितानांसुमध्यमे ॥ ५५ ॥ देवास्त्वदंघ्रिभजनेनिरताःसदैवते दानवैरतिबलैर्विपदंसुनीताः ॥ तान्देविदुःखरहितान्कुरुभक्तियुक्तान्मातस्त्वमेवशरणंभवदुःखितानाम् ॥ ५६ ॥ सकलभुवनरक्षादेविकार्यात्वयाऽद्यस्वकृतमितिविदित्वाविश्वमेतद्युगादौ ॥ जननिजगतिपीडांदानवादर्पयुक्ताःस्वबलमदसमेतास्तेप्रकुर्वंतिमातः ॥ ५७ ॥ इतिश्रीदेवीभागवतेमहापुराणेपञ्चमस्कन्धेद्वाविंशोऽध्यायः ॥ २२ ॥

॥ ४१ ॥ यवसंतृणंतस्याऽवहारोभक्षणम् ॥ स्पष्टमन्यत् ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१॥ ५२ ॥ ५३॥ ५४ ॥ ५५ ॥५६ ॥५७॥
इतिश्रीदेवीभागवततिलकेपंचमस्कंधेद्वाविंशोऽध्यायः ॥ २२ ॥

मद्भक्त्यातुष्टात्वंमद्गृहेऽवतारंगृह्णासीतिकेवलंमह्लालनार्थमेव वस्तुतस्तुयस्यानुग्रहमिच्छसितंपुरुषंमहत्तरंकुरुषेकेवलंस्वेच्छयैवेत्याह । महत्तरमिति तथाचश्रुतिः ॥यंकामयेतमुग्रंकृणोमि तंब्रह्माणंतमृषिंतंसुमेधामिति ॥ इत्थंयदिनास्तितर्हितत्राह । नोचेदिति ॥ क्वत्वमतिदूरासनोवाचामपिअगोचरासच्चिदानंदरूपिणी ॥ ६७ ॥ एतादृश्यास्तवपितृत्वंजनकत्वंमम जन्मशतैरनंतजन्मभिरपिअसंभाव्यंसंभावनाविषयोपिनभवतितत्त्वत्पितृत्वंत्वंददासितस्मात्त्वदिच्छैवकेवलंकारणंनतुममयोग्यतादिकमित्यर्थः ॥ तदेवाह । अश्वमेधेति ॥ ६८ ॥ अथ स्वभाग्यंवर्णयाति ॥ अद्यप्रपंचइति ॥ अहोअस्यहिमालयस्यजगन्माता सुताकन्याभवत् ॥ धन्योऽसौभाग्यवानितिप्रपश्चेअद्याऽद्यप्रभृतिकीर्तिःस्यादित्यन्वयः ॥ ६९ ॥ पराश त्त्यनुग्रहेणप्रेमपूर्णांतःकरणःस्वमुखेनैवस्वभाग्यंपुनर्वर्णयति । यस्यास्त्विति ॥ कोवास्यान्नकोपीत्यर्थः ॥ ७० ॥ येषांवंशेमादृशोभाग्यवानस्तितेषांकिंस्थानंब्रह्मलोकाद्यपेक्षयाऽधिकं किंनिर्मितंस्यात्तन्नजानेइतिभावः ॥ ७१॥ पुनःप्रार्थयथेति॥इदंयथेति॥इदमतिदुर्लभंत्वत्पितृत्वंयथात्वयाकरुणयादत्तंतथेत्यन्वयः॥७२॥ त्वमेवाहमिति॥तवममचाभेदोयेनस्यात्तादित्य र्थः ॥ ७३ ॥ ७४ ॥ इतिश्रीदेवीभागवततिलकेसप्तमस्कन्धेएकत्रिंशोऽध्यायः ॥ ३१ ॥ पंचाशद्भिरथश्लोकैरात्मतत्त्वनिरूपणम् ॥ करोतिजगदंबासास्वमुखेनेतिचोच्यते ॥ १ ॥ हि मालयंपुरस्कृत्यसर्वान्देवान्देवीवरवस्तूपदेशंकरोति । शृण्वंत्विति ॥ व्याहरंत्याःकथयंत्याः ॥ १ ॥ अहमेवेति ॥ पूर्वंतुसृष्टेस्तुपूर्वंमहमात्मरूपिण्येवाऽसबभूव मत्तोन्यत्किंचिदपिनास

महत्तरंतंकुरुषेयस्यानुग्रहमिच्छसि ॥ नोचेत्क्वाहंजडःस्थाणुःक्वत्वंसच्चित्स्वरूपिणी ॥ ६७ ॥ असंभाव्यंजन्मशतैस्त्वत्पितृत्वंममाऽनघे ॥ अ श्वमेधादिपुण्यैर्वापुण्यैर्वातत्समाधिजैः ॥ ६८ ॥ अद्यप्रपंचेकीर्तिःस्याज्जगन्मातासुताऽभवत् ॥ अहोहिमालयस्यास्यधन्योसौभाग्यवानिति ॥ ६९ ॥ यस्यास्तुजठरेसंतिब्रह्मांडानांचकोटयः ॥ सैवयस्यसुताजाताकोवास्यात्तत्समोभुवि ॥ ७० ॥ नजानेस्मत्पितॄणांकिंस्थानंस्यान्नि र्मितंपरम् ॥ एतादृशानांवासाययेषांवंशेस्तिमादृशः ॥ ७१॥ इदंयथाचदत्तंमेकृपयाप्रेमपूर्णया ॥ सर्ववेदांतसिद्धंचत्वद्रूपंब्रूहिमेतथा ॥ ७२॥ योगंचभक्तिसहितंज्ञानंचश्रुतिसंमतम् ॥ वदस्वपरमेशानित्वमेवाहंयतोभवेः ॥ ७३ ॥ व्यासउवाच ॥ इतितस्यवचःश्रुत्वाप्रसन्नमुखपंकजा॥ वक्तुमारभतांबासारहस्यंश्रुतिगूहितम् ॥ ७४ ॥ इमिश्रीदे०म०सप्तमस्कंधेदेवीगीतायामेकत्रिंशोऽध्यायः ॥ ३१ ॥ श्रीदेव्युवाच ॥ शृण्वंतु निर्जराःसर्वेव्याहरंत्यावचोमम ॥ यस्यश्रवणमात्रेणमद्रूपत्वंप्रपद्यते ॥ १ ॥ अहमेवाऽऽसपूर्वंतुनान्यत्किंचिन्नगाधिप ॥ तदात्मरूपंचित्सं वित्परब्रह्मैकनामकम् ॥ २ ॥अप्रतर्क्यमनिर्देश्यमनौपम्यमनामयम् ॥ तस्यकाचित्स्वतःसिद्धाशक्तिर्मायेतिविश्रुता ॥ ३ ॥

सजातीयविजातीयस्वगतभेदशून्यमात्मतत्त्वमेवाऽऽसेत्यर्थः ॥ तथाचश्रुतिः ॥ आत्मावाइदमेकएवाग्रआसीन्नान्यत्किंचिदिति ॥ तदात्मरूपमिति ॥ तदेवात्मरूपंब्रह्मैकनामकंभव ति ॥ सत्यंज्ञानमनंतंब्रह्मेत्यादिकाजगत्कारणप्रतिपादकश्रुतिषुप्रतिपादिताःशब्दास्तस्यैवात्मस्वरूपस्यवाचकाःसंतीत्यर्थः ॥ २ ॥ तथाचसर्ववेदप्रतिपाद्यमात्मरूपमेवासेतिसमन्व याध्यायोक्तःसर्वपदानांब्रह्मण्यात्मरूपेसमन्वयउक्तोवेदितव्यइति ॥ कीदृक्तदात्मरूपमस्तीतिचेत्तत्राह ॥ अप्रतर्क्यमिति ॥ अनुमानाविषयश्रुत्यैकसमधिगम्यमित्यर्थः ॥ अनिर्देश्य श्रुत्यापिजातिगुणक्रियासंज्ञाभिर्निर्देष्टुमशक्यमित्यर्थः ॥ अनौपम्यमिति ॥ यदितत्सदृशोद्वितीयः पदार्थोजगंत्यांस्यात्तदुपमानेनसआत्मोपमेयः स्यान्नतुतदनौपम्यम् ॥ अनामयमि ति ॥ जायतेवर्धतइत्यादिषड्भावविकारशून्यामित्यर्थः॥ तेषांविकाराणांदेहोपाधिनिष्ठत्वादस्यचात्मनोदेहाभावात्तद्विकाररहितमनामयमेवैतदित्यर्थः ॥ एतादृशंनिर्गुणंकथंजगत्कारण मितिचेत्तत्राह । तस्येति ॥ काचिदनिर्वचनीयातस्यममात्मरूपस्यस्वतःसिद्धानादिभूताशक्तिरस्ति ॥ यामायेत्यादिपदैःसर्वश्रुतौविश्रुताप्रसिद्धास्ति मायांतुप्रकृतिंविद्यात् मायावाए षानारसिंहीत्यादिषु ॥ ३ ॥

साकीदृशीवर्ततेतदाह । नसतीति॥अत्रविरोधतइत्यावृत्त्यास्थानत्रयेपियोज्यम् ॥ब्रह्मवत्कालत्रयाबाध्यासतीन ब्रह्मज्ञानेनबाध्यत्वरूपविरोधात् ॥ नाऽपिवंध्यापुत्रवदसती व्यावहारिक सत्तातत्त्वंविरोधात्॥नाप्युभयात्मासत्त्वासत्त्वविशिष्टा ॥ विरुद्धधर्मयोःसत्त्वासत्त्वयोरेकत्रसहावस्थानविरोधादेतत्रयविलक्षणाकाचिदनिर्वचनीयावस्तुभूताऽस्तिसर्वदाअनादिःयावन्मोक्ष स्थायिन्यस्तीत्यर्थः॥तथाचतापनीयश्रुतिः॥मायाचतमोरूपानुभूतेस्तदेतज्जडंमोहात्मकमनंतंतुच्छमिदंरूपस्यास्यव्यंजिकानित्यनिवृत्ताविमूढैरात्मैवदृष्टास्यसत्त्वमसत्त्वंचदर्शयतीति ४। तत्रदृष्टांतमाह।पावकस्येति॥सहजानादिध्रुवायावन्मोक्षस्थायिनीमायाशक्तिर्ममास्तीत्यर्थः॥ एतेनमायाशक्त्यासद्वितीयत्वंब्रह्मणोस्तीतिकथंजगत्सृष्टेःपूर्वंब्रह्मसजातीयविजातीयस्वगत भेदशून्यमितिशंकापरास्ता॥शक्तेःशक्तानतिरेकात्॥नहिवह्निशक्तिर्वह्नेःपृथक्त्वेनकाचित्कदाचिद्गृह्यते॥किंचद्वितीयःसत्यपदार्थोनास्तीत्येवैकमेवाद्वितीयंब्रह्मेति श्रुतेरर्थः॥तथाचाऽसत्या माययासाद्वितीयत्वेऽपिदोषाभावात् ॥५॥ नन्वेतादृश्याभुवनेश्वर्यास्तवेच्छनीचजीवसर्जनेवैषम्यनैर्घृण्यदोषआपतेदितिचेत्तत्राह । तस्यांकर्माणीति ॥ जीवाःकर्माणिकालश्चसर्वेअनादय स्तेचसुषुप्तौयथाप्रतिदिवंसंव्यवहारोलीनोभवतितथासंचरेप्रलयकालेतस्यांमायायामभेदेनलीनाःस्युः ॥ तथाचयथायथायस्यजीवस्यकर्माणिभवंतितथामयाफलंदीयतइतिनममवैषम्यनै र्घृण्यदोषगंधोपीतिभावः ॥६॥ तादृशीममशक्तिर्जीवकर्मकालविशिष्टातयायुक्ताऽहंनिर्गुणापिबीजात्मतांजगत्कारणतांगताऽस्मीत्याह।स्वशक्तेश्चेति ॥ ननुतवशक्तिर्यथात्वांनव्यामोहय

**नसतीसानाऽसतीसानोभयात्माविरोधतः ॥ एतद्विलक्षणाकाचिद्वस्तुभूताऽस्तिसर्वदा ॥ ४ ॥ पावकस्योष्ण्यतेवेयमुष्णांशोरिवदीधितिः ॥ चंद्रस्यचंद्रिकेवेयंममेयंसहजाध्रुवा ॥५॥ तस्यांकर्माणिजीवानांजीवाःकालाश्चसंचरे ॥ अभेदेनविलीनाःस्युःसुषुप्तौव्यवहारवत् ॥ ६ ॥ स्वशक्तेश्चसमायोगादहंबीजात्मतांगता ॥ स्वाधारावरणात्तस्यादोषत्वंचसमागतम् ॥ ७ ॥ चैतन्यस्यसमायोगान्निमित्तत्वंचकथ्यते ॥ प्रपंचपरिणामाच्चसमवायित्वमुच्यते ॥ ८ ॥ केचित्तांतपइत्याहुस्तमःकेचिज्जडंपरे ॥ ज्ञानंमायांप्रधानंचप्रकृतिंशक्तिमप्यजाम् ॥ ९ ॥**

तितथाजीवशक्तिरपिजीवंनव्यामोहयेत्तथाचमुक्ताएवजीवाइतिसृष्टिर्निरर्थिकेतिचेत्तत्राह ।स्वाधारावरणादिति ॥ स्वंमायातस्याधारआत्मातस्यावरणादाच्छादनादस्यामायायादोषत्व मप्यस्तीत्यर्थः ॥ अयंभावः ॥ मायायारूपद्वयंमायाविद्यात्मकमस्ति मायाचविद्याचस्वयमेवभवतीतिश्रुतेः ॥ तत्रप्रथमायाममशक्तिर्मायातस्याःस्वाश्रयव्यामोहकारित्वाभावेपिजीवा श्रिताविद्यारूपस्यद्वितीयमायास्वरूपस्यस्वाश्रयव्यामोहकारित्वमस्त्येवेतितज्जीवमोक्षार्थंसृष्टिःसार्थिकैवेति ॥७॥ ननुतथापिलोकेकार्यमात्रंप्रत्युपादानकारणनिमित्तकारणयोरपेक्षास्ति घटादिषुदर्शनाज्जगतउत्पादनकर्त्रीत्वंत्वय्येवेतिकथमत्रकारणद्वयसद्भावइतिचेत्तत्राह । चैतन्यस्येति॥समायोगान्मायासमागमाच्चैतन्यस्यमायायांप्रतिबिंबितस्यचिदाभासस्यनिमित्तत्वं निमित्तकारणत्वंकथ्यतइत्यर्थः ॥प्रपंचेति॥ प्रपंचरूपेणपरिणामात्समवायित्वमुपादानकारणत्वमुच्यतेमायायाइतिशेषः॥ चिदाभासोनिमित्तकारणंमायोपादानकारणमितिविभागः ॥ अधिष्ठानभूतंशुद्धंबिंबभूतंचैतन्यंतुविवर्तोपादानमित्यर्थात्सिद्धम् ॥८॥ तस्यामायायाःसद्भावप्रतिपादकानिवचनानिश्रुतिप्रोक्तानिकथयति । केचित्तामिति ॥ केचिच्छाखिनस्तांमायां तपइतिवदंतीत्यर्थः ॥ तथाचश्रुतिः ॥ तपसाचीयतेब्रह्मेतिमुंडके ॥ तमःकेचिदिति । तथाचश्रुतिः ॥ नासदासीन्नोसदासीदित्यादि ॥ तमआसीत्तमसागूढमग्रेइति ॥ तदेतज्जडमिति तापनीयेजडत्वमुक्तं सऐक्षत लोकान्नुसृजाइति श्रुतौज्ञानत्वमुक्तम्॥अजामायाप्रधानप्रकृतिशक्तिपरादयःशब्दाः श्वेताश्वतरशाखायांप्रसिद्धाः ॥ तथाचसर्ववेदसंमतेयंमायेतिभावः॥९॥

॥१०॥तदेवाह । एवमिति ॥ ननुमायायाजडत्वंमिथ्यात्वंचकुतइतिचेत्तत्राह । तस्याइति॥तस्यादृश्यत्वात्स्वाधिष्ठानज्ञाननाश्यत्वाच्चजडत्वंमिथ्यात्वंचेत्यर्थः॥ यद्यद्दृश्यंतत्तज्जडंयथा
घटादीत्यादिव्याप्तेः॥स्वाधिष्ठानज्ञाननाश्यत्वंमिथ्यात्वमितिमिथ्यात्वलक्षणात् ॥ ११ ॥ एवंमायायाजडत्वंमिथ्यात्वंचोपपाद्यआत्मनस्तदुभयत्वंनास्तीत्युपपादयति । चैतन्यस्येति ॥
यदिचैतन्यस्यदृश्यत्वंस्यात्तर्हितज्जडमेवभविष्यति॥यद्यद्दृश्यंतत्तज्जडमितिव्याप्तेः॥तथाचसर्वस्यजडत्वात्प्रकाशकाभावाज्जगदांध्यप्रसंगस्तस्मान्नतद्दृश्यमित्यर्थः ॥ ननुतस्यदुर्दृश्यत्वा
भावेतदस्तित्वेप्रमाणाभावात्तदभावएवप्रसज्येतेतिचेत्तत्राह । स्वप्रकाशंचेति ॥ यदीदंचैतन्यंपरप्रकाशंस्यात्तर्हिसपरःकेनान्येनप्रकाशितःसोप्यन्यःकेनप्रकाशितइत्यनवस्थास्यात्॥ नच
स्वेनापिस्वंप्रकाशितमेकस्यैवकर्तृत्वंकर्मत्वविरुद्धधर्मद्वयवत्वाभावात् । तस्मात् यथादीपःस्वयंप्रकाशःपरप्रकाशकश्चतद्वन्मदीयंचैतन्यमपि ॥ हेपर्वतस्वयंभासमानमन्येषांसूर्यादीनांभा
सकंविद्धीत्यर्थः ॥ तथाचश्रुतिः॥नतत्रसूर्योनचंद्रतारकंनेमाविद्युतोभांतिकुतोयमग्निः॥तमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंविभातीति येनसूर्यस्तपतितेजसेद्धइतिच ॥१२॥१३॥
॥१४॥यस्माद्धेतोर्नित्यत्वंसंविद्रूपस्योक्तंतमेवहेतुमुपपादयति ॥ जाग्रदिति॥अवस्थात्रयेपिदृश्यस्यपदार्थजातस्यव्यभिचारोयतस्तत्संविदोव्यभिचाराभावश्चयतस्तस्मात्संविदोनित्यत्व

विमर्शइतितांप्राहुःशैवशास्त्रविशारदाः ॥ अविद्यामितरेप्राहुर्वेदतत्त्वार्थचिंतकाः ॥ १० ॥ एवंनानाविधानिस्युर्नामानिनिगमादिषु ॥ तस्या
जडत्वंदृश्यत्वाज्ज्ञाननाशात्ततोसती ॥ ११ ॥ चैतन्यस्यनदृश्यत्वंदृश्यत्वेजडमेवतत् ॥ स्वप्रकाशंचचैतन्यंनपरेणप्रकाशितम् ॥ १२ ॥
अनवस्थादोषसत्त्वान्नस्वेनाऽपिप्रकाशितम् ॥ कर्मकर्त्रीविरोधःस्यात्तस्मात्तद्दीपवत्स्वयम् ॥ १३ ॥ प्रकाशमानमन्येषांभासकंविद्धिपर्वत ॥
अतएवचनित्यत्वंसिद्धंसंवित्तनोर्मम ॥१४॥ जाग्रत्स्वप्नसुषुप्त्यादौदृश्यस्यव्यभिचारतः ॥ संविदोव्यभिचारश्चनानुभूतोऽस्तिकर्हिचित्॥१५॥
यदितस्याऽप्यनुभवस्तर्ह्ययंयेनसाक्षिणा ॥ अनुभूतःसएवाऽत्रशिष्टःसंविद्वपुःपुरा॥१६॥अतएवचनित्यत्वंप्रोक्तंसच्छास्त्रकोविदैः ॥ आनंदरूप
ताचाऽस्याःपरप्रेमास्पदत्वतः ॥ १७ ॥ मानभूवंहिभूयासमितिप्रेमात्मनिस्थितम् ॥ सर्वस्याऽन्यस्यमिथ्यात्वादसंगत्वंस्फुटंमम ॥ १८ ॥

मित्यर्थः ॥ ननुसंविदोपिव्यभिचारोस्तुतत्राह।संविदइति ॥ योऽहंजागरितंपश्यामिसएवाहंस्वप्नंपश्यामिसएवाऽहंसुषुप्तंपश्यामीत्यनुभवेयथाऽवस्थात्रयस्याभावोनुभूयतेनतथाकर्हिचित्
कदापिसंविदोऽभावोनुभूयतेतस्मादनिच्छतापिसंविदोनित्यत्वमाश्रयणीयमित्यर्थः ॥ १५ ॥ ननुबौद्धैःसंविदोऽप्यभावोनुभूयतेअतएवतेबौद्धायत्सत्तत्क्षणिकमितिव्याप्यत्यज्ञानस्याप्यनि
त्यत्वमिच्छंतीतिचेत्तत्राह । यदितस्यापीति ॥यदितस्यसंविद्रूपाभावस्यानुभवस्तर्हियेनसाक्षिणातस्यसंविद्रूपस्याऽयमभावोनुभूतःसएवाऽत्रसाक्षीसंविद्वपुर्ज्ञानशरीरोवशिष्टइति॥ साक्षि
ज्ञानंनित्यमेवसर्वैरंगीकर्तव्यमित्यर्थः॥ १६॥तत्रशास्त्रंविदनुभवंप्रमाणयति॥अतएवेति॥अधुनात्मनःसुखरूपत्वमुपपादयति॥आनंदरूपतेति । अस्याःसंविदोयतःपरप्रेमास्पदत्वमनुभूयते
तस्मादस्याःसंविदआनंदरूपतासुखरूपताऽस्तीत्यर्थः॥नह्यसुखंपरप्रेमास्पदंभवतीति॥तदुक्तंसूतसंहितायाम्॥असुखस्यनहिप्रेमास्पदत्वंपरिदृश्यते। १७॥तत्रानुभवंदर्शयति।मानभूवंहीति
हियतोऽहंमाभूवमितिन॥किंतुभूयासमेवेतिप्रेमसर्वलोकस्यात्मनिस्थितमस्ति ॥ नह्येतदात्मनःसुखरूपत्वाभावेसंभवती ॥ तस्मात्प्राणिमात्रस्याऽनुभवादानंदात्मतासंविदोऽस्त्येवेत्यर्थ
आत्मनोऽसंगत्वमुपपादयति॥सर्वस्येति॥ सर्वप्रपंचस्यमायानिर्मितत्वेनमिथ्यात्वात् मिथ्यापदार्थस्यसर्पादे रज्ज्वादिस्वसंबंधइवात्मनोपिमिथ्याप्रपंचेनासंबंधादसंगत्वंस्पष्टमेवेत्यर्थः॥१८

सर्वस्यपरिच्छेदकस्यमिथ्यात्वादेवात्मनःपरिच्छेदोऽपिनास्तीत्याह।अपरिच्छिन्नतेति॥अतएवसर्वस्यमिथ्यात्वादेवममात्मरूपिण्याअपरिच्छिन्नताऽपिमतेत्यर्थः ॥अत्रकेचिज्ज्ञानस्वरू
पोनात्माकिंत्वात्मनोधर्मोज्ञानमितिवदंतितन्मतंखंडयति । तच्चज्ञानमिति॥यदिज्ञानमात्मधर्मःस्यात्तदात्मनोजडत्वापत्तिः॥ज्ञानातिरिक्तस्यजडत्वात्तस्माज्ज्ञानंनात्मनोधर्मइत्यर्थः१९॥
किंचज्ञानस्यजडशेषत्वंघटादिष्वदर्शनान्नकुत्रापिदृष्टंनचसंभवति॥तमःप्रकाशयोस्तयोर्धर्मधर्मित्वमित्यर्थः॥नन्वात्मानजडःकिंतुचिद्रूपएवेति तद्धर्मत्वंज्ञानस्यसंभवतीतिचेत्तत्राह। चिद्ध
र्मत्वामिति॥उभयोश्चितोरेकत्वादात्मनोज्ञानस्यचचिद्रूपस्यनधर्मिधर्मभावःसंभवतीत्यर्थः॥भेदेहिसतिधर्मधर्मिभावः ॥यदिपुनर्ज्ञानमात्मनाश्चिद्रूपाद्भिन्नंस्वीक्रियते तर्हितज्ज्ञानंचितोभिन्न
माचिदेवस्यादिति॥तदुक्तंसूतसंहितायांयज्ञवैभवखंडे॥चितोऽन्यशेषताभावाच्चितोचिच्छेषतानहि ॥ शरावादिपदार्थानांचेतनत्वप्रसक्तितः ॥ चिच्छेषत्वंचनास्त्येवाचितश्चिन्नहिभि
द्यते॥ भिद्यतेचेदचिच्चित्स्याच्चितोचित्त्वंविरुध्यते॥ तथाचिच्चेतनस्यापिनशेषत्वमवाप्नुयात् ॥ शेषत्वेसतितत्सिद्धिस्तत्सिद्धौशेषताचितः॥ अतोन्यशेषतालोकाचितोभ्रांत्याप्रतीयतइति
॥ २० ॥ उपसंहरति । तस्मादिति ॥ तस्मादात्माज्ञानरूपएवेत्यर्थः ॥२१॥ इत्थंसृष्टेःपूर्वंसशक्तिकस्यात्मरूपस्यास्थितिमुक्त्वाऽनंतरंतस्मादात्मनःसृष्टिमाह । सपुनरिति ॥ सआत्मा
पुनःकामइच्छाकर्मादृष्टमनेकंविधम् ॥आदिनाजीवास्तद्युक्तायामायाशक्तिस्तया ॥ पूर्वयोजगतोऽनुभवस्तज्जन्योयः संस्कारस्तस्माद्धेतोःकालेनकृतोयःकर्मणांविपाकोनामपरिपाकः ॥

अपरिच्छिन्नताप्येवमतएवमताभम ॥ तच्चज्ञानंनात्मधर्मोधर्मत्वेजडतात्मनः ॥ १९ ॥ ज्ञानस्यजडशेषत्वंनदृष्टंनचसंभवि ॥ चिद्धर्मत्वंतथा
नास्तिचितश्चिन्नहिभिद्यते ॥ २० ॥ तस्मादात्माज्ञानरूपः सुखरूपश्चसर्वदा ॥ सत्यःपूर्णोप्यसंगश्चद्वैतजालविवर्जितः ॥ २१ ॥ सपुनः
कामकर्मादियुक्तयास्वीयमायया ॥ पूर्वानुभूतसंस्कारात्कालकर्मविपाकतः ॥ २२ ॥ अविवेकाच्चतत्त्वस्यसिसृक्षावान्प्रजायते ॥ अबुद्धिपूर्वः
सर्गोऽयंकथितस्तेनगाधिप ॥ २३ ॥ एतद्धियन्मयाप्रोक्तंममरूपमलौकिकम् ॥ अव्याकृतंतदव्यक्तंमायाशबलमित्यपि ॥ २४ ॥ प्रोच्यतेसर्व
शास्त्रेषुसर्वकारणकारणम् ॥ तत्त्वानामादिभूतं चसच्चिदानंदविग्रहम् ॥ २५ ॥ सर्वकर्मघनीभूतमिच्छाज्ञानक्रियाश्रयम् ॥ ह्रींकारमंत्रवाच्यं
तदादितत्त्वंतदुच्यते ॥ २६ ॥

फलदानायोन्मुखरूपस्तस्माच्चहेतोरित्यर्थः ॥ २२ ॥ तत्त्वस्यचतुर्विंशतितत्त्वात्मकस्याऽविवेकाच्चतस्यतत्त्वस्यपृथक्करणार्थमितितात्पर्यम् ॥ सिसृक्षावान्सर्जनेच्छावाञ्जायतइत्यर्थः
यथाबीजमुच्छूनंभवतितथैवपरमात्मापिकालकर्मफलभोगसमयेप्राप्तेजगत्सर्जनेच्छावान्भवतियथाचसुप्तः पुरुषः पूर्वसंस्कारवशेनजागर्ति तद्वत्परमात्मापिप्रलयरूपस्वापावस्था
तोजागर्ति । प्रलयोहिपरमेश्वरस्यस्वापः ॥ अबुद्धिपूर्वइति ॥ साचेयंस्वापाज्जागरणरूपावस्थानबुद्धिकृता॥ तदानींबुद्धेरभावात् ॥ किंतुप्राणिकर्मसंस्कारकृतेति ॥ अयंयःसर्गोजाग
रणरूपस्योत्पत्तिः ॥ सबुद्धिकृतोज्ञेयः संस्कारकृतोज्ञेयइत्यर्थः ॥ २३ ॥ एतत्स्वरूपस्यसर्वोत्तमत्वमाह । एतद्धियदिति ॥ ममसुख्यमलौकिकंलोकातीतंरूपमित्यर्थः ॥ तस्यनामांत
राणिवेदोक्तान्याह।अव्याकृतमिति ॥ २४ ॥ २५ ॥ सर्वप्राणिनांकर्माणिघनीभूतानियस्मिन्सर्वकर्मसाक्षीत्यर्थः ॥ इच्छाज्ञानक्रियाश्रयमिति ॥ तथाचश्रुतिःश्वेताश्वतरे॥नतस्यकार्यं
करणंचविद्यतेनतत्समश्चाभ्यधिकश्चदृश्यते ॥ परास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाचेति ॥ पुराणांतरेपि ॥ इच्छाज्ञानक्रियाचैवरौद्रीब्राह्मीतुवैष्णवी ॥ त्रिधाशक्तिः
स्थितायत्रतत्परंज्योतिरोमिति ॥ ह्रींकारमंत्रस्येदमेवतत्त्वंवाच्यमित्याह ह्रींकारेति ॥ २६ ॥

एवमांदितत्त्वस्यस्वस्यमहिमानमुपवर्ण्यतस्मादादितत्त्वात्ह्रींकारवाच्यादात्मनआकाशःसंभूतइत्यादिक्रमेणाऽपंचीकृतभूतसृष्टिमाह ।तस्मादाकाशइति॥अपंचीकृतआकाशउत्पन्नइत्यर्थः ॥ २७ ॥ २८ ॥ २९ ॥ अधुनालिंगदेहोत्पत्तिमाह। तेभ्यइति॥तेभ्यःसूक्ष्मभूतेभ्योमहद्व्यापकंसूत्रमभवत् यत्सूत्रंलिंगमितिपरिचक्षते लिंगशब्देनोच्यतइत्यर्थः॥तेभ्योभूतेभ्योवक्ष्यमाणक्रमेणलिंगदेहउत्पन्नइत्यर्थः ॥३०॥ तत्रसूत्रशब्देनवायुर्गृह्यते॥वायुर्वैसूत्रंवायुनावैसूत्रेणसर्वाणिभूतानिसंदब्धानीतिश्रुतेः॥तत्सूत्रंसर्वात्मकंसर्वप्राणात्मकंभवति ॥ तत्सूत्रंपरमात्मनःसूक्ष्मदेहइत्यर्थः ॥ यत्पूर्वमव्यक्तमित्युक्तंतत्परमात्मनःकारणदेहइत्याह ॥ अव्यक्तंकारणोदेहइति ॥ ३१ ॥ यस्मिन्जगद्बीजरूपंस्थितंयस्माच्चलिंगदेहोद्भवस्तदव्यक्तमितिपूर्वेणान्वयः ॥ इत्थंपरमात्मनःसकाशादपंचीकृतभूतोत्पत्तिमुक्त्वामध्येकारणलिंगदेहस्वरूपंसूक्ष्मंसूक्ष्मभूतोत्पत्तिप्रसंगेनोक्त्वाऽथपंचीकृतभूतोत्पत्तिमाह। ततःस्थूलानीति॥ततोपंचीकृतभूतोत्पत्त्यनंतरमित्यर्थः ॥ ३२ ॥ पंचीकरणप्रकारमेवाह । पूर्वोक्तानीति ॥ यान्यपंचीकृतभूतानिपूर्वमुक्तानितन्मध्येएकैकंभूतंद्विधाविभजेत्तत्राप्येकैकभूतस्ययोर्धोभागस्तंचतुर्धाविभजेत्

तस्मादाकाशउत्पन्नःशब्दतन्मात्ररूपकः ॥ भवेत्स्पर्शात्मकोवायुस्तेजोरूपात्मकंपुनः ॥ २७ ॥ जलंरसात्मकंपश्चात्ततोगंधात्मिकाधरा ॥

शब्दैकगुण आकाशोवायुःस्पर्शरवान्वितः ॥ २८ ॥ शब्दस्पर्शरूपगुणंतेजइत्युच्यतेबुधैः ॥ शब्दस्पर्शरूपरसैरापोवेदगुणाःस्मृताः ॥२९॥

शब्दस्पर्शरूपरसगंधैःपंचगुणाधरा॥तेभ्योऽभवन्महत्सूत्रंयल्लिंगंपरिचक्षते॥३०॥सर्वात्मकंतत्संप्रोक्तंसूक्ष्मदेहोऽयमात्मनः॥अव्यक्तंकारणोदेहः

सचोक्तःपूर्वमेवहि ॥३१॥ यस्मिञ्जगद्बीजरूपंस्थितंलिंगोद्भवोयतः ॥ ततः स्थूलानिभूतानिपंचीकरणमार्गतः ॥ ३२ ॥ पंचसंख्यानिजायंतेत

त्प्रकारस्त्वथोच्यते ॥ पूर्वोक्तानिचभूतानिप्रत्येकंविभजेद्द्विधा ॥ ३३ ॥ एकैकंभागमेकस्यचतुर्धाविभजेद्गिरे ॥ स्वस्वेतरद्वितीयांशेयोजना

त्पंचपंचते ॥ ३४ ॥ तत्कार्यंचविराड्देहः स्थूलदेहोऽयमात्मनः ॥ पंचभूतस्थसत्त्वांशैःश्रोत्रादीनांसमुद्भवः ॥ ३५॥ ज्ञानेंद्रियाणांराजेंद्रप्रत्ये

कंमिलितैस्तुतैः ॥ अंतःकरणमेकंस्याद्वृत्तिभेदाच्चतुर्विधम् ॥ ३६ ॥ यदातुसंकल्पविकल्पकृत्यंतदाभवेत्तन्मनइत्यभिख्यम् ॥ स्याद्बुद्धि

संज्ञंचयदाप्रवेत्तिसुनिश्चितंसंशयहीनरूपम् ॥३७॥ अनुसंधानरूपंतच्चित्तंचपरिकीर्तितम् ॥ अहंकृत्यात्मवृत्त्यातुतदहंकारतांगतम् ॥ ३८ ॥

विभज्यस्वस्मात्स्वस्मादितरद्यद्भूतंतस्ययोद्वितीयोंशोर्धभागात्मकस्तस्मिन्योजनात्तेसर्वेपंचपदार्थाःपंचावयवाभवंतीत्यर्थः॥३३॥३४॥एवंपंचीकृतभूतानांयत्कार्यंतत्कार्यविराड्देहोभवतीत्यर्थः ॥ साविराड्देहःपरमेश्वरस्यस्थूलदेहोभवतीत्याह । स्थूलदेहोयमात्मनइति ॥ आत्मनोममेत्यर्थः ॥ अथेंद्रियांतःकरणप्राणानांपूर्वोक्तलिंगदेहांतर्गतानामुत्पत्तिमाह । पंचभूतस्थेति ॥ पंचभूतानांयेसत्त्वांशास्तैःप्रत्येकंज्ञानेंद्रियाणिपंचभवंति॥ ३५॥मिलितैःसत्त्वांशैरंतःकरणंभवतीत्याह । मिलितैरिति॥ ३६॥वृत्तिभेदस्वरूपमाह । यदात्विति॥संकल्पविकल्पकृत्यंयदांतःकरणंकरोतितदातदंतःकरणंमनइत्यभिख्यंमनःसंज्ञकंभवतीत्यर्थः॥यदासंशयहीनंयथास्यात्तथासुनिश्चितंवस्तुतदंतःकरणंप्रवेत्तितदातद्बुद्धिसंज्ञकंभवतीत्यर्थः॥३७॥ यदानुसंधानवृत्तिर्भवतितदांतःकरणस्यचित्तमितिसंज्ञेत्यर्थः॥अहंकृत्यात्मवृत्त्येति ॥आत्मशब्दःस्वरूपपरः॥अहंकृतिस्वरूपवृत्त्यातुतदंतःकरणमहंकारतांगतमहंकारसंज्ञांलभतइत्यर्थः ॥ ३८ ॥

अथकर्मेंद्रियाणामुत्पत्तिमाह । तेषामिति ॥ तेषांपंचभूतानांप्रत्येकंरजोंशैःकर्मेंद्रियाणिपंचोत्पद्यंते॥तैर्मिलितैस्तुरजोंशैःप्राणापानादिपश्चवृत्त्यात्मकःप्राणोभवतीत्यर्थः ॥ ३९ ॥ तेषांवा
यूनांवृत्तिभेदात्तेषांस्थानानिनामानिचाह । हृदिप्राणइति ॥४०॥ अधुनापूर्वोक्तलिंगदेहस्ययावत्स्वरूपमुच्यते । ज्ञानेंद्रियाणीति ॥ धियाचसहितंमनइति । मनोबुद्धिश्चेत्यर्थः ॥ ४१ ॥
एतत्सप्तदशावयवकंसूक्ष्मशरीरंमम यल्लिंगसंज्ञकंभवतितदित्याह । एतत्सूक्ष्ममिति॥इत्थंदेहत्रयस्वरूपमुक्त्वाजीवेश्वरविभागकारणमाह ॥ तत्रयाप्रकृतिरिति ॥ तत्रैकाशुद्धसत्त्वाभिधा
नासामायाद्वितीयामलिनसत्त्वप्रधानासाऽविद्येतिमायाविद्ययोर्भेदः ॥४२॥ तत्रयास्वाश्रयंरक्षेन्नावृणुयात्सामायेतिनिगद्यते ॥४३॥ तस्यामिति ॥ तस्यांस्वाश्रयाव्यामोहकारिण्यांशुद्ध
सत्त्वप्रधानायांमायायामीशितुः परमात्मनोयत्प्रतिबिंबंपतातितत्प्रतिबिंबमीश्वरः समाख्यातः॥सचेश्वरः स्वाश्रयंव्यापकंब्रह्मतज्ज्ञानवान्भवति ॥ माययातदाधारब्रह्मणोऽनावरणात्॥
॥४४॥ किंचतस्यव्यापकत्वात्कुत्रापितज्ज्ञानस्यावरणाभावात्ससर्वज्ञोभवति अचिंत्यमायाशक्तिमत्त्वात्सर्वकर्ताचसर्वानुग्रहकर्ताचभवतीत्यर्थः ॥ अविद्यायामिति ॥ मलिनसत्त्वप्रधाना
यामविद्यायांयत्प्रतिबिंबंतज्जीवसंज्ञंभवतीत्युत्तरेणान्वयः ॥ ४५ ॥ तज्जीवसंज्ञंमलिनसत्त्वप्रधानाऽविद्ययातदाश्रयस्यस्वरूपभूतानंदस्यावरणात्सर्वदुःखाश्रयमसर्वज्ञमव्यापकंचभवती

तेषांरजोंशैर्जातानिक्रमात्कर्मेन्द्रियाणिच ॥ प्रत्येकंमिलितैस्तैस्तुप्राणोभवतिपंचधा ॥३९॥ हृदिप्राणोगुदेपानोनाभिस्थस्तुसमानकः ॥ कंठदे
शेप्युदानःस्याद्व्यानःसर्वशरीरगः॥४०॥ ज्ञानेंद्रियाणिपंचैवपंचकर्मेंद्रियाणिच ॥ प्राणादिपञ्चकंचैवधियाचसहितंमनः ॥४१॥ एतत्सूक्ष्मशरी
रंस्यान्ममलिंगंयदुच्यते॥तत्रयाप्रकृतिःप्रोक्तासाराजन्द्विविधास्मृता॥४२॥सत्त्वात्मिकातुमायास्यादविद्यागुणमिश्रिता॥स्वाश्रयंयातुसंरक्षेत्सा
मायेतिनिगद्यते॥४३॥तस्यांयत्प्रतिबिंबंस्याद्बिंबभूतस्यचेशितुः॥ सईश्वरःसमाख्यातःस्वाश्रयज्ञानवान्परः॥४४॥ सर्वज्ञःसर्वकर्ताचसर्वानुग्रह
कारकः॥अविद्यायांतुयत्किंचित्प्रतिबिंबंनगाधिप॥४५॥तदेवजीवसंज्ञंस्यात्सर्वदुःखाश्रयंपुनः ॥ द्वयोरपीहसंप्रोक्तंदेहत्रयमविद्यया॥४६॥देहत्र
याभिमानाच्चाप्यभून्नामत्रयंपुनः॥प्राज्ञस्तुकारणात्मास्यात्सूक्ष्मदेहीतुतैजसः॥४७॥स्थूलदेहीतुविश्वाख्यस्त्रिविधःपरिकीर्तितः॥एवमीशोपिसंप्रो
क्तईशसूत्रविराट्पदैः॥४८॥प्रथमोव्यष्टिरूपस्तुसमष्ट्यात्मापरःस्मृतः॥सहिसर्वेश्वरःसाक्षाज्जीवानुग्रहकाम्यया॥४९॥करोतिविविधंविश्वंनाना
भोगाश्रयंपुनः॥मच्छक्तिप्रेरितोनित्यंमयिराजन्प्रकल्पितः॥५०॥इतिश्रीदेवीभागवतेमहापुराणेसप्तमस्कन्धेदेवीगीतायांद्वात्रिंशोध्यायः॥३२॥

त्यर्थः॥द्वयोरपीति॥द्वयोरपीश्वरजीवयोर्देहत्रयंपूर्वोक्तंभवति॥ईश्वरस्यावरणाभावेपिविक्षेपस्यसत्त्वात् ॥ अत्राऽविद्ययेत्यनेनमायाविद्ययोरुभयोरपिग्रहणम् ॥४६॥ देहत्रयाभिमानेति॥
उभयोरपिदेहत्रयाभिमानान्नामत्रयंभवतीत्यर्थः॥तत्रजीवस्यनामत्रयंवदति । प्राज्ञस्त्विति॥कारणदेहाभिमानीयःसप्राज्ञःसूक्ष्मदेहाभिमानीतुतैजसः ॥ ४७ ॥ स्थूलदेहीति ॥ स्थूलदे
हाभिमानीतुविश्वसंज्ञकइत्यर्थः॥एवमीश्वरोपिदेहत्रयाभिमानादीशसूत्रविराट्पदैःसंप्रोक्तःकथितइत्यर्थः॥४८॥ प्रथमइति ॥ प्रथमोजीवोव्यष्टिरूपोव्यष्टिदेहत्रयाभिमानीत्यर्थः ॥ पर
ईश्वरस्तुसमष्टिदेहाभिमानीत्यर्थः॥ईश्वरस्यमहिमानंवर्णयति । सहिसर्वेश्वरइति॥तस्यस्वानुभवानंदेननिरंतरंनित्यतृप्तत्वेपिकेवलंजीवानुग्रहकाम्ययाजीवानांमोक्षोभवत्वितीच्छयानानावि
धंविश्वंनानाभोगाश्रयंरचयतीतिकरुणासमुद्रईश्वरइत्यर्थः ॥ ४९ ॥ सोपीति ॥ हेराजन्सोपीश्वरोममब्रह्मरूपिण्यायामायाशक्तिस्तयाप्रेरितएवसर्वंकरोति यतःसईश्वरोमयिब्रह्मरूपि
ण्यांरज्जुसर्पवदेवकल्पितस्ततोमच्छक्त्यधीनएवेत्यर्थः ॥५०॥ इतिश्रीदेवीभागवततिलकेसप्तमस्कन्धेदेवीगीतायांद्वात्रिंशोऽध्यायः ॥ ३२ ॥

षट्पंचाशन्महापद्मैरपवादपुरःसरम्॥महाघोरंविश्वरूपंदर्शितंचेतिकथ्यते ॥ १ ॥ इत्थमध्यारोपमुक्त्वापवादमाह । मन्मायेति ॥ हेपर्वत ययामन्मायाशक्त्याचराचरंसर्वंजगत्क्लप्तं सापिमायामत्तोमत्स्वरूपात्पृथङ्नास्ति तस्यामयिकल्पितत्वेनमिथ्यात्वात्॥मिथ्यापदार्थस्यचाऽधिष्ठानसत्तातिरिक्तसत्ताभावात् ॥ तस्मादहमेवाऽस्मिपरमार्थतोनान्यत्किंचिद्वस्त्वंतरमस्तीत्यर्थः ॥१ ॥ ननुसर्वथाद्वैताभावेजगत्कथंभासतेइतिचेत्तत्राह ॥ व्यवहारेति ॥ अनाद्यविद्याभ्रांतानांयोव्यवहारस्तद्दृशातद्दृष्ट्यामायाविद्येतिविश्रुताभवति ॥ तत्त्वदृष्ट्यातुब्रह्मदृष्ट्यातुसानैवास्ति किंतुतत्त्वमेवकेवलमस्तीत्यर्थः॥नहिभ्रांतदृष्ट्यारज्जुसर्पवत् कारणाज्ञानसत्त्वेपिरज्जुदृष्ट्याकिंचिदपितद्वर्ततइतिभावः॥ तथाचश्रुतिः ॥ ननिरोधोनचोत्पत्तिर्नबद्धोनचसाधकः॥नमुमुक्षुर्नवैमुक्तइत्येषापरमार्थतेति ॥ तापनीयेच असत्त्वमरजस्कमतमस्कममायमितिब्रह्मवर्णितम् ॥ २ ॥ ननुयदिप्रपंचोमिथ्यातर्हितदंतःपातीजीवोपिमिथ्येतिवक्तव्यम् ॥ तथाचजीवस्यमिथ्यात्वेमोक्षदशायांतस्यावस्थानाभावेनस्वनाशार्थंकदापिजीवोनयत्नंकुर्यादितिमोक्षशास्त्रंव्यर्थमेवेतिचेत्तत्राह । साहमिति ॥ हेगिरेमायाचाविद्याकर्माणितत्त्वाणिनाम् आदिनानानासंस्काराश्चतैःसहिताऽहमेवकूटस्थब्रह्मरूपासर्वंजगत्प्रथमतःसृष्ट्वातदंतस्तन्मध्येघटेआकाशवदादर्शेप्रतिबिंबवद्वाचिदाभासरूपेणप्रविशामि ॥ तत्रापिप्राणपुरःसराप्राणमग्रतःकृत्वाप्रविशामि ॥ ३ ॥ किमर्थमितिचेत्तत्राह । लोकांतरगतिरिति ॥ यद्यहंप्राणंपुरःसरंकृत्वाप्राणाभिमानंकृत्वानप्रेक्ष्यामितर्हिममव्यापकत्वाल्लोकांतरगमनादिकंजन

देव्युवाच॥मन्मायाशक्तिसंक्लृप्तंजगत्सर्वंचराचरम्॥सापिमत्तःपृथङ्मायानास्त्येवपरमार्थतः॥१॥व्यवहारदृशासेयंविद्यामायेतिविश्रुता ॥ तत्त्वदृष्ट्यातुनास्त्येवतत्त्वमेवास्तिकेवलम्॥२॥साऽहंसर्वंजगत्सृष्ट्वातदंतःप्रविशाम्यहम्॥मायाकर्मादिसहितागिरेप्राणपुरःसरा॥३॥लोकांतरगतिर्नोचेत्कथंस्यादितिहेतुना॥यथायथाभवंत्येवमायाभेदास्तथातथा॥४॥उपाधिभेदाद्भिन्नाऽहंघटाकाशादयोयथा॥उच्चनीचादिवस्तूनिभासयन्भास्करःसदा ॥५॥ नदुष्यतितथैवाऽहंदोषैर्लिप्ताकदापिन ॥ मयिबुद्ध्यादिकर्तृत्वमध्यस्यैवापरेजनाः ॥ ६ ॥

नमरणादिव्यवहारश्चकथंस्यात्॥नहिव्यापकस्यगमनागमनंदेहसंबंधोदेहत्यागश्चसंभवति ॥ इतिहेतुनातद्धेत्वर्थंप्राणपुरःसरंप्रविशामि ॥ तस्मिंश्चप्राणेस्वीकृतेसतितस्यदेहांतरप्रवेशेजन्मतत्त्यागेमरणंतथैवलोकांतरगतिश्चेतिसर्वंसिध्यतीति ॥ अयंभावः ॥ नकेवलंजीवत्वंचिदाभासस्यैव येनपूर्वोक्तंदूषणंभवेत् ॥ किंतर्हिअहंकूटस्थरूपिणीतथांतःकरणंतदाश्रयभूताविद्याचिभासश्चेतिचतुष्टयंमिलित्वाजीवत्वम्.॥यथाचज्ञानेनविद्यांतःकरणचिदाभासानांनाशेपिकूटस्थब्रह्मांशस्यमुक्तावशेषान्नजीवस्यमोक्षार्थमप्रवृत्तिर्नवामोक्षशास्त्रानर्थक्यमिति ॥ ननुतर्हितवैकत्वाज्जीवस्याप्येकत्वंस्यादितिचेत्तत्राह । यथायथेति ॥ ननुतर्हियथाव्यापकएकएवाकाशोघटाद्युपाधिभेदेनयथाभिद्यते तथाविधानेकत्वस्वीकारेणाऽविद्यानामतःकरणानांचभेदात्कूटस्थोपिभिद्यतइतिजीवबहुत्वमप्युपपन्नमेवेत्यर्थः ॥ तथाचश्रुतिः इंद्रोमायाभिःपुरुरूपईयतेयुक्ताह्यस्यहरयःशतादशेति ॥ ४ ॥ तवजगदंतःपातित्वेनतद्दोषेणदुष्टत्वमपिस्यात्तत्राह । उच्चनीचादिवस्तुनीति॥यथासूर्यःसर्वाण्युच्चनीचादिवस्तूनिभासयन्नपिनदुष्यति तथैवाऽहंकदापिदोषैर्दुष्टानास्मीत्यर्थः ॥ ५ ॥ ननुसूर्यःसाक्षिभूतोनदुष्यतीतियुक्तम् ॥ त्वंतुसकलकार्यकर्त्रीतिकर्तुर्दोषलेपोभविष्यत्येवेतिचेत्तत्राह ॥ मयिबुद्ध्यादीति ॥ विमूढाबुद्ध्यादिनिष्ठंकर्तृत्वमविवेकेनमय्यात्मन्यध्यस्यात्माकर्तेतिवदन्तिनसुबुद्धयोविवेकिनः ॥ तथाचसूर्यवदहमपिसाक्षिण्येवनकर्त्रीतिभावः ॥ ६ ॥

अज्ञानभेदतइति ॥ जीवबहुत्ववदीश्वरमूर्तिबहुत्वमपिमायायाभेदान्मायाकल्पितब्रह्मविष्ण्वाद्याकारभेदाद्भवतीतिजीवेश्वरसिद्धिमुपसंहरति । जीवेश्वरविंभागश्चेति ॥ अज्ञानभेदाज्जीवसिद्धिर्मायाभेदादीश्वरसिद्धिरित्यर्थः ॥ ७ ॥ तत्रदृष्टांतमाह । घटाकाशेति ॥ ८ ॥ ईश्वरबहुत्वंब्रह्मविष्ण्वादिरूपेश्वरबहुत्वमित्यर्थः ॥९॥ जीवभेदहेतुंविशदयति । देहेंद्रियादीति॥ ॥ १० ॥ हेधराधरपर्वत । गुणानांयेवासनाभेदाःसात्त्विकाराजसास्तामसाश्चतैर्भेदितायामायासापरभेदस्यब्रह्मविष्ण्वादीश्वरभेदस्यहेतुर्नान्याइत्यर्थः॥इदंमूतसंहितांतर्गतसूतगीतायां स्पष्टम् व्याख्यातंचतत्रमाधवाचार्यैः ॥ ११ ॥ यतएकमेवचैतन्यंसर्वात्मकंततोऽहंसर्वात्मिकास्मीत्याह । मयीति ॥ ओतंप्रोतंग्रथितमित्यर्थः ॥ १२ ॥ ईश्वरःकारणदेहाभिमानी ॥

वदंतिचाऽऽत्माकर्मेतिविमूढानसुबुद्धयः ॥ अज्ञानभेदतस्तद्वन्मायायाभेदतस्तथा ॥ ७ ॥ जीवेश्वरविभागश्चकल्पितोमाययैवतु ॥ घटाकाश महाकाशविभागःकल्पितोयथा ॥८॥ तथैवकल्पितोभेदोजीवात्मपरमात्मनोः ॥ यथाजीवबहुत्वंचमाययैवनचस्वतः ॥ ९ ॥ तथेश्वरबहुत्वं चमाययानस्वभावतः ॥ देहेंद्रियादिसंघातवासनाभेदभेदिता ॥ १० ॥ अविद्याजीवभेदस्यहेतुर्नान्यःप्रकीर्तितः ॥ गुणानांवासनाभेदभेदि तायाधराधर ॥ ११ ॥ मायासापरभेदस्यहेतुर्नान्यःकदाचन ॥ मयिसर्वमिदंप्रोतमोतंचधरणीधर ॥ १२ ॥ ईश्वरोऽहंचसूत्रात्माविराडात्माऽह मस्मिच ॥ ब्रह्माऽहंविष्णुरुद्रौचगौरीब्राह्मीचवैष्णवी ॥ १३ ॥ सूर्योऽहंतारकाश्चाऽहंतारकेशस्तथाऽस्म्यहम् ॥ पशुपक्षिस्वरूपाऽहंचांडालोऽहं चतस्करः ॥ १४ ॥ व्याधोऽहंक्रूरकर्माऽहंसत्कर्माऽहंमहाजनः ॥ स्त्रीपुन्नपुंसकाकारोऽप्यहमेवनसंशयः ॥ १५ ॥ यच्चकिंचित्क्वचिद्वस्तुदृश्यते श्रूयतेऽपिवा ॥ अंतर्बहिश्चतत्सर्वंव्याप्याऽहंसर्वदास्थिता ॥ १६ ॥ नतदस्तिमयात्यक्तंवस्तुकिंचिच्चराचरम् ॥ यद्यस्तिचेत्तच्छून्यंस्याद्वंध्या पुत्रोपमंहितत् ॥ १७ ॥ रज्जुर्यथासर्पमालाभेदैरेकाविभातिहि ॥ तथैवेशादिरूपेणभाम्यहंनात्रसंशयः ॥१८॥ अधिष्ठानातिरेकेणकल्पितंतं नभासते ॥ तस्मान्मत्सत्तयैवैतत्सत्तावन्नान्यथाभवेत् ॥ १९ ॥ हिमालय उवाच ॥ यथावदसिदेवेशिसमष्ट्यात्मवपुस्त्विदम् ॥ तथैवद्रष्टुमि च्छामियदिदेविकृपामयि ॥ २० ॥ व्यासउवाच ॥ इतितस्यवचःश्रुत्वासर्वेदेवाःसविष्णवः ॥ ननंदुर्मुदितात्मानःपूजयंतश्चतद्वचः ॥ २१ ॥ अथदेवमतंज्ञात्वाभक्तकामदुघाशिवा ॥ अदर्शयन्निजंरूपंभक्तकामप्रपूरिणी ॥ २२ ॥ अपश्यंस्तेमहादेव्याविराड्रूपंपरात्परम् ॥ द्यौर्मस्तकं भवेद्यस्यचंद्रसूर्यौचचक्षुषी ॥ २३ ॥ दिशःश्रोत्रेवचोवेदाःप्राणोवायुःप्रकीर्तितः ॥ विश्वंहृदयमित्याहुःपृथिवीजघनंस्मृतम् ॥ २४ ॥

लिंगदेहाभिमानीसूत्रात्माहिरण्यगर्भः ॥ विराट्स्थूलदेहाभिमानी ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ शून्यंस्यादिति ॥ मयासद्रूपयात्यक्तंशून्यमसदेवस्यादित्यर्थः ॥ १७ ॥ १८ ॥ अधिष्ठानातिरेकेणेति ॥ अधिष्ठानसत्तातिरेकेणेत्यर्थः ॥ यतएतत्कल्पितंजगत्तस्मान्मत्सत्तयैवसत्तावद्भवेन्नान्यथेत्यर्थः ॥ १९ ॥ समष्ट्यात्मेति ॥ सर्वाभिमानीविराट्स्वरूपंयथावदसी त्यर्थः ॥ २० ॥ पूजयंश्चेति ॥ सर्वेषांभगवतीविराट्स्वरूपदर्शनोत्सुकत्वात्स्वाभीष्टसंपादनेप्रवृत्तस्यहिमालयस्यतद्वचःसाधुसाध्वितिपूजयंतइत्यर्थः ॥ २१ ॥ २२ ॥ द्यौर्मस्तकमिति ॥ अत्रद्यौःशब्देनसर्वोर्ध्वःसत्यलोकोगृह्यते ॥ २३ ॥ वायुरेवैतस्यप्राणाविश्वंसर्वात्मकमव्यक्तमित्यर्थः ॥ तदस्यरूपस्यहृदयम् ॥ २४ ॥

नभस्तलंभुवर्लोकः ॥ २५ ॥ सत्यलोकादधःस्थितस्तपोलोकोरराटिर्ललाटमित्यर्थः ॥ शब्दःश्रोत्रमिति ॥ योऽस्माकंश्रोत्रविषयःशब्दःसतस्यरूपस्यश्रोत्रंश्रोत्रेंद्रियंभवतीत्यर्थः॥ पूर्वत्र दिशःश्रोत्रेइत्यत्रतुश्रोत्रशब्देनश्रोत्रेंद्रियाधारोगृह्यतइतिनपुनरुक्तिः ॥२६॥ नासत्यदस्रौअश्विनीकुमारौतावस्यरूपस्यनासेनासापुटेस्तः ॥ गंधस्तुघ्राणंघ्राणेंद्रियमित्यर्थः ॥ २७ ॥ ब्रह्म स्थानंप्रजापतिचतुर्मुखस्थानंतदस्यभ्रूविजृंभोभ्रूविकासः ॥ आपोजलानितुतालुःरसनेंद्रियाधारोभवति ॥ तद्गतोरसस्तुजिह्वाभवति ॥ रसनेंद्रियंभवतीत्यर्थः ॥२८॥ स्नेहकलाः स्त्रीपु त्रादिस्नेहलेशाः ॥ सर्गःसृष्टिरेवाऽपांगमोक्षःकटाक्षइत्यर्थः ॥ २९ ॥ अधर्ममार्गस्तुपृष्ठभागइत्यर्थः ॥ ३० ॥ महेशितुर्महेश्वर्यादेव्यागिरयःपर्वताअस्थीनीत्यर्थः ॥ ३१ ॥ कौमारेति त्रिविधंवयोगतिरित्यर्थः ॥३२॥ चंद्रमास्त्विति । तुशब्दोमनइत्यत्रयोज्यः॥ हेराजन्जनमेजय श्रीजगदंबायाश्चंद्रोमनोपिस्मृतइत्यर्थः॥ तेनपूर्वोक्तनेत्रमध्येगणितस्यचंद्रमसोमनस्त्वम

नभस्तलंनाभिसरोज्योतिश्चक्रमुरःस्थलम् ॥ महर्लोकस्तुग्रीवास्याज्जनोलोकोमुखंस्मृतम् ॥२५॥ तपोलोकोरराटिस्तुसत्यलोकादधःस्थितः॥ इंद्रादयोबाहवःस्युःशब्दःश्रोत्रंमहेशितुः ॥ २६ ॥ नासत्यदस्रौनासेस्तोगंधोघ्राणंस्मृतोबुधैः ॥ मुखमग्निःसमाख्यातोदिवारात्रीचपक्ष्मणी ॥ ॥ २७ ॥ ब्रह्मस्थानंभ्रूविजृंभोंऽप्यापस्तालुःप्रकीर्तिताः ॥ रसोजिह्वासमाख्यातायमोदंष्ट्राःप्रकीर्तिताः ॥ २८ ॥ दंताःस्नेहकलायस्यहासोमायाप्रकीर्तिता ॥ सर्गस्त्वपांगमोक्षःस्याद्व्रीडोर्ध्वोष्ठोमहेशितुः ॥ २९ ॥ लोभःस्यादधरोष्ठोऽस्याधर्ममार्गस्तुपृष्ठभूः ॥ प्रजापतिश्चमेढ्रंस्याद्यःस्रष्टाजगतीतले ॥ ३० ॥ कुक्षिःसमुद्रागिरयोऽस्थीनिदेव्यामहेशितुः ॥ नद्योनाड्यःसमाख्यातावृक्षाःकेशाःप्रकीर्तिताः ॥ ३१ ॥ कौमारयौवनजरावयोऽस्यगतिरुत्तमा ॥ बलाहकास्तुकेशाःस्युःसंध्येतेवाससीविभोः ॥ ३२ ॥ राजञ्छ्रीजगदंबायाश्चंद्रमास्तुमनःस्मृतः ॥ विज्ञानशक्तिस्तुहरीरुद्रोंतःकरणंस्मृतम् ॥ ३३ ॥ अश्वाहिजातयःसर्वाःश्रोणिदेशेस्थिताविभोः ॥ अतलादिमहालोकाःकट्यधोभागतांगताः॥ ३४ ॥ एतादृशंमहारूपंददृशुःसुरपुंगवाः ॥ ज्वालामालासहस्राढ्यंलेलिहानंचजिह्वया ॥ ३५ ॥ दंष्ट्राकटकटारावंवमंतंवह्निमक्षिभिः ॥ नानायुधधरंवीरंब्रह्मक्षत्रौदनंचयत्॥ ३६ ॥ सहस्रशीर्षनयनंसहस्रचरणंतथा ॥ कोटिसूर्यप्रतीकाशंविद्युत्कोटिसमप्रभम् ॥ ३७ ॥ भयंकरंमहाघोरंहृदक्ष्णोस्त्रासकारकम् ॥ ददृशुस्तेसुराःसर्वेहाहाकारंचचक्रिरे॥३८॥विकंपमानहृदयामूर्च्छामापुर्दुरत्ययाम्॥स्मरणंचगतंतेषांजगदंबेयमित्यपि॥३९॥

पिबोधितमितिबोध्यम् ॥ विज्ञानशक्तिर्बुद्धिःसाहरिः ॥ ३३ ॥ अतलादीति ॥ अतलादिपातालांतालोकायथायोग्यंकट्यधोभागतांगताः ॥ कटिमारभ्यपादमूलपर्यंतंव्यवस्थित इत्यर्थः ॥ तथाचश्रुतिः अग्निर्मूर्धाचक्षुषीचंद्रसूर्यौदिशःश्रोत्रेवाग्विवृताश्चवेदाः ॥ वायुःप्राणोहृदयंविश्वमस्यपद्भ्यांपृथिवीह्येषसर्वभूतांतरात्मेति ॥ ३४ ॥ जिह्वयासर्वंजगल्लेलिहानं स्वादयंतम् ॥ ३५ ॥ दंष्ट्रासुकटकटारावःकटकटेतिशब्दोयस्य ब्रह्मक्षत्त्रेओदनोयस्य ॥ यस्यब्रह्मक्षत्त्रंचोभेभवतओदनोमृत्युर्यस्योपसेचनमितिश्रुतेः ॥ ३६ ॥ ३७ ॥ हाहाकारंभये नभीतत्वाच्चक्रिरेइत्यर्थः ॥ ३८ ॥ स्मरणंचगतमिति ॥ इयंजगदंबाऽस्माकंपालयित्रीतिस्मरणमपितेषांगतंनष्टमित्यर्थः ॥ ३९ ॥

अथतइति ॥ विभोर्देव्याश्चतुर्दिक्षुयेमूर्तिमंतोवेदाःस्थितास्तेमूर्च्छितान्देवान्मूर्च्छातोबोधयामासुर्व्युत्थापयामासुरित्यर्थः ॥ ४० ॥ ४१ ॥ ४२ ॥ सभयाजाताःस्मइत्यर्थः ॥ ४३ ॥
स्वस्याप्यज्ञेयइति ॥ यावान्यत्परिमाणवान्यश्चयादृशस्तवस्वपराक्रमःसतवस्वस्याप्यज्ञेयएवैतादृशोसौतवपराक्रमोऽस्माकंतदर्वाक्जायमानानांकथंसविषयोभवेन्नकथमपीत्यर्थः ॥
तथाच श्रुतिः अर्वाग्देवाअस्यविसर्जनेनाथाःकोवेदयतआबभूवेति ॥ योअस्याध्यक्षःपरमेव्योमन्सोअंगवेदयतिवानवेदेति ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ यस्मात्संभूतोविधिरितिक
र्तव्यतारूपस्तस्मैनमइत्यन्वयः ॥ ४८ ॥ ससप्तप्राणार्चिषइति ॥ प्राणाश्चार्चिषश्चेतिद्वंद्वः ॥ सप्तशीर्षण्याःप्राणास्तस्मादेवभवंतीत्यर्थः ॥ तेषांचसप्तार्चिषोदीप्तयःस्वस्वविषयावद्योत

अथतेयेस्थितावेदाश्चतुर्दिक्षुमहाविभोः॥बोधयामासुरत्युग्रंमूर्छांतोमूर्च्छितान्सुरान्॥४०॥अथतेधैर्यमालंब्यलब्ध्वाचश्रुतिमुत्तमाम् ॥ प्रेमाश्रुपू
र्णनयनारुद्धकंठास्तुनिर्जराः॥४१॥बाष्पगद्गदयावाचास्तोतुंसमुपचक्रिरे॥देवाऊचुः॥अपराधंक्षमस्वांबपाहिदीनांस्त्वदुद्भवान्॥४२॥कोपंसंहर
देवेशिसभयारूपदर्शनात्॥कातेस्तुतिःप्रकर्तव्यापामरैर्निर्जरैरिह॥४३॥स्वस्याप्यज्ञेयएवाऽसौयावान्यश्चस्वविक्रमः॥ तदर्वाग्जायमानानांक
थंसविषयोभवेत्॥४४॥नमस्तेभुवनेशानिनमस्तेप्रणवात्मिके।सर्ववेदान्तसंसिद्धेनमोह्रींकारमूर्तये॥४५॥यस्मादग्निःसमुत्पन्नोयस्मात्सूर्यश्चचंद्र
माः॥यस्मादोषधयःसर्वास्तस्मैसर्वात्मनेनमः॥४६॥यस्माच्चदेवाःसंभूताःसाध्याःपक्षिणएवच॥पशवश्चमनुष्याश्चतस्मैसर्वात्मनेनमः॥४७॥प्रा
णापानौव्रीहियवौतपःश्रद्धाऋतंतथा॥ब्रह्मचर्यंविधिश्चैवयस्मात्तस्मैनमोनमः॥४८॥ सप्तप्राणार्चिषोयस्मात्समिधःसप्तएवच ॥ होमाःसप्ततथा
लोकास्तस्मैसर्वात्मनेनमः॥४९॥यस्मात्समुद्रागिरयःसिंधवःप्रचरंतिच॥यस्मादोषधयःसर्वारसास्तस्मैनमोनमः॥५०॥ यस्माद्यज्ञःसमुद्भूतो
दीक्षायूपश्चदक्षिणाः॥ऋचोयजूंषिसामानितस्मैसर्वात्मनेनमः॥५१॥नमःपुरुस्तात्पृष्ठेचनमस्तेपार्श्वयोर्द्वयोः॥ अधऊर्ध्वंचतुर्दिक्षुमातर्भूयोनमो
नमः॥५२॥उपसंहरदेवेशिरूपमेतदलौकिकम्॥तदेवदर्शयाऽस्माकंरूपंसुंदरसुन्दरम् ॥५३॥ व्यासउवाच॥इतिभीतान्सुरान्दृष्ट्वाजगदंबाकृपार्ण
वा॥संहृत्यरूपंघोरंतद्दर्शयामाससुंदरम्॥५४॥पाशांकुशवराभीतिधरंसर्वांगकोमलम्॥ करुणापूर्णनयनंमंदस्मितमुखांबुजम्॥५५॥दृष्ट्वातत्सुंदरं
रूपंतदाभीतिविवर्जिताः॥शांतचित्ताःप्रणेमुस्तेहर्षगद्गदनिःस्वनाः॥५६॥इतिश्रीदेवी० महापुराणेसप्तमस्कंधेदेवीगीतायांत्रयस्त्रिंशोध्यायः ३३॥

नानि ॥ तथासप्तसमिधः ॥ सप्तविषयाविषयैर्हिप्राणाः समिध्यंते॥सप्तहोमास्तद्विषयविज्ञानानि ॥ यदस्यविज्ञानंतज्जुहोतीतिश्रुत्यंतरात् ॥ तथासप्तलोकाइंद्रियस्थानानि ॥ एतेयस्मा
ज्जातास्तस्मैसर्वात्मनेनमः ॥ तथाचश्रुतिर्मुंडके ॥ यस्मादग्निःसमिधोयस्यसूर्यः ॥ सोमात्पर्जन्यओषधयःप्रजानामित्यादि तस्मादृचःसामयजूंषिदीक्षायज्ञाश्चसर्वेक्रतवोदक्षिणाश्च
संवत्सरोयजमानश्चलोकाःसोमोयत्रपवतेयत्रसूर्यइति ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ इतिश्रीदेवीभागवततिलकेसप्तमस्कंधेदेवीगीतायांत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

पंचाशत्पद्यवर्यैस्तुवैराग्यकथनोत्तरम् ॥ ज्ञानमेवतुसंपाद्यंमोक्षार्थमितिकथ्यते ॥ १ ॥ दर्शितंविश्वरूपमनायासेनलब्धमस्माभिरितिसहजमस्तीतिनमंतव्यमितिदेवान्प्रतिभगवतीप्राह । क्वयूयमिति ॥ १ ॥ २ ॥ प्रकृतमिति ॥ ब्रह्मविद्योपदेशप्रकरणंहिप्रचालितं पूर्वमध्येदेवैर्विश्वरूपदर्शनार्थंप्रार्थितासतीविश्वरूपंदर्शयामास ॥ उपसंहृतेतुविश्वरूपेपुनःप्रकृतंयद्रुपदेश प्रकरणंतच्छृण्वितिहिमालयंप्रतिभगवतीवदतीतिबोध्यम् ॥ परमात्मात्रजीवतामिति॥अमूढोमूढइवव्यवहरन्नास्तेमाययैवेतिश्रुतेरित्यर्थः॥३॥ वैराग्यार्थमाह । क्रियाःकरोतीति ॥४॥ तत्संस्कृतिःसुखदुःखसंस्कारः ॥५ ॥ एतस्येति ॥ एतस्यजन्ममरणप्रबंधरूपस्यसंसारस्याविरामःसमाप्तिःकदापिनास्ति ॥ अद्यपर्यंतमनंतसृष्टिप्रलयेषुजातेष्वपिजीवसंसारस्यविद्यमान त्वात् ॥ इत्थंसंसारस्याऽनादिकालप्रवृत्तत्वमुपपाद्यतन्नाशोपायप्रदर्शनार्थंतन्निदानमाह ॥ अज्ञानमेवेति ॥ ततःकामोऽविद्यातइच्छेत्यर्थः । इच्छातःक्रियाभवतीत्यर्थः ॥ ६ ॥ यस्मा दज्ञानमेवमूलंतस्मादित्यर्थः ॥ एतद्धिजन्मेति ॥ तथाचश्रुतिः ॥ योह्यविदित्वात्मानमस्माल्लोकात्प्रैतिसकृपणइति ॥७॥अज्ञाननाशनसाधनमाह ॥ विद्यैवेति॥८॥ तज्जन्मज्ञानजंकर्म नपटीयइत्यर्थः ॥ तत्रहेतुमाह । विरोधाभावतइति ॥ नह्यंधकारोंधकारंनाशयति तद्वदज्ञानजन्यकर्मणोप्यज्ञानरूपत्वान्नतेनाऽज्ञानेनकर्मणाविरोधइत्यर्थः । कर्मणाज्ञाननाशेआशानैव

**श्रीदेव्युवाच॥क्वयूयंमंदभाग्यावैक्वेदंरूपंमहाद्भुतम्॥तथापिभक्तवात्सल्यादीदृशंदर्शितंमया॥१॥ नवेदाध्ययनैर्योगैर्नदानैस्तपसेज्यया॥रूपंद्रष्टु मिदंशक्यंकेवलंमत्कृपांविना॥२॥प्रकृतंशृणुराजेंद्रपरमात्माऽत्रजीवताम्॥उपाधियोगात्संप्राप्तःकर्तृत्वादिकमप्युत॥३॥ क्रियाःकरोतिविविधा धर्माधर्मैकहेतवः॥नानायोनीस्ततःप्राप्यसुखदुःखैश्चयुज्यते ॥४॥ पुनस्तत्संस्कृतिवशान्नानाकर्मरतःसदा॥नानादेहान्समाप्नोतिसुखदुःखैश्चयु ज्यते ॥ ५ ॥ घटीयंत्रवदेतस्यनविरामःकदापिहि ॥ अज्ञानमेवमूलंस्यात्ततः कामःक्रियास्ततः ॥ ६ ॥ तस्मादज्ञाननाशाययतेतनियतंन रः ॥ एतद्धिजन्मसाफल्यंयदज्ञानस्यनाशनम् ॥ ७ ॥ पुरुषार्थसमाप्तिश्चजीवन्मुक्तदशापिच ॥ अज्ञाननाशनेशक्ताविद्यैवतुपटीयसी ॥ ८ ॥ नकर्मतज्जन्नोपास्तिर्विरोधाभावतोगिरे ॥ प्रत्युताशाज्ञाननाशेकर्मणानैवभाव्यताम्॥९॥ अनर्थदानिकर्माणिपुनःपुनरुशंतिहि ॥ ततोरागस्त तोदोषस्ततोनर्थोमहान्भवेत् ॥ १० ॥ तस्मात्सर्वप्रयत्नेनज्ञानंसंपादयेन्नरः ॥ कुर्वन्नेवेहकर्माणीत्यतःकर्माण्यवश्यकम् ॥ ११ ॥ ज्ञानादेवहि कैवल्यमतःस्यात्तत्समुच्चयः ॥ सहायतांव्रजेत्कर्मज्ञानस्यहितकारिच ॥१२॥ इतिकेचिद्वदंत्यत्रतद्विरोधान्नसंभवेत् ॥ ज्ञानाद्धृद्ग्रंथिभेदःस्याद्धृ द्ग्रंथौकर्मसंभवः ॥ १३ ॥**

भाव्यतांनैवकर्तव्येत्यर्थः ॥ ९ ॥ कर्मणिदोषंवदति । अनर्थदानीति ॥ १० ॥ अत्रसमुच्चयवादिमतमुत्थापयति॥कुर्वन्नेवेहेति ॥ कुर्वन्नेवेहकर्माणिजिजीविषेच्छतंसमाइतिश्रुत्यायाव जीवंकर्मविहितम् ॥ ज्ञानादेवहिकैवल्यमितिश्रुत्याज्ञानमपिसंपाद्यत्वेनोक्तं तत्रयावज्जीवश्रुतेः संकोचेप्रमाणाभावाज्ज्ञानंकर्मचसमुच्चयेनयावज्जीवंपुरुषेणाश्रयणीयमित्यर्थः ॥ ११ ॥ नन्वज्ञाननाशेज्ञानस्यैवोपयोगात्कर्मकिंकरिष्यतीतिचेत्तत्राह । सहायतामिति ॥ ज्ञानस्यसहायंभविष्यतिकर्मेत्यर्थः ॥ १२ ॥ तस्माद्यावज्जीवंकर्मज्ञानंचाऽऽश्रयणीयमितिमतंकेचिदाहु रित्याह । इतिकेचिदिति ॥ तत्खंडयति । तद्विरोधादिति॥ यदिज्ञानोत्तरंकर्मसंभवेत्तदाज्ञानकर्मणोःसमुच्चयोवक्तव्यः॥ सतुनैवसंभवति॥तस्माद्यावज्जीवश्रुतेःसंकोचोज्ञानेनसहावस्था नविरोधाद्गलेपतितइत्यर्थः ॥ ननुकिमितिकर्मणोज्ञानेनसहावस्थानंसंभवतितत्राह । ज्ञानाद्धृद्ग्रंथीति॥ हृदयस्यग्रंथिरंतःकरणात्मदेहतादात्म्यरूपः ॥ तस्याज्ञानेनात्मसाक्षात्कारेणभेदो नाशःस्यात्तस्मिंश्चहृद्ग्रंथौमनुष्योऽहंब्राह्मणोहंपरलोकेच्छावानहमित्यादिरूपेसत्येवकर्मसंभवः तादृशमधिकारिणमुद्दिश्यैवकर्मविधानात्॥तस्मात्तयोर्नैकत्रावस्थानंसंभवतीत्यर्थः ॥१३॥

तदेवदृष्टांतपुरःसरंस्पष्टयति यौगपद्यमिति ॥ ततस्तस्माद्धतोस्तयोर्ज्ञानकर्मणोस्तम ःप्रकाशयोरिवविरोधाद्यौगपद्यंनसंभवतीतियावज्जीवश्रुतिरज्ञानिविषयिकैवेतिभावः ॥ १४ ॥ तर्हि कियत्पर्यंतंवैदिककर्ममर्यादेतिचेत्तत्राह । तस्मात्सर्वाणीति ॥ यथाज्ञानेनसहविरोधाद्यावज्जीवश्रुतेःसंकोचस्तथाज्ञानांगेनसहाऽपिविरोधात्तस्याःश्रुतेर्यावद्वैराग्यादिप्राप्तिपर्यंतमितिसं कोचः कर्तव्यः ॥ तथाचचित्तशुद्धयंतमेवकर्माणि हे महामते सिद्धानि तानिप्रयत्नतोऽतियत्नेनश्रद्धादिपुरःसरंचित्तशुद्धिपर्यंतंकुर्यादित्यर्थः ॥ १५॥ तस्यैवमर्यादामाह । शमइति ॥ शमोंतरिंद्रियनिग्रहः ॥ दमोबाह्येंद्रियनिग्रहः ॥ तितिक्षाशीतोष्णादिसहिष्णुत्वम् ॥ वैराग्यमिहामुत्रफलभोगविरागः ॥ सत्त्वसंभवोंतःकरणगतसत्त्वस्यशुद्धिः ॥ एतत्सिद्धिपर्यंतमे वकर्माणिनततःपरमित्यर्थः ॥ १६ ॥ तदंतेकर्मत्यागस्तुसंन्यासेनैवकर्तव्योनान्यथेत्याह । तदंतचैवेति ॥ संन्यस्यसंन्यासाश्रमंगृहीत्वेत्यर्थः ॥ विधिनासंपादितकर्मणोविधिनैवत्याग स्ययुक्तत्वादितिभावः॥संन्यस्यश्रवणंकुर्यादितिवाक्यात्संन्यासोत्तरंश्रवणार्थंगुरुमाश्रयेत् ॥ आत्मवान्स्वाधीनांतःकरणइत्यर्थः॥ श्रोत्रियमधीतवेदवेदार्थम्॥ब्रह्मनिष्ठंब्रह्मानुभविनम् ॥ निर्व्याजयानिष्कपटयाभक्त्या ॥ तथाचश्रुतिः ॥ यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ ॥ तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनइति ॥ १७ ॥ गुरुमाश्रित्यवेदांतश्रवणंनित्यमतंद्रितो नामालस्यादिदोषशून्यःकुर्यादित्याह । वेदांतश्रवणमिति ॥ १८ ॥ किंतद्वाक्यविचारेणफलंभवतितत्राह । तत्त्वमस्यादीति ॥ मद्रूपोहीति ॥ब्रह्मविद्ब्रह्मैवभवतीतिश्रुतेरित्यर्थः॥ १९॥

**यौगपद्यंनसंभाव्यंविरोधात्तुततस्तयोः ॥ तमःप्रकाशयोर्यद्वद्यौगपद्यंनसंभवि ॥ १४ ॥ तस्मात्सर्वाणिकर्माणिवैदिकानिमहामते ॥ चित्तशुद्धयंतमेवस्युस्तानिकुर्यात्प्रयत्नतः ॥ १५ ॥ शमोदमस्तितिक्षाचवैराग्यंसत्त्वसंभवः॥ तावत्पर्यंतमेवस्युःकर्माणिनततःपरम् ॥ १६ ॥ तदंतेचैवसंन्यस्यसंश्रयेद्गुरुमात्मवान् ॥ श्रोत्रियंब्रह्मनिष्ठंचभक्त्यानिर्व्याजयापुनः ॥ १७ ॥ वेदांतश्रवणंकुर्यान्नित्यमेवमतंद्रितः ॥ तत्त्वमस्यादिवाक्यस्यनित्यमर्थंविचारयेत् ॥ १८ ॥ तत्त्वमस्यादिवाक्यंतुजीवब्रह्मैक्यबोधकम् ॥ ऐक्येज्ञातेनिर्भयस्तुमद्रूपोहिप्रजायते ॥ १९ ॥ पदार्थावगतिःपूर्वंवाक्यार्थावगतिस्ततः ॥ तत्पदस्यचवाच्यार्थोगिरेऽहंपरिकीर्तितः ॥ २० ॥ त्वंपदस्यचवाच्यार्थोजीवएवनसंशयः ॥ उभयोरैक्यमसिनापदेनप्रोच्यतेबुधैः ॥ २१ ॥ वाच्यार्थयोर्विरुद्धत्वादैक्यंनैवघटेतह ॥ लक्षणाऽतःप्रकर्तव्यातत्त्वमोःश्रुतिसंस्थयोः ॥२२॥ चिन्मात्रंतुतयोर्लक्ष्यंतयोरैक्यस्यसंभवः ॥ तयोरैक्यंतथाज्ञात्वास्वाभेदेनाद्वयोभवेत् ॥ २३ ॥**

कथंवाक्यंविचारणीयमितिचेत्तत्राह।पदार्थावगतिरिति॥वाक्यार्थज्ञानंप्रतिपदार्थज्ञानस्यकारणत्वात्पूर्वंपदपदार्थंज्ञात्वावाक्यार्थंविचारयेदित्यर्थः॥तर्हिकोऽसावत्रपदार्थस्तत्राह । तत्पद स्येति॥हेगिरेपर्वततत्त्वमसीतिवाक्यस्थंयत्तत्पदंतस्यार्थोऽहंसर्वेश्वरीपरिकीर्तितः॥तत्पदंभुवनेश्वर्याः॥षड्गुणैश्वर्यसंपन्नायाममवाचकमित्यर्थः॥२०॥त्वंपदंतुजीववाचकमित्याह । त्वंपद स्येति॥उभयोर्जीवेश्वरयोरैक्यमसिपदेनोच्यतइत्याह।उभयोरिति॥२१॥ननुजीवेश्वरयोरत्यंतविरुद्धधर्मवतोःकथंश्रुत्याऽभेदःप्रतिपाद्यतेइतिचेद्भागलक्षणयेत्याह ।वाच्यार्थयोरिति ॥ वा च्यार्थयोर्जीवेश्वरयोर्विरुद्धधर्मवत्त्वादित्यर्थः॥ जीवस्यासर्वज्ञत्वपरिच्छिन्नत्वादयोनिकृष्टधर्माःईश्वरस्यसर्वज्ञत्वव्यापकत्वादयउत्कृष्टधर्माःतथाचविरुद्धधर्मविशिष्टयोस्तयोरैक्यमभेदोनैव घटेतहइदंसत्यमित्यर्थः॥तर्हिकथमभेदःप्रतिपाद्यतइतिचेत्तत्राह। लक्षणातइति॥यतोविरुद्धयोरैक्यंनघटतेतस्माच्छ्रुतिस्थयोस्तत्त्वमोस्तत्त्वंपदयोर्लक्षणाकर्तव्येत्यर्थः॥२२॥ ननुकस्मिन्नर्थे लक्षणाकर्तव्यातत्राह।चिन्मात्रंत्विति॥सर्वज्ञत्वादिविशिष्टंब्रह्मचैतन्यमीश्वरः॥असर्वज्ञत्वादिविशिष्टंब्रह्मचैतन्यंजीवः॥तत्रधर्मद्वयंविहायचिन्मात्रमेवभागत्यागलक्षणयाग्राह्यम्॥ तस्मि न्गृहीतेतयोर्लक्षणार्थयोरैक्यस्यसंभवोऽस्तीत्यर्थः॥ननुतादृशाभेदज्ञानेनकिंभविष्यतितत्राह।तयोरिति ॥ स्वाभेदेनतयोरैक्यंज्ञात्वाऽद्वयोभवेदिदंमहाफलमस्तीतिभावः ॥ २३ ॥

ननुलोकेभागत्यागलक्षणाक्वदृष्टेतिचेत्तत्राह । देवदत्तःसएवेति ॥ सोऽयंदेवदत्तइत्यत्रतत्कालविशिष्टदेवदत्तस्यैतत्कालविशिष्टदेवदत्तस्यभेदेपितत्कालवैशिष्ट्यैतत्कालवैशिष्ट्यरूपधर्मद्वय त्यागेनाऽविरुद्धांव्यक्तिंभागत्यागलक्षणयागृहीत्वाभेदप्रत्यभिज्ञाक्रियतेइतितत्रलक्षणास्मृतादृष्टेत्यर्थः ॥ अनेनानुभवेनस्थूलादिदेहत्रयरहितोभवतीत्याह । स्थूलादीति ॥ २४ ॥ देहत्रयं स्पष्टयति । पंचीकृतेति ॥२५॥ मिथ्यात्वेहेतुः। मायामयत्वतइति ॥ २६ ॥ २७ ॥ अंतःकरणेसुखदुःखादेरवबोधकइत्युक्तम् ॥ २८ ॥ २९ ॥ देहत्रयइति ॥ स्थूलसूक्ष्मकारणदेहत्र यमध्येएवंपंचकोशाअन्नमयप्राणमयमनोमयविज्ञानमयानंदमयाख्याअंतर्भूताभवंतीत्यर्थः ॥३०॥ ततश्चदेहत्रयत्यागेनपंचकोशत्यागेसतिब्रह्मपुच्छंप्रतिष्ठेतिश्रुत्युक्तंवस्तुलभ्यतइत्यर्थः॥ तदेवब्रह्मनेतिनेतीत्यादिवाक्यैःसर्वनिषेधावधित्वेनोच्यतइत्यर्थः ॥ ३१ ॥ इदंयद्ब्रह्मरूपंतन्नजायतेनोत्पद्यते ॥ नवाम्रियते तथाऽयमात्माभूत्वानबभूव ॥ किंतुअनुत्पन्नोनिरंतरंबभूवे त्यर्थः ॥ तत्रहेतुरजोनित्यइत्यादिः ॥ विकारत्रयनिषेधेनषड्भावविकाराअपिप्रत्याख्यातावेदितव्याः॥ ३२ ॥ ३३ ॥ अणोरिति ॥ अणुतोप्यणुतरः ॥ महतोव्योमादेरपिमहत्तरः ॥

देवदत्तःसएवाऽयमितिवल्लक्षणास्मृता ॥ स्थूलादिदेहरहितोब्रह्मसंपद्यतेनरः ॥ २४॥ पंचीकृतमहाभूतसंभूतःस्थूलदेहकः ॥ भोगालयोजराव्याधिसंयुतःसर्वकर्मणाम् ॥ २५ ॥ मिथ्याभूतोऽयमाभातिस्फुटंमायामयत्वतः ॥ सोऽयंस्थूलउपाधिःस्यादात्मनोमेनगेश्वर ॥ २६ ॥ ज्ञानकर्मेंद्रिययुतंप्राणपंचकसंयुतम् ॥ मनोबुद्धियुतंचैतत्सूक्ष्मंतत्कवयोविदुः ॥ २७ ॥ अपंचीकृतभूतोत्थंसूक्ष्मदेहोऽयमात्मनः॥ द्वितीयोऽयमुपाधिःस्यात्सुखादेरवबोधकः ॥ २८ ॥ अनाद्यनिर्वाच्यमिदमज्ञानंतुतृतीयकः ॥ देहोऽयमात्मनोभातिकारणात्मानगेश्वर ॥ २९॥ उपाधिविलये जातेकेवलात्मावशिष्यते ॥ देहत्रयेपंचकोशाअंतःस्थाःसंतिसर्वदा ॥ ३० ॥ पंचकोशपरित्यागेब्रह्मपुच्छंहिलभ्यते ॥ नेतिनेतीत्यादिवाक्यैर्मम रूपंयदुच्यते ॥ ३१ ॥ नजायतेम्रियतेतत्कदाचिन्नाऽयंभूत्वानबभूवकश्चित्॥अजोनित्यःशाश्वतोऽयंपुराणोनहन्यतेहन्यमानेशरीरे ॥३२॥ ॥ हतंचेन्मन्यतेहंतुंहतश्चेन्मन्यतेहतम् ॥ उभौतौनविजानीतोनाऽयंहंतिनहन्यते ॥३३॥ अणोरणीयान्महतोमहीयानात्मास्यजंतोर्निहितोगुहायाम् ॥ तमक्रतुःपश्यतिवीतशोकोधातुःप्रसादान्महिमानमस्य ॥३४॥ आत्मानंरथिनंविद्धिशरीरंरथमेवतु ॥ बुद्धिंतुसारथिंविद्धिमनःप्रग्रहमेवच ॥ ३५ ॥ इंद्रियाणिहयानाहुर्विषयांस्तेषुगोचरान् ॥ आत्मेंद्रियमनोयुक्तंभोक्तेत्याहुर्मनीषिणः ॥३६॥ यस्त्वविद्वान्भवतिचाऽमनस्कश्चसदाऽशुचिः ॥ नतत्पदमवाप्नोतिसंसारंचाधिगच्छति ॥ ३७ ॥

गुहायांबुद्धौनिहितःस्थापितस्तत्राऽनुभवात्॥अस्यात्मनोमहिमानंतंधातुःप्रसादाच्चित्तप्रसादादक्रतुःसंकल्पविकल्परहितःपश्यति ॥ ततोवीतशोकोभवतीत्यर्थः ॥ ३४ ॥ अथकठवल्ल्युक्तरथरूपकल्पनामाह । आत्मानमिति॥रथिनंरथस्वामिनमात्मानंविद्धि शरीरमेवरथंविद्धिमनःप्रग्रहमश्वाकर्षणरज्जुभूतंविद्धि ॥ ३५ ॥ इंद्रियाण्येवहयास्तस्मिन्रथेविद्वांसआहुः ॥ गोचरान्गंतव्यमार्गान्विषयानाहुर्विषयेष्वेवानिरंतरमस्यगमनात्॥ रथिनःपूर्वोक्तस्यविशिष्टरूपमाह । आत्मेन्द्रियेति॥आत्मचिदाभासःइंद्रियाणिमनश्चेत्येतत्त्रितयविशिष्टंकूटस्थमितिशेषः ॥ अर्थात्तंतादृशंकूटस्थंभोक्तेत्याहुर्भोक्तारंरथिनमाहुरित्यर्थः ॥ इतिशब्देनकर्मत्वस्याभिधानाद्द्वितीयाभावः ॥ ३६ ॥ एवंसतियस्तुपुरुषोऽविद्वानविवेकीभवति अमनस्कोऽस्वाधीनमनाश्चभवतिसदाऽशुचिश्चसत्कर्मरहितइत्यर्थः ॥ सपुरुषोनतत्पदंपरमात्मपदंप्राप्नोति किंतर्हिसंसारंचाऽधिगच्छतिसंसारंप्रत्येवगच्छतीत्यर्थः ॥ ३७ ॥

यस्तुतद्विपरीतोभवतितत्राह । यस्त्विति ॥ यस्माद्भूयोनजायतेतत्पदमित्यर्थः ॥ ३८ ॥ किंतत्पदंतदाह । विज्ञानसारथिरिति ॥ मदीयंयत्परमंपदम् ॥ पद्यतेज्ञानिभिःप्राप्यतेयन्म
दीयंपरमंरूपंसच्चिदानंदघनंतत्परमंपदमित्यर्थः ॥ ३९ ॥ उपसंहरति । इत्थमिति ॥ श्रुत्यावेदांतश्रवणेन ॥ मत्याश्रुतस्यमननेननिश्चित्यसंशयविपर्यासरहितंपरोक्षतोज्ञात्वासाक्षा
त्कारार्थमात्मनांतःकरणेनाऽऽत्मरूपांमांनिदिध्यासनतएकाग्रचित्तवृत्त्याभावयेदित्यन्वयः ॥ ४० ॥ इत्थंनिदिध्यासनाभ्यासेनयदासमाधियोग्यताचित्तस्यभवतितदासमाधेःपूर्वमित्थं
ध्यानंकृत्वासमाधिंकुर्यादित्याह । योगवृत्तेरिति ॥ समाधिवृत्तेःपुरापूर्वंस्वस्मिन्स्वशरीरेदेवीप्रणवसंज्ञस्यमायाबीजमंत्रस्याऽक्षरत्रयंवक्ष्यमाणंभावयेत् मंत्रवाच्ययोर्मायाबीजमंत्रार्थयोः
समष्टिव्यष्टयोर्ध्यानार्थमित्यर्थः ॥ ४१ ॥ तदेवाक्षरत्रयंतद्देवताभावनास्थानानिचाह । हकारइति ॥ कारणात्माकारणदेहरूपईकारइत्यर्थः ॥ ह्रींकारोऽहंतुरीयकम् ॥ अहंयत्तुरीयकं
तद्ह्रींकारवाच्यमित्यर्थ इतिदेवीवाक्यमेतत् ॥ तुरीयस्यवाचकोह्रींकारइतियावत् ॥ ४२ ॥ यथाव्यष्टिदेहेऽक्षरत्रयभावनाकृतातथैवसमष्टिदेहेऽपिकर्तव्येत्याह । एवंसमष्टीति ॥ अक्षर

यस्तुविज्ञानवान्भवतिसमनस्कःसदाशुचिः ॥ सतुतत्पदमाप्नोतियस्माद्भूयोनजायते ॥ ३८ ॥ विज्ञानसारथिर्यस्तुमनः प्रग्रहवान्नरः ॥ सो
ध्वनःपारमाप्नोतिमदीयंयत्परंपदम् ॥ ३९ ॥ इत्थंश्रुत्याचमत्याचनिश्चित्यात्मानमात्मना ॥ भावयेन्मामात्मरूपांनिदिध्यासनोतोपिच ॥
४० ॥ योगवृत्तेःपुरास्वस्मिन्भावयेदक्षरत्रयम् ॥ देवीप्रणवसंज्ञस्यध्यानार्थंमंत्रवाच्ययोः ॥ ४१ ॥ हकारःस्थूलदेहःस्याद्रकारः सूक्ष्म
देहकः॥ ईकारःकारणात्मासौह्रींकारोहंतुरीयकम् ॥ ४२ ॥ एवंसमष्टिदेहेऽपिज्ञात्वाबीजत्रयंक्रमात्॥ समष्टिव्यष्टयोरेकत्वंभावयेन्मतिमान्नरः
॥ ४३ ॥ समाधिकालात्पूर्वंतुभावयित्वैवमादृतः ॥ ततोध्यायेन्निलीनाक्षोदेवींमांजगदीश्वरीम् ॥ ४४ ॥ प्राणापानौसमौकृत्वानासाभ्यंतर
चारिणौ ॥ निवृत्तविषयाकांक्षोवीतदोषोविमत्सरः ॥ ४५ ॥ भक्त्यानिर्व्याजयायुक्तोगुहायांनिःस्वनेस्थले ॥ हकारंविश्वमात्मानंरकारेप्रवि
लापयेत् ॥ ४६ ॥ रकारंतैजसंदेवमीकारेप्रविलापयेत् ॥ ईकारंप्राज्ञमात्मानंह्रींकारेप्रविलापयेत् ॥ ४७ ॥ वाच्यवाचकताहीनंद्वैतभावविव
र्जितम् ॥ अखंडंसच्चिदानंदंभावयेत्तच्छिखांतरे ॥ ४८ ॥ इतिध्यानेनमांराजन्साक्षात्कृत्यनरोत्तमः ॥ मद्रूपएवभवतिद्वयोरप्येकतायतः
॥ ४९ ॥ योगयुक्त्याऽनयादृष्ट्वामामात्मानंपरात्परम् ॥ अज्ञानस्यसकार्यस्यतत्क्षणेनाशकोभवेत् ॥ ५० ॥ इतिश्रीदेवीभागवतेमहापुराणेस
प्तमस्कंधेदेवीगीतायांचतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

त्रयभावनांकृत्वासमष्टिव्यष्टयोःपिंडब्रह्मांडयोरेकत्वन्यायेनैकत्वंभावयेदित्याह ॥ समष्टिव्यष्टयोरिति ॥ ४३ ॥ इत्थंप्रथमतोभावनांकृत्वाततोदेवींध्यायेदित्याह । समाधीति ॥ ४४ ॥
समाधिसामग्रीमाह । प्राणापानाविति ॥ समौकृत्वाप्राणायामाभ्यासेनेत्यर्थः ॥ ४५ ॥ विलापनप्रकारमाह । हकारंविश्वमिति । विश्वंवैश्वानरात्मकमित्यर्थः ॥ विश्वशब्दस्यवैश्वान
रोपलक्षणत्वात् ॥ एवमुत्तरत्रापि॥रकारेइति ॥ रकारवाच्यसूक्ष्मदेहेहकारवाच्यंस्थूलदेहंविलापयेदित्यर्थः॥४६॥ ईकारेतद्वाच्येकारणदेहेसूक्ष्मदेहंविलापयेदित्यर्थः ॥ ह्रींकारेह्रींकारवा
च्येब्रह्मणिईकारवाच्यंकारणदेहंविलापयेदित्यर्थः ॥ ४७ ॥ तच्छिखांतरेचैतन्याग्निदीपशिखांतरेइत्यर्थः ॥ तथाचश्रुतिः ॥ तस्याःशिखायामध्येपरमात्माव्यवस्थितइति ॥ ४८ ॥
एवंध्यानेनसाक्षात्कारोभवतिनेनचमद्रूपएवभवतीत्याह । इतिध्यानेनेति ॥ ४९ ॥ दृष्ट्वानाशकोभवेदित्यन्वयः विस्तरस्तुमत्कृतदेवीगीताबृहट्टीकायांद्रष्टव्यः ॥ ५० ॥ इतिश्रीदेवीभा
गवततिलकेसप्तमस्कंधेचतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

अर्धाधिकद्विषष्ट्या तु श्लोकानामत्र सादरम् ॥ योगस्य मंत्रसिद्धेश्च साधनं सम्यगुच्यते ॥ १ ॥ पूर्वाध्यायांते योगयुक्त्याऽनया दृष्ट्वा मामात्मानं परात्परमिति वाक्येनात्मदर्शने योगस्य साधनत्व
मुक्तं तत्र कीदृशो योग इति पृच्छति । योगं वदेति ॥ संवित्प्रदायकं ब्रह्माकारसंवित्साधनमित्यर्थः ॥ १ ॥ ऐक्यमिति ॥ जीवात्मनोरैक्यमभेदविषयकवृत्तिर्या सा योगशब्देनोच्यत इत्यर्थः
॥ २ ॥ तत्प्रत्यूहास्तस्या वृत्तेः शत्रवः कें ते षट् तदाह । कामक्रोधाविति । एते पदार्थाः प्रसिद्धा एव ॥ ३ ॥ योगांगैरिति ॥ योगांगैर्यमनियमादिभिर्वक्ष्यमाणैः प्रथमतस्तान्छत्रून्भित्त्वा नाशयित्वानंतरं
योगिनो योगं तां वृत्तिमाप्नुयुरित्यर्थः ॥ योगांगान्याह । यममिति ॥ ४ ॥ ५ ॥ अष्टस्वंगेषु प्रथमांगस्य यमस्य स्वरूपमाह । अहिंसेति ॥ अहिंसा परपीडनाभावः । सत्यं सत्यभाषणम् ॥ अस्तेयं चौ
र्यमात्रस्याऽभावः ॥ ब्रह्मचर्यम् दर्शनं स्पर्शनं केलिः कीर्तनं गुह्यभाषणम् ॥ संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव चेत्यष्टविधमैथुनत्यागः ॥ दया भूतेषु करुणा ॥ आर्जवमृजुता सर्वापेक्षया
स्वस्याल्पत्वज्ञानम् ॥ क्षमा अपमानादिसहनशीलत्वं पृथिवीवत् ॥ धृतिः सर्वनाशेपि धीरता ॥ मिताहारः द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत् ॥ मारुतस्य प्रचारार्थं चतुर्थमवशेषयेदिति री

हिमालय उवाच ॥ योगं वद महेशानि सांगं संवित्प्रदायकम् ॥ कृतेन येन योग्योऽहं भवेयं तत्त्वदर्शने ॥ १ ॥ श्रीदेव्युवाच ॥ न योगो नभसः पृष्ठे
न भूमौ न रसातले ॥ ऐक्यं जीवात्मनोराहुर्योगं योगविशारदाः ॥ २ ॥ तत्प्रत्यूहाः षडाख्याता योगविघ्नकरानघ ॥ कामक्रोधौ लोभमोहौ मदमा
त्सर्यसंज्ञकौ ॥ ३ ॥ योगांगैरेव भित्त्वा तान्योगिनो योगमाप्नुयुः ॥ यमं नियममासनप्राणायामौ ततः परम् ॥ ४ ॥ प्रत्याहारं धारणाख्यं ध्यानं
सार्धं समाधिना ॥ अष्टांगान्याहुरेतानि योगिनां योगसाधने ॥ ५ ॥ अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् ॥ क्षमा धृतिर्मिताहारः शौचं चेति य
मा दश ॥ ६ ॥ तपः संतोष आस्तिक्यं दानं देवस्य पूजनम् ॥ सिद्धांतश्रवणं चैव ह्रीर्मतिश्च जपो हुतम् ॥ ७ ॥ दशैते नियमाः प्रोक्ता मया पर्वतनाय
क ॥ पद्मासनं स्वस्तिकं च भद्रं वज्रासनं तथा ॥ ८ ॥ वीरासनमिति प्रोक्तं क्रमादासनपंचकम् ॥ ऊर्वोरुपरि विन्यस्य सम्यक्पादतले शुभे ॥ ९ ॥
अंगुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमात्ततः ॥ पद्मासनमिति प्रोक्तं योगिनां हृदयंगमम् ॥ १० ॥ जान्वोरंतरे सम्यक्कृत्वा पादतले शुभे ॥ ऋजु
कायो विशेद्योगी स्वस्तिकं तत्प्रचक्षते ॥ ११ ॥ सीवन्याः पार्श्वयोर्न्यस्य गुल्फयुग्मं सुनिश्चितम् ॥ वृषणाधः पादपार्ष्णी पार्ष्णिभ्यां परिबंधयेत् ॥ १२ ॥

त्याऽल्पाऽऽहारः ॥ शौचं बाह्याभ्यंतरशुद्धिः ॥ इति दशसंख्याया यमा इत्यर्थः ॥ ६ ॥ नियमस्वरूपमाह । तप इति ॥ तपो विध्युक्तानुष्ठानं नक्तकृच्छ्रादि ॥ तस्य शरीरक्लेशकारित्वेन योगोपकारकत्वा
भावात् ॥ संतोषो नाम प्रारब्धेन यदुपस्थापितं तेनैव चेतसस्तृप्तिः ॥ आस्तिक्यं वेददेवद्विजगुरुविश्वासः ॥ दानं यथाशक्ति सत्पात्रे द्रव्यत्यागः ॥ देवस्य परमेश्वरस्य पूजनम् ॥ सिद्धांत
श्रवणं वेदांतश्रवणम् ॥ ह्रीः अकार्यकरणे लज्जा ॥ मतिः सत्कर्मसच्छास्त्रविषये ज्ञानम् ॥ जपो गायत्रीप्रणवभुवनेश्वरीमंत्रप्रभृतिमंत्राणाम् ॥ हुतं नित्यहोमादि ॥ ७ ॥ आसनान्याह । पद्मा
सनमिति ॥ ८ ॥ ९ ॥ व्युत्क्रमादिति ॥ पृष्ठदेशाद्धस्तद्वयं परिवर्त्याऽऽनीय दक्षिणहस्तेन दक्षिणपादांगुष्ठं वामहस्तेन वामपादांगुष्ठं बध्नीयादित्यर्थः ॥ १० ॥ ११ ॥ सीवन्या इति ॥ सीवनी अंडाध
स्थाशिरा ॥ गुल्फौ वृषणाधः स्थितौ यौ पादयोः पार्ष्णिभागौ तौ हस्ताभ्यां बंधयेत् ॥ १२ ॥

॥ १३ ॥ १४ ॥ इडयावामनासापुटेनषोडशमात्रयाषोडशप्रणवोच्चारणेनबाह्यंवायुमाकर्षयेत् ॥ यद्यपिमात्राऽत्रयोगशास्त्रोक्तापारिभाषिकीउक्ता तथापितस्याअपिवायुपरिच्छेदेएव तात्पर्याद्येनवायुपरिच्छेदोभवतितद्ग्राह्यमित्यत्रतात्पर्यात् ॥ १५ ॥ धारयेत् चतुःषष्टिसंख्यप्रणवोच्चारणपर्यंतकुंभकंकुर्यादित्यर्थः । पुनर्द्वात्रिंशत्प्रणवोच्चारणेनदक्षनासापुटेनविरेचये दित्यर्थः ॥ १६ ॥ १७ ॥ भूयोभूयःपुनःपुनःतस्यइडापिंगलादेःपुनरिडापिंगलादेःपुनःपिंगलेडादेःक्रमात् बाह्यंवायुमेवंसमाचरेत् गृह्णीयात्त्यजेच्चेत्यर्थः ॥ मात्राणांप्रणवसंख्यानामप्यु त्तरोत्तरंवृद्धिःकर्तव्यातथाप्राणायामानामपिप्रथमतोद्वादशतदुत्तरंकतिचित्कालानंतरंषोडशेत्येवंक्रमेणवृद्धिःकर्तव्येत्यर्थः ॥ १८ ॥ सगर्भविगर्भभेदेनप्राणायामस्यद्वैविध्यमाह । जप ध्यानादिभिरिति ॥ स्वेष्टमंत्रजपध्यानसहितःप्राणायामःसगर्भः ॥ तदपेतस्तद्रहितोविगर्भःइत्यर्थः ॥ १९ ॥ कनिष्ठमध्यमोत्तमभेदेनप्राणायामलक्षणमाह । क्रमादभ्यस्यतइति ॥ प्राणायामेप्रथमतःस्वेदोद्गमोभवतिसोऽधमःप्राणायामः ॥ कंपसंयुक्तोमध्यमः ॥ भूमित्यागोभवतियस्मिन्प्राणायामे सउत्तमः ॥ भूमिंत्यक्त्वाऽऽसनमुपर्येवतिष्ठतियदातदासभूमित्या गइतिसंप्रदायः ॥ तदुक्तम् । भूमित्यागंतनोतिपरइति ॥ २० ॥ उत्तमप्राणायामसिद्धिपर्यंतंप्राणायामेकृतेसतिफलमाह । उत्तमस्येति ॥ गुणावाप्तिःवपुःप्रकाशोज्ज्वलनस्यदीप्तिर

भद्रासनमितिप्रोक्तंयोगिभिःपरिपूजितम् ॥ ऊर्वोःपादौक्रमान्न्यस्यजान्वोःप्रत्यङ्मुखांगुली ॥ १३ ॥ करौविदध्यादाख्यातंवज्रासनमनुत्तमम् ॥ एकंपादमधःकृत्वाविन्यस्योरुतथोत्तरे ॥ १४ ॥ ऋजुकायोविशेद्योगीवीरासनमितीरितम् ॥ इडयाकर्षयेद्वायुंबाह्यंषोडशमात्रया॥१५॥ धारयेत्पूरितंयोगीचतुःषष्ट्यातुमात्रया ॥ सुषुम्नामध्यगंसम्यग्द्वात्रिंशन्मात्रयाशनैः ॥ १६॥ नाड्यापिंगलयाचैवरेचयेद्योगवित्तमः ॥ प्राणायाममिमंप्राहुर्योगशास्त्रविशारदाः ॥ १७ ॥ भूयोभूयःक्रमात्तस्यबाह्यमेवंसमाचरेत् ॥ मात्रावृद्धिःक्रमेणैवसम्यग्द्वादशषोडश ॥ १८ ॥ जप ध्यानादिभिःसार्धंसगर्भंतंविदुर्बुधाः ॥ तदपेतंविगर्भंचप्राणायामंपरेविदुः ॥ १९ ॥ क्रमादभ्यस्यतःपुंसोदेहेस्वेदोद्गमोधमः ॥ मध्यमःकंपसं युक्तोभूमित्यागःपरोमतः॥२०॥ उत्तमस्यगुणावाप्तिर्यावच्छीलनमिष्यते॥इंद्रियाणांविचरतांविषयेषुनिरर्गलम्॥२१॥ बलादाहरणंतेभ्यःप्रत्या हारोभिधीयते ॥ अंगुष्ठगुल्फजानूरुमूलाधारलिंगनाभिषु ॥२२ ॥ हृद्ग्रीवाकंठदेशेषुलंबिकायांततोनसि ॥ भ्रूमध्येमस्तकेमूर्ध्निद्वादशांतेयथावि धि ॥ २३ ॥ धारणंप्राणमरुतोधारणेतिनिगद्यते ॥ समाहितेनमनसाचैतन्यांतरवर्तिना ॥२४॥ आत्मन्यभीष्टदेवानांध्यानंध्यानमिहोच्यते॥ समत्वभावनानित्यंजीवात्मपरमात्मनोः ॥ २५ ॥ समाधिमाहुर्मुनयःप्रोक्तमष्टांगलक्षणम् ॥ इदानींकथयेतेऽहंमंत्रयोगमनुत्तमम् ॥ २६ ॥

ल्पाशिताचैवतनोर्लघुत्वमित्यादिगुणानामवाप्तिर्भवति ॥ यावत्पर्यंतंशीलनमभ्यासइष्यतेतावत्पर्यंतमुत्तरोत्तरंगुणवृद्धिरेवभवतीत्यर्थः ॥ प्रत्याहारमाह । इंद्रियाणामिति ॥ विषयेषुवि चरतामिंद्रियाणांतेभ्योनिरर्गलंनिर्विघ्नंयदाहरणंसप्रत्याहारः ॥२१ ॥ धारणामाह । अंगुष्ठेति ॥२२॥२३॥ धारणमिति ॥ अंगुष्ठाद्यवयवेषुयत्प्राणवायोर्धारणंनिरोधःसा धारणेत्यर्थः॥ एतादृशोवायुःस्वाधीनोपेक्षितइतिभावः ॥ ध्यानमाह । समाहीति ॥ अंतःकरणंचैतन्यांतर्वर्तिध्यानेन कृत्वातस्मिन्नात्मनिअभीष्टदेवानांयद्ध्यानंतद्ध्यानशब्देनाऽत्रोच्यतइत्यर्थः ॥ ॥ २४ ॥ समत्वभावनाद्वयोरैक्यभावनासंप्रज्ञातसमाधिनैवभवतीतिसमत्वभावनाशब्देनसंप्रज्ञातसमाधिरुच्यते ॥ अतएवयोगसूत्रेतद्भाष्येचसंप्रज्ञातसमाधेरेवाष्टसुयोगांगेषुग्रहणंनिर्वि कल्पकसमाधिस्त्वंगीभवतीत्युक्तम् ॥ २५ ॥ इत्थमष्टांगयोगमभिधायाऽधुनाशरीरेनाडीस्थानानिआधारचक्रस्वरूपाणितद्ध्यानफलानिचोपदिशति । इदानींकथयेतेऽहमिति ॥ मंत्रयोगंमंत्राणांशारदातिलकोक्तच्छिन्नादिदोषदुष्टानांमंत्राणांसिद्धिप्रदंयोगमित्यर्थः ॥ २६ ॥

विश्वंशरीरमिति ॥ पिंडब्रह्मांडयोरेकत्वाच्छरीरमिदंविश्वमेवभवतिब्रह्मांडमेवभवति ॥ तदपिपंचभूतात्मकंचंद्रसूर्याग्निभिर्युक्तंजीवब्रह्मैक्यरूपकंयथाभवतितथेदमप्यस्तीत्याह । पंचभूतेति ॥२७॥ तदर्धेनकोट्यर्धेनसार्धत्रिकोट्यइत्यर्थः॥२८॥ प्रधानासुषुम्नानाडीमेरुदंडेपृष्ठस्थवंशेस्थितामूलाधारमारभ्यपृष्ठवंशमार्गेणब्रह्मरंध्रपर्यंतंगतेत्यर्थः ॥ तस्यावामेइडादक्षिणे पिंगलाऽस्तीत्याह । इडावामेइति ॥२९॥ शक्तिरूपाप्रकृतिरूपा ॥ ३०॥ तस्याम्मध्येसुषुम्नायामध्येविचित्राख्येचित्राख्यनाड्यामित्यर्थः ॥ सुषुम्नामूलदेशेचित्रानाडयस्तीतितस्यामध्ये चित्राख्यानाडीसूक्ष्मातुवर्ततइतिवचनेनतंत्रांतरेउक्तम् ॥ ३१ ॥ मध्येइति । चित्रानाडीमध्येइत्यर्थः ॥ हरात्माबिंदुनादकम्आत्मामायाहकाररेफईकारबिंदुनादात्मकमित्यर्थः ॥३२॥ शिखाकारादीपशिखाकारा ॥३३॥ हेमरूपाभंपीतवर्णम् ॥ वादिसांतचतुर्दलम् ॥ चतुर्दलेषुवशषसइतिचत्वारोवर्णाभवंतीत्यर्थः ॥३४ ॥ बादिलांतेति ॥ बकारादिलकारांतषड्वर्णैर्युक्त

विश्वंशरीरमित्युक्तंपंचभूतात्मकंनग ॥ चंद्रसूर्याग्नितेजोभिर्जीवब्रह्मैक्यरूपकम् ॥ २७॥ तिस्रःकोट्यस्तदर्धेनशरीरेनाडयोमताः ॥ तासुमुख्या दशप्रोक्तास्ताभ्यस्तिस्रोव्यवस्थिताः ॥ २८ ॥ प्रधानामेरुदंडेऽत्रचंद्रसूर्याग्निरूपिणी ॥ इडावामेस्थितानाडीशुभ्रातुचंद्ररूपिणी ॥२९॥ शक्तिरूपातुसानाडीसाक्षादमृतविग्रहा ॥ दक्षिणेयापिंगलाख्यापुंरूपासूर्यविग्रहा ॥ ३० ॥ सर्वतेजोमयीसातुसुषुम्नावह्निरूपिणी ॥ तस्याम्मध्येविचित्राख्येइच्छाज्ञानक्रियात्मकम्॥३१॥ मध्येस्वयंभूलिंगंतुकोटिसूर्यसमप्रभम्॥तदूर्ध्वंमायाबीजंतुहरात्माबिंदुनादकम्॥३२॥ तदूर्ध्वंतुशिखाकाराकुंडलीरक्तविग्रहा ॥ देव्यात्मिकातुसाप्रोक्तामदभिन्नानगाधिप ॥ ३३ ॥ तद्बाह्येहेमरूपाभंवादिसांतचतुर्दलम् ॥ द्रुतहेमसमप्रख्यंपद्मंतत्रविचिंतयेत् ॥ ३४ ॥ तदूर्ध्वंत्वनलप्रख्यंषड्दलंहीरकप्रभम् ॥ बादिलांतषड्वर्णेनस्वाधिष्ठानमनुत्तमम् ॥ ३५ ॥ मूलमाधारषट्कोणंमूलाधारंततोविदुः ॥ स्वशब्देनपरंलिंगंस्वाधिष्ठानंततोविदुः ॥ ३६ ॥ तदूर्ध्वंनाभिदेशेतुमणिपूरंमहाप्रभम् ॥ मेघाभंविद्युदाभंचबहुतेजोमयंततः ॥ ॥ ३७ ॥ मणिवद्भिन्नंतत्पद्मंमणिपद्मंतथोच्यते ॥ दशभिश्चदलैर्युक्तंडादिफांताक्षरान्वितम् ॥ ३८ ॥ विष्णुनाधिष्ठितंपद्मंविष्ण्वालोकनकारणम्॥तदूर्ध्वेनाहतंपद्ममुद्यदादित्यसन्निभम्॥ ३९॥ कादिठांतदलैरेकंपत्रैश्चसमधिष्ठितम् ॥ तन्मध्येबाणलिंगंतुसूर्यायुतसमप्रभम्॥४०॥शब्दब्रह्ममयंशब्दानाहतंतत्रदृश्यते ॥ अनाहताख्यंतत्पद्मंमुनिभिः परिकीर्तितम् ॥ ४१ ॥ आनंदसदनंतत्तुपुरुषाधिष्ठितंपरम् ॥ तदूर्ध्वंतुविशुद्धाख्यंदलंषोडशपंकजम् ॥ ४२ ॥ स्वरैःषोडशभिर्युक्तंधूम्रवर्णंमहाप्रभम् ॥ विशुद्धंतनुतेयस्माज्जीवस्यहंसलोकनात् ॥४३॥ विशुद्धंपद्ममाख्यातमाकाशाख्यंमहाद्भुतम् ॥ आज्ञाचक्रंतदूर्ध्वेतुआत्मनाधिष्ठितंपरम् ॥ ४४ ॥

मित्यर्थः॥३५॥ स्वशब्देनपरंलिंगंतस्याधिष्ठानंयतस्तस्मात्स्वाधिष्ठानमित्युच्यतइत्यर्थः॥३६॥३७॥ भिन्नंविकसितम् ॥ डादिफांताक्षरैर्युक्तमित्यर्थः॥३८॥३९॥ अर्कपत्रैर्द्वादशपत्रैर्युक्तं ककारादिठकारांतानिद्वादशाक्षराणिदलेषुज्ञेयानि ॥ ४० ॥ शब्दानाहतम् अनाहतोनामताडनंविनापिजायमानःशब्दःसोऽनाहतःशब्दोयस्मिंस्तच्छब्दानाहतम् ॥ वाहिताग्न्यादित्वात्साधुः ॥ ४१ ॥ पुरुषाधिष्ठितंरुद्राधिष्ठितमित्यर्थः ॥ ४२ ॥ स्वरैःषोडशभिरिति ॥ षोडशपत्रेषुषोडशस्वराइत्यर्थः ॥ जीवस्यहंसस्यपरमात्मनोवलोकनाज्जीवंयस्माद्विशुद्धंतनुतेततो विशुद्धमित्यन्वयः ॥ तत्राऽनाहतंचक्रंहृदयेविशुद्धिचक्रंकंठेआज्ञाचक्रं भ्रूमध्येइतितुग्रंथांतरादवसेयम् ॥ अनाहतशब्दोमध्यमवाणीरूपोज्ञेयः ॥ ४३ ॥ तदूर्ध्वेतुभ्रूमध्येइत्यर्थः॥ ४४ ॥

आज्ञासंक्रमणमिति ॥ तस्मिन्स्थलेनिहितचित्तस्यपुरुषस्यसर्वपदार्थसाक्षात्कारेणैवंभूतमेवंवर्ततेएवंभविष्यतीतिज्ञानेनाज्ञायाइतःपरंत्वयैवंकर्तव्यमितिपरमेश्वराज्ञायाःसंक्रमणंभवतितेन
हेतुनातदाज्ञाचक्रमितिकीर्तितमित्यर्थः ॥ हक्षवर्णद्वयसंयुतंपत्रद्वयमुक्तमित्यर्थः ॥४५॥ तदूर्ध्वंकैलासचक्रंतदूर्ध्वंरोधिनीचक्रमित्यर्थः ॥ अनयोःस्वरूपंमत्कृतदेवीगीताबृहट्टीकायांद्रष्ट
व्यम् ॥ ४६ ॥ सर्वोपरिविद्यमानंसहस्रारंचक्रमाह । सहस्रारेति ॥ बिंदुस्थानंपरमात्मस्थानमित्यर्थः ॥ इत्येतदिति ॥ पूर्वोक्तप्रकारेणैतत्सर्वंज्ञात्वेतिशेषः ॥ ४७ ॥ ज्ञात्वाकिंकर्तव्यं
तत्राह । आदाविति ॥ प्रथमतःपूरकयोगेनबाह्यंवायुमाकृष्यकुंभकंकृत्वास्वमनोवायुसहितंमूलाधारेयोजयेन्नयेदित्यर्थः ॥ अनंतरंगुदस्यमेढ्रस्यलिंगस्यांतरेमध्येमूलाधारचक्रेइत्यर्थः ॥
विद्यमानास्थितायाशक्तिःकुंडलिनीतामाकुंच्यमूलाधारगतवायुनापीडयित्वाप्रबोधयेत्उत्थापयेदित्यर्थः ॥ ४८ ॥ लिंगभेदेति ॥ तामुत्थाप्यलिंगभेदक्रमेणपूर्वोक्तचक्रगततत्तेजोमय
स्वयंभ्वादिलिंगानांभेदोभेदनंतन्मार्गेणनयनंतत्क्रमेणैवतांकुंडलिनींशक्तिंबिंदुचक्रंसहस्रारंतत्प्रापयेत् ॥ शंभुनेति ॥ सहस्रारपद्मास्थितेनशंभुनातांकुंडलिनीमेकीभूतांसंगतांविभावये

आज्ञासंक्रमणंतत्रतेनाज्ञेतिप्रकीर्तितम् ॥ द्विदलंहक्षसंयुक्तंपद्मंतत्सुमनोहरम् ॥ ४५ ॥ कैलासाख्यंतदूर्ध्वंतुरोधिनीतुतदूर्ध्वतः ॥ एवंत्वाधारच
क्राणिप्रोक्तानितवसुव्रत ॥ ४६ ॥ सहस्रारयुतंबिंदुस्थानंतदूर्ध्वमीरितम् ॥ इत्येतत्कथितंसर्वंयोगमार्गमनुत्तमम् ॥ ४७ ॥ आदौपूरकयोगेना
प्याधारेयोजयेन्मनः ॥ गुदमेढ्रांतरेशक्तिस्तामाकुंच्यप्रबोधयेत् ॥ ४८ लिंगभेदक्रमेणैवबिंदुचक्रंचप्रापयेत् ॥ शंभुनातांपराशक्तिमेकीभूतांवि
चिंतयेत् ॥ ४९ ॥ तत्रोत्थितामृतंयत्तुद्रुतलाक्षारसोपमम् ॥ पाययित्वातुतांशक्तिमायाख्यांयोगसिद्धिदम् ॥ ५० ॥ षट्चक्रदेवतास्तत्रसंत
र्प्यामृतधारया ॥ आनयेत्तेनमार्गेणमूलाधारंततःसुधीः ॥ ५१ ॥ एवमभ्यस्यमानस्याऽप्यहन्यहनिनिश्चितम् ॥ पूर्वोक्तदूषितामंत्राःसर्वेसि
ध्यंतिनान्यथा ॥ ५२ ॥ जरामरणदुःखाद्यैर्मुच्यतेभवबंधनात् ॥ येगुणाःसंतिदेव्यामेजगन्मातुर्यथातथा ॥५३॥ तेगुणाःसाधकवरेभवंत्येव
नचान्यथा ॥ इत्येवंकथितंतातवायुधारणमुत्तमम् ॥ ५४ ॥ इदानींधारणाख्यंतुशृणुष्वावहितोमम ॥ दिक्कालाद्यनवच्छिन्नदेव्यांचेतोविधाय
च ॥५५॥ तन्मयोभवतिक्षिप्रंजीवब्रह्मैक्ययोजनात् ॥ अथवासमलंचेतोयदिक्षिप्रंनसिद्ध्यति ॥ ५६ ॥ तदावयवयोगेनयोगीयोगान्समभ्य
सेत् ॥ मदीयहस्तपादादावंगेतुमधुरेनग ॥ ५७॥ चित्तंसंस्थापयेन्मंत्रीस्थानस्थानजयात्पुनः॥ विशुद्धचित्तःसर्वस्मिन्रूपेसंस्थापयेन्मनः॥
॥५८॥ यावन्मनोलयंयातिदेव्यांसंविदिपर्वत ॥ तावदिष्टमनुंमंत्रीजपहोमैःसमभ्यसेत् ॥ ५९॥ मंत्राभ्यासेनयोगेनज्ञेयज्ञानायकल्पते ॥ न
योगेनविनामंत्रोनमंत्रेणविनाहिसः ॥ ६० ॥

दित्यर्थः ॥ ४९ ॥ तत्रोत्थितेति ॥ तत्रशिवशक्त्योःसंगमेयदुत्थितममृतंद्रुतलाक्षासमानवर्णतदमृतंतांकुंडलिनींपाययित्वातेनआनंदरसरूपेणतांतृप्तांकृत्वेत्यर्थः ॥ ५० ॥ षट्चक्रेति ॥
पूर्वोक्तानियानिषट्चक्राणितच्चक्रस्थितादेवतालिंगरूपाअमृतधारयाशिवशक्तिसमागमोत्थानंदरसरूपामृतवृष्ट्यासंतर्प्यपुनर्येनैवमार्गेणमस्तकंनीताकुंडलिनीतेनैवमार्गेणमूलाधारंतांकुं
डलिनीमानयेदित्यर्थः ॥ ५१ ॥ पूर्वोक्तेति ॥ छिन्नादिदोषदूषितामंत्राअनेनयोगेनसिद्ध्यंतीत्यर्थः ॥ तदुक्तंशारदातिलके ॥ इत्यादिदोषदुष्टांस्तान्मंत्रानात्मानियोजयेत् ॥ शोधये
द्बद्धपवनोबद्धयायोनिमुद्रयेति ॥५२॥५३॥५४॥ प्रसंगेनधारणास्वरूपंपूर्वमुक्तमेवविषयभेदेनविशदयाति ॥ इदानीमिति॥ पूर्वमष्टांगयोगनिरूपणेवायुधारणोक्ता अत्रतुचित्तस्यधारणो
च्यतेइत्यर्थः ॥ अर्थःस्पष्टएव ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ इत्थंध्यानयोगकरणेयस्ययावद्योग्यतानास्तितावत्पर्यंतंतेनपुरुषेणकिंकर्तव्यमितिचेत्तत्राह । यावन्मनइति ॥ ५९ ॥ ६०॥

॥ ६१ ॥ ६२ ॥ विस्तरस्तुमत्कृतदेवीगीताबृहट्टीकायांद्रष्टव्यः ॥ इतिश्रीदेवीभागवततिलकेसप्तमस्कंधेपंचत्रिंशोध्यायः ॥ ३५ ॥ त्रिंशच्छ्लोकैर्मुख्यतत्त्वंब्रह्मरूपंतुवर्ण्यते ॥ ब्रह्मविद्या दुर्लभेतियथावदभिधीयते ॥ १ ॥ अत्रार्धश्लोकोप्यधिकः ॥ एतादृशंयोगंसाधयित्वायद्वस्तुध्येयंतद्वर्णयति ॥ श्रीदेव्युवाचेति ॥ १ ॥ अत्राविःसन्निहितमित्यादिब्रह्मैवेदंविश्वंवरिष्ठमि त्यंताःश्रुतयोमुंडकोपनिषदिअन्यूनानतिरिक्ताः संति ताश्चश्रुतयोभगवत्पादैःश्रीमच्छंकराचार्यैर्व्याख्याताएवमुंडकोपनिषद्भाष्येततस्तासांव्याख्यानंसंक्षेपेणैवक्रियते ॥ आविरिति ॥ आविःशब्दोनिपातःप्रकाशवाची ब्रह्मविश्वोपलब्ध्यात्मनाप्रकाशमानमेवसदेतिभावयोदित्यर्थः ॥ सन्निहितमतिसमीपवर्ति गुहायांबुद्धौचरीततत्रोपलभ्यतेसर्वव्यापकमपीतिगुहाचरं नाम ॥ पद्यते सर्वैर्मुनिभिर्योगादिसाधनैःप्राप्यतेइतिपदंमहच्चतत्पदं चेतिमहत्पदम् ॥ अत्राऽस्मिन्ब्रह्मणिसर्वमाकाशादिसमर्पितंस्थापितंकल्पितमित्यर्थः ॥ ततस्तस्यमिथ्यात्वादिदमे वसर्वैःप्राप्यमित्यर्थः ॥ किंकिमत्रसमर्पितंतदाह । एजदिति ॥ एजच्चलत्पक्ष्यादि ॥ प्राणत्प्राणितीतिप्राणन्मनुष्यादि ॥ निमिषच्चयन्निमेषादिक्रियावत् ॥ यच्चनिमिषम् ॥ चशब्दा त्तत्सर्वंब्रह्मण्येवसमर्पितमित्यर्थः ॥ २ ॥ एतज्जानथेति भगवतीवदति ॥ हेदेवाएतन्मद्रूपंब्रह्मजानथाऽवगच्छथ ॥ सदसद्वरेण्यं सत्कारणंमाया असत्कार्यंजगत् तदुभयापेक्षयावरेण्यंश्रे ष्ठम् ॥ प्रजानांलोकानांविज्ञानात्परंतज्ज्ञानाविषयइत्यर्थः ॥ यतोवरिष्ठंश्रेष्ठंततोनसर्वबुद्धिगम्यमित्यर्थः ॥ यदर्चिमत्सूर्यादितेजसामपिप्रकाशकम् ॥ यतस्ततोऽतिशयदीप्तिमदित्यर्थः

**द्वयोरभ्यासयोगोहिब्रह्मसंसिद्धिकारणम् ॥ तमःपरिवृतेगेहेघटोदीपेनदृश्यते॥६१॥ एवंमायावृतोह्यात्मामनुनागोचरीकृतः ॥ इतियोगविधिः कृत्स्नःसांगःप्रोक्तोमयाऽधुना ॥६२॥ गुरूपदेशतोज्ञेयोनान्यथाशास्त्रकोटिभिः ॥ इति श्रीदेवीभागवते महापुराणे सप्तमस्कंधे पंचत्रिंशोऽध्यायः ॥ ३५ ॥ देव्युवाच ॥ इत्यादियोगयुक्तात्माध्यायेन्मांब्रह्मरूपिणीम् ॥ भक्त्यानिर्व्याजयाराजन्नासनेसमुपस्थितः ॥ १ ॥ आविःसन्निहितंगुहाचरंनाममहत्पदम् ॥ अत्रैतत्सर्वमर्पितमेजत्प्राणन्निमिषच्चयत् ॥ २ ॥ एतज्जानथसदसद्वरेण्यंपरंविज्ञानाद्यद्वरिष्ठंप्रजानाम् ॥ यदर्चिमद्यदणुभ्योऽणुचयस्मिँल्लोकानिहितालोकिनश्च ॥ ३ ॥ तदेतदक्षरंब्रह्मसप्राणस्तदुवाङ्मनः ॥ तदेतत्सत्यममृतंतद्वेद्धव्यंसौम्यविद्धि ॥ ४ ॥ धनुर्गृहीत्वौपनिषदंमहास्त्रंशरंह्युपासानिशितंसंधयीत ॥ आयम्यतद्भावगतेनचेतसालक्ष्यंतदेवाक्षरंसौम्यविद्धि ॥ ५ ॥ प्रणवोधनुःशरोह्यात्माब्रह्मतल्लक्ष्यमुच्यते ॥ अप्रमत्तेनवेद्धव्यंशरवत्तन्मयोभवेत् ॥ ६ ॥**

यस्मिन्भूरादयोलोकास्तन्निवासिजनालोकिनश्चनिहिताःस्थापिताःकल्पिताइत्यर्थः ॥ ३ ॥ तदेतदिति ॥ तदेतत्सर्वाश्रयमक्षरंब्रह्मसप्राणस्तदुतदेववाङ्मनोपितदेतत्सत्यमवितथम तोमृतंतद्वेद्धव्यंमनसाशरेणताडयितव्यंमनःसमाधानंतत्रकर्तव्यमित्यर्थः ॥ ४ ॥ कथंवेद्धव्यंतदुच्यते । धनुरिति ॥ औपनिषदमुपनिषद्भिर्बोधितम् ॥ महास्त्रंमहच्चतदस्त्रंचेतिमहास्त्रं धनुर्गृहीत्वाऽऽदायतथोपासाभिर्निशितंसंतताभिध्यानेनतनूकृतंशरंतस्मिन्धनुषिसंधयीतयोजयेत् ॥ शरंसंधायसंस्थाप्यानंतरमायम्याकृष्यसेंद्रियमंतःकरणंस्वविषयाद्विनिवर्त्यलक्ष्यएव स्थापयित्वेत्यर्थः ॥तद्भावगतेनतस्मिन्ब्रह्मण्यक्षरेलक्ष्येभावनाभावस्तद्गतेनचेतसालक्ष्यंतदेवयथोक्तलक्षणमक्षरम्॥सौम्यहेपर्वतराज विद्धिताडयेत्यर्थः॥५॥यदुक्तंधनुरादितदुच्यते । प्रण वइति ॥ प्रणवओंकारोदेवीप्रणवोवाधनुर्यथेष्वासनंलक्ष्येशरस्यप्रवेशकारणंतथाचित्तशरस्याऽक्षरेलक्ष्येप्रवेशकारणंप्रणवः प्रणवेनह्यभ्यस्यमानेनसंस्क्रियमाणःतदालवतोऽप्रतिबंधेनाऽक्षरेव तिष्ठते ॥ यथाधनुषाप्रक्षिप्तइषुर्लक्ष्येऽतःप्रणवोधनुरिवधनुःशरोह्यात्मांतःकरणंहिशरःशरसदृशलक्ष्यवेधनाच्छरइवशरः ॥ अत्रलक्ष्यंतुतद्ब्रह्मैवोच्यतइत्याह । ब्रह्मतल्लक्ष्यमुच्यतइति ॥ अप्रमत्तेनैकाग्रचेतसातल्लक्ष्यंब्रह्मवेद्धव्यंयथाशरोलक्ष्यैकात्मतांप्राप्नोति तथादेहाद्यात्मप्रत्ययतिरस्कारेणाऽक्षरैक्यात्म्यंफलमापादयेदित्यर्थः ॥ ६ ॥

अक्षरस्यदुर्लक्ष्यत्वात्पुनःपुनर्वचनंसुलक्षणार्थम् । यस्मिन्निति॥यस्मिन्नक्षरेद्यौःपृथिवीचांतरिक्षंचप्राणैःसहमनश्चसमर्पितंतमेवैकमात्मानंजानथजानीथ ॥ हेदेवायंज्ञात्वाचाऽन्यवाचोपरावि
द्यारूपाविमुंचथविमुंचतपरित्यजत॥यतोऽमृतस्यमोक्षस्यप्राप्तयेयंसेतुरिवसेतुः॥संसारमहोदधेस्तरणहेतुरित्यर्थः ॥तथाचश्रुतिः ॥ तमेवविदित्वातिमृत्युमेति नाऽन्यःपंथाविद्यतेऽयना
येति ॥७॥किंच अराइवेति॥यथारथनाभौसमर्पिताअराइवसंहताःसंप्रविष्टाएवंयत्रयस्मिन्हृदयेनाड्यस्तस्मिन्हृदयेबुद्धिप्रत्ययसाक्षिभूतःसएषप्रकृतआत्मांतर्मध्येचरतेचरतिवर्ततेबुद्धया
दिप्रत्ययैर्जायमानइवजायमानोंतःकरणोपाध्यनुविधायित्वाद्धृष्टदंतिलौकिकाःहृष्टोजातःक्रुद्धोजातइति ॥ ८ ॥ तमात्मनामोमित्येवोंकारालंबनाःसंतोयथोक्तकल्पनयाध्यायथचिंतयत॥
तेषांकल्याणार्थमाशीर्वचनंभगवतीकरुणानिधिर्वदति॥स्वस्तिनिर्विघ्नमस्तुवोयुष्माकंपारायपरकूलप्राप्तये॥ तमसोऽविद्यातःपरस्तादविद्यारहितब्रह्मात्मस्वरूपगमनायेत्यर्थः ॥ सआत्मा
कवर्ततेतत्राह ।यःसर्वज्ञोयश्चसर्वविद्यस्यैषमहिमाविभूतिजगत्सर्जनादिरूपोभुविप्रसिद्धःसदिव्येद्योतनवतिब्रह्मपुरेहृदयपुंडरीकेतत्रतस्यप्रकाशमानत्वात्तस्मिन्हृत्कमलेयद्व्योमाकाशस्त
स्मिन्प्रतिष्ठितइवोपलभ्यते॥९॥ सह्यात्मामनोवृत्तिभिरेवविभाव्यतइतिमनोमयः ॥प्राणश्चशरीरंचतयोरयंनेता॥शरीराच्छरीरांतरंप्रतिप्रतिष्ठितोवस्थितोऽन्नेऽन्नपरिणामेपिंडेहृदयेबुद्धिंसं
निधायसमवस्थाप्यतद्विज्ञानेनतत्साक्षात्कारेणपरिपश्यंतिसर्वतःपूर्णपश्यंतिधीराविवेकिनः॥आनंदरूपंदुःखासंस्पृष्टममृतंयद्विभातिसर्वदातादित्यर्थः ॥ १० ॥ अस्यात्मज्ञानस्यफलमभि

**यस्मिन्द्यौश्चपृथिवीचांतरिक्षमोतंमनःसहप्राणैश्चसर्वैः ॥ तमेवैकंजानथात्मानमन्यावाचोविमुंचथामृतस्यैषसेतुः ॥ ७ ॥ अराइवरथनाभौसं**
**हतायत्रनाड्यः ॥ सएषोंतश्चरतेबहुधाजायमानः ॥ ८ ॥ ओमित्येवंध्यायथात्मानंस्वस्तिवःपारायतमसःपरस्तात् ॥ दिव्येब्रह्मपुरेव्योम्निआ**
**त्मासंप्रतिष्ठितः ॥ ९ ॥ मनोमयःप्राणशरीरनेताप्रतिष्ठितोऽन्नेहृदयंसन्निधाय ॥ तद्विज्ञानेनपरिपश्यंतिधीराआनंदरूपममृतंयद्विभाति॥१०॥**
**भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः ॥ क्षीयंतेचाऽस्यकर्माणितस्मिन्दृष्टेपरावरे॥ ११ ॥हिरण्मयेपरेकोशेविरजंब्रह्मनिष्कलम् ॥ तच्छुभ्रंज्यो**
**तिषांज्योतिस्तद्यदात्मविदोविदुः ॥ १२ ॥ नतत्रसूर्योभातिनचंद्रतारकंनेमाविद्युतोभांतिकुतोऽयमग्निः ॥ तमेवभांतमनुभातिसर्वंतस्यभासास**
**र्वमिदंविभाति ॥ १३ ॥ ब्रह्मैवेदममृतंपुरस्ताद्ब्रह्मपश्चाद्ब्रह्मदक्षिणतश्चोत्तरेण ॥ अधश्चोर्ध्वंचप्रसृतंब्रह्मैवेदंविश्वंवरिष्ठम् ॥ १४ ॥**

धीयते । भिद्यते इति ॥हृदयग्रंथिः चिदहंकारतादात्म्यरूपोभिद्यतेनश्यति॥छिद्यंतेसर्वज्ञेयविषयाःसंशयाःसर्वेषांमिथ्यात्वनिश्चयात् ॥क्षीयंतेनश्यंतिचकर्माणिप्रारब्धातिरिक्तानिसर्वा
णितस्मिन्परमात्मनिदृष्टेसाक्षात्कृतेइत्यर्थः॥ ११ ॥ उक्तस्यैवार्थस्यसंक्षेपाभिधायकाउत्तरेत्रयोपिमंत्राः ॥ हिरण्मयंज्योतिर्मयेपरेकोशेआनंदमयेकोशेविरजम् । उपलक्षणतयागुणत्र
यरहितंब्रह्मपुच्छंप्रतिष्ठेतिश्रुत्युक्तंब्रह्मनिष्कलंमायारहितमसत्त्वमरजस्कमतमस्कममायमितिश्रुत्यंतरात् ॥ अतएवशुभ्रंस्वच्छम्॥ ज्योतिषांसर्वप्रकाशकसूर्यादीनामपिज्योतिःप्रकाशक
मित्यर्थः ॥ यदाऽऽत्मविदोज्ञानिनोमहतायासेनविदुस्तद्धिरण्मयेपरेकोशेतिष्ठतीत्यन्वयः॥१२॥कथंतज्ज्योतिषांज्योतिस्तदुच्यते । नतत्रेति॥तत्रतस्मिन्नात्मभूतेब्रह्मणिनसूर्योभातिसूर्यो
पितद्ब्रह्मनप्रकाशयतीत्यर्थः॥तथाचंद्रतारकम् इमाविद्युतोऽपिनभांतिनप्रकाशयंति॥कुतोऽयमग्निःपूर्वापेक्षयास्वल्पज्योतिःप्रकाशयतिनैवप्रकाशयतीत्यर्थः॥किंबहुनायदिदंजगद्भातितत्तमे
वाऽऽत्मानंस्वप्रकाशत्वाद्भांतंप्रकाशितमनुभात्यनुदीप्यतेतस्यैवभासासर्वमिदंसूर्यादिजगद्विभातीत्यर्थः॥१३॥ यन्मयोक्तंब्रह्मतदेवसत्यंरज्जुस्थानीयंनान्यज्जगत्सर्पस्थानीयंमृषात्वात्॥त
स्मादिदमेवाऽऽश्रयणीयमित्यभिप्रायेणनिगमनस्थानीयेनमंत्रेणोपसंहरति॥ब्रह्मैवेदमिति॥ब्रह्मैवोक्तलक्षणमिदंयत्पुरस्तादग्रेब्रह्मैवाऽविद्यादृष्टीनांप्रत्यवभासमानंतथापश्चाद्ब्रह्मतथादक्षिणत
श्चतथोत्तरेणतथैवाधस्तादूर्ध्वंचकिंबहुनाब्रह्मैवेदंविश्वंसमस्तंवरिष्ठमिदंजगत्॥अब्रह्मप्रत्ययःसर्वोऽविद्यामात्रोरज्ज्वामिवसर्पप्रत्ययोब्रह्मैवेदंपरमार्थसत्यमितिवेदानुशासनमित्यर्थः १४॥

एतादृशानुभववतः कृतार्थत्वमाह । एतादृगिति ॥ १५ ॥ द्वितीयादिति ॥ तदभावाद्द्वितीयस्यभयकारणस्याऽभावात्ब्रह्मज्ञंविन्नबिभेतीत्यर्थः ॥ तेनममकदापिवियोगोनास्तीत्याह । नतद्वियोगइति ॥ १६ ॥ अहमेवेति ॥ अहंयाऽस्मिसासज्ञान्यस्तीत्यर्थः ॥ सज्ञानीयोऽस्तिसोहमेवास्मीत्यर्थः ॥ व्यतिहारेणदृढाभेदोदर्शितः॥ १७॥ अहंज्ञानिहृदयेएवातिष्ठामीत्याह। नाहंतीर्थेइति ॥ १८ ॥ कृतकृत्यका ॥ स्वार्थेकन्प्रत्ययः ॥ १९ ॥ यस्यपुरुषस्यचेतसश्चितिपरमात्मनिलयोजातस्तेनपुरुषेणविश्वंभरापृथिवीपुण्यवतीत्यर्थः ॥ २० ॥ नातोवक्तव्यमस्तीति ॥ इतः परमधिकोवक्तव्यांशोनास्तीत्यर्थः ॥ विद्योपदेशमात्रमुपादिशति । इदंज्येष्ठायेति ॥ २१ ॥ यथोक्तायशास्त्रोक्तलक्षणयुक्ताय ॥ गुरुप्रसादंविनापरमेश्वरप्रसादं विनाकदापिब्रह्मज्ञाविद्यानभवतीत्याह । यस्यदेवेइति ॥ श्रुतिरियम् ॥ २२ ॥ विद्येयमिति ब्रह्मविद्येत्यर्थः ॥ २३ ॥ सुकृतसुपकारंतस्यगुरोःकर्तुमयंशिष्योयतोऽसमर्थस्ततोऽयंशिष्यस्तस्यगुरोर्यावज्जीवपर्यंतमृऋणीत्यर्थः ॥ ब्रह्मजन्मब्रह्मरूपेणजन्म ॥ २४ ॥ पितृजातंजन्ममरणेसतिनष्टंभवेन्नेत्थंब्रह्मरूपेणजातंकदाचिदपिनष्टंभवेत्ततइत्यर्थः॥ अतएवतस्मैनद्रुह्येत्कृत

एतादृगनुभवोयस्यसकृतार्थोनरोत्तमः ॥ ब्रह्मभूतःप्रसन्नात्मानशोचतिनकांक्षति ॥ १५ ॥ द्वितीयाद्वैभयंराजंस्तदभावाद्बिभेतिन ॥ नतद्वियोगोमेप्यस्तिमद्वियोगोपितस्यन ॥ १६ ॥ अहमेवससोऽहंवैनिश्चितंविद्धिपर्वत ॥ मद्दर्शनंतुतत्रस्यात्यत्रज्ञानीस्थितोमम ॥ १७ ॥ नाऽहंतीर्थेनकैलासेवैकुंठेवानकर्हिचित् ॥ वसामिकिंतुमज्ज्ञानिहृदयांभोजमध्यमे ॥१८॥ मत्पूजाकोटिफलदंसकृन्मज्ज्ञानिनोऽर्चनम् ॥ कुलंपवित्रंतस्याऽस्तिजननीकृतकृत्यका ॥ १९ ॥ विश्वंभरापुण्यवतीचिल्लयोयस्यचेतसः ॥ ब्रह्मज्ञानंतुयत्पृष्टंत्वयापर्वतसत्तम ॥ २० ॥ कथितंतन्मयासर्वंनाऽतोवक्तव्यमस्तिहि ॥ इदंज्येष्ठायपुत्रायभक्तियुक्तायशीलिने ॥ २१ ॥ शिष्यायचयथोक्तायवक्तव्यंनाऽन्यथाक्वचित् ॥ यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ ॥ २२ ॥ तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनः ॥ येनोपदिष्टाविद्येयंसएवपरमेश्वरः ॥ २३ ॥ यस्यायंसुकृतंकर्तुमसमर्थस्ततोऋणी ॥ पित्रोरप्यधिकःप्रोक्तोब्रह्मजन्मप्रदायकः ॥ २४ ॥ पितृजातंजन्मनष्टंनेत्थंजातंकदाचन ॥ तस्मैनद्रुह्येदित्यादिनिगमोप्यवदन्नग ॥ २५ ॥ तस्माच्छास्त्रस्यसिद्धांतोब्रह्मदातागुरुःपरः ॥ शिवेरुष्टेगुरुस्त्रातागुरौरुष्टेनशंकरः॥२६॥तस्मात्सर्वप्रयत्नेनश्रीगुरुंतोषयेन्नग ॥ कायेनमनसावाचासर्वदातत्परोभवेत्॥२७॥अन्यथातुकृतघ्नःस्यात्कृतघ्नेनास्तिनिष्कृतिः ॥ इंद्रेणाऽथर्वणायोक्ताशिरश्छेदप्रतिज्ञया ॥ २८॥

मस्यजानन्निति श्रुतिरपीममेवार्थंवक्तीत्याह । तस्मैनद्रुह्येदिति ॥२५॥२६॥२७॥कृतघ्नेनास्तिनिष्कृतिरिति कृतघ्नप्रायश्चित्तंनास्तीत्यर्थः ॥ इंद्रेणाऽथर्वणायोक्तेति ॥ अत्रेदंबोध्यम् ॥ दध्यङ्नामाऽथर्वणोमुनिः सइंद्रंप्रतिब्रह्मविद्यां प्रार्थितवांस्तस्माइंद्रोब्रह्मविद्यांप्रोवाचाऽनंतरमुक्तवानिंद्रोयदीमांब्रह्मविद्यामन्यस्मैवदासितदैवतेशिरश्छेत्स्यामीति ॥ ततःकियताकालेनदध्यंचंमुनिंप्रत्यागत्याऽश्विनीकुमारौब्रह्मविद्यांप्रार्थितवंतौ ताभ्यांमुनिरुवाच यद्यहंब्रह्मविद्यांवक्ष्यामितर्हींद्रोमेशिरश्छेत्स्यतीति तच्छ्रुत्वातौवैद्यावूचतुस्तवेदंशिरश्छित्त्वाऽस्माभिरन्यत्रस्थाप्यतेअश्वीयंमस्तकंतवदेहेसंयोज्यतेतेनब्रह्मविद्यामस्मभ्यमुपदिश ॥ यदेंद्रआगत्यतच्छिरश्छेत्स्यतितदावयंपूर्वस्थापितंमुख्यंशिरस्तवदेहेसंयोजयावस्तदनंतरंमुख्यमुख्येनैवमुख्यशिरसाब्रह्मविद्यांवदेतितदनंतरंसमुनिरापितथैवचकारेतिकथासर्ववेदेषुप्रसिद्धा ॥ तांकथांब्रह्मविद्यांस्तोतुंस्मारयाति । इंद्रेणाऽथर्वणायोक्तेति ॥ २८ ॥

॥ २९ ॥ इतिसंकटेति ॥ एतादृश्यातिदुर्लभाब्रह्मविद्यायेनलब्धासधन्यइत्यन्वयः ॥ ३० ॥ इतिश्रीदेवीभागवततिलकेसप्तमस्कंधेदेवीगीतायांषट्त्रिंशोऽध्यायः ॥३६॥ पंचाधिकैश्चत्वारिंशत्पद्यैरथसादरम्॥भक्तिस्वरूपमहिमायथावदनुवर्ण्यते॥ १॥ पूर्वंयस्यदेवेपराभक्तिरित्युक्तंतत्रभक्तिस्वरूपंपृच्छति । स्वीयांभक्तिमिति॥ मध्यमस्यमध्यमाधिकारिणोविरागिणोभक्तिरहितस्यापिदुर्लभंज्ञानंयेनभक्तिहेतुनाजायेततांभक्तिंवदेत्यर्थः ॥१॥ मोक्षप्राप्तौत्रयोमार्गाःकर्मोपासनाज्ञानभेदेनात्रिविधाः ॥तत्रज्ञानमार्गःसाक्षान्मोक्षसाधनमितरौचित्तशुद्धिद्वारेति विवेकः ॥तानेवमार्गान्दर्शयाति । कर्मयोगइति ॥ भक्तियोगउपासनायोगइत्यर्थः॥२॥त्रयाणामपिमार्गाणांमध्येतन्मार्गगामिनांत्रयाणामपिपुरुषाणामयंभक्तियोगःकर्तुंयोग्यःशक्यश्च भवति॥कुतइतिचेदस्यभक्तियोगस्यान्यापेक्षयासुलभत्वान्मानसत्वाद्द्रव्यशरीरायासमंतरेणकेवलंमनोवृत्त्यैवसंपाद्यत्वात् ॥ यस्मिन्भक्तियोगेकायचित्तद्रव्यव्ययादिपीडनाभावोभवतितस्मादित्यर्थः॥तस्मात्सर्वैरप्ययंभक्तियोगोनियमेनाश्रयितव्यइत्यर्थः ॥ ३ ॥ तत्रभक्तेस्त्रैविध्यमुपदिशति । गुणभेदादिति॥मनुष्याणांमनुष्यसंबंधिनांगुणानांसत्त्वरजस्तमोरूपाणां

अश्विभ्यांकथनेतस्यशिरश्छिन्नंचवज्रिणा ॥ अश्वीयंतच्छिरोनष्टंदृष्ट्वावैद्यौसुरोत्तमौ ॥ २९ ॥ पुनःसंयोजितंस्वीयंताभ्यांमुनिशिरस्तदा ॥ इतिसंकटसंपाद्याब्रह्मविद्यानगाधिप ॥ लब्धायेनसधन्यःस्यात्कृतकृत्यश्चभूधर ॥ ३० ॥ इति श्रीदेवीभागवतेमहापुराणेसप्तमस्कन्धेदेवीगीतायांषड्त्रिंशोऽध्यायः ॥ ३६ ॥ हिमालयउवाच ॥ स्वीयांभक्तिंवदस्वांबयेनज्ञानंसुखेनहि ॥ जायेतमनुजस्याऽस्य मध्यमस्याऽविरागिणः ॥ १ ॥ देव्युवाच ॥ मार्गास्त्रयोमे विख्याताःमोक्षप्राप्तौनगाधिप ॥ कर्मयोगोज्ञानयोगोभक्तियोगश्चसत्तम ॥ २ ॥ त्रयाणामप्ययंयोग्यःकर्तुंशक्योऽस्तिसर्वथा ॥ सुलभत्वान्मानसत्वात्कायचित्ताद्यपीडनात् ॥ ३ ॥ गुणभेदान्मनुष्याणांसाभक्तिस्त्रिविधामता ॥ परपीडांसमुद्दिश्यदंभंकृत्वापुरःसरम् ॥ ४ ॥ मात्सर्यक्रोधयुक्तोयस्तस्यभक्तिस्तु तामसी ॥ परपीडादिरहितःस्वकल्याणार्थमेवच ॥ ५ ॥ नित्यंसकामोहृदयंयशोर्थीभोगलोलुपः ॥ तत्तत्फलसमावाप्त्यैमामुपास्तेऽतिभक्तितः॥६॥ भेदबुद्ध्यातुमांस्वस्मादन्यांजानातिपामरः ॥ तस्यभक्तिःसमाख्यातानगाधिपतुराजसी ॥ ७ ॥ परमेशार्पणंकर्मपापसंक्षालनायच ॥ वेदोक्तत्वादवश्यंतत्कर्तव्यंतुमयाऽनिशम् ॥ ८ ॥ इतिनिश्चितबुद्धिस्तुभेदबुद्धिमुपाश्रितः ॥ करोतिप्रीतयेकर्मभक्तिःसानगसात्त्विकी ॥ ९ ॥ परभक्तेःप्रापिकेयंभेदबुद्ध्यवलंबनात् ॥ पूर्वप्रोक्तेह्युभेभक्तीनपरप्रापिकेमते ॥ १० ॥

भेदात्भक्तिरपित्रिविधा ॥ सात्त्विकराजसतामसभेदेनात्रिविधाभवतीत्यर्थः ॥ त्रिविधभक्तिस्वरूपमाह । परपीडामिति ॥ अन्यनाशार्थमित्यर्थः॥४॥५॥६॥ भेदबुद्ध्याजीवेश्वरयोर्भेदबुद्ध्यामांसर्वेश्वरींस्वस्मादन्यांभिन्नांजानातियतःपामरः ॥७॥८॥भेदबुद्धिमुपाश्रितइति॥अयमपिसात्त्विकःपुरुषोभेदबुद्धिंजीवेश्वरयोःपृथक्त्वबुद्धिमाश्रित्यैवभक्तिंकरोतीत्यर्थः॥९॥ त्रिविधभक्तिस्वरूपमुपादिश्यातिसृणांभक्तीनांमध्येद्वयोर्हेयत्वमेकस्याग्राह्यत्वमाह । परभक्तेरिति ॥ सापरानुरक्तिरीश्वरेइतिलक्षणलक्षितायाःपरभक्तेःपरप्रेमरूपाया इयंसात्त्विकीभक्तिःप्रापिकाभवति॥ततइयमाश्रयणीयेतिभावः॥नन्वियंपरभक्तिःकुतोनेतिचेत्तत्राह।भेदबुद्ध्यवलंबनादिति॥अस्यांभेदबुद्धिर्वर्ततइत्यात्मसदृशप्रेम्णोऽत्रासंभवान्नेयंपराभक्तिरित्यर्थः ॥ परप्रेमात्वात्मन्येवसंभवतितदेतत्प्रेयः पुत्रात्प्रेयोवित्तात्प्रेयः सर्वस्माद्यदंतरतरामित्यादिश्रुतिभ्यः ॥ पूर्वप्रोक्तेइति ॥ पूर्वप्रोक्तेद्वेभक्तीतुनपरभक्तिप्रापिके ततस्तेउभेअपित्याज्येइत्यर्थः १०॥

परभक्तिस्वरूपमाह । अधुनेति ॥ ११॥ तैलधारायथाव्युच्छिन्नानभवातितद्वदिदमापिचेतोध्यानमध्येविषयेषुनगच्छतीत्यर्थः ॥ १२ ॥ हेतुरिति ॥ एतादृशध्यानेहेतुःफलंकोवापिकोपि कदाचिदपिनैवभवेत् किंतुकेवलंमत्प्रीत्यर्थमयिपरमानुरागेणैवचेतसोनुवर्तनंकरोतीत्यर्थः॥सामीप्यादिलोकेच्छयापिनमदाराधनंकरोति किंतुप्रेम्णैवेत्याह । सामीप्येति ॥१३॥सेव्यसेवकतेति ॥ल्यब्लोपेपञ्चमी ॥ सेव्यसेवकभावंविहायेत्यर्थः ॥ मदाराधनमेवेच्छतिनमोक्षमित्यर्थः ॥ १४ ॥ स्वाभेदनैवेति ॥ अहमेवसच्चिदानंदरूपिणीभगवत्यस्मीतिभावनयेत्यर्थः ॥ ॥ १५ ॥ १६॥ १७॥ ईश्वरहेपर्वतराज भेदवर्जनात्सर्वत्रचैतन्यरूपैकैवभगवत्यस्तिनाद्वितीयेतिभेदनिरासादित्यर्थः ॥१८॥ मत्स्थामेति॥तानिचवक्ष्यमाणानिपूर्वोक्तानिचस्थानानि ॥

अधुनापरभक्तिंतुप्रोच्यमानांनिबोधमे ॥ मद्गुणश्रवणंनित्यंममनामानुकीर्तनम् ॥ ११ ॥ कल्याणगुणरत्नानामाकरायांमयिस्थिरम् ॥ चेतसोवर्तनंचैवतैलधारासमंसदा ॥ १२ ॥ हेतुस्तुतत्रकोवापिनकदाचिद्भवेदपि ॥ सामीप्यसार्ष्टिसायुज्यसालोक्यानांनचैषणा ॥ १३ ॥ मत्सेवातोऽधिकंकिंचिन्नैवजानातिकर्हिचित् ॥ सेव्यसेवकताभावात्तत्रमोक्षंनवांछति ॥ १४ ॥ परानुरक्त्यामामेवचिंतयेद्योह्यतंद्रितः॥ स्वाभेदेनैवमांनित्यंजानातिनविभेदतः ॥ १५ ॥ मद्रूपत्वेनजीवानांचिंतनंकुरुतेतुयः ॥ यथास्वस्यात्मनिप्रीतिस्तथैवचपरात्मनि ॥ १६ ॥ चैतन्यस्यसमानत्वान्नभेदंकुरुतेतुयः ॥ सर्वत्रवर्तमानानांसर्वरूपांचसर्वदा ॥ १७ ॥ नमतेयजतेचैवाप्याचांडालांतमीश्वर ॥ नकुत्रापिद्रोहबुद्धिंकुरुतेभेदवर्जनात् ॥ १८ ॥ मत्स्थानदर्शनश्रद्धामद्भक्तदर्शनेतथा ॥ मच्छास्त्रश्रवणेश्रद्धामंत्रतंत्रादिषुप्रभो ॥ १९ ॥ मयिप्रेमाकुलमतीरोमांचिततनुःसदा ॥ प्रेमाश्रुजलपूर्णाक्षःकंठगद्गदनिस्वनः ॥ २० ॥ अनन्येनैवभावेनपूजयेद्योनगाधिप ॥ मामीश्वरींजगद्योनिंसर्वकारणकारणम् ॥ २१॥ व्रतानिममदिव्यानिनित्यनैमित्तिकान्यपि ॥ नित्यंयःकुरुतेभक्त्यावित्तशाठ्यविवर्जितः ॥२२॥ मदुत्सवदिदृक्षाचमदुत्सवकृतिस्तथा॥जायतेयस्यनियतंस्वभावादेवभूधर ॥२३॥ उच्चैर्गायंश्चनामानिममैवखलुनृत्यति ॥ अहंकारादिरहितोदेहतादात्म्यवर्जितः॥२४॥ प्रारब्धेनयथायच्चक्रियतेतत्तथाभवेत् ॥ नमेचिंतास्तितत्रापिदेहसंरक्षणादिषु ॥२५॥ इतिभक्तिस्तुयाप्रोक्तापरभक्तिस्तुसास्मृता ॥ यस्यांदेव्यतिरिक्तंतुनकिंचिदपिभाव्यते॥२६॥ इत्थंजातापराभक्तिर्यस्यभूधरतत्त्वतः॥ तदैवतस्यचिन्मात्रेमद्रूपेविलयोभवेत् ॥२७॥ भक्तेस्तुयापराकाष्ठासैवज्ञानंप्रकीर्तितम् ॥ वैराग्यस्यचसीमासाज्ञानेतदुभयंयतः॥ २८ ॥ भक्तौकृतायांयस्यापिप्रारब्धवशतोनग ॥ नजायतेममज्ञानंमणिद्वीपंसगच्छति ॥२९॥

मच्छास्त्रंशक्तिदर्शनंतथादेवीभागवतंवेदांतंच ॥ १९ ॥ २० ॥ २१ ॥ व्रतानीति ॥ तानिवक्ष्यमाणानि ॥ २२ ॥ मदुत्सवेति ॥ तेचोत्सवावक्ष्यमाणाः ॥ अन्यकृतोत्सवदर्शनेच्छाचेत्यर्थः ॥ स्वतोपिमदुत्सवकृतिर्मदुत्सवकरणमित्यर्थः ॥ २३ ॥ २४ ॥ प्रारब्धेनेति ॥ प्रारब्धाधीनंसर्वंज्ञात्वाकामपिमत्स्वरूपचिंतातिरिक्तांचिंतांनकरोतीत्यर्थः ॥ २५ ॥ ॥ २६ ॥ इत्थंपरभक्त्यास्वस्वरूपेचित्तलययोग्यताभवतीत्याह । तदैवेति ॥ २७ ॥ भक्तस्त्विति ॥ यतोज्ञानेसतिभक्तिवैराग्येसांगेसंपूर्णेसिद्ध्यतस्तस्माद्भक्तेर्वैराग्यस्यचयापराकाष्ठासाज्ञानमित्यर्थः ॥ तदुक्तंविष्णुभागवते ॥ भक्तिःपरेशानुभवोविरक्तिरन्यत्रचैषत्रिकएककालइति ॥ २८ ॥ मणिद्वीपंपूर्वोक्तंद्वादशस्कन्धेवक्ष्यमाणंच ॥ २९ ॥

ऋच्छतिप्राप्नोतीत्यर्थः ॥ ३० ॥ ३१ ॥ संवित्परतनोरितिप्रत्यगात्मविशेषणम् ॥ तस्यप्राणाइति ॥ नतस्यप्राणाउत्क्रामंतीतिश्रुतेः ॥ ३२ ॥ कंठचामीकरेति ॥ यथाकंठगतंविद्यमानमेवचामीकरंसुवर्णमज्ञानेनसुवर्णतिरोभूतंज्ञानेनाज्ञाननाशेसतितदेवप्राप्यतेनान्यत्तद्वदेवाविद्यमानमेवात्मरूपमज्ञानेनतिरोभूतंपश्चाज्ज्ञानेनाज्ञाननाशेसातितदेवप्राप्यतेनान्यादित्यर्थः ॥ ३३ ॥ विदिताविदितादिति ॥ विदितंकार्यंघटादि ॥ अविदितंकारणंमायारूपंतस्मादन्यदित्यर्थः॥ तथाचश्रुतिः॥ अन्यदेवतद्विदितादथोअविदितादधीति॥ एतदर्थस्तुमत्कृतेकेनोपनिषद्भाष्यव्याख्यानेद्रष्टव्यः ॥ यथादर्शेप्रतिबिंबंपततितद्वदात्मन्यस्मिन्देहेतुभवोभवतीत्यर्थः ॥ यथाजलेप्रतिबिंबंपूर्वापेक्षयाविविक्तंतथापितृलोकेनुभवोभवतीत्यर्थः ॥ ३४ ॥ ममलोकेमणिद्वीपे ॥ छायातपयोरिवात्यंतविविक्तानुभवइत्यर्थः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ नोचेन्महान्विनाशइति ॥ तथाचश्रुतिः ॥ इहचेदवेदीदथसत्यमस्तिनचेदिहावेदीन्महती

तत्रगत्वाऽखिलान्भोगाननिच्छन्नपिचर्च्छति ॥ तदंतेममचिद्रूपज्ञानंसम्यग्भवेन्नग ॥ ३० ॥ तेनमुक्तःसदैवस्याज्ज्ञानान्मुक्तिर्नचान्यथा ॥ इहैवयस्यज्ञानं स्याद्धृद्गतप्रत्यगात्मनः ॥ ३१ ॥ ममसंवित्परतनोस्तस्यप्राणाव्रजंतिन ॥ ब्रह्मैवसंस्तदाप्नोतिब्रह्मैवब्रह्मवेदयः ॥ ३२ ॥ कंठचामीकरसममज्ञानात्तुतिरोहितम् ॥ ज्ञानादज्ञाननाशेनलब्धमेवहिलभ्यते ॥ ३३ ॥ विदिताविदितादन्यन्नगोत्तमवपुर्मम ॥ यथादर्शेतथाऽऽत्मनियथाजलेतथापितृलोके ॥ ३४ ॥ छायातपौयथास्वच्छौविविक्तौतद्वदेवहि ॥ ममलोकेभवेज्ज्ञानंद्वैतभानविवर्जितम् ॥ ३५ ॥ यस्तुवैराग्यवानेवज्ञानहीनोम्रियेतचेत् ॥ ब्रह्मलोकेवसेन्नित्यंयावत्कल्पंततःपरम् ॥ ३६ ॥ शुचीनांश्रीमतांगेहेभवेत्तस्यजनिःपुनः ॥ करोतिसाधनंपश्चात्ततोज्ञानंहिजायते ॥ ३७ ॥ अनेकजन्मभीराजञ्ज्ञानंस्यान्नैकजन्मना ॥ ततःसर्वप्रयत्नेनज्ञानार्थंयत्नमाश्रयेत् ॥ ३८॥ नोचेन्महान्विनाशःस्याज्जन्मैतद्दुर्लभंपुनः ॥ तत्राऽपिप्रथमेवर्णेवेदप्राप्तिश्चदुर्लभा ॥ ३९ ॥ शमादिषट्कसंपत्तिर्योगसिद्धिस्तथैवच ॥तथोत्तमगुरुप्राप्तिःसर्वमेवाऽत्रदुर्लभम् ॥ ४० ॥ तथैंद्रियाणांपटुतासंस्कृतत्वंतनोस्तथा ॥ अनेकजन्मपुण्यैस्तुमोक्षेच्छाजायतेततः॥४१॥साधनेसफलेप्येवंजायमानेऽपियोनरः ॥ ज्ञानार्थंनैवयततेतस्यजन्मनिरर्थकम् ॥ ४२ ॥ तस्माद्राजन्यथाशक्त्याज्ञानार्थंयत्नमाश्रयेत् ॥ पदेपदेऽश्वमेधस्यफलमाप्नोतिनिश्चितम् ॥ ४३ ॥ घृतमिवपयसिनिगूढंभूतेभूतेचवसतिविज्ञानम् ॥ सततंमंथयितव्यंमनसामंथानभूतेन ॥ ४४ ॥ ज्ञानंलब्ध्वाकृतार्थःस्यादितिवेदांतडिंडिमः ॥ सर्वमुक्तंसमासेनकिंभूयःश्रोतुमिच्छसि ॥ ४५ ॥ इतिश्रीदे०भा० सप्तमस्कंधेदेवीगीतायांसप्तत्रिंशोऽध्यायः ॥ ॥ ३७ ॥ हिमालयउवाच ॥ कतिस्थानानिदेवेशिद्रष्टव्यानिमहीतले ॥ मुख्यानिचपवित्राणिदेवीप्रियतमानिच ॥ १ ॥

विनष्टिरिति ॥ प्रथमेवर्णेब्राह्मणवर्णेतत्रापिजन्मदुर्लभंतत्रापिवेदप्राप्तिर्दुर्लभा ॥ ३९ ॥ ४० ॥ संस्कृतत्वंवेदोक्तसंस्कारसंस्कृतत्वम् ॥ ४१ ॥ ४२ ॥ श्रवणादिषुप्रवृत्तस्यक्षणेक्षणेऽश्वमेधफलंभवतीत्याह । पदेपदेइतिक्षणेक्षणेइत्यर्थः ॥ ४३ ॥ उपदेशसारंभगवतीवदति । घृतमिवेति ॥ पयसिदुग्धेघृतमिवभूतेभूतेसर्वदेहेष्वित्यर्थः ॥ विज्ञानंब्रह्मवसतितिरोहितंतन्मनसामंथानभूतेनमंथयितव्यंमंथनेनपयसःसकाशात्घृतामिवपृथक्कुर्यादित्यर्थः ॥ इयमपिश्रुतिरवकंठरवेणोपात्ता ॥ ४४ ॥ उपसंहरति । सर्वमुक्तमिति ॥ ४५ ॥ इतिश्रीदेवीभागवतटीकेसप्तमस्कंधेसप्तत्रिंशोध्यायः ॥ ३७ ॥ पंचाशद्भिरथाध्यायैःपद्यैरत्रमहोत्सवाः ॥ व्रतानिदेव्याःस्थानानिकीर्त्यंतेसंग्रहेणतु ॥ १ ॥ पूर्वमत्स्थानदर्शनश्रद्धेत्युक्तंतथाव्रतानिममदिव्यानीत्युक्तंतथामदुत्सवदिदृक्षाचमदुत्सवकृतिस्तथेत्युक्तम् ॥ तत्रतानिकानिस्थानानिव्रतानिचकानिकेतउत्सवाइत्येतत्सर्वंपृच्छति । कतिस्थानानीति ॥ १ ॥

॥ २ ॥ यस्मादहंसर्वरूपिणीतस्मात्सर्वंदृश्यमात्रंममसांविद्रूपिण्याः सर्वाधिष्ठानभूतायाःस्थानंसर्वस्यमायिकल्पितत्वात् ॥ तथासर्वेऽपिकालाव्रतात्मकाः यस्मिन्कालेयद्यत्क्रियतेमत्प्रीत्यर्थं तत्सर्वंममव्रतमेवममसर्वकालात्मकत्वात् ॥ तथाउत्सवाअपीत्यर्थः ॥ ३ ॥ ४ ॥ कोलापुरंदक्षिणदेशे ॥ मातुःपुरंसह्याद्रिपर्वते ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ चंद्रलानामदेवीकर्णाटदेशेवर्तते ॥ ९ ॥ १० ॥ चिंदंबरेहालास्यस्थाने ॥ ११ ॥ एकांबरंस्थानंभुवनेश्वरइतिनाम्नापुरुषोत्तमक्षेत्रसंन्निधौवर्तते ॥ परशक्त्याभुवनेश्वर्याप्रतिष्ठितंतत्स्थानंतस्मिन्स्थानेऽपिभुवनेश्वर्यहंतिष्ठा

व्रतान्यपितथायानितुष्टिदान्युत्सवाअपि ॥ तत्सर्वंवदमेमातःकृतकृत्योयतोनरः ॥ २ ॥ श्रीदेव्युवाच ॥ सर्वंदृश्यंममस्थानंसर्वेकालाव्रतात्मकाः ॥ उत्सवाःसर्वकालेषुयतोऽहंसर्वरूपिणी ॥ ३ ॥ तथापिभक्तवात्सल्यात्किंचित्किंचिदथोच्यते ॥ शृणुष्वाऽवहितोभूत्वानगराजवचोमम ॥ ४ ॥ कोलापुरंमहास्थानंयत्रलक्ष्मीःसदास्थिता ॥ मातुःपुरंद्वितीयंचरेणुकाधिष्ठितंपरम् ॥ ५ ॥ तुलजापुरंतृतीयंस्यात्सप्तशृंगंतथैवच ॥ हिंगुलायामहास्थानंज्वालामुख्यास्तथैवच ॥ ६ ॥ शाकंभर्याःपरंस्थानंभ्रामर्याःस्थानमुत्तमम् ॥ श्रीरक्तदंतिकास्थानंदुर्गास्थानंतथैवच ॥ ७ ॥ विंध्याचलनिवासिन्याःस्थानंसर्वोत्तमोत्तमम् ॥ अन्नपूर्णामहास्थानंकांचीपुरमनुत्तमम् ॥ ८ ॥ भीमादेव्याःपरंस्थानंविमलास्थानमेवच ॥ श्रीचंद्रलामहास्थानंकौशिकीस्थानमेवच ॥ ९ ॥ नीलांबायाःपरंस्थानंनीलपर्वतमस्तके ॥ जांबूनदेश्वरीस्थानंतथाश्रीनगरंशुभम् ॥ १० ॥ गुह्यकाल्यामहास्थानंनेपालेयत्प्रतिष्ठितम् ॥ मीनाक्ष्याःपरमंस्थानंयच्चप्रोक्तंचिदंबरे ॥ ११ ॥ वेदारण्यंमहास्थानंसुन्दर्याःसमधिष्ठितम् ॥ एकांबरंमहास्थानंपरशक्त्याप्रतिष्ठितम् ॥ १२ ॥ महालक्षापरंस्थानंयोगेश्वर्यास्तथैवच ॥ तथानीलसरस्वत्याःस्थानंचीनेषुविश्रुतम् ॥ ॥ १३ ॥ वैद्यनाथेतुबगलास्थानंसर्वोत्तमंमतम् ॥ श्रीमच्छ्रीभुवनेश्वर्यामणिद्वीपंममस्मृतम् ॥ १४ ॥ श्रीमत्त्रिपुरभैरव्याःकामाख्यायोनिमंडलम् ॥ भूमंडलेक्षेत्ररत्नंमहामायाधिवासितम् ॥ १५ ॥ नातःपरतरंस्थानंक्वचिदस्तिधरातले ॥ प्रतिमासंभवेद्देवीयत्रसाक्षाद्रजस्वला ॥ ॥ १६ ॥ तत्रत्यादेवताःसर्वाःपर्वतात्मकतांगताः ॥ पर्वतेषुवसंत्येवमहत्योदेवताअपि ॥ १७ ॥ तत्रत्यापृथिवीसर्वादेवीरूपास्मृताबुधैः ॥ नातःपरतरंस्थानंकामाख्यायोनिमंडलात् ॥ १८ ॥ गायत्र्याश्चपरंस्थानंश्रीमत्पुष्करमीरितम् ॥ अमरेशेचंडिकास्यात्प्रभासेपुष्करेक्षिणी ॥ १९ ॥ नैमिषेतुमहास्थानेदेवीसालिङ्गधारिणी ॥ पुरुहूतापुष्कराक्षेअषाढौचरतिस्तथा ॥ २० ॥ चंडमुंडीमहास्थानेदंडिनीपरमेश्वरी ॥ भारभूतौभवेद्भूतिर्नाकुलेनकुलेश्वरी ॥ २१ ॥

मीत्यर्थः ॥ १२ ॥ महालसास्थानंदक्षिणदेशेमल्लारिस्थानमितिप्रसिद्धंतदस्ति योगेश्वरीस्थानंवराटदेशेऽस्ति ॥ चीनेषुचीनदेशेषु ॥ १३ ॥ मणिद्वीपंतृतीयस्कंधेवर्णितंतन्ममभुवनेश्वर्याः स्मृतमित्यर्थः ॥ १४ ॥ कामाख्यायायामहादेव्याःसतीदेहेनावतीर्णायायोनिमंडलंयत्रपतितंकामरूदेशेकालिकापुराणेयस्यमहद्वर्णनंतत्कामाख्यायोनिमंडलंत्रिपुरभैरव्याःस्थानमित्यर्थः ॥ तस्यमहिमानंवर्णयति ॥ भूमंडलेइति ॥ १५ ॥ रजस्वलारजोवतीएतादृशंतज्जागृतंस्थानमित्यर्थः ॥ १६ ॥ पर्वतात्मकतांगताइति ॥ कालिकापुराणेसर्वमेतत्स्पष्टम् ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

॥ २२ ॥ महाकालेउज्जयिन्याम् ॥ मध्यमाभिधेमध्यमेश्वरस्थाने ॥ २३ ॥ नाकुलेस्थानेस्वायंभुवींदेवीवर्ततेइत्यर्थः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ छगलंडके इदंस्थानंदक्षिणदेशे समुद्रसन्निधौतिष्ठति ॥ २८ ॥ २९ ॥ हृल्लेखापदव्युत्पत्तिर्यामलेभुवनेश्वरीरहस्ये ॥ हृदिलेखेवजागर्तिप्राणशक्तिरियंपरा । हृल्लेखाकथ्यतेतस्मादिति ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ व्रतमनंततृतीयाख्यमिति ॥ इमानितृतीयाव्रतानिमत्स्यपुराणेप्रसिद्धानि ॥ तद्विधिश्चतत्रैवोक्तः ॥ ३७ ॥ ३८ ॥ यत्रप्रदोषकाले ॥ ३९ ॥ निशामुखेरज

चंद्रिकातुहरिश्चंद्रेश्रीगिरौशांकरीस्मृता ॥ जप्येश्वरेत्रिशूलास्यात्सूक्ष्माचाम्रातकेश्वरे ॥ २२ ॥ शांकरीतुमहाकालेशर्वाणीमध्यमाभिधे ॥ केदाराख्येमहाक्षेत्रेदेवीसामार्गदायिनी ॥२३॥ भैरवाख्येभैरवीसागयायांमंगलास्मृता ॥ स्थाणुप्रियाकुरुक्षेत्रेस्वायंभुव्यपिनाकुले ॥२४॥ कनखलेभवेदुग्राविश्वेशाविमलेश्वरे ॥ अट्टहासेमहानंदामहेंद्रेतुमहांतका ॥२५॥ भीमेभीमेश्वरीप्रोक्तास्थानेवस्त्रापथेपुनः॥ भवानीशांकरीप्रोक्तारुद्राणीत्वर्धकोटिके ॥ २६ ॥ अविमुक्तेविशालाक्षीमहाभागामहालये ॥ गोकर्णेभद्रकर्णीस्याद्भद्रास्याद्भद्रकर्णके ॥२७॥ उत्पलाक्षीसुवर्णाक्षेस्थाण्वीशास्थाणुसंज्ञिके ॥ कमलालयेतुकमलाप्रचंडाछगलंडके ॥ २८ ॥ कुरंडलेत्रिसंध्यास्यान्माकोटेमुकुटेश्वरी ॥ मंडलेशेशांडकीस्यात्कालीकालंजरेपुनः ॥ २९ ॥ शंकुकर्णेध्वनिःप्रोक्तास्थूलास्यात्स्थूलकेश्वरे ॥ ज्ञानिनांहृदयांभोजेहृल्लेखापरमेश्वरी ॥ ३० ॥ प्रोक्तानीमानिस्थानानिदेव्याःप्रियतमानिच ॥ तत्तत्क्षेत्रस्यमाहात्म्यंश्रुत्वापूर्वंनगोत्तम ॥ ३१ ॥ तदुक्तेनविधानेनपश्चाद्देवींप्रपूजयेत् ॥ अथवासर्वक्षेत्राणिकाश्यांसंतिनगोत्तम ॥ ३२ ॥ तत्रनित्यंवसेन्नित्यंदेवीभक्तिपरायणः ॥ तानिस्थानानिसंपश्यञ्जपन्देवींनिरंतरम् ॥ ३३ ॥ ध्यायंस्तच्चरणांभोजंमुक्तोभवतिबंधनात् ॥ इमानिदेवीनामानिप्रातरुत्थाययःपठेत् ॥ ३४ ॥ भस्मीभवंतिपापानितत्क्षणान्नगसत्वरम् ॥ श्राद्धकालेपठेदेतान्यमलानिद्विजाग्रतः ॥ ३५ ॥ मुक्तास्तत्पितरःसर्वेप्रयांतिपरमांगतिम् ॥ अधुनाकथयिष्यामिव्रतानितवसुव्रत ॥ ३६ ॥ नारीभिश्चनरैश्चैवकर्तव्यानिप्रयत्नतः ॥ व्रतमनंततृतीयाख्यंरसकल्याणिनीव्रतम् ॥ ३७ ॥ आर्द्रानंदकरंनाम्नातृतीयायाव्रतंचयत् ॥ शुक्रवारव्रतंचैवतथाकृष्णचतुर्दशी ॥ ३८ ॥ भौमवारव्रतंचैवप्रदोषव्रतमेवच ॥ यत्रदेवोमहादेवोदेवींसंस्थाप्यविष्टरे ॥ ३९ ॥ नृत्यंकरोतिपुरतःसार्धंदेवैर्निशामुखे ॥ तत्रोपोष्यरजन्यादौप्रदोषेपूजयेच्छिवाम् ॥ ४० ॥ प्रतिपक्षंविशेषेणतद्देवीप्रीतिकारकम् ॥ सोमवारव्रतंचैवममाऽतिप्रियकृन्नग ॥ ४१ ॥ तत्रापिदेवींसंपूज्यरात्रौभोजनमाचरेत् ॥ नवरात्रद्वयंचैवव्रतंप्रीतिकरंमम ॥ ४२ ॥ एवमन्यान्यपिविभोनित्यनैमित्तिकानिच ॥ व्रतानिकुरुतेयोवैमत्प्रीत्यर्थंविमत्सरः ॥ ४३ ॥ प्राप्नोतिममसायुज्यंसमेभक्तःसमेप्रियः ॥ उत्सवानपिकुर्वीतदोलोत्सवमुखान्विभो ॥ ४४ ॥

नीमुखे तस्मात्प्रदोषव्रतंदेव्याःशिवस्यचसिद्धम् ॥ ४० ॥ ४१ ॥ नवरात्रद्वयंचैवेति ॥ तच्चशारदंवासंतिकंच ॥ चकारेणपूर्वोक्तमपिमाघाषाढस्थंनवरात्रद्वयंग्राह्यम् ॥४२॥ एवमन्यान्यपीति ॥ अन्यान्यप्युपांगललिताव्रतादीनिव्रतानि पुराणांतरेषुतंत्रांतरेष्वप्युक्तानीत्यर्थः ॥४३॥ दोलोत्सवमुखानिति ॥ तद्विधिश्चतत्रैवोक्तः॥ देवीपुराणे चैत्रशुक्लतृतीयायांकुर्याद्दोलोत्सवंबुधः ॥ तृतीयायांयजेद्देवींशंकरेणसमन्विताम् ॥ कुंकुमागुरुकर्पूरमणिवस्त्रसुगंधकैः ॥ स्रग्गंधधूपदीपैश्चदमनेनविशेषतः ॥ आंदोलयेत्ततोवत्सशिवोमातुष्टयेसदेति ॥ ४४ ॥

शयनोत्सवमिति ॥ तत्कालश्चवामनपुराणेउक्तः ॥ आषाढेपौर्णमासीतउत्तरायातृतीयातद्रूपः ॥ तथाजागरणोत्सवकालश्चकार्तिकपौर्णमासीतउत्तरायातृतीयातद्रूपः ॥ शयनोत्सव विधिर्जागरणोत्सवविधिश्चसर्वदेवतासुसमानः ॥ देवताभेदेनतुकालभेदएवकेवलंभिन्नः सर्वंचेदंवामनपुराणेस्पष्टम् ॥ रथोत्सवमिति ॥ तद्विधिश्चोमासंहितायांशिवपुराणे ॥आषाढशुक्ल पक्षीयतृतीयायांरथोत्सवम् ॥ देव्याःप्रियतमंकुर्याद्यथावित्तानुसारतः ॥ रथंपृथ्वींविजानीयाद्रथांगेचंद्रभास्करौ ॥ वेदानश्वान्विजानीयात्सारथिंपद्मसंभवम् ॥ नानामणिगणाकीर्णं पुष्पमालाविराजितम् ॥ एवंरथंकल्पयित्वातस्मिन्संस्थापयेच्छिवाम् ॥ लोकसंरक्षणार्थायलोकान्द्रष्टुंपरांबिका ॥ रथमध्येसंस्थितोतिभावयेन्मातिमान्नरः ॥ रथेप्रचलितेमंदंजयशब्द मुदीरयेत् ॥ पाहिदेविजनानस्मान्प्रपन्नान्दीनवत्सले ॥ इतिवाक्यैस्तोषयेच्चनानावादित्रनिःस्वनैः ॥ सीमांतेतुरथंनीत्वातत्रसंपूजयेद्रथे ॥ नानास्तोत्रैस्ततःस्तुत्वाप्यानयेत्तांस्ववेश्म नीति ॥ दमनोत्सवश्चैत्रपौर्णमास्याम् ॥ तद्विधिश्चधर्मशास्त्रेतंत्रेषुचप्रसिद्धएव ॥ ४५ ॥ पवित्रोत्सवमिति ॥ सचश्रावणपौर्णमास्याम् ॥ तद्विधिश्चधर्मशास्त्रेतंत्रेचप्रसिद्धएव ॥ ४६ ॥ ॥४७॥ सुमादिभिःकुसुमादिभिरेतान्कुमारीबटुकब्राह्मणान्पूजयेदित्यर्थः ॥४८॥४९॥ इतिश्रीदेवीभागवततिलकेसप्तमस्कंधेदेवीगीतायामष्टात्रिंशोऽध्यायः ॥३८॥ सप्ताधिकैश्चत्वारिं

शयनोत्सवंयथाकुर्यात्तथाजागरणोत्सवम् ॥ रथोत्सवंचमेकुर्याद्दमनोत्सवमेवच ॥४५॥ पवित्रोत्सवमेवापिश्रावणेप्रीतिकारकम् ॥ ममभक्तः सदाकुर्यादेवमन्यान्महोत्सवान् ॥ ४६ ॥ मद्भक्तान्भोजयेत्प्रीत्यातथाचैवसुवासिनीः ॥ कुमारीर्बटुकांश्चापिमद्बुद्ध्यातद्गतांतरः ॥ ४७ ॥ वित्तशाठ्येनरहितोयजेदेतान्सुमादिभिः ॥ यएवंकुरुतेभक्त्याप्रतिवर्षमतंद्रितः ॥ ४८ ॥ सधन्यःकृतकृत्योऽसौमत्प्रीतेःपात्रमंजसा ॥ सर्वमु क्तंसमासेनममप्रीतिप्रदायकम् ॥ नाऽशिष्यायप्रदातव्यंनाऽभक्तायकदाचन ॥ ४९ ॥ इतिश्रीदेवीभागवतेमहापुराणेस० देवीगीतायामष्टत्रिंशो ऽध्यायः॥ ३८ ॥ हिमालयउवाच ॥ देवदेविमहेशानिकरुणासागरेंबिके ॥ ब्रूहिपूजाविधिंसम्यग्यथावदधुनानिजम् ॥ १ ॥ श्रीदेव्युवाच ॥ वक्ष्येपूजाविधिंराजन्नंबिकायायथाप्रियम् ॥ अत्यंतश्रद्धयासार्धंशृणुपर्वतपुंगव ॥ २ ॥ द्विविधाममपूजास्याद्बाह्याचाऽभ्यंतराऽपिच ॥ बा ह्याऽपिद्विविधाप्रोक्तावैदिकीतांत्रिकीतथा ॥ ३ ॥ वैदिक्यर्चाऽपिद्विविधामूर्तिभेदेनभूधर ॥ वैदिकीवैदिकैःकार्यावेददीक्षासमन्वितैः ॥ ४ ॥ तंत्रोक्तदीक्षावद्भिस्तुतांत्रिकीसंश्रिताभवेत् ॥ इत्थंपूजारहस्यंचनज्ञात्वाविपरीतकम् ॥ ५ ॥

शत्पद्यैरथपूजनम् ॥ भगवत्याःकथ्यतेत्रयेनदेवीप्रसीदतिं॥१॥पूर्वंबहुषुस्थलेषुपूजायामहिमानंश्रुत्वापूजाविधिंपृच्छति । देवदेवीति ॥१॥२॥३॥ मूर्तिभेदेनवक्ष्यमाणेन ॥ वेदोक्तदी क्षासमन्वितैर्वैदिकैः ॥ वैदिकीवेदोक्तप्रकारापूजाकर्तव्येत्यर्थः ॥ साचविराट्स्वरूपस्यपूर्वंदेव्यादर्शितस्यध्यानरूपाप्रथमा ॥ द्वितीयातुकरचरणादिविशिष्टांसुकुमारांभगवतीभूतिंध्या त्वावेदोक्तमंत्रैरावाहनादिविसर्जनांतंकुर्य्यादितिद्वितीयापूजा ॥ इत्येवंमूर्तिभेदेनवैदिकीपूजाद्विविधेत्यर्थः ॥ ४ ॥ तांत्रिक्याअधिकारिणमाह ॥ तंत्रोक्तेति ॥ कुंडमंडपादिपुरःसरंतां त्रिकमंत्रैर्दीक्षांकुर्वद्भिस्तांत्रिकीतंत्रोक्तविधिनापूजाकर्तव्येत्यर्थः ॥ नज्ञात्वेति ॥ यस्ययस्यांपूजायामधिकारस्तत्रतंनज्ञात्वेत्यर्थः ॥ विपरीतकंवैदिकस्तांत्रिकंकरोतितांत्रिकोवैदिकंक रोतीत्येवंरूपंयःकरोतिमूढः सपतत्येवनरकादिष्वितिशेषः ॥ तथाचश्रुतिः । योवैस्वांदेवतामतियजतेनस्वायैदेवतायैच्यवतेनपरांप्राप्नोतिपापीयान्भवतीति । अतियजतेत्यजाति ॥ च्यवतेगृह्णाति । स्वांदेवतामिति । स्वोचितमार्गोपलक्षणम् ॥ ५ ॥

तत्रवैदिक्यर्चायाएवस्वरूपंप्राशस्त्यंचवदति । तत्रयावैदिकीति ॥ प्रथमामिति ॥ वैदिकीतांत्रिकीतथेतिवाक्योक्तांप्रथमांवैदिकीमित्यर्थः ॥६॥७ ॥ ८ ॥ शांत्यादियुक्तोवैदिकींपूजां
कुर्यादित्याह । शांतःसमाहितइति ॥ ९ ॥ तत्परस्तन्ममविराट्स्वरूपमेवपरमुत्कृष्टंयस्यसततत्परः ॥ १० ॥ मामेवविराट्स्वरूपाम् ॥ ११ ॥ १२ ॥ १३ ॥ ननुतर्हिकेवलंकर्मनिरर्थ
कमितिचेन्नेत्याह॥धर्मात्संजायतेभक्तिरिति ॥ यदिकर्मनाचरितंतदापापक्षयाभावाद्भक्तिरेवदुर्लभास्यात्॥भक्तेरभावाच्चपरंब्रह्माप्यत्यंतंदुर्लभंस्यादितिकर्माचरणंसार्थकमेवेतिभावः ॥
परामिति ॥ ज्ञानमित्यर्थः ॥१४॥ तच्चकर्मनान्यशास्त्रोदितम् ॥ किंतुवेदोक्तमेवेत्याह । श्रुतिस्मृतिभ्यामुदितामिति ॥ यदुदितंकर्मसधर्मइत्यर्थः ॥ १५ ॥ किमितिवेदोक्तएवधर्मोनान्य
शास्त्रोदितइतिचेत्तत्राह।सर्वज्ञादिति॥ सर्वज्ञात्सर्वशक्तेर्मत्तोमत्स्वरूपाद्वेदःसमुत्थितःतदाममाज्ञानाभावाद्यन्मयोक्तंतत्सत्यमेवेतिश्रुतिर्नाऽप्रमाणम । वेदातिरिक्तशास्त्राणित्वज्ञपुरुषबुद्धि

करोतियोनरोमूढःसपतत्यैवसर्वथा ॥ तत्रयावैदिकीप्रोक्ताप्रथमातांवदाम्यहम् ॥ ६ ॥ यन्मेसाक्षात्परंरूपंदृष्टवानसिभूधर ॥ अनंतशीर्षनयन
मनंतचरणंमहत् ॥ ७ ॥ सर्वशक्तिसमायुक्तंप्रेरकंयत्परात्परम् ॥ तदेवपूजयेन्नित्यंनमेद्ध्यायेत्स्मरेदपि॥८॥इत्येतत्प्रथमाचार्याःस्वरूपंकथितंन
ग ॥ शांतः समाहितमनादंभाहंकारवर्जितः ॥ ९ ॥ तत्परोभवतद्याजीतदेवशरणंव्रज ॥ तदेवचेतसापश्यजपध्यायस्वसर्वदा॥१०॥अनन्यया
प्रेमयुक्तभक्त्यामद्भावमाश्रितः ॥ यज्ञैर्यजतपोदानैर्मामेवपरितोषय॥११॥इत्थंममाऽनुग्रहतोमोक्ष्यसेभवबंधनात्॥मत्परायेमदासक्तचिताभक्त
वरामताः॥१२॥प्रतिजानेभवादस्मादुद्धराम्यचिरेणतु॥ध्यानेनकर्मयुक्तेनभक्तिज्ञानेनवापुनः ॥१३॥ प्राप्याऽहंसर्वथाराजन्नतुकेवलकर्मभिः॥
धर्मात्संजायतेभक्तिर्भक्त्या संजायतेपरम् ॥ १४॥श्रुतिस्मृतिभ्यामुदितंयत्सधर्मःप्रकीर्तितः॥अन्यशास्त्रेणयःप्रोक्तोधर्माभासःसउच्यते॥१५॥
सर्वज्ञात्सर्वशक्तेश्चमत्तोवेदःसमुत्थितः ॥ अज्ञानस्यममाऽभावादप्रमाणानचश्रुतिः ॥ १६ ॥ स्मृतयश्चश्रुतेरर्थंगृहीत्वैवचनिर्गताः ॥ मन्वा
दीनांश्रुतीनांचततःप्रामाण्यमिष्यते ॥ १७ ॥ क्वचित्कदाचित्तंत्रार्थकटाक्षेणपरोदितम् ॥ धर्मंवदंतिसोंशस्तुनैवग्राह्योऽस्तिवैदिकैः ॥ १८ ॥
अन्येषांशास्त्रकर्तॄणामज्ञानप्रभवत्वतः ॥ अज्ञानदोषदुष्टत्वात्तदुक्तेर्नप्रमाणता ॥१९ ॥ तस्मान्मुमुक्षुधर्मार्थंसर्वथावेदमाश्रयेत् ॥ राजाज्ञाचय
थालोकेहन्यतेनकदाचन ॥ २० ॥ सर्वेशान्याममाज्ञासाश्रुतिस्त्याज्याकथंनृभिः ॥ मदाज्ञारक्षणार्थंतुब्रह्मक्षत्रियजातयः ॥ २१ ॥

कल्पितानिततश्चाज्ञप्रणीतत्वादप्रमाणान्येवेतितदुक्तोधर्मोधर्माभासःवेदोक्तएवतुधर्मइत्यर्थः॥१६॥ननुमन्वादिस्मृतीनामप्येवंरीत्याप्रामाण्याभावआगतइतिचेत्तत्राहं । स्मृतयश्चेति ॥
श्रुत्यर्थएवतुस्मृतिभिरुच्यतेततोमूलभूतश्रुतेःप्रामाण्यात्तन्मूलकस्मृतीनामपिप्रामाण्यमव्याहतमेवेत्यर्थः ॥१७॥ ननुमन्वादिस्मृतीनांपुराणानांचसप्रमाणत्वेतप्तमुद्राविधानवामाचारादि
वेदविरुद्धाचारस्यचपुराणस्मृतिषुसत्त्वात्ग्राह्यत्वंस्यादितिचेत्तत्राह।क्वचित्कदाचिदिति॥तंत्रार्थकटाक्षेणतंत्रतंत्रार्थावलोकनेनपरोदितंवेदातिरिक्तशास्त्रोदितमपिधर्मंवदंति सधर्मःप्रत्य
क्षश्रुतिरुद्धत्वात्तैरुक्तोपिनवैदिकैर्ग्राह्यइत्यर्थः॥१८॥तत्रहेतुमाह । अन्येषांशास्त्रकर्तॄणामिति॥१९॥२०॥सर्वेशान्याःसर्वैश्वर्यामममसाश्रुतिराज्ञास्तिसानृभिःकथंत्याज्येत्यर्थः ॥ तथाचकू
र्मपुराणेदेवीवाक्यंद्वादशाध्याये॥ममैवाज्ञापराशक्तिर्वेदसंज्ञापुरातनी॥ऋग्यजुःसामरूपेणसर्गादौसंप्रवर्ततइति ममाज्ञाभूतश्रुतिरक्षणार्थंमयामहान्यत्नःकृतोस्तीत्याह॥ मदाज्ञेति ॥२१॥

ततस्तस्माद्वेतोज्ञेयंश्रुतेर्वचोमेममरहस्यमस्तीति ॥ २२ ॥ वेषान्शाकंभर्यादिरामकृष्णाद्यवतारान् ॥ अतएवेति ॥ वेदसंरक्षकादेवास्तन्नाशकादैत्याइतिविभागोवेदसद्भावादेवजातइत्यर्थः
॥ २३ ॥ २४ ॥ २५ ॥ ननुतर्हिकिमर्थंतंत्राणिशिवेनप्रणतानीतिचेत्तत्राह । अन्यानियानीतिं ॥ २६ ॥ तेषांनामान्याह । वामंकापालिकमिति ॥ २७ ॥ पापिनांवेदधर्माचरणेसद्गतिः
स्यादितिकर्मवैचित्र्याभावात्प्रपंचवैचित्र्यं नस्यादितितेषांनानाफलप्रदर्शनेनतत्रप्रवृत्तयेमोहार्थमेववेदश्रद्धाप्रच्युत्यर्थंचतंत्राणिप्रणीतानीत्यर्थः ॥ किंचशापदग्धानांवेदबहिष्कृतानांब्राह्म
णानांसोपानक्रमेणजन्मांतरेवेदाधिकारप्राप्त्यर्थंकिंचित्परमेश्वरोपासनंवक्तव्यमितितदनुग्रहार्थंचतंत्राणिप्रणीतानीत्याह । दक्षशापादिति ॥ शापकथाचकूर्मपुराणेसूतसंहितायामस्मि
न्द्वादशस्कंधेचप्रसिद्धापुराणांतरेषुच ॥ २८ ॥ २९ ॥ ३० ॥ ननुतर्हितंत्राणिसर्वथात्याज्यानीतिपर्यवसन्नमितिचेन्नेत्याह । तत्रवेदाविरुद्धोंशइति ॥ तंत्रेषुद्विविधोंशोस्ति ॥ एकोवेदवि

मयासृष्टास्ततोज्ञेयंरहस्यंमेश्रुतेर्वचः ॥ यदायदाहिधर्मस्यग्लानिर्भवतिभूधर ॥ २२ ॥ अभ्युत्थानमधर्मस्यतदावेषान्बिभर्म्यहम् ॥ देव
दैत्यविभागश्चाऽप्यतएवाऽभवन्नृप ॥ २३ ॥ येनकुर्वंतितद्धर्मंतच्छिक्षार्थंमयासदा ॥ संपादितास्तुनरकास्त्रासोयच्छ्रवणाद्भवेत् ॥ २४ ॥
योवेदधममुज्झित्यधर्ममन्यंसमाश्रयेत् ॥ राजाप्रवासयेद्देशान्निजादेतानधर्मिणः ॥ २५ ॥ ब्राह्मणैर्नचसंभाष्याःपंक्तिग्राह्यानचद्विजैः ॥ अन्या
नियानिशास्त्राणिलोकेस्मिन्विविधानिच ॥ २६ ॥ श्रुतिस्मृतिविरुद्धानितामसान्येवसर्वशः ॥ वामंकापालकंचैवकौलकंभैरवागमः ॥ २७ ॥
शिवेनमोहनार्थायप्रणीतोनान्यहेतुकः ॥ दक्षशापाद्भृगोःशापाद्दधीचस्यचशापतः ॥ २८ ॥ दग्धायेब्राह्मणवरावेदमार्गबहिष्कृताः ॥
तेषामुद्धरणार्थायसोपानक्रमतःसदा ॥ २९ ॥ शैवाश्चवैष्णवाश्चैवसौराःशाक्तास्तथैवच ॥ गाणपत्याआगमाश्चप्रणीताःशंकरेणतु ॥ ३० ॥
तत्रवेदाविरुद्धोंशोप्युक्तएवक्वचित्क्वचित् ॥ वैदिकैस्तद्ग्रहेदोषोनभवत्येवकर्हिचित् ॥ ३१ ॥ सर्वथावेदभिन्नार्थेनाधिकारीद्विजोभवेत् ॥ वेदा
धिकारहीनस्तुभवेत्तत्राधिकारवान् ॥ ३२ ॥ तस्मात्सर्वप्रयत्नेनवैदिकोवेदमाश्रयेत् ॥ धर्मेणसहितंज्ञानंपरंब्रह्मप्रकाशयेत् ॥ ३३ ॥ सर्वैषणाः
परित्यज्यमामेवशरणंगताः ॥ सर्वभूतदयावंतोमानाहंकारवर्जिताः ॥ ३४ ॥ मच्चित्तामद्गतप्राणामत्स्थानकथनेरताः ॥ संन्यासिनोवनस्था
श्चगृहस्थाब्रह्मचारिणः ॥ ३५ ॥ उपासंतेसदाभक्त्यायोगमैश्वरसंज्ञितम् ॥ तेषांनित्याभियुक्तानामहमज्ञानजंतमः ॥ ३६ ॥ ज्ञानसूर्यप्रकाशेनना
शयामिनसंशयः ॥ इत्थंवैदिकपूजायाःप्रथमायानगाधिप ॥ ३७ ॥

रुद्धोद्वितीयोवेदाविरुद्धः ॥ तत्रवैदिकैर्वेदविरुद्धांशस्त्याज्योवेदाविरुद्धांशस्तुग्राह्यइत्यर्थः ॥ तदुक्तंवायुसंहितायाम् ॥ शैवागमोपिद्विविधःश्रौताश्रौतश्चतन्मयः ॥ श्रुतिसारमयःश्रौतः
स्वतंत्रइतरोमतइत्यादि ॥ श्रौतोग्राह्यस्तुवैदिकैरितिसूतसंहितायाम् ॥ तथापियोंशोमार्गाणां वेदेननविरुद्ध्यते ॥ सोंशः प्रमाणमित्युक्तमिति ॥ इत्थमेतावत्पर्यंतंवैदिकंमतमुपपादि
तम् ॥ तंत्राणांस्वतःप्रामाण्यमंगीकुर्वतांतांत्रिकाणांमतंत्वन्यदेवेतिदिक् ॥ ३१ ॥ ३२ ॥ यस्माद्वेदोक्तएवधर्मस्तस्माद्वेदमेवाश्रयेदित्याह । तस्मादिति ॥ धर्मेणवेदोक्तेन ॥ ३३ ॥ पुन
र्विराट्स्वरूपोपासकस्यनिष्ठामाह । सर्वैषणाइति ॥ ३४ ॥ ३५ ॥ ऐश्वरसंज्ञितंविराट्स्वरूपोपासनाभिधम् ॥ ३६ ॥ प्रथमवैदिकपूजास्वरूपकथनमुपसंहरति इत्थमिति ॥ ३७ ॥

वेदमार्गेणकरचरणादिविशिष्टसुकुमारमूर्तिपूजारूपायाद्वितीयवैदिकपूजायाःस्वरूपमाह । द्वितीयायाइति ॥ ३८ ॥ महापटेवस्त्रे ॥ ३९ ॥ सुकुमारांमूर्तिमाह । सगुणामिति॥४०॥ ॥४१॥४२॥ इत्थंबाह्यपूजाकियत्कालपर्यंतंकर्तव्येतिचेत्तत्राह । यावदांतरेति ॥ आंतरपूजायामधिकारेजातइत्यर्थः ॥ तदुक्तंसूतसंहितायांपंचमाध्यायेशक्तिपूजाप्रकरणे ॥ अथा भ्यंतरपूजायामधिकारोभवेद्यदि ॥ त्यक्त्वाबाह्यामिमांपूजामाश्रयेदपरांबुधइति ॥ ४३ ॥ आंतरपूजास्वरूपमाह । आभ्यंतरेति ॥ संविदिज्ञानरूपेब्रह्मणिमयियच्चेतसोलयस्तद्रूपे इत्यर्थः ॥ ४४ ॥ ४५ ॥ निर्मनस्केननिर्विकल्पेन ॥ योगयुक्तेनभक्तियोगयुक्तेन ॥ ४६ ॥ इयंयामूर्तौपूजासंक्षेपेणोक्तातांविस्तरेणवक्तुंप्रतिजानीते । अतःपरमिति ॥ ४७ ॥ इतिश्रीदे वीभागवततिलकेसप्तमस्कन्धेदेवीगीतायामेकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ पञ्चाधिकैश्चचत्वारिंशद्भिःपद्यैरतःपरम् ॥ बाह्यपूजाविधानंचयथावदभिधीयते ॥ १ ॥ बाह्यपूजांवक्तुमुप

स्वरूपमुक्तंसंक्षेपाद्वितीयायाअथोब्रुवे ॥ मूर्तौवास्थंडिलेवापितथासूर्येंदुमंडले ॥३८॥ जलेऽथवाबाणलिंगेयंत्रेवाऽपिमहापटे ॥ तथाश्रीहृदयांभोजेध्यात्वादेवींपरात्पराम् ॥३९॥ सगुणांकरुणापूर्णांतरुणीमरुणारुणाम् ॥ सौंदर्यसारसीमांतांसर्वावयवसुंदराम् ॥ ४० ॥ शृंगाररससंपूर्णांसदाभक्तार्तिकातराम् ॥ प्रसादसुमुखीमंबांचंद्रखंडशिखंडिनीम् ॥ ४१ ॥ पाशांकुशवराभीतिधरामानंदरूपिणीम् ॥ पूजयेदुपचारैश्चयथावित्तानुसारतः ॥ ४२ ॥ यावदांतरपूजायामधिकारोभवेन्नहि ॥ तावद्बाह्यामिमांपूजांश्रयेज्जातेतुतांत्यजेत् ॥ ४३ ॥ आभ्यंतरातुयापूजासातुसंविल्लयःस्मृतः ॥ संविदेवपरंरूपमुपाधिरहितंमम ॥ ४४ ॥ अतःसंविदिमद्रूपेचेतःस्थाप्यंनिराश्रयम् ॥ संविद्रूपातिरिक्तंतुमिथ्यामायामयंजगत् ॥ ४५ ॥ अतःसंसारनाशायसाक्षिणीमात्मरूपिणीम् ॥ भावयेन्निर्मनस्केनयोगयुक्तेनचेतसा ॥ ४६ ॥ अतःपरंबाह्यपूजाविस्तारःकथ्यतेमया ॥ सावधानेनमनसाशृणुपर्वतसत्तम ॥ ४७ ॥ इति श्रीदेवीभागवतेमहापुराणे सप्तमस्कन्धे देवीगीतायामेकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ श्रीदेव्युवाच ॥ प्रातरुत्थायशिरसिसंस्मरेत्पद्ममुज्ज्वलम् ॥ कर्पूराभंस्मरेत्तत्रश्रीगुरुंनिजरूपिणम् ॥ १ ॥ सुप्रसन्नंलसद्भूषाभूषितंशक्तिसंयुतम् ॥ नमस्कृत्यततोदेवींकुंडलींसंस्मरेद्बुधः ॥ २ ॥ प्रकाशमानांप्रथमेप्रमाणेप्रतिप्रमाणेऽप्यमृतायमानाम् ॥ अंतःपदव्यामनुसंचरंतीमानंदरूपामबलांप्रपद्ये ॥ ३ ॥ ध्यात्वैवंतच्छिखामध्येसच्चिदानंदरूपिणीम् ॥ मांध्यायेदथशौचादिक्रियाःसर्वाःसमापयेत् ॥४॥ अग्निहोत्रंततोहुत्वामत्प्रीत्यर्थंद्विजोत्तमः ॥ होमांतेस्वासनेस्थित्वापूजासंकल्पमाचरेत् ॥ ५ ॥

क्रमते प्रातरुत्थायेति ॥ अष्टपंचभवेत्प्रातरितिधर्मशास्त्रोक्तप्रातःकालेइत्यर्थः ॥ शिरसिस्वमस्तके ब्रह्मरंध्रे पद्मंसहस्रारम् ॥ तत्रतस्मिन्पद्मेनिजरूपिणंनिजगुरुसमानाकारमित्यर्थः ॥ ॥ १ ॥ शक्तिसंयुतंस्वपत्नीसंयुतम् ॥ माताएवगुरुश्चेत्तांपतिसंयुतांध्यायेत् ॥ २ ॥ प्रकाशमानामिति ॥ प्रथमेप्रयाणेब्रह्मरंध्रगमनरूपेप्रकाशमानांचिद्रूपत्वेनभासमानांप्रतिप्रयाणे ब्रह्मरंध्रान्मूलाधारंपुनरागमनेअमृतायमानाम् आनंदामृतभरिताम ॥ अंतःपदव्यांसुषुम्नायामनुसंचरंतींगमनागमनेकुर्वतीमबलांपरांशक्तिंप्रपद्येशरणंगतोस्मीत्यर्थः॥नविद्यतेबलंयस्याः सकाशादन्यत्रेत्यबला ॥ इत्थंयोगिभिःकुंडलिनीसाक्षात्कर्तव्यायोगाभावेभावनावाकर्त्तव्या ॥ ३ ॥ तच्छिखामध्येसायाशिखामूलाधारस्थचिदग्नेःशिखाकुंडलिनीतस्याःशिखायामध्येपरमात्माव्यवस्थितइतितैत्तिरीयश्रुत्युक्तातन्मध्येमांसच्चिदानंदरूपिणींध्यायेदित्यर्थः ॥ सर्वाःक्रियाःसंध्यावंदनांताः ॥ ४ ॥ होमांतेमत्प्रीत्यर्थमग्निहोत्रहोमान्तेइत्यर्थः ॥ ५ ॥

भूतशुद्धिमातृकान्यासौप्रसिद्धौगौरवान्नलिख्येते ॥ हृल्लेखामातृकेति ॥ हृल्लेखामायाबीजंप्रत्यक्षरंमायाबीजंपूर्वंदत्त्वामातृकान्यासोयःकर्तव्यःसहृल्लेखामातृकान्यासः ॥ शारदायांदश विधमातृकान्यासेषुप्रसिद्धः ॥ ६ ॥ ७ ॥ अधर्मादिभिरिति ॥ धर्मज्ञानवैराग्यैश्वर्यान्विदिक्षुपीठखुरत्वेनभावयेत् ॥ अधर्मज्ञानावैराग्यानैश्वर्यान्पूर्वादिचतुर्दिक्षुपाठमात्रत्वेनभावयेत्॥ तत्पीठोपरि मध्येऽनंतायनमः ॥ पद्मायनमः ॥ अंसूर्यमंडलायनमः ॥ मंवह्निमंडलायनमः ॥ संसत्त्वायनमः ॥ रंरजसेनमः ॥ तंतमसेनमः ॥ पूर्वादिदिक्षु ॥ आंआत्मनेनमः ॥ अंअंतरात्मनेनमः ॥ पंपरमात्मनेनमः॥ह्रींज्ञानात्मनेनमः ॥ ततःपद्मस्यपूर्वादिदले ॥ जयायैनमः॥ विजयायैनमः ॥ अपराजितायैनमः ॥ नित्यायैनमः ॥ विलासिन्यैनमः॥दोग्ध्र्यै॥ नमः ॥ अघोरायैनमः मध्येमंगलायैनमः ॥ इतिपीठशक्तीःपूजयेत् ॥ इदंशारदायांस्पष्टम् ॥८॥ ततःप्राणायामैर्विकसितेहृत्पद्मेपंचप्रेतासनेदेवींध्यायेदित्याह । ततोध्यायेदिति ॥९॥ पञ्चप्रेतानाह ॥ ब्रह्माविष्णुश्चेति ॥ १० ॥ किमर्थमेतेत्वदासनतांगताइतितत्राह । पञ्चभूतात्मकाह्येते इति॥भूम्यादिपञ्चभूतानामेतेऽधिपतयोऽहंतुदेवीतेषामुत्पादकंयदव्यक्तंमायाविशि

भूतशुद्धिंपुराकृत्वामातृकान्यासमेवच ॥ हृल्लेखामातृकान्यासंनित्यमेवसमाचरेत् ॥ ६ ॥ मूलाधारेहकारंचहृदयेचरकारकम् ॥ भ्रूमध्येतद्व दीकारंह्रींकारंमस्तकेन्यसेत् ॥ ७ ॥तत्तन्मंत्रोदितानन्यान्न्यासान्सर्वान्समाचरेत् ॥ कल्पयेत्स्वात्मनोदेहेपीठंधर्मादिभिःपुनः ॥ ८ ॥ ततो ध्यायेन्महादेवींप्राणायामैर्विजृंभिते ॥ हृदंभोजेममस्थानेपञ्चप्रेतासनेबुधः ॥ ९ ॥ ब्रह्माविष्णुश्चरुद्रश्चईश्वरश्चसदाशिवः ॥ एतेपंचमहाप्रेताः पादमूलेममस्थिताः ॥ १० ॥ पंचभूतात्मकाह्येतेपञ्चावस्थात्मकाअपि॥अहंत्वव्यक्तचिद्रूपातदतीताऽस्मिसर्वथा ॥ ११ ॥ ततोविष्टरतांया ताःशक्तितंत्रेषुसर्वदा ॥ ध्यात्वैवंमानसैर्भोगैःपूजयेन्मांजपेदपि ॥ १२॥ जपंसमर्प्यश्रीदेव्यैततोऽर्घ्यस्थापनंचरेत् ॥ पात्रासादनकंकृत्वापूजा द्रव्याणिशोधयेत् ॥ १३ ॥ जलेनतेनमनुनाचास्त्रमंत्रेणदेशिकः॥दिग्बंधंचपुराकृत्वागुरून्नत्वाततःपरम्॥१४॥ तदनुज्ञांसमादायबाह्यपीठेततः परम् ॥ हृदिस्थांभावितांमूर्तिंममदिव्यांमनोहराम् ॥ १५ ॥ आवाहयेत्ततःपीठेप्राणस्थापनविद्यया ॥ आसनावाहनेचार्घ्यंपाद्याद्याचमनंत था ॥१६॥ स्नानंवासोद्वयंचैवभूषणानिचसर्वशः ॥ गंधपुष्पंयथायोग्यंदत्त्वादेव्यैस्वभक्तितः॥१७॥ यन्त्रस्थानामावृतीनांपूजनंसम्यगाचरेत् ॥ प्रतिवारमशक्तानांशुक्रवारोनियम्यते ॥ १८ ॥

ष्टंब्रह्मतद्रूपिणीतिभ्योऽधिका तथातेब्रह्मादयोजाग्रत्स्वप्नसुषुप्तितुर्यातीतरूपपंचावस्थाधिपतयोऽहंतुदेवीतुर्यातीतावस्थातोऽप्यधिकंयद्ब्रह्मतद्रूपिणी तस्मात्तेममाऽऽसनतांगताइत्यर्थः॥११॥ तत्रब्रह्मादयश्चत्वारोमंचकखुराः ॥ सदाशिवस्तुफलकस्थानीयःकल्पनीयइतिबोध्यम् ॥ एवंहृदयेप्रथमतोमानसोपचारैःपूजयित्वायथाशक्तिमूलमंत्रंजपित्वाजपंदेव्यैसमर्प्यबाह्यपूजार्थ मर्घ्यस्थापनंचरेदित्याह । ध्यात्वैवमिति ॥ १२ ॥ अर्घ्यस्थापनप्रकारःशारदायांद्रष्टव्योगौरवान्नेहोच्यते ॥ १३ ॥ अस्त्रमन्त्रेणफट्मन्त्राभ्युक्षितजलेनपूजाद्रव्याणिशोधयेदित्यर्थः ॥ दिग्बंधमिति ॥ फट्मंत्रेणस्वपरितोऽग्निप्राकारंभावयेदित्यर्थः ॥ १४ ॥ बाह्यपीठेपूर्वोक्तेयंत्रादौ॥१५॥प्राणस्थापनविद्ययाप्राणप्रतिष्ठामंत्रेण ॥ १६॥१७॥ पुष्पांतंपूजांकृत्वायंत्रस्थाना मावृतीनामावरणदेवतानांपूजनंकुर्यादित्याह । यंत्रस्थानामिति ॥ ताश्चदेवतास्तत्तन्मूर्तिकल्पोक्ताग्राह्याः ॥ प्रतिदिनमावरणदेवतापूजनंकर्तुमशक्तश्चेच्छुक्रवारेऽवश्यंकुर्यादित्यर्थः॥१८॥

आवरणदेवतासुभावनामाह।मूलदेवीति ॥ १९ ॥ पुनरावृत्तीति इत्थमावरणदेवतायथास्थानेषुस्थिताध्यात्वासंपूज्यपुनःसावरणांसायुधांसशक्तिकांश्रीभुवनेश्वरींगंधादिदक्षिणांतै रुपचारैः पूजयेदित्यर्थः ॥ २० ॥ त्वत्कृतेनेति ॥ त्वयाहिमालयेनकृतंयत्सहस्रनामस्तोत्रंममतेनमांतोषयेदित्यर्थः ॥ अनेनैवज्ञापकेनहिमालयेनदेवीदर्शनेजातेसहस्रनामस्तोत्रे णदेवीस्तुतेतिबोधितम् । तच्चसहस्रनामस्तोत्रंयद्यप्यस्मिनपुराणेनास्ति तथापिकूर्मपुराणेद्वादशाध्यायेवर्ततेतद्ग्राह्यम् ॥ तत्राऽप्येतत्प्रसंगेनैवसहस्रनामकथनात् ॥ चकारेणनित्यमूल मंत्रजपंकृत्वापश्चात्सहस्रनामस्तोत्रंपठेदित्यर्थः ॥ २१ ॥ कवचेनतंत्रादिषुप्रोक्तेन अहंरुद्रेभिरितिदेवीसूक्तेनेत्यन्वयः ॥ देव्यथर्वशिरोनामसर्वेवैदेवादेवीमुपतस्थुरित्यादिकंहृल्लेखोप

मूलदेवीप्रभारूपाःस्मर्तव्याअंगदेवताः ॥ तत्प्रभापटलव्याप्तंत्रैलोक्यंचविचिंतयेत् ॥ १९ ॥ पुनरावृत्तिसहितांमूलदेवींचपूजयेत् ॥ गंधादि भिःसुगंधैस्तुतथापुष्पैःसुवासितैः ॥ २० ॥ नैवेद्यैस्तर्पणैश्चैवतांबूलैर्दक्षिणादिभिः ॥ तोषयेन्मांत्वत्कृतेननाम्नांसाहस्रकेणच ॥ २१ ॥ कवचे नचसूक्तेनाऽहंरुद्रेभिरितिप्रभो ॥ देव्यथर्वशिरोमंत्रैर्हृल्लेखोपनिषद्भवैः ॥ २२ ॥ महाविद्यामहामंत्रैस्तोषयेन्मांमुहुर्मुहुः ॥ क्षमापयेज्जगद्धात्रीं प्रेमार्द्रहृदयोनरः ॥ २३ ॥ पुलकांकितसर्वांगैर्बाष्परुद्धाक्षिनिःस्वनः ॥ नृत्यगीतादिघोषेणतोषयेन्मांमुहुर्मुहुः ॥ २४ ॥ वेदपारायणैश्चैवपुरा णैःसकलैरपि ॥ प्रतिपाद्यायतोऽहं वैतस्मात्तैस्तोषयेत्तुमाम् ॥ २५ ॥ निजंसर्वस्वमपिमेसदेहंनित्यशोऽर्पयेत् ॥ नित्यहोमंततःकुर्याद्ब्राह्मणां श्चसुवासिनीः ॥ २६ ॥ बटुकान्पामरानन्यान्देवीबुद्ध्यातुभोजयेत् ॥ नत्वापुनःस्वहृदयेव्युत्क्रमेणविसर्जयेत् ॥ २७ ॥ सर्वंहृल्लेखयाकु र्यात्पूजनंममसुव्रत ॥ हृल्लेखासर्वमंत्राणांनायिकापरमास्मृता ॥ २८ ॥ हृल्लेखादर्पणेनित्यमहंतत्प्रतिबिंबिता ॥ तस्माद्धृल्लेखयादत्तंसर्वमंत्रैः समर्पितम् ॥ २९ ॥ गुरुंसंपूज्यभूषाद्यैःकृतकृत्यत्वमावहेत् ॥ यएवंपूजयेदेवींश्रीमद्भुवनसुंदरीम् ॥ ३० ॥ नतस्यदुर्लभंकिंचित्कदाचित्क्वचि दस्तिहि ॥ देहांतेतुममणिद्वीपंममयात्येवसर्वथा ॥ ३१ ॥ ज्ञेयोदेवीस्वरूपोऽसौदेवानित्यंनमंतितम् ॥ इतितेकथितंराजन्महादेव्याःप्रपूजन म् ॥ ३२ ॥ विमृश्यैतदशेषेणाप्यधिकारानुरूपतः ॥ कुरुमेपूजनंतेनकृतार्थस्त्वंभविष्यसि ॥ ३३ ॥ इदंतुगीताशास्त्रंमेनाऽशिष्यायवदेत्क्वचि त् ॥ नाऽभक्तायप्रदातव्यंनधूर्तायचदुर्हृदे ॥ ३४ ॥ एतत्प्रकाशनंमातुरुद्घाटनमुरोजयोः ॥ तस्मादवश्यंयत्नेनगोपनीयमिदंसदा ॥ ३५ ॥ देयं भक्तायशिष्यायज्येष्ठपुत्रायचैवहि ॥ सुशीलायसुवेषायदेवीभक्तियुतायच ॥ ३६ ॥ श्राद्धकालेपठेदेतद्ब्राह्मणानांसमीपतः ॥ तृप्तास्तत्पितरः सर्वेप्रयांतिपरमंपदम् ॥ ३७ ॥ व्यासउवाच ॥ इत्युक्त्वासाभगवतीतत्रैवांतरधीयत ॥ देवाश्चमुदिताःसर्वेदेवीदर्शनतोऽभवन् ॥ ३८ ॥

निषत् ॥ भुवनेश्वर्याउपनिषत् ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ सर्वस्वमपीति ॥ स्वदेहसहितंसर्वस्वंदेव्यैसमर्पयेदित्यर्थः ॥ २६ ॥ व्युत्क्रमेणसंहारमुद्रया ॥ २७ ॥ पूर्वपूजायांयेउ पचारादेयास्तेसर्वेमायाबीजमंत्रमुच्चार्यदेयाइत्याह ॥ सर्वंहृल्लेखयेति ॥ २८ ॥ कुतःसर्वमंत्राणांनायिकेतिचेन्ममतस्मिन्मंत्रेप्रत्यासत्त्यतिशयादित्याह । हृल्लेखादर्पणेइति ॥ तथाचब्र ह्मांडपुराणे ॥ ह्रींकारादर्शबिंबिकेति ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ उरोजयोःस्तनयोः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

ततोदेवीवरप्रदानानंतरम् ॥ इयंचगौर्याउत्पत्तिर्ज्येष्ठशुक्लचतुर्थ्यामभवत् ॥ तदुक्तंकृत्यरत्नावल्याम् ॥ज्येष्ठशुक्लचतुर्थ्यांतुजातापूर्वमुमासती ॥ तस्मात्सातत्रसंपूज्यासर्वैःसौभाग्यहेतवे॥ उपहारैश्चविविधैर्गीतनृत्योत्सवादिभिः होमैःपयोभिर्वस्त्रैश्चपत्रपुष्पैःसुगंधिभिरिति ॥ साचोत्पत्तिररुणोदयवेलायाम् ॥ तदुक्तंमात्स्येतारकासुरयुद्धप्रस्तावे ॥ ततोजगत्परित्राणहेतुंहि मगिरेःप्रिया ॥ ब्राह्मेमुहूर्तेसुभगेप्रासूयतगुहारणिमिति ॥ ३९ ॥ इत्थंगौर्याउत्पत्तिंतस्याःशिवस्यप्राप्तिंचसविस्तरमुपवर्ण्यलक्ष्म्युत्पत्तिंतस्याविष्णुप्राप्तिंचसंक्षेपेणवदति । समुद्रमंथने इति ॥ रत्नान्यासूरत्नान्युत्पन्नानीत्यर्थः ॥ ४० ॥ तत्रेति ॥ तस्मिन्नपिसमयेदेवैर्देवीपरमाशक्तिःस्तुता किमर्थंलक्ष्मीप्राप्त्यर्थम् ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ विस्तरस्तुमत्कृतदे

व्यासउवाच ॥ ततोहिमालयेजज्ञेदेवीहैमवतीतुसा ॥ यागौरीतिप्रसिद्धाऽसीद्दत्तासाशंकरायच ॥ ३९ ॥ ततःस्कंदःसमुद्भूतस्तारकस्तेनपातितः ॥ समुद्रमंथनेपूर्वंरत्नान्यासुर्नराधिप ॥ ४० ॥ तत्रदेवैःस्तुतादेवीलक्ष्मीप्राप्त्यर्थमादरात् ॥ तेषामनुग्रहार्थायनिर्गतातुरमाततः ॥ ४१ ॥ वैकुंठायसुरैर्दत्तातेनतस्यशमोभवत् ॥ इतितेकथितंराजन्देवीमाहात्म्यमुत्तमम् ॥ ४२ ॥ गौरीलक्ष्म्योःसमुद्भूतिविषयंसर्वकामदम् ॥ नवाच्यंत्वेतदन्यस्मैरहस्यंकथितंयतः ॥ ४३ ॥ गीतारहस्यभूतेयंगोपनीयाप्रयत्नतः ॥ सर्वमुक्तंसमासेनयत्पृष्टंतत्त्वयाऽनघ ॥ ४४ ॥ पवित्रंपावनंदिव्यंकिंभूयःश्रोतुमिच्छसि ॥ इतिश्रीदेवीभागवतेमहापुराणेऽष्टादशसाहस्र्यांसंहितायांसप्तमस्कंधेदेवीगीतायांचत्वारिंशोऽध्यायः ॥ ४० ॥ ॥ श्रीरस्तु ॥ स्कंधश्चायंसमाप्तः ॥ ७ ॥

खशरद्व्यश्वि ( २२५० ) पद्यैस्तुद्वैपायनमुखच्युतैः ॥ श्रीमद्भागवतस्याऽस्यसप्तमस्कंधईरितः ॥ १ ॥

वीगीताबृहट्टीकायांद्रष्टव्यः ॥ श्रीमच्छैवकुलोत्पन्नोरंगनाथात्मजःसुधीः ॥ श्रीलक्ष्मीगर्भसंभूतोनीलकंठोभिधानतः ॥१॥ देवीभागवतस्याऽस्यव्याख्यानरहितस्यच ॥ व्याख्यांयःकृतवान्सम्यक्तिलकाख्यांमहत्तराम् ॥ २ ॥ सप्तमस्कंधएतस्याःसमाप्तोभूच्छुभार्थदः ॥ प्रीयतांतेनमेऽनंतकोटिब्रह्मांडनायिका ॥ ३ ॥ इतिश्रीशैवकुलोत्पन्नरंगनाथात्मजलक्ष्मीगर्भजनीलकंठकृतेश्रीमद्देवीभागवततिलकेसप्तमस्कंधेदेवीगीतायांचत्वारिंशोऽध्यायः ॥ ४० ॥ ॥ छ ॥ ॥ स्कंधश्चायं समाप्तः ॥ ७ ॥

इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मजक्षेमराजश्रेष्ठिना

स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणालये मुद्रितम्।

संवत् १९७६ शके १८४१.

श्रीगणेशायनमः ॥ तरुणेंदुमौलितरुणांकरुणारसेनपरिपूर्णाम् ॥ गुरुणाभरेणकुचयोर्नमितांनमतांभवेद्भवेनभवः ॥ १ ॥ अष्टाधिकैश्चचत्वारिंशत्पद्यैरथसादरम् ॥ मनवेवरदानंचदे
व्यादत्तमितीर्यते ॥ १ ॥ जनमेजयोराजासूर्यसोमोद्भवानांराज्ञांचरितंश्रुत्वातदनंतरंदेवीगीताश्रवणंकृतवान् ॥ तस्यांचगीतायांदेव्याविराट्स्वरूपस्तुपवर्णितम् ॥ तस्यविस्तारोनवर्णित
स्तद्बुभुत्सुरथमन्वंतरेषुयेनरूपेणपूज्यतेतद्बुभुत्सुश्च तथाइलावृत्तादिवर्षरूपेषुयेषुस्थानेषुयेनयेनकर्मणापूज्यतेतद्बुभुत्सुश्चपृच्छति ॥ सूर्यचंद्रेति ॥ १ ॥ मन्वंतरेष्विति ॥ सर्वमन्वंतरेषुमनु
भिर्मनुवंशजैश्चयेनयेनरूपेणपूज्यतेतद्वदेत्यन्वयः ॥ २ ॥ किंच यस्मिंश्चेति ॥ यस्मिन्यस्मिन्निलावृत्तादिवर्षेषुखंडेषुस्थानविशेषेषुयेनयेनकर्मणाव्यापारेणचकाराद्येनसदाचारेणचपूज्यते
तत्कर्मतंसदाचारंचवदेत्यन्वयः ॥ किंचदेव्याइति । देव्याविराट्स्वरूपंयत्पूर्वमुक्तम् तस्यवर्णनमपियथातथंयथावर्ततेतथेत्यर्थः । तदर्पितत्सर्ववदेत्यन्वयः ॥ ३ ॥ ननुविराट्स्वरूप
वर्णनस्यकोपयोगइतिचेत्तत्राह । येनेति ॥ स्थूलरूपध्यानेनहि चित्तस्यैकाग्रतायांसाधितायांदेव्याःसूक्ष्मरूपेमतेर्बुद्धेर्गतिर्गमनंस्यान्नान्यथेतिस्थूलरूपध्यानार्थंस्थूलरूपसन्निवेशज्ञानमपेक्षि

श्रीगणेशायनमः ॥ जनमेजयउवाच ॥ सूर्यचंद्रान्वयोत्थानांनृपाणांसत्कथाश्रितम् ॥ चरितंभवताप्रोक्तंश्रुतंतदमृतास्पदम् ॥ १ ॥ अधुना
श्रोतुमिच्छामिसादेवीजगदंबिका ॥ मन्वंतरेषुसर्वेषुयद्यद्रूपेणपूज्यते ॥ २ ॥ यस्मिन्यस्मिंश्चवैस्थानेयेनयेनचकर्मणा ॥ "शरीरेणचदेवेशीपू
जनीयाफलप्रदा॥येनैवमंत्रबीजेनयत्रयत्रचपूज्यते॥" देव्याविराट्स्वरूपस्यवर्णनंचयथातथम्॥३॥येनध्यानेनतत्सूक्ष्मेस्वरूपेस्यान्मतेर्गतिः॥
तत्सर्ववदविप्रर्षेयेनश्रेयोहमाप्नुयाम् ॥ ४ ॥ व्यासउवाच ॥ शृणुराजन्प्रवक्ष्यामिदेव्याराधनमुत्तमम् ॥ यत्कृतेनश्रुतेनाऽपिनरःश्रेयोऽत्रविंदते
॥ ५ ॥ एवमेतन्नारदेनपृष्टोनारायणःपुरा ॥ तस्मैयदुक्तवान्देवोयोगचर्याप्रवर्तकः ॥ ६ ॥ एकदानारदःश्रीमान्पर्यटन्पृथिवीमिमाम् ॥ नारा
यणाश्रमंप्राप्तोगतखेदश्चतस्थिवान् ॥ ७ ॥ तस्मैयोगात्मनेनत्वाब्रह्मदेवतनूद्भवः ॥ पर्यपृच्छदिमंचाऽर्थंयत्पृष्टोभवताऽनघ॥ ८॥नारदउवाच॥
देवदेवमहादेवपुराणपुरुषोत्तम ॥ जगदाधारसर्वज्ञश्लाघनीयोरुसद्गुण ॥ ९ ॥ जगतस्तत्त्वमाद्यंयत्तन्मेवदयथेप्सितम् ॥ जायतेकुतएवेदंकुत
श्चेदंप्रतिष्ठितम् ॥ १० ॥ कुतोंतंप्राप्नुयात्कालेकुत्रसर्वफलोदयः ॥ केनज्ञातेनमायैषामोहभूर्नाशमाप्नुयात् ॥ ११ ॥ कयाऽर्चयाकिंजपेनकिं
ध्यानेनात्महृत्कजे ॥ प्रकाशोजायतेदेवतमस्यर्कोदयोयथा ॥ १२ ॥ एतत्प्रश्नोत्तरंदेवब्रूहिसर्वमशेषतः ॥ यथालोकस्तरेदंधतमसंत्वंजसैवहि
॥ १३ ॥ व्यासउवाच ॥ एवंदेवर्षिणापृष्टःप्राचीनोमुनिसत्तमः ॥ नारायणोमहायोगीप्रतिनंद्यवचोब्रवीत् ॥ १४ ॥

तमित्यर्थः॥४॥तत्रमन्वंतरेषुसर्वेष्वित्यस्योत्तरंदशमस्कंधेवक्ष्यति ॥ प्रथमतोत्रतृतीयप्रश्नस्योत्तरंवक्तुमारभते । शृणुराजन्निति ॥ देव्याराधनमिति ॥ यद्यपिराज्ञातृतीयप्रश्नेविराट्स्वरू
पसन्निवेशएवपृष्टोनत्वाराधनं तथापितत्स्वरूपसंनिवेशज्ञानफलमाराधनमेवेतिमनसिनिधायोक्तमाराधनमितिबोध्यम् ॥ देव्याविराट्स्वरूपायाआराधनमित्यर्थः ॥ ५ ॥ तत्रेदंकथा
नकंनारदायनारायणेनपूर्वमुक्तम् तदेवमयोच्यतेनान्यदित्याह । एवमेतन्नारदेनेति ॥ ६ ॥ पूर्वकथामाह । एकदेति ॥ ७ ॥ योगात्मनेयोगमूर्तयेपर्यपृच्छदिमंचार्थमिति ॥ भवताऽ
हंयत्पृष्टःइमंचार्थंविराट्स्वरूपसन्निवेशकथनरूपमर्थमन्यदर्पितस्यमनासियद्यत्स्थितंतंचार्थंपर्यपृच्छदित्यर्थः ॥ ८ ॥ ९ ॥ कुतश्चेदंप्रतिष्ठितम् ॥ एतस्यपालयिताकइत्यर्थः ॥१०॥ अंतं
नाशम् ॥ एतस्यनाशकर्ताकइत्यर्थः ॥ सर्वकर्मणांफलोदयःकुत्रकस्मिन्सतिभवतीत्यर्थः ॥ ११ ॥ आत्महृत्कजेआत्मनोहृदयकमलेइत्यर्थः ॥ प्रकाशआत्मनइत्यर्थः ॥ १२ ॥अंधतम
समज्ञानरूपमंधकारम् ॥ १३ ॥ प्रतिनंद्यतद्वचःसाधुसाध्वितिस्तुत्वेत्यर्थः ॥ १४ ॥

जगतः कार्यरूपस्य रज्जुसर्पसदृशस्यतत्त्वंकारणमुपादानंनिमित्तंविवर्तरूपंचसर्पस्यरज्ज्वज्ञानादिवत्येनज्ञातेनतत्त्वेनजगद्रूपे भ्रमे नजायते ॥ ज्ञातेनरज्ज्वादिनासर्पादिभ्रमइवपुनर्भ्रमोन भवतीतितात्पर्यम् ॥ १५ ॥ देवीप्रोक्तेति ॥ साम्यावस्थमायाविशिष्टब्रह्मरूपिणीदेवीत्यर्थः ॥ तत्रमायोपादानकारणंमायायांचित्प्रतिबिंबोनिमित्तकारणंब्रह्मविवर्तकारणमितिविवेकः ॥ १६ ॥ १७ ॥ १८ ॥ पद्मपुत्रः पद्मसंभवब्रह्मपुत्रइत्यर्थः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ मायांमायाविशिष्टब्रह्मरूपिणीम् ॥ २३ ॥ जगत्कारणंहिरण्यगर्भस्तस्यापिकारणेइत्यर्थः ॥ नारायणहृदाश्रितेइदंचवैष्णव्याः शक्तेः स्वरूपंशंखचक्रगदापद्महस्तंध्यानार्थमुपन्यस्तम् ॥ २४ ॥ कारणंमायातस्याः स्थानंब्रह्मतद्रूपिणीत्यर्थः ॥ वेदत्रयरूपप्रमाणज्ञेसर्वज्ञेइत्यर्थः ॥

नारायणउवाच ॥ शृणुदेवर्षिवर्याऽत्रजगतस्तत्त्वमुत्तमम् ॥ येनज्ञातेनमर्त्योहिजायतेनंजगद्भ्रमे ॥ १५ ॥ जगतस्तत्त्वमित्येवदेवीप्रोक्तामया पिहि ॥ ऋषिभिर्देवगंधर्वैरन्यैश्चापिमनीषिभिः ॥ १६ ॥ साजगत्सृजतेदेवीतयाचप्रतिपाल्यते ॥ तयाचनाश्यतेसर्वमितिप्रोक्तंगुणत्रयात् ॥ १७ ॥ तस्याः स्वरूपंवक्ष्यामिदेव्याः सिद्धर्षिपूजितम् ॥ स्मरतांसर्वपापघ्नंकामदंमोक्षदंतथा ॥ १८ ॥ मनुःस्वायंभुवस्त्वाद्यः पद्मपुत्रः प्रतापवान् ॥ शतरूपापतिःश्रीमान्सर्वमन्वंतराधिपः ॥ १९ ॥ समनुःपितरंदेवंप्रजापतिमकल्मषम् ॥ भक्त्यापर्यचरत्पूर्वंतमुवाचाऽऽत्मभूःसुतम् ॥ २० ॥ पुत्रपुत्रत्वयाकार्यंदेव्याराधनमुत्तमम् ॥ तत्प्रसादेनतेतातप्रजासर्गःप्रसिद्ध्यति ॥ २१ ॥ एवमुक्तःप्रजास्रष्ट्रामनुःस्वायंभुवोविराट् ॥ जगद्योनिंतदादेवींतपसातर्पयद्विभुः ॥ २२ ॥ तुष्टावदेवींदेवेशींसमाहितमतिःकिल ॥ आद्यांमायांसर्वशक्तिंसर्वकारणकारणाम् ॥ २३ ॥ मनुरुवाच ॥ नमोनमस्तेदेवेशिजगत्कारणकारणे ॥ शंखचक्रगदाहस्तेनारायणहृदाश्रिते ॥ २४ ॥ वेदमूर्तेजगन्मातःकारणस्थानरूपिणि ॥ वेदत्रयप्रमाणज्ञेसर्वदेवनुतेशिवे ॥ २५ ॥ माहेश्वरिमहाभागेमहामायेमहोदये ॥ महादेवप्रियावासेमहादेवप्रियंकरि ॥ २६ ॥ गोपेन्द्रस्यप्रियेज्येष्ठेमहानंदे महोत्सवे ॥ महामारीभयहरेनमोदेवादिपूजिते ॥ २७ ॥ सर्वमंगलमांगल्येशिवेसर्वार्थसाधिके ॥ शरण्येत्र्यंबकेगौरिनारायणिनमोस्तुते ॥ २८ ॥ यतश्चेदंययाविश्वमोतंप्रोतंचसर्वदा ॥ चैतन्यमेकमाद्यंतरहितंतेजसांनिधिम् ॥ २९ ॥ ब्रह्मायदीक्षणात्सर्वंकरोतिचहरिःसदा ॥ पालयत्यपिविश्वेशः संहर्तायदनुग्रहात् ॥ ३० ॥ मधुकैटभसंभूतभयार्तःपद्मसंभवः ॥ यस्यास्तवेनमुमुचेघोरदैत्यभवांबुधेः ॥ ३१ ॥ त्वंह्रीःकीर्तिःस्मृतिःकांतिःकमला गिरिजासती ॥ दाक्षायणीवेदगर्भाबुद्धिदात्रीसदाभया ॥ ३२ स्तोष्येत्वांचनमस्यामिपूजयामिजपामिच ॥ ध्यायामिभावयेवीक्षेश्रोष्येदेविप्रसीदमे ॥ ३३ ॥ ब्रह्मावेदनिधिःकृष्णोलक्ष्म्यावासःपुरंदरः ॥ त्रिलोकाधिपतिःपाशीयादसांपतिरुत्तमः ॥ ३४ ॥

॥ २५ ॥ महादेवस्यप्रियआवासोवसतिर्धागवासोयस्याःसा ॥ २६ ॥ गोपेंद्रोनन्दस्तस्यप्रियेविंध्यवासिनीत्यर्थः ॥ २७ ॥ २८ ॥ यतश्चेदमितिइदंजगद्यतोयस्याःसकाशादभूदित्यर्थः ॥ ययाश्रीदेव्याजगदोतंप्रोतंचव्याप्तंग्रथितामित्यर्थः ॥ तद्रूपंयच्चैतन्यमेकमाद्यंतरहितंतेजसांनिधिंसर्वतस्तेजस्वीत्यर्थः ॥ तस्मैनमोस्त्वितिशेषः ॥ २९ ॥ यदीक्षणाद्यस्याःकृपावलोकनादित्यर्थः ॥ तस्मैनमोस्तुतेइत्यर्थः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ब्रह्मावेदनिधिरिति ॥ यस्याः प्रसादाद्ब्रह्मावेदनिधिर्जातः ॥ कृष्णस्तुलक्ष्म्यावासोलक्ष्मीपतिर्जातः ॥ पुरंदरोवज्रीत्रिलोकाधिपतिर्जातः ॥ इतियथायोग्यंयोजनीयम्पाशीवरुणः ॥ ३४ ॥ ॥

॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ इतिश्रीदेवीभागवततिलकेअष्टमस्कंधेप्रथमोऽध्यायः ॥ १ ॥ अष्टत्रिंश
न्महापद्यैर्वराहेणधरातलम् ॥ जलादुद्धृतमित्येतत्कथानकमिहोच्यते ॥ १ ॥ पूर्वाध्यायेइदंमाच्चिंतितंकार्यंभगवानादिपूरुषः करिष्यतीतिप्रोक्तेनवाक्येनपद्मयोनेर्निश्चयंज्ञात्वाभगवान्व
राहरूपेणप्रादुरभूदित्याह ॥ एवंमीमांसतइति ॥ ननुनारदेनजगतस्तत्त्वमेवपृष्टंतच्चनारायणेनाऽभिहितंपुनस्तदुत्तरकथानकस्यनारदेनाऽपृष्टस्यकथनेनोपयोगइतिचेन्न अत्राऽपृष्टकथना
न्यथानुपपत्त्यैवनारदेनैवतत्पृष्टमस्तीत्यर्थस्यापिकल्पनात् ॥ अतएवाग्रेविराट्स्वरूपसन्निवेशप्रश्नस्यनारदकृतस्याभावेपिप्रथमाध्यायस्थं तस्मैयोगात्मनेनत्वाब्रह्मदेवतनूद्भवः ॥ पर्य

कुबेरोनिधिनाथोऽभूद्यमोजातःपरेतराट् ॥ नैर्ऋतोरक्षसांनाथःसोमोजातोह्यपोमयः ॥ ३५ ॥ त्रिलोकवंद्योलोकेशिमहामांगल्यरूपिणि ॥ नम
स्तेऽस्तुपुनर्भूयोजगन्मातर्नमोनमः ॥३६॥ नारायणउवाच ॥ एवंस्तुताभगवतीदुर्गानारायणीपरा ॥ प्रसन्नाप्राहदेवर्षेब्रह्मपुत्रमिदंवचः ॥३७॥
श्रीदेव्युवाच ॥ वरंवरयराजेंद्रब्रह्मपुत्रयदिच्छसि ॥ प्रसन्नाऽहंस्तवेनाऽत्रभक्त्याऽऽराधनेनच ॥ ३८ ॥ मनुरुवाच ॥ यदिदेवीप्रसन्नासिभ
क्त्याकारुणिकोत्तमे ॥ तदानिर्विघ्नतःसृष्टिःप्रजायाःस्यात्तवाऽऽज्ञया ॥ ३९ ॥ श्रीदेव्युवाच ॥ प्रजासर्गःप्रभवतुममाऽनुग्रहतःकिल ॥ निर्वि
घ्नेनचराजेंद्रवृद्धिश्चाप्युत्तरोत्तरम् ॥ ४० ॥ यःकश्चित्पठतेस्तोत्रंमद्भक्त्यात्वत्कृतंसदा ॥ तेषांविद्याप्रजासिद्धिःकीर्तिःकांत्युदयःखलु ॥ ४१ ॥
जायंतेधनधान्यानिशक्तिरप्रहतानृणाम् ॥ सर्वत्रविजयोराजन्सुखंशत्रुपरिक्षयः ॥ ४२ ॥ नारायणउवाच ॥ एवंदत्त्वावरान्देवीमनवेब्रह्मसूनवे
॥ अंतर्धानंगताचासीत्पश्यतस्तस्यधीमतः ॥ ४३ ॥ अथलब्धवरोराजाब्रह्मपुत्रःप्रतापवान् ॥ ब्रह्माणमब्रवीत्तातस्थानंमेदीयतांरहः ॥४४॥
यत्राऽहंसमधिष्ठायप्रजाःस्रक्ष्यामिपुष्कलाः ॥ यक्ष्यामियज्ञैर्देवेशंतत्समादिशमाचिरम् ॥ ४५ ॥ इतिपुत्रवचःश्रुत्वाप्रजापतिपतिर्विभुः ॥ चिं
तयामाससुचिरंकथंकार्यंभवेदिदम् ॥ ४६ ॥ सृजतोमेगतःकालोविपुलोऽनंतसंख्यकः ॥ धरावार्भिःप्लुतामग्नारसंयाताऽखिलाश्रया ॥ ४७ ॥
इदंमच्चिंतितंकार्यंभगवानादिपूरुषः ॥ करिष्यतिसहायोमेयदादेशेऽहमाश्रितः ॥ ४८ ॥ इतिश्री०दे०भा०महापुराणेअष्टमस्कंधेभुवनकोशोना
मप्रथमोऽध्यायः ॥ १ ॥ नारायणउवाच ॥ एवंमीमांसतस्तस्यपद्मयोनेःपरंतप ॥ मन्वादिभिर्मुनिवरैर्मरीच्याद्यैःसमंततः ॥ १ ॥ ध्यायत
स्तस्यनासाग्राद्विरिंचेःसहसाऽनघ ॥ वराहपोतोनिरगादेकांगुलप्रमाणतः ॥ २ ॥ तस्यैवपश्यतःखस्थःक्षणेनकिलनारद ॥ करिमात्रंप्रववृधेत
दद्भुततमंह्यभूत् ॥३॥ मरीचिमुख्यैर्विप्रेन्द्रैःसनकाद्यैश्चनारद ॥ तद्दृष्ट्वासौकरंरूपंतर्कयामासपद्मभूः ॥ ४॥ किमेतत्सौकरव्याजंदिव्यंसत्त्वमवस्थित
म् ॥अत्याश्चर्यमिदंजातंनासिकायाविनिःसृतम् ॥५॥ दृष्टोंगुष्ठशिरोमात्रःक्षणाच्छैलेन्द्रसन्निभः॥ आहोस्विद्भगवान्किंवायज्ञोमेखेदयन्मनः ॥६॥

पृच्छदिमंचार्थंयत्पृष्टोभवताऽनघेतिजनमेजयंप्रतिव्यासवाक्यंसंगच्छतेइति ॥ संमंततस्तैर्मन्वादिभिः ॥ परिवेष्टितस्येतिशेषः ॥ १ ॥ ध्यायतःपद्मयोनेरित्यन्वयः ॥ २ ॥ तस्यैववि
रंचेरेवखस्थःपृथिव्यभावादाकाशस्थोवराहः ॥ ३ ॥ मरीचिमुख्यैःसहितोविरंचिस्तंदृष्ट्वेत्यर्थः ॥ ४ ॥ सत्त्वंमहाभूतमित्यर्थः ॥ ५ ॥ दृष्टोंगुष्ठशिरोमात्रइति ॥ यःपूर्वमंगुष्ठशिरोमा
त्रोंगुष्ठमात्रपरिमितोदृष्टःसःक्षणात्पर्वतसन्निभोजातइत्यर्थः ॥ ६ ॥

ब्रह्मणः परमात्मनोऽग्रेइतिशेषः ॥ ७ ॥ संहतान्मिलितान् ॥ ८ ॥ ९ ॥ १० ॥ अपः जलानि ॥ आविशत्प्रविवेश ॥ ११ ॥ क्रूरसटाघातःकठोरशरीरकेशाघातः ॥ १२ ॥ १३ ॥

इतितर्कयतस्तस्यब्रह्मणःपरमात्मनः ॥ वराहरूपोभगवाञ्जगर्जाऽचलसन्निभः ॥७॥ विरंचिंहर्षयामाससंहतांश्चद्विजोत्तमान् ॥ स्वगर्जशब्दमा
त्रेणदिक्प्रांतमनुनादयन् ॥ ८ ॥ तेनिशम्यस्वखेदस्यशयिष्णुघुर्घुरस्वनम् ॥ जनस्तपःसत्यलोकवासिनोमरवर्यकाः ॥ ९ ॥ छन्दोमयैःस्तो
त्रवरैर्ऋक्सामाथर्वसंभवैः ॥ वचोभिःपुरुषंत्वाद्यंद्विजेंद्राःपर्यवाकिरन् ॥ १० ॥ तेषांस्तोत्रंनिशम्याऽऽद्योभगवान्हरिरीश्वरः ॥ कृपावलोकमा
त्रेणाऽनुगृहीत्वाऽपआविशत् ॥ ११ ॥ तस्यांतर्विशतःक्रूरसटाघातप्रपीडितः ॥ समुद्रोऽथाऽब्रवीद्देवरक्षमांशरणार्तिहन् ॥ १२ ॥ इत्याक
र्ण्यसमुद्रोक्तंवचनंहरिरीश्वरः ॥ विदारयञ्जलचराञ्जगामांतर्जलेविभुः ॥ १३ ॥ इतस्ततोऽभिधावन्सन्विचिन्वन्पृथिवींधराम्॥आघ्रायाघ्राय
सर्वेशोधरामासादयच्छनैः ॥ १४ ॥ अंतर्जलगतांभूमिंसर्वसत्त्वाश्रयांतदा ॥ भूमिंसदेवदेवेशोदंष्ट्रयोदाजहारताम् ॥ १५ ॥ तांसमुद्धृत्यदंष्ट्राग्रे
यज्ञेशोयज्ञपूरुषः ॥ शुशुभेदिग्गजोयद्वदुद्धृत्याऽथसुपद्मिनीम् ॥ १६ ॥ तंदृष्ट्वादेवदेवेशोविरंचिःसमनुःस्वराट्॥ तुष्टाववाग्भिर्देवेशंदंष्ट्रोद्धृतव
सुंधरम् ॥ १७ ॥ ब्रह्मोवाच ॥ जितंतेपुण्डरीकाक्षभक्तानामार्तिनाशन ॥ खर्वीकृतसुराधारसर्वकामफलप्रद ॥ १८ ॥ इयंचधरणीदेवशोभते
वसुधातव ॥ पद्मिनीवसुपत्राढ्यामतंगजकरोद्धृता ॥१९॥ इदंचतेशरीरंवैशोभतेभूमिसंगमात् ॥ उद्धृतांबुजशुंडाग्रकरींद्रतनुसन्निभम् ॥ २०॥
नमोनमस्तेदेवेशसृष्टिसंहारकारक ॥ दानवानांविनाशायकृतनानाकृतेप्रभो ॥ २१ ॥ अग्रतश्चनमस्तेस्तुपृष्ठतश्चनमोनमः ॥ सर्वामराधारभू
तबृहद्धामनमोस्तुते ॥ २२ ॥ त्वयाहंचप्रजासर्गेनियुक्तःशक्तिबृंहितः ॥ त्वदाज्ञावशतःसर्गंकरोमिविकरोमिच ॥२३॥ त्वत्सहायेनदेवेशाअम
राश्चपुराहरे ॥ सुधांविभेजिरेसर्वेयथाकालंयथाबलम् ॥ २४ ॥ इंद्रस्त्रिलोकीसाम्राज्यंलब्धवांस्त्वन्निदेशतः॥ भुनक्तिलक्ष्मींबहुलांसुरसंघप्रपू
जितः ॥ २५ ॥ वह्निःपावकतांलब्ध्वाजाठरादिविभेदतः ॥ देवासुरमनुष्याणांकरोत्याप्यायनंतथा ॥ २६ ॥ धर्मराजोऽथपितॄणामधिपःसर्व
कर्मदृक्॥कर्मणांफलदाताऽसौत्वन्नियोगादधीश्वरः ॥ २७॥ नैर्ऋतोरक्षसामीशोयक्षोविघ्नविनाशनः ॥ सर्वेषांप्राणिनांकर्मसाक्षीत्वत्तःप्रजायते
॥२८॥ वरुणोयादसामीशोलोकपालोजलाधिपः ॥ त्वदाज्ञाबलमाश्रित्यलोकपालत्वमागतः ॥२९॥ वायुर्गंधवहःसर्वभूतप्राणनकारणम् ॥
जातस्तवनिदेशेनलोकपालोजगद्गुरुः ॥ ३० ॥ कुबेरःकिन्नरादीनांयक्षाणांजीवनाश्रयः ॥ त्वदाज्ञांतर्गतःसर्वलोकपेषुचमान्यभूः ॥ ३१ ॥

॥ १४ ॥ १५ ॥ पद्मिनींकमलिनींशुंडाग्रेणोद्धृत्यदिग्गजोयथाशुशुभे ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ उद्धृतमंबुजंयेनैतादृशंशुंडाग्रंयस्यसयःकरींद्रस्तस्यतनुसन्निभम् ॥ २० ॥ २१ ॥
॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ लोकपेषुलोकपालेषुमान्यभूः पूज्यः ॥ ३१ ॥

॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ इतिश्रीदेवीभागवततिलकेऽष्टमस्कंधेद्वितीयोऽध्यायः ॥ २ ॥ त्रयोविंशतिपद्यैस्तुमनोःस्वायंभुवस्यतु ॥ वंशस्यवर्णनंसम्यग्य
थावदनुवर्ण्यते ॥ १ ॥ धरोद्धारानंतरंजातंकृत्यमाह । महींदेवइति ॥ देवोवराहः ॥ स्वमात्मजंस्वायंभुवमनुम् ॥ १॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

ईशानःसर्वरुद्राणामीश्वरांतकरःप्रभुः ॥ जातोलोकेशवंद्योऽसौसर्वदेवाधिपालकः ॥ ३२ ॥ नमस्तुभ्यंभगवतेजगदीशायकुर्महे ॥ यस्यांश
भागाःसर्वेहिजातादेवाःसहस्रशः ॥ ३३ ॥ नारदउवाच ॥ एवंस्तुतोविश्वसृजाभगवानादिपूरुषः ॥ लीलावलोकमात्रेणाऽप्यनुग्रहमवाऽसृजत्॥
॥ ३४ ॥ तत्रैवाऽभ्यागतंदैत्यंहिरण्याक्षंमहाऽसुरम् ॥ रुंधानमध्वनोभीमंगदयाताडयद्धरिः ॥ ३५ ॥ तद्रक्तपंकदिग्धांगोभगवानादिपूरुषः ॥
उद्धृत्यधरणींदेवोदंष्ट्रयालीलयाप्लुताम् ॥ ३६ ॥ निवेश्यलोकनाथेशोजगामस्थानमात्मनः ॥ एतद्भगवतश्चित्रंधरण्युद्धरणंपरम् ॥ ३७ ॥
शृणुयाद्यःपुमान्यश्चपठेच्चरितमुत्तमम् ॥ सर्वपापविनिर्मुक्तोवैष्णवींगतिमाप्नुयात् ॥ ३८॥ इति श्रीदेवीभागवते महापुराणे अष्टमस्कंधे द्विती
योऽध्यायः ॥ २ ॥ नारायणउवाच ॥ महींदेवःप्रतिष्ठाप्ययथास्थानेचनारद ॥ वैकुंठलोकमगमद्ब्रह्मोवाचस्वमात्मजम् ॥ १ ॥ स्वायंभुवमहा
बाहोपुत्रतेजस्विनांवर ॥ स्थानेमहीमयेतिष्ठप्रजाःसृजयथोचितम् ॥ २ ॥ देशकालविभागेनयज्ञेशंपुरुषंयज ॥ उच्चावचपदार्थैश्चयज्ञसाधनकै
र्विभो ॥ ३ ॥ धर्ममाचरशास्त्रोक्तंवर्णाश्रमनिबंधनम् ॥ एतेनक्रमयोगेनप्रजावृद्धिर्भविष्यति ॥ ४ ॥ पुत्रानुत्पाद्यगुणतःकीर्त्याकांत्याऽऽत्मरू
पिणः ॥ विद्याविनयसंपन्नान्सदाचारवतांवरान् ॥ ५ ॥ कन्याश्चदत्त्वागुणवद्यशोवद्भ्यःसमाहितः ॥ मनःसम्यक्समाधायप्रधानपुरुषेपरे॥
॥ ६ ॥ भक्तिसाधनयोगेनभगवत्परिचर्यया ॥ गतिमिष्टांसदावंद्यांयोगिनांगमिताभवान् ॥ ७ ॥ इत्याश्वास्यमनुंपुत्रंपद्मयोनिःप्रजापतिः ॥
प्रजासर्गेनियम्याऽमुंस्वधामप्रत्यपद्यत ॥ ८ ॥ प्रजाःसृजतपुत्रेतिपितुराज्ञांसमादधत् ॥ स्वायंभुवःप्रजासर्गमकरोत्पृथिवीपतिः ॥ ९ ॥ प्रिय
व्रतोत्तानपादौमनुपुत्रौमहौजसौ ॥ कन्यास्तिस्रःप्रसूताश्चतासांनामानिमेशृणु ॥ १० ॥ आकूतिःप्रथमाकन्याद्वितीयादेवहूतिका ॥ तृतीया
चप्रसूतिर्हिविख्यातालोकपाविनी ॥ ११ ॥ आकूतिंरुचयेप्रादात्कर्दमायचमध्यमाम् ॥ दक्षायाऽदात्प्रसूतिंचयासांलोकइमाःप्रजाः ॥ १२॥
रुचेःप्रजज्ञेभगवान्यज्ञोनामाऽदिपूरुषः॥ आकूत्यांदेवहूत्यांचकपिलोऽसौचकर्दमात् ॥१३॥ सांख्याचार्यःसर्वलोकेविख्यातःकपिलोविभुः ॥
दक्षात्प्रसूत्यांकन्याश्चबहुशोजज्ञिरेप्रजाः ॥ १४ ॥ यासांसंतानसंभूतादेवतिर्यङ्नरादयः ॥ प्रसूतालोकविख्याताःसर्वेसर्गप्रवर्तकाः ॥ १५ ॥
यज्ञश्चभगवान्स्वायंभुवमन्वंतरेविभुः ॥ मनुंररक्षरक्षोभ्योयामैर्देवगणैर्वृतः ॥ १६ ॥

आकूत्यामितिपूर्वेणान्वयः ॥ १३ ॥ १४ ॥ १५ ॥ यज्ञश्चेति ॥ रुचेःपुत्रोयज्ञोनामपुरुषःकस्मिंश्चित्समयेरक्षोभिरुपद्रुतंस्वायंभुवंमनुंयामैस्तन्नामकैर्देवगणैर्वृतः संस्तेभ्योरक्षोभ्योमनुंर
रक्षेतिकथापुराणांतरेप्रसिद्धा ॥ १६ ॥

॥ १७ ॥ १८ ॥ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ इतिश्रीदेवीभागवततिलकेऽष्टमस्कंधेतृतीयोऽध्यायः ॥ ३ ॥ अष्टाविंशतिभिःश्लोकैःप्रियव्रतकथानकम् ॥ यत्रद्वीपोद्भवः प्रोक्तस्तदेतत्सम्यगीर्यते ॥ १ ॥ मनुकन्यावंशकथनोत्तरंमनोःपुत्राणांवंशमाह । मनोःस्वायंभुवस्येति ॥ १ ॥ विश्वकर्मणःप्रजापतेरित्यन्वयः ॥ २ ॥ दशपुत्रान्गुणैरन्वितान्यवीयसीं दशपुत्रेभ्यःकनिष्ठामूर्जस्वतींनाम ॥ ३ ॥ रुक्मशुक्रोहिरण्यरेतोनामकः ॥ ४ ॥ वह्नेर्नामानियेषां नत्वैतएववह्नयइतिभ्रमितव्यम् ॥५ ॥ ६ ॥ आत्मविद्येति ॥ तेआत्मविद्यायामभे

कपिलोऽपिमहायोगीभगवान्स्वाश्रमेस्थितः ॥ देवहूत्यैपरंज्ञानंसर्वाऽविद्यानिवर्तकम् ॥ १७ ॥ सविशेषंध्यानयोगमध्यात्मज्ञाननिश्चयम् ॥ कापिलंशास्त्रमाख्यातंसर्वाज्ञानविनाशनम् ॥१८॥ उपदिश्यमहायोगीसययौपुलहाश्रमम् ॥ अद्यापिवर्ततेदेवःसांख्याचार्योमहाशयः ॥१९॥ यन्नामस्मरणेनाऽपिसांख्ययोगश्चसिद्ध्यति ॥ तंवंदेकपिलंयोगाचार्यंसर्ववरप्रदम् ॥ २० ॥ एवमुक्तंमनोःकन्यावंशवर्णनमुत्तमम् ॥ पठतांशृण्वतांचाऽपिसर्वपापविनाशनम् ॥२१॥ अतःपरंप्रवक्ष्यामिमनुपुत्रान्वयंशुभम् ॥ यदाकर्णनमात्रेणपरंपदमवाप्नुयात् ॥२२॥ द्वीपवर्षसमुद्रादिव्यवस्थायत्सुतैःकृता ॥ व्यवहारप्रसिद्ध्यर्थंसर्वभूतसुखाप्तये ॥२३॥ इति श्रीदेवीभागवतेमहापुराणेऽष्टमस्कंधेभुवनकोशेतृतीयोऽध्यायः ॥३॥

नारायणउवाच ॥ मनोःस्वायंभुवस्याऽऽसीज्ज्येष्ठःपुत्रःप्रियव्रतः ॥ पितुःसेवापरोनित्यंसत्यधर्मपरायणः ॥१॥ प्रजापतेर्दुहितरंसुरूपांविश्वकर्मणः ॥ बर्हिष्मतींचोपयेमेसमानांशीलकर्मभिः ॥२॥ तस्यांपुत्रान्दशगुणैरन्वितान्भावितात्मनः ॥ जनयामासकन्यांचोर्जस्वतींचयवीयसीम् ॥३॥ आग्नीध्रश्चेध्मजिह्वश्चयज्ञबाहुस्तृतीयकः ॥ महावीरश्चतुर्थस्तुपंचमोरुक्मशुक्रकः ॥४॥ घृतपृष्ठश्चसवनोमेधातिथिरथाऽष्टमः ॥ वीतिहोत्रःकविश्चेतिदशैतेवह्निनामकाः ॥ ५ ॥ एतेषांदशपुत्राणांत्रयोऽप्यासन्विरागिणः ॥ कविश्चसवनश्चैवमहावीरइतित्रयः ॥ ६ ॥ आत्मविद्यापरिष्णाताःसर्वेतेह्यूर्ध्वरेतसः ॥ आश्रमेपरहंसाख्येनिःस्पृहाह्यभवन्मुदा ॥ ७ ॥ अपरस्यांचजायायांत्रयःपुत्राश्चजज्ञिरे ॥ उत्तमस्तामसश्चैवरैवतश्चेतिविश्रुताः ॥ ८ ॥ मन्वंतराधिपतयएतेपुत्रामहौजसः ॥ प्रियव्रतःसराजेंद्रोबुभुजेजगतीमिमाम् ॥९॥ एकादशार्बुदाब्दानामव्याहतबलेंद्रियः ॥ यदासूर्यःपृथिव्याश्चविभागेप्रथमेऽतपत् ॥ १० ॥ भागेद्वितीयेतत्राऽसीदंधकारोदयःकिल ॥ एवंव्यतिकरंराजाविलोक्यमनसाचिरम् ॥११॥ प्रशास्तिमयिभूम्यांचतमःप्रादुर्भवेत्कथम् ॥ एवंनिवारयिष्यामिभूमौयोगबलेनच ॥ ॥ १२ ॥ एवंव्यवसितोराजापुत्रःस्वायंभुवस्यसः ॥ रथेनाऽऽदित्यवर्णेनसप्तकृत्वःप्रकाशयन् ॥ १३ ॥

कभावादारभ्यकृतपरिचयाःपारमहंस्यमेवाश्रममभजन् ॥ ७ ॥ ८ ॥ ९ ॥ दशकोटिभिरेकमर्बुदमेताद्दशानिवर्षाणामेकादशार्बुदानिजगतींबुभुजेइत्यन्वयः ॥ विभागेप्रथमेइति ॥ यदेकस्मिन्भागेऽऽतपत्तदाद्वितीयभागेऽर्थादंधकारआसीदित्यर्थः ॥ १० ॥ ११ ॥ योगबलेनतपोबलेन ॥ १२ ॥ जगत्प्रकाशयन्सप्तकृत्वःप्रदक्षिणांचकार ॥ एवंकुर्वाणंप्रियव्रतमागत्यचतुराननःतवाधिकारोऽयंनास्तीतिनिवारयामासेतिपुराणांतरेप्रसिद्धम् ॥ १३ ॥

रथनेमयः सप्तकृत्वः प्रदक्षिणासमयेयस्मिन्भूप्रदेशेरथनेमयः पतितास्तत्रसप्तमहागर्ताजातास्तेसप्तसमुद्राइत्युच्यंते ॥ १४ ॥ प्रदेशाइति ॥ द्वयोर्द्वयोःसमुद्रयोर्मध्येभूप्रदेशास्तेषट्संख्या मध्यस्थभूप्रदेशश्चसप्तमइतिसप्तद्वीपाइत्यर्थः ॥ तदेवविशदयति । रथनेमीति ॥ १५ ॥ यतःसप्तसिंधवआसंस्ततोद्वयोःसमुद्रयोर्मध्येयाःषट् भुवोमध्यस्थाचैकाभूस्तेसप्तद्वीपाःस्मृताइत्यर्थः ॥ १६ ॥ द्विगुणंचोत्तरोत्तरम् ॥ पूर्वस्ययद्विस्तारमानम् उत्तरस्तद्विगुणेनमानेनेत्येवंसिंधुभ्योबहिःसमंततः सप्तद्वीपाःपूर्वोक्तभागक्रमेणसंतीत्यर्थः ॥ १७ ॥ १८ ॥१९॥ २० ॥ द्वीपेक्षुरसेत्यार्षप्रयोगः ॥ प्रैयव्रतःप्रियव्रतस्याऽपत्यमित्यर्थः ॥ इध्मादिजिह्वकः इध्मजिह्वः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ ॥ इतिश्रीदेवीभागवतातिलके ऽष्टमस्कंधेचतुर्थोऽध्यायः ॥ ४ ॥ अर्धाधिकैश्चत्रिंशद्भिःपद्यैरथसविस्तरम् ॥ भूमंडलस्यविस्तारोयथावदनुवर्ण्यते ॥ १ ॥ अधुनाभुवनकोशविस्तारमाह ॥ देवर्षइति ॥अत्राऽपिनारदस्यभुवनकोशविस्ताराविषयकःप्रश्नोऽनुमेयः ॥ अन्यथाऽपृष्टविषयकोत्तरप्रदानस्याऽसंगत्यापत्तेः ॥ द्वीपवर्षविभेदतःद्वीपानिपूर्वोक्तानि ॥ वर्षाणिजंबुद्वीपनवखंडानि ॥ तेषांविभेदेनेत्यर्थः ॥ देवेनपरमेश्वरेणकल्पितम् ॥ १ ॥ जंबुद्वीपइति ॥ लक्षयोजनोविस्तीर्णः ॥ जंबुःस्त्रीजंबुजांबवमितिकोशाज्जंबुशब्दोह्रस्वांतोपि ॥ कमलस्यकर्णिकावदस्तीत्यर्थः॥पूर्वापरायतंसूत्रमपिलक्षयोजनंदक्षिणोत्तरायतमपिसूत्रंलक्षयोजनम् ॥ २ ॥

तस्यापिगच्छतोराज्ञोभूमौयद्रथनेमयः ॥ पतितास्तेसमुद्राख्यांभेजिरेलोकहेतवे ॥१४॥ जाताःप्रदेशास्तेसप्तद्वीपाभूमौविभागशः॥ रथनेमिसमुत्थास्तेपरिखाःसप्तसिंधवः॥१५॥यतआसंस्ततःसप्तभुवोद्वीपाहितेस्मृताः ॥ जंबुद्वीपःप्लक्षद्वीपःशाल्मलीद्वीपसंज्ञकः ॥१६॥ कुशद्वीपःक्रौंचद्वीपशाकद्वीपश्चपुष्करः॥तेषांचपरिमाणंतुद्विगुणंचोत्तरोत्तरम्॥१७॥समंततश्चोपक्लृप्तंबहिर्भागक्रमेणच ॥ क्षारोदेक्षुरसोदौचसुरोदश्चघृतोदकः॥ ॥१८॥ क्षीरोदोदधिमंडोदःशुद्धोदश्चेतितेस्मृताः ॥ सप्तैतेप्रतिविख्याताःपृथिव्यांसिंधवस्तदा॥१९॥ प्रथमोजंबुद्वीपाख्योयःक्षारोदेनवेष्टितः॥ तत्पतिर्विदधेराजापुत्रमाग्नीध्रसंज्ञकम् ॥२०॥प्लक्षद्वीपेद्वितीयेऽस्मिन्द्वीपेक्षुरससंप्लुते ॥ जातस्तदधिपःप्रैयव्रतइध्मादिजिह्वकः ॥२१॥ शाल्मलीद्वीपएतस्मिन्सुरोदधिपरिप्लुते ॥ यज्ञबाहुंतदधिपंकरोतिस्मप्रियव्रतः॥२२॥ कुशद्वीपेऽतिरम्येचघृतोदेनोपवेष्टिते ॥ हिरण्यरेताराजाभूत्प्रियव्रततनूजनिः ॥ २३ ॥ क्रौंचद्वीपेपंचमेतुक्षीरोदपरिसंप्लुते ॥ प्रैयव्रतोघृतपृष्ठःपतिरासीन्महाबलः ॥ २४ ॥ शाकद्वीपेचारुतरेदधिमंडोदसंकुले ॥ मेधातिथिरभूद्राजाप्रियव्रतसुतोवरः ॥ २५ ॥ पुष्करद्वीपकेशुद्धोदकसिंधुसमाकुले ॥ वीतिहोत्रोबभूवाऽसौराजाजनकसंमतः ॥२६॥ कन्यामूर्जस्वतीनाम्नींददावुशनसेविभुः ॥ आसीत्तस्यां देवयानीकन्याकाव्यस्यविश्रुता ॥ २७ ॥ एवंविभज्यपुत्रेभ्यःसप्तद्वीपान्प्रियव्रतः ॥ विवेकवशगोभूत्वायोगमार्गाश्रितोऽभवत् ॥ २८ ॥ इति श्रीदेवीभागवते महापुराणेऽष्टमस्कंधे भुवनकोशेचतुर्थोऽध्यायः ॥ ४ ॥ श्रीनारायण उवाच ॥ देवर्षेशृणुविस्तारंद्वीपवर्षविभेदतः ॥ भूमंडलस्यसर्वस्ययथादेवप्रकल्पितम् ॥ १ ॥ समासात्संप्रवक्ष्यामिनाऽलंविस्तरतःक्वचित् ॥ जंबुद्वीपःप्रथमतःप्रमाणेलक्षयोजनः ॥ २ ॥

नववर्षाणि ॥ तदयंसन्निवेशप्रकारः ॥ पूर्वापरायतदक्षिणोत्तरायतमध्यसूत्रद्वयपातोत्तरंसमंवर्तुलंकृत्वापूर्वापररेखायाउत्तरभागेपूर्वापरायतंसमांशंरेखात्रयंदद्यात् ॥ एवंदक्षिणभागेऽपि समांशेरेखात्रयंदद्यात् ॥ तथादक्षिणोत्तररेखायाउत्तरभागेसमांशभागेनैकांरेखांदक्षिणभागेपिसमांशेनैकांरेखांदद्यात् ॥ पूर्वापरायतंमध्यंसूत्रंदक्षिणोत्तरायतंमध्यंसूत्रंचमार्जयेदेवंकृते नवकोष्ठानिसंपद्यंते तानिनववर्षाणियाश्चाष्टौरेखाःपूर्वापरायताःषट् दक्षिणोत्तरायतेचद्वेरेखे ॥ ताअष्टौमर्यादापर्वताः ॥ तानिवर्षाणिआयामैर्विस्तारैर्नवसहस्रयोजनैःपरिसंख्यानिज्ञेया नीत्यर्थः ॥ एकैकवर्षस्यनवसहस्रयोजनोविस्तारइत्यर्थः ॥ एतच्चभद्राश्वकेतुमालव्यतिरेकेणद्रष्टव्यम् ॥ तयोश्चतुस्त्रिंशद्योजनसहस्रायामत्वात् ॥ मध्यस्थगिरीनाह । गिरिभिरिति ॥ दीर्घरूपैःसमुद्रपर्यंतंगामिभिरष्टमर्यादापर्वतैस्तानिवर्षाणिप्रविभक्तानीत्यर्थः ॥ ३ ॥ ४ ॥ जंबुद्वीपस्यसंनिवेशंस्वयमेवाह । धनुर्वत्संस्थितेइति ॥ दक्षिणोत्तरे ॥ अंतिमेद्वेवर्षे चत्वारि चतुरस्रेलावृतधनुराकारवर्षद्वयमध्यस्थानीत्यर्थः ॥ चतुरस्रमिति ॥ यदिलावृत्तंतच्चतुरस्रंभवतीत्यर्थः ॥ ५ ॥ इलावृतवर्षमध्येमेरुसंस्थामाह इलावृतमिति ॥ नाभ्यांमध्ये ॥ ६ ॥ भूगोलरूपकमलस्यायंकर्णिकास्थानोमेरुरित्यर्थः ॥ मूर्ध्निमस्तकेविततोविस्तीर्णः ॥ ७ ॥ मूलेऽधोभागेषोडशसहस्रःषोडशसहस्रयोजनपरिमितिविस्तृतिरित्यर्थः ॥ तावताषोडशसहस्र

विशालोवर्तुलाकारोयथाऽब्जस्यचकर्णिका ॥ नववर्षाणियस्मिंश्चनवसाहस्रयोजनैः ॥ ३ ॥ आयामैःपरिसंख्यानिगिरिभिःपरितःश्रितैः ॥ अष्टभिर्दीर्घरूपैश्चसुविभक्तानिसर्वतः ॥४॥ धनुर्वत्संस्थितेज्ञेयेद्वेवर्षेदक्षिणोत्तरे ॥ दीर्घाणितत्रचत्वारिचतुरस्रमिलावृतम् ॥५॥ इलावृतंमध्यवर्षंयन्नाभ्यांसुप्रतिष्ठितः ॥ सौवर्णोगिरिराजोऽयंलक्षयोजनमुच्छ्रितः ॥ ६ ॥ कर्णिकारूपएवाऽयंभूगोलकमलस्यच ॥ मूर्ध्निद्वात्रिंशत्सहस्रयोजनैर्विततस्त्वयम् ॥ ७ ॥ मूलेषोडशसाहस्रस्तावतांतर्गतःक्षितौ ॥ इलावृतस्योत्तरतोनीलःश्वेतश्चशृंगवान् ॥ ८ ॥ त्रयोवैगिरयःप्रोक्तामर्यादावधयस्त्रिषु ॥ रम्यकाख्येतथावर्षेद्वितीयेचहिरण्मये ॥९॥ कुरुवर्षेतृतीयेतुमर्यादांव्यंजयंतिते॥प्रागायताउभयतःक्षारोदावधयस्तथा॥१०॥ द्विसहस्रपृथुतरास्तथाएकैकशःक्रमात् ॥ पूर्वात्पूर्वाच्चोत्तरस्यांदशांशादधिकांशतः ॥ ११ ॥ दैर्घ्यएवह्रसंतीमेनानानदनदीयुताः ॥ इलावृताद्दक्षिणतोनिषधोहेमकूटकः ॥ १२ ॥ हिमालयश्चेतित्रयःप्राग्विस्तीर्णाःसुशोभनाः ॥ अयुतोत्सेधभाजस्तेयोजनैःपरिकीर्तिताः ॥ १३ ॥ हरिवर्षंकिंपुरुषंभारतंचयथातथम् ॥ विभागात्कथयंत्येतेमर्यादागिरयस्त्रयः ॥ १४ ॥

योजनमानेनचतुरशीतियोजनसहस्रमानेनबहिर्दृश्यते एवंलक्षयोजनोन्नाहः ॥ मर्यादापर्वतनामान्याह । इलावृतस्येति ॥ उत्तरतःउत्तरस्यांदिशि ॥ ८ ॥ मर्यादावधयः ॥ त्रिषुवक्ष्यमाणवर्षेषुप्रोक्ताइत्यर्थः॥तेषांत्रयाणांनामान्याह । रम्यकेति॥९॥प्रागायताःपूर्वतोदीर्घाः॥ उभयतोमूलेऽग्रभागेच॥ क्षारोदएवाऽवधिर्येषांतेतथोक्ताः॥१०॥द्विसहस्रपृथुतराः द्विसहस्रयोजनविस्तीर्णाः॥एकैकशःएकस्मादेकस्मात्पूर्वात्पूर्वादुत्तरस्यांदिशिदशांशादीषदधिकोयोंशस्तेनदैर्घ्यएवह्रसंति नतूच्चत्वेपृथुत्वेवा ॥ तदुक्तंविष्णुपुराणे॥ लक्षप्रमाणौद्वौमध्येदशहीनास्तथापरे इति ॥ एतदपिस्थूलदृष्ट्यैवोक्तम् ॥ तयोरपियथावन्मध्यत्वाभावेनलक्षप्रमाणत्वाभावात् ॥ ११ ॥ दक्षिणतोदक्षिणस्यांदिशि ॥ १२ ॥ प्राग्विस्तीर्णाःप्रागायताः ॥ अयुतोत्सेधभाजः ॥ अयुतयोजनउत्सेधउच्छ्रयोयेषाम् अयंचोत्सेधोनीलादिपर्वतानामपिबोध्यः ॥ नीलादिपृथुत्वंचैषामपिद्रष्टव्यम् ॥ १३ ॥ हरिवर्षादीनांत्रयाणामेतेमर्यादागिरयइत्याह । हरिवर्षमिति ॥ एतेत्रयोगिरयोवर्षत्रयस्यमर्यादांकथयंतिबोधयंतीत्यर्थः ॥ १४ ॥

पश्चिमतःपश्चिमभागेमाल्यवान्पर्वतः ॥ पूर्वेणपूर्वभागेगंधमादनः ॥ १५ ॥ अनयोर्दैर्घ्यमर्यादामाह ॥ आनीलनिषधंत्वेताविति ॥ उभावपिनीलनिषधपर्यंतंदीर्घावित्यर्थः ॥ अनयोर्वि
स्तारमाह । द्विसहस्रतःद्विसहस्रयोजनैःपृथुतांविस्तारतांप्राप्तावित्यर्थः ॥ तावेवकेतुमालभद्राश्ववर्षयोर्मर्यादाकारकौ ॥ १६ ॥ नन्वेवंसतिपूर्वापररेखायामिलावृतवेष्टितोमेरुर्मध्ये ततः
पूर्वापरतोगिरिद्वयंवर्षद्वयंचनातःपरमस्ति ॥ दक्षिणोत्तरतोरेखायांतुतथैवेलावृतवेष्टितोमध्येमेरुरुभयतस्त्रीणित्रीणिवर्षाणिगिरयश्चपूर्वोक्तपरिमाणाःसंति तत्कथंसर्वतोलक्षप्रमाणत्वंजं
बुद्वीपस्येतिचेदत्रोच्यते ॥· मेरोःषोडशसहस्राणिसर्वतःस्थितत्वादिलावृतस्याष्टादश अन्येषांवर्षाणांचतुष्पंचाशद्गिरीणांषण्णांद्वादशेत्येवंदक्षिणोत्तररेखायांतावल्लक्षंपूर्वापररेखायामपि
सुमेरोरिलावृतस्यचतुस्त्रिंशद्गिर्योश्चत्वारिंशेषाणिद्विषाष्टिसहस्राणि पूर्वापरवर्षयोर्दैर्घ्यंद्रष्टव्यानि ॥ ततोनपूर्वापरविरोधइतिश्रीधरस्वामिनः । मेरोरवष्टंभगिरीनाह । मंदरश्चेति ॥ १७॥
मेरुपादकामेरोःपादाइत्यर्थः ॥ योजनायुतेति॥अयुतयोजनप्रमाणौविस्तारोन्नाहौयेषांविस्तीर्णमूर्ध्नोमेरोरवष्टंभत्वादेतेअवष्टंभकाइत्युच्यंतेइत्यर्थः ॥१८॥ पूर्वपश्चिमौगिरीदक्षिणोत्तरवि

इलावृतात्पश्चिमतोमाल्यवान्नामपर्वतः॥पूर्वेणचततःश्रीमान्गंधमादनपर्वतः ॥१५॥ आनीलनिषधंत्वेतौचायतौद्विसहस्रतः॥योजनैःपृथुतांया
तौमर्यादाकारकौगिरी ॥१६॥ केतुमालाख्यभद्राश्ववर्षयोःप्रथितौचतौ ॥ मंदरश्चतथामेरुमंदरश्चसुपार्श्वकः ॥ १७॥ कुमुदश्चेतिविख्यातागि
रयोमेरुपादकाः ॥ योजनायुतविस्तारोन्नाहामेरोश्चतुर्दिशम् ॥ १८ ॥ अवष्टंभकरास्तेतुसर्वतोऽभिविराजिताः ॥ एतेषुगिरिषुप्राप्ताःपादपाश्च
तजंबुनी ॥ १९ ॥ कदंबन्यग्रोधइतिचत्वारःपर्वताःस्थिताः ॥ केतवोगिरिराजेषुएकादशशतोच्छ्रयाः ॥ २० ॥ तावद्विटपविस्ताराःशताख्य
परिणाहिनः ॥ चत्वारश्चह्रदास्तेषुपयोमध्विक्षुसज्जलाः ॥२१॥ यदुपस्पर्शिनोदेवायोगैश्वर्याणिविंदते ॥ देवोद्यानानिचत्वारिभवंतिललनासु
खाः ॥ २२ ॥ नंदनंचैत्ररथंकंवैभ्राजंसर्वभद्रकम् ॥ येषुस्थित्वाऽमरगणाललनायूथसंयुताः ॥ २३ ॥ उपदेवगणैर्गीतमहिमानोमहाशयाः ॥
विहरंतिस्वतंत्रास्तेयथाकामंयथासुखम् ॥ २४ ॥ मंदरोत्संगसंस्थस्यदेवचूतस्यमस्तकात् ॥ एकादशशतोच्छ्रायात्फलान्यमृतभांजिच॥२५॥
गिरिकूटप्रमाणानिसुस्वादूनिमृदूनिच ॥ तेषांविशीर्यमाणानांफलानांसुरसेनच ॥ २६ ॥ अरुणोदसवर्णेनअरुणोदाप्रवर्तते ॥ नदीरम्यजला
देवदैत्यराजप्रपूजिता ॥ २७ ॥ अरुणाख्यामहाराजवर्ततेपापहारिणी ॥ पूजयंतिचतांदेवींसर्वकामफलप्रदाम् ॥ २८ ॥

स्तारौ दक्षिणोत्तरौचपूर्वापरविस्तारौद्रष्टव्यौ ॥ सर्वतोदशयोजनसहस्रांगीकारेत्विलावृतलोपात्पूर्वेणेलावृतमुपप्लावयंतीत्यादिविरोधःस्यात् ॥१९ ॥ कदंबसहितोन्यग्रोधइतिविग्रहः॥
गिरिराजेषुचतुर्ष्वेतेपादपाःकेतवोध्वजरूपाइत्यर्थः ॥ एकादशशतोच्छ्रयाः एकादशशतयोजनोन्नताः ॥ २० ॥ तावत्प्रमाणाविटपविस्तारायेषांशताख्यपरिणाहिनःशतयोजनःपरि
णाहो विस्तारोयेषाम् इदमुत्तरत्राऽन्वेति ॥ तेष्वेवपर्वतेषुह्रदचतुष्टयमाह । पयोमध्विति ॥ पयोह्रदोमधुह्रदइक्षुरसह्रदःसज्जलःमधुरजलह्रदइत्यर्थः ॥ २१ ॥ यदुपस्पर्शिनोयत्सेवि
नः ॥ तेष्वेवपर्वतेषुदेवोद्यानान्याह । देवोद्यानानीति ॥ ललनासुखाःपुंस्त्वमार्षम् स्त्रीसुखकारीणीत्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥:सुरसेनशोभनरसेनाऽरुणोदसमानव
र्णेनाऽरुणोदा नामनदीप्रादुर्भूतेत्यर्थः ॥ २७ ॥ तत्रत्याःसर्वेदेवाःसललनास्तत्पर्वतास्थितांश्रीभगवतीमरुणाभिधांसर्वभावेनसर्वदोपासयंतीत्याह ॥ अरुणाख्येति ॥ २८ ॥

कल्मषघ्नीचासावभयप्रदाचेतिकर्मधारयः ॥ २९ ॥ यैर्नामभिःपूजयंतितानिनामानिप्राह आद्याब्रह्मरूपिणीमायातद्विशिष्टा ईश्वरंमालतेशोभयतितच्छीला ॥ ३० ॥ एतस्याःपूजाप्र भावेणजांबूनदंसुवर्णसुदावहन्निर्गतमित्यर्थः ॥ इतिश्रीदेवीभागवततिलकेअष्टमस्कंधेपंचमोध्यायः ॥ ५ ॥ द्वात्रिंशद्भिर्महापद्यैरितरद्रुमवर्णनम् ॥ देवीनांवर्णनंसर्वजनोपास्तिश्चवर्ण्यते॥ ॥ १ ॥ अरुणोदाअरुणोयआम्रफलरसः सएवोदकंयस्याःसाअरुणोदा ॥ पूर्वेणेलावृतमिलावृतस्यपूर्वभागेप्लवेत्गच्छेदित्यर्थः ॥ १ ॥ तस्मिन्निलावृतपूर्वभागेपरमेश्वरेणक्रीडंत्याभ वान्या अनुचरीणां यज्ञोषणाद्यस्यरसस्यसेवनादित्यर्थः ॥ २ ॥ एवमेवजंबूवृक्षस्यफलानिपतंतीत्याह । एवंजंबूफलेति ॥ ३॥ अनस्थिनामिति । सूक्ष्मबीजानाम् ॥ मेर्वाख्यमंदरान्मे

नानोपहारबलिभिःकल्मषघ्न्यभयप्रदाम् ॥ तस्याःकृपावलोकेनक्षेमारोग्यंव्रजंतिते ॥ २९ ॥ आद्यामायातुलानंतापुष्टिरीश्वरमालिनी ॥ दुष्ट नाशकरीकांतिदायिनीतिस्मृताभुवि ॥ ३० ॥ अस्याःपूजाप्रभावेणजांबूनदसुदावहत् ॥ इति श्रीदेवीभागवते महापुराणेऽष्टमस्कंधे भुवनलो कवर्णनंनामपंचमोऽध्यायः ॥ ५ ॥ श्रीनारायणउवाच ॥ अरुणोदानदीयातुमयाप्रोक्ताचनारद॥मंदरान्निपतंतीसापूर्वेणेलावृतंप्लवेत् ॥ १ ॥ यज्ञोषणाद्भवान्याश्चाऽनुचरीणांस्त्रियामपि ॥ यक्षगंधर्वपत्नीनांदेहगंधवहोनिलः ॥२॥ वासयत्यभितोभूमिंदशयोजनसंख्यया ॥ एवंजंबूफला नांचतुंगदेशनिपातनात् ॥ ३ ॥ विशीर्यतामनस्थीनांकुंजरांगप्रमाणिनाम् ॥ रसेनचनदीजंबूनाम्नीमेर्वाख्यमंदरात् ॥ ४ ॥ पतंतीभूमिभागे चदक्षिणेलावृतंगता ॥ देवीजंबूफलास्वादतुष्टाजंब्वादिनीस्मृता ॥ ५ ॥ तत्रत्यानांचलोकानांदेवनागर्षिरक्षसाम् ॥ पूजनीयपदामान्यासर्व भूतदयाकरी ॥ ६ ॥ पावनीपापिनांरोगनाशनीस्मरतामपि ॥ कीर्तितावि‌घ्नसंहर्त्रीमाननीयादिवौकसाम् ॥ ७ ॥ कोकिलाक्षीकामकलाकरु णाकामपूजिता ॥ कठोरविग्रहाधन्यानाकिमान्यागभस्तिनी ॥ ८॥ एभिर्नामपदैःकामंजपनीयासदानृणाम् ॥ जंबूनदीरोधसोर्यामृत्तिकाती रवर्तिनी ॥ ९ ॥ जंबूरसेनानुविद्ध्यमानावाय्वर्कयोगतः ॥ विद्याधरामरस्त्रीणांभूषणंविविधंमहत् ॥ १० ॥ जांबूनदसुवर्णंचप्रोक्तंदेवविनि र्मितम् ॥ यत्सुवर्णंचविबुधायोषिद्भिःकामुकाःसदा ॥ ११ ॥ मुकुटंकटिसूत्रंचकेयूरादीन्प्रकुर्वते ॥ महाकदंबःसंप्रोक्तःसुपार्श्वगिरिसंस्थितः॥ ॥ १२ ॥ तस्यकोटरदेशेभ्यःपंचधाराश्रयाःस्मृताः ॥ सुपार्श्वगिरिमूर्ध्नीहपतंत्येताभुवंगताः ॥१३॥ मधुधारापंचतास्तुपश्चिमेलावृतंप्लुताः॥ याश्चोपभुज्यमानानांदेवानांमुखगन्धभृत् ॥१४॥ वायुःसमंततोगच्छञ्छतयोजनवासनः ॥ धारेश्वरीमहादेवीभक्तानांकार्यकारिणी ॥ १५ ॥ देवपूज्यामहोत्साहाकालरूपामहानना ॥ वसतेकर्मफलदाकांतारग्रहणेश्वरी ॥ १६ ॥ करालदेहाकालांगीकामकोटिप्रवर्तिनी ॥ इत्येतैर्नाम भिःपूज्यादेवीसर्वसुरेश्वरी ॥ १७ ॥

रुमंदर पर्वतादित्यर्थः ॥ ४ ॥ इलावृतस्यदक्षिणभागेगतेत्यर्थः । तत्रत्याःसर्वेऽमरास्तत्रस्थितांजंबूफलादनंभक्षणंकर्त्रींतच्छीलांजंब्वादिनीनाम्नींदेवींभगवतीमुपासतेइत्याह । देवींजंबू फलेति ॥ ॥ ५ ॥ ६ ॥ ७ ॥ नाकिमान्यानाकिनोदेवास्तेषांमान्यापूज्या ॥ ८ ॥ रोधसोरुभयतटयोः ॥ ९ ॥ वाय्वर्कयोगतोवाय्वर्कयोगजन्यपरिपाकेनसुवर्णभूताविविधंभूषणंसृज तीत्यर्थः ॥ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ पश्चिमेलावृतम् ॥ छांदसःप्रयोगः ॥ इलावृतस्यपश्चिमदेशेगताइत्यर्थः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

कुमुदरूढः कुमुदपर्वतस्थः ॥ ततस्कन्धेभ्यः पंचनदाः कुमुदपर्वतमूर्धनिपतंतीत्यर्थः ॥ १८ ॥ आभरणैर्युक्ताः पंचनदाइत्यर्थः ॥ १९ ॥ इलावृतस्योत्तरभागेतेगच्छंतीत्यर्थः ॥ तत्र त्यामैररुपास्यामीनाक्षीभगवतीतत्रवर्ततइत्याह । मीनाक्षीति ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ जरामययोर्भृतिर्भरणम् ॥ मुखोपप्लवोमुखरोगः ॥ २६ ॥ २७ ॥ २८ ॥ मूलविभागेकेमूलदेशेकेसरीभूयकमलकेसरसदृशाः अल्पपरिमाणाविंशतिर्गिरयः ॥ २९ ॥ ३० ॥ ३१ ॥ इतिश्रीदेवीभागवततिलकेऽष्टमस्कन्धेषष्ठोऽध्यायः ॥ ६ ॥ सप्ता

एवंकुमुदरूढोयोनाम्नाशतबलोवटः ॥तत्स्कंधेभ्योऽधोमुखाश्चनदाःकुमुदमूर्धतः ॥१८॥ पयोदधिमधुघृतगुडान्नाद्यंबरादिभिः ॥ शय्यासनाद्या भरणैःसर्वेकामदुघाश्चते ॥१९॥ उत्तरेणेलावृतंतेप्लावयंतिसमंततः ॥ मीनाक्षीतत्तलेदेवीदेवासुरनिषेविता॥२०॥ नीलांबरारौद्रमुखीनीलालक युताचसा ॥ नाकिनांदेवसंघानांफलदावरदाचसा ॥२१॥ अतिमान्याऽतिपूज्याचमत्तमातंगगामिनी ॥ मदनोन्मादिनीमानप्रियामानप्रियां तरा ॥२२॥ मारवेगधरामारपूजितामारमादिनी ॥ मयूरवरशोभाढ्याशिखिवाहनगर्भभूः ॥२३॥ एभिर्नामपदैर्वंद्यादेवीसामीनलोचना ॥ ज पतांस्मरतांमानदात्रीचेश्वरसंगिनी ॥२४॥ तेषांनदानांपानीयपानानुगतचेतसाम् ॥ प्रजानांनकदाचित्स्याद्वलीपलितलक्षणम् ॥ २५ ॥ क्लम स्वेदादिदौर्गंध्यंजरामयभृतिश्रमाः ॥ शीतोष्णवातवैवर्ण्यमुखोपप्लवसंचयाः ॥२६॥ नापदश्चैवजायंतेयावज्जीवंसुखंभवेत् ॥ नैरंतर्येणतत्स्या द्वैसुखंनिरतिशायकम् ॥२७॥ ततऊर्ध्वंप्रवक्ष्यामिसंनिवेशंचतद्गिरेः ॥ सुवर्णमयनाम्नोवैसुमेरोःपर्वताःपृथक् ॥२८॥ गिरयोविंशतिपराःकर्णि कायाइवेहते॥ केसरीभूयसर्वेपिमेरोर्मूलविभागके॥२९॥परितश्चोपक्लप्तास्तेतेषांनामानिशृण्वतः॥कुरंगःकुरगश्चैवकुशुंभोऽथोविकंकतः॥३०॥ त्रिकूटःशिशिरश्चैवपतंगोरुचकस्तथा ॥ निषधश्चशितीवासःकपिलःशंखएवच ॥ ३१ ॥ वैदूर्यश्चारुधिश्चैवहंसोऋषभएवच ॥ नागःकालंज रश्चैवनारदश्चेतिविंशतिः ॥३२॥ इति श्रीदेवीभागवते महापुराणेऽष्टमस्कंधे षष्ठोऽध्यायः॥६॥श्रीनारायणउवाच ॥ गिरीमेरुंचपूर्वेणद्वौचाष्टा दशयोजनैः ॥ सहस्रैरायतौचोदग्द्विसहस्रंपृथूच्चकौ ॥१॥ जठरोदेवकूटश्चतावेतौगिरिवर्यकौ ॥ मेरोःपश्चिमतोऽद्रीद्वौपवमानस्तथापरः ॥२॥ पारियात्रश्चतौतावद्विख्यातौतुंगविस्तरौ ॥ मेरोर्दक्षिणतःख्यातौकैलासकरवीरकौ ॥३ ॥ प्रागायतौपूर्ववृत्तौमहापर्वतराजकौ ॥ एवंचोत्तरतो मेरोस्त्रिशृंगमकरौगिरी ॥ ४ ॥ एतैश्चाद्रिवरैरष्टसंख्यैःपरिवृतोगिरिः ॥ सुमेरुःकांचनगिरिःपरिभ्राजत्रविर्यथा ॥ ५ ॥ मेरोर्मूर्धनिधातुर्हिपु रीपंकजजन्मनः ॥ मध्यतश्चोपक्लप्तेयंदशसाहस्रयोजनैः ॥ ६ ॥

धिकैश्चत्रिशद्भिर्महापद्मैरतःपरम् ॥ मूलादूर्ध्वमहामेरोर्वर्णनंसम्यगुच्यते ॥ १ ॥ मेरुंपूर्वेणमेरोःपूर्वभागेद्वौगिरी ॥ अष्टादशयोजनैःसहस्रैःसहस्रात्मकैरष्टादशसहस्रयोजनमित्यर्थः ॥ उदकूउदगायतौतावेवद्विसहस्रंपृथूच्चकौपृथुतुंगौभवतइत्यर्थः॥चतुर्दिक्षुमेरुमूलाद्योजनसहस्रंत्यक्त्वावहेःपरिधयइवजठरदेवकूटादयस्तिष्ठंतिअतोष्टादशयोजनसहस्रंपरिमाणमत्रोक्तम् ॥ वैष्णवादिपुराणेषुपरिमाणादियत्पुनरन्यथावर्णितं तत्तुकल्पभेदाद्यपेक्षया॥१॥२॥३॥ प्रागायतौपूर्वदिशिदीर्घौ ॥ ४ ॥ ५ ॥ पंकजजन्मनश्चतुराननस्य ॥ ६ ॥

॥ ७ ॥ तांपुरीमतुलक्षीकृत्याऽष्टानांलोकानामीशिषामष्टलोकेश्वराणांपराभिन्नाःपुर्यःयथादिशंप्राच्यादिदिक्षु ॥ ८ ॥ यथारूपंयस्यदिक्पालस्ययथाशरीरवर्णस्तत्समानवर्णाः ॥ सार्धने त्रसहस्रप्रमिताःसार्द्धद्विसहस्रप्रमाणेनपरिच्छिन्नाः ॥ तासांनामान्याह । मेरौनवपुराणीति ॥ अष्टदिक्पालानामष्टौब्रह्मणश्चैकमितिनवेत्यर्थः ॥९ ॥ १० ॥ गंगासन्निवेशमाह । तत्रै वेति ॥ मेरोर्मूर्धनीत्यर्थः ॥ यज्ञलिंगस्यबलेर्यज्ञेलिंगंत्रिविक्रममूर्तिर्यस्य॥११॥विष्णोर्वामपादांगुष्ठनखेननिर्भिन्नोयोंऽडकटाहस्तस्योर्ध्वभागस्तेनपतितंयद्रंध्रंतस्यरंध्रस्यमध्यात्संविशंत्यंतः प्रविष्टादिवोमूर्धन्यवततारेयंगंगा ॥ १२ ॥ संविशंतीसहस्रवंती ॥ १३ ॥ युगसाहस्रकेणकालेनबहुकालेनेत्यर्थः ॥ १४ ॥ आगत्यस्थितेत्यर्थः ॥ कोसौदिवोमूर्धातदाह । यत्तद्विष्णुप दमिति ॥१५॥ उत्तानपादस्याऽपत्यम् ॥१६॥ गंगाप्रथमतोबहुकालेनध्रुवमंडलमागतेत्यर्थः ॥ तत्रध्रुवमंडलेयेसप्तर्षयःप्रदक्षिणांकुर्वंतितेतस्यगंगाप्रवाहस्यप्रभावज्ञाआत्यंतिकीमोक्षसि

समानचतुरस्रांचशातकौंभमयींपुरीम्॥वर्णयंतिमहात्मानःपरावरविदोबुधाः॥७॥तांपुरीमनुलोकानामष्टानामीशिषांपराः॥पुर्यःप्रख्यातसौवर्ण रूपास्ताश्चयथादिशम्॥८॥यथारूपंसार्धनेत्रसहस्रप्रमिताःकृताः ॥मेरोर्नवपुराणिस्युर्मनोवत्यमरावती॥९॥ तेजोवतीसंयमनीतथाकृष्णांगना परा॥श्रद्धावतीगंधवतीतथाचान्यामहोदया॥१०॥यशोवतीचब्रह्मेंद्रवह्न्यादीनांयथाक्रमम् ॥ तत्रैवयज्ञलिंगस्यविष्णोर्भगवतोविभोः ॥११॥ वामपादांगुष्ठनखनिर्भिन्नस्यचनारद॥अंडोर्ध्वभागरंध्रस्यमध्यात्संविशतीदिवः॥१२॥मूर्धन्यवततारेयंगंगासंविशतीविभोः॥लोकानामखिला नांचपापहारिजलाकुला ॥ १३ ॥ इयंचसाक्षाद्भगवत्पदीलोकेषुविश्रुता ॥ कालेनमहतासातुयुगसाहस्रकेणतु ॥ १४ ॥ दिवोमूर्धानमागत्य देवीदेवनदीश्वरी ॥ यत्तद्विष्णुपदंनामस्थानंत्रैलोक्यविश्रुतम् ॥१५॥ औत्तानपादिर्यत्रास्तेध्रुवःपरमपावनः ॥ भगवत्पादयुगलंपद्मकोशरजो दधत् ॥ १६ ॥ अद्याप्यास्तेसराजर्षिःपदवीमचलांश्रितः ॥ तत्रसप्तर्षयस्तस्यप्रभावज्ञामहाशयाः ॥ १७ ॥ प्रदक्षिणंप्रक्रमंतिसर्वलोकहितेप्सवः ॥ आत्यंतिकीसिद्धिरियंतपतांसिद्धिदायिनी ॥ १८ ॥ आद्रियंतेचशिरसाजटाजूटोषितेनच ॥ ततोविष्णुपदाद्देवीनैकसाहस्रकोटिभिः ॥ ॥ १९ ॥ विमानैराकुलेदेवयानेऽवतरतीचसा ॥ चंद्रमंडलमाप्लाव्यपतंतीब्रह्मसद्मनि ॥२०॥ चतुर्धाभिद्यमानासाब्रह्मलोकेचनारद॥चतुर्भिर्ना मभिर्देवीचतुर्दिशमभिसृता॥२१॥सरितांचनदीनांचपतिमेवाऽन्वपद्यत॥सीताचालकनंदाचचतुर्भद्रेतिनामभिः ॥२२॥ सीताचब्रह्मसदनाच्छि खरेभ्यःक्ष्माभृताम्॥केसराभिधनाम्नाचप्रस्रवंतीचस्वर्णदी॥२३॥गंधमादनमूर्ध्नीहपतितापापहारिणी॥अंतरेणतुभद्राश्ववर्षंप्राच्यांसमागता २४॥

द्धिरियंतपतांतपस्विनांभवतिसिद्धिदायिनीतिमत्वाजटाजूटैरुषितेनयुक्तेनशिरसातांगंगामाद्रियंतेनित्यंस्नानंकुर्वंतीत्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ चंद्रमंडलात्ब्रह्मलोकेपतनसम येचत्वारःप्रवाहाजाताइत्याह । चतुर्धेति ॥ अभिसृतागता ॥ २१ ॥ तस्मात्पतितायेचत्वारःप्रवाहास्तेषांचत्वारिनामान्यभवन् ॥ सर्वेप्रवाहाःसमुद्रंगताइत्याह । सरितांचेति॥ नामा न्याह ॥ सीताचेति ॥२२॥ सीतानाम्नीगंगाब्रह्मसदनान्निर्गतापूर्वंप्रोक्तायेक्ष्माभृतः पर्वताःकेसराभिधनामानःसुमेरुकर्णिकाकेसरभूतास्तेषांशिखरेभ्यःप्रस्रवंतीगन्धमादनपर्वतमूर्ध्नि निप तितेत्यन्वयः ॥ केसराचलानांसमानोच्छ्रायत्वात्प्रथमंतेषामादिशिखरेषुमुख्यशृंगेषुपतति ॥ तेभ्योधोऽधःप्रस्रवतासता ॥ २३ ॥ भद्राश्ववर्षस्यांतरेणमध्यतइत्यर्थः ॥ २४ ॥

॥ २५ ॥ २६ ॥ २७ अब्जभूर्ब्रह्मा तस्यपदात्सदनादित्यर्थः ॥ २८ ॥ २९ ॥ स्नानायस्नानार्थसरतांगच्छताम् ॥ ३० ॥ ३१ ॥ समुद्रमुत्तरसमुद्रम् ॥ ३२ ॥ ३३ ॥ ३४ ॥ भौम
स्वर्गप्रदानिचेत्यस्यार्थस्वयमेवाह । स्वर्गिणामिति ॥ तत्रत्यंभोगमाह । पुरुषाणामिति ॥ ३५ ॥ दशभिर्नागसहस्रैः समबलेनपरिकल्पिताः ॥ दशसहस्रनागबलाइत्यर्थः ॥३६॥ एक
वर्षोनेति ॥ आयुषिएकेनवर्षेणोनेसतिआप्तगर्भागर्भवत्यःस्त्रियोभवंतितावत्पर्यंतंयुवतयइत्यर्थः ॥ ३७ ॥ इति श्रीदे०तिलकेअष्टमस्कन्धेसप्तमोध्यायः ॥ ७ ॥ त्रिंशद्भिरेकेनोनैस्तु
पद्यैरथसविस्तरम् ॥ इलावृतसमाचारःकथ्यतेभक्तिवृद्धये ॥ १ ॥ सर्वेषुवर्षेषुविद्यमानादेवादयःश्रीदेवीमुपासतेइत्याह । तेषुवर्षेष्विति ॥ देवेशास्तत्तद्वर्षेतत्तद्वीपस्थिताविष्णुरुद्रसंकर्ष

क्षारोदधिंगतासातुद्युनदीदेवपूजिता ॥ ततोमाल्यवतःशृंगाद्द्वितीयापरिनिर्गता ॥ २५॥ ततोवेगवतीभूत्वाकेतुमालंसमागता॥चक्षुर्नाम्नीदे
वनदीप्रतीच्यांदिश्युपागता ॥ २६ ॥ सरितांपतिमाविष्टासागंगादेववंदिता ॥ ततस्तृतीयाधारातुनाम्नाख्याताचनारद ॥ २७ ॥ पुण्याचाल
कनंदावैदक्षिणेनाब्जभूपदात् ॥ वनानिगिरिकूटानिसमतिक्रम्यचागता ॥ २८ ॥ हेमकूटंगिरिवरंप्राप्ताऽतोऽपीहनिर्गता ॥ अतिवेगवतीभूत्वा
भारतंचागतापरा ॥२९॥दक्षिणंजलधिंप्राप्तातृतीयासासरिद्वरा ॥ यस्याःस्नानायसरतांमनुजानांपदेपदे॥३०॥ राजसूयाश्वमेधादिफलंतुनहिदु
र्लभम् ॥ ततश्चतुर्थीधारातुशृंगवत्पर्वतात्पुनः ॥ ३१ ॥ भद्राभिधासंस्रवंतीकुरून्संतर्प्यचोत्तरान् ॥ समुद्रंसमनुप्राप्तागंगात्रैलोक्यपावनी ॥
॥ ३२ ॥ अन्येनदाश्चनद्यश्चवर्षेवर्षेऽपिसंतिहि ॥ बहुशोमेरुमंदारप्रसूताश्चैवनारद ॥३३॥ तत्राऽपिभारतंवर्षंकर्मक्षेत्रमुशंतिहि ॥ अन्यानिचा
ऽष्टवर्षाणिभौमस्वर्गप्रदानिच ॥ ३४ ॥ स्वर्गिणांपुण्यशेषस्यभोगस्थानानिनारद ॥ पुरुषाणांचायुतायुर्वज्रांगादेवसन्निभाः ॥ ३५ ॥ पुरुषा
नागसाहस्रैर्दशभिःपरिकल्पिताः ॥ महासौरतसंतुष्टाःकलत्राढ्याःसुखान्विताः ॥ ३६ ॥ एकवर्षोनकेचायुष्यात्तगर्भाःस्त्रियोऽपिहि ॥ त्रेता
युगसमःकालोवर्ततेसर्वदैवहि ॥ ३७ ॥ इतिश्रीदेवीभागवतेमहापुराणेऽष्टमस्कंधेसप्तमोध्यायः ॥ ७ ॥ श्रीनारायणउवाच ॥ तेषुवर्षेषुदेवेशाः
पूर्वोक्तैःस्तवनैःसदा ॥ पूजयंतिमहादेवींजपध्यानसमाधिभिः ॥ १ ॥ सर्वर्तुकुसुमश्रेणीशोभितावनराजयः ॥ फलानांपल्लवानांचयत्रशोभा
निरंतरम् ॥ २ ॥ तेषुकाननवर्षेषुवर्षपर्वतसानुषु ॥ गिरिद्रोणीषुसर्वासुनिर्मलोदकराशिषु ॥ ३ ॥ विकचोत्पलमालासुहंससारससंचयैः ॥
विमिश्रितेषुतेष्वेवपक्षिभिःकूजितेषुच ॥ ४ ॥ जलक्रीडादिभिश्चित्रविनोदैःक्रीडयंतिच ॥ सुन्दरीललितभ्रूणांविलासायतनेषुच ॥ ५ ॥ तत्र
त्याविहरंत्यत्रस्वैरंयुवतिभिःसह ॥ नवस्वपिचवर्षेषुभगवानादिपूरुषः ॥ ६ ॥ "नारायणाख्योलोकानामनुग्रहरसैकदृक्" ॥ देवीमारा
धयन्नास्तेसचसर्वैश्चपूज्यते ॥ आत्मव्यूहेनेज्ययासौसन्निधत्तेसमाहितः ॥ ७ ॥

णाग्न्यादयोदेवावक्ष्यमाणाःपूर्वोक्तैस्तवनैररुणाजंब्वादिनीधारेश्वरीमीनाक्षीणांकथितैःस्तोत्रैर्जपध्यानसमाधिभिश्चश्रीभगवतींसर्वेउपासतेइत्यन्वयः ॥ १ ॥ तत्रत्यवनवर्णनमाह । सर्व
र्तुकुसुमेति ॥ २ ॥ वर्षपर्वताःपूर्वोक्तावर्षमर्यादाकारकाःपर्वतास्तेषांसानुषुशिखरेषु ॥ ३ ॥ ४ ॥ ५ ॥ सर्ववर्षेषुभिन्नभिन्नरूपेणविष्णुरपिपूज्यतइत्याह । नवस्वपिचवर्षेष्विति ॥ ६ ॥
आत्मव्यूहेनस्वमूर्तिभेदेन ॥ इज्यालोकैःक्रियमाणापूजातद्धेतुनेत्यर्थः ॥ सन्निधत्तेतेषुवर्षेषुसन्निधानंकरोतीत्यर्थः ॥ ७ ॥

पद्मजोब्रह्मातस्याक्षिलक्षणयाभ्रूमध्यंतस्मात्समुद्भवउत्पत्तिर्यस्यसमुख्यशिवांशभूतोरुद्रोनतुमुख्यः ॥८॥ अपरोर्वाचीनःकुतोनप्रविशतितत्राह । भवान्याइति ॥ यतोरुद्रशक्तेर्भवान्याःशा
पतस्तत्रतस्मिन्क्षेत्रेस्फुटंपुमान्पुरुषःप्रवेशमात्रेणस्त्रीभवतितितइत्यर्थः ॥ ९ ॥ भवानीरुद्राणीनाथोयेषांगणकोटीनांतैः ॥ संकर्षणंभजन्उपधावतेइत्यन्वयः ॥ १० ॥ आत्मनःप्रकृति
कारणंपितामहम् ॥११॥ उपासनामंत्रमाह । ॐनमइति सर्वेषांगुणानांसंख्यानंप्रकाशोयस्मात्स्वयंत्वव्यक्तायाऽप्रमेयाय ॥१२॥ भजेभजन्येति ॥ हेभजन्यभजनीयत्वात्वांपरमेश्वरं
भजेइत्यन्वयः ॥ अरणंशरणंपादपंकजंयस्य ॥ कृत्स्नस्यभगस्यैश्वर्यादिषड्गुणस्यपरमयनमाश्रयः ॥ भक्तेषुचालमत्यर्थंभावितंप्रकटितंभूतभावनस्वरूपंयेन ॥ भवापहंसंसारहरम् ॥
भक्तेष्वित्यनुषंगः ॥ भवंसंसारंभावयतीतितथातमर्थादभक्तेष्वितिद्रष्टव्यम् ॥ १३ ॥ ईश्वरत्वमुपपादयंस्तामसत्वेनप्रसक्तमनादरंवारयति । नयस्येति ॥ निरीक्षमाणस्यापिदृष्टिर्माया
गुणैर्विषयैश्रितवृत्तिभिः ॥ करणैश्च अण्वपीषदपिनाज्यतेनलिप्यते ॥ किमर्थंनिरीक्षमाणस्यईशेईशनायनियमनाय ॥ ईशनमीट् ॥ संपदादित्वाद्भावेक्विप् ॥ अत्रवैधर्म्येदृष्टांतः ॥यथा
जितक्रोधवेगानामस्माकंदृष्टिरज्यतेनतथेति ॥ अतआत्मनइंद्रियाणिजिगीषुर्जेतुमिच्छुर्मुमुक्षुस्तंकोनमन्येतनाद्रियेत ॥१४॥ ननुसुरामद्याभ्यांमत्तस्यकुतोदृष्टिर्नाज्यतेतत्राह । असदृशो

इलावृतेतुभगवान्पद्मजाक्षिसमुद्भवः ॥ एकएवभवोदेवोनित्यंवसतिसांगनः ॥ ८ ॥ तत्क्षेत्रेनापरःकश्चित्प्रवेशंवितनोतिच ॥ भवान्याःशा
पतस्तत्रपुमान्स्त्रीभवतिस्फुटम् ॥ ९ ॥ भवानीनाथकैःस्त्रीणामसंख्यैर्गणकोटिभिः ॥ संरुध्यमानोदेवेशोदेवंसंकर्षणंभजन् ॥ १० ॥ आत्म
नाध्यानयोगेनसर्वभूतहितेच्छया ॥ तांतामसींतुरीयांचमूर्तिंप्रकृतिमात्मनः ॥ ११ ॥ उपधावतेचैकाग्रमनसाभगवानजः ॥ श्रीभगवानुवा
च ॥ ॐनमोभगवतेमहापुरुषायसर्वगुणसंख्यानायाऽनंतायाऽव्यक्तायनमइति ॥ १२ ॥ भजेभजन्यारणपादपंकजंभगस्यकृत्स्नस्यपरंपरा
यणम् ॥ भक्तेष्वलंभावितभूतभावनंभवापहंत्वाभवभावमीश्वरम् ॥१३॥नयस्यमायागुणकर्मवृत्तिभिर्निरीक्षितोह्यण्वपिदृष्टिरज्यते ॥ ईशेयथा
नोजितमन्युरंहसाकस्तंनमन्येतजिगीषुरात्मनः॥१४॥ असद्दृशोयःप्रतिभातिमाययाक्षीबेवमध्वासवताम्रलोचनः॥ननागवध्वोर्हणईशिरेह्रिया
यत्पादयोःस्पर्शनधर्षितेंद्रियाः॥१५॥यमाहुरस्यस्थितिजन्मसंयमंत्रिभिर्विहीनंयमनंतमृषयः॥ नवेदसिद्धार्थमिवक्वचित्स्थितंभूमंडलंमूर्धसहस्र
धामसु॥१६॥यस्याऽद्यआसीद्गुणविग्रहोमहान्विज्ञानधिष्ण्योभगवानजःकिल ॥यत्संवृतोहंत्रिवृतास्वतेजसावैकारिकंतामसमैंद्रियंसृजे॥१७॥

यइति । असतीदृक्दृष्टिर्यस्यतस्य ॥ स्वमाययाक्षीबोमत्तइवयोभयंकरःप्रतिभातिमध्वासवाभ्यामाताम्रलोचनइवचनागवधूविमोहेनतथातथाप्रतिभानंयुक्तमित्याह । नेति ॥ पादार्चने
यस्यपादयोःस्पर्शनेनधर्षितंमोहितम् इंद्रियंमनोयासांताह्रियालज्जयाभुजाद्यर्हणेनईशिरेनशेकुः ॥ कस्तंनमन्येतेतिपूर्वेणान्वयः ॥१५॥ यमाहुरिति ॥ अस्यविश्वस्यस्थितिजन्मसंयमहे
तुंयमाहुः ॥ अतएवत्रिभिःस्थित्यादिभिर्विहीनम्॥अनंतंचयमाहुः ॥ ऋषयोमंत्राः ॥ छंदोनुरोधेनदीर्घपाठेऋकारोदेवमातालक्ष्मीःसचऋषयश्चेत्यर्थः॥ अनंतत्वं दर्शयति ॥ मूर्धसहस्र
मेवधामानिस्थानानितेषुक्वचिदेकदेशेस्थितंभूमंडलंयोनवेद सिद्धार्थसर्षपमिव तस्मैनमइतिचतुर्थेनान्वयः ॥१६॥ तत्रजन्महेतुत्वंमहदादिद्वारेणप्रपंचयति । यस्याद्यइति ॥ यस्यगुण
निमित्तोमहान्नामाविग्रहआसीत् ॥ विज्ञानंसत्त्वंधिष्ण्यमाश्रयोयस्यसः ॥ तस्यचित्तरूपत्वेनसत्त्वप्रधानत्वात्सएवंकिलाधिदेववासुदेवाभेदविवक्षयाभवान् ॥ अतोब्रह्मायत्संभवः॥यस्मा
द्ब्रह्मणःसंभूतोऽहंरुद्रःत्रिवृतागुणेनस्वतेजसाविभूतिरूपेणाऽहंकारेणवैकारिकंदेवतावर्गम् ॥ तामसंभूतवर्गम् ॥ ऐंद्रियमिन्द्रियवर्गंच सृजामि ॥ १७ ॥

किंचैतेवयंमहदादयः सर्वेयस्यानुग्रहादिदंब्रह्माण्डंसृजाम॥कथंभूताः यस्यमहात्मनोवशेस्थिताःसंतोयतःसूत्रेणक्रियाशक्त्यायंत्रिताः प्रोताःशकुंताःपक्षिणइवलौकिकेनसूत्रेणवयमित्यु
क्तम् ॥ तानाह महानहंकारश्चवैकृतादयःपूर्वोक्तावर्गाश्च ॥ १८ ॥ स्थितिलयहेतुत्वंदर्शयन्प्रणमति । यदिति ॥ येननिर्मितामेतांमायामेवायंजनोंजसावेद नतुतन्निस्तारणयोगमुपायं
कर्हिचिदपिवेदेति॥स्थितिहेतुत्वंदर्शयति । कीदृशींकर्माण्येवपर्वाणिग्रंथयस्तानिनयतिमापयतीतितथाताम्॥ प्रलयहेतुमाह । विलीयतेस्मिन्निति विलयःउदेत्यस्मादित्युदयःविलयश्चोद
यश्चात्मास्वरूपंयस्यतस्मैनमः ॥ नन्वत्रत्यश्लोकानुपूर्व्याविष्णुभागवतोक्तश्लोकानुपूर्व्याश्चैकत्वंकथंसिद्ध्यतीतिचेन्न॥ एतद्ग्रंथस्याऽत्रत्यविष्णुभागवतग्रंथस्याऽपितत्तद्वर्षस्थितदेवादिभिः
कृतोपासनामंत्राणांतैःकृतस्तोत्राणांचाऽनुवादकत्वादनुवाद्यसमानानुपूर्विकत्वस्यापेक्षितत्वात् ॥ किंचक्वचित्क्वचित्पुराणांतरेश्लोकानुपूर्विकत्वस्यपुराणांतरेदृष्टत्वात्॥ यथानारदपुराणी
यमंत्रखंडस्यतंत्रराजस्थयामलस्थश्लोकानुपूर्विकत्वम्॥शिवरहस्यस्थप्रदोषाध्यायस्यब्रह्मोत्तरखंडस्थप्रदोषाध्यायसमानानुपूर्विकत्वं तथाब्रह्मवैवर्तीयप्रकृतिखंडस्यदेवीभागवतनवमस्कंध
समानापूर्विकत्वमित्याद्यूह्यम्॥तन्त्रेष्वपिबहुषुतंत्रांतरसमानानुपूर्विकत्वमुपलभ्यतएवेति॥१९॥२०॥अथभद्राश्ववर्षीयसेव्यसेवकभावमुपवर्णयति । तथैवेति॥भद्रश्रवानामधर्मपुत्रोवर्ष

एतेवयंयस्यवशेमहात्मनःस्थिताःशकुंताइवसूत्रयंत्रिताः ॥ महानहंवैकृततामसेंद्रियाःसृजामसर्वेयदनुग्रहादिदम् ॥ १८ ॥ यन्निर्मितांकर्ह्यपि
कर्मपर्वणींमायांजनोऽयंगुरुसर्गमोहितः ॥ नवेदनिस्तारणयोगमंजसातस्मैनमस्तेविलयोदयात्मने ॥ १९ ॥ नारायणउवाच ॥ एवंसभगवा
न्रुद्रोदेवंसंकर्षणंप्रभुम् ॥ इलावृतमुपासीतदेवीगणसमाहितः ॥ २० ॥ तथैवधर्मपुत्रोऽसौनाम्नाभद्रश्रवाइति ॥ तत्कुलस्याऽपिपतयःपुरुषाभ
द्रसेवकाः ॥ २१ ॥ भद्राश्ववर्षेतांमूर्तिवासुदेवस्यविश्रुताम् ॥ हयमूर्तिभिदातांतुहयग्रीवपदांकिताम् ॥ २२ ॥ परमेणसमाध्यन्यबारकेणनियं
त्रिताम् ॥ एवमेवचतांमूर्तिंगृणंतउपयांतिच ॥ २३ ॥ भद्रश्रवसऊचुः ॥ ॐनमोभगवतेधर्मायात्मविशोधनायनमइति ॥ अहोविचित्रंभगवद्वि
चेष्टितंघ्नंतंजनोयंहिमिषन्नपश्यति ॥ ध्यायन्नसद्यर्हिविकर्मसेवितुंनिर्हृत्यपुत्रंपितरंजिजीविषुः ॥ २४ ॥ वदंतिविश्वंकवयःस्मनश्वरंपश्यंतिचाऽ
ध्यात्माविदोविपश्चितः ॥ तथापिमुह्यंतितवाऽजमाययासुविस्मितंकृत्यमजंनतोऽस्मितम् ॥२५॥ विश्वोद्भवस्थाननिरोधकर्मतेह्यकर्तुरंगीकृत
मप्यपावृतः ॥ युक्तंनचित्रंत्वयिकार्यकारणेसर्वात्मनिव्यतिरिक्तेचवस्तुतः ॥ २६ ॥

पतिः तत्कुलस्यापिपतयस्तस्मिन्कुलेजायमानाःपुरुषाः कथंभूताः भद्रस्यभद्रनाम्नोवर्षपतेःसेवकास्तेचेत्यर्थः ॥२१॥ हयमूर्तिभिदाहयग्रीवमूर्तिभेदेनविश्रुतांतांनुतांचहयग्रीवपदांकितां
हयग्रीवनाम्नीम्॥२२॥समाध्यन्यवारकेणेति ॥ समाधेरन्यद्बाह्यव्यापारादि तद्वारकेणतन्निवारकेणपरमेणपूजनेननिरंतरंसमाधिनैवनियंत्रितांबद्धांविषयीकृतामित्यर्थः॥गृणंतःस्तुवंतः॥
उपयांतिचसिद्धिंमूर्तिंवा ॥ २३ ॥ भद्रश्रवसऊचुरिति ॥ प्राणभृतउपदधातीतिवद्गुणलक्षणतयातद्योगाद्गणिषुलिंगसमवायन्यायेनबहुवचनम्॥अहोविचित्रमिति ॥ अयंजनोमिषन्नपिप
श्यन्नपिघ्नंतंहिंसंमृत्युंनपश्यतीतिभगवद्विचेष्टितमेव॥तच्चविचित्रम्॥अदर्शनेलिंगंपुत्रंवापितरंचवृद्धंमृतंनिर्हृत्यदग्ध्वास्वयंतदुभयधनैर्जिजीविषुर्जीवितुमिच्छतीत्यर्थः॥ किंधर्मार्थंनयर्हिय
तोऽसत्तुच्छंविषयसुखंसेवितुंविकर्मपापमेवध्यायन्॥२४॥नन्वविद्वान्नपश्यतिकिमत्रचित्रंतत्राह।वदंतीति॥नश्वरंवदंतिस्मशास्त्रतः॥पश्यंतिचसमाधौहेअज तथापिमुह्यंति एतच्चतवकृत्यं
चेष्टितम् सुविस्मितंअतिविचित्रम्॥अतःशास्त्रादिश्रमंविहायतंत्वाम्॥अजंनतोस्मि॥२५॥इदमपरंचित्रवत्प्रतीयमानमपित्वयिनचित्रमित्याहविश्वोद्भवेति॥ विश्वोद्भवादिकर्मकर्तुरपिअ
पगताआवृत्आवरणंयस्मात्तादृशस्यापितेअंगीकृतंवेदेनत्वयितन्नचित्रम्।यतोमाययासर्वात्मनिकार्यस्यकारणेस्रष्टरिकर्मयुक्तम्वस्तुतःसर्वव्यतिरिक्तेनिरुपाधावनावृतत्वमकर्तृत्वंचयुक्तं।

परमेश्वरत्वेनस्तुत्वाप्रस्तुतावतारचरितमाह । वदानिति ॥ तमसादैत्येनतिरस्कृतानपनीतान् ॥ नाचतुरंगश्चतुत्तुरंगौतद्रूपौविग्रहोयस्य ॥ कवयेब्रह्मणेतदर्थम् अवितथेहितायसत्यसं कल्पाय ॥ ॥ २७ ॥ २८ ॥ देवीलोकेमणिद्वीपे ॥२१॥ इतिश्रीदेवीभागवततिलकेऽष्टमस्कंधेऽष्टमोऽध्यायः॥८॥त्रयोविंशतिभिःपद्यैर्मंत्रहीनैरतः परम् ॥ वर्षांतर्गतसंसेव्यसेवकत्वमि होच्यते ॥ १ ॥ १ ॥ असुरः प्रह्लादः ॥ २ ॥ तेजसामपितेजसे ॥ आविराविः अतिप्रकटोभव । वीप्सावा ॥ कर्माशयान्कर्मवासनाः ॥ कर्माश्रयानितिपाठेरागादीन् ॥ रंधयनि र्दह ॥ भूयिष्ठाःभूयः ॥ स्वस्त्यस्त्विति विश्वस्यस्वस्तिप्रार्थनेखलस्याऽपिभवेत् तच्चसाधुपीडांविनानस्यात् अन्योन्यममंगलंध्यायतांचभूतानामन्योन्यघातनंविनानभवेदित्याशंक्याह । खलः प्रसीदतु क्रौर्यंत्यजतु ॥ भूतानिचामिथः शिवमेवध्यायंतु तेषांमनश्चभद्रमुपशमादिकंभजतु ॥ नोस्माकमपिमतिः अपिशब्दाद्भूतानांचमतिःअहैतुकीनिष्कामासती॥३॥ माऽगा रेति ॥ नःसंगः क्वापिमास्यात् यदिकथंचित्स्यात्तर्हिअगारादिषुमास्यात् किंतुभगवत्प्रियेष्वेव ॥ अगारादिसंगदोषमाह । यइति ॥ इंद्रियप्रियोगृहेष्वासक्तः ॥ ४ ॥ भगवत्प्रियसं

वेदान्युगान्तेतमसातिरस्कृतान्रसातलाद्योनृतुरंगविग्रहः ॥ प्रत्याददेवैकवयेऽभियाचतेतस्मैनमस्तेवितथेहितायते ॥ २७ ॥ एवंस्तुवंतिदेवेशंह यशीर्षंहरिंचते ॥ भद्रश्रवसनामानोवर्णयंतिचतद्गुणान् ॥ २८ ॥ एषांचरितमेतद्धियःपठेच्छ्रावयेच्चयः ॥ पापकंचुकमुत्सृज्यदेवीलोकंव्रजेच्च सः ॥ २९ ॥ इतिश्रीदेवीभागवते महापुराणेऽष्टमस्कंधेऽष्टमोऽध्यायः ॥ ८ ॥ श्रीनारायणउवाच ॥ हरिवर्षेचभगवान्नृहरिःपापनाशनः ॥ वर्ततेयोगयुक्तात्माभक्तानुग्रहकारकः ॥ १ ॥तस्यतद्दयितंरूपंमहाभागवतोसुरः ॥ पश्यन्भक्तिसमायुक्तस्तौतितद्गुणतत्त्ववित् ॥ २ ॥ प्रह्ला दउवाच ॥ ॐनमोभगवतेनरसिंहायनमस्तेजस्तेजसेआविराविर्भववज्रदंष्ट्रकर्माशयान्रंधयरंधयतमोग्रसग्रसॐस्वाहा॥ अभयंममात्मनिभूयि ष्ठाः॥ ॐक्ष्रौं॥ स्वस्त्यस्तुविश्वस्यखलःप्रसीदतांध्यायंतुभूतानिशिवंमिथोधिया ॥ मनश्चभद्रंभजतादधोक्षजेआवेश्यतांनोमतिरप्यहैतुकी॥३॥ माऽगारदारात्मजवित्तबंधुषुसंगोयदिस्याद्भगवत्प्रियेषुनः ॥ यःप्राणवृत्त्यापरितुष्टआत्मवान्सिद्ध्यत्यदूरान्नतथेंद्रियप्रियः ॥४॥ यत्संगलब्धं निजवीर्यवैभवंतीर्थंमुहुःसंस्पृशतांहिमानसम् ॥ हरत्यजोंतःश्रुतिभिर्गतोगजंकोवैनसेवेतमुकुंदविक्रमम् ॥ ५ ॥ यस्याऽस्तिभक्तिर्भगवत्यकिं चनासर्वैर्गुणैस्तत्रसमासतेसुराः ॥ हरावभक्तस्यकुतोमहद्गुणामनोरथेनासतिधावतोबहिः ॥ ६ ॥ हरिर्हिसाक्षाद्भगवाञ्छरीरिणामात्माझषाणा मिवतोयमीप्सितम् ॥ हित्वामहांस्तंयदिसज्जतेगृहेतदामहत्त्वंवयसादंपतीनाम् ॥ ७ ॥

गेगुणमाह । यत्संगेति ॥ येषांभगवत्प्रियाणांसंगाल्लब्धंमुकुंदविक्रमंश्रुतिभिःश्रवणादिभिः संस्पृशतांसंसेवमानानांपुंसामंतर्गतोऽजोमानसंमलंहरति कथंभूतंविक्रमम् निजमसाधार णंवीर्यंवैभवंप्रभावातिशयोयस्य ॥ तीर्थंतुगंगादिमुहुःसंस्पृशतामंगजंमलंकेवलंहरति॥ तात्कोवैनसेवेतन्यन्वयः॥५॥ मानसमलापगमेफलमाह । यस्येति॥ अकिंचनानिष्कामामनःशुद्धौ हरेर्भक्तिर्भवति ॥ ततश्चतत्प्रसादेसतिसर्वैर्देवाःसर्वैर्गुणैर्धर्मज्ञानादिभिःसहतत्रसम्यगासतेनित्यंवसंति गृहाद्यासक्तस्यतुहरिभक्त्यसंभवात्कुतोमहतांगुणाज्ञानवैराग्यादयोभवन्ति॥ असति विषयसुखेमनोरथेनबहिर्धावतः॥६॥ ननुहरिविमुखस्याऽपिगृहाद्यासक्तस्यलोकेमहत्त्वंदृश्यते॥ सत्यम् । तत्तूपहासास्पदमितिसहेतुकमाह । हरिर्हीति ॥ यथाझषाणांमीनानामीप्सितंतो यमेवात्मा ॥ तेनविनाजीवनाभावात् ॥ महानतिप्रसिद्धोऽपिगृहेयदिसज्जतेतदादंपतीनांमिथुनानांशूद्रादिष्वपिप्रसिद्धंवयसैवकेवलंयन्महत्त्वंतदेवतस्यभवति ॥ नतुज्ञानादिनामिथुनेषु तेषुपूज्यमानेषुस्त्रीभ्यःपुंसांमहत्त्वम् ॥ बालमिथुनेभ्यश्चवृद्धमिथुनानांमहत्त्वंयथेत्यर्थः ॥ ७ ॥

यस्मादेवंतस्मात्गृहंहित्वाऽकुतोभयंनृसिंहपादंभजतेत्यसुरानुपादिशाति । तस्मादिति ॥ कीदृशंगृहम् रजस्तृष्णा रागोऽभिनिवेशः रजआदीनांमूलंकारणम् ॥ अतएवसंसृतीनांजन्म मरणादीनाम् चक्रवालंमंडलमविच्छेदोयस्मात् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ सर्वैर्गुणविशेषैःश्रेष्ठवस्तुभिर्विलाक्षितोलक्षीकृतआत्मायस्य ॥ आकूतीनांक्रियाणां चित्तीनांज्ञानानां चेत सांसंकल्पाध्यवसायादीनां विशेषाणांतद्विषयाणांम् ॥ षोडशकलाअंशाएकादशेंद्रियपंचविषयलक्षणायस्य ॥ छंदोमयायवेदोक्तकर्मप्राप्याय ॥ अन्नमयायान्नेनोपष्टभ्यत्वात् ॥ अमृतमयायपरमानंदाविष्कारत्वात् ॥ सर्वमयायसर्वविषयत्वात् ॥ सहसेओजसेबलायतद्धेतुत्वात् ॥ त्वत्कामेनैवत्वत्सेवकत्वादहंकृतार्थास्मि ॥ अन्यकामनयातुत्वामर्चयंत्योनपरिपूर्ण मनोरथाःस्युरित्याह । स्त्रियइति ॥ स्वतएवहृषीकाणामीश्वरंपतिंसंतंत्वामाराध्य याःस्त्रियोऽन्यंपतिंप्रार्थयंते ॥ पतिकामानांहिकामाराधनंव्रतेषुप्रसिद्धम् ॥ तासामपत्यादीनितेपत योनपातुंशक्ताः ॥ १२ ॥ अतस्तेपतयएवनभवंतीत्याह । सवाइति ॥ सचैवंभूतःपतिर्भवानेकएवनाऽन्यः ॥ योभवानात्मलाभात्परमन्यदधिकंनमन्यतेइतरथान्याधीनसुखस्यनस्वतंत्रता॥स्वतंत्रनानात्वेचमंडलेश्वराणामिवमिथोभयंस्यादित्यर्थः॥ १३॥ किंचनिष्कामभजनेअप्रार्थिताएवसर्वेकामाभवंति सकामभजनेतुकामितमात्रमनित्यंचेत्याह । यातस्यते इति ॥

तस्माद्रजोरागविषादमन्युमानस्पृहाभयदैन्याधिमूलम् ॥ हित्वागृहंसंसृतिचक्रवालंनृसिंहपादंभजतांकुतोभयम् ॥ ८ ॥ एवंदैत्यपतिःसोऽपिभक्त्याऽनुदिनमीडते ॥ नृहरिंपापमातंगहरिंहृत्पद्मवासिनम् ॥ ९ ॥ केतुमालेचवर्षेहिभगवान्स्मररूपधृक् ॥ आस्तेतद्वर्षनाथानांपूजनीयश्चसर्वदा ॥ १० ॥ एतेनोपासतेस्तोत्रजालेनचरमाब्धिजा ॥ तद्वर्षनाथासततंमहतांमानदायिका ॥ ११ ॥ रमोवाच ॥ ॐह्रींह्रींहूंॐ नमोभगवतेहृषीकेशायसर्वगुणविशेषैर्विलक्षितात्मनेआकूतीनांचित्तीनांचेतसांविशेषाणांचाधिपतयेषोडशकलायच्छंदोमयायान्नमयायामृतमयायसर्वमयायसहसेओजसेबलायकांतायकामायनमस्तेउभयत्रभूयात् ॥ स्त्रियोव्रतैस्त्वांहृषीकेश्वरंस्वतोह्याराध्यलोकेपतिमाशासतेन्यम् ॥ तासांनतेवैपरिपांत्यपत्यंप्रियंधनायूंषियतोऽस्वतंत्राः ॥ १२ ॥ सवैपतिःस्यादकुतोभयः स्वतःसमंततःपातिभयातुरंजनम् ॥ सएकएवेतरथामिथोभयंनैवात्मलाभादधिमन्यतेपरम् ॥ १३ ॥ यातस्यतेपादसरोरुहार्हणंनकामयेत्साखिलकामलंपटा ॥ तदेवरासीप्सितमीप्सितोर्चितो यद्भग्नयाच्ञाभगवन्प्रतप्यते॥ १४॥मत्प्राप्तयेऽजेशसुरासुरादयस्तप्यंतउग्रंतपऐंद्रियेधियः ॥ ऋतेभवत्पादपरायणान्नमांविंदंत्यहंत्वद्धृदयायतोऽजित॥ १५॥सत्वंममाऽप्यच्युतशीर्ष्णिवंदितंकरांबुजंयत्त्वदधायिसात्वताम्॥बिभर्षिमांलक्ष्मवरेण्यमायायाकईश्वरस्येहितमूहितुंविभुः ॥ १६ ॥

यास्त्रीतस्योक्तलक्षणस्यतेपादसरोरुहस्यार्हणंपूजामेवकामयेन्नफलांतरम् साखिलेषुकामेषुलंपटासर्वान्कामान्प्राप्नोतीत्यर्थः ॥ ईप्सितमीप्सितःफलांतरंप्राप्तुमपेक्षितःसन्अर्चितश्चेत्तर्हि तदेवतदेकं रासिददासि ॥ किंचयद्यतःफलभोगानंतरंभग्नायाच्ञावंचितोर्थोयस्याःसाप्रतप्यतेदुःखंप्राप्नोति ॥ तदेवरासिनतुनित्यम् ॥ १४ ॥ ननुममार्हणेकुतःसर्वकामप्राप्तिस्त्वमेव हिकामार्थिभिःसेव्यसेतत्राह । मत्प्राप्तयेइति ॥ मत्प्राप्तयेब्रह्मादयस्तपस्तप्यंतेकुर्वंति ॥ कथंभूताःऐंद्रियेसुखेधीर्येषाम् ॥ अलुक्समासः ॥ तथापिभगवत्पादपरायणादृतेमांनविंदंति मत्कटाक्षविलसिताविभूतीनलंभंतेइत्यर्थः यतस्त्वय्येवहृदयंयस्याःसाऽहंत्वत्परतंत्रत्वात्त्वदनुवर्तिनंविलोकयामिनान्यमित्यर्थः ॥ १५ ॥इदानींत्वत्कृपांप्रार्थयते।सत्वमिति॥यद्भजनंविना नकश्चित्पुरुषार्थः ॥ सत्वंत्वदितित्वंयावत्करांबुजंसात्वतांभक्तानांशीर्ष्णिअधायिकृपयान्यस्तंतन्ममापिशीर्ष्णिनिधेहीतिशेषः ॥ कथंभूतंवंदितंसर्वकामवर्षित्वेनसाद्भिःस्तुतम् ॥ नचमयितवाऽनादरः ॥ यतोहेवरेण्य मांवक्षसिलक्ष्मविभर्षि ॥ अहोचित्रमेतन्मयिकेवलमादरमात्रं भक्तेषुतुपरमाकृपा ॥ अतईश्वरस्यतवयन्माययाईहितंतत्कोवितर्कयितुंसमर्थः ॥ १६ ॥

॥ १७ १८ ॥ सत्त्वायसत्त्वप्रधानाय ॥ प्राणायसूत्रात्मने ॥ उरुस्वनोवेदात्मकोनादोयस्य ॥ यइदंविश्वंब्राह्मणादिनाम्नाविधिनिषेधालंबनभूतेनवशेअनयत्नियमितवान् सत्वमीश्वरः॥ तथाच श्रुतिः ॥ तस्यवाक्तंतिर्नामानीति ॥ १९ ॥ नन्विंद्रादयोवशंनयंतिकुतोऽहंतत्राऽह । यमिति ॥ मत्सरएवज्वरोयेषांते ॥ यंहित्वाद्विपदश्चतुष्पदःसरीसृपंजंगमंस्थावरंच यद त्रदृश्यतेतत्किंचिदपिपातुंनशक्ताः ॥ सत्वमेवप्राणरूपेणपालकईश्वरश्चेत्यर्थः॥ तथाचश्रुतिः ॥ ताअहिंसताहमुक्थमस्म्यहमुक्थमित्यादि ॥ २० ॥ अवतारचरित्रमाह । भवानिति ॥ भवानिमांक्षोणींमयामनुनासहमत्सहितांधृत्वेत्यध्याहारः ॥ ऊर्मिमालिनिप्रलयार्णव ओजसाउरुक्रमतेविचरति ॥ यद्वा पातुमित्यस्याऽनुषंगः ॥ क्षोणींपातुंक्रमतेउत्सहतेइत्यर्थः ॥ यतःअजः ॥ कीदृशीमौषधीनांवीरुधांचनिधिम् आश्रयभूताम् ॥ जगतोयःप्राणगणस्तस्यात्मनेनियंत्रे ॥ २१ ॥ २२ ॥ २३ ॥ इतिश्रीदेवीभागवतातिलकेऽष्टमस्कंधेनवमोऽध्यायः

एवंकामंस्तुवंत्येवलोकबंधुस्वरूपिणम् ॥ प्रजापतिमुखावर्षनाथाःकामस्यसिद्धये ॥ १७ ॥ रम्यकेनामवर्षेचमूर्तिंभगवतःपराम् ॥ मात्स्यां देवासुरैर्वंद्यांमनुःस्तौतिनिरंतरम् ॥ १८ ॥ मनुरुवाच ॥ ॐनमोमुख्यतमायनमःसत्त्वायप्राणायौजसेबलायमहामत्स्यायनमः ॥ अंतर्बहिश्चा खिललोकपालकैरदृष्टरूपोविचरस्युरुस्वनः ॥ सईश्वरस्त्वंयइदंवशेनयन्नाम्नायथादारुमयींनरःस्त्रियम् ॥ १९ ॥ यंलोकपालाःकिलमत्सर ज्वराहित्वायतंतोपिपृथक्समेत्यच ॥ पातुंनशेकुर्द्विपदश्चतुष्पदःसरीसृपंस्थाणुयदत्रदृश्यते ॥ २० ॥ भवान्युगांतार्णवऊर्मिमालिनिक्षोणीमि मामोषधिवीरुधांनिधिम् ॥ मयासहोरुक्रमतेजओजसातस्मैजगत्प्राणगणात्मनेनमः ॥ २१ ॥ एवंस्तौतिचदेवेशंमनुःपार्थिवसत्तमः ॥ मत्स्या वतारंदेवेशंसंशयच्छेदकारणम् ॥ २२ ॥ ध्यानयोगेनदेवस्यनिर्धूताशेषकल्मषः ॥ आस्तेपरिचरन्भक्त्यामहाभागवतोत्तमः ॥ २३ ॥ इति श्रीदेवीभागवते महापुराणे अ० भुवनकोशवर्णनेनवमोऽध्यायः ॥ ९ ॥ श्रीनारायणउवाच ॥ हिरण्मयेनामवर्षेभगवान्कूर्मरूपधृक् ॥ आस्तेयो गपतिःसोऽयमर्यम्णापूज्यईड्यते ॥ १ ॥ अर्यमोवाच ॥ ॐनमोभगवतेअकूपारायसर्वसत्त्वगुणविशेषणायनोपलक्षितस्थानायनमोवर्ष्मणेन मोभूम्नेनमोऽवस्थानायनमस्ते॥यद्रूपमेतन्निजमाययार्पितमर्थस्वरूपंबहुरूपरूपितम् ॥ संख्यानयस्यास्त्ययथोपलंभनात्तस्मैनमस्तेऽव्यपदेश रूपिणे ॥ २ ॥ जरायुजंस्वेदजमंडजोद्भिदंचराचरंदेवर्षिपितृभूतमैंद्रियम् ॥ द्यौःखंक्षितिःशैलसरित्समुद्रद्वीपग्रहर्क्षेत्यभिधेयएकः ॥ ३ ॥

॥ ९ ॥ अधोनयैकविंशत्याप्यन्यवर्षांतरेष्वपि ॥ सेव्यसेवकरूपाणांवर्णनंसम्यगीर्यते ॥ १ ॥ अर्यमापितृगणाधिपतिः ॥ १ ॥ अकूपारायकूर्मायसर्वःसंपूर्णःसत्त्वगुणविशेषणं यस्यनो पलक्षितस्थानंयस्यवारिचरत्वात् ॥ वर्ष्मणेवर्षीयसेकालानवच्छिन्नाय ॥ भूम्नेसर्वगतायअवस्थानाय आधाराय । यद्रूपमिति ॥ निजमाययार्पितंप्रकाशितमेतदर्थस्वरूपंदृश्यंपृथिव्या दियस्यैवरूपम् यतः पृथक्नास्ति ॥ कथंभूतम् । बहुभीरूपैरूपितं निरूपितं यस्यचसंख्यानास्ति ॥ कुतः अयथामिथ्यैवोपलंभात् ॥ नहिमरीचिजलमेतावदितिसंख्यातुंशक्यते ॥ अव्यपदेशरूपिणेअनिरुक्तप्रपंचाकाराय ॥ २ ॥ बहुरूपत्वंदर्शयंस्तस्येश्वराद्व्यतिरेकमाह । जरायुजमिति॥द्वीपग्रहर्क्षमित्यभिधेयस्त्वमेवैकः नत्वद्व्यतिरिक्तोऽस्ति ॥ सर्वंखल्विदंब्रह्मेत्यादिश्रुतिभिरित्यर्थः ॥ ३ ॥

सप्रपंचतामनूद्यतन्निरासेनप्रणमति । यस्मिन्निति ॥ असंख्येयाअनंताविशेषायेषांतानिनामानिरूपाण्याकृतयश्चयस्यतादृशेयास्मिन्त्वायिकाविभिःकपिलादिभिरियंचतुर्विंशत्यादिसं ख्याकल्पितासतीययातत्त्वदृशायेनतत्त्वज्ञानेनाऽपनीयते तस्मैतेसांख्यसिद्धांतरूपायनमः ॥ परमार्थरूपायेतिवा॥४॥५॥६॥७॥मंत्रैस्तत्त्वेनलिंग्यतेइतितथातस्मै॥ अज्ञाअयूपाःक्रतवः सयूपास्तद्रूपायअतएवमहांतोऽध्वराअवयवभूतायस्य॥कर्मणाशुक्लायशुद्धाययज्ञानुष्ठात्रे त्रियुगाय कृतयुगे यज्ञाभावात् यद्वा कलियुगेछिन्नत्वात्॥८॥ कवयोविद्वांसःविपश्चितोनिपुणाः गुणेषुदेहेंद्रियादिषुमथ्नंतिविचिन्वंति ॥ मथ्नाविवेकसाधनेनमनसा ॥ क्रियार्थैःकर्मभिस्तत्फलैश्चगूढम् अप्रकाशमानंदिदृक्षवः ॥ एवंमंथनेईरितःप्रकटितआत्मास्वरूपंयस्यतस्मैनमः॥ ॥ ९ ॥ मंथनमेवदर्शयन्नाह । द्रव्यंक्रियेति ॥ द्रव्यंविषयः ॥ क्रियाइंद्रियव्यापारः ॥ हेतुर्देवता ॥ अयनंदेहः ईशःकालः कर्ताअहंकारः ॥ एतैर्मायागुणैः ॥ कार्यैरुपलक्षणैर्वस्तुत्वेन निरीक्षितोयआत्मातस्मै अन्वीक्षयाविचारेणअंगैर्यमनियमादिभिरतिशयात्मानिश्चयवतीबुद्धिर्येषांतैः ॥ निरस्तामायानिर्मिताआकृतिर्यस्मात्तस्मै ॥ १० ॥ तदेवंनिर्गुणरूपेणनत्वापर

यस्मिन्नसंख्येयविशेषनामरूपाकृतौकविभिःकल्पितेयम् ॥ संख्याययातत्त्वदृशापनीयतेतस्मैनमःसांख्यनिदर्शनायते ॥ ४ ॥ एवंस्तुवतिदे वेशमर्यमासहवर्षपैः ॥ गीयतेचाऽपिभजतेसर्वभूतभवंप्रभुम् ॥५॥ ततोत्तरेषुकुरुषुभगवान्यज्ञपूरुषः॥ आदिवाराहरूपोऽसौधरण्यापूज्यतेसदा ॥ ६ ॥ संपूज्यविधिवद्देवंतद्भक्त्याऽऽर्द्राऽऽर्द्रहृत्कजा ॥ भूमिःस्तौतिहरिंयज्ञवाराहंदैत्यमर्दनम्॥ ७ ॥ भूरुवाच ॥ ॐनमोभगवतेमंत्रतत्त्वलिं गाययज्ञक्रतवेमहाध्वरावयवायमहावराहायनमःकर्मशुक्लायत्रियुगायनमस्ते ॥८ ॥यस्यस्वरूपंकवयोविपश्चितोगुणेषुदारुष्विवजातवेदसम्॥ मथ्नंतिमथ्नामनसादिदृक्षवोगूढंक्रियार्थैर्नमईरितात्मने ॥ ९ ॥ द्रव्यक्रियाहेत्वयनेशकर्तृभिर्मायागुणैर्वस्तुभिरीक्षितात्मने ॥ अन्वीक्षयांगा तिशयात्मबुद्धिभिर्निरस्तमायाकृतयेनमोऽस्तुते ॥ १० ॥ करोतिविश्वस्थितिसंयमोदयंयस्येप्सितंनेप्सितुमीक्षितुर्गुणैः ॥ मायायथायोभ्र मतेतदाश्रयंग्राव्णोनमस्तेगुणकर्मसाक्षिणे ॥ ११ ॥ प्रमथ्यदैत्यंप्रतिवारणंमृधेयोमांरसायाजगदादिसूकरः ॥ कृत्वाऽग्रदंष्ट्रेनिरगादुदन्वतःक्री डन्निवेभःप्रणताऽस्मितंविभुम् ॥ १२ ॥ किंपुरुषेवर्षेऽस्मिन्भगवंतंदाशरथिंचसर्वेशम् ॥ सीतारामंदेवंश्रीहनुमानादिपूरुषंस्तौति ॥ १३ ॥ हनुमानुवाच ॥ ओंनमोभगवतेउत्तमश्लोकायनमइति ॥ आर्यलक्षणशीलव्रतायनमउपशिक्षितात्मनेउपासितलोकायनमः ॥ साधुवादनिकष णायनमोब्रह्मण्यदेवायमहापुरुषायमहाभागायनमइति ॥ यत्तद्विशुद्धानुभवात्ममेकंस्वतेजसाध्वस्तगुणव्यवस्थम् ॥ प्रत्यक्प्रशांतंसुधियोपलं भनंह्यनामरूपंनिरहंप्रपद्ये॥ १४ ॥

मेश्वररूपेणप्रणमति । करोतीति ॥ यस्येक्षितुर्जीवार्थमीप्सितमत्यंतानिच्छायामीक्षणायोगात् ॥ स्वार्थंतुनेप्सितम् ॥ विश्वस्थित्यादिस्वगुणैर्मायाकरोति ॥ तस्याजडत्वेपिपरमेश्वरस न्निधानात्प्रवृत्तिंदृष्टांतेनाऽऽह । यथाऽयोलोहंग्राव्णोऽयस्कांतादिनिमित्तात्भ्रमति॥तदाश्रयंतदभिमुखम्॥सद्गुणानांकर्मणांजीवादृष्टानांचसाक्षिणेतस्मैनमः॥ ११ ॥अवतारचरित्रमाह । प्रमथ्येति । योजगतामादिःकारणभूतःसूकरःमांपृथ्वीमग्रदंष्ट्रेदंष्ट्राग्रेकृत्वारसातलादारभ्यउदन्वतःप्रलयार्णवात्इभोगजइवनिरगात् ॥ ततश्चप्रतिगजतुल्यंदैत्यंप्रमथ्य यःक्रीडन्स्थितः तंविभुंप्रणतास्मीत्यन्वयः ॥ १२ ॥ किंपुरुषेइत्यार्याच्छंदः ॥ १३ ॥ आर्याणिलक्षणानिशीलंव्रतंचयस्मिन् ॥ उपशिक्षितात्मनेसंयतचित्ताय उपासितोलोकोयेन ॥ साधुवादः साधुत्वप्रसिद्धिस्तस्यनिकषणायनिकषाश्मवन्निर्धारणस्थानाय परमसीम्नेइत्यर्थः ॥ श्रीरामंपरमार्थरूपेणप्रणमति । यत्तदिति ॥ यदेकंवेदांतेषुप्रसिद्धंतत्त्वंतत्प्रपद्ये ॥ कथंभूतंविशुद्धश्चा

सावनुभवश्चएवआत्मास्वरूपंयस्य ॥ विशुद्धत्वेहेतुः प्रशांतम् ॥ तत्रापिहेतुः स्वतेजसास्वरूपप्रकाशनेध्वस्तागुणानांविविधाजाग्रदाद्यवस्थायस्मिन् ॥ अनुभवमात्रत्वेहेतुःप्रत्यग्दृश्याद न्यत्तत्कुतःअनामरूपम् ॥ १४ ॥ ननुएवंभूतस्याऽपिजीवस्योक्तसर्वविपर्ययोदृश्यतेतत्राऽह । मर्त्येति ॥ विभोर्मर्त्यावतारस्तुरक्षसोरावणस्यवधाय तस्यमनुष्यादन्यतोऽवध्यत्वात् ॥ नकेवलमेतावदेव किंतु इहसंसारेस्त्रीसंगादिकृतंदुःखंदुर्वारमितिमर्त्यांतांशिक्षार्थमपीत्यर्थः ॥ अन्यथास्वेस्वरूपेरममाणस्येश्वरस्यसीताविरहकृतानिव्यसनानिकुतःस्युः ॥ १९ ॥ विषयासक्त्यभावेनव्यसनानर्हत्वमुपपादयति । नेति ॥ नवैसभगवांस्त्रिलोक्यांकापिसक्तः ॥ यतआत्मवतांधीराणामात्मासुहृत्तमश्च अतोनस्त्रीकृतंमोहंप्राप्नुयात् ॥नलक्ष्मणंच॥ देवदूतेनश्रीराममंत्रयताविज्ञापितमत्रागतस्त्वयावध्यइतितेदैवद्वारिस्थितंलक्ष्मणंदुर्वाससमागतंविज्ञापयितुंप्रविष्टंहंतुमुद्यतोवसिष्ठवाक्यात्तत्याज तच्चनयुज्येतेत्यर्थः॥१६॥ अतःश्रीरामएव सर्वैः सेव्यइतिवक्तुंनतस्यतोषेहेतुःसत्कुलजन्मादिकिंतुभक्तिरेवेत्याह । नजन्मेति॥महतः पुरुषाज्जन्ममहतःश्रीरामचंद्रस्येतिवा सौभगंसौन्दर्यम् आकृतिर्जातिः॥यद्यस्मातैर्जन्मादिभि

मर्त्यावतारस्त्विहमर्त्यशिक्षणंरक्षोवधायैवनकेवलंविभोः ॥ कुतोऽन्यथास्याद्रमतः स्वआत्मनःसीताकृतानिव्यसनानीश्वरस्य ॥ १९ ॥ नवैसआत्मात्मवतांसुहृत्तमःसक्तस्त्रिलोक्यांभगवान्वासुदेवः ॥ नस्त्रीकृतंकश्मलमश्नुवीतनलक्ष्मणंचापिविहातुमर्हति ॥ १६ ॥ नजन्मनूनंमहतोनसौभगंनवाङ्नबुद्धिर्नाकृतिस्तोषहेतुः ॥ तैर्यद्विसृष्टानपिनोवनौकसश्चकारसख्येबतलक्ष्मणाग्रजः ॥ १७ ॥ सुरोऽसुरोवाप्यथवानरोनरःसर्वात्मनायःसुकृतज्ञमुत्तमम् ॥ भजेतरामंमनुजाकृतिंहरिंयउत्तराननयत्कोसलान्दिवम् ॥१८॥ नारायणउवाच ॥ एवंकिंपुरुषेवर्षेसत्यसंधंदृढव्रतम् ॥ रामंराजीवपत्राक्षंहनुमान्वानरोत्तमः ॥ १९ ॥ स्तौतिगायतिभक्त्याचसंपूजयतिसर्वशः ॥ यएतच्छृणुयाच्चित्रंरामचंद्रकथानकम् ॥ २० ॥ सर्वपापविशुद्धात्मायातिरामसलोकताम् ॥ इतिश्रीदेवीभागवतेमहापुराणेऽष्टमस्कंधेदशमोऽध्यायः ॥१०॥ श्रीनारायणउवाच ॥ भारताख्येचवर्षेऽस्मिन्नहमादिजपूरुषः ॥ तिष्ठामिभवताचैवस्तवनंक्रियतेऽनिशम् ॥ १ ॥ नारदउवाच ॥ ॐनमोभगवतेउपशमशीलायोपरतानात्म्यायनमोऽकिंचनवित्तायऋषिऋषभायनरनारायणायपरमहंसपरमगुरवेआत्मारामाधिपतयेनमोनमइति॥ कर्तास्यसर्गादिषुयोनबध्यतेनहन्यतेदेहगतोपिदैहिकैः ॥ द्रष्टुर्नदृग्यस्यगुणावदूष्यतेतस्मैनमोऽसक्तविविक्तसाक्षिणे ॥ २ ॥

र्विसृष्टान त्यक्तानपिनोवनेचरान्बताहोलक्ष्मणस्याग्रजोपिसखित्वेकृतवान् ॥१७॥ तस्मात्सुरोवान्योवायःकोपिश्रीराममेवसर्वप्रकारेणभजेत ॥सुकृतज्ञम् अल्पीयस्यपिभजनेबहुमानिनम् ॥ उत्तरान्कोसलानयोध्यावासिनः ॥ १८ ॥ १९ ॥ २० ॥ इति श्रीदेवीभागवततिलकेऽष्टमस्कन्धेदशमोऽध्यायः ॥१०॥ अर्धाधिकैश्चद्वात्रिंशत्पद्यैरथयथातथम् ॥ अन्यवर्षेक्रमप्राप्तासेव्यसेवकतोच्यते ॥ १ ॥ अहंनारायण एव आदिजेतिनारदसंबोधनंकर्मधारयोवा ॥ अहंतिष्ठामि ॥ भवताममस्तवनंक्रियतइत्यन्वयः ॥१॥ नारदस्तोत्रमाहॐनमइति मंत्रमिमंजपतिनारदइत्यर्थः ॥ उपरतानात्म्यायनिरहंकारायेत्यर्थः ॥ असक्तश्चासौविविक्तश्चसाक्षीतस्मैनमः॥ अशक्तत्वंदर्शयति॥अस्यविश्वस्यसर्गादिषुकर्तापियोनबध्यते अहंकर्तेतिनमन्यते ॥ विविक्तत्वमाह ॥ देहगतोपिदैहिकैःक्षुत्पिपासादिभिर्योनहन्यतेनाभिभूयते ॥ साक्षित्वमाह । यस्यद्रष्टुरपिसतादृष्टिर्गुणैर्दृश्यैर्नदूष्यतेनविक्रियते ॥ २ ॥

योगकौशलंनिरूपयन्योगंप्रार्थयते इदामितित्रिभिः। हेयोगेश्वरहिरण्यगर्भायद्योगनैपुणंजगादइदमेवतात्किंजन्मप्रभृतिभक्त्यांतकालेपुमांस्त्वयिमनोधारयेदितियत्॥ कथंभूतःसन्उज्झि
तदुष्कलेवरंतदभिमानोयेन ॥३॥ अन्यथातस्यशास्त्राभ्यासादिश्रमोऽव्यर्थइत्याह । यथेति ॥ ऐहिकामुष्मिककामेषुलंपटोमूर्खःसुतादिषुयोगक्षेमंविचिंतयनकुत्सितस्यकलेवरस्यात्ययात्
मृत्योर्यथाशंकेत तथाविद्वानापिसन्यःशंकेततस्ययत्नःश्रमएव ॥४॥ यस्माद्विदुषोपीयमेवदशातत्तस्माद्धेप्रभोअधोक्षज त्वमेवनोयोगंविधेहि ॥ कीदृशं त्वयिस्वभावंसहजवासनारूपं
येनयोगेनवयंत्वन्मायया नःकुकलेवरेआर्पितामहंममतांशीघ्रंभिंद्यामत्यजेम ॥ सुदुर्भिदामुपायांतरैःसर्वथात्यक्तुमशक्याम् ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

इदंहियोगेश्वरयोगनैपुणंहिरण्यगर्भोभगवाञ्जगादयत् ॥ यदंतकालेत्वयिनिर्गुणेमनोभक्त्यादधीतोज्झितदुष्कलेवरः ॥ ३ ॥ यथैहिकामुष्मिककामलंपटःसुतेषुदारेषुधनेषुचिंतयन् ॥ शंकेतविद्वान्कुकलेवरात्ययाद्यस्तस्ययत्नःश्रमएवकेवलम् ॥ ४ ॥ तन्नःप्रभोत्वंकुकलेवरार्पितांत्वंमाययाहंममतामधोक्षज॥भिंद्यामयेनाशुवयंसुदुर्भिदांविधेहियोगंत्वयिनःस्वभावजम् ॥ ५ ॥ एवंस्तौतिसदादेवंनारायणमनामयम् ॥ नारदोमुनिशार्दूलःप्रज्ञाताखिलसारदृक् ॥ ६ ॥ अस्मिन्वैभारतेवर्षेसरिच्छैलास्तुसंतिहि ॥ तान्प्रवक्ष्यामिदेवर्षेशृणुष्वैकाग्रमानसः ॥ ७ ॥ मलयोमंगलप्रस्थोमैनाकश्चत्रिकूटकः ॥ ऋषभःकुटकःकोल्लः सह्योदेवगिरिस्तथा ॥८॥ ऋष्यमूकश्चश्रीशैलोव्यंकटाद्रिर्महेंद्रकः ॥ वारिधारश्चविंध्यश्चशुक्तिमानृक्षपर्वतः ॥ ९ ॥ पारियात्रस्तथाद्रोणश्चित्रकूटगिरिस्तथा ॥ गोवर्धनोरैवतकःककुभोनीलपर्वतः ॥ १० ॥ गौरमुखश्चेंद्रकीलोगिरिःकामगिरिस्तथा॥एतेचान्येप्यसंख्यातागिरयोबहुपुण्यदाः ॥११॥ एतदुत्पन्नसरितःशतशोथसहस्रशः॥ पानावगाहनस्नानदर्शनोत्कीर्तनैरपि ॥ १२ ॥ नाशयंतिचपापानित्रिविधानिशरीरिणाम् ॥ ताम्रपर्णीचंद्रवशाकृतमालावटोदका ॥ १३ ॥ वैहायसीचकावेरीवेणाचैवपयस्विनी ॥ तुंगभद्राकृष्णवेणाशर्करावर्तकातथा ॥ १४ ॥ गोदावरीभीमरथीनिर्विंध्याचपयोष्णिका ॥ तापीरेवाचसुरसानर्मदाचसरस्वती ॥ १५ ॥ चर्मण्वतीचसिंधुश्चअंधशोणौमहानदौ॥ ऋषिकुल्यात्रिसामाचवेदस्मृतिमहानदी ॥ १६ ॥ कौशिकीयमुनाचैवमंदाकिनीदृषद्वती ॥ गोमतीसरयूरोधवतीसप्तवतीतथा ॥ १७ ॥ सुषोमाचशतद्रुश्चचंद्रभागामरुद्वृधा ॥ वितस्ताचअसिक्नीचविश्वाचेतिप्रकीर्तिताः ॥ १८ ॥ अस्मिन्वर्षेलब्धजन्मपुरुषैःस्वस्वकर्मभिः ॥ शुक्ललोहितकृष्णाख्यैर्दिव्यमानुषनारकाः ॥१९॥ भवंतिविविधाभोगाःसर्वेषांचनिवासिनाम्॥ यथावर्णविधानेनाऽपवर्गोभवतिस्फुटम् ॥ २० ॥

॥१४ ॥१५ ॥ वेदस्मृतिश्चमहानदीचेतिद्वंद्वः ॥१६॥१७ ॥१८॥शुक्ललोहितकृष्णाख्यैःसात्त्विकराजसतामसैः स्वकर्मभिर्यथाक्रमंदिव्यमानुषनारकाभोगाभवंतीत्युत्तरेणान्वयः ॥१९॥
एवमेवसर्वेषांचानिवासिनांकर्मवैचित्र्यादनुभूयमानाविविधाभोगाभवंतीत्यर्थः ॥ यथावर्णेति ॥ यस्यवर्णस्ययाद्विधानंमोक्षप्रकारः ॥ संन्यासवानप्रस्थादितदनतिक्रमेणाऽस्मिन्नेववर्षेनृणा
मपवर्गश्चभवति ॥ एतच्चकर्मादिबहुसाधनसंभवाभिप्रायेणोक्तम् ॥ नत्वन्यत्रापवर्गाभावेन तदुपर्यषिबादरायणःसंभवादितिदेवानामपिमोक्षस्यसूचितत्वात् ॥ २० ॥

एतदेवप्राधान्यमस्यवर्षस्य ॥ किंतत् ॥ कार्यस्यसिद्धितः । सार्वविभक्तिकस्तसिः । अनायासेनेश्वरप्रसादरूपकार्यसिद्धिस्वरूपामित्यर्थः ॥ अनेनाहिसर्वलोकापेक्षयाऽयंलोकः प्रधानइति
स्वर्गवासिनोपिवदंति ॥ २१॥ किंस्वर्गवासिनोपिवदंतितत्राह । अहोइति । अमीषामेभिः उतस्वित् अथवास्वयमेवसाधनंविनैवहरिरेषांप्रसन्नोभूत् ॥ एवंभूतस्यपुण्यस्यदुष्करत्वात् ॥
भारताजिरेभारतांगणे नः केवलंस्पृहैव यत्रतन्मुकुंदसेवोपयोगिजन्मनृषुलब्धम् ॥ २२ ॥ स्पृहामेवाह किमित्यादिसप्तभिः ॥ दुष्करैः क्रत्वादिभिर्नः फल्गुनातुच्छेनद्युजयेनस्वर्गप्रा
प्त्याकिं नकिंचित्फलम् ॥ कुतः यत्रनारायणपादपंकजस्मृतिर्नास्ति ॥ प्रयुत आतिशायितादिंद्रियोत्सवाद्रागात्प्रमुष्टाऽभूत् ॥२३॥ क्षणमल्पमेवायुर्येषां वरत्वेहेतुः ॥ मर्त्येनापिदेहेन
क्षणेनैवकालेनकृतंकर्मसंन्यस्यहरेःपदंसम्यग्यांति ॥ २४ ॥ अतोयत्रवैकुंठकथामृतनद्योनसंति तदाश्रयाःकथापगाश्रयाःमहांतोनृत्याद्युत्सवायेषुतादृशायज्ञेशरस्यमखाश्चपूजाःससुरेशस्य
ब्रह्मणोपिलोकोनसेव्यताम् ॥ २५ ॥ अमुमुक्षून्नरान्निंदति । प्राप्ताइति ॥ ज्ञानंचतदर्थाक्रियाश्चतदर्थानिद्रव्याणिचतेषांकलापेनसंभृतांसंपूर्णाम् ॥ अपुनर्भवायमोक्षायवनौकाइववनौ

एतदेवचवर्षस्यप्राधान्यंकार्यसिद्धितः॥वदंतिमुनयोवेदवादिनःस्वर्गवासिनः॥२१॥ अहोअमीषांकिमकारिशोभनंप्रसन्नएषांस्विदुतस्वयंहरिः। यैर्जन्मलब्धंनृषुभारताजिरेमुकुंदसेवौपयिकंस्पृहाहिनः ॥ २२ ॥ किंदुष्करैर्नःक्रतुभिस्तपोव्रतैर्दानादिभिर्वाद्युजयेनफल्गुना ॥ नयत्रनारायणपादपंकजस्मृतिःप्रमुष्टातिशयेंद्रियोत्सवात् ॥ २३ ॥ कल्पायुषांस्थानजयात्पुनर्भवात्क्षणायुषांभारतभूजयोवरम् ॥ क्षणेनमर्त्येनकृतंमनस्विनःसंन्यस्यसंयांत्यभयंपदंहरेः ॥ २४ ॥ नयत्रवैकुंठकथासुधापगानसाधवोभागवतास्तदाश्रयाः॥ नयत्रयज्ञेशमखामहोत्सवाःसुरेशलोकोपिनवैससेव्यताम् ॥ २५ ॥ प्राप्तानृजातिंत्विहयेचजंतवोज्ञानक्रियाद्रव्यकलापसंभृताम् ॥ नवैयतेरन्नपुनर्भवायतेभूयोवनौकाइवयांतिबंधनम् ॥ २६ ॥ यैःश्रद्धयाबर्हिषिभागशोहविर्निरुप्तमिष्टंविधिमंत्रवस्तुतः ॥ एकःपृथङ्नामभिराहुतोमुदागृह्णातिपूर्णःस्वयमाशिषांप्रभुः ॥ २७॥ सत्यंदिशत्यर्थितमर्थितोनृणांनैवार्थदोयत्पुनरर्थितायतः ॥ स्वयंविधत्तेभजतामनिच्छतामिच्छापिधानंनिजपादपल्लवम्॥२८॥"यद्यत्रनःस्वर्गसुखावशेषितंस्विष्टस्यपूर्तस्यकृतस्यशोभनम् ॥ तेनाऽजनाभेस्मृतिमज्जन्मनःस्याद्वर्षेहरिर्भजतांशंतनोति ॥ १ ॥" नारायणउवाच ॥ एवंस्वर्गगतादेवाःसिद्धाश्चपरमर्षयः ॥ प्रवदंतिचमाहात्म्यंभारतस्यसुशोभनम् ॥ २९ ॥ जंबुद्वीपस्यचाऽष्टौहिउपद्वीपाःस्मृताःपरे ॥ हयमार्गान्विशोधद्भिःसागरैःपरिकल्पिताः ॥ ३० ॥ स्वर्णप्रस्थश्चंद्रशुक्रआवर्तनरमाणकौ ॥ मंदरोपाख्यहरिणोपांचजन्यस्तथैवच ॥ ३१ ॥

कसः पक्षिणोयथालुब्धकात्मुक्ताअपिपुनर्यदियस्मिन्नेववृक्षेप्रसक्ताविहरंतितर्हियथाबध्यंतेतद्वत् ॥ २६ ॥ अहोभारतवासिनांभाग्यमित्याहुः । यैरिति ॥ अग्नयेजुष्टंनिर्वपामिइंद्रायजु
ष्टंनिर्वपामिइत्येवंभागशोनिरुप्तंपृथक्कृतम्॥कथम् विधानप्रकारेणमंत्रेण वस्तुतश्चपुरोडाशादिभेदनइष्टांदेवतामुद्दिश्यत्यक्तांनिरुप्तंचममेदमितिस्वीकृत्यत्यागानंतरमश्नातीत्यर्थः ॥ पृथक्इं
द्रादिनामभिराहुतआहूतः ॥ आशिषांप्रभुः स्वयंपूर्णोपिहरिः ॥ २७ ॥ तत्रापिनिष्कामाःकृतार्थाइत्याहुः । सत्यमिति ॥ प्रार्थितः सन्नर्थितंददातीतिसत्यम् ॥ अथापिपरमार्थदो
नभवत्येव ॥यद्यस्माद्यतोदत्तानंतरंपुनरप्यर्थिताभवति ॥ ननुनार्थितश्चेत्किमपिनदद्यादित्याशंक्याह । अनिच्छतांनिष्कामानांतुइच्छानांपिधानमाच्छादकम् ॥ सर्वकामपरिपूरकंनि
जपादपल्लवंस्वयमेवसंपादयति ॥ २८ ॥ २९ ॥ हयमार्गानपहृताश्वमार्गान्विशोधद्भिरन्वेषमाणैः ॥ ३० ॥ ३१ ॥

॥ ३२ ॥ इतिश्रीदेवीभागवततिलकेऽष्टमस्कंधेएकादशोऽध्यायः ॥ ११ ॥ अर्धाधिकैश्चसप्तत्रिंशद्भिःपद्यैरतःपरम् ॥ द्वीपांतरसमाचारोयथावदभिवर्ण्यते ॥ १ ॥ तावतालक्षविस्तारे
ण ॥ १ ॥ जंबुद्वीपेनयथामेरुर्वेष्टितस्तथाद्विगुणविस्तारेणविशालेनप्लक्षद्वीपेनक्षारोदधिर्वेष्टितः॥२॥यथापरिखाबाह्योपवनेनवेष्ट्यतेतद्वत्॥ तस्मिन्प्लक्षाख्येद्वीपेप्लक्षाख्यःप्लक्षनामकोवृक्षो
जंबुद्वीपस्थजंबूवृक्षप्रमाणेनसमानोन्नाहविस्तारःस्वयंतिष्ठति ॥ कथंभूतोहिरण्मयोहिरण्यकांतिः ॥ द्वीपरूपंनामतद्धारयतिद्वीपाख्याकारः ॥ तन्नाम्नैवहितद्द्वीपंप्रसिद्धमित्यर्थः॥ द्वीपश
ब्दोनपुंसकोपि ॥ ३ ॥ तत्रैवतद्वृक्षाधएवाग्निर्मूर्तिमांस्तिष्ठति ॥ लोकानांदेवीधर्मानुपदिशन्स्वयंचदेव्याराधनंकुर्वन्नित्यनुक्तमपिपूर्वग्रंथानुरोधेनोन्नेयम् ॥ कोसावग्निस्तत्राह । सप्त
जिह्वइतिस्मृतोयःसोग्निरित्यर्थः ॥ प्रियव्रतात्मजइत्यस्यतुतदुत्तरश्लोकस्थेनेध्मजिह्वइत्यनेनान्वयः ॥ तदुक्तंविष्णुभागवते ॥ यत्राग्निरुपास्तेसप्तजिह्वस्तस्याधिपतिःप्रियव्रतात्मजइध्म
जिह्वइति ॥ ४ ॥ सःतद्द्वीपाधिपतिरिध्मजिह्वःस्वंद्वीपंसप्तधाविभज्यतानिसप्तवर्षासप्तखण्डानिस्वपुत्रेभ्योददौ ॥ ५ ॥ भगवंतंपरब्रह्मात्मकमुपागतःप्राप्तइत्यर्थः ॥ ६ ॥ तत्रयान्येव

सिंहलश्चैवलंकेतिउपद्वीपाष्टकंस्मृतम् ॥ जंबुद्वीपस्यमानंहिकीर्तितंविस्तरेणच ॥ ३२ ॥ अतःपरंप्रवक्ष्यामिप्लक्षादिद्वीपषट्ककम् ॥ इतिश्रीदे
वीभागवतेमहापुराणेऽष्टमस्कंधेएकादशोऽध्यायः ॥११॥ श्रीनारायणउवाच ॥ जंबुद्वीपोयथाचाऽयंयत्प्रमाणेनकीर्तितः ॥ तावतासर्वतः
क्षारोदधिनापरिवेष्टितः ॥ १ ॥ जंब्वाख्येनयथामेरुस्तथाक्षारोदकेनच ॥ क्षारोदधिस्तुद्विगुणःप्लक्षाख्येनोपवेष्टितः ॥ २ ॥ यथैवपरिखाबा
ह्योपवनेनहिवेष्टयते ॥ प्लक्षाख्यश्चस्वयंजंबुप्रमाणोद्वीपरूपधृत् ॥ ३ ॥ हिरण्मयोऽग्निस्तत्रैवतिष्ठतीतिविनिश्चयः ॥ प्रियव्रतात्मजस्तत्रसप्तजि
ह्वइतिस्मृतः ॥ ४ ॥ अग्निस्तदधिपस्त्विध्मजिह्वःस्वंद्वीपमेवच ॥ विभज्यसप्तवर्षाणिस्वपुत्रेभ्योददौविभुः ॥ ५ ॥ स्वयमात्मविदांमान्यांयो
गचर्यांसमाश्रितः ॥ तेनैवचाऽऽत्मयोगेनभगवंतमुपागतः ॥ ६ ॥ शिवंचयवसंभद्रंशांतंक्षेमामृतेतथा ॥ अभयंचेतिसप्तैवतद्वर्षाणिसदेक्षताम्
॥ ७ ॥ तेषुप्रोक्तानदीःसप्तगिरयःसप्तचैवहि ॥ अरुणानृम्णांगिरसीसावित्रीसुप्रभातिका ॥ ८ ॥ ऋतंभरासत्यंभराइतिनद्यःप्रकीर्तिताः ॥
मणिकूटोवज्रकूटइंद्रसेनस्तथैवच ॥ ९ ॥ ज्योतिष्मान्वैसुपर्णश्चहिरण्यष्ठीवएवच ॥ मेघमालइतिख्याताःप्लक्षद्वीपस्यपर्वताः ॥ १० ॥ नदी
नांजलमात्रेणदर्शनस्पर्शनादिभिः ॥ निर्धूताशेषरजसोनिस्तमस्काःप्रजास्तथा ॥ ११ ॥ हंसश्चैवपतंगश्चऊर्ध्वायनइतीवच ॥ सत्यांगसंज्ञा
श्चत्वारोवर्णाःप्लक्षस्यद्वीपके ॥ १२ ॥ सहस्रायुःप्रमाणाश्चविविधोपमदर्शनाः ॥ स्वर्गद्वारंत्रयीविद्याविधिनार्कंयजंतिते ॥ १३ ॥ प्रत्नस्यवि
ष्णोरूपंचसत्यर्तस्यचब्रह्मणः ॥ अमृतस्यचमृत्योश्चसूर्यमात्मानमीमहि ॥ १४ ॥

तत्पुत्रनामानितान्येवतद्वर्षनामानिबोध्यानीत्यभिप्रायेणवर्षनामान्याह । शिवमिति ॥ भद्रंसुभद्रम् ॥ क्षेमामृतेक्षेमममृतंचेत्यर्थः ॥ ७ ॥ नदीरित्यत्रवाछंदसीतिपूर्वसवर्णदीर्घः ॥
सुप्रभातिकासुप्रभाता ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ हंसादयोब्राह्मणादिस्थानीयावर्णाः ॥ १२ ॥ मानसोत्तरस्यमंडलाकारत्वोक्तेः एतेप्लक्षादिपश्चद्वीपेषुवर्षाद्रयस्तिर्यग्रेखाकाराउभय
तोब्धिस्पृशंतइतिगम्यते ॥ अन्यथासप्तभिः सप्तवर्षविभागासंभवात् ॥ वैष्णवे वर्षाणांपूर्वादिक्रमोक्तेश्च ॥ स्वर्गद्वारंतन्नामकम् । त्रयीविद्याविधानेनवैदिकमार्गेण ॥ १३ ॥ प्रत्नस्येति॥
प्रत्नस्यपुराणस्यपुरुषस्यविष्णोर्यद्रूपंतंसूर्यमीमहिशरणंव्रजेम ॥ कथंभूतंसत्यादीनामात्मभूतमधिष्ठातारम् ॥ तत्रसत्यमनुष्ठीयमानोधर्मःऋतंप्रतीयमानोधर्मः ॥ ब्रह्मणस्तद्बोधकस्यध
र्मस्यामृतस्यशुभफलस्यमृत्योरशुभफलस्य ॥ १४ ॥

॥ १५ ॥ औत्पत्तिकीस्वाभाविकी ॥ १६ ॥ अस्मात्प्लक्षद्वीपात्तद्विगुणविस्तारः ॥ १७ ॥ समानेनशाल्मलीद्वीपसमानेनमानेनशाल्मलीवृक्षः प्लक्षसमानमानः ॥ १८ ॥ १९ ॥ २० ॥ ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ श्रुत्यधरादयश्चत्वारोब्राह्मणादिस्थानीयावर्णाः ॥ २५ ॥ स्वगोभिः स्वरश्मिभिः ॥ अन्नमितिशेषः ॥ कृष्णशुक्लयोःपक्षयोःपितृदेवेभ्योविभजन्नित्य

प्लक्षादिषुचसर्वेषुपंचद्वीपेषुनारद ॥ आयुरिंद्रियमोजश्चबलंबुद्धिःसहोऽपिच ॥१५॥ विक्रमःसर्वलोकानांसिद्धिरौत्पत्तिकीसदा ॥ प्लक्षद्वीपात्परं चेक्षुरसोदःसरितांपतिः ॥ १६ ॥ प्लक्षद्वीपंसमग्रंचपरिवार्यावतिष्ठते ॥ शाल्मलाख्यस्ततोद्वीपश्चास्माद्विगुणविस्तरः ॥१७॥ समानेनसुरोदेन सिंधुनापरिवेष्टितः ॥ यत्रवैशाल्मलीवृक्षःप्लक्षायामःप्रकीर्तितः ॥ १८ ॥ स्थानंतत्पक्षिराजस्यगरुडस्यमहात्मनः ॥ तस्यद्वीपस्यनाथोहियज्ञ बाहुःप्रियव्रतात् ॥१९॥ जातःसएवसप्तभ्यःस्वपुत्रेभ्योददौधराम् ॥ तद्वर्षाणांचनामानिकथितानिनिबोधत ॥२०॥ सुरोचनंसौमनस्यंरमणं देववर्षकम् ॥ पारिभद्रंतथाचाऽप्यायनंविज्ञातनामकम्॥२१॥तेषुवर्षाद्रयःसप्तसप्तैवसरितःस्मृताः॥सरसःशतशृंगश्चवामदेवश्चकंदकः ॥२२॥ कुमुदःपुष्पवर्षश्चसहस्रश्रुतिरेवच ॥ एतेचपर्वताःसप्तनदीनामानिचोच्यते ॥२३॥ अनुमतिःसिनीवालीसरस्वतीकुहूस्तथा ॥ रजनीचैवनंदाच राकेतिपरिकीर्तिताः॥२४॥तद्वर्षपुरुषाःसर्वेचातुर्वर्ण्यसमाह्वयाः ॥श्रुतधरोवीर्यधरोवसुंधरइषुंधरः ॥२५॥ भगवंतंवेदमयंयजंतेसोममीश्वरम् ॥ स्वगोभिःपितृदेवेभ्योविभजन्कृष्णशुक्लयोः ॥२६॥ सर्वासांचप्रजानांचराजासोमःप्रसीदतु ॥ एवंसुरोदाद्द्विगुणःस्वमानेनप्रकीर्तितः ॥२७॥ घृतोदेनावृतःसोयंकुशद्वीपःप्रकाशते ॥ यस्मिन्नास्तेकुशस्तंबोद्वीपाख्याकारणोज्वलन् ॥ २८ ॥ स्वशष्परोचिषाकाष्ठाभासयन्परितिष्ठते ॥ हिरण्यरेतास्तद्वीपपतिःप्रैयव्रतःस्वराट् ॥२९॥ स्वपुत्रेभ्यश्चसप्तभ्यस्तद्वीपंसप्तधाऽभजत् ॥ वसुश्चवसुदानश्चतथादृढरुचिःपरः ॥३०॥ नाभि गुप्तस्तुत्यव्रतौविविक्तभामदेवकौ ॥ तेषांवर्षेषुसप्तैवसीमागिरिवराःस्मृताः ॥३१॥ नद्यःसप्तैवसंतीहतन्नामानिनिबोधत ॥ चक्रस्तथाचतुःशृंगः कपिलश्चित्रकूटकः ॥३२॥ देवानीकश्चोर्ध्वरोमाद्रविणःसप्तपर्वताः ॥ रसकुल्यामधुकुल्यामित्रविंदातथैवच॥३३॥श्रुतविंदादेवगर्भाघृतच्युन्मंद मालिके ॥ यत्पयोभिःकुशद्वीपवासिनःसर्वएवते ॥ ३४ ॥ कुशलःकोविदश्चैवाऽप्यभियुक्तस्तथैवच ॥ कुलकश्चेतिसंज्ञाभिश्चतुर्वर्णाःप्रकीर्तिताः ॥ ३५ ॥ जातवेदसरूपंतंदेवंकर्मजकौशलैः ॥ यजंतेदेववर्याभाःसर्वेसर्वविदोजनाः ॥ ३६ ॥

न्वयः ॥ २६ ॥ सुरोदादनंतरमित्यर्थः ॥ द्विगुणः पूर्वद्वीपापेक्षयासुरोदाद्विगुणइतिवा ॥ २७ ॥ कुशस्तंबःदेवेनकृतः ॥ २८ ॥ स्वशष्परोचिषास्वशष्पाणिस्वकोमलशिखास्तेषांरोचिषा ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ कुशलादयश्चत्वारोब्राह्मणादिस्थानीयावर्णाः ॥ ३५ ॥ कर्मजकौशलैः कुशलकर्मभिः ॥ ३६ ॥

हेजातवेदः ॥ त्वंसाक्षात्परस्यब्रह्मणोहव्यवाडसि अतोदेवानांयज्ञेनपरमेश्वरमेवयज ॥ अंगानांनाम्नादत्तमंगिनेसमर्पयेत्यर्थः ॥ ३७ ॥ इतिश्रीदेवीभागवततिलकेऽष्टमस्कंधेद्वादशोऽध्यायः ॥ ॥ १२ ॥ अर्धाधिकैश्चषट्त्रिंशन्महापद्मैरनंतरम् ॥ शिष्टद्वीपसमाचारोयथावदनुवर्ण्यते ॥ १ ॥ शिष्टद्वीपेति ॥ १ ॥ द्विगुणःपूर्वद्वीपापेक्षया ॥ २ ॥ नामनिर्वर्तकः ॥ स्वनाम्नाद्रपिना मोत्पादकः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ पुरुषादयोब्राह्मणादिस्थानीयावर्णाः ॥ ११ ॥ १२ ॥ आपइति ॥ हेआपःपुरुषवीर्याईश्वराल्लब्धवीर्याःस्थ भवथ ॥ अतएवभूर्भुवःस्वःत्रैलोक्यंपुनंत्यःताभवंत्योनोऽस्माकंस्पृशतांस्पर्शनंकुर्वता॥भुवःशरीराणिपुनंतु ॥ यतःआत्मनःस्वरूपेणैवः अमीवघ्नीःपापहंत्र्यः ॥१३ ॥ १४॥१५॥ ॥१६॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

परस्यब्रह्मणःसाक्षाज्जातवेदोऽसिहव्यवाट् ॥ देवानांपुरुषांगानांयज्ञेनपुरुषंयज ॥ ३७ ॥ एवंयजंतेज्वलनंसर्वेद्वीपाधिवासिनः ॥ इतिश्रीदेवीभागवतेहापुराणेऽष्टमस्कंधेद्वादशोऽध्यायः ॥ १२ ॥ नारदउवाच ॥ शिष्टद्वीपप्रमाणंचवदसर्वार्थदर्शन ॥ येनविज्ञातमात्रेणपरानंदमयोभवेत् ॥ १ ॥ श्रीनारायणउवाच ॥ कुशद्वीपस्यपरितोघृतोदावरणंमहत् ॥ ततोबहिःक्रौंचद्वीपोद्विगुणःस्यात्स्वमानतः ॥ २ ॥ क्षीरोदेनावृतोभातियस्मिन्क्रौंचाद्रिरस्तिच ॥ नामनिर्वर्तकःसोऽयंद्वीपस्यपरिवर्तते ॥ ३ ॥ योऽसौगुहस्यशक्त्याचभिन्नकुक्षिःपुराऽभवत् ॥ क्षीरोदेनासिच्यमानोवरुणेनचरक्षितः ॥ ४ ॥ घृतपृष्ठोनामयस्यविभातिकिलनायकः ॥ प्रियव्रतात्मजःश्रीमान्सर्वलोकनमस्कृतः ॥ ५ ॥ स्वद्वीपंतुविभज्यैवसप्तधास्वात्मजान्ददौ ॥ पुत्रनामसुवर्षेषुवर्षपान्सन्निवेशयन् ॥ ६ ॥ स्वयंभगवतस्तस्यशरणंसंजगामह ॥ आमोमधुरुहश्चैवमेघपृष्ठःसुधामकः ॥ ७ ॥ भ्राजिष्ठोलोहितार्णश्चवनस्पतिरितीवच ॥ नगानद्यश्चसप्तैवविख्याताभुविसर्वतः ॥ ८ ॥ शुक्लोवैवर्धमानश्चभोजनश्चोपबर्हणः ॥ नंदश्चनंदनःसर्वतोभद्रइतिकीर्तिताः ॥ ९ ॥ अभयाअमृतौघाचार्यकातीर्थवतीतिच ॥ वृत्तिरूपवतीशुक्लापवित्रवतिकातथा ॥१०॥ एतासामुदकंपुण्यंचातुर्वर्ण्येनपीयते ॥ पुरुषऋषभौतद्वद्रविणाख्यश्चदेवकः ॥ ११ ॥ एतेचतुर्वर्णजाताः पुरुषानिवसंतिहि ॥ तत्रत्याःपुरुषाआपोमयंदेवमपांपतिम् ॥ १२ ॥ पूर्णेनांजलिनाभक्त्यायजंतेविविधक्रियाः ॥ आपःपुरुषवीर्याःस्थपुनंतीर्भूर्भुवःस्वरः ॥ १३ ॥ तानः पुनीताऽमीवघ्नीःस्पृशतामात्मनाभुवः ॥ इतिमंत्रजपांतेचस्तुवंतिविविधैःस्तवैः ॥ १४ ॥ एवंपरस्तात्क्षीरोदात्परितश्चोपवेशितः ॥ द्वात्रिंशल्लक्षसंख्याकयोजनायाममाश्रितः ॥ १५ ॥ स्वमानेनचद्वीपोऽयंदधिमंडोदकेनच ॥ शाकद्वीपोविशिष्टोयंयस्मिञ्छाकोमहीरुहः ॥ १६ ॥ स्वक्षेत्रव्यपदेशस्यकारणंसहिनारद ॥ प्रैयव्रतोधिपस्तस्यमेधातिथिरितिस्मृतः ॥१७॥ विभज्यसप्तवर्षाणिपुत्रनामानितेषुच॥सप्तपुत्रान्निजान्स्थाप्यस्वयंयोगगतिंगतः ॥१८॥ पुरोजवोमनःपूर्वजवोऽथपवमानकः॥धूम्रानीकश्चित्ररेफोबहुरूपोऽथविश्वधृक्॥१९॥ मर्यादागिरयःसप्तनद्यःसप्तैवकीर्तिताः॥ईशानऊरुशृंगोऽथबलभद्रःशतकेसरः॥२०॥सहस्रस्रोतकोदेवपालोऽप्यंतेमहाशनः॥एतेऽद्रयःसप्तचोक्ताःसरिन्नामानिसप्तच॥२१॥

॥ २२ ॥ २३ ॥ २४ ॥ आत्मकेतुभिःप्राणादिवृत्तिभिः ॥ २५ ॥ २६ ॥ शाकद्वीपद्विसंगुणःशाकद्वीपद्विगुणपरिमाणइत्यर्थः ॥ २७ ॥ ज्वलनशिखावदमलानांकनकपत्राणामयुता
नामयुतानियस्मिंस्तत् ॥ २८ ॥ २९ ॥ तस्मिन्द्वीपेएकएवपर्वतःखंडद्वयंचेत्याह । तद्द्वीपेएकएवेति ॥ ३० ॥ ३१ ॥ ३२ ॥ देवाहोरात्रतः देवानामहोरात्राभ्यामुत्तरदक्षिणायना
भ्यामित्यर्थः ॥ ३३ ॥ ३४ ॥ ब्रह्मरूपिणंकमलासनमूर्तिम् ॥ ३५ ॥ सकर्मकेनब्रह्मसालोक्यादिसाधनेन कर्मफलरूपम् ॥ ब्रह्मलिंग्यतेयस्मात् ॥ ३६ ॥ एकस्मिन्नेवपरमेश्वरेंतोनि
ष्ठायस्यतत् ॥ अतएववस्तुतोऽद्वैतम् ॥ इ०दे०भा० तिलकेऽष्टमस्कंधेत्रयोदशोऽध्यायः ॥१३॥ त्रिंशद्भिरेकेनोनैस्तुपद्यैरथततःपरम् ॥ लोकालोकगिरेःसम्यग्व्यवथास्पष्टमुच्यते ॥१॥
ततःपरस्तादिति । ततः शुद्धोदात्परस्तात् ॥ लोकःसूर्याद्यालोकवान्देशः ॥ अलोकस्तद्रहितस्तयोरंतरालेमध्ये तयोर्विभागार्थंयःकल्पितः सलोकालोकाचलोऽस्तीत्यर्थः ॥१॥ ततः

अनघाप्रथमायुर्दाउभयस्पृष्टिरेवच ॥ अपराजितापंचपदीसहस्रश्रुतिरेवच ॥ २२ ॥ ततोनिजधृतिश्चोक्ताःसप्तनद्योमहोज्ज्वलाः ॥ तद्वर्ष पुरुषाःसर्वेसत्यव्रतक्रतुव्रतौ ॥ २३ ॥ दानव्रतानुव्रतौचचतुर्वर्णाउदीरिताः ॥ भगवंतंप्राणवायुंप्राणायामेनसंयुताः ॥ २४ ॥ यजंतिनिर्धूतरज स्तमःसपरमंहरिम् ॥ अंतःप्रविश्यभूतानियोबिभर्त्यात्मकेतुभिः ॥ २५ ॥ अंतर्यामीश्वरःसाक्षात्पातुनोयद्वशेइदम् ॥ परस्ताद्दधिमंडोदात्तत स्तुवद्वुविस्तरः ॥ २६ ॥ पुष्करद्वीपनामाऽयंशाकद्वीपद्विसंगुणः ॥ स्वसमानेनस्वादूदकेनाऽयंपरिवेष्टितः ॥ २७ ॥ यत्राऽस्तेपुष्करंभ्राजदग्नि चूडानिभानिच ॥ पत्राणिविशदानीहस्वर्णपत्रायुतायुतम् ॥२८॥ श्रीमद्भगवतश्चेदमासनंपरमेष्ठिनः ॥ कल्पितंलोकगुरुणासर्वलोकसिसृक्षया ॥ २९ ॥ तद्द्वीपएकएवाऽयंमानसोत्तरनामकः ॥ अर्वाचीनपराचीनवर्षयोरवधिर्गिरिः ॥ ३०॥ उच्छ्रायायामयोसंख्याऽयुतयोजनसंमिता ॥ यत्रदिक्षुचचत्वारिचतसृषुपुराणिह ॥ ३१ ॥इंद्रादिलोकपालानांयदुपर्यर्कनिर्गमः ॥ मेरुंप्रदक्षिणीकुर्वन्भानुःपर्येतियत्रहि ॥ ३२ ॥ संवत्स रात्मकंचक्रंदेवाहोरात्रतोभ्रमन् ॥ प्रैयव्रतोधिपोवीतिहोत्रःस्मात्मजकद्वयम् ॥ ३३ ॥ वर्षद्वयेपरिस्थाप्यवर्षनामधरंक्रमात् ॥ रमणोधातकिश्चै वतत्तद्वर्षपतीउभौ ॥ ३४ ॥ कृताःस्वयंपूर्वजवद्भगवद्भक्तितत्पराः ॥ तद्वर्षपुरुषाब्रह्मरूपिणंपरमेश्वरम् ॥ ३५ ॥ सकर्मकेनयोगेनयजंतिपरिशी लिताः ॥ यत्तत्कर्ममयंलिंगंब्रह्मलिंगंजनोऽर्चयेत् ॥ ३६ ॥ एकांतमद्वयंशांतंतस्मैभगवतेनमः ॥ इतिश्रीदेवीभागवते महापुराणेऽष्टमस्कंधेत्र योदशोऽध्यायः ॥ १३ ॥ श्रीनारायणउवाच ॥ ततःपरस्तादचलोलोकालोकेतिनामकः ॥ अंतरालेचलोकालोकयोर्यःपरिकल्पितः ॥ १ ॥ यावदस्तिचदेवर्षेह्यंतरंमानसोत्तरात् ॥ सुमेरोस्तावतीशुद्धाकांचनीभूमिरस्तिहि ॥ २ ॥

परस्तादित्युक्तंतदेतत्कियतांतरेणेत्यपेक्षायांतदंतर्वर्तिनींभूमिमाह । यावदस्तीति॥ यावन्मानसोत्तरमेर्वोरंतरंसार्धसप्तलक्षोत्तरसार्धकोटिपरिमितम् ॥ तावतीभूःशुद्धो दात्परतोऽस्ति॥
तत्रचप्राणिनोऽपिसंति ॥ कांचनीभूरित्यत्रपूर्वोक्तभूमेरन्योतिशेषः ॥ एवंचततःपूर्वोक्तभूमेरन्याकांचनीभूमिरस्तीत्यर्थ॥साचैकोनचत्वारिंशल्लक्षोत्तरकोट्यष्टकपरिमिताज्ञेयाअर्धपुष्करद्वी
पेनसहशुद्धोदःषण्णवतिलक्षाणि ॥ एवंहिसतिमेरुलोकालोकयोरंतरंसार्धद्वादशकोटिपरिमितंवक्ष्यमाणमुपपन्नंभवति ॥ एतदेवशैवतंत्रेषूक्तम्॥ कोटिद्वयंत्रिपंचाशल्लक्षाणिचततःपरम्॥
पंचाशच्चसहस्राणिसप्तद्वीपाःसमागताः ॥ ततोहेममयीभूमिर्दशकोटिर्वरानने ॥ देवानांक्रीडनार्थायलोकालोकस्ततःपरमिति ॥ अत्रचदशकोटित्वंपूर्वोक्तभूम्यासहद्रष्टव्यम् ॥ २ ॥

सर्वप्राणिविवर्जितेतिदेवव्यतिरेकेणेतिविज्ञेयम् ॥ देवानांक्रीडनार्थायेत्युक्तत्वात् ॥ प्रत्युदीयते प्रत्युपलभ्यतेसुवर्णमेवभवतीत्यर्थः ॥३॥यतः सुवणमेवभवतिनतुतृणौषधिधान्यादिकंत तोऽन्यप्राणिनिवासयोग्यस्थानाभावादन्यप्राणिनोदेवादिव्यतिरिक्तानसंतीत्याह । अतइति ॥४॥ लोकालोकइतिव्याख्यायदत्रपरिकल्पिता ॥ पूर्वंतस्यकारणंशृण्वित्याह । लोकालोकां तरेचेति ॥ लोकवद्देशलोकाभाववद्देशयोरंतरेयतोऽस्यपर्वतस्यास्थितिर्वर्ततेततइत्यर्थः ॥ केनैतस्यास्थितिःकल्पितातत्राह । ईश्वरेणेति ॥ अंतगःलोकत्रयस्यांतपरितोमर्यादारूपोविहितः ॥५॥तन्निमित्तमाह । यस्मात्प्रतिबन्धकात्सूर्यआदिर्येषाम् ध्रुवोंतोयेषाम् ॥ आतन्वानाःसमंतात्प्रकाशयंतःपरतोगन्तुंनशक्नुवंतितावदुन्नहनमुत्सेधस्तदनुरूपआयामश्चविस्तारोयस्य ॥ ध्रुवादप्युच्छ्रितत्वात्त्रिलोकीमर्यादाभूतइत्यर्थः ॥६॥७॥ एतावानितिसंस्थाकारःकथितः ॥ कविभिर्मयावा ॥ लोकालोकाचलस्यपरिमाणमाह । सत्विति ॥ सोऽयंतुलोकालोकाचल श्चतुर्थांशसार्धद्वादशकोट्योमेरोरेकतइतिद्रष्टव्यम् ॥८॥ तस्योपरिपर्वतोपरि ॥ ९ ॥ १० ॥ तेषांचेति तेषांदिग्गजानाम् ॥ स्वविभूतीनांस्वांशभूतानांमहेंद्रादीनांचविविधवीर्योप

दर्पणोदरतुल्यासासर्वप्राणिविवर्जिता ॥ यस्यांपदार्थःप्रहितोनकिंचित्प्रत्युदीयते ॥ ३ ॥ अतःसर्वप्राणिसंघरहितासाचनारद ॥ लोकालोकइतिव्याख्यायदत्रपरिकल्पिता ॥ ४ ॥ लोकालोकांतरेचास्यवर्ततेसर्वदास्थितिः ॥ ईश्वरेणसलोकानांत्रयाणामंतगःकृतः ॥ ५ ॥ सूर्यादीनांध्रुवांतानांरश्मयोयद्वशादिह ॥ अर्वाचीनाश्चत्रींल्लोकानांतन्वानाःकदापिहि ॥ ६ ॥ पराचीनत्वभाजोहिनभवंतिचनारद ॥ तावदुन्नहनायामः पर्वतेन्द्रोमहोदयः ॥ ७ ॥ एतावांल्लोकविन्यासोयंसंस्थामानसलक्षणैः ॥ कविभिः सतुपंचाशत्कोटिभिर्गणितस्यच ॥ ८ ॥ भूगोलस्यचतुर्थांशोलोकालोकाचलोमुने ॥ तस्योपरिचतुर्दिक्षुब्रह्मणाचात्मयोनिना ॥ ९ ॥ निवेशितादिग्गजायेतन्नामानिनिबोधत ॥ ऋषभःपुष्पचूडोऽथवामनोऽथाऽपराजितः ॥ १० ॥ एतेसमस्तलोकस्यस्थितिहेतवईरिताः ॥ तेषांचस्वविभूतीनांबहुवीर्योपबृंहणम् ॥ ११ ॥ विशुद्धसत्त्वंचैश्वर्यंवर्धयन्भगवान्हरिः ॥ आस्तेसिद्ध्यष्टकोपेतोविष्वक्सेनादिसंवृतः ॥ १२ ॥ निजायुधैःपरिवृतोभुजदंडैःसमंततः ॥ आस्तेसकललोकस्यस्वस्तयेपरमेश्वरः ॥ १३ ॥ आकल्पमेवंवेषंसगतोविष्णुःसनातनः ॥ स्वमायारचितस्याऽस्यगोपीथायात्मसाधनः ॥ १४ ॥ योंतर्विस्तारएतेनह्यलोकपरिमाणकम् ॥ व्याख्यातंयद्बहिर्लोकालोकाचलइतीरणात् ॥ १५ ॥ ततःपरस्ताद्योगेशगतिंशुद्धांवदंतिहि ॥ अंडमध्यगतः सूर्योद्यावाभूम्योर्यदंतरम् ॥ १६ ॥ सूर्यांडगोलयोर्मध्येकोट्यःस्युःपंचविंशतिः ॥ मृतेंडएषएतस्मिञ्जातो मार्तंडशब्दभाक् ॥ १७ ॥

बृंहणायसकललोकस्वस्तयेचभगवांस्तस्मिन्नास्तेइत्यन्वयः ॥ किंकुर्वन्आत्मनःस्वस्ययद्विशुद्धंसत्त्वंतत्संधारयमाणःआविष्कुर्वन् ॥ कीदृशंसत्त्वंधर्मज्ञानादीन्यष्टमहासिद्धयश्चोपलक्षणंयस्य तत् ॥ दोर्दंडैरुपलक्षितःसमहाविभूतेः परमैश्वर्यस्यपतित्वादेकयैवमूर्त्याआत्मनोयोगमाययारचितस्याऽस्यलोकस्यगोपीथायरक्षणायैषभगवानेवंभूतआकल्पेवेषंगतइतिसार्धंत्रिश्लोकाना मर्थः ॥ इयंव्याख्यामूलंचकिंचिद्विषमम् ॥ ११ ॥१२॥१३॥१४॥ योंतरिति ॥ योऽयमंतरविस्तारआख्यातः ॥ एतेनालोकपरिमाणंमेरोरेकतःसार्धद्वादशकोट्योव्याख्यातंभवति ॥ यद्यस्मादेतस्माद्बहिर्लोकालोकाचलोभवतीतिकथितंतस्मादित्यर्थः ॥ १५ ॥ ततःपरस्ताल्लोकालोकाचलात् ॥ अलोकाद्वापरस्तात्तुविशुद्धांद्विजपुत्रानयनेऽर्जुनस्यश्रीकृष्णेनदर्शितांविस्तरेणोक्तंब्रह्मांडमानंसर्वतोऽपिनिरूपयति । अंडमध्यगतइति ॥ अंडमध्यगतःकिंतन्मध्यंतदाह ॥ द्यावाभूम्योःपूर्वोत्तरकपालयोर्यदन्तरंमध्यंस्थानम् ॥ १६ ॥ सर्वतःपंचविंशतिकोट्यः अंडमध्यावस्थानेकारणंतन्नामनिर्वचनेनाह । मृतेअचेतने एषवैराजरूपेणयस्मात्प्रविष्टस्ततइत्यर्थः ॥ १७ ॥

किंचसूर्येणैवविभज्यंतेदिशः ॥ खमंतरिक्षम् ॥ भिदाअन्योऽपिविभागः ॥ स्वर्गापवर्गौभोगमोक्षदेशौ ॥ रसौकांसिअतलादीनि ॥ १८ ॥ उपासनार्थमाह ॥ देवेति ॥ देवादीनांसूर्य
आत्माद्दगीश्वरोनेत्राधिष्ठाताच ॥ १९ ॥ भूमंडलसन्निवेशकथनमुपसंहरतिं । एतावानिति ॥ विस्तारेणपंचाशत्कोटयः ॥ उत्सेधेनपंचविंशतिः॥२०॥एतत्परिमाणंदिवोद्युलोकस्येत्य
त्रदृष्टांतोद्विदलयोर्मध्येयथैकस्यमानेनापरस्यमानमुपादिश्यतेतद्वत् ॥२१॥ तयोर्द्विदलयोर्मध्येयदंतरम्॥किंतत्राह। तदुभयसंधितंताभ्यामुभयतः संलग्नम् ॥ यन्मध्यगोयस्यांतरिक्षस्य
मध्यगइत्यर्थः ॥२२॥ २३ ॥ उत्तरायणंगत्वाकिमितिगतिमांद्यंकरोतितेनचकिंभवतितदाह ॥ आरोहणस्थानमुच्चस्थानम् ॥ पर्वतमारोहतियस्तस्यगतिमांद्यंप्रसिद्धमेव तथाऽत्रापिउ
त्तरायणकालेआरोहणस्थानेनगच्छतितेनचाहोदैर्घ्यंदिवसदैर्घ्यंभवतीत्यर्थः ॥ एवमेवाऽवरोहस्थानेननीचमार्गेणगमनेगतिशैघ्र्यंदिवसाल्पत्वंचभवतीत्याह ।दक्षिणायनेति ॥ २४ ॥ एव

हिरण्यगर्भइतियद्धिरण्यांडसमुद्भवः ॥ सूर्येणहिविभज्यंतेदिशःखंद्यौर्महीभिदा ॥ १८ ॥ स्वर्गापवर्गौनरकारसौकांसिचसर्वशः ॥ देवतिर्यङ्मनुष्याणांसरीसृपसवीरुधाम् ॥ १९ ॥ सर्वजीवनिकायानांसूर्यआत्माद्दगीश्वरः ॥ एतावान्भूमंडलस्यसन्निवेशउदाहृतः ॥ २० ॥ एतेनहिदिवोमानंवर्णयंतिचतद्विदः ॥ द्विदलानांचनिष्पावादीनांचदलयोर्यथा ॥ २१ ॥ अंतरेणतयोरंतरिक्षंतदुभयसंधितम् ॥ यन्मध्यगश्चभगवान्भानुर्वैतपतांवरः ॥ २२ ॥ आतपेनत्रिलोकींचप्रतपत्येवभासयन् ॥ उत्तरायणमासाद्यगतिमांद्यंवितन्वते ॥ २३ ॥ आरोहणस्थानमसौगत्वाहोदैर्घ्यमाचरेत् ॥ दक्षिणायनमासाद्यगतिशैघ्र्यंवितन्वते ॥२४॥ अवरोहस्थानमसौगच्छन्ह्रस्वंदिनंचरेत् ॥ विषुवत्संज्ञमासाद्यगतिसाम्यंवितन्वते ॥ २५ ॥ समस्थानमथाऽऽसाद्यदिनसाम्यंकरोतिच ॥ यदाचमेषतुलयोःसंचरेद्धिदिवाकरः ॥ २६ ॥ समानानित्वहोरात्राण्यातनोतित्रयीमयः ॥ वृषादिपंचसुयदाराशिष्वर्कोविरोचते ॥ २७ ॥ तदाहानिचवर्धंतेरात्रयोऽपिह्रसंतिच ॥ वृश्चिकादिषुसूर्योहियदासंचरतेरविः ॥२८॥तदाऽपीमान्यहोरात्राणिभवंतिविपर्ययात् ॥ २९ ॥ इति श्री देवीभागवतेमहापुराणेऽष्टमस्कंधेचतुर्दशोऽध्यायः ॥ १४ ॥
श्रीनारायणउवाच ॥ अतःपरंप्रवक्ष्यामिभानोर्गमनमुत्तमम् ॥ शीघ्रमंदादिगतिभिस्त्रिविधंगमनंरवेः ॥ १ ॥ सर्वग्रहाणांत्रीण्येवस्थानानिसुरसत्तम ॥ स्थानंजारद्गवंमध्यंतथैरावतमुत्तरम् ॥ २ ॥ वैश्वानरंदक्षिणतोनिर्दिष्टमितितत्त्वतः ॥ अश्विनीकृत्तिकायाम्यानागवीथीतिशब्दिता ॥ ३ ॥ रोहिण्यार्द्रामृगशिरोगजवीथ्यभिधीयते ॥ पुष्याश्लेषातथादित्यावीथीचैरावतीस्मृता ॥४॥ एतास्तुवीथयस्तिस्रउत्तरोमार्गउच्यते ॥ तथाद्वेचाऽपिफल्गुन्यौमघाचैवार्षभीमता ॥ ५ ॥

मेवसाम्यमार्गेणगच्छतः साम्यंभवतीत्याह । विषुवदिति ॥२५॥ तदेवप्रपंचयति । यदेति ॥ २६ ॥ समानानीति ॥ अत्यंतवैषम्याभावात्समानानीत्युक्तम् ॥ २७ ॥ २८ ॥२९॥
इति श्रीदेवीभागवततिलकेऽष्टमस्कन्धेचतुर्दशोऽध्यायः ॥ १४ ॥ पंचाधिकैश्चत्वारिंशत्पद्यैरथविस्तरात् ॥ रवेर्गमनमांद्यादिप्रकारः सम्यगुच्यते ॥१॥१॥ मध्यंगतिस्थानंजारद्गवसं
ज्ञकमुत्तरमैरावतंदक्षिणं वैश्वानरमित्यर्थः ॥ तत्रैकैकंस्थानंवीथीत्रयात्मकमस्तीत्याह । अश्विनीति याम्याभरणी ॥ आदित्याअदितिदेवताकापुनर्वसुः तथाचत्रिभिस्त्रिभिरश्विन्यादिन
क्षत्रैर्नागवीथीगजवीथीऐरावतीचेत्युत्तरमार्गेणवीथीत्रयंसंपन्नम् ॥ २ ॥ ३ ॥ ४ ॥ पूर्वाफाल्गुनीउत्तराफाल्गुनीमघाचेतिनक्षत्रत्रयात्मिकाआर्षभीवीथी ॥ ५ ॥

तथाचत्रिभिस्त्रिभिः ॥ पूर्वाफाल्गुन्यादिनक्षत्रैरार्षभीगोवीथी ॥ जारद्ववीचेतिवैषुवतेमध्यममार्गेवीथीत्रयंसंपन्नम् ॥ ६॥ मूलेति ॥ मूलनक्षत्रम् ॥ आषाढापूर्वाषाढेत्यर्थः ॥७॥ मार्गी मृगवीथीत्यर्थः ॥ तथाचत्रिभिस्त्रिभिर्मूलादिनक्षत्रैरजवीथीमृगवीथीवैश्वानरीचेतिदक्षिणमार्गेवीथीत्रयंसंपन्नम् ॥ ८ ॥ उत्तरायणमिति ॥ युगाक्षांतर्निबद्धयोःपाशयोरित्यन्वयः ॥ वायु बद्धयोरेतादृशयोः ॥ पाशयोर्यत्कर्षणंतदेवरोहणंस्मृतमित्यर्थः ॥ अयंभावः॥ ध्रुवेणयुगाक्षकोटिनिबद्धवायुपाशद्वयाकर्षणेरथस्यारोहणंतदाभ्यंतरमंडलप्रवेशोगतिमांद्यंचेतिदिनवृद्धीरा त्रिह्रासश्च ॥ दक्षिणायनेचपाशप्रेरणादवरोहणेबहिर्मंडलप्रवेशोगतिशैघ्र्यंचेत्यहोरात्रयोर्विपर्ययः ॥ वैषुवतेतुपाशसाम्यात्समावस्थानेमध्यममंडलप्रवेशोगतिसाम्यंचेत्यहोरात्रयोःसाम्य मिति ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३॥ एतदेवस्पष्टयति । आकृष्येतेइति ॥ तौवायुपाशावित्यर्थः ॥ १४ ॥ १५ ॥ तृतीयकोटिस्त्वर्थादुक्तेतिबोध्यम् ॥ अथोदयास्तादिकंवक्तुमु

हस्तश्चित्रातथास्वातीगोवीथीतितुशब्दिता॥ज्येष्ठाविशाखानुराधावीथीजारद्ववीमता॥६॥एतास्तुवीथयस्तिस्रोमध्यमोमार्गउच्यते।मूलाषाढो त्तराषाढाअजवीथ्यभिशब्दिता॥७॥श्रवणंचधनिष्ठाचमार्गीशतभिषक्तथा॥वैश्वानरीभाद्रपदेरेवतीचैवकीर्तिता ॥८॥एतास्तुवीथयस्तिस्रोदक्षि णोमार्गउच्यते॥उत्तरायणमासाद्ययुगाक्षांतर्निबद्धयोः॥९॥कर्षणंपाशयोर्वायुबद्धयोरोहणंस्मृतम्।तदाभ्यंतरगान्मंडलाद्रथस्यगतेर्भवेत् ॥१०॥ मांद्यंदिवसवृद्धिश्चजायतेसुरसत्तम ॥रात्रिह्रासश्चभवतिसौम्यायनक्रमोह्ययम् ॥११॥दक्षिणायनकेपाशेप्रेरणादवरोहणम्॥ बहिर्मंडलवेशेनगति शैघ्र्यंतदाभवेत्॥१२॥तदादिनाल्पतारात्रिवृद्धिश्चपरिकीर्तिता ॥ वैषुवेपाशसाम्यात्तुसमावस्थानतोरवेः॥१३॥मध्यमंडलवेशश्चसाम्यंरात्रिदि नादिके ॥आकृष्येतेयदातौतुध्रुवेणसमधिष्ठितौ ॥१४ ॥तदाभ्यंतरतःसूर्योभ्रमतेमंडलानिच॥ध्रुवेणमुच्यमानेनपुनारश्मियुगेनतु॥१५॥ तथैव बाह्यतःसूर्योभ्रमतेमंडलानिच ॥तस्मिन्मेरौपूर्वभागेपुर्यैंद्रीदेवधानिका ॥१६॥दक्षिणेवैसंयमनीनामयाम्यामहापुरी॥ पश्चान्निम्लोचनीनामवा रुणीवैमहापुरी ॥१७॥तदुत्तरेपुरीसौम्याप्रोक्तानामविभावरी॥ऐंद्रपुर्यांरवेःप्रोक्तउदयोब्रह्मवादिभिः ॥१८॥ संयमन्यांचमध्याह्नोनिम्लोचन्यां विमीलनम् ॥ विभावर्यांनिशीथःस्यात्तिग्मांशोःसुरपूजितः ॥ १९ ॥ प्रवृत्तेश्चनिमित्तानिभूतानांतानिसर्वशः ॥ मेरोश्चतुर्दिशंभानोःकीर्तिता निमयामुने ॥ २० ॥ मेरुस्थानांसदामध्यंगतएवविभातिहि ॥ सव्यंगच्छन्दक्षिणेनकरोतिस्वर्णपर्वतम् ॥ २१ ॥

पक्रमते तस्मिन्मेराविति ॥ पूर्वंमेरावष्टपुर्योभिहितास्तास्वैंद्रीपुरीपूर्वभागेवर्ततइत्यर्थः ॥ एवमुत्तरत्र ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ प्रवृत्तेश्चनिमित्तानिगमनानीतिशेषः ॥ चतुर्दिश मित्यनेनयेमेरोर्दक्षिणेदेशेतेषामैंद्रीमारभ्यपूर्वादयः ॥ येपश्चिमेदेशेतेषांयाम्यामारभ्य येउत्तरेतेषांवारुणीमारभ्य येपूर्वेतेषांसौम्यामारभ्येत्युक्तम् ॥ २० ॥ सव्यंगच्छन्निति ॥ नक्षत्राभि मुखतयास्वगत्यामेरुंवामतःकुर्वन्नपिप्रदक्षिणावर्तप्रवहाख्यवायुभ्राम्यमाणज्योतिश्चक्रवशात्प्रत्यहंदक्षिणंकरोति ॥ अतश्चक्रगतिवशादतिदूरतोभूसंलग्नस्येवदर्शनमुदयः॥ आकाशमारू ढस्येवदर्शनंमध्याह्नः ॥ भूमिप्रविष्टस्येवदर्शनमस्तमयः ॥ ततोतीवदूरगमनेनेनिशीथइतिसमुद्रतीरस्थदृष्ट्याच ॥ अद्भ्योवाएषप्रातरुदेत्यपःसायंप्रविशतीतिश्रुतिव्यवहारोनवस्तुतः ॥ इदं सर्वंमनसिनिधायाह । दक्षिणेनकरोतीत्यादिना ॥ २१ ॥

॥ २२ ॥ २३ ॥ २४ ॥ शक्रादीनामिति ॥ यदाशक्रपुर्यांतिष्ठतितदापुरत्रयम् । इंद्रपुरंयमपुरंसौम्यपुरंविकर्णौईशानकोणवह्निकोणौस्पृशति ॥ अन्यपुरेषुविकर्णेषुचस्पर्शाभावोमेरुणा व्यवधानात्॥एवंविकर्णस्थोवह्निपुरनिष्ठोयदाभवतितदात्रिकोणान्वह्निकोणनिर्ऋतिकोणेशानकोणान्द्वेपुरेइंद्रपुरंयमपुरंचस्पृशतिनान्यदुक्तयुक्तेरितिभावः ॥ एवंयाम्यादिपुरस्थस्यापिबो ध्यम् ॥ २५ ॥ २६ ॥ यदाचैंद्र्याःसकाशात्पंचदशघटिकाभिर्याम्यांप्रचलतेतदायोजनानांसपादकोटिद्वयंसार्धद्वादशलक्षाणि पंचनेत्रसहस्रकंनेत्रशब्देनद्वौ अंकानांवामतोगतिः ॥ पंच विंशतिसहस्रंगच्छतीत्यर्थः ॥ २७ ॥ २८ ॥ २९ ॥ ३०॥ नक्षत्रैःसहेति ॥यद्यपिवस्तुतःसूर्यस्यापिनक्षत्रैःसहैवोदयास्तमयौतथापितस्यतत्साहित्योदर्शनात्सोमादीनामिवतत्साहित्य मुक्तम् ॥३१॥ त्रयीमयइत्याद्युपासनार्थम् ॥ प्रवहाख्यात्समीरणाद्वायोरित्यर्थः ॥३२॥ कालचक्रंसंवत्सरात्मकम् ॥ द्वादशमासाअरायस्य ॥ त्रीणिचातुर्मास्यानिनाभयोयस्य॥३३॥



उदयास्तमयेचैवसर्वकालंतुसम्मुखे ॥दिशास्वशेषासुतथासुरषेंविदिशासुच ॥२२॥यैर्यत्रदृश्यतेभास्वान्सतेषामुदयःस्मृतः॥तिरोभावंचयत्रैति तत्रैवास्तमनंरवेः ॥२३॥ नैवास्तमनमर्कस्यनोदयःसर्वदासतः॥ उदयास्तमनाख्यंहिदर्शनादर्शनंरवेः ॥२४॥शक्रादीनांपुरेतिष्ठन्स्पृशत्येषपुर त्रयम् ॥विकर्णौद्वौविकर्णस्थस्त्रीन्कोणान्द्वेपुरेतथा॥२५॥सर्वेषांद्वीपवर्षाणांमेरुरुत्तरतःस्थितः॥यैर्यत्रदृश्यतेभानुःसैवप्राचीतिचोच्यते ॥२६॥ तद्वामभागतोमेरुर्वर्ततेतिविनिर्णयः ॥यदिचैंद्र्याःप्रचलतेघटिकादशपंचभिः॥२७॥ याम्यांतदायोजनानांसपादंकोटियुग्मकम्॥सार्धद्वादशल क्षाणिपंचनेत्रसहस्रकम् ॥२८॥प्रक्रामतिसहस्रांशुःकालमार्गप्रदर्शकः ॥एवंततोवारुणींचसौम्यामैंद्रींसहस्रदृक् ॥२९॥ पर्येतिकालचक्रात्माद्युम णिःकालबुद्धये॥तथाचाऽन्येग्रहाःसोमादयोयेदिविचारिणः ॥३०॥नक्षत्रैःसहचोद्यंतिसहचास्तंव्रजंतिते ॥ एवंमुहूर्तेनरथोभानोरष्टशताधिकम् ॥ ३१॥योजनानांचतुस्त्रिंशल्लक्षाणिभ्रमतिप्रभुः ॥ त्रयीमयश्चतुर्दिक्षुपुरीषुचसमीरणात् ॥३२ ॥ प्रवहाख्यात्सदाकालचक्रंपर्येतिभानुमान् ॥ यस्यचक्रंरथस्यैकंद्वादशारंत्रिनाभिकम् ॥३३॥षण्नेमिकवयस्तंचवत्सरात्मकमूचिरे॥ मेरुमूर्धनितस्याऽक्षोमानसोत्तरपर्वते ॥३४॥ कृतेतरवि भागोयःप्रोतंतत्ररथांगकम्॥ तैलकारकयंत्रेणचक्रसाम्यंपरिभ्रमन् ॥३५॥ मानसोत्तरनाम्नीहगिरौपर्येतिचांशुमान्॥तस्मिन्नक्षेकृतंमूलंद्वितीयोऽ क्षोध्रुवेकृतः ॥३६॥तुर्यमानेनतैलस्ययंत्राक्षवदितीरितः॥ कृतोपरितनोभागःसूर्यस्यजगतांपतेः॥३७॥रथनीडस्तुषट्त्रिंशल्लक्षयोजनमायतः ॥ तत्तुर्यभागतःसोऽयंपरिणाहेनकीर्तितः ॥ ३८ ॥ तावानकर्रथस्याऽत्रयुगस्तस्मिन्हयाःशुभाः ॥ सप्तच्छंदोभिधानाश्चसूरसूतेनयोजिताः ॥ ॥ ३९ ॥ वहंतिदेवमादित्यंलोकानां सुखहेतवे ॥ पुरस्तात्सवितुः सूतोऽरुणःपश्चान्नियोजितः ॥ ४० ॥

षडृतवोनेमयोयस्य मानसोत्तरपर्वतेलक्षार्धादुपरिवायुबद्धभूमाविविति द्रष्टव्यम् ॥ चक्रंवातावदुच्छ्रितमितिमंतव्यम् ॥ अन्यथायुतमात्रोच्छ्रायत्वान्मानसोत्तरस्यमेरोश्चतुरशीत्युच्छ्राय त्वादक्षस्यसाम्यानुपपत्तेः ॥ ३४॥ ३५ ॥ तस्मिन्नक्षेचक्रप्रांतेकृतंमूलंनिबद्धपूर्वभागःप्रथमोऽक्षोमेरुमानसोत्तरायतःसार्धसप्तलक्षाधिकसार्धकोटिप्रमाणः ॥ तस्यतुर्यमानेनसार्धसप्तत्रिंश त्सहस्राधिकैकोनचत्वारिंशल्लक्षमानेनध्रुवेकृतोवायुपाशेननिबद्धउपरिभागोयस्यतादृशःकृतः ॥ ३६ ॥ उपरितनोभागइतिविभक्त्यलोपश्छांदसः ॥ ३७ ॥ नीडउपवेशस्थानम् ॥ परि णाहोदैर्घ्यम् ॥ ३८ ॥ युगइत्यस्यपरिणाहेनकीर्तितइत्यनेनान्वयः ॥ सप्तच्छंदोभिधानाः गायत्र्यादिच्छंदोनामानः ॥ सूरसूतेनारुणेनसारथिना ॥ ३९ ॥ पुरस्तात्सवितुरिति ॥ पुर स्तात्स्थितोऽपिपश्चात्प्रत्यङ्मुखआस्ते ॥ यद्वा यत्सूर्यस्यपुरस्तात्तस्यैवपाश्चिमत्वात्पश्चादित्युक्तम् ॥ ४० ॥

॥ ४१ ॥ सूक्तवाक्यैर्वेदमंत्रैःसुभाषितैर्वा ॥ ४२ ॥ ४३ ॥ एकैकशश्चतुर्दश द्वंद्वशः सप्त गुणाःसंतोमासिमास्युपासतइत्यन्वयः ॥ ४४ ॥ गव्यूतिःक्रोशयुगं सगव्यूत्युत्तरंयथाभवति तथा ॥ ४५ ॥ इतिश्रीदे०भा०तिलकेऽष्टमस्कंधेपंचदशोऽध्यायः ॥ १५ ॥ सप्तत्रिंशच्छ्लोकवर्यैःसोमादीनामथोत्तरम् ॥ स्थानंगत्यनुसारेणविविधंफलमुच्यते ॥१॥गमादिकंगमनस्थानादिकमित्यर्थः ॥ शुभाशुभनिदर्शनात्तयोःप्राप्तिस्तद्गत्यनुसृतासोमादिगत्यनुरोधेननॄणांभवतीत्यर्थः ॥ १ ॥ ननुमेरुंप्रदक्षिणीकुर्वतआदित्यस्यराशीनामभिमुखमप्रदक्षिणंगमनमुपवर्णितंनतद्युद्ध्यारूढंदृष्टांतेनविनाभवतीत्याशंकांश्रोतुर्मनसिजायमानांनिराकरोति । यथाकुलालेति ॥ कीटादिनामितिदीर्घाभावआर्षः ॥ २ ॥ ३ ॥ ४ ॥ चक्रवशात्स्वतश्चगतिद्वयमवि

सौत्येकर्मणिसंयुक्तोवर्ततेगरुडाग्रजः ॥ तथैववालखिल्याख्याऋषयोंगुष्ठपर्वकाः ॥ ४१ ॥ प्रमाणेनपरिख्याताःषष्टिसाहस्रसंख्यकाः ॥ स्तुवंतिपुरतःसूर्यंसूक्तवाक्यैःसुशोभनैः ॥ ४२ ॥ तथाचाऽन्येचऋषयोगंधर्वाअप्सरोरगाः ॥ग्रामण्योयातुधानाश्चदेवाःसर्वेंपरेश्वरम्॥४३॥एकैकशःसप्तसप्तमासिमासिविरोचनम् ॥ सार्धलक्षोत्तरंकोटिनवकंभूमिमंडलम् ॥ ४४ ॥ द्विसहस्रंयोजनानांसगव्यूत्युत्तरंक्षणात् ॥ पर्येतिदेवदेवेशोविश्वव्यापीनिरंतरम् ॥४५॥ इतिश्रीदेवीभागवतेमहापुराणेऽष्टमस्कंधेपंचदशोऽध्यायः॥ १५॥ श्रीनारायणउवाच॥अथातःश्रूयतांचित्रंसोमादीनांगमादिकम् ॥ तद्गत्यनुसृतानॄणांशुभाशुभनिदर्शना ॥१॥ यथाकुलालचक्रेणभ्रमताभ्रमतांसह॥तदाश्रयाणांचगतिरन्याकीटादिनांभवेत् ॥२॥ एवंहिराशिवृंदेनकालचक्रेणतेनच॥मेरुंधुरंचसरतांप्रादक्षिण्येनसर्वदा ॥ ३ ॥ ग्रहाणांभानुमुख्यानांगतिरन्यैवदृश्यते ॥ नक्षत्रांतरगामित्वाद्भांतरेगमनंतथा ॥ ४ ॥ गतिद्वयंचाऽविरुद्धंसर्वत्रैषविनिर्णयः ॥ सएवभगवानादिपुरुषोलोकभावनः ॥ ५ ॥ नारायणोऽखिलाधारोलोकानांस्वस्तयेभ्रमन् ॥ कर्मशुद्धिनिमित्तंतुआत्मानंवैत्रयीमयम् ॥ ६ ॥ कविभिश्चैववेदेनविजिज्ञास्योऽर्कधाऽभवत् ॥ षट्सुक्रमेणऋतुषुवसंतादिषुचस्वयम् ॥ ७ ॥ यथोपजोषमृतुजान्गुणान्वैविदधातिच ॥ तमेनंपुरुषाःसर्वेत्रय्याचविद्ययासदा ॥ ८ ॥ वर्णाश्रमाचारपथातथाऽम्नातैश्चकर्मभिः ॥ उच्चावचैःश्रद्धयाचयोगानांचवितानकैः ॥ ९ ॥ अंजसाचयजंतेयेश्रेयोविंदंतितेमतम् ॥ अथैषआत्मालोकानांद्यावाभूम्यंतरेणच॥ ॥ १० ॥ कालचक्रगतोभुंक्तेमासान्द्वादशराशिभिः ॥ संवत्सरस्यावयवान्मासःपक्षद्वयंदिवा ॥ ११ ॥ नक्तंचेतिसपादर्क्षद्वयमित्युपदिश्यते॥ यावताषष्ठमंशंसभुंजीतऋतुरुच्यते ॥ १२ ॥ संवत्सरस्याऽवयवःकविभिश्चोपवर्णितः ॥ यावतार्धेनचाऽऽकाशवीथ्यांप्रचरतेरविः ॥ १३॥

रुद्धमितिपरिहारार्थः ॥ ५ ॥ ६ ॥ विजिज्ञास्योवितर्क्यमाणः ॥ अर्कधाद्वादशधा ॥ ७ ॥ यथोपजोषंयथाकर्मभोगम् ॥ ऋतुजान्गुणान्शीतोष्णादीन् ॥ ८ ॥ ९ ॥ मतमभीष्टम् ॥ सएषएवस्वगत्यामासादिव्यवहारकारणमित्याह । अथैषइति ॥ एषलोकानामात्माद्यावापृथिव्योरंतरेणमध्येयदंतरिक्षंतस्यमध्येयत्कालचक्रंतद्गतमेषादिद्वादशराशिभिः संज्ञायेषांद्वादशमासानांतान्मासान्भुंक्तेइत्यर्थः ॥ चैत्रादिसंज्ञास्तुचांद्रमासानाम् ॥ १० ॥ संवत्सरस्यावयवानितिपूर्वेणान्वयः ॥ मासमाह । पक्षद्वयंमासइति ॥ इदंचांद्रेणमानेन ॥ सपादंऋक्षद्वयंसौरेण ॥ दिवानक्तंचाऽहोरात्रमितिपित्र्येण ॥ ११ ॥ षष्ठमंशंराशिद्वयंसऋतुरित्यर्थः ॥ १२ ॥ यावतार्धेनऋतुत्रयात्मकेन ॥ १३ ॥

तंकालमयनमितिप्राक्तनावर्णयंति । अथयावदिति ॥ सह्द्यावापृथिव्योर्मंडलाभ्यामितिशेषः ॥ ताभ्यां मंडलाभ्यांसहगच्छतिससूर्यः ॥ १४ ॥ यंकालंकात्स्न्येंनषड्ऋतुभिर्द्वादशराशिभिर्वाभुंजीततंकालंवत्सरंविदुरित्यर्थः ॥ सचसंवत्सरःपंचधाभिन्नइत्याह । संवत्सरंपरिवत्सरमिति ॥ १५ ॥ भानोरिति ॥ अयंभावः ॥ यदाशुक्लप्रतिपदिसंक्रांतिस्तदासौरचांद्रयोर्मासयोर्युगपदुपक्रमोभवतिससंवत्सरः ॥ ततःसौरमानेनवर्षेषट्दिनानिवर्धते चांद्रमानेनषट्ह्नसंतीतिद्वादशदिनव्यवधानादुभयोरग्रपश्चाद्भावोभवति ॥ एवंपंचवर्षाणिगच्छंतितन्मध्येद्वौमलमासौभवतः ॥ ततःपुनःसंवत्सरोभवति ॥ तदेवमतांतरभेदेनसंवत्सरादिपंचकंभानोर्मांद्यशैघ्र्यसमगतिभिर्भवतीति ॥ १६ ॥ सोमादीनामपिस्थानंकार्यंचाह । एवंचंद्रइति ॥ अर्करश्मिभ्योमंडलरूपेभ्यः ॥ १७ ॥ मित्रस्यसूर्यस्यसंवत्सरभुक्तिपक्षाभ्यांभुंक्तेमित्रस्यमासभुक्तिंसपादभाभ्याम् ॥ भशब्दऋक्षवाची ॥ सपाददिनद्वयेनभुंक्ते ॥ मित्रस्यपक्षभुजिंपक्षभुक्तिंदिवसभुक्तिंचरेत् ॥ एकदिनेनैवभुनक्तीत्यर्थः ॥ एवंद्रुततरगमनश्चंद्रमाभवतीत्यर्थः ॥ १८ ॥ १९ ॥ २० ॥ पूर्वापरसुघस्रैः पूर्वपक्षापरपक्षाभ्यामहोरात्राणिवितन्वानइत्यर्थः ॥ सर्वेषांजीवनिवहानांप्राणोन्नमयत्वादमृतमयत्वाच्च ॥ अतएवजीवनहेतुत्वाज्जीवश्च ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ प्रदक्षिणेनैवनतुतेषांपृथगन्यागतिरस्तीत्यर्थः ॥ योजितंकालचक्रेईश्वरेणैवयोजितमित्यर्थः ॥ सहाभिजित्विभक्तिलोपआर्षः ॥ उत्तराषाढाश्रवणसंधावभिजिन्नामनक्षत्रंफलविशेषेपृथक्कल्पितंतेनसहेत्यर्थः ॥ २५ ॥ पुरःपश्चादिति ॥ पुरतःसूर्येणभोक्ष्यमाणेनक्षत्रेपश्चाद्भुंक्ते ॥ सहैवभुज्यमाने ॥ २६ ॥ २७ ॥ वृष्टेर्विष्टंभःस्तंभनंयस्मात्ग्रहात्तमुपशमयतीतितथा ॥ २८ ॥ शुक्रवदिति ॥ पुरतःपश्चात्सहैववासूर्यस्यचरतीत्यर्थः ॥ कंचिद्विशेषंचाह । यदार्केति ॥ सौम्योबुधः ॥ २९ ॥ ३० ॥

तंप्राक्तनावर्णयंतिअयनंमुनिपूजिताः ॥ अथयावन्नभोमंडलंसहप्रतिगच्छति ॥ १४ ॥ कात्स्न्येंनसहभुंजीतकालंतंवत्सरंविदुः ॥ संवत्सरंपरिवत्सरमिडावत्सरमेवच ॥ १५ ॥ अनुवत्सरमिद्वत्सरमितिपंचकमीरितम् ॥ भानोर्मांद्यशैघ्र्यसमगतिभिःकालवित्तमैः ॥ १६ ॥ एवंभानोर्गतिःप्रोक्ताचंद्रादीनांनिबोधत ॥ एवंचंद्रोर्करश्मिभ्योलक्षयोजनमूर्द्धतः ॥ १७ ॥ उपलभ्यमानोमित्रस्यसंवत्सरभुजिचसः ॥ पक्षाभ्यांचौषधीनाथोभुंक्तेमासभुंजिचसः ॥ १८ ॥ सपादमाभ्यांदिवसभुक्तिपक्षभुजिंचरेत् ॥ एवंशीघ्रगतिःसोमोभुंक्तेनूनंभचक्रकम् ॥ १९ ॥ पूर्यमाणकलाभिश्चाऽमराणांप्रीतिमावहन् ॥ क्षीयमानकलाभिश्चपितॄणांचित्तरंजकः ॥ २० ॥ अहोरात्राणितन्वानःपूर्वापरसुघस्रैः ॥ सर्वजीवनिकायस्यप्राणोजीवःसएवहि ॥ २१ ॥ भुंक्तेचैकैकनक्षत्रंमुहूर्तत्रिंशताविभुः ॥ सएवषोडशकलःपुरुषोऽनादिरुत्तमः ॥ २२ ॥ मनोमयोप्यन्नमयोमृतधामासुधाकरः ॥ देवपितृमनुष्यादिसरीसृपसवीरुधाम् ॥ २३ ॥ प्राणाप्यायनशीलत्वात्ससर्वमयउच्यते ॥ ततोभचक्रंभ्रमतियोजनानांत्रिलक्षतः ॥ २४ ॥ मेरुप्रदक्षिणेनैवयोजितंचेश्वरेणतु ॥ अष्टाविंशतिसंख्यानिगणितानिसहाऽभिजित् ॥ २५ ॥ ततःशुक्रोद्विलक्षेणयोजनानामथोपरि ॥ पुरःपश्चात्सहैवासावर्कस्यपरिवर्तते ॥ २६ ॥ शीघ्रमंदसमानाभिर्गतिभिर्विचरन्विभुः ॥ लोकानामनुकूलोऽयंप्रायःप्रोक्तःशुभावहः ॥ २७ ॥ वृष्टिविष्टंभशमनोभार्गवःसर्वदामुने ॥ शुक्राद्बुधःसमाख्यातोयोजनानांद्विलक्षतः ॥ २८ ॥ शीघ्रमंदसमानाभिर्गतिभिःशुक्रवत्सदा ॥ यदार्कांद्व्यतिरिच्येतसौम्यःप्रायेणतत्रतु ॥ २९ ॥ अतिवाताभ्रपातानावृष्ट्यादिभयसूचकः ॥ उपरिष्टात्ततोभौमोयोजनानांद्विलक्षतः ॥ ३० ॥

यदिवक्रइति ॥ यदिनवक्रेणाभिवर्ततेतर्हित्रिभिस्त्रिभिःपक्षैः ॥ ३१ ॥ अघानांदुःखानाम् ॥ ३२ ॥ यदिवक्रोभवेन्नैवेति ॥ यदिनवक्रःस्यात्तर्हिपरिवत्सरमित्यर्थः ॥ ३३ ॥ त्रिंशन्मासैरिति ॥ एकैकस्मिन्राशौत्रिंशन्मासान्विलंबमानःसर्वानेवाऽनुपर्येतितावद्भिरनुवत्सरैःप्रायेणहिसर्वेषामशांतिकरः ॥ ३४ ॥ ३५ ॥ ३६ ॥ दक्षिणंक्रमतेचतेइति ॥ प्रदक्षिणंप्रक्रमंतीत्यर्थः ॥ ३७ ॥ इ० दे० तिलकेऽष्टमस्कंधेषोडशोऽध्यायः ॥ १६ ॥ त्रिंशद्भिरेकेनोनैस्तुपद्यैरथसविस्तरम् ॥ ध्रुवमंडलसंस्थानंयथावदनुवर्ण्यते ॥ १ ॥ वैष्णवंपरमंपदमस्तीत्यर्थः ॥ ॥ १ ॥ यत्रवैष्णवेपदेमहाभागवेताध्रुवोऽस्तीत्यर्थः ॥ २ ॥ समकालमेवयुज्यतेइतितथा ॥ तेननक्षत्रगणेनसहितइत्यर्थः ॥ ३ ॥ ४ ॥ कालेनेति ॥ सहिध्रुवःसर्वेषांज्योतिर्गणानां ग्रहनक्षत्रभादिनां ह्रस्वआर्षः ॥ अव्यक्तरंहसाऽस्पष्टवेगेनानिमिषेणकालेनभ्राम्यतांभ्राम्यमाणानांस्थाणुरिवाऽवष्टंभःपरमेश्वरेणविहितइत्यन्वयः ॥५ ॥ मेढिस्तंभेइति ॥ मेढिस्तंभेयुक्ता

पक्षैस्त्रिभिस्त्रिभिःसोऽयंभुंक्तेराशीनथैकशः ॥ द्वादशाऽपिचदेवर्षेयदिवक्रोनजायते ॥ ३१ ॥प्रायेणाऽशुभकृत्सोऽयंग्रहौघानांचसूचकः ॥ ततो द्विलक्षमानेनयोजनानांचगीष्पतिः ॥ ३२ ॥ एकैकस्मिन्नथोराशौभुंक्तेसंवत्सरंचरन् ॥ यदिवक्रोभवेन्नैवाऽनुकूलोब्रह्मवादिनाम् ॥ ३३ ॥ ततः शनैश्वरोघोरोलक्षद्वयपरोमितः ॥ योजनैःसूर्यपुत्रोयंत्रिंशन्मासैःपरिभ्रमन् ॥ ३४ ॥ एकैकराशौपर्येतिसर्वान्राशीन्महाग्रहः ॥ सर्वेषामशुभोमंदःप्रोक्तःकालविदांवरैः ॥ ३५ ॥ ततउत्तरतःप्रोक्तमेकादशसुलक्षकैः ॥ योजनैःपरिसंख्यातंसप्तर्षीणांचमंडलम्॥ ३६ ॥ लोकानांशंभावयंतो मुनयःसप्ततेमुने ॥ यत्तद्विष्णुपदंस्थानंदक्षिणंक्रमतेचते ॥ ३७ ॥ इतिश्रीदे० म० अष्टमस्कंधेषोडशोऽध्यायः ॥ १६ ॥ श्रीनारायणउवाच ॥ अथर्षिमंडलादूर्ध्वंयोजनानांप्रमाणतः ॥ लक्षैस्त्रयोदशमितैःपरमंवैष्णवंपदम् ॥ १ ॥ महाभागवतःश्रीमान्वर्ततेलोकवंदितः॥औत्तानपादिरिंद्रेणवह्निनाकश्यपेनच ॥ २ ॥ धर्मेणसहचैवास्तेसमकालयुजाध्रुवः ॥ बहुमानंदक्षिणतःकुर्वद्भिःप्रेक्षकैःसदा ॥ ३ ॥आजीव्यःकल्पजीविनामुपास्तेभगवत्पदम् ॥ ज्योतिर्गणानांसर्वेषांग्रहनक्षत्रभादिनाम् ॥ ४ ॥ कालेनानिमिषेणायंभ्राम्यतांव्यक्तरंहसा ॥ अवष्टंभस्थाणुरिवविहितश्चेश्वरेणसः ॥ ५ ॥ भासतेभासयन्भासास्वीययादेवपूजितः ॥ मेढिस्तंभेयथायुक्ताःपशवःकर्षणार्थकाः ॥ ६ ॥ मंडलानिचरंतीमेसवनत्रितयेनच ॥ एवंग्रहादयःसर्वेभगणाद्यायथाक्रमम् ॥ ७॥ अंतर्बहिर्विभागेनकालचक्रेनियोजिताः ॥ ध्रुवमेवाऽवलंब्याशुवायुनोदीरिताश्चरन् ॥ ॥ ८ ॥ आकल्पांतंचक्रमंतिखेश्येनाद्याःखगाइव ॥ कर्मसारथयोवायुवशगाःसर्वएवते ॥ ९ ॥ एवंज्योतिर्गणाःसर्वेप्रकृतेःपुरुषस्यच ॥ संयोगानुगृहीतास्तेभूमौननिपतंतिच ॥ १० ॥ ज्योतिश्चक्रंकेचिदेतच्छिशुमारस्वरूपकम् ॥ सोपयोगंभगवतोयोगधारणकर्मणि ॥ ११ ॥

बद्धाःपशवोबलीवर्दाः ॥ ६ ॥ सवनत्रितयेन त्रिकालम् ॥ ७ ॥ ध्रुवमेवमेढिस्थानापन्नंचरन् चरंतइत्यर्थः ॥ ८॥ खेआकाशेश्येनाद्याःखगाःपक्षिणोयथाक्रमंतिगच्छंतितद्वदित्यर्थः ॥ कर्म सारथिःसहायोयेषाम् ॥९॥ नन्वेतेज्योतिर्गणानिराधाराःकुतोभुविनपतंतितत्राह । एवमिति । प्रकृतेःपुरुषस्यचयःसंयोगोऽत्यंतस्तेनाऽनुगृहीतामायाशबलब्रह्मरूपभगवत्यनुगृहीतानपतंतीत्यर्थः ॥ १० ॥ ईश्वराधारत्वात्पतनशंकैवनास्तीतिवक्तुंमतांतरमाह । केचिदिति ॥ एतस्याऽपि शिशुमारचक्रस्यपरिच्छिन्नत्वादेतस्याऽपि कआधारइत्याकांक्षायांसर्वव्यापकमायाशबलब्रह्मरूपिणीभगवत्येवाऽऽधारइतिवक्तव्यम् ॥ तस्मात्प्रथमंमतमेवमुख्यमितिकेचित्पदेनसूचितम् ॥ योगधारणकर्मणियोगधारणायांस्थितमितिशेषः ॥ ११ ॥

॥ १२ ॥ लांगूलेअग्रादधोभागे ॥ १३ ॥ १४ ॥ उत्तरायणभानिअभिजिदादीनिपुनर्वस्वंतानिचतुर्दशनक्षत्राणि ॥ दक्षिणपार्श्वेदक्षिणायनभानिपुष्यादीन्युत्तराषाढांतानिचतुर्दशवाम पार्श्वे ॥ १५ ॥ १६ ॥ आकाशसरित्आकाशगंगाऔदरेउदरेइत्यर्थः ॥ तदेवस्थानविशेषेणविभज्यदर्शयति । पुनर्वसुश्चेति ॥ दक्षिणवामयोः श्रोण्यावित्यर्थः ॥१७॥ दक्षिणवामयोः पश्चिमयोःपादयोरार्द्राश्लेषेइत्यन्वयः ॥ १८ ॥ श्रुतिःश्रवणनक्षत्रंजलभंपूर्वाषाढानक्षत्रम् ॥ इमेदशवामनेत्रयोःकल्पितेइत्यर्थः ॥ १९ ॥ २० ॥ वामपार्श्वीयवंक्रिषुवामपार्श्वास्थिषु ॥

यस्याऽर्वाक्शिरसःकुंडलीभूतवपुषोमुने ॥ पुच्छाग्रेकल्पितोयोऽयंध्रुवउत्तानपादजः ॥ १२ ॥ लांगूलेऽस्यचसंप्रोक्तःप्रजापतिरकल्मषः ॥ अग्निरिंद्रश्चधर्मश्चतिष्ठंतेसुरपूजिताः ॥ १३ ॥ धाताविधातापुच्छांतेकट्यांसप्तर्षयस्ततः ॥ दक्षिणावर्तभोगेनकुंडलाकारमीयुषः ॥ १४ ॥ उत्तरायणभानीहदक्षपार्श्वेऽर्पितानिच ॥ दक्षिणायनभानीहसव्येपार्श्वेऽर्पितानिच ॥ १५ ॥ कुंडलाभोगवेशस्यपार्श्वयोरुभयोरपि ॥ समसंख्याश्चावयवाभवंतिकजनंदन ॥ १६ ॥ अजवीथीपृष्ठभागेआकाशसरिदौदरे ॥ पुनर्वसुश्चपुष्यश्चश्रोण्यौदक्षिणवामयोः ॥ १७ ॥ आर्द्राश्लेषेपश्चिमयोःपादयोर्दक्षवामयोः ॥ अभिजिच्चोत्तराषाढानासयोर्दक्षवामयोः ॥ १८ ॥ यथासंख्यंचदेवर्षेश्रुतिश्चजलभंतथा ॥ कल्पितेकल्पनाविद्भिर्नेत्रयोर्दक्षवामयोः ॥ १९ ॥ धनिष्ठाचैवमूलंचकर्णयोर्दक्षवामयोः ॥ मघादीन्यष्टभानीहदक्षिणायनगानिच ॥ २० ॥ युंजीतवामपार्श्वीयवंक्रिषुक्रमतोमुने ॥ तथैवमृगशीर्षादीन्युदग्भानिचयानिहि ॥ २१ ॥ दक्षपार्श्वेवंक्रिकेषुप्रातिलोम्येनयोजयेत् ॥ शततारातथाज्येष्ठास्कंदयोर्दक्षवामयोः ॥ २२ ॥ अगस्तिश्चोत्तरहनावधरायांहनौयमः ॥ मुखेष्वंगारकःप्रोक्तोमंदःप्रोक्तउपस्थके ॥ २३ ॥ बृहस्पतिश्चककुदिवक्षस्यर्कोग्रहाधिपः ॥ नारायणश्चहृदयेचंद्रोमनसितिष्ठति ॥ २४ ॥ स्तनयोरश्विनौनाभ्यामुशनाःपरिकीर्तितः ॥ बुधःप्राणापानयोश्चगलेराहुश्चकेतवः ॥ ॥ २५ ॥ सर्वांगेषुतथारोमकूपेतारागणाःस्मृताः ॥ एतद्भगवतोविष्णोःसर्वदेवमयंवपुः ॥ २६ ॥ संध्यायांप्रत्यहंध्यायेत्प्रयतोवाग्यतोमुनिः ॥ निरीक्षमाणश्चोत्तिष्ठेन्मंत्रेणानेनधीधरः ॥ २७ ॥ नमोज्योतिर्लोकायकालायाऽनिमिषांपतयेमहापुरुषायाऽभिधीमहीति ॥ २८ ॥ ग्रहर्क्षतारामयमाधिदैविकंपापापहंमंत्रकृतांत्रिकालम् ॥ नमस्यतःस्मरतोवात्रिकालंनश्येततत्कालजमाशुपापम् ॥ २९ ॥ इतिश्रीदेवीभागतेमहापुराणेऽष्टमस्कंधेसप्तदशोऽध्यायः ॥ १७ ॥ श्रीनारायणउवाच ॥ अधस्तात्सवितुःप्रोक्तमयुतंराहुमंडलम् ॥ नक्षत्रवच्चरतिचसैंहिकेयोऽतदर्हणः ॥ ॥ १ ॥ सूर्याचंद्रमसोरेवमर्दनःसिंहिकासुतः ॥ अमरत्वंचखेटत्वंलेभेयोविष्णवनुग्रहात् ॥ २ ॥

॥ २१ ॥ दक्षपार्श्वेविद्यमानेषुप्रातिलोम्येनपूर्वाभाद्रपदांतानि ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ इतिश्रीदेवीभागवततिलकेऽष्टमस्कंधेसप्तदशोऽध्यायः ॥ ॥१७॥ चतुस्त्रिंशच्छ्लोकवर्यैराहुमंडलमुच्यते ॥ सूर्याधःसंस्थितंयेनग्रहणंचंद्रसूर्ययोः॥१॥ सूर्यमारभ्यध्रुवांतंसन्निवेशंनिरूप्येदानींसूर्याधस्तान्निरूपयति । अधस्तात्सवितुरिति॥सैंहिकेयः सिंहिकायाःसुतोराहुः ॥ १ ॥ खेटत्वंनक्षत्रत्वम् ॥ २ ॥

ग्रहणं वक्तुमाह । यददस्तरणेरिति ॥योजनायुतंतरणेर्बिंबमित्यन्वयः ॥ अर्कसहस्रविस्तरंद्वादशसाहस्रयोजनविस्तारंसोमस्यमंडलमित्यन्वयः ॥ त्रयोदशसहस्रंतुत्रयोदशसहस्रयोजनप
रिमाणंतुआच्छादकोग्रहोराहुर्वर्ततेसतच्छादकस्तयोःसूर्यसोममंडलयोराच्छादकोभवतीत्यर्थः ॥ ३ ॥ कदाच्छादकस्तदाह । पर्वसमयेइति ॥ अमावास्यापूर्णिमारूपेकालेयश्छादको
भवेदित्यन्वयः ॥ वैरानुबंधी अमृतपानसमयेसूर्याचन्द्रमसोर्मध्ये प्रविष्टस्यताभ्यांविष्णवेकथनात्तयोर्वैरमनुबध्नाति ॥ ततोहेतोः सूर्याचंद्रमसोर्दूराच्छादनकारकोभवेदित्यन्वयः ॥४॥
तर्हिसूर्याचंद्रमसौकुतोनभक्षयतितत्राह । तन्निशम्येति ॥५॥ समंतात्परिवारितंचक्रमित्यन्वयः ॥ ६ ॥ दुःसहेनतत्तेजसामुहूर्तोद्विजमानोमुहूर्तंखिद्यमानश्चकितहृदयः सन्नारातदूरादे

यददस्तरणेर्बिंबंतपतोयोजनायुतम् ॥तच्छादकोऽसुरोज्ञेयोऽप्यर्कसाहस्रविस्तरम्॥ ३॥ त्रयोदशसहस्रंतुसोमस्याच्छादकोग्रहः॥ यःपर्वसमयेवैरानु
बंधीछादकोऽभवत्॥ ४॥ सूर्याचंद्रमसोदूराद्भवेच्छादनकारकः॥तन्निशम्योभयत्रापिविष्णुनाप्रेरितंस्वकम्॥५॥ चक्रंसुदर्शनंनामज्वालामालाति
भीषणम्॥तत्तेजसादुःसहेनसमंतात्परिवारितम्॥ ६॥मुहूर्तोद्विजमानस्तुदूराच्चकितमानसः। आरान्निवर्ततेसोऽयमुपरागइतीवह॥ ७॥उच्यतेलोक
मध्येतुदेवर्षेअवबुध्यताम्॥ततोऽधस्तात्समाख्यातालोकाःपरमपावनाः॥ ८॥सिद्धानांचारणानांचविद्याध्राणांचसत्तम।योजनायुतविख्याताली
काःपुण्यानिषेविताः॥ ९॥ततोऽप्यधस्ताद्देवर्षेयक्षाणांचसरक्षसाम्॥ पिशाचप्रेतभूतानांविहाराजिरमुत्तमम् ॥ १०॥ अंतरिक्षंचतत्प्रोक्तंयावद्वायुः
प्रवातिहि॥यावन्मेघास्ततोद्यंतितत्प्रोक्तंज्ञानकोविदैः॥ ११॥ततोऽधस्ताद्योजनानांशतंयावद्द्विजोत्तम ॥ पृथिवीपरिसंख्यातासुपर्णश्येनसारसाः
॥ १२॥हंसादयःप्रोत्पतंतिपार्थिवाःपृथिवीभवाः॥भूसन्निवेशावस्थानंयथावदुपवर्णितम् ॥ १३ ॥ अधस्तादवनेःसप्तदेवर्षेविवराःस्मृताः॥एकैक
शोयोजनानामायामोच्छ्रायतःपुनः॥ १४॥अयुतांतरविख्याताःसर्वर्तुसुखदायकाः ॥अतलंप्रथमंप्रोक्तंद्वितीयंवितलंतथा॥ १५॥ तृतीयंसुतलंप्रो
क्तंचतुर्थंवैतलातलम्॥महातलंपञ्चमंचषष्ठंप्रोक्तंरसातलम्॥ १६॥सप्तमंविप्रपातालंसप्तैतेविवराःस्मृताः॥एतेषुबिलस्वर्गेषुदिवोप्यधिकमेवच १७॥
कामभोगैश्वर्यसुखसमृद्धभुवनेषुच॥नित्योद्यानविहारेषुसुखास्वादःप्रवर्तते ॥ १८॥ दैत्याश्चकाद्रवेयाश्चदानवाबलशालिनः॥ नित्यप्रमुदितार
क्ताःकलत्रापत्यबंधुभिः ॥ १९ ॥ सुहृद्भिरनुजीवाद्यैःसंयुताश्चगृहेश्वराः ॥ईश्वरादप्रतिहतकामामायाविनश्चते ॥ २० ॥

वनिवर्ततेसोऽयमुपरागइतिलोकेप्रोच्यतेइत्यर्थः॥७॥८॥विद्याध्राणांविद्याधराणाम् ॥ अधस्तादित्युक्तंतन्मर्यादामाह । योजनायुतेइति ॥ राहुमंडलादधस्ताद्योजनायुतपरिमितेदेशेसि
द्धादीनांलोकाः संतीत्यर्थः ॥९॥ विहाराजिरंवासस्थानम्॥१०॥अंतरिक्षंग्रहहीनम् । तस्यावधिमाह । यावद्वायुःप्रवातितीव्रोवाति । तस्याप्यवधिमाह । यावन्मेघाइति ॥११॥१२॥
पृथिव्याउपरिभूर्लोकावधिमाह । हंसादयइति ॥ पार्थिवाः पृथिवीविकाराः॥१३॥एकैकशोयोजनानामिति॥ योजनायुतांतरेणप्रत्येकमुच्छ्रिताः॥ आयामोयोप्यंडकटाहस्यतद्विस्तारेण
॥१४॥अयुतमंतरमेकैकस्याविवरस्य ॥१५॥१६॥ विप्रेतिसंबोधनम् ॥१७॥१८॥ काद्रवेयाःसर्पाः ॥१९॥ अनुजीवाद्यैरनुचरादिभिः ॥ ईश्वरादपिअप्रतिहतः कामोयेषाम् ॥ २० ॥

मायाविभुनामायास्वामिनामायाविनेत्यर्थः ॥२१॥ प्रकामशोयथेच्छंभक्ताविभक्ताःकृताइत्यर्थः ॥ मणिप्रवरशालिनइतिउत्तरत्रान्वेति ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ स्वच्छार्णेनस्व
च्छजलेनपूरिताहृदायेषुतैः ॥ पाठीनामत्स्याः ॥ २६ ॥ नीरजातैः कमलैः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ जीर्णत्वंजरावैवर्ण्यंदेहस्यवयोवस्थासहिताएतेनबाधंतेइत्यन्वयः
॥ ३२ ॥ ३३ ॥ यस्मिन्भगवत्तेजसिप्रविष्टे ॥३४॥ इतिश्रीदेवीभागवततिलकेऽष्टमस्कन्धेऽष्टादशोध्यायः ॥१८ ॥ द्वात्रिंशत्पद्यकैःपश्चादतलादेश्ववर्णनम् ॥ क्रियतेयत्रभोगानांपराका

निवसंतिसदाहृष्टाःसर्वर्तुसुखसंयुताः॥मयेनमायाविभुनायेषुयेषुचनिर्मिताः॥२१॥पुरःप्रकामशोभक्तामणिप्रवरशालिनः।विचित्रभवनाट्टालगो
पुराद्याःसहस्रशः ॥२२॥सभाचत्वरचैत्यादिशोभाढ्याःसुरदुर्लभाः॥नागासुराणांमिथुनैःसपारावतसारिकैः ॥२३॥कीर्णकृत्रिमभूमिश्चविवरेश
गृहोत्तमैः॥ अलंकृताश्चकासंतिउद्यानानिमहांतिच ॥२४॥मनःप्रसन्नकारीणिफलपुष्पविशालिभिः॥ललनानांविलासार्हस्थानैःशोभितभांजिच
॥२५॥नानाविहंगमव्रातसंयुक्तजलराशिभिः॥स्वच्छार्णपूरितह्रदैःपाठीनसमलंकृतैः ॥२६॥जलजंतुक्षुब्धनीरनीरजातैरनेकशः॥कुमुदोत्पलक
ह्लारनीलरक्तोत्पलैस्तथा॥२७॥तेषुकृतनिकेतानांविहारैःसंकुलानिच॥इंद्रियोत्सवकारैश्चतथैवविविधैःस्वरैः ॥२८॥अमराणांचपरमांश्रियंचाऽ
तिशयंतिच॥यत्रनैवभयंक्वापिकालांगैर्दिनरात्रिभिः ॥२९॥ यत्राऽहिप्रवराणांचशिरःस्थैर्मणिरश्मिभिः॥ नित्यंतमःप्रबाध्यतेसदाप्रस्फुटकांति
भिः॥३०॥नवाएतेषुवसतांदिव्यौषधिरसायनैः॥रसान्नपानस्नानाद्यैर्नाऽधयोनचव्याधयः ॥३१॥ वलीपलितजीर्णत्ववैवर्ण्यस्वेदगंधताः॥अनु
त्साहवयोवस्थानबाधंतेकदाचन॥३२॥कल्याणानांसदातेषांनचमृत्युभयंकुतः॥भगवत्तेजसोऽन्यत्रचक्राच्चैवसुदर्शनात् ॥३३॥यस्मिन्प्रविष्टेदै
तेयवधूनांगर्भराशयः॥प्रायोभयात्पतंत्येवस्रवंतिब्रह्मपुत्रक॥३४॥इतिश्रीदेवीभागवतेमहापुराणेऽष्टमस्कन्धेऽष्टादशोऽध्यायः ॥१८॥श्रीनाराय
णउवाच॥ प्रथमेविवरेविप्रअतलाख्येमनोरमे॥मयपुत्रोबलोनामवर्ततेऽखर्वगर्वकृत्॥१॥षण्णवत्योयेनसृष्टामायाःसर्वार्थसाधिकाः॥मायाविनो
याश्चसद्योधारयंतिचकाश्चन॥२॥जृंभमाणस्ययस्यैवबलस्यबलशालिनः॥स्त्रीगणाउपपद्यंतेत्रयोलोकविमोहनाः॥३॥ पुंश्चल्यश्चैवस्वैरिण्यःका
मिन्यश्चेतिविश्रुताः॥यावैबिलायनंप्रेष्ठंप्रविष्टंपुरुषंरहः॥४॥रसेनहाटकाख्येनसाधयित्वाप्रयत्नतः ॥स्वविलासावलोकानुरागस्मितविगूहनैः ॥
॥५॥संलापविभ्रमाद्यैश्चरमयंत्यपिताःस्त्रियः॥यस्मिन्नुपयुक्तेजनोमनुतेबहुधास्वयम् ॥६॥ ईश्वरोऽहमहंसिद्धोनागायुतबलोमहान्॥ आत्मानंम
न्यमानःसन्मदांधइवकथ्यते ॥ ७ ॥ एवंप्रोक्तास्थितिश्चाऽत्रअतलस्यचनारद ॥ द्वितीयविवरस्याऽत्रवितलस्यनिबोधत ॥ ८ ॥

ष्ठास्फुटाभवेत् ॥१॥ अखर्वोमहान्योगर्वस्तंकरोतिसतथा ॥ १ ॥ षण्णवतिमायामध्येकाश्चनधारयंतिनसर्वाः ॥ दुःसंपाद्यत्वात् ॥२॥ उपपद्यंतउत्पन्नाः॥३॥सवर्णेरताः स्वैरिण्यः ॥
कामिन्यस्त्वसवर्णे ॥ तत्राप्यतिचंचलाः पुंश्चल्यः॥ विलायनंविलायतनम् ॥ ४ ॥ साधयित्वासंभोगसमर्थंकृत्वास्वस्मिन्नसाधारणाविलासास्तत्पूर्वकोवलोकस्तेनाऽनुरागयुक्तंस्मितंतेन
विगूहनमुपगूहनमालिंगनंतदादिभिः ॥५॥ यस्मिन्रसेउपयुक्तेसेवितेइत्यर्थः ॥ ६ ॥ ७ ॥ ८ ॥

॥ ९ ॥ १० ॥ मरुतासमीरणेनसमिद्धोदीप्तः ॥ ११ ॥ तन्निष्ठ्यूतमिति । तेनवह्निनानिष्ठ्यूतंथूत्कृत्यत्यक्तम् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥
अस्माननुजग्राहेतिनारायणोक्तिः ॥ २१ ॥ सर्वक्लेशादिहेतुमित्यैश्वर्यविशेषणम् ॥ आत्मानुस्मृतेर्मोषणमपहारकम् ॥ २२ ॥ २३ ॥ गिरिदर्यामिवमुच्यस्थितस्तद्वारेईश्वरस्तदुःखभ
क्तिप्रेम्णालेशतोप्यगणय्यबलिर्वक्ष्यमाणमब्रवीदित्यर्थः ॥२४ ॥ प्रसन्नंविष्णुलोकसंपदंलोकस्वामित्वमयाचत ॥२५ ॥ लोकसंपदिआसक्तइतिशेषः ॥ इदमिन्द्रेणाऽत्यंतमनुचितंकृतमि

भूतलाधस्तलेचैववितलेभगवान्भवः ॥ हाटकेश्वरनामाऽयंस्वपार्षदगणैर्वृतः ॥ ९ ॥प्रजापतिकृतस्यापिसर्गस्यबृंहणायच ॥ भवान्यामिथु
नीभूयआस्तेदेवाधिपूजितः ॥ १० ॥ भवयोर्वीर्यसंभूताहाटकीसरिदुत्तमा ॥ समिद्धोमरुतावह्निरोजसापिबतीवहि ॥ ११ ॥ तन्निष्ठ्युतंहाट
काख्यंसुवर्णंदैत्यवल्लभम् ॥ दैत्यांगनाभूषणार्हंसदासंधारयंतिहि ॥१२ ॥ तद्बिलाधस्तलात्प्रोक्तंसुतलाख्यंबिलेश्वरम् ॥ पुण्यश्लोकोबलिर्ना
माआस्तेवैरोचनिर्मुने ॥ १३ ॥ महेंद्रस्यचदेवस्यचिकीर्षुःप्रियमुत्तमम् ॥ त्रिविक्रमोऽपिभगवान्सुतलेबलिमानयत् ॥ १४ ॥ त्रैलोक्यलक्ष्मी
माक्षिप्यस्थापितःकिलदैत्यराट् ॥ इंद्रादिष्वप्यलब्धायासाश्रीस्तमनुवर्तते ॥ १५ ॥ तमेवदेवदेवेशमाराधयतिभक्तितः ॥ व्यपेतसाध्वसोऽ
द्यापिवर्ततेसुतलाधिपः ॥ १६ ॥ भूमिदानफलंह्येतत्पात्रभूतेऽखिलेश्वरे ॥ वर्णयंतिमहात्मानोनैतद्युक्तंचनारद ॥ १७ ॥ वासुदेवेभगवतिपुरु
षार्थप्रदेहरौ ॥ एतद्दानफलंविप्रसर्वथानहियुज्यते ॥ १८ ॥ यस्यैवदेवदेवस्यनामाऽपिविवशोगृणन् ॥ स्वकीयकर्मबंधीयगुणान्विधुनुतेंजसा
॥ १९ ॥ यत्क्लेशबंधहानायसांख्ययोगादिसाधनम् ॥ कुर्वतेयतयोनित्यंभगवत्यखिलेश्वरे ॥ २० ॥ नचाऽयंभगवानस्माननुजग्राहनारद ॥
मायामयंचभोगानामैश्वर्यंव्यतनोत्परम् ॥२१॥ सर्वक्लेशाधिहेतुंतदात्मानुस्मृतिमोषणम् ॥ यंसाक्षाद्भगवान्विष्णुःसर्वोपायविदीश्वरः ॥२२॥
याच्ञाछलेनाऽपहृतंसर्वस्वंदेहशेषकम् ॥ अप्राप्तान्योपायईशःपाशैर्वारुणसंभवैः ॥ २३ ॥ बंधयित्वाऽवमुच्यापिगिरिदर्यामिवाऽब्रवीत् ॥
असाविंद्रोमहामूढोयस्यमंत्रीबृहस्पतिः ॥ २४ ॥ प्रसन्नमिममत्यर्थमयाचल्लोकसंपदम् ॥ त्रैलोक्यमिदमैश्वर्यंकियदेवातितुच्छकम् ॥ २५ ॥
आशिषांप्रभवंमुक्त्वायोमूढोलोकसंपदि ॥ अस्मत्पितामहःश्रीमान्प्रह्लादोभगवत्प्रियः ॥ २६ ॥ दास्यंवव्रेविभोस्तस्यसर्वलोकोपकारकः
॥ पित्र्यमैश्वर्यमतुलंदीयमानंचविष्णुना ॥ २७ ॥ पितर्युपरतेवीरेनैवैच्छद्भगवत्प्रियः ॥ तस्याऽतुलानुभावस्यसर्वलोकोपधीमतः ॥ २८ ॥
अस्मद्विधोनाल्पपक्वेतरदोषोवगच्छति ॥ एवंदैत्यपतिःसोऽयंबलिःपरमपूजितः ॥ २९ ॥ सुतलेवर्ततेयस्यद्वारपालोहरिःस्वयम् ॥ एकदादि
ग्विजयेराजारावणोलोकरावणः ॥ ३० ॥ प्रविशन्सुतलेयेनभक्तानुग्रहकारिणा ॥ पादांगुष्ठेनप्रक्षिप्तोयोजनायुतमत्रहि ॥ ३१ ॥

तिभावः ॥२६ ॥प्रह्लादंवर्णयति । अस्मदिति ॥ २७ ॥ सर्वलोकोपधीमतःसर्वलोकोपाधियुक्तस्यविष्णोरतुलप्रभावस्यांतमितिशेषः ॥ २८ ॥ पक्वेभ्यःपरिपक्वेभ्यइतरेअपरिपक्वा
येऽनल्पाबहवोदोषास्तेयस्यसंतिसोस्मद्विधोमत्सदृशोदुष्टःकोऽवगच्छाति नकोपीत्यर्थः ॥ २९ ॥ ३० ॥ ३१ ॥

॥ ३२ ॥ इतिश्रीदेवीभागवततिलकेऽष्टमस्कंधेएकोनविंशोऽध्यायः ॥ १९ ॥ सप्तत्रिंशन्महापद्यैरर्धश्लोकेनचाधिकैः ॥ तलातलस्थितिःसम्यग्विचारेणोपपाद्यते ॥ १ ॥ त्रिपुराधिपति स्त्रिपुरस्वामी ॥ १ ॥ त्रिलोक्याःशंकरेणकल्याणकरेणशिवेनदग्धंपुरत्रयंयस्यसदग्धपूस्त्रयोमयासुरोमहादेवभक्तोऽयंपालितोरक्षितोदेवदेवस्यशिवस्यप्रसादेनतत्रास्तेइत्यर्थः ॥ २ ॥ ३ ॥ ४ ॥ अनेकशिरसांमध्येप्रधानान् ॥ ५ ॥ पतत्रिराजोगरुडः ॥ ६ ॥ ७ ॥ ८ ॥ प्रत्यनीकाः शत्रवोहविर्भुजांदेवानाम् ॥ ९ ॥ १०॥ शरमयाशक्रदूत्येति ॥ इंद्रदूत्याप्रयुक्ता

एवंभूतानुभावोयंबलिःसर्वसुखैकभुक् ॥ आस्तेसुतलराजस्थोदेवदेवप्रसादतः ॥ ३२ ॥ इतिश्रीदेवीभागवतेमहापुराणेऽष्टमस्कंधेएकोनविंशोऽध्यायः ॥ १९ ॥ श्रीनारायणउवाच ॥ ततोधस्ताद्विवरकंतलातलमुदीरितम् ॥ दानवेंद्रोमयोनामत्रिपुराधिपतिर्महान् ॥ १ ॥ त्रिलोक्याः शंकरेणाऽयंपालितोदग्धपूस्त्रयः ॥ देवदेवप्रसादात्तुलब्धराज्यसुखास्पदः ॥ २ ॥ आचार्योमायिनांसोऽयंनानामायाविशारदः ॥ पूज्यतेराक्षसैर्घोरैःसर्वकार्यसमृद्धये ॥३ ॥ ततोधस्तात्सुविख्यातंमहातलमितिस्फुटम् ॥ सर्पाणांकाद्रवेयाणांगणःक्रोधवशोमहान् ॥ ४ ॥अनेकशिरसां विप्रप्रधानान्कीर्तयामिते ॥ कुहकस्तक्षकश्चैवसुषेणःकालियस्तथा ॥ ५ ॥ महाभोगामहासत्त्वाःक्रूराःक्रूरस्वजातयः ॥ पतत्रिराजाधिपतेरुद्विग्नाःसर्वएवते ॥ ६ ॥ स्वकलत्रापत्यसुहृत्कुटुंबस्यचसंगताः ॥ प्रमत्ताविहरंत्येवनानाक्रीडाविशारदाः ॥ ७ ॥ ततोधस्ताच्चविवरेरसातलसमाह्वये ॥ दैतेयानिवसंत्येवपणयोदानवाश्चये ॥ ८ ॥ निवातकवचानामहिरण्यपुरवासिनः ॥ कालेयाइतिचप्रोक्ताःप्रत्यनीकाहविर्भुजाम् ॥ ९ ॥ महौजसश्चोत्पत्त्यैवमहासाहसिनस्तथा ॥ सकलेशस्यचहरेस्तेजसाहतविक्रमाः ॥ १० ॥ बिलेशयाइवसदाविवरेनिवसंतिहि ॥ येवै वाग्भिःसरमयाशक्रदूत्यानिरंतरम् ॥ ११ ॥ मंत्रवर्णाभिरसुरास्ताडिताबिभ्यतिस्मह ॥ ततोप्यधस्तात्पातालेनागलोकाधिपालकाः ॥१२॥ वासुकिप्रमुखाःशंखःकुलिकःश्वेतएवच ॥ धनंजयोमहाशंखोधृतराष्ट्रस्तथैवच ॥ १३ ॥ शंखचूडःकंबलाश्वतरोदेवोपदत्तकः ॥ महामर्षामहाभोगानिवसंतिविषोल्बणाः ॥ १४ ॥ पंचमस्तकवंतश्चफणासप्तकभूषिताः ॥ केचिद्दशफणाःकेचिच्छतशीर्षास्तथापरे ॥ १५ ॥ सहस्रशिरसःकेपिरोचिष्णुमणिधारकाः ॥ पातालरंध्रतिमिरनिकरंस्वमरीचिभिः ॥ १६ ॥ विधमंतिचदेवर्षेसदासंजातमन्यवः ॥ अस्यमूलप्रदेशेहित्रिंशत्साहस्रकेंतरे ॥१७॥ योजनैःपरिसंख्यातेतामसीभगवत्कला ॥ अनंताख्यासमास्तेहिसर्वदेवप्रपूजिता ॥ १८ ॥ अहमित्यभिमानस्यलक्षणंयंप्रचक्षते ॥ संकर्षणंसात्वतीयाःकर्षणंद्रष्टृदृश्ययोः ॥ १९ ॥ इदंभूमंडलंयस्यसहस्रशिरसःप्रभोः ॥ अनंतमूर्तेःशेषस्यध्रियमाणंचशीर्षके ॥२०॥

भिर्मंत्ररूपाभिर्वाग्भिः ॥ एवंहिवैदिकमाख्यानं पणिभिरसुरैर्निगूढांगामन्वेष्टुंसरमांदेवशुनीमिंद्रेणप्रहितांसंधिमिच्छंतःपणयःप्राहुः ॥ किमिच्छंतीसरमेत्यादि ॥ साचसंधिमनिच्छतींद्रस्तुतिपूर्वकंतान्प्रतिपरुषमाह ॥ हताइंद्रेणपणयःशयध्वमित्यादि ॥ तेचतच्छ्रुत्वाबिभ्यतीति ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥१५ ॥ १६ ॥ १७ ॥ १८ ॥ संकर्षणनाम्नोनिरुक्तिमाह । अहमित्यभिमानस्येति ॥ द्रष्टृदृश्ययोःसम्यक्कर्षणमेकीकरणंयेनतत्कृतोऽहमित्यभिमानोलक्षणंचिह्नमधिष्ठातुर्यस्याऽहंकाराधिष्ठानेनचदृग्दृश्यसंकर्षणात्संकर्षणइत्यर्थः ॥ १९ ॥ २० ॥

सिद्धार्थःसर्षपः ॥ २१ ॥ व्यूहैकादशशोभितः ॥ एकादशरुद्रमूर्तिरूपेण ॥ २२ ॥ २३ ॥ नखमंडलेइतिजात्येकवचनमंडलेष्वित्यर्थः ॥ विराजन्मणिमंडलेष्वित्यनुरोधात् ॥ २४ ॥
॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ मतंगमोहस्तीयथाकांचनींस्वर्णमयींवरत्रांकक्षांयद्वद्बिभर्तितथैवायंकांचनींकक्षांबिभर्ती
त्यर्थः ॥ उमासंहितायां ध्रुवमंडलमारभ्यशेषलोकांतमीश्वरि ॥ नानालोकाःसमाख्यातास्तत्रतल्लोकवासिनः ॥ नानारत्नमयींमूर्तिंनानाधातुमयींतथा ॥ स्थापयित्वापूजयंति नानास्व
च्छोपकारकैः ॥ कैलासेचैववैकुण्ठेब्रह्मलोकेतथैवच ॥ नवरत्नमयींमूर्तिंभगवत्यानिरंतरम् ॥ शिवद्रुहिणवैकुंठाःपूजयंतिविधानतः॥ नानावर्षेषुवर्षाधिपतयश्चतथैवच ॥ नकश्चित्त्रिषुलो

पृथ्वीगोलमशेषंहिसिद्धार्थइवलक्ष्यते॥यस्यकालेनदेवस्यसंजिहीर्षोःसमंविभोः ॥२१॥चराचरंभ्रुवोरंतर्विवरादुदपद्यत॥सांकर्षणोनामरुद्रोव्यू
हैकादशशोभितः॥२२॥त्रिलोचनश्चत्रिशिखंशूलमुत्तंभयन्स्वयम्॥उदतिष्ठन्महासत्त्वोमहाभूतक्षयंकरः॥२३॥यस्यांघ्रिकमलद्वंद्वशोणाच्छनख
मंडले॥विराजन्मणिबिंबेषुमहाहिपतयोनिशम्॥२४॥एकांतभक्तियोगेनसहसात्त्वतपुंगवैः॥प्रणमंतःस्वमूर्ध्नातेस्वमुखानिसमीक्षते॥२५॥स्फुर
त्कुंडलमाणिक्यप्रभामंडलभांज्यपि॥सुकपोलानिचारूणिगंडस्थलद्युमंतिच ॥२६॥ नागराजकुमार्योपिचार्वंगविलसत्त्विषः॥विशदैर्विपुलैस्त
द्वद्धवलैःसुभगैस्तथा॥२७॥ रुचिरैर्भुजदंडैश्चशोभमानाइतस्ततः॥चंदनागुरुकाश्मीरपंकलेपेनभूषिताः॥२८॥तदभिमर्षसंजातकामवेशसमायु
ताः॥ललितस्मितसंयुक्ताःसव्रीडंलोकयंतिच ॥२९॥ अनुरागमदोन्मत्तविघूर्णारुणलोचनम् ॥ करुणावलोकनेत्रंचआशासानास्तथाशिषः ॥
॥३०॥ सोऽनंतो भगवान्देवोनंतसत्त्वोमहाशयः॥ अनंतगुणवार्धिश्चआदिदेवोमहाद्युतिः ॥३१॥ संहृतामर्षरोषादिवेगोलोकशुभायच॥आस्ते
महासत्त्वनिधिःसर्वदेवप्रपूजितः ॥३२॥ ध्यायमानःसुरैःसिद्धैरसुरैश्चोरगैस्तथा ॥ विद्याधरैश्चगंधर्वैर्मुनिसंघैश्चनित्यशः ॥ ३३॥ अनारतमदो
न्मत्तलोकविह्वललोचनः ॥वाक्यामृतेनविबुधान्स्वपार्षदगणानपि ॥३४॥ आप्यायमानःसविभुर्वैजयंतींस्रजंदधत् ॥ अम्लानाभिनवैःस्वच्छै
स्तुलसीदलसंचयैः ॥३५॥माद्यन्मधुकरव्रातघोषश्रीसंयुतांसदा॥नीलवासादेवदेवएककुंडलभूषितः ॥३६॥ हलस्यककुदिन्यस्तसुपीवरभुजो
व्ययाम् ॥महेंद्रःकांचनींयद्वद्वरत्रांचमतंगमः ॥३७॥ उदारलीलोदेवेशोवर्णितःसात्त्वतर्षभैः ॥ इ०दे०भा०म०ऽष्टमस्कंधेविंशोऽध्यायः ॥२०॥
नारायणउवाच॥ तस्यानुभावंभगवान्ब्रह्मपुत्रःसनातनः॥ सभायांब्रह्मदेवस्यगायमानउपासते ॥ १ ॥ उत्पत्तिस्थितिलयहेतवोस्यकल्पाःस
त्त्वाद्याःप्रकृतिगुणायदीक्षयासन् ॥ यद्रूपंध्रुवमकृतंयदेकनात्मन्नानाधात्कथमुहवेदतस्यवर्त्म ॥ २ ॥

केषुलोकएवंविधःकश्चित् ॥ यत्रदेव्याःपदार्चानतथातस्याःस्मृतिःपरेति ॥ ३७ ॥ इतिश्रीदेवीभागवततिलकेऽष्टमस्कन्धेविंशोऽध्यायः ॥ २० ॥ अष्टाविंशतिभिःश्लोकैःशेषस्तुतिपुरः
सरम् ॥ नरकाणांस्वरूपंचयथावदभिवर्ण्यते ॥ १ ॥ तस्येति ॥ तस्यअनंतस्य ॥ १ ॥ उत्पत्तीति ॥ अस्यजगतउत्पत्त्यादिहेतवोगुणायस्य ॥ यस्येक्षयाकल्पाःसमर्थाःस्वस्वकार्ये
आसन् ॥ यस्तुरूपंध्रुवमनंतमकृतमनादि ॥ तत्रहेतुःयदेकमेवसत् आत्मन्नात्मनिनानाकार्यप्रपञ्चमधात् तस्यब्रह्मस्वरूपस्यवर्त्मतत्त्वंजवःकथमुहवेदनवेदैवेत्यर्थः ॥ २ ॥

तर्हिकथमसौमुमुक्षुभिःसेव्यतेतत्राह । मूर्तिमिति । यत्रेदंसदसद्विभातिसनोऽस्माकंभक्तानांपुरुकृपयाबहुकृपयासंशुद्धंसत्त्वंमूर्तिंबभार ॥ स्वजनानांमनांस्यादातुंवशीकर्तुंयस्यलीलांमृग पतिःसिंहःआददेअशिक्षयत् ॥ यतउदाराणिवीर्याणियस्य ॥ तस्मादन्यंमुमुक्षुःकमाश्रयेदित्युत्तरेणान्वयः ॥ ३ ॥ प्रलंभनाद्वापरिहासात् ॥ ४ ॥ सत्त्वानिप्राणिनः॥सहस्रजिह्वोऽपि कोगणयेत् ॥५॥६॥ एतावत्यएवेहकामान्कामयमानैर्नृभिरुपगंतव्यागतयइत्यन्वयः ॥ ७ ॥ यथोपदेशंयथाशास्त्रंकामान्कामयमानकैःकामयमानैरित्यर्थः ॥८॥९॥ कर्मणांसर्वप्राणि कर्मणांसमानत्वेवैषम्यनैर्घृण्यरहितेनमायाशवलब्रह्मणाकथमेतस्यवैचित्र्यंकृतमितियथातथंतन्नोब्रूहीत्यन्वयः॥१०॥कर्मणांसमानत्वमेवनास्तिकर्मकर्तॄणांत्रिगुणमायाशक्तिसंबद्धत्वात् ॥

मूर्तिंनःपुरुकृपयाबभारसत्त्वंसंशुद्धंसदसदिदंविभातियत्र॥यल्लीलांमृगपतिराददेनवद्यामादातुंस्वजनमनांस्युदारवीर्यः॥३॥यन्नामश्रुतमनुकीर्तं येदकस्मादार्तोवायदिपतितःप्रलंभनाद्वा॥हंत्यंहःसपदिनृणामशेषमन्यंकंशेषाद्भगवतआश्रयेन्मुमुक्षुः॥४॥ मूर्धन्यर्पितमणुवत्सहस्रमूर्ध्नोभूगोलं सगिरिसरित्समुद्रसत्त्वम्।आनंत्यादनमितविक्रमस्यभूम्नःकोवीर्याण्यधिगणयेत्सहस्रजिह्वः५॥ एवंप्रभावोभगवाननंतोदुरंतवीर्योरुगुणानुभावः॥ मूलेरसायाःस्थितआत्मतंत्रोयोलीलयाक्ष्मांस्थितयेबिभर्ति ॥६॥ एताह्येवेहतुनृभिर्गतयोमुनिसत्तम ॥गन्तव्याबहुशोयद्वद्यथाकर्मविनिर्मिताः ॥७॥यथोपदेशंचकामान्सदाकामयमानकैः॥एतावतीर्हिराजेंद्रमनुष्यमृगपक्षिषु॥८॥विपाकगतयःप्रोक्ताधर्मस्यवशगास्तथा॥उच्चावचाविसदृ शायथाप्रश्नंनिबोधत॥९॥नारदउवाच॥वैचित्र्यमेतल्लोकस्यकथंभगवताकृतम्॥समानत्वेकर्मणांचतन्नोब्रूहियथातथम्॥१०॥नारायणउवाच ॥ कर्तुःश्रद्धावशादेवगतयोऽपिपृथग्विधाः॥त्रिगुणत्वात्सदातासांफलंविसदृशंत्विह ॥११॥ सात्त्विक्याश्रद्धयाकर्तुःसुखित्वंजायतेसदा॥ दुःखि त्वंचतथाकर्तूराजस्याश्रद्धयाभवेत्॥१२॥दुःखित्वंचैवमूढत्वंतामस्याश्रद्धयोदितम्॥तारतम्यात्तुश्रद्धानांफलवैचित्र्यमीरितम्॥१३॥अनाद्यवि द्याविहितकर्मणांपरिणामजाः॥सहस्रशःप्रवृत्तास्तुगतयोद्विजपुंगव॥१४॥तद्भेदान्वर्णयिष्यामिप्राचुर्येणद्विजोत्तम ॥ त्रिजगत्याअंतरालेदक्षिण स्यांदिशीहवै॥१५॥भूमेरधस्तादुपरित्वतलस्यचनारद॥अग्निष्वात्ताःपितृगणावर्ततेपितरश्चह ॥१६॥ वसंतियस्यांस्वीयानांगोत्राणांपरमाशि षः॥सत्याःसमाधिनाशीघ्रंत्वाशासानाःपरेणवै॥१७॥पितृराजोऽपिभगवान्संपरेतेषुजंतुषु॥विषयंप्रापितेष्वेषुस्वकीयैःपुरुषैरिह॥१८॥ सगणो भगवत्प्रोक्ताज्ञापरोदमधारकः॥यथाकर्मयथादोषंविदधातिविचारदृक्॥१९॥स्वान्गणान्धर्मतत्त्वज्ञान्सर्वानाज्ञाप्रवर्तकान् ॥सदाप्रेरयतिप्राज्ञो यथादेशनियोजितान्॥२०॥नरकानेकविंशत्यासंख्ययावर्णयंतिहि॥अष्टाविंशमितान्केचित्ताननुक्रमतोब्रुवे॥ २१ ॥

तयामायाशक्त्यापूर्वपूर्वकर्मवशाद्यथायथासात्त्विकादिकर्मसुप्रेर्यंतेतथातथाकरोति ॥ तदनुरूपफलोपभोगायचलोकभोगफलवैचित्र्यंकृतमित्याह । कर्तुःश्रद्धावशादेवेति ॥ तासांश्रद्धा नांत्रिगुणत्वात्सात्त्विकादिभेदेनगुणत्रयात्मकत्वाद्विसदृशमसमानंफलमित्यर्थः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ तस्मान्मायाशक्तिशबलब्रह्मरूपभगवत्याएवाराधनंकर्तव्यमितिगूढोभि संधिः ॥ १५ ॥ १६ ॥ १७ ॥ विषयंयमलोकरूपंदेशम् ॥ १८ ॥ दमधारकोदंडधारकोविदधातिदंडमितिशेषः ॥ १९ ॥ २० ॥ २१ ॥

॥ २२ ॥ ॥ २३ ॥ वज्रकंटकशाल्मलीत्येकोनरकः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ इति श्रीदेवीभागवततिलकेऽष्टमस्कन्धेएकविंशोऽध्यायः ॥ २१ ॥ द्विपञ्चाशतपद्यवर्यैर्यात
नाकारकाणिच ॥ पातकानिसमासेनप्रोच्यंतेसंग्रहेणतु ॥ १ ॥ कर्मभेदायातनाप्तिभूमयोयातनाकारकाः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ यः पतिमिति ॥ यांस्त्रियंगच्छतितस्याःपतिंवंच

तामिस्रअंधतामिस्रोरौरवोऽपितृतीयकः ॥ महारौरनामाचकुंभीपाकोऽपरोमतः ॥ २२ ॥ कालसूत्रंतथाचाऽसिपत्रारण्यमुदाहृतम् ॥ सूकरस्य
मुखंचांधकूपोऽथकृमिभोजनः ॥ २३ ॥ संदंशस्तप्तमूर्तिश्चवज्रकंटकएवच ॥ शाल्मलीचाऽथदेवर्षेनाम्नावैतरणीतथा ॥२४॥ पूयोदःप्राणरोधश्च
तथाविशसनंमतम् ॥ लालाभक्षःसारमेयादनमुक्तमतःपरम् ॥ २५ ॥अवीचिरप्ययःपानंक्षारकर्दमएवच॥ रक्षोगणाख्यसंभोजःशूलप्रोतोप्यतः
परम् ॥ २६ ॥ दंदशूकोवटारोधःपर्यावर्तनकःपरम् ॥ सूचीमुखमितिप्रोक्ताअष्टाविंशतिनारकाः॥२७॥इत्येतेनारकानामयातनाभूमयःपराः॥
कर्मभिश्चापिभूतानांगम्याःपद्मजसंभव ॥ २८ ॥ इति श्रीदेवीभागवतेमहापुराणेअष्टमस्कंधेएकविंशोऽध्यायः ॥ २१ ॥ नारदउवाच ॥ कर्म
भेदाःकतिविधाःसनातनमुनेमम ॥ श्रोतव्यःसर्वथैवैतेयातनाप्राप्तिभूमयः ॥ १ ॥ श्रीनारायणउवाच ॥ योवैपरस्यवित्तानिदारापत्यानिचैव
हि ॥ हरतेसहिदुष्टात्मायमानुचरगोचरः ॥ २ ॥ कालपाशेनसंबद्धोयाम्यैरतिभयानकैः ॥ तामिस्रनामनरकेपात्यतेयातनास्पदे ॥ ३ ॥ ताड
नंदंडनंचैवसंतर्जनमतः परम् ॥ याम्याःकुर्वंतिपाशाढ्याःकश्मलंयातिचैवहि ॥ ४ ॥ मूर्च्छांमायातिविवशोनारकीपद्मभूसुत ॥ यःपतिंवंच
यित्वातुदारादीनुपभुज्यति ॥ ५ ॥ अंधतामिस्रनरकेपात्यतेयमकिंकरैः ॥ पात्यमानोयत्रजंतुर्वेदनापरवान्भवेत् ॥ ६ ॥ नष्टदृष्टिर्नष्टमतिर्भ
वत्येवाऽविलंबतः ॥ वनस्पतिर्भज्यमानमूलोयद्वद्भवेदिह ॥ ७ ॥ तस्मादप्यंधतामिस्रनाम्नाप्रोक्तःपुरातनैः ॥ एतन्ममाहमितियोभूतद्रोहेणके
वलम् ॥ ८ ॥ पुष्णातिप्रत्यहंस्वीयकुटुंबंकार्यलंपटः ॥ एतद्विहायचाऽत्रैवस्वाशुभेनपतेदिह ॥ ९ ॥ रौरवेनामनरकेसर्वसत्त्वभयावहे ॥ इह
लोकेऽमुनायेतुहिंसिताजंतवःपुरा ॥ १० ॥ तएवरुरवोभूत्वापरत्रपीडयंतितम् ॥ तस्माद्रौरवमित्याहुःपुराणज्ञामनीषिणः ॥ ॥ ११ ॥ रुरुःस
र्पादतिक्रूरोजंतुरुक्तःपुरातनैः ॥ एवंमहारौरवाख्योनरकोयत्रपूरुषः ॥ १२ ॥ यातनांप्राप्यमाणोहियःपरंदेहसंभवः ॥ क्रव्यादानामरुरव
स्तंक्रव्येघातयंतिच ॥ १३ ॥ यउग्रःपुरुषःक्रूरःपशुपक्षिगणानपि ॥ उपरंधयतेमूढोयाम्यास्तंरंधयंतिच ॥ १४ ॥ कुंभीपाकेतप्ततैलेउपर्यपिच
नारद ॥ यावंतिपशुरोमाणितावद्वर्षसहस्रकम् ॥ १५ ॥ पितृविप्रब्राह्मणध्रुक्कालसूत्रेसनारके॥अग्न्यर्काभ्यांतप्यमानेनारकीविनिवेशितः॥१६॥
क्षुत्पिपासादह्यमानोंतःशरीरस्तथाबहिः ॥ आस्तेशेतेचेष्टतेचाऽवतिष्ठतिचधावति ॥ १७ ॥

यित्वेत्यर्थः ॥ उपभुञ्ज्यतिसेवतेइत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ एतन्ममाहमितिएतदहमितिममाहमितिभूतद्रोहेणेत्यर्थः ॥ ८ ॥ यत्कुटुंबार्थमेवंकरोतितदेतदत्रैवविहायस्वाशुभेनकर्मणा
इहरौरवेपतेदित्यर्थः ॥ ९ ॥ १० ११ ॥ १२ ॥ क्रव्येमांसेघातयंति ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

पाखंडमिति ॥ तदुक्तंपुराणांतरे ॥ यानिरूपाणिजगृहेइंद्रोहयजिहीर्षया ॥ तानिपापस्यखंडानिलिंगंखंडमिहोच्यतेइति ॥ १८ ॥ पाशब्देनतुवेदार्थःपाखंडास्तस्यखंडकाइति ॥ १९॥
धारभिरार्षप्रयोगोधाराभिरित्यर्थः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ विविक्तपरपीडइति ॥ ईश्वरेणोपकल्पितारक्तपानादिलक्षणावृत्तिर्येषांमत्कुणादीनाम् ॥ नविविक्ताविज्ञाता
परव्यथायैरविवेकिभिस्तेषाम् ॥ द्वितीयाषष्ठ्यर्थे ॥ ब्राह्मणादिभावेनविधिनिषेधपूर्वकमुपकल्पितावृत्तिर्यस्यविविक्ताविज्ञातापरव्यथायेनविवेकिनासयदिताद्दशानांव्यथामाचरतेसों
धकूपेपततीत्यन्वयः ॥ २५ ॥ २६ ॥ २७ ॥ अत्राऽस्मिँल्लोके ॥ २८ ॥ यस्त्विति ॥ यत्किंचिद्धनान्नादिकमुपपद्यतेप्राप्तंभवतितत्संविहितैः शास्त्रेणविहितैः ॥ पंचमहायज्ञैर्देवता

निजवेदपथाद्योवैपाखंडंचोपयातिच ॥ अनापद्यपिदेवर्षेतंपापंपुरुषंभटाः ॥ १८ ॥ असिपत्रवनंनामनरकंवेशयंतिच ॥ कशयाप्रहरंत्येवनार
कीतद्रुतस्तदा ॥ १९ ॥ इतस्ततोधावमानउत्तालमतिवेगितः ॥ असिपत्रैश्छिद्यमानउभयत्रचधारभिः ॥ २० ॥ संछिद्यमानसर्वांगोहाहतोऽ
स्मीतिमूर्च्छितः ॥ वेदनांपरमांप्राप्तःपतत्येवपदेपदे ॥ २१ ॥ स्वधर्मानुगतंभुंक्तेपाखंडफलमल्पधीः ॥ योराजाराजपुरुषोदंडयेद्वैत्वधर्मतः
॥ २२ ॥ द्विजेशरीरदंडंचपापीयान्नारकीचसः ॥ नरकेसूकरमुखेपात्यतेयमकिंकरैः ॥ विनिष्पिष्टावयवकोबलवद्भिस्तथेक्षुवत् ॥ २३ ॥ आर्त
स्वरेणस्वनयन्मूर्च्छितःकश्मलंगतः ॥ २४ ॥ सपीडचमानोबहुधावेदनांयात्यतीवहि ॥ विविक्तपरपीडोयोप्यविविक्तपरव्यथाम् ॥ २५ ॥
ईश्वरांकितवृत्तीनांव्यथामाचरतेस्वयम् ॥ सचांधकूपेपततितदभिद्रोहयंत्रिते ॥ २६ ॥ तत्राऽसौजंतुभिःक्रूरैःपशुभिर्मृगपक्षिभिः ॥ सरीसृपैश्च
मशकैर्यूकामत्कुणजातिभिः ॥ २७ ॥ मक्षिकाभिश्चतमसिदंदशूकैश्चपीडचते ॥ परिक्रामतिचैवाऽत्रकुशरीरेचजंतुवत् ॥ २८ ॥ यस्तुसंवि
हितैःपंचयज्ञैःकाकैश्चसंस्तुतः ॥ अश्नातिचाऽसंविभज्ययत्किंचिदुपपद्यते॥२९॥ सपापपुरुषःक्रूरैर्याम्यैश्चकृमिभोजने ॥ नरकाधमकेदुष्टकर्म
णापरिपात्यते ॥ ३० ॥ लक्षयोजनविस्तीर्णेकृमिकुण्डेभयंकरे ॥ कृमिरूपंसमासाद्यभक्ष्यमाणश्चतैःस्वयम् ॥ ३१ ॥ अप्रत्ताप्रहुतादोयःपात
माप्नोतितत्रवै ॥ यस्तुस्तेयेनचबलाद्धिरण्यंरत्नमेवच ॥ ३२ ॥ ब्राह्मणस्याऽपहरतिअन्यस्यापिचकस्यचित् ॥ अनापदिचदेवर्षेतममुत्रयमानु
गाः ॥ ३३ ॥ अयस्मयैरग्निपिंडैःसदंशैर्निष्कुषंतिच ॥ योऽगम्यांयोषितंगच्छेदगम्यंपुरुषंचया ॥ ३४ ॥ तावमुत्रापिकशयाताडयंतोयमानु
गाः ॥ तिग्मयालोहमय्याचसूर्म्याप्यालिंगयंतितम् ॥ ३५॥तांचापियोषितंसूर्म्यालिंगयंतियमानुगाः ॥ यस्तुसर्वाभिगमनःपुरुषःपापसंचयी
॥ ३६ ॥ निरयेऽमुत्रतंयाम्याःशाल्मलींरोपयंतितम् ॥ वज्रकंटकसंयुक्तांशाल्मलींतामयस्मयीम् ॥ ३७ ॥ राजन्याराजपुरुषायेवापाखंडवर्ति
नः ॥ धर्मसेतुविभिंदंतितेपरेत्यगतानराः ॥ ३८ ॥ वैतरण्यांपतंत्येवभिन्नमर्यादपातकाः ॥ नद्यांनिरयदुर्गस्यपरिखायांचनारद ॥ ३९ ॥

भ्योऽसंविभज्यनदत्त्वाअश्नातियःपुरुषः ॥ कथंभूतःकाकैःसंस्तुतः ॥ समत्वेनवर्णितइत्यन्वयः ॥ २९ ॥ ३० ॥ ३१ ॥ अप्रत्तमसंविभक्तमतिथिभ्योप्रहुतंचात्तीतिसः अप्रत्ताप्रहुता
दोयोभवतिसपातमाप्नोतीत्यर्थः ॥ ३२ ॥ ३३ ॥ निष्कुषंतित्वाचिंछिदंति ॥ ३४ ॥ तिग्मयासूर्म्याप्रतिमया ॥ ३५ ॥ सूर्म्यापुरुषप्रतिमयातप्तयासर्वाभिगमनःपश्चाद्युपसंगतः
॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

नात्मनोदेहेनवियुजंतिवियोगंप्राप्नुवंति ॥ ''असुभिःप्राणैरुह्यमानाऊर्ध्वोच्छ्वासवंतइत्यर्थः । इदंविष्णुभागवते'' ॥ ४० ॥ ४१ ॥ ४२ ॥ पशुचर्यास्वेच्छाचारः ॥ ४३ ॥ ४४॥४५॥
॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ सप्तशत्येति ॥ विंशत्यधिकसप्तशतसंख्याःसारमेयाइत्यन्वयः ॥ ५२ ॥ इतिश्रीदेवीभागवततिलकेऽष्टमस्कन्धेद्वाविंशोऽध्यायः ॥२२॥
एकत्रिंशन्महापद्यैःशिष्टास्तुनरकाभिधाः ॥ वर्णनंक्रियतेतेषां वैराग्यंलभ्यतेयतः ॥ १ ॥ येनराइति ॥ १ ॥ २ ॥ अनाकाशेनिरालंबेइत्यर्थः ॥ ३ ॥ वीचिस्तरंगस्तद्वद्वीचिमत्नवी

यादोगणैःसमंतात्तुभक्ष्यमाणाइतस्ततः ॥ नात्मनावियुजंत्येवनाऽसुभिश्चापिनारद ॥ ४० ॥ स्वीयेनकर्मपाकेनोपतपंतिचसर्वतः ॥ विण्मूत्रपूयरक्तैश्चकेशास्थिनखमांसकैः ॥ ४१ ॥ मेदोवसासंयुतायांनद्यामुपपतंतिते॥वृषलीपतयोयेचनष्टशौचागतत्रपाः ॥ ४२ ॥ आचारनियमैस्त्यक्ताःपशुचर्यापरायणाः ॥ तेऽत्रानुकष्टगतयोविण्मूत्रश्लेष्मरक्तकैः ॥ ४३ ॥ श्लेष्ममलसमापूर्णेनिपतंतिदुराग्रहाः ॥ तदेवखादयंत्येतान्यमानुचरवर्गकाः ॥ ४४ ॥ येश्वानगर्दभादीनांपतयोवैद्विजातयः ॥ मृगयारसिकानित्यमतीर्थेमृगघातकाः ॥ ४५ ॥ परेतांस्तान्यमभटालक्षीभूतान्नराधमान् ॥ इषुभिश्चविभिंदंतितांस्तान्दुर्नयमागतान् ॥४६ ॥ येदंभादंभयज्ञेषुपशून्घ्नंतिनराधमाः ॥ तानमुष्मिन्यमभटानरकेवैशसेतदा ॥४७॥ निपात्यपीडयंत्यंत्येवकशाघातैर्दुरासदैः॥ योभार्यांचसवर्णांवैद्विजोमदनमोहितः ॥४८॥ रेतःपाययतेमूढोऽमुत्रतंयमकिंकराः॥रेतःकुंडेपातयंतिरेतःसंपाययंतिच॥४९॥येदस्यवोऽग्निदाश्चैवगरदाःसार्थघातकाः॥ग्रामान्सार्थान्विलुंपंतिराजानोराजपूरुषाः॥५०॥ तान्परेतान्यमभटानयंतिश्वानकादनम् ॥ विंशत्यधिकसंख्याताःसारमेयामहाद्भुताः ॥५१॥ सप्तशत्यासमाख्याताःरभसंखादयंतिते ॥ सारमेयादनंनामनरकंदारुणंमुने ॥ ५२ ॥ अतःपरंप्रवक्ष्यामिअवीचिप्रमुखान्मुने ॥ इतिश्रीदेवीभागवतेमहापुराणेऽष्टमस्कन्धेद्वाविंशोऽध्यायः ॥ २२ ॥ श्रीनारायणउवाच ॥ येनराःसर्वदासाक्ष्येअनृतंभाषयंतिच ॥ दानेविनिमयेऽर्थस्यदेवर्षेपापबुद्धयः ॥ १ ॥ तेप्रेत्याऽमुत्रनरकेअवीच्याख्येऽतिदारुणे ॥ योजनानांशतोच्छ्रायाद्गिरिमूर्ध्नःपतंतिहि ॥२॥ अनाकाशेऽधःशिरसस्तदवीचीतिनामके॥यत्रस्थलंदृश्यतेचजलवद्वीचिसंयुतम् ॥३॥ अवीचिमत्ततस्तत्रतिलशश्छिन्नविग्रहः ॥ म्रियतेनैवदेवर्षेपुनरेवावरोप्यते ॥४॥ योवाद्विजोवाराजन्योवैश्योवाब्रह्मसंभव ॥ सोमपीथस्तत्कलत्रंसुरांवापिबतीवहि ॥ ५ ॥ प्रमादतस्तुतेषांवैनिरयेपरिपातनम् ॥ कुर्वंतियमदूतास्तेपानंकार्ष्णायसोमुने ॥ ६ ॥ वह्निनाद्रवमाणस्यनितरांब्रह्मसंभव ॥ संभावनेनस्वस्यैवयोऽधमोपिनराधमः ॥७॥ विद्याजन्मतपोवर्णाश्रमाचारवतोनरान् ॥ वरीयसोपिनबहुमन्यतेपुरुषाधमः॥८॥ सनीयतेयमभटैःक्षारकर्दमनामके ॥ निरयेऽर्वाक्शिराघोरादुरंतयातनाश्नुते ॥ ९ ॥

चिमदवीचिमत् ॥ ततोहेतोस्तत्स्थलमवीचिमद्वीचिसंज्ञकमित्यर्थः ॥ ४ ॥ अन्योपिवाव्रतस्थःसन्राजन्योवावैश्योवा ॥ सोमपीथःकृतसोमपानइत्यर्थः ॥५॥६॥ वह्निनाद्रवमाणस्य
कार्ष्णायसोलोहस्यपानंकारयंतीतिशेषः ॥ संभावनेनात्मसंभावनयेत्यर्थः ॥ ७ ॥ ८ ॥ यातनाश्नुतेअत्रविभक्तिलोपआर्षः ॥ ९ ॥

यजंतिअन्यंदेवम् ॥ भैरवादीन्नरमेधेननरपशुना ॥ १० ॥ ११ ॥ १२ ॥ वैश्रंभकैर्विश्वासोपायैः विश्रंभय्यविश्वासंकारयित्वा ॥ १३ ॥ क्रीडनोत्कारकान्क्रीडासाधनानीविविध्मा नान्घातयंतिविश्वासघातिनइत्यर्थः ॥ १४ ॥१५ ॥ आत्मशमलमात्मनाकृतंपापम् ॥ उद्वेजयंतिकठोरभाषणादिभिर्भयंददाति ॥ उल्वणवृत्तयःक्रूरस्वभावाः ॥ १६ ॥ यथासर्पादि काःक्रूराउद्वेजयंतितथा ॥ १७ ॥ पंचाननाःसप्तमुखाः सर्पाःबिलेशयामूषकान्यथाग्रसंतितथा ॥ १८ ॥ अवटेषुअंधकूपेषु ॥ कुसूलादिषुनिष्प्रकाशगृहादिषुगुहादिषुचांधकारयुक्तासु

येवैनरायजंत्यन्यंनरमेधेनमोहिताः ॥ स्त्रियोपिवानरपशुंखादंत्यत्रमहामुने ॥ १० ॥ पशवोनिहितास्तेतुयमसद्मनिसंगताः ॥ सौनिकाइवतेसर्वे विदार्यसितधारया ॥ ११ ॥ असृक्पिबंतिनृत्यंतिगायंतिबहुधामुने ॥ यथेहमांसभोक्तारःपुरुषादादुरासदाः ॥ १२ ॥ अनागसोपियेऽरण्येग्रामेवाब्रह्मपु त्रक ॥ वैश्रंभकैरुपसृतान्विश्रंभय्यजिजीविषून् ॥ १३ ॥ शूलसूत्रादिषुप्रोतान्क्रीडनोत्कारकानिव ॥ पातयंतिचतेप्रेत्यशूलपातेपतंति ह ॥ १४ ॥ शूला दिषुप्रोतदेहाःक्षुत्तृड्भ्यांचातिपीडिताः ॥ तिग्मतुंडैःकंकबकैरितश्चेतश्चताडिताः ॥ १५ ॥ पीडिताआत्मशमलंबहुधासंस्मरंतिहि ॥ येभूता नुद्वेजयंतिनराउल्वणवृत्तयः ॥ १६ ॥ यथासर्पादिकास्तेपिनरकेनिपतंतिहि ॥ दंदशूकाभिधानेचयत्रोत्तिष्ठंतिसर्वतः ॥ १७ ॥ पंचाननःसप्त मुखाग्रसंतिनरकागतान् ॥ यथाबिलेशयाविप्रक्रूरबुद्धिसमन्विताः ॥ १८ ॥ येऽवटेषुकुसूलादिगुहादिषुनिरुंधते ॥ तानमुत्रोद्यतकराःकीनाशपरिसेव काः ॥ १९ ॥ तेष्वेवोपविशित्वाचसगरेणचवह्निना ॥ धूमेनचनिरुंधंतिपापकर्मरतान्नरान् ॥ २० ॥ योऽतिथीन्समयप्राप्तान्दिधक्षुरिवचक्षुषा ॥ पापे नेहालोकयेच्चस्वयंगृहपतिर्द्विजः ॥ २१ ॥ तस्यापिपापदृष्टेर्हिनिरयेयमकिंकराः ॥ अक्षिणीवज्रतुंडायेकंकाःकाकवटादयः ॥ २२ ॥ गृध्राःक्रूरत राश्चापिप्रसह्योत्पाटयंतिहि ॥ यआढ्याभिमतिर्यातिअहंकृत्यातिगर्वितः ॥ २३ ॥ तिर्यक्प्रेक्षणएवाऽत्राऽभिविशंकीनराधमः ॥ चिंतयाऽर्थ स्यसर्वत्रायतिव्ययस्वरूपया ॥ २४ ॥ शुष्यद्धृदयवक्त्रश्चनिर्वृतिंनैवगच्छति ॥ ग्रहवद्रक्षतेचार्थंसप्रेतोयमकिंकरैः ॥ २५ ॥ सूचीमुखेचनरके पात्यतेनिजकर्मणा ॥ वित्तग्रहंचपुरुषंवायकाइवयाम्यकाः ॥ २६ ॥ किंकराःसर्वतोंगेषुसूत्रैःपरिवयंतिहि ॥ एतेबहुविधावित्तनरकाः पापकर्मणाम् ॥ २७ ॥ नराणांशतशःसंतियातनास्थानभूमयः ॥ सहस्रशोऽपिदेवर्षेउक्तानुक्तास्तथापिहि ॥ २८ ॥ विंशतिनरकानेतान्यात नाबहुलान्मुने ॥ तथाधर्मपराश्चापिलोकान्यांतिसुखोद्धतान् ॥ २९ ॥

निरुंधंतेजीवान्रोधयंति ॥ १९ ॥ तेष्वेवस्थानेषुउपविशित्वास्थापयित्वा सगरेणसविषेण ॥ २० ॥ २१ ॥ २२ ॥ आढ्याभिमतिर्धनगर्वितः ॥ अहंकृत्यातिगर्वितः ॥ २३ ॥ तिर्यक्प्रेक्षणंयस्यअभिविशंकीगुर्वादिरपिधनंचोरयिष्यतीतिविशंकमानः ॥ अर्थस्यधनस्यायतिः प्राप्तिर्व्ययश्चतत्स्वरूपयाताद्विषयया ॥ २४ ॥ शुष्यमाणंहृदयंवक्त्रंचयस्यग्रहवद्ब्रह्मपिशा चवदर्थंरक्षतेयः ॥ २५ ॥ वित्तग्रहंवित्तरक्षकंब्रह्मराक्षसंतंपुरुषंयाम्यकायमसंबंधिनःकिंकरावायकाइवपरिवयंतिसूत्रप्रोतान्कुर्वंति ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

तत्रयद्यपिउत्तमलोकप्रापकोपिधर्मोबहुधागीतःकथितस्तथापिसर्वधर्मेषुश्रीभगवतीचरणसपर्याधर्मएवमुख्यइत्याह । स्वधर्मइति॥ यथातवबहुधागीतोऽष्टमस्कंन्धेप्रथमाध्यायेजम्बूद्वीपवर्णनादिनी धारेश्वरीमीनाक्ष्यरुणामाहात्म्यप्रसंगेनचध्यानपूजादिलक्षणःकथितःसएवदेवीपूजनरूपोदेव्याराधनलक्षणोमुख्योधर्मइत्यर्थः ॥तत्रदेवीपूजनरूपेत्यनेनस्थूलमूर्तेर्ग्रहणम् ॥ देव्याराधनलक्ष णइत्यनेनविराट्स्वरूपभगवत्यादेवीपदेनग्रहणमितिविवेकः॥ ३०॥कुतः स्वधर्मोमुख्यइतिचेत्तत्राह । येनेति ॥ नरकंनैवभजेत् ॥ किंचसादेवीति ॥ एकैकगुणोपाधिब्रह्मविष्णुरुद्रापेक्ष यासाम्यावस्थमायोपाधिकब्रह्मरूपिण्याभगवत्याःस्वतंत्रत्वात्सर्वोत्कृष्टत्वाच्चसैवदेवीभवपाथोधेर्भवसमुद्रादुद्धर्त्रीतितत्पूजनरूपोधर्मएवमुख्यइत्यर्थः॥ ब्रह्मविष्णुरुद्रास्तुतत्प्रेरिताएवफलं प्रयच्छंतिनस्वातंत्र्येण ॥ तस्मात्सैवदेवीपूज्येतिभावः ॥ तथाचश्रुतिः ॥ अहमेवस्वयमिदंवदामिजुष्टंदेवेभिरुतमानुषेभिः॥यंकामयेतंतमुग्रंकृणोमितंब्रह्माणंतमृषिंतंसुमेधामिति२१॥ इति श्रीदेवीभागवततिलकेऽष्टमस्कन्धेत्रयोविंशोध्यायः ॥ २३ ॥ एकोनसप्ततिश्लोकैर्देव्याराधनमुच्यते ॥ नानाविधोपचारैश्चभुक्तिमुक्तिप्रदायकम् ॥१॥ प्रथमतोनारदेनवेदशास्त्रप्रति

स्वधर्मोबहुधागीतोयथातवमहामुने ॥ देवीपूजनरूपोहिदेव्याराधनलक्षणः ॥ ३० ॥ येनाऽनुष्ठितमात्रेणनरोननरकंव्रजेत् ॥ सादेवीभवपाथोधेरुद्धर्त्रीपूजितानृणाम् ॥ ३१ ॥ इति श्रीदेवीभागवतेमहापुराणेऽष्टमस्कंधेत्रयोविंशोऽध्यायः ॥ २३ ॥ नारदउवाच ॥ धर्मश्चकीदृशस्तात देव्याराधनलक्षणः ॥ कथमाराधितादेवीसाददातिपरंपदम् ॥ १ ॥ आराधनविधिःकोवाकथमाराधिताकदा ॥ केनसादुर्गनरकाद्दुर्गात्त्राणप्रदाभवेत् ॥ २ ॥ श्रीनारायणउवाच ॥ देवर्षेशृणुचित्तैकाग्र्येणमेविदुषांवर ॥ यथाप्रसीदतेदेवीधर्माराधनतःस्वयम् ॥ ३ ॥ स्वधर्मोयादृशःप्रोक्तस्तंचमेशृणुनारद ॥ अनादाविहसंसारेदेवीसंपूजितास्वयम् ॥ ४ ॥ परिपालयतेघोरसंकटादिषुसामुने ॥ सादेवीपूज्यतेलोकैर्यथावत्तद्विधिंशृणु ॥ ५ ॥ प्रतिपत्तिथिमासाद्यदेवीमाज्येनपूजयेत् ॥ घृतंदद्याद्ब्राह्मणायरोगहीनोभवेत्सदा॥६॥द्वितीयायांशर्करयापूजयेज्जगदंबिकाम् ॥ शर्करांप्रददेद्विप्रेदीर्घायुर्जायतेनरः ॥ ७ ॥ तृतीयादिवसेदेव्यैदुग्धंपूजनकर्मणि ॥ क्षीरंदत्त्वाद्विजाग्र्यायसर्वदुःखातिगोभवेत् ॥ ८ ॥ चतुर्थ्यांपूजनेपूपादेयादेव्यैद्विजायच ॥ अपूपाएवदातव्यानविघ्नैरभिभूयते ॥ ९ ॥ पंचम्यांकदलीजातंफलंदेव्यैनिवेदयेत् ॥ तदेवब्राह्मणेदेयंमेधावान्पुरुषोभवेत् ॥ १० ॥ षष्ठीतिथौमधुप्रोक्तंदेवीपूजनकर्मणि ॥ ब्राह्मणायचदातव्यंमधुकांतिर्यतोभवेत् ॥ ११ ॥ सप्तम्यांगुडनैवेद्यंदेव्यैदत्त्वाद्विजायच ॥ गुडंदत्त्वाशोकहीनोजायतेद्विजसत्तम ॥ १२ ॥

पाद्यंजगतस्तत्त्वंपृष्टंतत्रनारायणेनमायाशक्तिशबलब्रह्मात्मकंश्रीभगवतीरूपमेवसर्ववेदसर्वशास्त्रसारभूतंजगतस्तत्त्वंप्रतिपाद्यतस्यध्यानोपयोगिस्वरूपंविराडात्मकंप्रतिपादितम्॥ तदनं तरंचतस्यादेव्याआराधनमेवसर्वधर्मेषुवरिष्ठोधर्मःसचभोगमोक्षदायकइत्युक्तम् ॥ तच्छ्रुत्वातदाराधनविधेर्विशेषतोजिज्ञासुर्नारदःपृच्छति ॥ धर्मश्चेति ॥ १ ॥ कथमाराधितेतिस्थान प्रश्नाभिप्रायेणोच्यते ॥ कदेतिकालप्रश्नः ॥ केनेतिस्तोत्रप्रश्नः ॥२॥३॥ प्राणिमात्रस्यनान्यःस्वधर्मःकिंतु श्रीदेव्याराधनलक्षणएव॥ अतएववर्णत्रयस्यश्रीगायत्र्युपासनमेवानित्यत्वेन विहितम् ॥ नान्यदेवतोपासनंतथेत्यभिप्रायेणाह । स्वधर्मोयादृशइति ॥४॥ संकटादिषुसंसारसंकटादिषु ॥ ५ ॥ तत्रपंचदशतिथिषुपूजनमाह । आज्येनआज्यनैवेद्येन ॥ तत्राज्यं गोघृतम् ॥ गोघृतेनचपूजयेदित्यरुणाचलमाहात्म्येकथनात् ॥ तत्रशोडशोपचारेषुमुख्योपचारस्तुनैवेद्यएव ॥ तस्यग्रहणेनषोडशोपचाराअप्याक्षिप्तावेदितव्याः ब्राह्मणायघृतदानंसद क्षिणंकार्यम् ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ मधुकांतिः सुंदरकांतिः ॥ ११ ॥ १२ ॥

॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ अमावस्यायांतुपरिशेषात्पूर्णिमानैवेद्यएवग्राह्यः॥हवनमिति ॥ नित्यहोमोयः पूजापटलेउक्तः सइत्यर्थः॥ २१ ॥ वारपूजनमाह । रविवारेइति ॥ अत्रवारतिथिकरणयोगादीनांपूजात्वेकैवनैवेद्याएततुपृथग्देयाः ॥२२॥ गुरुवासरेशर्करारक्तादेया सैवसिताशर्कराशुक्रवारे ॥ २३ ॥ एतेषांद्रव्याणामपिनित्यहोमः कर्तव्यः ॥२४॥ किलाटकंदुग्धमलयीति भाषया ॥ दधिकूर्चीलोकेदधिमलयीतिप्रसिद्धा ॥ केचित्तुशर्करायुक्तंमथितंदधि दधिकूर्चीशब्देनोच्यतेइत्याहुः॥ तथाचकोशः ॥ कूर्चिकांक्षीरविकृतिः स्याद्रसालातुमार्जितेति ॥ फेणिकामहाराष्ट्रभाषायांतारफेणीति प्रसिद्धा॥घृतमंडकंशक्करपाराइतिप्रसिद्धम्॥२५॥कंसारमिति॥गोधूमपिष्टगुडनिर्मितंगुर्जरभाषा

नारिकेलमथाष्टम्यांदेव्यैनैवेद्यमर्पयेत् ॥ ब्राह्मणायप्रदातव्यंतापहीनोभवेन्नरः ॥ १३ ॥ नवम्यांलाजमंबायैचार्पयित्वाद्विजायच ॥ दत्त्वासुखाधिकोभूयादिहलोकेपरत्रच ॥ १४ ॥ दशम्यामर्पयित्वातुदेव्यैकृष्णतिलान्मुने ॥ ब्राह्मणायप्रदत्त्वातुयमलोकाद्भयंनहि ॥ १५ ॥ एकादश्यांदधितथादेव्यैचार्पयतेतुयः ॥ ददातिब्राह्मणायैतद्देवीप्रियतमोभवेत् ॥ १६ ॥ द्वादश्यांपृथुकान्देव्यैदत्त्वाचार्यायोददेत् ॥ तानेवचमुनिश्रेष्ठसदेवीप्रियतांव्रजेत् ॥ १७ ॥ त्रयोदश्यांचदुर्गायैचणकान्प्रददातिच ॥ तानेवदत्त्वाविप्रायप्रजासंततिमान्भवेत् ॥ १८ ॥ चतुर्दश्यांचदेवर्षेदेव्यैसक्तून्प्रयच्छति ॥ तानेवदद्याद्विप्रायशिवस्यदयितोभवेत् ॥ १९ ॥ पायसंपूर्णिमातिथ्यामपर्णायैप्रयच्छति ॥ ददातिचद्विजाग्र्यायपितॄनुद्धरतेऽखिलान् ॥२०॥ तत्तिथौहवनंप्रोक्तंदेवीप्रीत्यैमहामुने॥तत्तत्तिथ्युक्तवस्तूनामशेषारिष्टनाशनम्॥२१॥रविवारेपायसंचनैवेद्यंपरिकीर्तितम्॥सोमवारेपयःप्रोक्तंभौमेचकदलीफलम्॥२२॥बुधवारेचसंप्रोक्तंनवनीतंनवंद्विज॥ गुरुवारेशर्करांचसितांभार्गववासरे॥२३॥शनिवारेघृतंगव्यंनैवेद्यंपरिकीर्तितम्॥सप्तविंशतिनक्षत्रनैवेद्यंश्रूयतांमुने ॥२४॥ घृतंतिलंशर्करांचदधिदुग्धंकिलाटकम्॥ दधिकूर्चींमोदकंचफेणिकांघृतमंडकम् ॥२५॥ कंसारंवटपत्रंचघृतपूरमतःपरम् ॥ वटकंकोकरसकंपूरणंमधुसूरणम् ॥ २६ ॥ गुडंपृथुकद्राक्षेचखर्जूरंचैवचारकम् ॥ अपूपंनवनीतंचमुद्गंमोदकएवच॥२७॥ मातुलिंगमितिप्रोक्तंभनैवेद्यंचनारद ॥ विष्कंभादिषुयोगेषुप्रवक्ष्यामिनिवेदनम्॥२८॥पदार्थानांकृतेष्वेषुप्रीणातिजगदंबिका ॥ गुडंमधुघृतंदुग्धंदधितक्रंत्वपूपकम् ॥ २९ ॥ नवनीतंकर्कटींचकूष्माडंचापिमोदकम् ॥ पनसंकदलंजंबुफलमाम्रफलंतिलम् ॥३०॥ नारंगंदाडिमंचैवबदरीफलमेवच ॥ धात्रीफलंपायसंचपृथुकंचणकंतथा ॥ ३१ ॥

यांप्रसिद्धम् । महाराष्ट्रभाषायांसांजाइति॥ वटपत्रंपापडइतिप्रसिद्धम् ॥ घृतपूरंघीवरइतिप्रसिद्धम् ॥ वटकंप्रसिद्धम् ॥ कोकरसकम् ॥ कोकश्चक्रेवृकेज्येष्ठयां खर्जूरीद्रुमदर्दुरेइतिमेदिनीकोशात्खर्जूररसइंत्यर्थः ॥ पूरणंचणकपिष्टगुडनिर्मितंमहाराष्ट्रभाषायांप्रसिद्धम् ॥ मधुमाक्षिकम्॥ सूरणंप्रसिद्धम् ॥ तच्चघृतपक्वंशर्करामिश्रितंग्राह्यम् ॥ अन्यत्सर्वंप्रसिद्धम् ॥२६॥ ॥ २७ ॥ भनैवेद्यंनक्षत्रनैवेद्यमित्यर्थः ॥ २८ ॥ कृतेषुदत्तेष्वित्यर्थः ॥ २९ ॥ ३० ॥ ३१ ॥

जंभफलम् ॥ जंभोदैत्यविशेषस्याइंतेजंबीरभक्षयोरितिमेदिनीकोशाज्जंभफलशब्देनजंबीरफलम् ॥ ३२ ॥ ३३ ॥ कंसारादयःपूर्वमुक्ताएव ॥ ३४ ॥ ३५ ॥ मधूकवृक्षमिति॥मधूकवृक्ष
वक्ष्यमाणतत्तन्मासनामभिर्मंगलावैष्णवीमायेत्यादिभिः श्रीदेवीमावाह्यपूजयेदित्यर्थः ॥ मधूकवृक्षोमधुद्रुमःभाषायांमहुआइतिप्रसिद्धः ॥ ३६ ॥ ३७ ॥ मासभेदेननैवेद्यभेदमाह ।

नारिकेलंजंभफलंकसेरुंसूरणंतथा॥एतानिक्रमशोविप्रनैवेद्यानिशुभानिच।३२॥विस्कंभादिषुयोगेषुनिर्णीतानिमनीषिभिः॥अथनैवेद्यमाख्या
स्येकरणानांपृथङ्मुने ॥३३॥ कंसारंमंडकंफेणीमोदकंवटपत्रकम्॥लड्डुकंघृतपूरंचतिलंदधिघृतंमधु ॥३४॥ करणानामिदंप्रोक्तंदेवीनैवेद्यमाद
रात्॥अथान्यत्संप्रवक्ष्यामिदेवीप्रीतिकरंपरम्॥३५॥विधानंनारदमुनेशृणुतत्सर्वमादृतः॥चैत्रशुद्धतृतीयायांनरोमधुकवृक्षकम् ॥३६ ॥ पूजये
त्पंचखाद्यचनैवेद्यमुपकल्पयेत्। एवंद्वादशमासेषुतृतीयातिथिषुक्रमात्॥३७॥ शुक्लपक्षेविधानेननैवेद्यमभिदध्महे॥वैशाखमासेनैवेद्यंगुडयुक्तंचना
रद॥३८॥ज्येष्ठमासेमधुप्रोक्तंदेवीप्रीत्यर्थमेवतु॥आषाढेनवनीतंचमधूकस्यनिवेदनम् ॥३९॥ श्रावणेदधिनैवेद्यंभाद्रमासेचशर्करा ॥ आश्विने
पायसंप्रोक्तंकार्तिकेपयउत्तमम् ॥४०॥ मार्गेफेण्युत्तमाप्रोक्तापौषेचदधिकूर्चिका॥माघेमासिचनैवेद्यंघृतंगव्यंसमाहरेत्॥४१॥नारिकेलंचनैवेद्यं
फाल्गुनेपरिकीर्तितम्॥एवंद्वादशनैवेद्यैर्मासेचक्रमतोर्चयेत्॥४२॥मंगलावैष्णवीमायाकालरात्रिर्दुरत्यया॥महामायामतंगीचकालीकमलवासि
नी॥४३॥शिवासहस्रचरणासर्वमंगलरूपिणी॥एभिर्नामपदैर्देवींमधूकेपरिपूजयेत्॥४४॥ततःस्तुवीतदेवेशींमधूकस्थांमहेश्वरीम् ॥ सर्वकामसमृ
द्ध्यर्थंव्रतपूर्णत्वसिद्धये ॥ ४५ ॥ नमःपुष्करनेत्रायैजगद्धात्र्यैनमोस्तुते॥माहेश्वर्यैमहादेव्यैमहामंगलमूर्तये ॥ ४६ ॥ परमापापहंत्रीचपरमार्गप्र
दायिनी ॥ परमेश्वरीप्रजोत्पत्तिःपरब्रह्मस्वरूपिणी ॥ ४७ ॥

वैशाख मासइति ॥ ३८ ॥ ३९ ॥ ४० ॥ मार्गेमार्गशीर्षे ॥ फेणीपूर्वोक्ता दधिकूर्चिकापूर्वोक्ता ॥ ४१ ॥ ४२ ॥ द्वादशमासेषुभगवत्याद्वादशनामान्याह । मंगलेति ॥ मतंगीमातं
गी ॥ ॥ ४३ ॥ नामपदैरिति ॥ एकैकमासेक्रमेणैकैकनाम्ना ॥ ४४ ॥ ४५ ॥ ४६ ॥ प्रजायाविश्वस्योत्पत्तिर्यस्याःसकाशात्साप्रजोत्पत्तिः ॥ ४७ ॥

मार्तंडसहचारिणीसूर्यमंडलवर्तिनी ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ मधुरस्वरःप्रणवस्तेनपूजिता ॥ ५२ ॥ महामंत्रोमायाबीजादिरूपस्तद्वतीवाच्यवाचकतासंबंधेन ॥ मंत्रेणैवगम्या प्राप्यामंत्रजपेनप्रसन्नैवप्राप्यतेयतः ॥ मंत्रएकांतविचारोनिदिध्यासनरूपःसप्रियंकरोयस्याः ॥ एतादृशीसर्वोत्कृष्टाऽपिपामरमनुष्यमानसेनगम्यतेप्राप्यतेसामनुष्यमानसगमाएतादृश्य



मददात्रीमदोन्मत्तामानगम्यामहोन्नता॥मनस्विनीमुनिध्येयामार्तण्डसहचारिणी॥४८॥जयलोकेश्वरीप्राज्ञेप्रलयांबुदसन्निभे॥महामोहविनाशार्थंपूजिताऽसिसुराऽसुरैः॥४९॥यमलोकाभावकर्त्रीयमपूज्यायमाग्रजा॥यमनिग्रहरूपाचयजनीयेनमोनमः ॥५०॥ समस्वभावासर्वेशीसर्वसंगविवर्जिता॥संगनाशकरीकाम्यरूपाकारुण्यविग्रहा ॥ ५१ ॥ कंकालक्रूराकामाक्षीमीनाक्षीमर्मभेदिनी ॥ माधुर्यरूपशीलाचमधुरस्वरपूजिता ॥५२॥महामंत्रवतीमंत्रगम्यामंत्रप्रियंकरी॥मनुष्यमानसगमामन्मथारिप्रियंकरी ॥५३॥ अश्वत्थवटनिंबाम्रकपित्थवदरीगते॥पनसार्ककरीरादिक्षीरवृक्षस्वरूपिणि॥५४॥ दुग्धवल्लीनिवासार्हेदयनीयेदयाधिके॥दाक्षिण्यकरुणारूपेजयसर्वज्ञवल्लभे ॥५५॥ एवंस्तवेनदेवेशींपूजनांतेस्तुवीताम्॥व्रतस्यसकलंपुण्यंलभतेसर्वदानरः॥५६॥ नित्यंयःपठतेस्तोत्रंदेवीप्रीतिकरंनरः ॥ आधिव्याधिभयंनास्तिरिपुभीतिर्नतस्यहि ॥५७॥ अर्थार्थीचार्थमाप्नोतिधर्मार्थीधर्ममाप्नुयात् ॥ कामानवाप्नुयात्कामीमोक्षार्थीमोक्षमाप्नुयात् ॥५८ ॥ ब्राह्मणोवेदसंम्पन्नोविजयीक्षत्रियोभवेत्॥ वैश्यश्चधनधान्याढ्योभवेच्छूद्रःसुखाधिपः ॥५९॥ स्तोत्रमेतच्छ्राद्धकालेयः पठेत्प्रयतोनरः॥पितॄणामक्षयातृप्तिर्जायतेकल्पवर्तिनी ॥ ६० ॥ एवमाराधनंदेव्याःसमुक्तंसुरपूजितम् ॥ यःकरोतिनरोभक्त्यासदेवीलोकभाग्भवेत् ॥ ६१ ॥ देवीपूजनतोविप्रसर्वेकामाभवंतिहि ॥ सर्वपापहतिःशुद्धामतिरंतेप्रजायते ॥६२॥ यत्रतत्रभवेत्पूज्योमान्योमानधनेषुच॥जायतेजगदंबायाःप्रसादेनविरंचिज ॥ ६३ ॥ नरकाणांनतस्याऽस्तिभयंस्वप्नेऽपिकुत्रचित् ॥ महामायाप्रसादेनपुत्रपौत्रादिवर्धनः ॥ ६४ ॥ देवीभक्तोभवत्येवनाऽत्रकार्याविचारणा ॥ इत्येवंतेसमाख्यातंनरकोद्धारलक्षणम् ॥ ६५ ॥



तिकरुणावतीत्यर्थः ॥ ५३ ॥ अश्वत्थेत्यादिनामधूकवृक्षपूजावत्अश्वत्थादिवृक्षेष्वपिपूजनमस्तीतिसूचितम् ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ वेदसंपन्नोभवेदित्यर्थः ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥

तद्वच्चैत्रवत् ॥ ६६ ॥ ६७ ॥ एवंमधूकपूजासंसारहारिणीमुक्त्वाधारेश्वरीमीनाक्ष्यरुणाजंब्वादिनीमधूकेश्वरीपंचकवदन्यदपिप्रकृतेःपंचकंवक्ष्यमाणंशृण्वित्याह । अथान्यदिति ॥ परं
त्वेतावान्विशेषः ॥ प्रथमंपंचकंस्वतंत्रमूलदेवीतएवोत्पन्नम् ॥ द्वितीयंपंचकंतुविष्णुशरीरास्थितायाः श्रीभगवत्याःशक्तिस्तस्याःसकाशादुत्पन्नमिति ॥ ६८ ॥ ६९ ॥ अत्राऽष्टमस्कं
धारंभेमन्वादिभिःकथंपूज्यतेइत्येकःप्रश्नःकृतः ॥ केषुस्थानेषुकेनरूपेणपूज्यतेइतिद्वितीयःप्रश्नः ॥ सदाचारविषयकस्तृतीयः ॥ विराट्स्वरूपस्ययथावद्वर्णनंकुर्वितिचतुर्थःप्रश्नः ॥

पूजनंहिमहादेव्याःसर्वमंगलकारकम् ॥ मधूकपूजनंतद्वन्मासानांक्रमतोमुने ॥ ६६ ॥ सर्वंसमाचरेद्वस्तुपूजनंमधुकाह्वयम् ॥ नतस्यरोगबाधादि
भयमुद्भवतेऽनघ ॥ ६७ ॥ अथाऽन्यदपिवक्ष्यामिप्रकृतेःपंचकंपरम् ॥ नाम्नारूपेणचोत्पत्त्याजगदानंददायकम् ॥ ६८ ॥ साख्यानंचसमाहा
त्म्यंप्रकृतेःपंचकंमुने ॥ कुतूहलकरंचैवशृणुमुक्तिविधायकम् ॥६९॥ इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यांसंहितायांवैयासिक्यांसमा
राधनविधानेऽष्टमस्कंधेदेवीपूजननिरूपणंनामचतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ स्कंधश्चायंसमाप्तः ॥ ८ ॥ ॥ ॥ ॥

नदाग्निवसुभिः ( ८३९ ) पद्यैर्द्वैपायनमुखच्युतैः ॥ देवीभागवतस्याऽस्याष्टमःस्कंधउदीरितः ॥ १ ॥

तत्रव्यासेननारदनारायणयोःसंवादमिषेणचतुर्थप्रश्नस्योत्तरंदत्तम् ॥ द्वितीयप्रश्नस्यापितत्संवादमिषेणकिंचिदुत्तरंदत्तम् ॥ नवमस्कंधेनतुसर्वमुत्तरंदास्यति ॥ दशमस्कंधेनतुप्रथमप्रश्नस्योत्तरं
दास्यतीतिबोध्यम् ॥ श्रीमच्छैवकुलोत्पन्नोरंगनाथात्मजःसुधीः ॥ श्रीलक्ष्मीगर्भसंभूतोनीलकंठोभिधानतः ॥ १ ॥ देवीभागवतस्याऽस्यव्याख्यानरहितस्यच ॥ व्याख्यांयःकृतवान्सम्य
क्तिलकाख्यांमहत्तराम् ॥ २ ॥ अष्टमस्कंधएतस्याःसमाप्तोभूच्छुभार्थतः ॥ प्रीयतांतेनमेनंतकोटिब्रह्मांडनायिका ॥ ३ ॥ इतिश्रीदेवीभागवततिलकेऽष्टमस्कंधेचतुर्विंशोऽध्यायः ॥ २४ ॥

इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मजक्षेमराजश्रेष्ठिना
स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणालये मुद्रितम् ।
संवत् १९७६ शके १८४१.

श्रीगणेशायनमः ॥ श्रीदेव्यैनमः ॥ काश्मीरबिंदुभालांकरुणाशृंगारसारसीमांताम् ॥ सीमंतबद्धचंद्रामून्निद्रांभोरुहाननांवंदे ॥ १ ॥ स्कन्धेऽस्मिन्नवमेपंचप्रकृतीनांप्रपंचनम् ॥ तत्प्र
संगेनचान्यासांक्रियतेविस्तरेणच ॥ २ ॥ अर्धाधिकाष्टपंचाशत्संयुतैःशतपद्यकैः ॥ संक्षेपेणचशक्तीनांवर्णनंतावदुच्यते ॥ ३ ॥ ननुसर्वोऽप्ययंनवमस्कंधोऽध्यायतोग्रंथानुपूर्वीतश्चब्रह्म
ववर्तांतर्गतप्रकृतिखण्डेनसमानएव ॥ क्वचित्क्वचिद्भेदोपिप्रायशःकथंजातइतिचेत्सत्यं किंतावदत्राश्चर्यंकारणं कुत्रचिदेतादृशंसमानानुपूर्वीकत्वेननदृष्टमितिचेत्तदसत् ॥ शिवरहस्योक्त
प्रदोषपूजाध्यायस्यब्रह्मोत्तरखंडस्थप्रदोषपूजाध्यायेनसमानानुपूर्वीकत्वदर्शनात्॥तथानारदपुराणीयमंत्रखंडस्थवचनानांतंत्रराजस्थवचनैःसमानत्वात्॥तथातंत्रेषुबहुषुतंत्रांतरस्थपटला
नांसमानानामुपलंभात् तथावेदेपिरुद्राध्यायस्यशतशाखासुसमानत्वात्॥पुरुषसूक्तादिसूक्तानांचशाखांतरेषुसमानानुपूर्वीकत्वस्यस्पष्टमुपलभ्यमानत्वात् ॥तथाचयथासर्वत्रसमानानुपूर्वी
कत्वमन्यत्रदृष्टंतथादेवीभागवतेऽपिनवमस्कंधस्यप्रकृतिखंडसमानानुपूर्वीकत्वमस्तु किमाश्चर्यम् ॥ ननुतथाप्यत्रपूर्वापरविरोधःस्पष्टएव॥ तथाहि ॥ पूर्वत्रतृतीयस्कन्धेब्रह्मविष्णुरुद्राणां
साम्यावस्थमायोपाधिकब्रह्मणोभगवतीपदवाच्यादुत्पत्तिरभिहिता॥तथागौरीलक्ष्मीसरस्वतीनांचभगवतीसकाशादेवोत्पत्तिरुक्ता॥भगवत्यैवैताःशक्तयस्तेभ्योदत्ताइत्युक्तम् ॥ नवमस्कं
धेतुगोपालसुंदरीरूपश्रीकृष्णमूर्तेर्ब्रह्मादीनामुत्पत्तिस्तथागौर्यादीनामुत्पत्तिस्ताश्चशक्तयोब्रह्मादिभ्योदत्ताःश्रीकृष्णेनैवेत्यादिकमुक्तम् ॥ अन्यच्च क्वचिदस्मिन्स्कंधेपूर्वविरुद्धमेवोक्तम् ॥
तथाचपूर्वापरविरोधःस्पष्टएवेतिचेन्न ॥ भिन्नवक्तृकत्वात्॥पूर्वग्रंथस्यवक्ताव्यासोनवमस्कंधस्यवक्तानारायणइतिभिन्नवक्तृकत्वात् कल्पभेदेनोभयमप्युपपद्यते ॥यथापुराणेषुक्वचिच्छिवा
द्ब्रह्मविष्ण्वोरुत्पत्तिःक्वचित्तुब्रह्मणःसकाशाच्छिवविष्ण्वोः क्वचिद्गणेशादेतेषांत्रयाणाम्॥तथासूर्यादेतेषांत्रयाणांकल्पभेदेनोत्पत्तिरभिहिता ॥ तथैवाऽत्राऽपिकल्पभेदेनउभयार्थस्याऽपिसं
भवात् ॥ ननुपुराणभेदेनतत्रभिन्नाभिन्नासृष्टिप्रक्रियाअभिहिता ॥ अत्रत्वेकस्मिन्नेवपुराणेभिन्नाप्रक्रियाभिहितेतिजनमेजयस्यैकस्यश्रोतुर्व्यामोहःस्यादितिचेन्न ॥ महाभारतेशिवमाहा
त्म्यप्रकरणेशिवस्यब्रह्माविष्णुकारणत्वम् ॥ विष्णुमाहात्म्यप्रकरणेविष्णोरेवब्रह्मरुद्रकारणत्वमितिमर्यादायाएकस्मिन्नपिपुराणेदृष्टत्वात्॥ एवमेवकूर्मपुराणादिषुकल्पभेदेनसृष्टिभेदस्यैक

श्रीगणेशायनमः ॥ ॥ श्रीनारायणउवाच ॥ ॥ गणेशजननीदुर्गाराधालक्ष्मीःसरस्वती ॥ सावित्रीचसृष्टिविधौप्रकृतिःपंचधास्मृता ॥ १ ॥

पुराणेएवदृष्टत्वाच्च ॥ ननुतथापिश्रोतुर्व्यामोहःकथंनभवतीतिचेन्न ॥ उभयोर्विरुद्धयोःप्रतिपादनेनसृष्टेर्मायिकत्वेनमिथ्यात्वान्मिथ्यापदार्थे श्रुतेःपुराणादीनांचनाग्रहइतिश्रोतुर्बोधसंभ
वात् ॥ यथेंद्रजालंकस्मादुत्पन्नमितिविमर्शे नतत्रकिंचित्कारणंमायातिरिक्तंलभ्यते ॥ तथाऽत्राऽपिसृष्टौमायैवमुख्यंकारणमितिबोधनार्थमेवव्यासेनतथोक्तत्वाच्च ॥ यद्येकविधैवसृष्टिः
तस्याश्चकारणमेकविधमेवप्रतिपाद्येत तदाजगतःसत्यत्वशंकाऽपिस्यात् सामाभवतु किंत्वनिर्वचनीयमेवजगद्भवतीत्यनिर्वचनीयत्वज्ञानार्थंविविधसृष्टिप्रतिपादनस्याविविधकारणप्रतिपा
दनस्यावश्यकत्वाच्च ॥तदुक्तंगौडपादाचार्यैः मृल्लोहविस्फुलिंगाद्यैः सृष्टिर्याचोदितान्यथा॥ उपायःसोवतारायनास्तिभेदःकथंचनेति॥व्याख्यातंभगवद्भिर्भाष्यकारैर्मृल्लोहविस्फुलिंगादि
दृष्टांतोपन्यासैः सृष्टिर्याचोदिताप्रकाशिताऽन्यथाऽन्यथाचसर्वसृष्टिप्रकारोजीवपरमात्मैकत्वबुद्ध्यवतारायोपायोऽस्माकम्॥यथाप्राणसंवादेवागाद्यासुरपाप्मवेदाख्यायिकाकल्पिताप्राण
मुख्यत्वबोधनाय ॥ तदप्यसिद्धमितिचेन्न ॥ शाखाभेदेष्वन्यथाऽन्यथाचप्राणादिसंवादश्रवणात् ॥ यदिसंवादःपरमार्थएवाऽभूदेकरूपएवसंवादःसर्वशाखास्वश्रोष्यद्विरुद्धानेकप्रकारेण
नाश्रोष्यत् ॥ श्रूयतेतुतस्मान्नतादर्थ्यंसंवादश्रुतीनांतथोत्पत्तिवाक्यानिप्रत्येतव्यानीति ॥ तत्राऽष्टमस्कंधांतेनारायणेनअथाऽन्यदपिवक्ष्यामिप्रकृतेःपंचकंपरमितिप्रतिज्ञातंप्रकृतिपंचकं
निर्दिशति ॥ नारायणउवाच गणेशजननीदुर्गेति ॥ गणेशजननीदुर्गेत्येकादेवता ॥ प्रकृतिःपंचधेतिगुणत्रयसाम्यावस्थात्मकमायाशबलब्रह्मरूपाप्रकृतिःप्रकृतिश्चप्रतिज्ञादृष्टांतानुरोधा
दितिब्रह्मसूत्रप्रतिपादिता ॥ अपरेयमितस्त्वन्यांविद्धिमेप्रकृतिंपराम् ॥ जीवरूपांमहाबाहोययेदंधार्यतेजगदितिस्मृतिप्रतिपाद्याच ॥ सैवपंचधापंचविधदुर्गादिविग्रहरूपेणस्मृता ॥
एकस्याभगवत्यामूलप्रकृतेरेवतेदुर्गादयःपंचावताराइत्यर्थः ॥ सृष्टिविधौसृष्टिविधानेसृष्टिसमयेइत्यर्थः ॥ सृष्ट्युपकारार्थमितिवार्थः तथाचैतासांपूजनेऽपिमूलप्रकृतेःश्रीभुवनेश्वर्या
एवपूजाजायतइतिबोद्धव्यम् ॥ १ ॥

प्रकृ। तपचकनामश्रवणमात्रेणसंजातहर्षोनारदः पृच्छति ॥ नारदउवाच ॥ आविर्बभूवेति ॥ केननिमित्तेनसापंचधाआविर्भूतायाचाऽविर्भूतासाकावाजडावाचेतनावा ॥ जडायामा यायाब्रह्मणश्चप्रकृतित्वस्यशास्त्रेश्रवणादाशंकायुक्तैव ॥ यदिजडायदिवाचेतनाकिंवातस्यालक्षणंज्ञापकम् ॥ साचपंचधाकथंकेनप्रकारेणबभूव ॥ साक्षादेवपंचावताराग्रहीताउतरूपां तरद्वारेणेतिप्रश्नार्थः॥ तदेतत्संशयचतुष्टयंव्याख्यातुमर्हसीत्यर्थः॥२॥ किंचसर्वासांदुर्गादीनांचरितमवतारचरितंपूजाविधानंपूजाप्रकारःईप्सितोगुणोयस्यादेवतायाउपासनेयोयोगुणः फलंभवतिसगुणःकस्याअवतारःकुत्रकैलासेवावैकुंठेवातिष्ठति ॥ तच्चव्याख्यातुमर्हसीत्यर्थः ॥३॥ उत्तरमाह । नारायणउवाच ॥ प्रकृतेरिति ॥ क्षमोभवेत्तस्याअनादित्वादनिर्वचनीय त्वात्तदुत्तरंज्ञायमानानांपरिच्छिन्नानामस्माकमल्पपरिच्छिन्नबुद्धेरविषयत्वाच्चेत्तस्यालक्षणंयथावद्वक्तुंनकोऽपिसमर्थइत्यर्थः ॥ ४ ॥ तत्रप्रथमतस्तटस्थलक्षणामाह । प्रकृष्टवाचकइति ॥ प्रापूरणइतिधातोः पचाद्यचिनिष्पन्नःप्रशब्दः ॥ कृतिशब्दस्यव्यापारसामान्यार्थकत्वात्सृष्टिव्यापारार्थकत्वम् ॥ तथाचप्राप्रकृष्टामुख्याकृतौसृष्टौयासाप्रकृतिरितिव्यधिकरणपदबहुव्री हिणात्वेतस्यार्थस्यलाभः ॥ पृषोदरादित्वात्प्राशब्दस्यह्रस्वत्वम् ॥ तथाचमुख्यत्वेनसृष्टिकर्त्रीयासाप्रकृतिरित्यर्थः ॥५॥ स्वरूपलक्षणामाह । गुणेसत्त्वेइति ॥ प्रकृष्टेसत्त्वेगुणेप्रशब्दोव

नारदउवाच ॥ आविर्बभूवसाकेनकावासाज्ञानिनांवर॥किंवातल्लक्षणंसाधोबभूवपंचधाकथम् ॥ २ ॥ सर्वासांचरितंपूजाविधानंगुणईप्सितः ॥ अवतारःकुत्रकस्यास्तन्मेव्याख्यातुमर्हसि ॥ ३ ॥ श्रीनारायणउवाच ॥ प्रकृतेर्लक्षणंवत्सकोवावक्तुंक्षमोभवेत् ॥ किंचित्तथापिवक्ष्यामियच्छ्रुतंधर्मवक्त्रतः ॥ ४ ॥ प्रकृष्टवाचकःप्रश्चकृतिश्चसृष्टिवाचकः ॥ सृष्टौप्रकृष्टायादेवीप्रकृतिःसाप्रकीर्तिता ॥ ५ ॥ गुणेसत्त्वेप्रकृष्टेचप्रशब्दोवर्ततेश्रुतः ॥ मध्यमेरजसिकृश्चतिशब्दस्तमसिस्मृतः ॥ ६ ॥ त्रिगुणात्मकस्वरूपायासाचशक्तिसमन्विता ॥ प्रधानासृष्टिकरणेप्रकृतिस्तेनकथ्यते ॥ ७ ॥ प्रथमेवर्ततेप्रश्चकृतिश्चसृष्टिवाचकः ॥ सृष्टेरादौचयादेवीप्रकृतिःसाप्रकीर्तिता ॥ ८ ॥ योगेनात्मासृष्टिविधौद्विधारूपोबभूवसः ॥ पुमांश्चदक्षिणार्धांगोवामार्धाप्रकृतिःस्मृता ॥ ९ ॥

र्तते ॥ व्युत्पत्तिस्तुपूर्ववदेव ॥ मध्यमेरजसिमध्यमःकृशब्दोवर्ततेमध्यमत्वसादृश्यात् ॥ तमसितमोगुणेचरमेचरमस्तिशब्दोवर्ततेचरमत्वादित्वसादृश्यादित्यर्थः ॥ ६ ॥ पदार्थमु क्त्वाविशिष्टार्थमाह । त्रिगुणात्मेति॥निरतिशयावरणविक्षेपादिशक्तिरहितागुणत्रयसाम्यावस्थात्मिकासृष्टिकरणेप्रधानायासाप्रकृतिशब्देनोच्यतइत्यर्थः ॥तथाचप्रसंयुक्तःकृःप्रकृः सत्त्वे नगुणेनसहितोरजोगुणइत्यर्थः शाकपार्थिवादित्वात्संयुक्तपदलोपः ॥ पुनःप्रकृयुक्तस्तिः सत्त्वगुणरजोगुणेनयुक्तस्तिस्तमोगुणोयस्यांवर्ततेइतिबहुव्रीहिणागुणत्रयात्मिकेत्यर्थः। पृषोदरा दित्वात्साधुत्वम् ॥७॥पुनर्लक्षणांतरमाह।प्रथमेवर्ततइति॥प्रशब्दव्युत्पत्तिःपूर्ववत्॥तथाचप्राप्रथमासृष्टिर्यासाप्रकृतिःसृष्टेरादिभूतेत्यर्थः॥व्यधिकरणबहुव्रीहिःपृषोदरादित्वात्साधुत्वम्॥ ॥ ८ ॥ एतेनकिंवातल्लक्षणंसाधोइतिप्रश्नस्योत्तरमुक्तम् ॥ गुणत्रयसाम्यावस्थात्मिकावर्ततइतिलक्षणेनजडावर्ततइत्युक्तम् ॥ तेनकावासेतिप्रश्नस्योत्तरमुक्तम् ॥ इतःपरमाविर्बभूव साकेनबभूवपंचधाकथमित्यस्योत्तरमाह ।योगेनात्मेति ॥ सृष्टिविधौसृष्टिविधाननिमित्तं योगेनमायाशक्त्यापूर्वोक्तलक्षणयाप्रकृत्यायुक्तआत्मापरमात्माद्विधारूपोऽर्धनारीश्वररूपोबभूवे त्यर्थः ॥ तस्मिन्देहेपुरुषभागस्त्रीभागयोर्देशमाह । पुमांश्चेति ॥ मायाशबलब्रह्मणोभगवतीपदवाच्यादर्धनारीश्वरःकृष्णःसमुत्पन्नइतिवक्ष्यमाणग्रंथादवसेयम् ॥ ९ ॥

ननुमायाशक्तिर्जडानिर्विकारापरमात्मापिनिर्विकारइत्यनयोर्विभिन्नयोर्निर्विकारयोर्योगःकथंघटेतेत्याशंक्याह । साचब्रह्मस्वरूपाचेति ॥ यथावह्नेर्दाहिकाशक्तिर्नवह्नेर्भिन्नातिष्ठति किंतु वह्न्यभेदेनैवतिष्ठति॥ तथेयमपिब्रह्मशक्तिर्नततोभिन्नातिष्ठति किंतु ब्रह्मस्वरूपाब्रह्माभेदेनैवतिष्ठतीत्यर्थः॥तथानित्यसंबद्धत्वादुभयोर्योगः कथंघटेतेतिनशंकनीयम् ॥ शक्तेःकेवलायाज डत्वान्निर्विकारत्वेपिचैतन्यरूढायास्तस्याःसविकारत्वस्यसर्वश्रुतिष्वभ्युपगमाल्लोहचुंबकवद्दृष्टांतसंभवाच्चमायाशक्तेर्निर्विकारत्वंनसंभावनीयमितिभावः॥नित्यामोक्षपर्यंतस्थायिनी ॥ सनातनीअनादिरित्यर्थः ॥ तेनचानादिसांतेतिबोधितम् ॥ यस्मादनयोर्नित्यसंबंधस्तस्मादात्मोपासनायांशक्तेरुपासनायांशक्तेरुपासनाजातैव ॥तथाशक्त्युपासनयाप्यात्मपूजाजातैवे तियथात्मनोमहिमासर्वोत्तरस्तथैवतच्छक्तेरपीत्याह ।यथात्माचतथाशक्तिरिति ॥ तथावह्नौहोमेवह्निशक्तौहोमोऽर्थसिद्धोभवति॥ तथावह्निशक्तौहोमेपिवह्नौहोमोर्थसिद्धइतिशक्तिशक्तिम तोरीषदपिनकिंचिद्भेदकमस्तीतिभावः ॥१०॥ अतएवेति ॥ यतःशक्तेःशक्तिमतश्चनभेदोऽतएवयोगीन्द्रैर्विवेकिभिःस्त्रीपुंभेदइयंस्त्रीअयंपुमानितिभेदोनमन्यते॥ किंतुस्त्रीवापुरुषोवाद्वय मपिमायाविशिष्टंब्रह्मैवास्तीतिमन्यतइत्यर्थः ॥ अयंभावः ॥ मायाविशिष्टंब्रह्मैवब्रह्माविष्ण्वादिपुरुषरूपेणगौरीलक्ष्म्यादिस्त्रीरूपेणचभासते ॥ तथाचोभयोरपिमायाविशिष्टब्रह्मात्म कत्वमविशिष्टमितिनतेषांस्त्रीपुरुषत्वेपितत्त्वतःकश्चिद्भेदइत्यर्थः ॥ एतेनगौरीलक्ष्म्यादिशक्तीनामुपासनायांकेवलमायाशक्तेरेवोपास्यत्वंब्रह्मविष्ण्वाद्युपासनायांतुमायाविशिष्टब्रह्मणउ पास्यत्वमितिवदंतःपरास्ताःशक्त्युपासनायामपिशक्तेर्ब्रह्मानतिरेकात्केवलायाउपासनायाअसंभवेनमायाविशिष्टब्रह्मणएवतत्रोपास्यत्वात् ॥ तदेवाह । सर्वंब्रह्ममयमिति ॥ मायाविशि ष्टब्रह्ममयमित्यर्थः ॥ ब्रह्मन्नितिसंबोधनम् ॥११॥ केननिमित्तेनपंचधाजातातत्राह । स्वेच्छामयस्येति ॥ स्वंप्रकृतिस्तस्यायाइच्छासैवेच्छापरमात्मनोऽपिभवत्युभयोरभिन्नत्वात्॥ततः

**साचब्रह्मस्वरूपाचनित्यासाचसनातनी॥यथात्माचतथाशक्तिर्यथाग्नौदाहिकास्थिता॥ १० ॥अतएवहियोगींद्रैःस्त्रीपुंभेदोनमन्यते॥सर्वंब्रह्ममयं ब्रह्मञ्छश्वत्सदपिनारद॥ ११ ॥स्वेच्छामयस्येच्छयाचश्रीकृष्णस्यसिसृक्षया॥साऽऽविर्बभूवसहसामूलप्रकृतिरीश्वरी १२॥तदाज्ञयापंचविधासृष्टि कर्मविभेदिका॥अथभक्तानुरोधाद्वाभक्तानुग्रहविग्रहा॥ १३॥गणेशमातादुर्गायाशिवरूपाशिवप्रिया॥नारायणीविष्णुमायापूर्णब्रह्मस्वरूपिणी १४**

स्वेच्छामयस्यश्रीकृष्णस्यपरमात्मनइच्छया ॥ किमात्मिकया सिसृक्षयासर्जनेइच्छात्मिकया ॥ सापराशक्तिःपंचमहाभूतोत्पत्त्यनंतरंपंचभूतांशान्गृहीत्वाप्रथमंकृष्णरूपेणाविर्बभूवेत्य र्थः ॥ नहिपंचभूतोत्पत्तिंविनादेहधारणंसंभवति ॥ तस्मात्तदुत्पत्त्यनंतरमेवकृष्णस्योत्पत्तिःश्रीभगवत्याकृतेतिबोध्यम् ॥ अयंचोत्पन्नःकृष्णोगोपालसुंदरीरूपइतिवक्ष्यति ॥ ततोन वैष्णवमतप्रवेशइतिबोध्यम् ॥ नतुश्रीकृष्णपदंयोगरूढ्यागोलोकवासिदेवतापरमस्ति । तत्कथंश्रीकृष्णस्यसिसृक्षयेत्यत्रपरमात्मपरंजातमितिचेन्न ॥ केवलयोगस्यतत्रस्वीकारात् ॥ योगेनतुसर्वेशब्दाःपरमात्मपराःसंभवंतीतिदोषाभावात्॥यद्वास्वेच्छामयस्यपरमात्मनइच्छयेत्यन्वयः॥किमात्मिकयाश्रीकृष्णस्यसिसृक्षयाश्रीकृष्णकर्मकसर्जनात्मिकयेत्यर्थः॥ १२ ॥ अनंतरंतदाज्ञयापरमात्माज्ञयाश्रीकृष्णस्यस्वेनगृहीतावतारस्यशरीरात्पंचविधापंचप्रकारादुर्गादिभेदेनसृष्टिकर्मविभेदिकातत्कर्मणोनानाभेदेनकर्त्रीप्रादुर्बभूवेत्यर्थः ॥श्रीकृष्णशरीरेयंःस्व कीयांशस्थितस्तंमंशंसृष्ट्युपयोगार्थंपंचधादुर्गादिभेदेनाकरोदितिपिंडितोर्थः॥तत्रविकल्पमाह । अथभक्तानुरोधाद्वेति॥भक्तकार्यार्थंवापंचविधाजातेत्यर्थः ॥ अत्रयद्यपिस्वाज्ञयैवस्वयं प्रकृतिःपंचधाजातानतुपरमात्माज्ञया तस्यानिर्विकारत्वात् ॥ तथापिसास्वकीयाज्ञेवपरमात्मनोऽपिभवति ॥ द्वयोरप्येकत्वात्तस्मात् तदाज्ञयेत्युक्तम् । तत्रपंचविधरूपधारणेस्वेच्छा रूपंनिमित्तंभक्तानुग्रहविधावतारमनिमित्तंसृष्ट्युपयोगरूपंनिमित्तंचोक्तंभवति ॥ कृष्णावतारद्वारापंचविधाजातेत्यनेनबभूवपंचधाकथमितिप्रश्नस्योत्तरंचोक्तंभवति ॥ १३ ॥ पंचम ध्येदुर्गावतारमहिमानमाह । गणेशमातेति ॥ कृष्णोगणेशरूपेणजनितस्तस्यमातापूर्णब्रह्मरूपिणी ॥ मायाविशिष्टब्रह्मरूपिण्यादुर्गायाःस्वस्वरूपावरणाभावात्पूर्णत्वम् ॥ १४ ॥

॥ १९ ॥ धर्मसत्या धर्मः प्रजापालनादिरूपः सत्योव्यभिचाररहितोयस्याःसा ॥ १६ ॥ तदधिष्ठातृदेवता तच्छब्देनकृष्णस्यअंतःकरणरूपंतेजोगृह्यतेतस्याधिष्ठात्रीदेवता ॥ तदुक्तमुत्तरत्रद्वितीयाध्याये ॥ बुद्ध्यधिष्ठातृदेवीसाकृष्णस्यपरमात्मनइति ॥ तत्रापिबुद्धिशब्देनांतःकरणम् ॥ १७ ॥ १८ ॥ १९ ॥ सर्वशक्तिस्वरूपेति ॥ बुद्धेःसर्वशक्तिमत्त्वात्कृष्णस्यबुद्धेरधिष्ठात्र्यादुर्गायाःसर्वशक्तिरूपत्वंयुक्तमेव ॥ २० ॥ उक्तःश्रुतोश्रुतगुणइति ॥ श्रुतोवेदेयःश्रुतगुणःप्रसिद्धोगुणोऽस्ति दुर्गायाः सगुणोयथागममागमानतिक्रम्यातिस्वल्पोमयोक्तःवेदोक्तागुणाःसर्वेमयानोक्ताइत्यर्थः ॥ कुतइतिचेद्दुर्गायाअनंतगुणवत्त्वस्यवेदेप्रतिपादनात्॥तावद्गुणप्रतिपादनेशक्त्यभावादित्याह । गुणोस्त्यनंतइति॥गुणइतिजात्यैकवचनम्॥अपरामितिपंचप्रकृत्यवतारमध्येएकोवतारउक्तोद्वितीयावतारंनिशामयशृण्वित्यर्थः ॥ २१ ॥ शुद्धसत्त्वेति ॥ याशुद्धसत्त्वस्वरूपापद्मालक्ष्मीः सापरात्मनोद्वितीयाशक्तिःद्वितीयशक्त्यवताररू

ब्रह्मादिदेवैर्मुनिभिर्मनुभिःपूजितास्तुता ॥ सर्वाधिष्ठात्रीदेवीसाशर्वरूपासनातनी॥१९॥धर्मसत्यापुण्यकीर्तिर्यशोमंगलदायिनी ॥ सुखमोक्षहर्षदात्रीशोकार्तिदुःखनाशिनी॥१६॥शरणागतदीनार्तपरित्राणपरायणा॥ तेजःस्वरूपापरमातदधिष्ठातृदेवता॥१७॥सर्वशक्तिस्वरूपाचशक्तिरीशस्यसंततम् ॥ सिद्धेश्वरीसिद्धिरूपासिद्धिदासिद्धिरीश्वरी ॥ १८ ॥ बुद्धिर्निद्राक्षुत्पिपासाछायातंद्रादयास्मृतिः ॥ जातिःक्षांतिश्चभ्रांतिश्चशांतिःकांतिश्चचेतना ॥१९॥ तुष्टिःपुष्टिस्तथालक्ष्मीर्धृतिर्मायातथैवच ॥ सर्वशक्तिस्वरूपासाकृष्णस्यपरमात्मनः ॥२०॥ उक्तःश्रुतौश्रुतगुणश्चातिस्वल्पोयथागमम् ॥ गुणोऽस्त्यनंतोऽनंतायाअपरांचनिशामय ॥ २१॥ शुद्धसत्त्वस्वरूपायापद्मासापरमात्मनः ॥ सर्वसंपत्स्वरूपासातदधिष्ठातृदेवता ॥२२॥ कांताऽतिदांताशांताचसुशीलासर्वमंगला ॥ लोभमोहकामरोषमदाहंकारवर्जिता॥२३॥भक्तानुरक्तापत्युश्चसर्वाभ्यश्चपतिव्रता ॥ प्राणतुल्याभगवतःप्रेमपात्रंप्रियंवदा ॥ २४ ॥ सर्वसस्यात्मिकादेवीजीवनोपायरूपिणी ॥ महालक्ष्मीश्चवैकुंठेपतिसेवारतासती ॥ ॥ २५ ॥ स्वर्गेचस्वर्गलक्ष्मीश्चराजलक्ष्मीश्चराजसु ॥ गृहेषुगृहलक्ष्मीश्चमर्त्यानांगृहिणांतथा ॥२६॥ सर्वप्राणिषुद्रव्येषुशोभारूपामनोहरा॥ कीर्तिरूपापुण्यवतांप्रभारूपानृपेषुच ॥ २७ ॥ वाणिज्यरूपावणिजांपापिनांकलहांकुरा ॥ दयारूपाचकथितावेदोक्तासर्वसंमता ॥ २८ ॥ सर्वपूज्यासर्ववंद्याचाऽन्यांमत्तोनिशामय ॥ वाग्बुद्धिविद्याज्ञानाधिष्ठात्रीचपरमात्मनः ॥ २९ ॥ सर्वविद्यास्वरूपायासाचदेवीसरस्वती ॥ साबुद्धिःकवितामेधाप्रतिभास्मृतिदानृणाम् ॥ ३० ॥

पासर्वसंपत्स्वरूपातदधिष्ठातृदेवतापरमेश्वरसंपत्तेरधिष्ठात्रीत्यर्थः ॥ इदमप्यग्रेवक्ष्यति ॥ २२ ॥ २३ ॥ २४ ॥ सर्वसस्यात्मिकासर्वधान्यात्मिकेत्यर्थः ॥ सर्वशस्तात्मिकेतिपाठेसर्वप्रशस्तपदार्थरूपेत्यर्थः ॥ वैकुंठे इति॥इयंवैकुंठवासिनीत्यर्थः॥२५॥२६॥२७॥सैवलक्ष्मीःपुण्यवतांधर्मायभवति पापिनांतुपापायभवतीत्याह । पापिनामिति ॥२८॥ अन्यांपंचसुमध्येतृतीयांज्ञानाधिष्ठात्रीं तच्चज्ञानंपरमात्मनःपरमेश्वरस्यबुद्धिवृत्तिरूपंगृह्यते ॥ सरस्वत्याविद्याधिष्ठातृत्वात् ॥ २९॥ तदेवाह । सर्वविद्यास्वरूपेति ॥ कवितापदरचनारूपकविताकारिणीकवितारूपावा ॥ मेधाग्रंथधारणसामर्थ्यम् ॥ प्रतिभाविषयस्फुरणम् ॥ ३० ॥

नानाप्रकारायेसिद्धांतभेदास्तेषांयेऽर्थाविषयास्तेषांकलनाआकलनरूपेत्यर्थः ॥ ३१ ॥ स्वराःसप्तस्वराःषड्जादयस्तद्विशिष्टंसंगीतंगानंतस्यसंधानेनानुसंधानेनयस्तालस्तस्यकारणतत्प्र
तिपादकंशास्त्रंतस्यकारिणीम् ॥ ३२ ॥ विषयज्ञानरूपावाग्रूपाचेत्यर्थः ॥ प्रतिविश्वोपजीविनी सर्वजीवसंजीविनीत्यर्थः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ब्रह्म
णःप्रियेत्यनेनगायत्रीब्रह्मलोकवासिनीत्युक्तम् ॥ ४० ॥ ४१ ॥ तदधिष्ठातृदेवताब्रह्मतेजोजीवरूपाश्चिदाभासस्तदधिष्ठात्रीत्यर्थः ॥४२॥४३॥पंचप्राणाधिदेवीराधा ॥पंचप्राणाधिष्ठात्री

नानाप्रकारसिद्धांतभेदार्थकलनामता॥व्याख्याबोधस्वरूपाचसर्वसंदेहभंजिनी॥३१॥विचारकारिणीग्रंथकारिणीशक्तिरूपिणी॥ स्वरसंगीतसं
धानतालकारणरूपिणी ॥३२॥ विषयज्ञानवाग्रूपाप्रतिविश्वोपजीविनी ॥ व्याख्यावादकरीशांतावीणापुस्तकधारिणी ॥३३॥ शुद्धसत्त्वस्वरू
पाचसुशीलाश्रीहरिप्रिया ॥ हिमचंदनकुंदेंदुकुमुदांभोजसन्निभा ॥ ३४ ॥ यजंतीपरमात्मानंश्रीकृष्णंरत्नमालया ॥ तपःस्वरूपातपसांफलदा
त्रीतपस्विनाम् ॥ ३५ ॥ सिद्धिविद्यास्वरूपाचसर्वसिद्धिप्रदासदा ॥ ययाविनातुविप्रौघोमूकोमृतसमःसदा ॥३६॥ देवीतृतीयागदिताश्रुतत्यु
क्ताजगदंबिका ॥ यथागमंयथाकिंचिदपरांत्वंनिबोधमे॥३७॥माताचतुर्णांवर्णानांवेदांगानांचछंदसाम् ॥संध्यावंदनमंत्राणांतंत्राणांचविचक्षण
॥ ३८ ॥ द्विजातिजातिरूपाचजपरूपातपस्विनी ॥ ब्रह्मण्यतेजोरूपाचसर्वसंस्काररूपिणी ॥३९॥ पवित्ररूपासावित्रीगायत्रीब्रह्मणःप्रिया ॥
तीर्थानियस्याःसंस्पर्शंवांछंतिह्यात्मशुद्धये ॥ ४० ॥ शुद्धस्फटिकसंकाशाशुद्धसत्त्वस्वरूपिणी ॥ परमानंदरूपाचपरमाचसनातनी ॥ ४१ ॥
परब्रह्मस्वरूपाचनिर्वाणपददायिनी॥ब्रह्मतेजोमयीशक्तिस्तदधिष्ठातृदेवता॥४२॥ यत्पादरजसापूतंजगत्सर्वंचनारद॥देवीचतुर्थीकथितापंचमीं
वर्णयामिते ॥ ४३ ॥ पंचप्राणाधिदेवीयापंचप्राणस्वरूपिणी ॥ प्राणाधिकप्रियतमासर्वाभ्यःसुंदरीपरा ॥ ४४ ॥ सर्वयुक्ताचसौभाग्यमानि
नीगौरवान्विता ॥ वामांगार्धस्वरूपाचगुणेनतेजसासमा ॥४५॥ परावरासारभूतापरमाद्यासनातनी॥ परमानंदरूपाचधन्यामान्याचपूजिता
॥४६॥रासक्रीडाधिदेवीश्रीकृष्णस्यपरमात्मनः॥ रासमंडलसंभूतारासमंडलमंडिता॥ ४७ ॥ रासेश्वरीसुरसिकारासावासनिवासिनी॥गोलो
कवासिनीदेवीगोपीवेषविधायिका ॥४८॥ परमाह्लादरूपाचसंतोषहर्षरूपिणी ॥ निर्गुणाचनिराकारानिर्लिप्ताऽऽत्मस्वरूपिणी ॥ ४९॥ निरी
हानिरहंकाराभक्तानुग्रहविग्रहा ॥ वेदानुसारिध्यानेनविज्ञातासाविचक्षणैः ॥ ५० ॥ दृष्टिदृष्टानसाचेशैः सुरेन्द्रैर्मुनिपुंगवैः ॥ वह्निशुद्धांशुक
धरानानालंकारभूषिता ॥५१ ॥ कोटिचंद्रप्रभापुष्टसर्वश्रीयुक्तविग्रहा ॥ श्रीकृष्णभक्तिदास्यैककराचसर्वसंपदाम् ॥ ५२ ॥

त्यर्थः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ गोपीवेषविधायिका गोपिकारूपाणांजनयित्रीत्यर्थः ॥ ४८ ॥४९॥ वेदानुसारिध्यानेनवेदोक्तध्यानेनविज्ञाताध्यातेत्यर्थः॥ ५० ॥दृष्टिदृष्टेति॥
ईशैरीश्वरैरपिसुरेन्द्रैर्मुनिपुंगवैश्चसाक्षाद्दृष्टिदृष्टाचक्षुषादृष्टानभवतीत्यर्थः ॥ वह्निशुद्धांशुकधरा वह्नौत्यक्तमपिनदग्धंभवत्येतादृशंयत्तंतुविशेषस्यांशुकंवस्त्रंतद्वह्निशुद्धांशुकमित्युच्यतेतत्प
रिधानकर्त्रीत्यर्थः ॥ ५१ ॥ पुष्टापूर्णायासर्वश्रीः ॥ श्रीकृष्णस्ययेभक्तिदास्येतयोः करा संपदांचकराकर्त्रीत्यर्थः ॥ ५२ ॥

अवतारेचवाराहेइति ॥ वराहावतारेवाराहकल्पेइत्यर्थः ॥ तस्मिन्कल्पेवृषभानुर्व्रजस्थःकश्चनगोपस्तस्यसुताचयाभवतीत्यर्थः ॥ ५३ ॥ याब्रह्मादिभिरप्यदृष्टासासर्वैर्भारतेखंडेवृंदाव
नेदृष्टेत्यर्थः ॥ ५४ ॥ यथांबरेइति ॥ अंबरेविद्यमानोयोनवघनोनिबिडघनस्तस्मिन्यासौदामनीविद्युल्लतातद्वच्छोभतेइत्यर्थः ॥ ५५ ॥ ५६ ॥ अयंभावः ॥ मूलप्रकृतिस्तावत्सर्वे
श्वरीमायाविशिष्टब्रह्मरूपिणी ॥ यथासमष्टिव्यष्टींद्रियाणामधिष्ठात्रीर्देवतादिग्वातार्कप्रचेतोश्विवह्नींद्रोपेंद्रमित्ररूपाविनिर्ममे ॥ तथैवसमष्टिव्यष्ट्यंतःकरणानामधिष्ठात्रींदुर्गांसमष्टि
व्यष्टिसंपत्त्यधिष्ठात्रींलक्ष्मींसमष्टिव्यष्टिबुद्ध्यधिष्ठात्रींज्ञानाधिष्ठात्रीं सरस्वतींसमष्टिव्यष्ट्यात्मब्रह्मतेजोरूपजीवाधिष्ठात्रींसावित्रींतथैवपंचप्राणाधिष्ठात्रींराधांचश्रीकृष्णस्वरूपंधृत्वात
त्स्वरूपस्थितशक्तितोनिर्ममे ॥ आसांचपंचदेवीनांमूलप्रकृत्यवतारत्वात्सर्वव्यापकत्वंमूलप्रकृतिसमानमहिमत्वंचास्तीति ॥ मूलप्रकृतेर्मायाविशिष्टब्रह्मरूपिण्याआधिष्ठातृरूपंतुश्रीभुवने
श्वरीतितृतीयस्कन्धेउक्तंनविस्मर्तव्यम् ॥ यद्यपिपदार्थमात्रस्यमूलप्रकृतिरूपत्वात्ब्रह्मविष्ण्वादिपुरुषाअपिमूलप्रकृतिरूपास्तदंशाएव ॥ तथापिस्त्रीषुप्रसवधर्मित्वरूपस्याविशेषगुण
स्याधिकस्यसत्त्वादतएवस्त्रीलिंगप्रयोगस्यतत्रैवसत्त्वाच्चस्त्रीष्वेवतदंशव्यवस्थितिरुक्ता ॥ परमार्थतस्तुपुरुषाअपिमूलप्रकृत्यंशरूपाएव ॥ तदुक्तमाचार्यैःप्रपंचसारेप्रथमपटले ॥ पुंन्नपुंस

अवतारेचवाराहेवृषभानुसुताचया ॥यत्पादपद्मसंस्पर्शपवित्राचवसुंधरा ॥५३॥ब्रह्मादिभिरदृष्टायासर्वैर्दृष्टाचभारते ॥ स्त्रीरत्नसारसंभूताकृष्ण
वक्षस्थलेस्थिता॥५४॥ यथांबरेनवघनेलोलासौदामनीमुने ॥षष्टिवर्षसहस्राणिप्रतप्तंब्रह्मणापुरा ॥५५ ॥ यत्पादपद्मनखरदृष्टयेचात्मशुद्धये॥
नचदृष्टंचस्वप्नेपिप्रत्यक्षस्यापिकाकथा ॥५६॥ तेनैवतपसादृष्टाभुविवृंदावनेवने ॥ कथितापंचमीदेवीसाराधाचप्रकीर्तिता ॥५७॥ अंशरूपाः
कलारूपाःकलांशांशांशसंभवाः॥ प्रकृतेःप्रतिविश्वेषुदेव्यश्चसर्वयोषितः ॥५८॥परिपूर्णतमाःपंचविद्यादेव्यःप्रकीर्तिताः ॥ यायाःप्रधानांशरूपा
वर्णयामिनिशामय॥५९॥प्रधानांशस्वरूपासागंगाभुवनपावनी ॥ विष्णुविग्रहसंभूताद्रवरूपासनातनी ॥६०॥ पापिपापेध्मदाहायज्वलदग्नि
स्वरूपिणी ॥ सुखस्पर्शास्नानपानैर्निर्वाणपददायिनी ॥ ६१ ॥ गोलोकस्थानप्रस्थानसुखसोपानरूपिणी ॥ पवित्ररूपातीर्थानांसरितांचपरा
वरा ॥ ६२ ॥ शंभुमौलिजटामेरुमुक्तापंक्तिस्वरूपिणी ॥ तपःसंपादिनीसद्योभारतेषुतपस्विनाम् ॥ ६३ ॥

कयोस्तुल्याप्यंगनासुविशिष्यतेइति ॥ सर्वदेवीमयंजगदितिच ॥ श्रुतिश्च ॥ मायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वरम् ॥ तयोर्विभूतिलेशोवैजगदेतच्चराचरमिति ॥ ५७ ॥ ननुकिमेता
वत्यएवदेव्योनेत्याह । अंशरूपाइति ॥ काश्चिद्देवताआभ्योऽन्याःप्रकृतेरंशभूताअर्धांशभूताबह्व्यःसंति ॥ कथाकाश्चित्कलारूपाअर्धांशार्धांशरूपाः ॥ तथाकाश्चित्कलांशरूपाः का
श्चित् कलांशांशरूपाः ॥ काश्चित्कलांशांशांशरूपाबह्व्यःसंतीत्यर्थः ॥ ताःक्वसंतीतिचेत्प्रतिविश्वेषुसर्वयोषितस्तद्रूपेणसंतीत्यर्थः ॥ ५८ ॥ तर्हिपंचैवेतिकथमुक्तमितिचेत्पंचदेव्यः
प्रकृतेःपूर्णअवताराःसंतीत्यभिप्रायेणोक्तमित्याह। परिपूर्णतमाइति॥पंचदेव्योदुर्गादयः॥तत्रकाश्चिदंशरूपादेवीर्दर्शयति।प्रधानांशेति॥ प्रधानंमूलप्रकृतिस्तदंशभूतायायास्तावर्णयामी
त्यर्थः॥॥५९॥प्रधानांशेति ॥ अत्रप्रधानशब्देनमूलप्रकृतिस्तदंशभूतागंगेत्यर्थः॥ याप्रधानांशभूतासाप्रधानाभिन्नाविष्णुविग्रहसंभूताजातैवेत्यभिप्रायेणाह । विष्णुविग्रहेति॥अनेनचसर्व
देवतानांनकेवलशक्तिरूपत्वं किंतु शक्तिविशिष्टब्रह्मरूपत्वमितिस्पष्टमेवोक्तमितिबोध्यम् ॥६० ॥ पापरूपकाष्ठदाहंकर्तुंज्वलदग्निरेवेत्यर्थः ॥ ६१ ॥ प्रस्थानंगमनं सोपानंनिश्रेणिका॥
परंभिन्नंतीर्थमवरंकनिष्ठंयस्याः ॥ ६२ ॥ जटारूपोमेरुः ॥ मुक्तापंक्तिस्वरूपिणीश्वेतवर्णत्वात् ॥ ६३ ॥

॥ ६४ ॥ प्रधानांशसंभूतांतुलसीमाह । प्रधानांशेति ॥ इयंचतुलसीवृक्षाधिष्ठात्रीस्त्रीमूर्तिर्वर्तते एवंगंगापिस्त्रीमूर्तिरस्तीतिबोध्यम् ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥
प्रधानांशसंभूतांमनसादेवींवर्णयति ॥ मनसाकश्यपात्मजेति ॥ शंकरस्यप्रियशिष्यभूतेत्यर्थः ॥ शंकरेणोपदेशोमनसादेव्यैदत्तइत्यर्थः॥अतएवमहाज्ञानविशारदा ॥ ७१ ॥७२॥ ७३॥
॥ ७४ ॥ ७५ ॥ ७६ ॥ कृष्णांशस्यजरत्कारुमुनेःपत्नीत्यर्थः ॥ इयंकथापूर्वमुक्तासर्पसत्रप्रसंगे ॥ ७७ ॥ प्रधानांशसंभूतांदेवसेनांवर्णयति ॥ प्रधानांशेति ॥ ७८ ॥ षष्ठीनाम्नोहेतु
माह । षष्ठांशरूपाप्रकृतेरिति ॥ देवसेनेतिषष्ठीतिचनामद्वयमस्याइत्यर्थः ॥ ७९ ॥ वृद्धरूपानतुतरुणी ॥ पूजाद्वादशमासेष्विति ॥ प्रसूतिकालमारभ्यद्वादशमासपर्यंतंप्रति

चंद्रपद्मक्षीरनिभाशुद्धसत्त्वस्वरूपिणी॥ निर्मलानिरहंकारासाध्वीनारायणप्रिया॥६४॥प्रधानांशस्वरूपाचतुलसीविष्णुकामिनी॥विष्णुभूषण
रूपाचविष्णुपादस्थितासती॥६५॥ तपःसंकल्पपूजादिसंघसंपादिनीमुने॥सारभूताचपुष्पाणांपवित्रापुण्यदासदा ॥६६॥दर्शनस्पर्शनाभ्यांच
सद्योनिर्वाणदायिनी ॥कलौकलुषशुष्केध्मदहनायाग्निरूपिणी ॥६७॥यत्पादपद्मसंस्पर्शात्सद्यःपूतावसुंधरा ॥ यत्पर्शदर्शनेचैवेच्छंतितीर्थानि
शुद्धये ॥६८॥ ययाविनाचविश्वेषुसर्वंकर्मचनिष्फलम्॥मोक्षदायामुमुक्षूणांकामिनीसर्वकामदा॥६९॥कल्पवृक्षस्वरूपायाभारतेवृक्षरूपिणी॥
भारतीनांप्रीणनायजातायापरदेवता॥७०॥प्रधानांशस्वरूपायामनसाकश्यपात्मजा॥शंकरप्रियशिष्याचमहाज्ञानविशारदा ॥७१॥ नागेश्वर
स्यानंतस्यभगिनीनागपूजिता ॥ नागेश्वरीनागमातासुंदरीनागवाहिनी ॥७२॥ नागेंद्रगणसंयुक्तानागभूषणभूषिता॥ नागेंद्रवंदितासिद्धायो
गिनीनागशायिनी ॥ ७३ ॥ विष्णुरूपाविष्णुभक्ताविष्णुपूजापरायणा॥ तपःस्वरूपातपसांफलदात्रीतपस्विनी ॥ ७४ ॥ दिव्यंत्रिलक्षवर्षंच
तपस्तप्त्वाचयाहरेः ॥ तपस्विनीषुपूज्याचतपस्विषुचभारते ॥ ७५ ॥ सर्वमंत्राधिदेवीचज्वलंतीब्रह्मतेजसा ॥ ब्रह्मस्वरूपापरमाब्रह्मभावनतत्प
रा ॥७६ ॥ जरत्कारुमुनेःपत्नीकृष्णांशस्यपतिव्रता ॥ आस्तीकस्यमुनेर्मातााप्रवरस्यतपस्विनाम् ॥ ७७ ॥ प्रधानांशस्वरूपायादेवसेनाच
नारद ॥ मातृकासुपूज्यतमासाषष्ठीचप्रकीर्तिता ॥७८॥पुत्रपौत्रादिदात्रीचधात्रीत्रिजगतांसती॥षष्ठांशरूपाप्रकृतेस्तेनषष्ठीप्रकीर्तिता॥ ७९ ॥
स्थानेशिशूनांपरमावृद्धरूपाचयोगिनी॥पूजाद्वादशमासेषुयस्याविश्वेषुसंततम् ॥८०॥ पूजाचसूतिकागारेपुराषष्ठदिनेशिशोः॥एकविंशतिमेचैव
पूजाकल्याणहेतुकी ॥८१॥ मुनिभिर्निर्मिताचैषानित्यकामाप्यतःपरा॥मातृकाचदयारूपाशश्वद्रक्षणकारिणी॥८२॥जलेस्थलेचांतरिक्षेशिशूनां
सद्मगोचरे ॥ प्रधानांशस्वरूपाचदेवीमंगलचंडिका ॥ ८३ ॥ प्रकृतेर्मुखसंभूतासर्वमंगलदासदा ॥ सृष्टौमंगलरूपाचसंहारेकोपरूपिणी ॥८४॥

मासमित्यर्थः ॥ ८० ॥ अत्राशक्यप्रत्याह । षष्ठदिनेशिशोरिति ॥ तत्राप्यसंभवेआह । एकविंशतिमेइति ॥ ८१ ॥ ८२ ॥ सद्मगोचरेगृहस्थानेप्रधानांशभूतांमंगलचंडिकांवर्णयति ।
प्रधानांशेति ॥ ८३ ॥ प्रकृतेर्मुखसंभूतेति ॥ प्रकृतेर्व्यापिकायामुखस्यासंभवेऽपिप्रकृतेःपूर्णावताररभूतायादुर्गायामुखंग्राह्यम् ॥ मंगलचंडीनामनिरुक्तिमाह । सृष्टाविति ॥ चंडिकोप
इत्यस्यचंडीतिरूपम् ॥ सृष्टिसमयेमंगलरूपत्वादतिशान्तरूपत्वात् संहारकालेकोपनत्वात् मङ्गलचण्डीतिनाम मंगलाचासौचंडीचमंगलचंडी ॥ ८४ ॥

॥ ८२ ॥ ८६ ॥प्रधानांशसंभूतांकालींवर्णयति । कालीति ॥ ८७ ॥ दुर्गाललाटेति ॥ यथाब्रह्मणोललाटाद्रुद्रउत्पन्नस्तथादुर्गाललाटात्प्रधानमूलप्रकृत्यंशभूताकालीउत्पन्नेत्यर्थः ॥ दुर्गार्धांशेति ॥ दुर्गायाःपूर्णावतारत्वात्तस्याअर्धांशत्वोक्तौमूलप्रकृत्याअपिअर्धांशत्वमुक्तमितिबोध्यम् ॥ दुर्गायागुणेनतेजसाचेत्यन्वयः ॥ ८८ ॥ ८९ ॥ परमायागरूपिणीत्यत्रपरमासिद्धयोगिनीत्यपिपाठः ॥ ९० ॥ ९१ ॥ ननुनिश्वासमात्रेणयदिब्रह्मांडसंहर्त्रीतदापामरैर्दैत्यैःसहकिमर्थंयुद्धंकृतवतीतिचेत्तत्राह । रणमिति ॥ लोकशिक्षयेत्यत्रलोकरंजयेत्यपिपाठः ॥ लोकरंजनार्थंयुद्धंदैत्यैःसमंकृतवतीत्यर्थः ॥ ९२ ॥ प्रधानांशस्वरूपांवसुंधरांवर्णयाति । वसुंधरेति ॥ ९३ ॥ सर्वशस्येप्रसूतिकेत्यपिपाठः ॥ ९४ ॥९५॥ अथप्रकृतेःकलावतारा

तेनमंगलचंडीसापंडितैःपरिकीर्तिता ॥ प्रतिमंगलवारेषुप्रतिविश्वेषुपूजिता ॥८५॥ पुत्रपौत्रधनैश्वर्ययशोमंगलदायिनी ॥ परितुष्टासर्ववांछाप्रदात्रीसर्वयोषिताम् ॥ ८६ ॥ रुष्टाक्षणेनसंहर्तुंशक्ताविश्वंमहेश्वरी ॥ प्रधानांशस्वरूपासाकालीकमललोचना ॥ ८७ ॥ दुर्गाललाटसंभूतारणे शुंभनिशुंभयोः ॥ दुर्गार्धांशस्वरूपासागुणेनतेजसासमा ॥ ८८ ॥ कोटिसूर्यसमाजुष्टपुष्टजाज्वलविग्रहा ॥ प्रधानासर्वशक्तीनांबलाबलवती परा ॥ ८९ ॥ सर्वसिद्धिप्रदादेवीपरमायोगरूपिणी ॥ कृष्णभक्ताकृष्णतुल्यातेजसाविक्रमैर्गुणैः ॥ ९० ॥ कृष्णभावनयाशश्वत्कृष्णवर्णासनातनी ॥ संहर्तुंसर्वब्रह्माण्डंशक्तानिश्वासमात्रतः ॥ ९१ ॥ रणंदैत्यैःसमंतस्याःक्रीडयालोकशिक्षया ॥ धर्मार्थकाममोक्षांश्चदातुंशक्ताचपूजिता ॥ ९२ ॥ ब्रह्मादिभिःस्तूयमानामुनिभिर्मनुभिर्नरैः ॥ प्रधानांशस्वरूपासाप्रकृतेश्चवसुंधरा॥ ९३ ॥ आधाररूपासर्वेषांसर्वसस्याप्रकीर्तिता ॥ रत्नाकरारत्नगर्भासर्वरत्नाकराश्रया ॥ ९४ ॥ प्रजाभिश्चप्रजेशैश्चपूजितावंदितासदा ॥ सर्वोपजीव्यरूपाचसर्वसंपद्विधायिनी ॥९५॥ ययाविनाजगत्सर्वंनिराधारंचराचरम् ॥ प्रकृतेश्चकलायायास्तानिबोधमुनीश्वर॥९६॥यस्ययस्यचयापत्नीतत्सर्वंवर्णयामिते ॥ स्वाहादेवीवह्निपत्नीप्रतिविश्वेषुपूजिता ॥९७॥ययाविनाहविर्दानंनग्रहीतुंसुराःक्षमाः ॥ दक्षिणायज्ञपत्नीचदीक्षासर्वत्रपूजिता ॥९८ ॥ ययाविनाहिविश्वेषुसर्वंकर्महिनिष्फलम् ॥ स्वधापितॄणांपत्नीचमुनिभिर्मनुभिर्नरैः ॥९९ ॥ पूजितापितृदानंहिनिष्फलंचययाविना॥स्वस्तिदेवीवायुपत्नीप्रतिविश्वेषुपूजिता ॥१००॥ आदानंचप्रदानंचनिष्फलंचययाविना ॥ पुष्टिर्गणपतेःपत्नीपूजिताजगतीतले ॥१०१ ॥ ययाविनापरिक्षीणाःपुमांसोयोषितोऽपिच॥अनंतपत्नीतुष्टिश्चपूजितावंदिताभवेत् ॥१०२॥ ययाविनानसंतुष्टाःसर्वेलोकाश्चसर्वतः ॥ ईशानपत्नीसंपत्तिःपूजिताचसुरैर्नरैः ॥ १०३॥ सर्वेलोकादरिद्राश्चविश्वेषुचययाविना ॥ धृतिःकपिलपत्नीचसर्वैःसर्वत्रपूजिता ॥ १०४ ॥

नाह । कलायायाइति ॥ ९६ ॥ ९७ ॥ दीयतेविमलंज्ञानंक्षीयतेकर्मवासना ॥ तेनदीक्षेतिसाप्रोक्तेत्युक्तलक्षणादीक्षापदवाच्यासायज्ञस्यपत्नीत्यर्थः ॥ दक्षिणायज्ञपत्नीतिश्रुतेर्दक्षिणादीक्षाचयज्ञपत्नीत्यर्थः ॥ यज्ञपूरुषोमूर्तिमानदक्षिणाचमूर्तिमतीतिबोध्यम् ॥ एवमेवसर्वत्र ॥ ९८ ॥ ९९ ॥ १०० ॥ आदानंप्रतिग्रहः प्रदानंद्रव्यस्यदानम् उभेअपिस्वस्तीत्युक्तेसफले भवतइत्यर्थः ॥ ॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥

॥ १०५ ॥ यत्रसत्यशक्तिर्नास्तितत्राऽविश्वासान्मनुष्यःस्नेहंनकरोतीतिबंधुतारहितोभवतीतियुक्तमेव ॥ मोहपत्नीति ॥ यत्रमोहोस्तितत्रदयायाःसत्त्वाद्दयामोहपत्नी ॥ ६ ॥ ७ ॥
जीवन्मृतसमंप्रतिष्ठाभावेजीवतोपिमृतप्रायत्वात् ॥ ८ ॥ उद्योगोयत्नः ॥ ९ ॥ विधिहीनंक्रियाभावेतत्स्वरूपविधेरप्यभावः ॥ १० ॥ विधिनिर्मितम् ईश्वरनिर्मितंसर्वंजगद्भूतंसमु
दायरूपमुच्छिन्नंभवति ॥ मिथ्याभाषणाभावेधूर्तत्वस्याभावात् ॥ मिथ्यावक्ताहिधूर्तः ॥ युगभेदेनास्याःस्थितिमाह । सत्यइति ॥ ११ ॥ १२ ॥ इयंमिथ्याकपटेनभ्रात्रासहिताभ्र
तिगृहंभ्रमतीत्यर्थः ॥ १३ ॥ १४ ॥ धर्मपत्नीमूर्तिःसाचकांतिरूपाशोभारूपेत्यर्थः ॥ १५ ॥ शोभांविनापरमात्मापिनिराधारोनिरर्थकोभवतीत्यर्थः ॥ १६ ॥ १७ ॥ रात्रिषुयोगेन

सर्वेलोकाअधैर्याश्चजगत्सुचययाविना ॥ सत्यपत्नीसतीमुक्तैःपूजिताजगतीप्रिया ॥ १०५ ॥ ययाविनाभवेल्लोकोबंधुतारहितःसदा ॥ मो
हपत्नीदयासाध्वीपूजिताचजगत्प्रिया ॥ ६ ॥सर्वेलोकाश्चसर्वत्रनिष्फलाश्चययाविना ॥ पुण्यपत्नीप्रतिष्ठासापूजितापुण्यदासदा ॥७ ॥यया
विनाजगत्सर्वंजीवन्मृतसमंमुने ॥ सुकर्मपत्नीसंसिद्धाकीर्तिर्धन्यैश्चपूजिता ॥ ८ ॥ ययाविनाजगत्सर्वंयशोहीनंमृतंयथा ॥ क्रियातूद्योगप
त्नीचपूजितासर्वसंमता ॥ ९ ॥ ययाविनाजगत्सर्वंविधिहीनंचनारद ॥ अधर्मपत्नीमिथ्यासासर्वधूर्तैश्चपूजिता ॥ १० ॥ ययाविनाजगत्स
र्वमुच्छिन्नंविधिनिर्मितम् ॥ सत्येअदर्शनायाचत्रेतायांसूक्ष्मरूपिणी ॥११॥ अर्धावयवरूपाचद्वापरेचैवसंवृता ॥ कलौमहाप्रगल्भाच॥सर्वत्र
व्यापिकाबलात् ॥ १२ ॥कपटेनसमंभ्रात्राभ्रमतेचगृहेगृहे ॥ शांतिर्लज्जाचभार्येद्वेसुशीलस्यचपूजिते ॥ १३ ॥ याभ्यांविनाजगत्सर्वमुन्मत्तमि
वनारद ॥ ज्ञानस्यतिस्रोभार्याश्चबुद्धिर्मेधाधृतिस्तथा ॥ १४ ॥ याभिर्विनाजगत्सर्वंमूढंमत्तसमंसदा ॥ मूर्तिश्चधर्मपत्नीसाकांतिरूपामनोह
रा ॥१५॥ परमात्माचविश्वौघोनिराधारोययाविना ॥ सर्वत्रशोभारूपाचलक्ष्मीर्मूर्तिमतीसती ॥१६॥ श्रीरूपामूर्तिरूपाचमान्याधन्याऽतिपू
जिता ॥ कालाग्नीरुद्रपत्नीचनिद्रासासिद्धयोगिनी ॥ १७ ॥ सर्वेलोकाःसमाच्छन्नाययायोगेनरात्रिषु ॥ कालस्यतिस्रोभार्याश्चसंध्यारात्रिर्दि
नानिच ॥ १८ ॥ याभिर्विनाविधाताचसंख्यांकर्तुंनशक्यते ॥ क्षुत्पिपासेलोभभार्येधन्येमान्येचपूजिते ॥ १९ ॥ याभ्यांव्याप्तंजगत्सर्वंनित्यं
चिंतातुरंभवेत् ॥ प्रभाचदाहिकाचैवद्वेभार्येतेजसस्तथा ॥ १२० ॥ याभ्यांविनाजगत्स्रष्टुंविधातुंचनहीश्वरः ॥ कालकन्येमृत्युजरेप्रज्वारस्य
प्रियाप्रिये ॥ २१ ॥ याभ्यांजगत्समुच्छिन्नंविधात्रानिर्मितंविधौ ॥ निद्राकन्याचतंद्रासाप्रीतिरन्यासुखप्रिये ॥ २२ ॥ याभ्यांव्याप्तंजग
त्सर्वंविधिपुत्रविधेर्विधौ ॥ वैराग्यस्यचद्वेभार्येश्रद्धाभक्तिश्चपूजिते ॥ २३ ॥ याभ्यांशश्वज्जगत्सर्वंयज्जीवन्मुक्तिमन्मुने ॥ अदितिर्देवमाताचसु
रभीचगवांप्रसूः ॥ २४ ॥ दितिश्चदैत्यजननीकद्रूश्चविनतादनुः ॥ उपयुक्ताःसृष्टिविधौएतास्तुकीर्तिताःकलाः ॥ १२५॥

संबंधेनसंध्यारात्रिवद्दिनानामपिकालाधीनत्वात् ॥ स्त्रीसदृशत्वात्स्त्रीत्वम् ॥ १८ ॥ १९ ॥ चिंतातुरंक्षुत्पिपासानाशकान्नजलचिंतातुरमित्यर्थः ॥ १२० ॥ जरावन्मृत्योरपिकालादुत्प
न्नत्वात्कन्यासदृशत्वात्कन्यात्वम् ॥ तेमृत्युजरेकालस्यकन्ये ॥ प्रज्वारस्यप्रकृष्टज्वरस्यप्रियाप्रियेपत्न्यौभवतःप्रियातोऽपिप्रियेअतिशयितप्रियेइत्यर्थः ॥२१॥ समुच्छिन्नंनष्टम् ॥ निद्राक
न्येति॥निद्रायाःकन्याएकातंद्रा अन्याद्वितीयाकन्याप्रीतिः॥उभेअपिसुखस्यपुरुषस्थानीयस्यप्रियेपत्न्यौभवतः॥२२॥२३॥२४॥उपयुक्ताइति॥एताःकलाःसृष्टावुपयुक्ताइत्यर्थः॥ १२५॥

॥ १२६ ॥ २७ ॥ २८ ॥ अंबिकाप्रसूःपार्वतीमातामेनका ॥ २९ ॥ ३० ॥ वृषभानोःपत्नीराधायामाता ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ भृगोःपरशुरामस्य ॥ रामोबलरामस्त स्यमाता ॥ १३५ ॥ कृष्णभगिनीदुर्गाविंध्यवासिनीत्यर्थः ॥ एकनंदाचसैवएकनंदाचकाचिदन्यावा ॥ एवमन्याअपिकलाःसंतीत्याहबह्व्यइति ॥ ३६ ॥ एवंकलावतारदेवतास्वरू पमुक्त्वाकलांशांशावतारदेवतास्वरूपमाह प्रतिविश्वेषुयोषितइति ॥ प्रतिलोकेषुयाःसंतिताइत्यर्थः ॥ ३७ ॥ यस्मात्सर्वाअपिस्त्रियःप्रकृत्यंशभूतास्तस्मात्तासामवमानेप्रकृतेरेवाव मानइत्याह । योषितामवमानेइति ॥ पराभवोऽवमानः ॥ तासांपूजनेप्रकृतेःपूजाभवतीत्याह । ब्राह्मणीति ॥ ३८ ॥ ३९ ॥ १४० ॥ सत्त्वांशानांलक्षणंपतिव्रताइति ॥ रजोंशा

कलाअन्याःसंतिबह्व्यस्तासुकाश्चिन्निबोधमे ॥ रोहिणीचंद्रपत्नीचसंज्ञासूर्यस्यकामिनी ॥१२६॥ शतरूपामनोर्भार्याशचींद्रस्यचगेहिनी ॥ तारबृहस्पतेर्भार्यावसिष्ठस्याऽप्यरुंधती ॥ २७ ॥ अहल्यागौतमस्त्रीसाऽप्यनसूयाऽत्रिकामिनी ॥ देवहूतीकर्दमस्यप्रसूतिर्दक्षकामिनी॥२८॥ पितॄणांमानसीकन्यामेनकासांऽबिकाप्रसूः ॥ लोपामुद्रातथाकुंतीकुबेरकामिनीतथा ॥ २९ ॥ वरुणानीप्रसिद्धाचबलेर्विंध्यावलिस्तथा॥कां ताचदमयंतीचयशोदादेवकीतथा ॥ १३०॥ गांधारीद्रौपदीशैब्यासाचसत्यवतीप्रिया ॥ वृषभानुप्रियासाध्वीराधामाताकुलोद्वहा ॥ ३१ ॥ मंदोदरीचकौसल्यासुभद्राकौरवीतथा ॥ रेवतीसत्यभामाचकालिंदीलक्ष्मणातथा ॥ ३२ ॥ जांबवतीनाग्नजितिर्मित्रविंदातथापरा ॥ लक्ष्म णारुक्मिणीसीतास्वयंलक्ष्मीःप्रकीर्तिता॥ ३३ ॥ कालीयोजनगंधाचव्यासमातामहासती ॥ बाणपुत्रीतथोषाचचित्रलेखाचतत्सखी ॥३४॥ प्रभावतीभानुमतीतथामायावतीसती॥रेणुकाचभृगोर्मातारामातारोहिणी॥१३५॥एकनंदाचदुर्गासाश्रीकृष्णभगिनीसती ॥बह्व्यःसत्यःक लाश्चैवप्रकृतेरेवभारते ॥३६॥ यायाश्चग्रामदेव्यःस्युस्ताःसर्वाःप्रकृतेःकलाः ॥कलांशांशसमुद्भूताःप्रतिविश्वेषुयोषितः॥३७॥योषितामवमानेन प्रकृतेश्चपराभवः ॥ ब्राह्मणीपूजितायेनपतिपुत्रवतीसती ॥३८॥ प्रकृतिःपूजितातेनवस्त्रालंकारचंदनैः ॥कुमारीचाष्टवर्षायावस्त्रालंकारचंदनैः॥ ॥३९पूजितायेनविप्रस्यप्रकृतिस्तेनपूजिता ॥ सर्वाःप्रकृतिसंभूताउत्तमाधममध्यमाः ॥१४०॥ सत्त्वांशाश्चोत्तमाज्ञेयाःसुशीलाश्चपतिव्रताः ॥ मध्यमारजसश्चांशास्ताश्चभोग्याःप्रकीर्तिताः ॥४१॥सुखसंभोगवश्याश्चस्वकार्यतत्पराःसदा॥अधमास्तमसश्चांशाअज्ञातकुलसंभवाः॥४२॥ दुर्मुखाःकुलहाधूर्ताःस्वतंत्राकलहप्रियाः ॥ पृथिव्यांकुलटायाश्चस्वर्गेचाप्सरसांगणाः ॥ ४३ ॥ प्रकृतेस्तमसश्चांशाःपुंश्चल्यःपरिकीर्तिताः ॥ एवंनिगदितंसर्वंप्रकृतेरूपवर्णनम् ॥ ४४ ॥ ताःसर्वाःपूजिताःपृथ्व्यांपुण्यक्षेत्रेचभारते ॥ पूजितासुरथेनादौदुर्गादुर्गार्तिनाशिनी ॥ १४५ ॥

नांलक्षणंभोग्याइति ॥ विषयासक्ताइत्यर्थः ॥ ४१ ॥ ताःपूजयानवश्याःस्युःकिंतुभोगेनैवेत्याह । सुखसंभोगेति ॥ अज्ञातकुलसंभवास्ताश्चाधमाइत्यर्थः ॥ ४२ ॥ कुलहाःकुलहंत्र्यः॥ ॥ ४३ ॥ ४४ ॥ एवंत्रैविध्येऽपिपूजार्हाएवताः सर्वाइतिफलतारतम्यंतुसात्त्विक्यादिपूजायामस्त्येव ॥ अधुनापंचप्रकृतीनांसर्वैःपूज्यत्वमाह । पूजितेति ॥ पृथ्व्यांसुरथेनादौपूजितातो नदेवादिभिर्देवलोकेनिरंतरकृतायांपूजायामपिनदोषः ॥ सुरथोनामराजा ॥ १४५ ॥

॥ १४६ ॥ दुर्गैवदक्षकन्यारूपेणोत्पन्नेत्याह । जातादाविति ॥ ४७ ॥ स्वयंकृष्णइति ॥ श्रीकृष्णएवपूर्णावतारःपार्वत्याःपुत्रोगणेशरूपेणजातः ॥ स्कंदस्तुविष्णुकलोद्भवः ॥ विष्णवं
शजन्योनतुपूर्णावतारः ॥ ४८ ॥ मंगलभूपेनमंगलाभिधराज्ञा ॥ ४९ ॥ अश्वपतिनाराज्ञा ॥ कचित्सावित्रीचसरस्वत्याइत्यपिपाठः ॥ १५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ प्रथमं
देवीति ॥ भूतलेप्रथमंराधादेवीसुयज्ञेनराज्ञापूजितेत्यर्थः ॥ ५५ ॥ उपदिष्टेनविधिनेतिशेषः ॥ ५६ ॥ ५७ ॥ १५८ ॥ यस्मादेवंतस्मादेतादेवतानियमेनपूज्याइतितात्पर्यम् ॥ इति
श्रीदेवीभागवततिलकेनवमस्कंधेप्रथमोऽध्यायः ॥ १ ॥ अष्टाशीतिमहापद्यैःपंचप्रकृतिसंभवः ॥ प्रोच्यतेविस्तरेणैवतद्वर्तृणांचसंभवः ॥ १ ॥ पृष्टवतेनारदायसर्वोऽपिनवमस्कंधोक्तो

ततःश्रीरामचंद्रेणरावणस्यवधार्थिना ॥ तत्पश्चाज्जगतांमातात्रिषुलोकेषुपूजिता ॥ १४६ ॥ जातादौदक्षकन्यायानिहत्यदैत्यदानवान् ॥ ततो
देहंपरित्यज्ययज्ञेभर्तुश्चनिंदया ॥ ४७ ॥ जज्ञेहिमवतःपत्न्यांलेभेपशुपतिपतिम् ॥ गणेशश्चस्वयंकृष्णःस्कंदोविष्णुकलोद्भवः ॥४८॥बभूवतु
स्तौतनयौपश्चात्तस्याश्चनारद ॥ लक्ष्मीर्मंगलभूपेनप्रथमंपरिपूजिता ॥ ४९ ॥ त्रिषुलोकेषुतत्पश्चाद्देवतामुनिमानवैः ॥ सावित्रीचाऽश्वपति
नाप्रथमंपरिपूजिता ॥ १५० ॥ तत्पश्चात्त्रिषुलोकेषुदेवतामुनिपुंगवैः ॥ आदौसरस्वतीदेवीब्रह्मणापरिपूजिता ॥ ५१ ॥ तत्पश्चात्त्रिषुलोकेषुदे
वतामुनिपुंगवैः ॥ प्रथमंपूजिताराधागोलोकेरासमंडले ॥ ५२ ॥ पौर्णमास्यांकार्तिकस्यकृष्णेनपरमात्मना ॥ गोपिकाभिश्चगोपैश्चबालिका
भिश्चबालकैः ॥ ५३ ॥ गवांगणैः सुरभ्याचतत्पश्चादाज्ञयाहरेः ॥ तदाब्रह्मादिभिर्देवैर्मुनिभिः परयामुदा ॥ ५४ ॥ पुष्पधूपादिभिर्भक्त्यापू
जितावंदितासदा ॥ पृथिव्यांप्रथमंदेवी सुयज्ञेनैवपूजिता ॥ ५५ ॥ शंकरेणोपदिष्टेनपुण्यक्षेत्रेचभारते ॥ त्रिषुलोकेषुतत्पश्चादाज्ञयाप
रमात्मनः ॥१५६॥ पुष्पधूपादिभिर्भक्त्यापूजितामुनिभिः सदा ॥ कलायायाः समुद्भूताः पूजितास्ताश्चभारते ॥५७॥ पूजिताग्रामदेव्यश्चग्रा
मेचनगरेमुने ॥ एवंतेकथितंसर्वंप्रकृतेश्चरितंशुभम् ॥ १५८ ॥ यथागमंलक्षणंचकिंभूयः श्रोतुमिच्छसि ॥ इति श्रीदेवीभागवते महापुराणेन
वमस्कंधेप्रथमोऽध्यायः ॥१॥ नारदउवाच ॥ समासेनश्रुतंसर्वंदेवीनांचरितंप्रभो॥विबोधनायबोधस्यव्यासेनवक्तुमर्हसि ॥१॥ सृष्टेराद्यासृष्टि
विधौकथमाविर्बभूवह ॥ कथंवापंचधाभूतावदवेदविदांवर॥२॥भूताययांशकलयातयात्रिगुणयाभवे॥ व्यासेनतासांचरितंश्रोतुमिच्छामिसांप्र
तम् ॥ ३ ॥ तासांजन्मानुकथनंपूजाध्यानविधिंबुध ॥ स्तोत्रंकवचमैश्वर्यंशौर्यंवर्णयमंगलम् ॥ ४ ॥

र्थः संक्षेपेणसूत्रभूतवाक्यैर्भगवतावर्णितस्तमर्थंसामान्यरूपेणज्ञातंविशेषाकारेणज्ञातुंपुनर्नारदःपृच्छति । नारदउवाच समासेनेति ॥ समासेनसंक्षेपेणबोधस्यसामान्याकारेणबोधविषय
स्यपूर्वोक्तार्थस्यविबोधनायविशेषाकारेणबोधनायव्यासेनविस्तारेण ॥ १ ॥ विशेषार्थविषयंप्रश्नंस्वयमेवकरोति । सृष्टेरिति ॥ सृष्टेर्द्वैतप्रपंचस्यकार्यभूतस्याद्याकारणरूपामूलप्रकृति
र्मायाशक्तिपरादिशब्दवाच्यासृष्टिविधौसृष्टिक्रियायांप्रथमतःकथमाविर्बभूवोत्पन्ना ॥ पश्चाच्चकथंपंचधाभूतापंचधापंचप्रकारेणदुर्गादिरूपेणभिन्नाकथंवाजातातद्वदेत्यर्थः॥२॥किंचभूते
ति ॥ भवेसंसारेतयात्रिगुणयाप्रकृतेरंशकलयायाभूतासंभूताशक्तिर्गंगातुलस्यादिरूपिणीतासांचरितमित्यर्थः ॥ ३ ॥ किंचतासामिति ॥ तासांतुलस्यादीनाम् ॥ ४ ॥

नारायणः प्रथमंप्रकृतेःस्वरूपमाह । नारायणउवाच नित्यइति ॥ नित्यआत्मायथातथाप्रकृतिर्नित्येत्यर्थः ॥ आत्माऽत्रचिदाभासोजीवः ॥ अस्यमोक्षपर्यंतमवस्थानान्नित्यत्वम् ॥
नत्वत्रात्मशब्देनपरमात्मा । तस्यग्रहणेतस्मिन्परमात्मनित्रिकालाबाध्यत्वरूपनित्यत्वस्यसत्त्वात्तदेवनित्यत्वंमायायांबोधितंभवेत् । तच्चमायायांनसंभवति॥ असत्त्वमरजस्कममायमिति
तापनीयश्रुत्यामोक्षदशायांमायायानाशाभ्युपगमात् । तस्माज्जीवएवात्मशब्देनग्राह्यः ॥ तदग्रहणेतस्यमोक्षपर्यंतमवस्थानान्मायायाश्चमोक्षपर्यंतमवस्थानादुभयोःसमानयोगक्षेमंनित्य
त्वंसिध्यतीतिनभःकालदिशादीनामपिप्राकृतप्रलयपर्यंतमवस्थानान्नित्यत्वमापेक्षिकमेवबोद्धव्यम् ॥ विश्वानांभूरादिलोकानांगोलकंब्रह्मांडमित्यर्थः ॥ ५ ॥ तदेकदेशइति ॥ तदेकदे
शोगोलोकैकदेशःनम्रभागानुसारकोगोलोकान्नम्रदेशेस्थितोवैकुंठइत्यर्थः॥परमार्थतोनित्यस्तुपरमात्मैव॥एकमेवाद्वितीयंब्रह्म नेहनानास्तिकिंचनेत्यादिश्रुतेः॥६॥ ननुसाप्रकृतिःसांख्यशा
स्त्रोक्तप्रधानवदात्मनोभिन्नास्वतंत्रावास्तिकिंतत्राह । यथाग्नौदाहिकेति ॥ यथावह्नौदाहिकाशक्तिःशश्वन्निरंतरंयुक्तासंयुक्तैववह्निनानाभिन्नावह्नेःकदाचिदपि ॥ यथावाचंद्रेपद्मेचशोभा
नित्यंसमवेतैवनभिन्ना ॥ यथावारवौप्रभातदभिन्नैवनभिन्नाकदाचिदपि ॥ तथैवेयंशक्तिःपरात्मनितदभेदेनैवतिष्ठति ॥ शक्तेःशक्तव्यतिरेकेणाऽदर्शनात् ॥ तथाचश्वेताश्वतरश्रुतिः ॥
परास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाचेति॥तंत्रेष्वपिशक्तिश्चशक्तिमद्रूपाद्व्यतिरेकंनवांछति ॥तादात्म्यमनयोर्नित्यंवह्निदाहिकयोरिवेति ॥ तस्मान्नभिन्नाजडास्वतंत्रा॥

श्रीनारायणउवाच ॥ नित्यआत्मानभोनित्यंकालोनित्योदिशोयथा ॥ विश्वानांगोलकंनित्यंनित्योगोलोकएवच ॥५॥ तदेकदेशोवैकुंठोन
म्रभागानुसारकः ॥ तथैवप्रकृतिर्नित्याब्रह्मलीलासनातनी ॥ ६ ॥ यथाग्नौदाहिकाचंद्रेपद्मेशोभाप्रभारवौ ॥ शश्वद्युक्तानभिन्नासातथाप्रकृ
तिरात्मनि ॥ ७ ॥ विनास्वर्णंस्वर्णकारः कुंडलंकर्तुमक्षमः ॥ विनामृदाघटंकर्तुंकुलालोहिनहीश्वरः ॥ ८॥ नहिक्षमस्तथात्माचसृष्टिंस्रष्टुंतया
विना ॥ सर्वशक्तिस्वरूपासाययाचशक्तिमान्सदा॥९॥ऐश्वर्यवचनःशश्चक्तिःपराक्रमएवच ॥तत्स्वरूपातयोर्दात्रीसाशक्तिःपरिकीर्तिता॥१०॥
ज्ञानंसमृद्धिःसंपत्तिर्यशश्चैवबलंभगः ॥ तेनशक्तिर्भगवतीभगरूपाचसासदा ॥ ११ ॥ तयायुक्तःसदात्माचभगवांस्तेनकथ्यते॥सचस्वेच्छाम
योदेवःसाकारश्चनिराकृतिः ॥ १२ ॥

किंतुचेतनाधिष्ठिताचेतनेवभवतीतिभावः ॥ तदुक्तम् ॥ चिच्छायावेशतःशक्तिश्चेतनेवविभातिसेतिसूतसंहितायाम्॥७॥ ननुसाशक्तिर्यदिपरमात्मनोनभिन्नाकिंतुतदभिन्नातदापरमात्मै
वजगत्करोतु किमर्थंशक्तिस्तदेतिचेत्तदाह ॥ विनास्वर्णमिति ॥ ८ ॥ नहिक्षमइति ॥ शक्तिरहितस्यनिर्गुणस्यनिर्विकारस्यनिरवयवस्याऽऽत्मनोनजगत्कर्तृत्वमुपपद्यते ॥ तस्मात्सर्वजन
कर्त्रीसाऽपेक्षितैवेतिभावः ॥ ९ ॥ शक्तिशब्दस्यनिर्वचनमाह । ऐश्वर्येति ॥ शशब्दोमंगलवाचकत्वादैश्वर्यवचनः ॥ क्तिशब्दस्यपृषोदरादित्वाद्दकारलोपेक्तिशब्दः पराक्रमवाचकः ॥
शयुक्ताक्तिर्यस्यामितिव्युत्पत्त्याशक्तिशब्दः । प्रकृतिवाचकः ॥ पृषोदरादित्वाद्युक्तापदलोपः ॥ तत्फलितमाह । तत्स्वरूपेति ॥ १० ॥ भगवतीपदव्युत्पत्तिमाह । ज्ञानमिति ॥
ज्ञानादिबलांतानांपदार्थानांवाचकोभगशब्दःतेनकारणेनशक्तिर्भगवतीपदेनोच्यतइत्यर्थः ॥ भगाःसंत्यस्यामितिव्युत्पत्तेः॥ननुभगाःपराशक्तेर्भिन्नाः कस्मादागतास्तत्राह। भगरूपाचसे
ति ॥ भगाअपितस्याएवविकाराइत्यर्थः ॥ ११ ॥ ननुतर्हिपरमात्माकथंभगवच्छब्देनोच्यतेइतिचेत्ताद्दशभगवतीशक्तियोगादेवेत्याह । तयायुक्तइति ॥ तस्यागुणाएवपरमात्मनोगुणा
भवंतिपरस्पराध्यासादित्यर्थः ॥ इत्थंपराशक्तिंवर्णयित्वातदवच्छिन्नंचैतन्यरूपंपरमात्मानंवर्णयति ॥ सचस्वेच्छामयइति ॥ प्रकृतेरिच्छैवैतस्येच्छानभिन्नेति प्रकृतीच्छयैवस्वेच्छा
मयइत्युच्यते । अयंपरमात्मानिराकारःसाकारश्चभवतीत्यर्थः ॥ १२ ॥

निराकारस्वरूपंवर्णयति । तेजोरूपमिति ॥ चिद्रूपंस्वप्रकाशंतेजोरूपमित्यर्थः ॥ इदमेवपरंब्रह्मेतिवदंति॥१३॥ इत्थंनिराकारंपरमात्मरूपंयोगिनोज्ञानिनोवेदांताश्चयद्यपिवदंति तथा पितद्रूपंवैष्णवाःस्थूलमूर्त्यभिमानिनोनमन्वते इत्यरुचिपूर्वकमाह । वैष्णवास्तन्नमन्वतइति ॥ १४ ॥ तेकिंवदंतितत्राह ॥ वदंति ॥ भवद्भिर्यत्तेजःस्वीक्रियतेतत्तेजस्तेजस्विनाविना कस्यसंभवेत् नकस्यापि ॥ नहिचंद्रिकाप्रभादीनिचंद्रसूर्याद्याश्रयरहितानिक्कचिदुपलभ्यंते ॥ ततोऽन्यथाऽनुपपत्त्याकाचननित्यासावयवामूर्तिःस्वीकर्तव्येतितेवदंतीत्यर्थः॥कीदृशीमूर्तिः स्वीकर्तव्येतितांदर्शयति ॥ तेजोमंडलेति ॥ १५ ॥१६॥ किशोरोबालः ॥ १७ ॥ शोभायामोचनेनाशनेलोचनेयस्य ॥ मुक्ताछविविनिंद्यायययाएतादृशीयाएकाऽविरलामध्येऽव्यवधान रहितादंतपंक्तिस्तयामनोरमम् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ निमेषोनेत्रमीलनम् ॥ २३ ॥ कृष्णपदंनिर्वक्ति । कृषिस्तद्भक्तीति ॥कृषधातोर्भजनवाचकाद्भावेक्किप्प्रत्ययेकृष् शब्दोनिष्पन्नः । सःतद्भक्तिवचनःकृष्णभक्तिवाचकइत्यर्थः ॥ णमधातोरपिप्रह्ववाचकाद्भावेडप्रत्ययेकृष्णदास्यवाचकोनशब्दः ॥ तथाचकृट्चनंचकृष्णे तेदातृत्वेनवर्ततेयस्मिन्नित्यर्थेऽर्श

तेजोरूपंनिराकारंध्यायंतेयोगिनःसदा ॥वदंतिचपरंब्रह्मपरमानंदमीश्वरम् ॥१३॥ अदृश्यंसर्वद्रष्टारंसर्वज्ञंसर्वकारणम्॥ सर्वदंसर्वरूपंतं वैष्णवा स्तन्नमन्वते॥१४॥वदंतिचैवतेकस्यतेजस्तेजस्विनाविना॥तेजोमंडलमध्यस्थंब्रह्मतेजस्विनंपरम्॥१५॥स्वेच्छामयंसर्वरूपंसर्वकारणक.रणम्॥ अतीवसुन्दररूपंबिभ्रतंसुमनोहरम् ॥१६॥ किशोरवयसंशांतंसर्वकांतंपरात्परम्॥ नवीननीरदाभासधामैकंश्यामविग्रहम् ॥१७॥ शरन्मध्या ह्नपद्मौघशोभामोचनलोचनम् ॥ मुक्ताच्छविविनिंद्यैकदंतपंक्तिमनोरमम् ॥ १८ ॥ मयूरपिच्छचूडंचमालतीमाल्यमंडितम् ॥ सुनसंसस्मितं कांतंभक्तानुग्रहकारणम् ॥१९॥ ज्वलदग्निविशुद्धैकपीतांशुकसुशोभितम् ॥ द्विभुजंमुरलीहस्तंरत्नभूषणभूषितम् ॥ २०॥ सर्वाधारंचसर्वेशंसर्व शक्तियुतंविभुम् ॥ सर्वैश्वर्यप्रदंसर्वस्वतंत्रंसर्वमंगलम् ॥२१॥ परिपूर्णतमंसिद्धंसिद्धेशंसिद्धिकारकम्॥ ध्यायंतेवैष्णवाःशश्वद्देवदेवंसनातनम्॥ ॥ २२ ॥ जन्ममृत्युजराव्याधिशोकभीतिहरंपरम् ॥ ब्रह्मणोवयसायस्यनिमेषउपचर्यते ॥ २३ ॥ सचाऽऽत्मासपरंब्रह्मकृष्णइत्यभिधीयते ॥ कृषिस्तद्भक्तिवचनोनश्चतद्दास्यवाचकः ॥ २४ ॥ भक्तिदास्यप्रदातायःसचकृष्णःप्रकीर्तितः ॥ कृषिश्चसर्ववचनोनकारोबीजमेवच ॥ २५ ॥ सकृष्णःसर्वस्रष्टाऽऽदौसिसृक्षन्नेकएवच ॥ सृष्ट्युन्मुखस्तदंशेनकालेनप्रेरितःप्रभुः ॥ २६ ॥

आद्यच् । पृषोदरादित्वात्पकारश्रवणम् ॥ २४ ॥ तत्फलितमाह । भक्तिदास्येति ॥ व्युत्पत्त्यंतरमाह । कृषिश्चेति ॥ कृष्यतेआकृष्यतेकारणादुत्पत्तिकालेइतिकृट्सर्वंजगत् ॥ कर्मणि क्किप्।बाहुलकात् णीञ्प्रापणेइत्यस्मात्डप्रत्ययेनयतिकार्यात्मतांप्रापयतिसनोबीजंकारणमित्यर्थः॥ कृषिश्चेति॥ कृषःसर्वकार्यप्रपंचस्यनःबीजमित्यर्थः॥२५॥फलितमाह।सकृष्णइति॥ सकृष्णइत्यभिधीयतइतिशेषः ॥ एतावत्पर्यंतंवैष्णवंमतमुपपादितम् ॥ तत्रवैष्णवास्तन्नमन्वतइत्यनेनबोधितयाऽरुच्यैवमत्तिरस्कारोदर्शितः ॥ तत्रयुक्तिस्त्वित्थम्॥नह्यस्माभिश्चंद्रसू र्यतेजोवद्ब्रह्मतेजःस्वीक्रियते । येनतदाश्रयस्याकांक्षास्यात्॥किंतुशुद्धत्वात्तेजःसदृशंस्वयंप्रकाशंज्ञानरूपमेवतेजःपदेनोच्यते॥नहितस्यसर्वाधारस्याधारापेक्षास्ति॥अनवस्थापत्तेः ॥ सभ गवःकस्मिन्प्रतिष्ठितः स्वेमहिम्नीतिश्रुत्याचनिराधारस्यैवात्मनःप्रतिपादनात् ॥ किंचयामूर्तिःसावयवाभवद्भिःस्वीक्रियते तस्यानित्यत्वंनस्यात् ॥ यद्यत्सावयवंतत्तन्नश्वरमितिव्याप्तेः॥ किंचयाभवतामभिमतामूर्तिःसाकिंपांचभौतिकीवातद्रहितावा ॥ यदिपांचभौतिकीतदाऽनित्यत्वप्रसंगः।यदितद्रहितातर्हितस्याहृश्यत्वाभावःस्यात्॥ तथाचतस्याःसत्त्वेप्रमाणाभावः ॥

नचवेदएवकृष्णमूर्तेर्ब्रह्मत्वप्रतिपादकःप्रमाणमितिचेन्न॥ कृष्णमूर्त्यंतर्गतब्रह्मरूपप्रतिपादकत्वेनाऽपिवेदवाक्यस्यविषयलाभेनचारितार्थ्यात् ॥ अतएवसर्वंखल्विदंब्रह्मेतिसामानाधिकरण्य
प्रतिपादकश्रुतिश्चरितार्था ॥ किंचभवद्भिःकृष्णमूर्तिप्रतिपादिकायाश्रुतिरुच्यते साकिमुपासनाकांडस्थावाज्ञानकांडस्था । यद्युपासनाकांडस्थातर्हिसर्वश्रुतीनामुपक्रमोपसंहारादिषड्वि
धतात्पर्यलिंगेनाऽद्वैतेब्रह्मणिसमन्वयान्निर्गुणब्रह्मप्रतिपादकश्रुतिभ्योह्युपासनाकांडस्थश्रुतीनांदुर्बलत्वात्तन्मूर्त्यंतर्गतब्रह्मवर्णनप्रतिपादनेनापितासांश्रुतीनांसार्थक्याच्चनतदुक्तार्थेप्रामाण्य
म् ॥ यदिज्ञानकांडस्थातदपिनसंभवति । नहिज्ञानकांडेब्रह्मरूपंनिर्गुणंविहायकचिदपिसगुणंरूपंसावयवंपरिच्छिन्नंप्रतिपादितमस्ति ॥ तस्मान्मूलप्रकृतेर्हिरण्यगर्भोत्पत्तिद्वारापंचम
हाभूतसृष्ट्युत्तरंपंचमहाभूतांशमादायहिरण्यगर्भरूपाभगवतीनानारूपाणिधारयामासेत्येवसर्वश्रुतिसिद्धांतः ॥ तदुक्तंनृसिंहतापनीयेंतिमेखंडे ॥ उपद्रष्टाऽनुमंतैषआत्मासिंहश्चिद्रूपए
वाऽविकारोह्युपलब्धासर्वत्रनह्यस्तिद्वैतसिद्धिरात्मैवसिद्धोऽद्वितीयोमाययाह्यन्यदिवसवाएषआत्मापरएवैषसर्वंतथाहिप्राज्ञेसैषाविद्याजगत्सर्वमात्मापरमात्मैवस्वप्रकाशोप्यविषयज्ञानत्वा
ज्जानन्नेवह्यत्रनविजानात्यनुभूतेर्मायाचतमोरूपानुभूतेरित्यादिं ॥ एवमेवैषामायास्वाऽव्यतिरिक्तानिक्षेत्राणिदर्शयित्वा जीवेशावाभासेनकरोति । मायाचाऽविद्याचस्वयमेवभवति ।
सैषाचित्रासुदृढावह्वंकुरागुणभिन्नांकुरेष्वपिगुणभिन्नासर्वत्रब्रह्मविष्णुशिवरूपिणीचैतन्यदीप्ता । तस्मादात्मनएवत्रैविध्यंसर्वत्रयोनित्वमप्यभिमंताजीवोनियंतेश्वरः ॥ सर्वाऽहंमानीहिरण्य
गर्भस्त्रिरूपईश्वरवद्व्यक्तचैतन्यःसर्वगोह्येषईश्वरः ॥ क्रियाज्ञानात्मासर्वंसर्वमयंसर्वेजीवाःसर्वमयाःसर्वावस्थासुतथाऽप्यल्पाःसवाएषभूतानींद्रियाणिविराजंदेवताःकोशांश्चसृष्ट्वाप्रविश्या
मूढोमूढइवव्यहरन्नास्ते माययैव । तस्मादद्वयएवात्मेति ॥ ननुतर्हिप्रथमाध्याये स्वेच्छामयस्येच्छयाचश्रीकृष्णस्यसिसृक्षया॥साविर्बभूवसहसामूलप्रकृतिरीश्वरीतिवाक्येश्रीकृष्णस्येति
कथमुक्तम्॥परमात्मनइच्छयेतिवक्तव्यमितिचेच्छृणु॥कृष्णशब्दोहियोगरूढयागोलोकवासिदेवतायांरूढः॥ केवलयोगार्थमादायतुपरमात्मनिप्रयुक्तः॥एवमेवसर्वेऽपिशब्दायोगरूढयात
त्तद्विशेषपदार्थवाचकाअपियोगार्थमादायसर्वेब्रह्मवाचकाअपिभवंतीतिनदोषः॥ननुतर्हिसाम्यावस्थमायोपाधिकसर्वकारणब्रह्मणःकिंमुख्यंयोगरूढंनामेतिचेदुच्यते ॥ केवलब्रह्मणोनिर्गुण
ब्रह्मप्रतिपादकश्रुतिषुसत्यंज्ञानमनंतंब्रह्मेत्यादिवाक्येषुप्रतिपादितानिसत्यंज्ञानमित्यादीनिनामानिमुख्यानि । तदतिरिक्तनामानिशिवविष्णुब्रह्मेत्यादीनियौगिकानि । तेषांतत्तद्गुणोपा
धिचैतन्येरूढत्वेनैकत्रक्लृप्तशक्त्यानिर्वाहेऽन्यत्रशक्तिकल्पनेप्रमाणाभावाद्गौरवाच्च ॥ तत्तद्गुणरूपोपाधिषुशिवविष्ण्वादिनाम्नांशक्तिस्तुमैत्रायणीयश्रुतावभिहिता ॥ योहखलुवावास्यसा
त्त्विकोंशःसविष्णुर्योहखलुवावास्यतामसोंशःसयोयंरुद्रइत्यादिवाक्यैः ॥ कृष्णादिशब्दास्तुरूढयाविष्णुतत्त्वस्यैववाचकाः ॥ तत्तदुपनिषत्सुतथैवप्रतिपादनात् ॥ सगुणशवलकारणब्र
ह्मणःसाम्यावस्थमायांतःप्रविष्टस्यतुमुख्याःशब्दामायाशक्तिप्रकृतिपराभगवतीदेवीत्यादयः॥ यथागजादिशरीरेप्रविष्टस्यचैतन्यस्यगजादिसंज्ञामुख्यास्तद्वत् ॥ तदुक्तंश्वेताश्वतरे । देवा
त्मशक्तिंस्वगुणैर्निगूढामिति ॥ आत्मरूपांशक्तिमित्यर्थः ॥ सूतसंहितायांसौरसंहितायांकूर्मपुराणेच ॥ चिन्मात्राश्रयमायायाःशक्त्याकारेद्विजोत्तमाः ॥ अनुप्रविष्टायासंविन्निर्विक
ल्पास्वयंप्रभा ॥ साशिवापरमादेवीशिवाभिन्नाशिवंकरीति ॥ तस्मात्कारणब्रह्मणोऽपिमायाशक्त्यादिसंज्ञाएवमुख्याः । ब्रह्मविष्ण्वादिसंज्ञास्तुगौणाः ॥ तत्तद्गुणोपाधिषुतेषांशक्तेःक्लृप्त
त्वेनान्यत्रशक्तिकल्पनेप्रमाणाभावाद्गौरवाच्च ॥ तस्मात्कारणब्रह्मोपासकेनमायाशक्तिपरामूलप्रकृतिभगवतीदेवीत्यादिमुख्यशब्दैरेवकारणंब्रह्मोपास्यम् । नतुब्रह्मविष्ण्वादिशब्दैरित्ये
वतत्त्वम् अतएवकारणब्रह्मणःशक्तितत्त्वमितिसंज्ञाशैवसिद्धांतेप्रसिद्धा शाक्तदर्शनेचेत्यलमप्रसक्तानुप्रसक्त्या ॥ वस्तुतस्तुपूर्वत्रपरमात्मनइच्छयेत्येवपूर्ववचनार्थः ॥ श्रीकृष्णस्येत्यस्य
सिसृक्षयेत्यनेनान्वयइतिपूर्वंव्याख्यातंतदानकोपिदोषः ॥ इत्थंवैष्णवमतमरुच्याविनिंद्याऽधिष्ठातृदेवीनांदेवानां च साकारमूर्तीनांनिराकारब्रह्मणोमायाविशिष्टादुत्पत्तिमाह । सर्वस्रष्टाऽ
ऽदाविति ॥आदौप्रथमंसर्वस्रष्टामायाशबलःपरमेश्वरोऽपंचीकृतभूतात्मकहिरण्यगर्भोत्पत्तिद्वारापंचमहाभूतात्मकब्रह्मांडोत्पत्त्यनंतरमित्यर्थाद्बोध्यम् ॥ सिसृक्षन्सृष्टानांपदार्थानामधिष्ठातृ
देवताःस्रष्टुमिच्छन्परमात्मनोंशइवतस्मिन्विद्यमानेनकालेनप्रेरितःसन् ॥ २६ ॥

स्वेच्छामयोयतोभवतिततोहेतोःस्वेच्छयाशक्त्याऽर्धनारीश्वररूपेणाद्विधाबभूवेत्यर्थः ॥ तत्रस्वच्छामयेःस्वेच्छयेतिपदद्वयेनद्विधाभवनंप्रकृतेरेवकार्यम् ॥ तत्प्रकृतेःकार्यमात्मन्यारोपेणभा
त्युक्तंभवति ॥ तथाचाऽर्धनारीश्वररूपेणमूलप्रकृतिरेवपरिणामंप्राप्ताइत्यर्थः ॥ साचप्रकृतिश्चैतन्यरहितानैवतिष्ठतीतितदधिष्ठानंविवर्तकारणंसर्वत्राऽनुगतमेव ॥ २७ ॥ उत्पत्त्यनंतरं
वृत्तमाह । तांददर्शेति ॥ २८ ॥ चंद्रबिंबंविनिंद्यंयस्यतादृशमेकंमिलितंनितंबयुगलंयस्याः ॥ कदलीस्तंभोनिंदितोययाश्रोण्यालक्षणयाश्रोण्यधोभागेनसुंदरी ॥ २९ ॥ श्रीफलंबिल्व
फलम् ॥ मौलौपुष्पैर्जुष्टांसेविताम् ॥ ३० ॥ वक्रलोचनांकटाक्षवतीम् ॥ ३१ ॥ ३२ ॥ कस्तूरीबिंदुनेति ॥ सीमंतसन्निधौसिंदूरबिंदुस्तदधःकाश्मीरचंदनाबिंदुस्तदधःकस्तूरीतिफलितोर्थः ॥
॥ ३३ ॥ वक्रिमंकुटिलम् ॥ कबरीकेशसन्निवेशः ॥ ३४ ॥ पुष्टशोभापूर्णशोभा ॥ राजहंसगजयोर्गर्वस्यगमनाभिमानस्यविनाशिनीम् ॥ ३५ ॥ ३६ ॥ शृंगारंकुर्वन्नितिशेषः ॥ आब्र

स्वेच्छामयःस्वेच्छयाचद्विधारूपोबभूवह ॥ स्त्रीरूपोवामभागांशोदक्षिणांशःपुमान्स्मृतः ॥ २७ ॥ तांददर्शमहाकामीकामाधारांसनातनः ॥
अतीवकमनीयांचचारुपंकजसन्निभाम् ॥ २८ ॥ चंद्रबिंबविनिंद्यैकनितंबयुगलांपराम् ॥ सुचारुकदलीस्तंभनिंदितश्रोणिसुंदरीम् ॥ २९ ॥
श्रीयुक्तश्रीफलाकारस्तनयुग्ममनोरमाम् ॥ पुष्पजुष्टांसुवलितांमध्यक्षीणांमनोहराम् ॥ ३० ॥ अतीवसुंदरींशांतांसस्मितांवक्रलोचना
म् ॥ वह्निशुद्धांशुकाधारांरत्नभूषणभूषिताम् ॥ ३१ ॥ शश्वच्चक्षुश्चकोराभ्यांपिबंतींसततंमुदा ॥ कृष्णस्यमुखचंद्रंचचंद्रकोटिविनिंदित
म् ॥ ३२ ॥ कस्तूरीबिंदुनासार्धमधश्चंदनबिंदुना ॥ समंसिंदूरबिंदुंचभालमध्येचबिभ्रतीम् ॥ ३३ ॥ वक्रिमंकबरीभारंमालतीमाल्यभूषित
म् ॥ रत्नेंद्रसारहारंचदधतींकांतकामुकीम् ॥ ३४ ॥ कोटिचंद्रप्रभामृष्टपुष्टशोभासमन्विताम् ॥ गमनेनराजहंसगजगर्वविनाशिनीम् ॥ ३५ ॥
दृष्ट्वातांतुतयासार्धंरासेशोरासमंडले ॥ रासोल्लासेसुरसिकोरासक्रीडांचकारह ॥ ३६ ॥ नानाप्रकारशृंगारंशृंगारोमूर्तिमानिव ॥ चकारसु
खसंभोगंयावद्वैब्रह्मणोदिनम् ॥ ३७ ॥ ततःसचपरिश्रांतस्तस्यायोनौजगत्पिता ॥ चकारवीर्याधानंचनित्यानंदेशुभक्षणे ॥ ३८ ॥ गात्र
तोयोषितस्तस्याःसुरतांतेचसुव्रत ॥ निःससारश्रमजलंश्रांतायास्तेजसाहरेः ॥ ३९ ॥ महाक्रमणक्लिष्टायानिःश्वासश्चबभूवह ॥ तदावव्रेश्र
मजलंतत्सर्वंविश्वगोलकम् ॥ ४० ॥ सचनिःश्वासवायुश्चसर्वाधारोबभूवह ॥ निःश्वासवायुःसर्वेषांजीविनांचभवेषुच ॥ ४१ ॥ बभूवमूर्ति
मद्वायोर्वामांगात्प्राणवल्लभा ॥ तत्पत्नीसाचतत्पुत्राःप्राणाःपंचचजीविनाम् ॥ ४२ ॥ प्राणोपानःसमानश्चोदानव्यानौचवायवः ॥ बभूवुरेवत
त्पुत्राअधःप्राणाश्चपंचच ॥ ४३ ॥ घर्मतोयाधिदेवश्चबभूववरुणोमहान् ॥ तद्वामांगाच्चतत्पत्नीवरुणानीबभूवसा ॥ ४४ ॥

ह्मणोदिनपरिमितकालपर्यंतम् ॥ ३७ ॥ शुभक्षणेशुभकाले ॥ ३८ ॥ श्रमजलंघर्मजलम् ॥ ३९ ॥ महाक्रमणंमहालिंगनंपंचीकृतपंचमहाभूतात्मकंविश्वगोलकंपूर्वमेवजातम् । तत्सर्वंश्रमजलं
वव्रेआवृणोदित्यर्थः ॥ अतोपिज्ञापकात्पंचमहाभूतोत्पत्त्यनंतरमेवेयमधिष्ठातृदेवतानामुत्पत्तिरितिबोध्यम् ॥ ४० ॥ जीविनांप्राणिनाम् ॥ ४१ ॥ मूर्तिमद्वायोरित्यनेनतस्मिन्नेवसमयेप्रकृत्या
सर्वप्राणिनांनिःश्वासवायोरधिष्ठात्रीमूर्तिरपिप्रकटीकृतेतिबोध्यम् ॥ पत्नीचमूर्तिमती प्राणाःपंचपुत्राअपिपंचप्राणानामधिदेवामूर्तिरूपाएव ॥ ४२ ॥ अधःप्राणाःकनिष्ठाः । येप्राणाःनागादयः
पंचतेषामप्यधिदेवाःपंचतदैवोत्पादिताइत्याह । बभूवुरेवेति ॥ एतेदशप्राणाधिदेवावायुपत्नीतउत्पन्नाइत्यर्थः ॥ ४३ ॥ घर्मस्यतोयस्यचाधिदेवोवरुणोबभूवप्रकृत्याउत्पादितइत्यर्थः ॥ ४४ ॥

॥ ४५ ॥ ४६ ॥ डिंभंबालकम् ॥ ४७ ॥ व्यदूयतभयंकरंमहांतंबालकंदृष्ट्वाहृदयेनांतःकरणावच्छेदेनचकंपेइत्यर्थः ॥ यथाऽभिलषितसुकुमारबालकाभावप्रयुक्तसंजातकोपेनब्रह्मांडगो लकेयज्जलंतास्मिन्नुत्ससर्ज ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ जिह्वाग्रात्कृष्णवधूजिह्वाग्रादित्यर्थः ॥५२॥ ५३ ॥ साचेति ॥ कृष्णस्त्रीत्यर्थः ॥ ५४ ॥ ५५ ॥ वाणींजिह्वाग्राज्जाताम् । कृष्णोद्विभुजः ॥ अस्यचतुर्भुजनारायणस्य मानिनिराधाअत्रैवमन्निकटेएवस्थास्यति मत्पत्नीभाविष्यतीत्यर्थः ॥ यतोमानिनीततस्तवैतस्याश्चैकपातित्वेसामानाधिकरण्यंनसंभवेदित्यर्थः ॥ ५६ ॥ ताभ्यांलक्ष्मीसरस्वतीभ्याम् ॥ ५७ ॥ अनपत्येपूर्वोक्तशापाद्यतोराधांशसंभवेततः ॥ नारायणांगाद्वैकुंठाधिपतेश्चतुर्भुजात् ॥ ५८ ॥ ५९ ॥ गोलोकनाथस्यद्विभुजकृष्णस्यभूता

अथसाकृष्णचिच्छक्तिःकृष्णगर्भंदधारह ॥ शतमन्वंतरंयावज्ज्वलंतीब्रह्मतेजसा ॥ ४५ ॥ कृष्णप्राणाधिदेवीसाकृष्णप्राणाधिकप्रिया ॥ कृष्ण स्यसंगिनीशश्वत्कृष्णवक्षःस्थलस्थिता ॥ ४६ ॥ शतमन्वंतरांतेचकालेतीतेतुसुंदरी ॥ सुषावडिम्भंस्वर्णाभंविश्वाधारालयंपरम् ॥ ४७ ॥ दृष्ट्वा डिंभंचसादेवीहृदयेनव्यदूयत ॥ उत्ससर्जचकोपेनब्रह्मांडगोलकेजले ॥ ४८ ॥ दृष्ट्वाकृष्णश्चतत्त्यागंहाहाकारंचकारह ॥ शशापदेवींदेवेशस्तत्क्षणं चयथोचितम् ॥ ४९ ॥ यतोऽपत्यंत्वयात्यक्तंकोपशीलेचनिष्ठुरे ॥ भवत्वमनपत्याऽपिचाद्यप्रभृतिनिश्चितम् ॥ ५० ॥ यायास्त्वदंशरूपाश्च भविष्यंतिसुरस्त्रियः ॥ अनपत्याश्चताःसर्वास्त्वत्समानित्ययौवनाः ॥ ५१ ॥ एतस्मिन्नंतरेदेवीजिह्वाग्रात्सहसाततः ॥ आविर्बभूवकन्यैकाशुक्ल वर्णामनोहरा ॥ ५२ ॥ श्वेतवस्त्रपरीधानावीणापुस्तकधारिणी ॥ रत्नभूषणभूषाढ्यासर्वशास्त्राधिदेवता ॥ ५३ ॥ अथकालांतरेसाचद्विधारूपाब भूवह ॥ वामार्धांगाचकमलादक्षिणार्धाचराधिका ॥ ५४ ॥ एतस्मिन्नंतरेकृष्णोद्विधारूपोबभूवसः ॥ दक्षिणार्धश्चद्विभुजोवामार्धश्चचतुर्भुजः ॥ ५५ ॥ उवाचवाणींकृष्णस्तांत्वमस्यकामिनीभव ॥ अत्रैवमानिनीराधातवभद्रंभविष्यति ॥ ५६ ॥ एवंलक्ष्मींचप्रददौतुष्टोनारायणाचय ॥ सजगाम चवैकुंठेताभ्यांसार्धंजगत्पतिः ॥ ५७ ॥ अनपत्येचतेद्वेचजातेराधांशसंभवे ॥ भूतानारायणांगाच्चपार्षदाश्चचतुर्भुजाः ॥ ५८ ॥ तेजसावयसा रूपगुणाभ्यांचसमाहरे ॥ बभूवुःकमलांगाच्चदासीकोटचश्चतत्समाः ॥ ५९ ॥ अथगोलोकनाथस्यलोम्नांविवरतोमुने ॥ भूताश्चाऽसंख्यगोपा श्चवयसातेजसासमाः ॥ ६० ॥ रूपेणचगुणैनैवबलेनविक्रमेणच ॥ प्राणतुल्यप्रियाःसर्वेबभूवुःपार्षदाविभोः ॥ ६१ ॥ राधांगलोमकूपेभ्योबभू वुर्गोपकन्यकाः ॥ राधातुल्याश्चताः सर्वाराधादास्यःप्रियंवदाः ॥ ६२ ॥ रत्नभूषणभूषाढ्याःशश्वत्सुस्थिरयौवनाः ॥ अनपत्याश्चताःसर्वाः पुंसःशापेनसंततम् ॥ ६३ ॥ एतस्मिन्नंतरेविप्रसहसाकृष्णदेवता ॥ आविर्बभूवदुर्गासाविष्णुमायासनातनी ॥ ६४ ॥

जाताः ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ एतस्मिन्नंतरइति ॥ राधाकृष्णशरीरविभागसमयेविष्णोःपरमात्मनोमायाशक्तिर्दुर्गारूपेणप्रादुर्बभूवेत्यर्थः ॥ यथालक्ष्मीसरस्वत्यौराधावतारौ तथादुर्गानराधावतारः ॥ किंतुमूलप्रकृतेरेवसाक्षादवतारइतिभावः ॥ लक्ष्मीसरस्वत्यौराधावतारावपिमूलप्रकृतेःपूर्णावतारावेव प्रथमाध्यायस्थवचनात् ॥ साक्षान्मूलप्रकृतेर्दुर्गा । राधातस्तुलक्ष्मीसरस्वत्याविर्त्येतावानेवविशेषः ॥ ६४ ॥

साक्षादवतारत्वेनाधिकंमहिमानंदुर्गायावर्णयति । देवीत्यादिना ॥ नारायणीलक्ष्मीस्तत्स्वरूपत्वादियमपिनारायणी ॥ बुद्ध्यधिष्ठात्री अत्रबुद्धिशब्देनांतःकरणंपरमात्मनोगृह्यते ॥
सरस्वत्याःपृथग्बुद्ध्यधिष्ठातृत्वेनाभिधानात्परमात्मनइत्युपलक्षणंव्यष्टिजीवानामपि ॥ तथाचसमष्टिव्यष्ट्यंतःकरणाधिष्ठात्रीदुर्गेत्यर्थः ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ लोकाःब्रह्मा
दयः माययायस्यामाययेत्यर्थः ॥ तेनमायाविशिष्टब्रह्मरूपिणीयमितिस्पष्टमेवोक्तंभवति ॥ ६९ ॥ कृष्णभक्तिप्रदात्रीकृष्णशब्दोयौगिकार्थेनपरमात्मवाचकः ॥ तथाचस्वस्वरूपभूत

देवीनारायणीशानासर्वशक्तिस्वरूपिणी ॥ बुद्ध्यधिष्ठात्रीदेवीसाकृष्णस्यपरमात्मनः ॥ ६५ ॥ देवीनांबीजरूपाचमूलप्रकृतिरीश्वरी ॥ परिपूर्णतमातेजःस्वरूपात्रिगुणात्मिका ॥ ६६ ॥ तप्तकांचनवर्णाभाकोटिसूर्यसमप्रभा ॥ ईषद्धास्यप्रसन्नास्यासहस्रभुजसंयुता ॥ ६७ ॥ नानाशस्त्रास्त्रनिकरंबिभ्रतीसात्रिलोचना ॥ वह्निशुद्धांशुकाधानारत्नभूषणभूषिता ॥ ६८ ॥ यस्याश्चांशांशकलयाबभूवुःसर्वयोषितः ॥ सर्वेविश्वस्थितालोकामोहिताःस्युश्चमायया ॥ ६९ ॥ सर्वैश्वर्यप्रदात्रीचकामिनांगृहवासिनाम् ॥ कृष्णभक्तिप्रदायाचवैष्णवानांचवैष्णवी ॥ ७० ॥ मुमुक्षूणांमोक्षदात्रीसुखिनांसुखदायिनी ॥ स्वर्गेषुस्वर्गलक्ष्मीश्चगृहलक्ष्मीर्गृहेषुच ॥ ७१ ॥ तपस्विषुतपस्याचश्रीरूपातुनृपेषुच ॥ यावह्नौदाहिकारूपाप्रभारूपाचभास्करे ॥ ७२ ॥ शोभारूपाचचंद्रेचसापद्मेषुचशोभना ॥ सर्वशक्तिस्वरूपायाश्रीकृष्णेपरमात्मनि ॥ ७३ ॥ ययाचशक्तिमानात्माययाचशक्तिमज्जगत् ॥ ययाविनाजगत्सर्वंजीवन्मृतमिवस्थितम् ॥ ७४ ॥ याचसंसारवृक्षस्यबीजरूपासनातनी ॥ स्थितिरूपाबुद्धिरूपाफलरूपाचनारद ॥ ७५ ॥ क्षुत्पिपासादयारूपानिद्रातंद्राक्षमामतिः ॥ शांतिलज्जातुष्टिपुष्टिभ्रांतिकांत्यादिरूपिणी ॥ ७६ ॥ साचसंस्तूयसर्वेशंतत्पुरःसमुवासह ॥ रत्नसिंहासनंतस्यैप्रददौराधिकेश्वरः ॥ ७७ ॥ एतस्मिन्नंतरेतत्रसस्त्रीकश्चचतुर्मुखः ॥ पद्मनाभेर्नाभिपद्मान्निस्ससारमहामुने ॥ ७८ ॥ कमंडलुधरःश्रीमांस्तपस्वीज्ञानिनांवरः ॥ चतुर्मुखैस्तंतुष्टावप्रज्वलन्ब्रह्मतेजसा ॥ ७९ ॥ सातदासुंदरीसृष्टाशतचंद्रसमप्रभा ॥ वह्निशुद्धांशुकाधानारत्नभूषणभूषणा ॥ ८० ॥ रत्नसिंहासनेरम्येसंस्तूयसर्वकारणम् ॥ उवासस्वामिनासार्धंकृष्णस्यपुरतोमुदा ॥ ८१ ॥ एतस्मिन्नंतरेकृष्णोद्विधारूपोबभूवसः ॥ वामार्धांगोमहादेवोदक्षिणेगोपिकापतिः ॥ ८२ ॥ शुद्धस्फटिकसंकाशःशतकोटिरविप्रभः ॥ त्रिशूलपट्टिशधरोव्याघ्रचर्मांबरोहरः ॥ ८३ ॥ तप्तकांचनवर्णाभोजटाभारधरः परः ॥ भस्मभूषितगात्रश्चसस्मितश्चंद्रशेखरः ॥ ८४ ॥ दिगंबरोनीलकंठः सर्पभूषणभूषितः ॥ बिभ्रद्दक्षिणहस्तेनरत्नमालांसुसंस्कृताम् ॥ ८५ ॥

परमात्मनोभक्तेर्दात्रीत्यर्थः ॥ वैष्णवानामुपास्यावैष्णवीलक्ष्मीस्तद्रूपेत्यर्थः ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ सर्वेशंमूलप्रकृतेःपूर्णावतारंस्वस्मात्प्रथमतःप्रादुर्भूतं
वयसाधिकंश्रीकृष्णंसंस्तूयेत्यर्थः ॥ ७७ ॥ निःससारेतिसस्त्रीकःसावित्रीस्त्रियासहितउत्पन्नइत्यर्थः ॥ ७८ ॥ तंस्वापेक्षयावयसाज्ञानेनचाधिकंश्रीकृष्णंतुष्टावेत्यर्थः ॥ ७९ ॥ ८० ॥ ८१ ॥
एकएवकृष्णोद्विधाभूतइत्यर्थः ॥ ८२ ॥ ८३ ॥ ८४ ॥ रत्नमालांरत्ननिर्मितांजपोपयोगिनीमक्षमालांसुसंस्कृतांमालासंस्कारोदितविधिनासुसंस्कृतांदक्षिणहस्तेनबिभ्रत् ॥ ८५ ॥

ब्रह्मज्योतिर्मायाशबलसर्वकारणमूलप्रकृत्यात्मकब्रह्मज्योतिर्मंत्रंप्रणवमायाबीजादिरूपंजपन्नित्यर्थः ॥ सत्यस्वरूपंश्रीकृष्णंसंस्तूयेत्यन्वयः ॥ ८६ ॥ ८७ ॥ यतःश्रीकृष्णोमृत्योरपिमृत्युर्मारकस्ततस्तदभिन्नस्यशिवस्यापिमृत्युंजयेतिसंज्ञाइत्यर्थः॥अत्रदुर्गास्त्रीत्वेनमहादेवायदत्ताश्रीकृष्णेनेत्येतदनुक्तमपिनारदपुराणादवगंतव्यम् ॥८८॥ इति श्रीदेवीभागवततिलकेनवमस्कन्धेद्वितीयोऽध्यायः ॥ २ ॥ द्विषष्टिश्लोकवर्यैश्चमृष्टंयद्देवतादिकम् ॥ व्यवास्थितिस्तस्यसम्यग्यथावदभिधीयते ॥ १ ॥ अथडिंभइति ॥ डिंभोऽपिबालिशेबालेइतिमेदिनीकोशात् ॥ डिंभोबालोयोराधयापूर्वंस्वस्माज्जातोजलेप्रक्षिप्तः सयावद्ब्रह्मणोवयस्तावत्परिमितकालपर्यंतंजलेतिष्ठन् ॥ ततःसबालकःकालेपरिपूर्णसमयेजातेसतिद्विधाभूतोबभूव ॥ तदंडंनिर्भिद्य बहिर्निर्गतइत्यर्थः ॥ अनेनचग्रन्थेनपूर्वंराधायाउदरात्पक्ष्यंडवदंडरूपेणनिर्गतः ॥ सचबृहदंडरूपोभयात्तयाजलेक्षिप्तस्तदंडंबहुनाकालेनपुनर्भिन्नंसद्द्विधाजातंतन्मध्येपुरुषोबालकरूपोऽयं स्थितइतिप्रतिभाति ॥ पुराणांतरेतदंडमुदकेशयमित्यादिनातथैवप्रतिपादनाच्च ॥१॥ तदेवाऽऽह । तन्मध्येशिशुरेकश्चेति ॥ स्तनांधइतिस्तनावेवांधोभक्ष्यमन्नंयस्यसःस्तनांधःमात्रात्य

प्रजपन्पंचवक्त्रेणब्रह्मज्योतिःसनातनम् ॥ सत्यस्वरूपंश्रीकृष्णंपरमात्मानमीश्वरम् ॥८६॥ कारणंकारणानांचसर्वमंगलमंगलम्॥जन्ममृत्युजराव्याधिशोकभीतिहरंपरम् ॥८७॥ संस्तूयमृत्योर्मृत्युंतंयतोमृत्युंजयाभिधः॥रत्नसिंहासनेरम्येसमुवासहरःपुरः॥८८॥इति श्रीदेवीभागवतेमहापुराणेनवमस्कन्धेद्वितीयोऽध्यायः ॥ २ ॥ श्रीनारायणउवाच ॥ अथडिंभोजलेतिष्ठन्यावद्वैब्रह्मणोवयः ॥ ततःसकालेसहसाद्विधाभूतोबभूवह ॥ १ ॥ तन्मध्ये शिशुरेकश्चशतकोटिरविप्रभः ॥ क्षणंरोरूयमाणश्चस्तनांधःपीडितःक्षुधा ॥ २ ॥ पित्रामात्रापरित्यक्तोजलमध्येनिराश्रयः ॥ ब्रह्मांडासंख्यनाथोयोददर्शोर्ध्वमनाथवत् ॥ ३ ॥ स्थूलात्स्थूलतमःसोऽपिनाम्नादेवोमहाविराट् ॥ परमाणुर्यथासूक्ष्मात्परः स्थूलात्तथाऽप्यसौ ॥ ४ ॥ तेजसाषोडशांशोऽयंकृष्णस्यपरमात्मनः ॥ आधारःसर्वविश्वानांमहाविष्णुश्चप्राकृतः ॥ ५ ॥ प्रत्येकंलोमकूपेषुविश्वानिनिखिलानि च॥अस्याऽपितेषांसंख्यांचकृष्णोवक्तुंनहि क्षमः ॥ ६ ॥ संख्याचेद्रजसामस्तिविश्वानांनकदाचन ॥ ब्रह्मविष्णुशिवादीनांतथासंख्यानविद्यते ॥ ७ ॥ प्रतिविश्वेषुसंत्येवंब्रह्मविष्णुशिवादयः ॥ पातालाद्ब्रह्मलोकांतंब्रह्मांडंपरिकीर्तितम्॥८॥ततऊर्ध्वंचवैकुंठोब्रह्मांडाद्बहिरेवसः ॥ ततऊर्ध्वंचगोलोकःपंचाशत्कोटियोजनः ॥ ९ ॥

क्त्वास्तनपानरहितः ॥ क्षुधाक्षुधयापीडितोरोरूयमाणः पुनःपुनःरोदनकर्ताभवदित्यर्थः ॥ २ ॥ अनाथवदितिसर्वेश्वरादुत्पन्नःस्वयमसंख्यब्रह्मांडनाथःसन्नपिएतादृशींदुर्दशांप्राप्तवांस्तदाऽन्यस्यकाकथाऽस्मिन्संसारे ॥ तस्माद्विगयंसंसाराद्विरज्येतेत्युक्तंभवति ॥ ऊर्ध्वंददर्शकोममपालयितास्यादित्यभिप्रायेण ॥ ३ ॥ परमाणुरिति ॥ यथापरमाणुःसूक्ष्मादपिपरःसूक्ष्मस्तद्वदयंस्थूलात्स्थूलइत्यर्थः ॥ ४ ॥ अयंविराट्कृष्णस्यषोडशांशोभवतीत्याह । तेजसेति ॥ शक्त्येत्यर्थःप्राकृतःराधाप्रकृतेरुत्पन्नः ॥ ५ ॥ विराजंवर्णयति ॥ प्रत्येकमिति ॥ सर्वस्यस्थूलसमष्टिप्रपंचस्याधिपतित्वादेतद्वर्णनंयुक्तमेव ॥६॥ संख्याचेदिति॥ चेदितिनिपातोयथाशब्दार्थकः ॥ यथाविश्वानांविश्वसंबंधिरजसांयथासंख्यानकदाचनास्ति ॥तथाऽस्यशरीरेविद्यमानानांब्रह्मविष्णुशिवादीनांसंख्यानविद्यतइत्यर्थः।७॥प्रतिविश्वेषुप्रतिब्रह्मांडेषुयतःसंतिततस्तेषांसंख्याननंविद्यतइत्यभिप्रायः॥प्रसंगेनब्रह्मांडस्वरूपमाह॥पातालादिति॥८॥९॥

तथाऽप्ययंतथैवाऽयम् ॥ प्राकृतप्रलयपर्यंतमेतस्यावस्थानान्नित्यत्वंनतुपरमार्थतोनित्यत्वम् ॥ एकमेवाद्वितीयंब्रह्मेतिश्रुतिविरोधात् ॥ ब्रह्मांडस्वरूपंविशदयति । सप्तद्वीपेति ॥ १० ॥
॥ ११ ॥ १२॥ १३ ॥ १४ ॥ तद्विनाशेब्रह्मांडविनाशेजलबुद्बुदवन्मायिकत्वात् ॥ १५ ॥ नित्याविति ॥ प्रलयपर्यंतमवस्थितत्वात् ॥ १६ ॥ १७ ॥ १८ ॥ चराचराः ॥ एतत्सर्वं
ब्रह्मांडांतर्गतमेवाऽस्तीत्यर्थः ॥ १९ ॥ ऊर्ध्वंदृष्ट्वाडिंभस्यांतरेअंडस्यांतरेमध्येशून्यमेवददर्शद्वितीयंकिंचननददर्शेत्यर्थः ॥ २० ॥ ज्ञानंप्राप्येति ॥ पूर्वकल्पस्थएवकश्चिज्जीवोज्ञानकर्म

नित्यःसत्यस्वरूपश्चयथाकृष्णस्तथाऽप्ययम् ॥ सप्तद्वीपमितापृथ्वीसप्तसागरसंयुता ॥ १० ॥ ऊनपंचाशदुपद्वीपासंख्यशैलवनान्विता ॥
ऊर्ध्वंसप्तस्वर्गलोकाब्रह्मलोकसमन्विताः॥ ११॥पातालानिचसप्ताधश्चैवंब्रह्मांडमेवच॥ऊर्ध्वंधरायाभूर्लोकोभुवर्लोकस्ततःपरम्॥ १२॥ ततःपरश्च
स्वर्लोकोजनलोकस्तथापरः ॥ ततःपरस्तपोलोकस्सत्यलोकस्ततःपरः ॥ १३ ॥ ततःपरंब्रह्मलोकस्तप्तकांचनसन्निभः ॥ एवंसर्वंकृत्रिमंचबा
ह्याभ्यंतरमेवच ॥ १४ ॥ तद्विनाशेविनाशश्चसर्वेषामेवनारद ॥ जलबुद्बुदवत्सर्वंविश्वसंघमनित्यकम् ॥ १५ ॥ नित्यौगोलोकवैकुंठौप्रोक्तौ
शश्वदकृत्रिमौ ॥ प्रत्येकंलोमकूपेषुब्रह्मांडंपरिनिश्चितम् ॥ १६ ॥ एषांसंख्यांनजानातिकृष्णोऽन्यस्याऽपिकाकथा ॥ प्रत्येकंप्रतिब्रह्मांडंब्रह्म
विष्णुशिवादयः ॥ १७ ॥ तिस्रःकोट्यःसुराणांचसंख्यासर्वत्रपुत्रक ॥ दिगीशाश्चैवदिक्पालानक्षत्राणिग्रहादयः ॥ १८ ॥ भुविवर्णाश्चचत्वारो
ऽप्यधोनागाश्चगचराः ॥ अथकालेत्रसविराडूर्ध्वंदृष्ट्वापुनःपुनः ॥ १९ ॥ डिंभांतरेचशून्यंचनद्वितीयंचकिंचन ॥ चिंतामवापक्षुद्युक्तोरुरोदच
पुनःपुनः ॥ २०॥ ज्ञानंप्राप्यतदादध्यौकृष्णंपरमपूरुषम् ॥ ततोददर्शतत्रैवब्रह्मज्योतिःसनातनम् ॥ २१ ॥ नवीनजलदश्यामंद्विभुजंपीतवा
ससम् ॥ सस्मितंमुरलीहस्तंभक्तानुग्रहकातरम् ॥२२॥ जहासबालकस्तुष्टोदृष्ट्वाजनकमीश्वरम् ॥ वरंतदाददौतस्मैवरेशःसमयोचितम् ॥२३॥
मत्समोज्ञानयुक्तश्चक्षुत्पिपासादिवर्जितः ॥ ब्रह्मांडासंख्यनिलयोभववत्सलयावधि ॥ २४ ॥ निष्कामोनिर्भयश्चैवसर्वेषांवरदोभव ॥ जरामृ
त्युरोगशोकपीडादिवर्जितोभव ॥ २५ ॥ इत्युक्त्वातस्यकर्णेसमहामंत्रंषडक्षरम् ॥ त्रिःकृत्वश्चप्रजजापवेदांगप्रवरंपरम् ॥ २६ ॥ प्रणवादिंच
तुर्थ्यंतंकृष्णइत्यक्षरद्वयम् ॥ वह्निजायांतमिष्टंचसर्वविघ्नहरंपरम् ॥ २७ ॥ मंत्रंदत्त्वातदाहारंकल्पयामासवैविभुः ॥ श्रूयतांतद्ब्रह्मपुत्रनिबोधक
थयामिते ॥ २८ ॥ प्रतिविश्वंयन्नैवेद्यंददातिवैष्णवोजनः ॥ तत्षोडशांशोविषयिणोविष्णोःपंचदशाऽस्यवै ॥ २९ ॥

वशात्प्रजापतिभावमापद्यतइति सोबिभेत्सनैवरेमेइत्यादिनाबृहदारण्यकेप्रतिपादितम् ॥ तथाचसजीवोबालकःपूर्वकृतश्रवणपरिपाकेनतत्संस्कारवशादस्तिकश्चिदीश्वरइतिस्मृत्वातं
दध्यौध्यातवानित्यर्थः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ प्रणवादीति ॥ वह्निजायास्वाहाॐकृष्णायस्वाहेत्येवंमंत्रः ॥ २७॥१८ ॥ प्रतिविश्वमिति ॥ प्रतिविश्वंप्रतिब्रह्मां
डंयोवैष्णवोजनोनैवेद्यंददातितस्यषोडशांशोविषयिणोविषयोवैकुंठरूपोदेशस्तद्वतस्तत्पतेर्विष्णोः ॥ कल्पितइतिशेषः ॥ पंचदशभागाअस्यविराट्पुरुषस्यकल्पिताइतिशेषः ॥ २९ ॥

स्वस्यनित्यतृप्तत्वान्नस्वार्थंनैवेद्यंकाल्पितामित्याह । निर्गुणस्येति॥३०॥ सचेतिसचलक्ष्मीनाथोवैकुंठपतिर्विष्णुर्विराट्चेत्यर्थः ॥३१॥३२ ॥३३ ॥ ३४ ॥३५ ॥३६ ॥ येनात्मनाऽयंजीवो
जीवितस्तमेवात्मानंनहिमन्यतेयस्तस्यजीवितंकृतघ्नस्येवव्यर्थमित्यर्थः ॥ ३७ ॥ आत्मनांजीवितत्वमेवोपपादयति । यावदात्मेति ॥ ३८ ॥ सचत्वंचेति ॥ हेकृष्णसचात्मात्वमेवासी
त्यर्थः ॥ ३९ ॥ ४० ॥ ब्रह्मणोसंख्यपातेचेति ॥ अनेकब्रह्मदेवपातेनाशेपितवनाशोनभविष्यतीत्यर्थः ॥ अनेकब्रह्मांडाभिप्रायेणेयमुक्तिः ॥ ४१ ॥ अंशेनेति ॥ त्वंस्वांशेनप्रतिब्रह्मांडं
क्षुद्रविराडल्पोविराड्भव । प्रतिब्रह्मांडंभिन्नोभिन्नोविराड्रूपोभवेत्यर्थः ॥ तेनचायंविराडनेककोटिब्रह्मांडांतर्गतविराडरूपाणांसमष्टिराधिपतिरस्तीतिबोधितम् ॥ ४२॥४३ ॥ तेषुएका

निर्गुणस्यात्मनश्चैवपरिपूर्णतमस्यच ॥ नैवेद्यंचैवकृष्णस्यनहिकिंचित्प्रयोजनम् ॥ ३० ॥ यद्यद्ददातिनैवेद्यंतस्मैदेवाययोजनः ॥ सचखादति
तत्सर्वंलक्ष्मीनाथोविराट्तथा ॥ ३१ ॥ तंचमंत्रवरंदत्त्वातमुवाचपुनर्विभुः ॥ वरमन्यंकिमिष्टंतेतन्मेब्रूहिददामिच ॥ ३२ ॥ कृष्णस्यवचनंश्रु
त्वातमुवाचविराड्विभुः ॥ कृष्णंतंबालकस्तावद्वचनंसमयोचितम् ॥ ३३ ॥ बालकउवाच ॥ वरोमेत्वत्पदांभोजेभक्तिर्भवतुनिश्चला ॥ सततं
यावदायुर्मेक्षणंवासुचिरंचवा ॥ ३४ ॥ त्वद्भक्तियुक्तलोकेऽस्मिञ्जीवन्मुक्तश्चसंततम् ॥ त्वद्भक्तिहीनोमूर्खश्चजीवन्नपिमृतोहिसः ॥ ३५ ॥ किंत
ज्जपेनतपसायज्ञेनपूजनेनच ॥ व्रतेनचोपवासेनपुण्येनतीर्थसेवया ॥ ३६ ॥ कृष्णभक्तिविहीनस्यमूर्खस्यजीवनंवृथा ॥ येनात्मनाजीवितश्च
तमेवनहिमन्यते ॥ ३७ ॥ यावदात्माशरीरेऽस्तितावत्सशक्तिसंयुतः ॥ पश्चाद्यांतिगतेतस्मिन्स्वतंत्राःसर्वशक्तयः ॥ ३८ ॥ सचत्वंचमहाभा
गसर्वात्माप्रकृतेःपरः ॥ स्वेच्छामयश्चसर्वाद्योब्रह्मज्योतिःसनातनः ॥ ३९ ॥ इत्युक्त्वाबालकस्तत्रविरराममचनारद ॥ उवाचकृष्णःप्रत्युक्तिं
मधुरांश्रुतिसुन्दरीम्॥४०॥श्रीकृष्णउवाच ॥ सुचिरंसुस्थिरंतिष्ठयथाऽहंत्वंतथाभव॥ब्रह्मणोऽसंख्यपातेचपातस्ते न भविष्यति॥४१॥अंशेनप्र
तिब्रह्मांडेत्वंचक्षुद्रविराड्भव ॥ त्वन्नाभिपद्माद्ब्रह्माचविश्वस्रष्टाभविष्यति॥४२॥ललाटेब्रह्मणश्चैवरुद्राश्चैकादशैवते ॥ शिवांशेनभविष्यंतिसृष्टिसं
हरणायवै ॥ ४३ ॥ कालाग्निरुद्रस्तेष्वेकोविश्वसंहारकारकः ॥ पाताविष्णुश्चविषयीरुद्रांशेनभविष्यति ॥ ४४ ॥मद्भक्तियुक्तःसततंभविष्यसिव
रेणमे ॥ ध्यानेनकमनीयंमांनित्यंद्रक्ष्यसिनिश्चितम् ॥ ४५ ॥ मातरंकमनीयांचममवक्षःस्थलस्थिताम् ॥ यामिलोकंतिष्ठवत्सेत्युक्त्वासोंतर
धीयत ॥ ४६ ॥ गत्वास्वलोकंब्रह्माणंशंकरंसमुवाचह ॥ स्रष्टारंस्रष्टुमीशंचसंहर्तुंचैवतत्क्षणम् ॥ ४७ ॥ श्रीभगवानुवाच ॥ सृष्टिंस्रष्टुंगच्छव
त्सनाभिपद्मोद्भवोभव ॥ महाविराड्लोमकूपेक्षुद्रस्यचविधेशृणु ॥ ४८ ॥

दशरुद्रेषुएकःकालाग्निरुद्रइत्यर्थः ॥ विषयीविषयभोगवान् ॥ क्षुद्रांशेनअल्पांशेन ॥४४॥४५॥यामिति ॥ हेवत्सत्वमत्रतिष्ठ अहंलोकंस्वलोकंगोलोकंयामिगच्छामीत्युक्त्वासकृष्णोंतर
धीयतांतर्धानंगतवानित्यर्थः ॥४६॥ स्वलोकंगत्वास्रष्टारंब्रह्माणंस्रष्टुंशंकरमीशंसंहर्तुंचोवाचेत्यर्थः ॥ इमौब्रह्मशंकरौयौपूर्वंकृष्णशरीरान्निर्गतौताविति बोध्यम् ॥ ४७ ॥ किमुवाचतदाह
सृष्टिंस्रष्टुमिति॥ प्रतिब्रह्मांडयेविराट्पुरुषाअसंख्याः संतितेषांनाभिपद्मोद्भवोभव । नाभिपद्मादुत्पन्नोभव॥किमर्थम् । सृष्टिंस्रष्टुमुत्पादयितुम् ॥ तेविराट्पुरुषाःकसंतितत्राह महाविरा
डिति ॥ सर्वविराड्रूपाणांसमष्टिभूतोयोमहाविराट्तस्यलोमकूपेषुयान्यनेकानिब्रह्मांडानितत्रयोयःक्षुद्रविराट्तस्यनाभिपद्मेंशेनहेविधेत्वंभवइदंमद्वचनंत्वंशृण्वित्यर्थः ॥ ४८ ॥

शिवंप्रत्याह । गच्छेति ॥ हेशिववत्सअनेकब्रह्मांडांतर्गतानेकब्रह्मदेवललाटात्त्वमंशेनजगत्संहर्तुमुत्पन्नोभव ॥ स्वयंचत्वंसुचिरंबहुकालंतप तपश्चर्यांचकुर्वित्यर्थः ॥४९॥ विधेःसुत हे नारद ॥५०॥ इदं ब्रह्मरुद्रौप्रतियथोक्तवांस्तथाचतुर्भुजमपीविष्णुपालनार्थमुक्तवानेवेदंचानुक्तमप्यथाद्बोध्यम्॥ पूर्वविराजंप्रतितथैवप्रतिज्ञानात् ॥तदुक्तमधुनैवपातविष्णुश्चविषयीक्षुद्रांशेनभविष्यतीति ॥ ब्रह्मरुद्रौयावत्कालपर्यंतंतत्रनगतौतततःपूर्वमेवमहाविराट्क्षुद्रविराड्रूपेणप्रतिब्रह्मांडंभिन्नोबभूवेत्याह । महाविराडिति ॥विराडंशेनस्वांशेनेत्यर्थः ॥५१॥ तस्यरूपमाह ॥ श्यामइति ॥५२॥ बभ्रामम्मूलशोधनार्थम् ॥५३॥पितातवेतिनारदंप्रत्युक्तिः ॥५४॥क्षुद्रंविराजम् ॥ ५५ ॥ महाविराजं तंचतत्परमीश्वरंक्षुद्रंविराजंचददर्शेत्यर्थः ॥ ५६ ॥ ॥५७॥५८॥ क्षुद्रस्यवामपार्श्वतः क्षुद्रविराजोवामभागादित्यर्थः ॥ सवामभागान्निर्गतोविष्णुःश्वेतद्वीपेऽवसन्निवासंकृतवानित्यर्थः ॥ ५९॥६० ॥ क्षुद्रविराडल्पविराट् ॥ ६१ ॥ अत्रेदंबोध्यम्॥प्रथमस्कन्धे तस्यास्तुसात्त्विकीशक्तीराजसीतामसी तथा ॥ महाकालीमहालक्ष्मीर्महासरस्वतीतिताःस्त्रियः ॥ तासांतिसृणांशक्तीनांदेहांगीकारलक्षणः ॥ सृष्ट्यर्थंचसमा

गच्छवत्समहादेवब्रह्मभालोद्भवोभव ॥ अंशेनचमहाभागस्वयंचसुचिरंतप ॥ ४९ ॥ इत्युक्त्वाजगतांनाथोविरराम विधेःसुत ॥ जगामब्रह्मातंनत्वाशिवश्चशिवदायकः ॥ ५० ॥ महाविराड्लोमकूपेब्रह्मांडगोलकेजले ॥ बभूवचविराट्क्षुद्रोविराडंशेनसांप्रतम् ॥ ५१ ॥ श्यामोयुवापीतवासाःशयानोजलतल्पके ॥ ईषद्धास्यःप्रसन्नास्योविश्वव्यापीजनार्दनः ॥५२॥ तन्नाभिकमलेब्रह्माबभूवकमलोद्भवः ॥ संभूयपद्मदंडेचबभ्रामयुगलक्षकम् ॥ ५३ ॥ नांतंजगामदंडस्यपद्मनालस्यपद्मजः ॥ नाभिजस्यचपद्मस्यचिंतामापपितातव ॥५४॥ स्वस्थानंपुनरागम्यदध्यौकृष्णपदांबुजम् ॥ ततोददर्शक्षुद्रंतंध्यानेनदिव्यचक्षुषा ॥५५॥ शयानंजलतल्पेचब्रह्मांडगोलकाप्लुते ॥ यल्लोमकूपेब्रह्मांडंतंक्तत्परमीश्वरम् ॥ ५६ श्रीकृष्णंचाऽपिगोलोकेगोपगोपीसमन्वितम् ॥ तंसंस्तूयवरंप्रापततःसृष्टिंचकारस ॥ ५७ ॥ बभूवुर्ब्रह्मणःपुत्रामानसाःसनकादयः ॥ ततोरुद्रकलाश्चाऽपिशिवस्यैकादशस्मृताः ॥ ५८ ॥ बभूवपाताविष्णुश्चक्षुद्रस्यवामपार्श्वतः ॥ चतुर्भुजश्चभगवान्श्वेतद्वीपेसचाऽवसत् ॥ ५९ ॥ क्षुद्रस्यनाभिपद्मेचब्रह्माविश्वंससर्जह ॥ स्वर्गंमर्त्यंचपातालंत्रिलोकींसचराचरम् ॥ ६० ॥ एवंसर्वलोमकूपेविश्वंप्रत्येकमेवच ॥ प्रतिविश्वेक्षुद्रविराड्ब्रह्मविष्णुशिवादयः ॥ ६१ ॥ इत्येवंकथितंब्रह्मन्कृष्णसंकीर्तनंशुभम् ॥ सुखदंमोक्षदंब्रह्मन्किंभूयःश्रोतुमिच्छसि ॥ ६२ ॥ इतिश्रीदेवीभागवतेमहापुराणेनवमस्कन्धेतृतीयोऽध्यायः ॥ ३ ॥

ख्यातःसर्गःशास्त्रविशारदैः ॥ हरिद्रुहिणरुद्राणामुत्पत्तिस्तुततःस्मृता।।पालनोत्पत्तिनाशार्थंप्रतिसर्गःस्मृतोहिसइत्यनेनप्रतिज्ञातोयःसर्गश्चप्रथमस्कन्धेपंचमस्कंधेचमधुकैटभवधमहिषासुरशुंभनिशुंभवधप्रसंगेनमहाकाल्याद्युत्पत्तिकथनेन तथातृतीयस्कन्धेगुणत्रयेणसमस्तजगतोऽपंचीकृतभूतमहाभूतसृष्टिकथनोत्तरंब्रह्मविष्ण्वाद्युत्पत्तिकथनेनतेषांसृष्टिस्थितिसंहृतिव्यापारेआज्ञाकरणेनचप्रतिपादितः।।पुनश्चलएवसर्गःप्रतिसर्गश्चकल्पांतरभेदेनभिन्नःप्रकारान्तरेणनवमस्कन्धेउच्यते ।।तन्निष्कर्षस्त्वित्थंप्रथमंमूलप्रकृतिर्मायाविशिष्टब्रह्मरूपिणीस्वतंत्रास्वेच्छयाप्राणिकर्मवशेनापंचीकृतपंचभूतोत्पत्त्यनंतरंपंचमहाभूतोत्पत्तिंतृतीयस्कन्धोक्तप्रकारेणेंद्रियप्राणांतःकरणानामुत्पत्तिंपंचमहाभूतांशान्गृहीत्वाऽनंतकोटिब्रह्मांडोत्पत्तिंचप्रथमंचकार ॥ततस्तेषांब्रह्मांडानामाधिपत्याकांक्षायांपंचमहाभूतांशान्गृहीत्वास्वयमेवप्रकृतिःसर्वाधिपत्यर्धनारीश्वरश्रीकृष्णरूपेणप्रादुर्बभूव।यांगोपालसुंदरींवदंति।एवंसर्वाधिपतिःश्रीकृष्णोऽर्धनारीश्व

रउत्पादितः ॥ तदनंतरंचतयाऽर्धनार्याकृष्णोमिथुनीभूयस्वषोडशांशेनाऽनंतकोटिब्रह्मांडानियस्यरोमकूपेषुस्थास्यंति तादृशंसर्वब्रह्मांडानामधिपतिंमहाविराजंश्रीमूलप्रकृतिप्रेरणयैवजन यामास ॥ततः श्रीकृष्णार्धभागिनीपराशक्तिःसमष्टिव्यष्टिज्ञानाधिष्ठात्रींसरस्वतींस्वजिह्वाग्राज्जनयामास॥ततःकालांतरेकृष्णार्धभागिनीशक्तिर्द्विधाबभूवमूलभागेनलक्ष्मीरूपेणदक्षिणभा गेनराधारूपेण॥तत्रलक्ष्मीःसमष्टिव्यष्टिसंपत्त्यधिष्ठातृत्वेनकल्पिता ॥ राधातुसमष्टिव्यष्टिप्राणाधिष्ठातृत्वेनकल्पिता॥मूलप्रकृतिप्रेरणयैव ततोऽर्धभागरूपःश्रीकृष्णोऽपिमूलप्रकृतीच्छयैव वामभागेनविष्णुरूपेणंदक्षिणभागेनश्रीकृष्णरूपेणद्विधाजातः॥तदनंतरंवाणींलक्ष्मींचचतुर्भुजायविष्णवेस्त्रीत्वेनददौ॥राधांतुस्त्रीत्वेनस्वयमेवकृष्णोजग्राह॥ततोमूलप्रकृतेः सकाशात्सह स्रभुजांदुर्गांदेवतासमष्टिव्यष्ट्यंतःकरणाधिष्ठात्रीसमुत्पन्ना ।ततःपद्मनाभेश्चतुर्भुजस्यविष्णोर्नाभिकमलात्सावित्रीस्त्रीसहितोब्रह्मदेवःसमुत्पन्नोमूलप्रकृतिरूपएव॥तत्रसावित्रीसर्वजीवा त्माधिष्ठात्रीदेवता ॥ ततःश्रीकृष्णोद्विभुजोऽपिपुनर्वामभागेनमहादेवरूपेणदक्षिणभागेनश्रीकृष्णरूपेणद्विधाजातः।ततःसादुर्गामहादेवतामहादेवायस्त्रीत्वेनदत्तेत्येतदत्राऽनुक्तमपिनारद पुराणादवगंतव्यम्॥एतेसर्वेकृष्णादयःपुरुषाः दुर्गादयः पंचप्रकृतयश्चमूलप्रकृतेःपूर्णावताराएव ॥ततःश्रीकृष्णाज्ञयामहाविराट् प्रतिब्रह्मांडंभिन्नभिन्नविराड्रूपेणबभूव । ततः श्रीकृ ष्णाज्ञयामूलभूतश्चतुर्मुखोब्रह्मासस्त्रीकोभिन्नभिन्नरूपैस्तत्तद्ब्रह्मांडांतर्गतविराट्पुरुषनाभिकमलात्प्रादुर्बभूव ।महादेवोऽपिश्रीकृष्णाज्ञयातत्तद्ब्रह्मांडांतर्गतचतुर्मुखललाटाद्भिन्नभिन्नरूपैःप्रादु

नारदउवाच ॥ श्रुतंसर्वंमयापूर्वंत्वत्प्रसादात्सुधोपमम् ॥ अधुनाप्रकृतीनांचव्यस्तंवर्णयपूजनम् ॥ १ ॥ कस्याःपूजाकृताकेनकथंमर्त्येप्रचारि ता ॥ केनवापूजिताकावाकेनकावास्तुताप्रभो ॥ २ ॥ तासांस्तोत्रंचध्यानंचप्रभावंचरितंशुभम् ॥ काभिःकेभ्योवरोदत्तस्तन्मेव्याख्यातुमर्ह सि ॥ ३ ॥ श्रीनारायणउवाच ॥ गणेशजननीदुर्गाराधालक्ष्मीःसरस्वती ॥ सावित्रीचसृष्टिविधौप्रकृतिःपंचधास्मृता ॥ ४ ॥ आसांपूजाप्र सिद्धाचप्रभावःपरमाद्भुतः ॥ सुधोपमंचचरितंसर्वमंगलकारणम् ॥ ५ ॥ प्रकृत्यंशाःकलायाश्चतासांचचरितंशुभम् ॥ सर्वंवक्ष्यामितेब्रह्मन्सा वधानोनिशामय ॥ ६ ॥ कालीवसुंधरागंगाषष्ठीमंगलचंडिका ॥ तुलसीमनसानिद्रास्वधास्वाहाचदक्षिणा ॥ ७ ॥

र्बभूव ॥ ततःश्रीकृष्णाज्ञयाचतुर्भुजोविष्णुरपितत्तद्ब्रह्मांडांतर्गतविराट्पुरुषवामभागाद्भिन्नरूपैःप्रादुर्बभूव ॥ तदेवंप्रकारेणप्रतिब्रह्मांडंब्रह्मविष्णुमहेश्वराःसस्त्रीकाःसृष्टिस्थित्यंतकारिणो भिन्नाः ॥ विराट्पुरुषोपिभिन्नः । मूलभूताविराड्ब्रह्मविष्णुमहेश्वरास्तुसकलब्रह्मांडांतर्गतविराट्चतुर्मुखविष्णुरुद्राणामधिपतयः । तेषांसर्वेषामधिपतिर्वक्ष्यमाणरीत्यागोपालसुंदरीरूप श्रीकृष्णस्तस्याऽप्यधिपतिः॥सकलमूलभूतामूलप्रकृतिर्मायाशबलब्रह्मरूपिणी।तदभिमानिनीदेवतातुश्रीभुवनेश्वरीतितुतृतीयस्कन्धेभिहितम् ॥ताःपंचप्रकृतयस्तेकृष्णब्रह्मादिपुरुषाश्चप रस्परमभिन्नाएव नतत्रन्यूनाधिकभावःकेनचित्कर्तव्यः॥न्यूनाधिकभावेननरकपातश्रवणात्॥तदेवंप्रकारेणसर्वस्त्रीपुरुषात्मकंचजगन्मूलप्रकृतिमयंमूलप्रकृत्यधीनंचेतिसैवमूलप्रकृतिःसर्व दासर्वैःसर्वरूपोपास्येतितत्त्वमिति॥६२॥इतिश्रीदेवीभागवततिलकेनवमस्कंधेतृतीयोऽध्यायः ॥३॥ एकाधिकैश्चनवतिश्लोकैरथसमासतः ॥ सरस्वतीस्तोत्रपूजाकवचादिकमुच्यते॥१॥ अधुनानारदःपूर्वोक्तानांदेवतानांपूजादिकंपृच्छति । नारदउवाच श्रुतंसर्वमिति ॥ व्यस्तंभिन्नंभिन्नम् ॥१॥ कस्याःपूजाकेनपुरुषेणकृतामर्त्यलोकेकथंकेनप्रकारेणतस्यादेवतायाःपूजाप्रच रितासंचारिताकेनवामंत्रेणकादेवतापूजिताकेनवास्तोत्रेणकादेवतास्तुतातत्सर्वंवदेत्यर्थः ॥२॥३॥४॥ आसांपूजेति ॥ आसांपंचदेवतानांपूजास्तोत्रमंत्रचरित्रादिकंसर्वंप्रसिद्धमेवसर्वं त्रवेदपुराणतंत्रादिषुविद्यते।अतस्तन्मयानोच्यते ॥ किंतु याःप्रकृत्यंशभूताःकलास्तासांपूजादिकंचसर्वंवक्ष्यामीत्याह।प्रकृत्यंशाइति॥५॥६॥कास्ताःकलास्तदाह।कालीवसुंधरेति ॥७॥

संक्षिप्तमासामिति ॥ आसामेतादृशीनांदेवतानांचरितंप्रसंगेनजीवकर्मविपाकंचवैराग्यार्थंवक्ष्यामीत्यर्थः ॥ ८ ॥ किंचदुर्गायाइति ॥ चरितमनुष्ठानविधिंसंक्षेपतःपश्चादंतेप्रवक्ष्यामीत्यन्वयः ॥ ९ ॥ १० ॥ कृष्णयोषितोराधायाः ॥ देवीसरस्वती ॥ वक्त्रतोजिह्वाग्रात् ॥ इयंकथापूर्वमुक्ता ॥ इयेषकृष्णमिति । पतित्वेनकृष्णमियेषेत्यर्थः ॥ ११ ॥ १२ ॥ १३॥१४॥ कांते हेसरस्वति ॥ ममराधापत्नीत्वत्तोबलवत्यधिकामानिनीभवत्यतस्तवमत्पत्नीत्वेसपत्नीजन्यदुःखेनभद्रंनभविष्यतीत्यर्थः॥१५॥ ननुतांपत्नींशिक्षयेतिचेत्तत्राह । योयस्मादिति॥ हेवाणि ॥ यःपुरुषोयस्मान्निर्बलाद्बलवान्भवति तस्मान्निर्बलात्सकाशाद्रक्षितुमन्यंससबलःक्षमोभवति ॥ नाहंराधातोबलवांस्ततश्चराधातोरक्षितुंत्वांनक्षमोऽस्मीत्यर्थः ॥ कथंक्षमोनकथमपीत्यर्थः ॥ तत्रप्रसिद्धंन्यायमाह । कथमिति ॥ साधयतिरक्षति ॥ १६ ॥ सर्वशास्ताऽहंयद्यपीत्यर्थः ॥ १७ ॥ प्राणतोऽपीति ॥ केषामपिपुरुषाणांकश्चनकोऽपिपुत्रःप्राणतोऽपि

संक्षिप्तमासांचरितंपुण्यदंश्रुतिसुंदरम्॥जीवकर्मविपाकंचतच्चवक्ष्यामिसुंदरम्॥८॥दुर्गायाश्चैवराधायाविस्तीर्णंचरितंमहत्॥ तद्वत्पश्चात्प्रवक्ष्यामिसंक्षेपक्रमतःशृणु ॥९॥ आदौसरस्वतीपूजाश्रीकृष्णेनविनिर्मिता ॥ यत्प्रसादान्मुनिश्रेष्ठमूर्खोभवतिपंडितः ॥१०॥ आविर्भूतायथादेवीवक्त्रतःकृष्णयोषितः॥ इयेषकृष्णंकामेनकामुकीकामरूपिणी ॥११॥ सचविज्ञायतद्भावंसर्वज्ञःसर्वमातरम् ॥ तामुवाचहितंसत्यंपरिणामेसुखावहम् ॥१२॥ श्रीकृष्णउवाच ॥ भजनारायणंसाध्विमदंशंचचतुर्भुजम् ॥ युवानंसुंदरंसर्वगुणयुक्तंचमत्समम् ॥ १३ ॥ कामज्ञंकामिनीनांचतासांचकामपूरकम् ॥ कोटिकंदर्पलावण्यंलीलालंकृतमीश्वरम् ॥ १४ ॥ कांतेकांतंचमांकृत्वायदिस्थातुमिहेच्छसि ॥ त्वत्तोबलवतीराधानभद्रंतेभविष्यति ॥ १५ ॥ योयस्माद्बलवान्वाणिततोऽन्यंरक्षितुंक्षमः॥ कथंपरान्साधयतियदिस्वयमनीश्वरः॥ १६ ॥ सर्वेशःसर्वशास्ताऽहंराधांबाधितुमक्षमः ॥ तेजसामत्समासाचरूपेणचगुणेनच ॥ १७ ॥ प्राणाधिष्ठातृदेवीसाप्राणांस्त्यक्तुंचकःक्षमः ॥ प्राणतोपिप्रियःपुत्रःकेषांवास्तिचकश्चन ॥ १८ ॥ त्वंभद्रेगच्छवैकुंठंतवभद्रंभविष्यति ॥ पतिंतमीश्वरंकृत्वामोदस्वसुचिरंसुखम् ॥ १९ ॥ लोभमोहकामक्रोधमानहिंसाविवर्जिता ॥ तेजसात्वत्समालक्ष्मीरूपेणचगुणेनच ॥ २० ॥ तयासार्धंतवप्रीत्याशश्वत्कालःप्रयास्यति ॥ गौरवंचहरिस्तुल्यंकरिष्यतिद्वयोरपि ॥ २१ ॥ प्रतिविश्वेषुतांपूजांमहतींगौरवान्विताम् ॥ माघस्यशुक्लपंचम्यांविद्यारंभेचसुंदरि ॥ २२ ॥ मानवामनवोदेवामुनींद्राश्चमुमुक्षवः ॥ वसवोयोगिनःसिद्धानागागंधर्वराक्षसाः ॥ २३ ॥ मद्वरेणकरिष्यंतिकल्पेकल्पेलयावधि ॥ भक्तियुक्ताश्चदत्त्वावैचोपचाराणिषोडश ॥ २४ ॥ कण्वशाखोक्तविधिनाध्यानेनस्तवनेनच ॥ जितेंद्रियाःसंयताश्चघटेचपुस्तकेऽपिच ॥ २५ ॥

किंप्रियोऽस्तिनास्तीत्यर्थः ॥ तथाचपुत्रेभ्योऽपिप्रियःप्राणस्तत्प्राणरूपांराधांत्यक्तुंकथमहंक्षमइत्यर्थः ॥ १८ ॥ तर्हिममकागतिस्तत्राह । त्वंभद्रेइति ॥ १९ ॥ ननुतत्रापिलक्ष्मीःसपत्नीवर्ततइतिचेन्नसालक्ष्मीराधासदृशीमानिनी किंत्वतिशांताऽस्तीत्याह । लोभेति ॥ २० ॥ २१ ॥ प्रतिविश्वेषुप्रतिब्रह्मांडम् ॥ तांपूजामित्यस्यकरिष्यंतीत्यनेनान्वयः ॥ माघस्यशुक्लपंचम्यामित्यनेनतद्दिनेसरस्वत्यामहोत्सवोबोधितः ॥ तद्दिनस्यविद्यारंभइतिविशेषणंतुशास्त्रेतद्दिनेविद्यायाआरंभःकर्तव्यइतिश्रवणात् ॥ २२ ॥ २३ ॥ २४ ॥ कण्वशाखोक्तेति ॥ यद्यपिसविधिरधुनोपलब्धशाखायांनास्ति तथाप्युच्छिन्नशाखासुवर्ततइतिबोध्यम् ॥ घटेपुस्तकेवाआवाह्येत्यर्थः ॥ २५ ॥

सुवर्णगुटिकामिति ॥ भूर्जपत्रेकवचमष्टगंधेनसंलिख्यस्वर्णगुटिकायांधारयेत्तांचगुटिकांकंठादिषुधारयेदित्यर्थः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ समयंसंकेतम् ॥
॥ ३३ ॥ ३४ ॥ अभीष्टांसरस्वतीम् ॥ ३५ ॥ ३६ ॥ ३७ ॥ इक्षुंसंपूर्णखंडंवा ॥ स्वस्तिकमिति । स्वस्तिकोमंगलद्रव्यचतुष्कगृहभेदयोरितिमेदिनीकोशान्मंगलद्रव्यंयद्यत्तत्सर्वग्रा



कृत्वासुवर्णगुटिकांगंधचंदनचर्चिताम् ॥ कवचंतेग्रहीष्यंतिकंठेवादक्षिणेभुजे ॥ २६ ॥ पठिष्यंतिचविद्वांसःपूजाकालेचपूजिते ॥ इत्युक्त्वापूजयामासतांदेवींसर्वपूजिताम् ॥ २७ ॥ ततस्तत्पूजनंचक्रुर्ब्रह्मविष्णुशिवादयः ॥ अनंतश्चाऽपिधर्मश्चमुनींद्राःसनकादयः ॥ २८ ॥ सर्वेदेवाश्चमुनयोनृपाश्चमानवादयः ॥ बभूवपूजितानित्यासर्वलोकैःसरस्वती ॥ २९ ॥ नारदउवाच ॥ पूजाविधानंकवचंध्यानंचापिनिरंतरम् ॥ पूजोपयुक्तंनैवेद्यंपुष्पंचचंदनादिकम् ॥ ॥ ३० ॥ वदवेदविदांश्रेष्ठश्रोतुंकौतूहलंमम ॥ वर्ततेहृदयेशश्वत्किमिदंश्रुतिसुंदरम् ॥ ३१ ॥ श्रीनारायणउवाच ॥ शृणुनारदवक्ष्यामिकण्वशाखोक्तपद्धतिम् ॥ जगन्मातुःसरस्वत्याःपूजाविधिसमन्विताम् ॥ ३२ ॥ माघस्यशुक्लपंचम्यांविद्यारंभदिनेऽपिच ॥ पूर्वेऽह्निसमयंकृत्वातत्राऽह्निसंयतःशुचिः ॥ ३३ ॥ स्नात्वानित्यक्रियाःकृत्वाघटंसंस्थाप्यभक्तितः ॥ स्वशाखोक्तविधानेनतांत्रिकेणाऽथवापुनः॥ ३४ ॥ गणेशंपूर्वमभ्यर्च्यततोऽभीष्टांप्रपूजयेत् ॥ ध्यानेनवक्ष्यमाणेनध्यात्वाबाह्यघटेध्रुवम् ॥ ३५ ॥ ध्यात्वापुनःषोडशोपचारेणपूजयेद्व्रती ॥ पूजोपयुक्तनैवेद्यंयच्चवेदनिरूपितम् ॥ ३६॥ वक्ष्यामिसौम्यतत्किंचिद्यथाधीतंयथागमम् ॥ नवनीतंदधिक्षीरंलाजांश्चतिललड्डुकम्॥३७॥ इक्षुमिक्षुरसंशुक्लवर्णंपक्वगुडंमधु॥स्वस्तिकंशर्कराशुक्लधान्यस्याऽक्षतमक्षतम्॥३८॥अस्विन्नशुक्लधान्यस्यपृथुकंशुक्लमोदकम् ॥ घृतसैंधवसंयुक्तंहविष्यान्नंयथोदितम् ॥ ३९ ॥ यवगोधूमचूर्णानांपिष्टकंघृतसंयुतम् ॥ पिष्टकंस्वस्तिकस्याऽपिपक्वरंभाफलस्यच ॥ ४० ॥ परमान्नंचसघृतंमिष्टान्नंचसुधोपमम् ॥ नारिकेलंतदुदकंकसेरुंमूलमार्द्रकम् ॥ ४१ ॥ पक्वरंभाफलंचारुश्रीफलंबदरीफलम् ॥ कालदेशोद्भवंचारुफलंशुक्लंचसंस्कृतम् ॥ ४२ ॥ सुगंधंशुक्लपुष्पंचसुगंधंशुक्लचंदनम् ॥ नवीनंशुक्लवस्त्रंचशंखंचसुंदरंमुने ॥ ४३ ॥ माल्यंचशुक्लपुष्पाणांशुक्लहारंचभूषणम् ॥ यादृशंचश्रुतौध्यानंप्रशस्यंश्रुतिसुंदरम् ॥ ४४ ॥ तन्निबोधमहाभागभ्रमभंजनकारणम् ॥ सरस्वतींशुक्लवर्णांसस्मितांसुमनोहराम् ॥ ४५ ॥ कोटिचंद्रप्रभामुष्टपुष्टश्रीयुक्तविग्रहाम् ॥ वह्निशुद्धांशुकाधानांवीणापुस्तकधारिणीम् ॥ ४६ ॥ रत्नसारेंद्रनिर्माणनवभूषणभूषिताम् ॥ सुपूजितांसुरगणैर्ब्रह्मविष्णुशिवादिभिः ॥ ४७ ॥

ह्यम् ॥ ३८ ॥ ३९ ॥ स्वस्तिकस्यापियस्यकस्यापिमंगलद्रव्यस्यपिष्टकंघृतसंयुतमित्यर्थः ॥ पक्वरंभाफलस्यशुष्कस्यापिष्टकमित्यर्थः ॥ ४० ॥ परमान्नंपायसम् कसेरुः ॥ प्रसिद्धः॥
मूलंमूलकम् ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ कोटिचंद्रप्रभामुष्टाऽपहृतायेनतादृशः पुष्टश्रीःपूर्णश्रीस्तयायुक्तःयुतोविग्रहोयस्याः ॥ ४६ ॥ ४७ ॥

॥ ४८ ॥ नित्याक्रियेति ॥ सर्वेषांजनानांविद्यारंभेवर्षान्तेपञ्चमीदिनेमाघशुक्लपंचम्यामियंक्रियानित्यावश्यंकर्तव्येत्यर्थः ॥ ४९ ॥ मूलंचसर्वस्यमूलभूतमित्यर्थः ॥५०॥ येषांपुरुषाणां
येनहेतुनोपदेशोजातस्तेनहेतुनातेषांसमंत्रएवंसर्वस्यमूलोमूलभूतइत्यर्थः ॥ ५१ ॥ मंत्रोयमिति ॥ श्रींह्रींसरस्वत्यैस्वाहेतिवैदिकोमंत्रः कल्पवृक्षइत्यर्थः ॥ ५२ ॥ ५३॥५४॥५५॥५६॥

वंदेभक्त्यावंदितांचमुनींद्रमनुमानवैः ॥ एवंध्यात्वाचमूलेनसर्वंदत्त्वाविचक्षणः ॥ ४८ ॥ संस्तूयकवचंधृत्वाप्रणमेद्दंडवद्भुवि ॥ येषांचेयमिष्टदे
वीतेषांनित्याक्रियामुने ॥ ४९ ॥ विद्यारंभेचवर्षान्तेसर्वेषांपंचमीदिने ॥ सर्वोपयुक्तोमूलंचवैदिकाष्टाक्षरःपरः ॥ ५० ॥ येषांयेनोपदेशोवाते
षांसमूलएवच ॥ सरस्वतीचतुर्थ्यंतंवह्निजायांतमेवच ॥ ५१ ॥ लक्ष्मीमायादिकंचैवमंत्रोऽयंकल्पपादपः ॥ पुरानारायणश्चेमंवाल्मीकायकृपा
निधिः ॥ ५२ ॥ प्रददौजाह्नवीतीरेपुण्यक्षेत्रेचभारते ॥ भृगुर्ददौचशुक्रायपुष्करेसूर्यपर्वणि ॥ ५३ ॥ चंद्रपर्वणिमारीचोददौवाक्पतयेमुदा ॥
भृगोश्चैवददौतुष्टोब्रह्माबदरिकाश्रमे ॥ ५४ ॥ आस्तिकस्यजरत्कारुर्ददौक्षीरोदसन्निधौ ॥ विभांडकोददौमेरौऋष्यशृङ्गायधीमते ॥ ५५ ॥
शिवःकणादमुनयेगौतमायददौमुदा ॥ सूर्यश्चयाज्ञवल्क्यायतथाकात्यायनायच ॥ ५६ ॥ शेषःपाणिनयेचैवभारद्वाजायधीमते ॥ ददौशाक
टायनायसुतलेबलिसंसदि ॥ ५७ ॥ चतुर्लक्षजपेनैवमंत्रःसिद्धोभवेन्नृणाम् ॥ यदिस्यान्मंत्रसिद्धोहिबृहस्पतिसमोभवेत् ॥ ५८ ॥ कवचंशृ
णुविप्रेंद्रयद्दत्तंब्रह्मणापुरा ॥ विश्वस्रष्टाविश्वजयंभृगवेगंधमादने ॥ ५९ ॥ भृगुरुवाच ॥ ब्रह्मन्ब्रह्मविदांश्रेष्ठब्रह्मज्ञानविशारद ॥ सर्वज्ञसर्वजन
कसर्वेशसर्वपूजित ॥ ६० ॥ सरस्वत्याश्चकवचंब्रूहिविश्वजयंप्रभो ॥ अयातयाममंत्राणांसमूहसंयुतंपरम् ॥ ६१ ॥ ब्रह्मोवाच ॥ शृणुवत्स
प्रवक्ष्यामिकवचंसर्वकामदम् ॥ श्रुतिसारंश्रुतिसुखंश्रुत्युक्तंश्रुतिपूजितम् ॥ ६२ ॥ उक्तंकृष्णेनगोलोकेमह्यंवृन्दावनेवने ॥ रासेश्वरेणविभुनारा
सेवैरासमंडले ॥ ६३ ॥ अतीवगोपनीयंचकल्पवृक्षसमंपरम् ॥ अश्रुताद्भुतमंत्राणांसमूहैश्चसमन्वितम् ॥ ६४ ॥ यद्धृत्वाभगवाञ्छुक्रःसर्वदैत्ये
षुपूजितः ॥ यद्धृत्वापठनाद्ब्रह्मन्बुद्धिमांश्चबृहस्पतिः ॥ ६५ ॥ पठनाद्धारणाद्वाग्मीकवींद्रोवाल्मिकोमुनिः ॥ स्वायंभुवोमनुश्चैवयद्धृत्वासर्वपू
जितः ॥ ६६ ॥ कणादोगौतमःकण्वःपाणिनिःशाकटायनः ॥ ग्रंथंचकारयद्धृत्वादक्षःकात्यायनः स्वयम् ॥ ६७ ॥ धृत्वावेदविभागंचपुरा
णान्यखिलानिच ॥ चकारलीलामात्रेणकृष्णद्वैपायनःस्वयम् ॥ ६८ ॥ शातातपश्चसंवर्तोवसिष्ठश्चपराशरः ॥ यद्धृत्वापठनाद्ग्रंथंयाज्ञवल्क्य
श्चकारसः ॥ ६९ ॥ ऋष्यशृंगोभरद्वाजश्चास्तिकोदेवलस्तथा ॥ जैगीषव्योययातिश्चधृत्वासर्वत्रपूजिताः ॥ ७० ॥ कवचस्याऽस्यविप्रेंद्रऋषि
रेवप्रजापतिः ॥ स्वयंछंदश्चबृहतीदेवताशारदांबिका ॥ ७१ ॥ सर्वतत्त्वपरिज्ञानसर्वार्थसाधनेषुच ॥ कवितासुचसर्वासुविनियोगःप्रकीर्तितः ॥ ७२ ॥

बलिसंसदिबलिसभायाम् ॥ ५७ ॥ ५८ ॥ विश्वजयंतन्नामकम् ॥ ५९ ॥ ६० ॥ अयातयामंनिर्दोषम् ॥ ६१ ॥ श्रुतिसुखंकर्णमधुरम् ॥ ६२ ॥ मह्यंब्रह्मणे ॥ ६३ ॥ ६४ ॥ ६५॥
॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ शारदा शारंशीर्णंशरीरसमूहंद्यातिखंडयतिसाशारदादेवता ॥ ७१ ॥ ७२ ॥

प्रथममंत्रेश्रीबीजंमायाबीजंक्रमेणाऽद्यौवर्ततेश्रीबीजाद्योद्वितीयः ॥ ७३ ॥ तारमायाद्यस्तृतीयः ॥ तारश्रीमायाद्यश्चतुर्थकः॥७४॥वाग्भवमायाद्यःपंचमः ॥ तारमायाद्यःषष्ठः ॥७५॥ तारश्रीमायाद्यःसप्तमः ॥ वाग्भवाद्योष्टमः ॥ ७६ ॥ तारश्रीमायाद्योनवमः ॥ श्रीबीजाद्योदशमः ॥ तारमायाद्योमंत्रएकादशः ॥ ७७ ॥ तारमायाद्योद्वादशः ॥ तारमायाकामबीजाद्यस्त्रयोदशः ॥ ७८ ॥ तारमायाद्यौचतुर्दशपंचदशौ ॥ ७९ ॥ ताराद्यौषोडशसप्तदशौ ॥ ८० ॥ तारवाग्भवमायाश्रीकामबीजाद्योऽष्टादशः ॥८१॥ वाग्भवमायाश्रीबीजाद्यऊनविंशः॥

श्रींह्रींसरस्वत्यैस्वाहाशिरोमेपातुसर्वतः ॥ श्रींवाग्देवतायैस्वाहाभालंमेसर्वदाऽवतु ॥ ७३ ॥ ॐह्रींसरस्वत्यैस्वाहेतिश्रोत्रेपातुनिरंतरम् ॥ ॐश्रींह्रींभगवत्यैसरस्वत्यैस्वाहानेत्रयुग्मंसदाऽवतु ॥ ७४ ॥ ऐंह्रींवाग्वादिन्यैस्वाहानासांमेसर्वदाऽवतु ॥ ह्रींविद्याधिष्ठातृदेव्यैस्वाहाचोष्ठंसदाऽवतु ॥ ७५ ॥ ॐश्रींह्रींब्राह्म्यैस्वाहेतिदंतपंक्तिंसदाऽवतु ॥ ऐमित्येकाक्षरोमंत्रोममकंठंसदाऽवतु ॥ ७६ ॥ ॐश्रींह्रींपातुमेग्रीवांस्कंधौमेश्रींसदावतु ॥ ॐह्रींविद्याधिष्ठातृदेव्यैस्वाहावक्षःसदाऽवतु ॥७७॥ ॐह्रींविद्याधिस्वरूपायैस्वाहामेपातुनाभिकाम् ॥ ॐह्रींक्लींवाण्यैस्वाहेतिमहस्तौसदाऽवतु ॥ ७८ ॥ ॐसर्ववर्णात्मिकायैपादयुग्मंसदाऽवतु ॥ ॐवागधिष्ठातृदेव्यैस्वाहासर्वंसदाऽवतु ॥७९॥ ॐसर्वकंठवासिन्यैस्वाहाप्राच्यांसदाऽवतु ॥ ॐसर्वजिह्वाग्रवासिन्यैस्वाहाऽग्निदिशिरक्षतु ॥ ८० ॥ ॐऐंह्रींक्लींसरस्वत्यैबुधजनन्यैस्वाहा ॥ सततंमंत्रराजोऽयंदक्षिणेमांसदाऽवतु ॥ ८१ ॥ ऐंह्रींश्रींत्र्यक्षरोमंत्रोनैर्ऋत्यांसर्वदाऽवतु ॥ ॐऐंजिह्वाग्रवासिन्यैस्वाहामांवारुणेऽवतु ॥ ८२ ॥ ॐसर्वांबिकायैस्वाहावायव्येमांसदाऽवतु ॥ ॐऐंश्रींक्लींगद्यवासिन्यैस्वाहामामुत्तरेऽवतु ॥८३॥ ऐंसर्वशास्त्रवासिन्यैस्वाहैशान्यांसदाऽवतु ॥ ॐह्रींसर्वपूजितायैस्वाहाचोर्ध्वंसदाऽवतु ॥८४॥ ह्रींपुस्तकवासिन्यैस्वाहाऽधोमांसदाऽवतु॥ॐग्रंथबीजस्वरूपायैस्वाहामांसर्वतोऽवतु॥८५॥ इतितेकथितंविप्रब्रह्ममंत्रौघविग्रहम् ॥ इदंविश्वजयंनामकवचंब्रह्मरूपकम् ॥ ८६ ॥ पुराश्रुतंधर्मवक्त्रात्पर्वतेगंधमादने ॥ तवस्नेहान्मयाख्यातंप्रवक्तव्यंनकस्यचित् ॥ ८७॥गुरुमभ्यर्च्यविधिवद्वस्त्रालंकारचंदनैः॥ प्रणम्यदंडवद्भूमौकवचंधारयेत्सुधीः ॥ ८८॥ पंचलक्षजपेनैवसिद्धंतुकवचंभवेत्॥ यदिस्यात्सिद्धकवचोबृहस्पतिसमोभवेत् ॥८९॥ महावाग्मीकवींद्रश्चत्रैलोक्यविजयीभवेत् ॥ शक्नोतिसर्वंजेतुंचकवचस्यप्रसादतः॥ ९० ॥ इदंचकण्वशाखोक्तंकवचंकथितंमुने ॥ स्तोत्रपूजाविधानंचध्यानंचवंदनंशृणु ॥९१॥ इति श्रीदेवीभागवतेमहापुराणेनवमस्कंधेचतुर्थोऽध्यायः ॥४॥श्रीनारायणउवाच ॥ वाग्देवतायाःस्तवनंश्रूयतांसर्वकामदम् ॥महामुनिर्याज्ञवल्क्योयेनतुष्टावतांपुरा ॥१॥गुरुशापाच्चसमुनिर्हतविद्योबभूवह ॥ तदाजगामदुःखार्तोरविस्थानंसुपुण्यदम् ॥ २ ॥ संप्राप्यतपसासूर्यंलोलार्केदृष्टिगोचरे ॥ तुष्टावसूर्यंशोकेनरुरोदचमुहुर्मुहुः ॥ ३ ॥



तारवाग्भवाद्योविंशः ॥ ८२ ॥ ताराद्यएकविंशः ॥ तारवाग्भवश्रीकामाद्योद्वाविंशः ॥ ८३ ॥ वाग्भवाद्यस्त्रयोविंशः ॥ तारमायाद्यश्चतुर्विंशः ॥ ८४ ॥ मायाद्यःपंचविंशः॥ताराद्यःषड्विंशः ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ इतिश्रीदेवीभागवततिलकेनवमस्कन्धेचतुर्थोऽध्यायः ॥ ४ ॥ अर्धाधिकैश्चद्वात्रिंशत्पद्यैर्धर्मात्मजःपरम् ॥ सरस्वत्यामहास्तोत्रंनारदायोक्तवान्स्फुटम् ॥ १ ॥ नारायणउवाच । वाग्देवतायाइति ॥ १ ॥ रविस्थानंलोलार्कम् ॥ २ ॥ ३ ॥

सूर्यस्तमिति ॥ देवःसूर्यस्तंयाज्ञवल्क्यंवेदंवेदांगंचपाठयामासेत्यर्थः ॥ ४ ॥ ५ ॥ दुःखितंपाहीतिशेषः ॥ ६ ॥ सुशिष्यंप्रातिष्ठितंमह्यंदेहीत्यन्वयः ॥ ७ ॥८॥ तत्रदृष्टांतोयथाभस्मन्यप्यंकुरंदेवतासर्वेश्वरःकदाचित्करोतितद्वन्मयिसर्वंलुप्तंसाधयेत्यर्थः ॥ ९ ॥ विसर्गबिंदुमात्रास्विति ॥ विसर्गबिंदुमात्रासुयदधिष्ठानंसर्वाक्षराणितदाश्रयाहिविसर्गबिंदुमात्राः॥ तेषामक्षराणामधिष्ठात्रीत्यर्थः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ आजगामेतिच्छेदः ॥ १५ ॥ १६ ॥ सिद्धांतं ब्रह्मसिद्धांतम् ॥ १७ ॥ १८ ॥ १९ ॥ सस्मारवाल्मीकिः॥पुराणसूत्ररचनाशक्त्यर्थंस्मृतवानित्यर्थः ॥

सूर्यस्तंपाठयामासवेदंवेदांगमीश्वरः ॥ उवाचस्तौहिवाग्देवींभक्त्याचस्मृतिहेतवे ॥ ४ ॥ तमित्युक्त्वादीननाथोऽप्यंतर्धानंचकारसः ॥ मुनिःस्नात्वाचतुष्टावभक्तिनम्रात्मकंधरः ॥ ५ ॥ याज्ञवल्क्यउवाच ॥ कृपांकुरुजगन्मातर्मामेवंहततेजसम् ॥ गुरुशापात्स्मृतिभ्रष्टंविद्याहीनंचदुःखितम् ॥ ६ ॥ ज्ञानंदेहिस्मृतिंविद्यांशक्तिंशिष्यप्रबोधिनीम् ॥ ग्रंथकर्तृत्वशक्तिंचसुशिष्यंसुप्रतिष्ठितम् ॥ ७ ॥ प्रतिभांसत्सभायांचविचारक्षमतांशुभाम् ॥ लुप्तंसर्वंदैवयोगान्नवीभूतंपुनःकुरु ॥ ८ ॥ यथांकुरंभस्मनिचकरोतिदेवतापुनः ॥ ब्रह्मस्वरूपापरमाज्योतीरूपासनातनी ॥ ९ ॥ सर्वविद्याधिदेवीयातस्यैवाण्यैनमोनमः ॥ विसर्गबिंदुमात्रासुयदधिष्ठानमेवच ॥ १० ॥ तदधिष्ठात्रीयादेवीतस्यैनीत्यैनमोनमः ॥ व्याख्यास्वरूपासादेवीव्याख्याधिष्ठातृरूपिणी ॥ ११ ॥ ययाविनाप्रसंख्यावान्संख्यांकर्तुंनशक्यते ॥ कालसंख्यास्वरूपायातस्यैदेव्यैनमोनमः ॥ १२ ॥ भ्रमसिद्धांतरूपायातस्यैदेव्यैनमोनमः ॥ स्मृतिशक्तिज्ञानशक्तिबुद्धिशक्तिस्वरूपिणी ॥ १३ ॥ प्रतिभाकल्पनाशक्तिर्याचतस्यैनमोनमः ॥ सनत्कुमारोब्रह्माणंज्ञानंपप्रच्छयत्रवै ॥ १४ ॥ बभूवमूकवत्सोऽपिसिद्धांतंकर्तुमक्षमः ॥ तदाजगामभगवानात्माश्रीकृष्णईश्वरः ॥ १५ ॥ उवाचसचतांस्तौहिवाणीमिष्टांप्रजापते ॥ सचतुष्टावतांब्रह्माचाऽऽज्ञयापरमात्मनः ॥ १६ ॥ चकारतत्प्रसादेनतदासिद्धांतमुत्तमम् ॥ यदाप्यनंतंपप्रच्छज्ञानमेकंवसुंधरा ॥ १७ ॥ बभूवमूकवत्सोऽपिसिद्धांतंकर्तुमक्षमः ॥ तदातांसचतुष्टावसंत्रस्तःकश्यपाज्ञया ॥ १८ ॥ ततश्चकारसिद्धांतंनिर्मलंभ्रमभंजनम् ॥ व्यासःपुराणसूत्रंचपप्रच्छवाल्मीकिंयदा ॥ १९ ॥ मौनीभूतश्चसस्मारतामेवजगदंबिकाम् ॥ तदाचकारसिद्धांतंतद्वरेणमुनीश्वरः ॥ २० ॥ संप्राप्यनिर्मलंज्ञानंभ्रमांध्यध्वंसदीपकम् ॥ पुराणसूत्रंश्रुत्वाचव्यासःकृष्णकलोद्भवः ॥ २१ ॥ तांशिवांवेददध्यौचशतवर्षंचपुष्करे ॥ तदात्वत्तोवरंप्राप्यसत्कवींद्रोबभूवह ॥ २२ ॥ तदावेदविभागंचपुराणंचचकारसः ॥ यदामहेंद्रःपप्रच्छतत्त्वज्ञानंसदाशिवम् ॥ २३ ॥ क्षणंतामेवसंचिंत्यतस्मैज्ञानंददौविभुः ॥ पप्रच्छशब्दशास्त्रंचमहेंद्रश्चबृहस्पतिम् ॥ २४ ॥

रचनाशक्त्यर्थंस्मृतवानित्यर्थः ॥ हेदेवि त्वद्वरेणतदावाल्मीकिर्भ्रमरूपांधकारध्वंसेदीपरूपंज्ञानंसंप्राप्यसिद्धांतंपुराणसूत्रभूतंचकार ॥ तत्पुराणसूत्रंव्यासःकृष्णकलोद्भवःकृष्णकलांशःश्रुत्वातदर्थंकवितारूपेणस्पष्टीकर्तुंत्वांशिवांवेददध्यौध्यातवांश्चेत्यर्थः ॥ २० ॥ २१ ॥ २२ ॥ सदाशिवंपप्रच्छ किंपप्रच्छतत्राह । तत्त्वज्ञानमिति ॥ २३ ॥ २४ ॥

सबृहस्पतिः २५ ॥ शब्दशास्त्रंव्याकरणंतस्यार्थंचोवाच ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ इतिश्रीदेवीभागवततिलकेनवमस्कन्धेपंचमोऽध्यायः ॥५॥ अर्धाधिकैःसप्तषष्टिश्लोकैरथसमासतः ॥ लक्ष्मीगंगाभारतीनांशापाज्जन्मोच्यतेभुवि ॥ १ ॥ सरस्वतीतुवैकुंठेइति ॥ स्वयंपूर्णरूपेणवैकुण्ठेतिष्ठतीत्यर्थः ॥ पश्चाद्गंगायाःशापेनकलयांशेनभारतेखण्डेसरित्सरस्वतीनाम्नीसरिज्जातेत्यर्थः ॥ १ ॥ यस्यास्तीरेपुण्यवतांस्थितिरित्यर्थः ॥ २॥३ ॥४॥ ५॥ अक्षयायांतिथावक्षयनवम्याम् ॥ ६॥ अनुषंगेणाऽन्यकार्यार्थमागतोमध्येतीर्थं



दिव्यंवर्षसहस्रंचसत्वांदध्यौचपुष्करे ॥ तदात्वत्तोवरंप्राप्यदिव्यवर्षसहस्रकम् ॥ २५ ॥ उवाचशब्दशास्त्रंचतदर्थंचसुरेश्वरम् ॥ अध्यापिताश्चयेशिष्यायैरधीतंमुनीश्वरैः ॥२६॥ तेचतांपरिसंचिंत्यप्रवर्ततेसुरेश्वरीम् ॥ त्वंसंस्तुतापूजिताचमुनीन्द्रैर्मनुमानवैः ॥ २७ ॥ दैत्येंद्रैश्वसुरैश्चाऽपिब्रह्मविष्णुशिवादिभिः ॥जडीभूतःसहस्रास्यःपंचवक्त्रश्चतुर्मुखः॥ २८॥यांस्तोतुंकिमहंस्तौमितामेकास्येनमानवः ॥ इत्युक्त्वायाज्ञवल्क्यश्चभक्तिनम्रात्मकंधरः ॥२९॥ प्रणनामनिराहारोरुरोदचमुहुर्मुहुः ॥ज्योतीरूपामहामायातेनदृष्टाऽप्युवाचतम् ॥३०॥ सुकवींद्रोभवेत्युक्त्वावैकुंठंचजगामह ॥ याज्ञवल्क्यकृतंवाणीस्तोत्रमेतत्तुयःपठेत् ॥३१॥ सकवींद्रोमहावाग्मीबृहस्पतिसमोभवेत्॥ महामूर्खश्चदुर्बुद्धिर्वर्षमेकंयदापठेत् ॥३२ ॥ सपंडितश्चमेधावीसुकवींद्रोभवेद्ध्रुवम् ॥ इति श्रीदेवीभागवतेमहापुराणेनवमस्कंधेपंचमोऽध्यायः॥५॥श्रीनारायणउवाच ॥ सरस्वतीतुवैकुंठेस्वयंनारायणांतिके ॥ गंगाशापेनकलहात्कलयाभारतेसरित् ॥ १॥ पुण्यदापुण्यरूपाचपुण्यतीर्थस्वरूपिणी ॥ पुण्यवद्भिर्निषेव्याचस्थितिःपुण्यवतांमुने ॥२॥ तपस्विनांतपोरूपातपसःफलरूपिणी ॥ कृतपापेध्मदाहायज्वलदग्निस्वरूपिणी ॥ ३ ॥ ज्ञानात्सरस्वतीतोयेमृतायेमानवाभुवि ॥ तेषांस्थितिश्चवैकुंठेसुचिरंहरिसंसदि ॥ ४ ॥ भारतेकृतपापश्चस्नात्वातत्रचलीलया ॥ मुच्यतेसर्वपापेभ्योविष्णुलोकेवसेच्चिरम् ॥ ५ ॥ चातुर्मास्यांपौर्णमास्यामक्षयायांदिनक्षये ॥ व्यतीपातेचग्रहणेऽन्यस्मिन्पुण्यदिनेऽपिच ॥ ६ ॥ अनुषंगेणयःस्नातोहेतुनाश्रद्धयाऽपिवा ॥ सारूप्यंलभते नूनंवैकुंठेसहहरेरपि ॥ ७ ॥ सरस्वतीमनुंतत्रमासमेकंचयोजपेत् ॥ महामूर्खःकवींद्रश्चसभवेन्नाऽत्रसंशयः ॥ ८ ॥ नित्यंसरस्वतीतोयेयःस्नायान्मुंडयन्नरः ॥ नगर्भवासंकुरुतेपुनरेवसमानवः ॥ ९ ॥ इत्येवंकथितंकिंचिद्भारतेगुणकीर्तनम् ॥ सुखदंकामदंसारंभूयःकिंश्रोतुमिच्छसि ॥ १० ॥ सूतउवाच ॥ नारायणवचःश्रुत्वानारदोमुनिसत्तमः ॥ पुनःपप्रच्छसंदेहमिमंशौनकसत्वरम् ॥ ११ ॥ नारदउवाच ॥ कथंसरस्वतीदेवीगंगाशापेनभारते ॥ कलयाकलहेनैवबभूवपुण्यदासरित् ॥ १२ ॥ श्रवणेश्रुतिसाराणांवर्धतेकौतुकंमम ॥ कथामृतेनमेतृप्तिःकेनश्रेयसितृप्यते ॥ १३ ॥

र्थंपतितमस्तीतिस्नानमपिकर्तव्यमितिबुद्ध्याहेतुनाऽन्येनवाकारणेनद्रव्यग्रहणरूपेणअश्रद्धयाऽपीतिच्छेदः ॥ ७ ॥ तत्रसरस्वतीतीरे ॥ ८ ॥ मुंडयन्नेकवारंप्रथमतोमुंडनंकुर्वन् ॥ ९ ॥ ॥ १० ॥ ११ ॥ १२ ॥ श्रुतेःसाराणांसारभूतानांकथानांश्रवणइत्यन्वयः मेतृप्तिः कथामृतेनैवास्ति ॥ केनश्रेयसितृप्यते नकेनाऽपीत्यर्थः ॥ १३ ॥

॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ तद्दृष्ट्वाविष्णोर्हास्यंदृष्ट्वालक्ष्मीःक्षमांचकार नक्रोधम् ॥ सरस्वतीतुनक्षमांचकारकिंतु क्रोधम् ॥ १९ ॥ तांक्रुद्धांसरस्वतीम् ॥ २० ॥ २१ ॥
॥ २२ ॥ सौभाग्यंप्रेमा ॥ गंगालक्ष्म्योस्तवप्रेमाऽस्ति मयिनास्तीत्यर्थः ॥ २३ ॥ गंगायाइति ॥ यदिलक्ष्म्यांगंगातुल्यातवप्रीतिर्नस्यात्ततोगंगयासार्धंलक्ष्म्याःप्रीतिर्नैवभवेत्॥प्रीतिस्तु
वर्ततेयतस्तेनहेतुनाप्रीतिसद्भावहेतुनाविपरीतमिदंसपत्नीहास्यंतवदृष्ट्वाक्षमांचकारहरिप्रिया ॥ तस्मात्क्षमयातयोःप्रीतिर्निश्चीयते ॥ तयाप्रीत्याचतयोःसमःप्रेमातवनिश्चीयतइत्यर्थः
॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ मध्यदेशंतयोर्मध्यभागेगत्वा ॥ ३१ ॥ शशापवाणीतांपद्मांसपत्नीपक्षपातिनीयमितिमत्वातांपद्मांवृक्षरूपाभविष्यसिसरिद्रूपा

कथंशशापसागंगापूजितांतांसरस्वतीम्॥सातुसत्त्वस्वरूपायापुण्यदाशुभदासदा ॥ १४॥तेजस्विनोर्द्वयोर्वादकारणंश्रुतिसुंदरम्॥सुदुर्लभंपुराणे
षुतन्मेव्याख्यातुमर्हसि॥ १५॥श्रीनारायणउवाच॥शृणुनारदवक्ष्यामिकथामेतांपुरातनीम्॥यस्याःश्रवणमात्रेणसर्वपापात्प्रमुच्यते ॥ १६॥ ल
क्ष्मीःसरस्वतीगंगातिस्रोभार्याहरेरपि॥प्रेम्णासमास्तास्तिष्ठंतिसततंहरिसन्निधौ। १७।चकारसैकदागंगाविष्णोर्मुखनिरीक्षणम्॥सस्मिताचसका
माचसकटाक्षंपुनःपुनः॥ १८॥विभुर्जहासतद्वक्त्रंनिरीक्ष्यचक्षणंतदा॥क्षमांचकारतद्दृष्ट्वालक्ष्मीर्नैवसरस्वती॥ १९॥बोधयामासपद्मातांसत्त्वरूपा
चसस्मिता॥क्रोधाविष्टाचसावाणीनचशांताबभूवह॥२०॥उवाचवाणीभर्तारंरक्तास्यारक्तलोचना॥कंपिताकामवेगेनशश्वत्प्रस्फुरिताधरा२१॥
सरस्वत्युवाच॥सर्वत्रसमताबुद्धिःसद्भर्तुःकामिनींप्रति॥धर्मिष्ठस्यवरिष्ठस्यविपरीताखलस्यच॥२२॥ज्ञातंसौभाग्यमधिकंगंगायांतेगदाधर॥क
मलायांचतत्तुल्यंनचकिंचिन्मयिप्रभो॥२३ ॥गंगायाःपद्मयासार्धंप्रीतिश्चाऽस्तिसुसंमता॥क्षमांचकारतेनेदंविपरीतंहरिप्रिया।२४।किंजीवनेनमे
ऽत्रैवदुर्भगायाश्चसांप्रतम्॥निष्फलंजीवनंतस्यायापत्युःप्रेमवंचिता।२५।त्वांसर्वेसत्त्वरूपंचयेवदंतिमनीषिणः॥ तेचमूर्खानवेदज्ञानजानंतिमतिं
तव॥२६॥सरस्वतीवचःश्रुत्वादृष्ट्वातांकोपसंयुताम्॥ सनसाचसमालोच्यसजगामबहिःसभाम्॥२७॥गतेनारायणेगंगामुवाचनिर्भयंरुषा॥वाग
धिष्ठातृदेवीसावाक्यंश्रवणदुष्करम्॥२८॥हेनिर्लज्जेहेसकामेस्वामिगर्वंकरोषिकिम्॥अधिकंस्वामिसौभाग्यंविज्ञापयितुमिच्छसि॥२९॥मानचू
र्णंकरिष्यामितवाऽद्यहरिसन्निधौ॥किंकरिष्यतितेकान्तोममैवंकांतवल्लभे॥३०॥इत्येवमुक्त्वागंगायाःकेशंग्रहीतुमुद्यता ॥वारयामासतांपद्माम
ध्यदेशंसमाश्रिता॥३१॥शशापवाणीतांपद्मांमहाबलवतीसती॥वृक्षरूपासरिद्रूपाभविष्यसिनसंशयः ॥३२॥ विपरीतंततोदृष्ट्वाकिंचिन्नोवक्तुमर्ह
सि॥संतिष्ठतिसभामध्येयथावृक्षोयथासरित्॥३३॥शापंश्रुत्वातुसादेवीनशशापचुकोपह॥तत्रैवदुःखितातस्थौवाणींधृत्वाकरेणच ॥३४॥

चभविष्यसीतिशशापेत्यर्थः ॥ ३२ ॥ विपरीतमिति ॥ यतःकारणाद्यथासभामध्येवादेप्राप्तेवृक्षःसरिद्वाजडत्वान्नकिंचिद्वदति किंतु केवलंतिष्ठत्येवं ॥ तथात्वंविपरीतमन्याय्यंगंगाया
दृष्ट्वाकिंचिदपिवक्तुंजडवन्नार्हसिनयोग्याऽसि तस्माज्जडात्मकवृक्षसरिद्रूपा भवेत्यर्थः ॥ ३३ ॥ नशशापनचुकोपचेत्यर्थः ॥ शांतत्वादितिभावः ॥ वाणींधृत्वेति ॥ परस्परताडननिवा
रणार्थंकरेणवाणींधृत्वातस्थावित्यर्थः ॥ ३४ ॥

अत्युन्नतामत्युन्मत्तांतांवाणीम् ॥ ३५ ॥ ३६ ॥ ३७ ॥ स्वबलमिति ॥ यद्यस्मात्कारणात्स्वबलंममबलंचेयंज्ञातुमिच्छतितस्मान्मुंचेत्यर्थः ॥ ३८ ॥ सादेवीगंगा ॥३९ ॥ यासरस्वतीत्वांपद्मांशशाप सासरस्वतीसरिद्भवत्वित्यर्थः ॥ ४० ॥ तांगंगाम् ॥ ४१ ॥ लभिष्यसिलप्स्यसे ॥ ४२ ॥ ४३ ॥ ४४ ॥ सामयिकींसमयोचितां धर्मध्वजोराजा कलयांशेन ॥ ४५ ॥ भूमौस्थिताभूमेरुत्पन्नेत्यर्थः ॥ ४६ ॥ शंखचूडस्यकामिनीपत्नी ॥ ४७ ॥ तुलसीतिनाम्नापश्चान्ममपत्नीभविष्यसीत्यन्वयः ॥ कलयांशेनसरिदपिभव ॥ ४८ ॥ पद्मामुक्त्वागंगामाह ॥ गंगेइति ॥ ४९ ॥ ५० ॥ जायेःभवेः ॥ यद्वा हेजाये समुद्रस्यजायाभवेत्यर्थः ॥ ५१ ॥ शंतनोश्चकारणवशाज्जायाभवेत्यर्थः । सरस्वतीमाह । गंगाशापेनेति

अत्युन्नतांतुतांदृष्ट्वाकोपप्रस्फुरिताधराम्॥उवाचगंगातांदेवींपद्मांचारक्तलोचनाम् ॥३५॥श्रीगंगोवाच॥त्वमुत्सृजमहोग्रांचपद्मेकिंमेकरिष्यति॥ दुःशीलामुखरानष्टानित्यंवाचालरूपिणी॥३६॥वागधिष्ठात्रीदेवीयंसततंकलहप्रिया॥यावतीयोग्यताचास्यायावतीशक्तिरेवच ॥३७॥तथाकरोतुवादंचमयासार्धंचदुर्मुखी॥स्वबलंयन्ममबलंविज्ञापयितुमिच्छति॥३८॥जानंतुसर्वेह्युभयोःप्रभावंविक्रमंसति॥इत्येवमुक्त्वासादेवीवाण्यैशापंददाविति॥३९॥सरित्स्वरूपाभवतुसायात्वांचशशापह॥अधोमर्त्यंसाप्रयातुसंतियत्रैवपापिनः ॥४०॥ कलौतेषांचपापानिग्रहीष्यतिनसंशयः॥इत्येवंवचनंश्रुत्वातांशशापसरस्वती॥४१॥त्वमेवयास्यतिमहींपापिपापंलभिष्यसि॥एतस्मिन्नंतरेतत्रभगवानाजगामह ॥४२॥चतुर्भुजश्चतुर्भिश्चपार्षदैश्चचतुर्भुजैः॥सरस्वतींकरेधृत्वावासयामासवक्षसि॥४३॥बोधयामाससर्वज्ञःसर्वज्ञानंपुरातनम्॥श्रुत्वारहस्यंतासांचशापस्यकलहस्यच॥४४॥उवाचदुःखितास्ताश्चवाचंसामयिकींविभुः॥श्रीभगवानुवाच॥लक्ष्मित्वंकलयागच्छधर्मध्वजगृहंशुभे ॥४५॥अयोनिसंभवाभूमौतस्यकन्याभविष्यसि॥तत्रैवदैवदोषेणवृक्षत्वंचलभिष्यसि॥४६॥मदंशस्याऽसुरस्यैवशंखचूडस्यकामिनी ॥ भूत्वापश्चाच्चमत्पत्नीभविष्यसिनसंशयः॥४७॥त्रैलोक्यपावनीनाम्नातुलसीतिचभारते॥कलयाचसरिद्भावंशीघ्रंगच्छवरानने ॥४८॥भारतंभारतीशापान्नाम्नापद्मावतीभव॥गंगेयास्यसिपश्चात्त्वमंशेनविश्वपावनी॥४९॥भारतंभारतीशापात्पापदाहायपापिनाम् ॥भगीरथस्यतपसातेननीतासुकल्पिते॥५०॥नाम्नाभागीरथीपूताभविष्यसिमहीतले॥मदंशस्यसमुद्रस्यजायाजायेममाज्ञया॥ ५१॥मत्कलांशस्यभूपस्यशंतनोश्चसुरेश्वरि ॥गंगाशापेनकलयाभारतंगच्छभारति॥५२॥कलहस्यफलंभुंक्ष्वसपत्नीभ्यांसहाऽच्युते॥स्वयंचब्रह्मसदनेब्रह्मणःकामिनीभव ॥५३॥गंगायातुशिवस्थानमत्रपद्मैवतिष्ठतु॥शांताचक्रोधरहितामद्भक्तासत्त्वरूपिणी॥५४॥ महासाध्वीमहाभागासुशीलाधर्मचारिणी॥यदंशकलयासर्वाधर्मिष्ठाश्चपतिव्रताः ॥५५॥ शांतरूपाःसुशीलाश्चप्रतिविश्वेषुपूजिताः ॥ तिस्रोभार्यास्त्रिशीलाश्चत्रयोभृत्याश्चबांधवाः ॥ ५६ ॥

॥ ५२ ॥ सपत्नीभ्यांसहकलहस्येत्यन्वयः ॥ स्वयंचेति ॥ अंशेनभारतेसरिद्भवस्वयंचपूर्णरूपेणब्रह्मलोकेब्रह्मणःपत्नीभवेत्यर्थः ॥ ५३ ॥ गंगायात्विति ॥ गंगाप्यंशेनसरिद्भवतु पूर्णरूपेणतुशिवस्थानंयातुतस्यपत्नीभवतु ॥ अत्रमन्निकटेतुपद्मैवतिष्ठतु यतःशांतेत्याह । शांताचेति ॥ ५४ ॥ ५५ ॥ स्वंखेदंवर्णयति । तिस्रइति ॥ त्रिशीलाभिन्नस्वभावाः ॥ त्रिशीलेतिसर्वत्रान्वेति ॥ ५६ ॥

एतेत्रयोवेदविरुद्धावेदाननुमत्यविषयाः ॥ येषांगृहेपुंवत्पुरुषवत्प्रधानास्त्रीभवतीत्यर्थः ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥६१॥ भस्मांतंमरणातंशौचंपवित्रता अध्रुवंनभवतीत्यर्थः॥६२॥
॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ इति श्रीदेवीभागवततिलकेनवमस्कन्धेषष्ठोऽध्यायः ॥६॥ अर्धाधिकैश्चतुष्पंचाशद्भिः पद्यैरतःपरम् ॥ शापोद्धारप्रकारश्चातिमृणांसम्यगुच्यते
॥ १ ॥ विरराम चनारदेति नारदंप्रतिनारायणोक्तिः ॥ १ ॥ २ ॥ प्रथमंसरस्वतीप्रार्थनांकरोति । विशापमिति ॥ ३ ॥ अत्युन्मत्ततायाःफलंमयालब्धमित्याह । अत्युन्नतोहीति

ध्रुवंवेदविरुद्धाश्चनह्येतेमंगलप्रदाः ॥ स्त्रीपुंवच्चगृहेयेषांगृहिणांस्त्रीवशःपुमान् ॥ ५७ ॥ निष्फलंचजन्मतेषामशुभंचपदेपदे ॥ मुखेदुष्टायोनिदुष्टा यस्यस्त्रीकलहप्रिया ॥ ५८ ॥ अरण्यंतेनगंतव्यंमहारण्यंगृहाद्वरम् ॥ जलानांचस्थलानांचफलानांप्राप्तिरेवच ॥ ५९ ॥ सततंसुलभातत्रनतेषांगृहएवच ॥ वरमग्नौस्थितिर्हिंस्रजंतूनांसन्निधौसुखम् ॥ ६० ॥ ततोऽपिदुःखंपुंसांचदुष्टस्त्रीसन्निधौध्रुवम् ॥ व्याधिज्वालाविषज्वालावरंपुंसांवरानने॥ ६१ ॥ दुष्टस्त्रीणांमुखज्वालामरणादतिरिच्यते॥पुंसांचस्त्रीजितांचैवभस्मांतंशौचमध्रुवम्॥६२॥यदह्निकुरुतेकर्मनतस्यफलभाग्भवेत् ॥ निंदितोऽत्रपरत्रैवसर्वत्रनरकंव्रजेत्॥६३॥ यशःकीर्तिविहीनोयोजीवन्नपिमृतोहिसः ॥ बह्वीनांचसपत्नीनांनैकत्रश्रेयसेस्थितिः॥६४॥एकभार्यःसुखीनैवबहुभार्यःकदाचन ॥ यच्छगंगेशिवस्थानंब्रह्मस्थानंसरस्वति ॥ ६५ ॥ अत्रतिष्ठतुमद्गेहेसुशीलाकमलालया ॥ सुसाध्यायस्यपत्नीचसुशीलाचपतिव्रता ॥ ६६ ॥ इहस्वर्गेसुखंतस्यधर्मोमोक्षःपरत्रच ॥ पतिव्रतायस्यपत्नीसचमुक्तःशुचिःसुखी ॥ ६७ ॥जीवन्मृतोशुचिर्दुःखीदुःशीलापतिरेवच ॥ इतिश्रीदेवीभागवतेमहापुराणेनवमस्कन्धेषष्ठोऽध्यायः ॥६॥ श्रीनारायणउवाच॥इत्युक्त्वाजगतांनाथोविररामच नारद ॥ अतीवरुरुदुर्देव्यःसमालिंग्यपरस्परम् ॥१॥ ताश्चसर्वाःसमालोक्यक्रमेणोचुस्तदेश्वरम् ॥ कंपिताःसाश्रुनेत्राश्चशोकेनचभयेनच॥२॥ सरस्वत्युवाच ॥ विशापंदेहिहेनाथदुष्टमाजन्मशोचनम् ॥ सत्स्वामिनापरित्यक्ताःकुतोजीवंतिताःस्त्रियः ॥ ३ ॥ देहत्यागंकरिष्यामियोगेन भारतेध्रुवम् ॥ अत्युन्नतोहिनियतंपातुमर्हतिनिश्चितम् ॥ ४ ॥ गंगोवाच ॥ अहंकेनाऽपराधेनत्वयात्यक्ताजगत्पते ॥ देहत्यागंकरिष्यामिनिर्दोषायावधंलभ ॥ ५ ॥ निर्दोषकामिनीत्यागंकरोतियोनरोभुवि ॥ सयातिनरकंघोरंकिंतुसर्वेश्वरोऽपिवा ॥६॥ पद्मोवाच ॥ नाथसत्त्वस्वरूपस्त्वंकोपःकथमहोतव ॥ प्रसादंकुरुभार्येद्वेसदीशस्यक्षमावरा ॥ ७ ॥ भारतेभारतीशापाद्यास्यामिकलयाह्यहम्॥कियत्कालंस्थितिस्तत्रकदाद्रक्ष्यामितेपदम् ॥८॥दास्यंतिपापिनःपापंसद्यःस्नानावगाहनात् ॥केनतेनविमुक्ताऽहमागमिष्यामितेपदम् ॥ ९ ॥ कलयातुलसीरूपंधर्मध्वजसुतासती॥भुक्त्वाकदालभिष्यामित्वत्पादांबुजमच्युत॥१०॥वृक्षरूपाभविष्यापित्वदधिष्ठातृदेवता॥समुद्धरिष्यसिकदातन्मेब्रूहिकृपानिधे॥११॥

॥ ४ ॥ तदनंतरंगंगोवाच । अहंकेनेति ॥ सरस्वत्याअपराधःकृतोमयातुनकृतइतिभावः ॥ तेनकारणेननिर्दोषायास्त्वंवधंलभ लभस्वेत्यर्थः ॥ ५ ॥ सर्वेश्वरोऽपियदिस्यात्तथापि ॥६॥ द्वेभार्येप्रतीत्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ भारतीकलयैकांशेननदीभवतुअर्धांशेनब्रह्मसदनंगच्छतु पूर्णांशेनवैकुण्ठेतिष्ठतु ॥ तथैवगंगाऽपितेनममवाक्यमपिसत्यंजातंवैकुंठवासेनातिसृणां ममताचजाताभविष्यतीति ॥ १७ ॥ १८ ॥ तत्रैवेति ॥ एकांशावतारेएवेत्यर्थः ॥ नतुतस्याःसरस्वतीवदर्धांशावतारइत्यर्थः ॥ तदपेक्षयाऽस्यान्यूनापराधत्वात् ॥ १९ ॥२०॥२१॥

गंगासरस्वतीशापाद्यदियास्यतिभारते ॥ शापेनमुक्तापापाच्चकदात्वांचलभिष्यति ॥१२॥ गंगाशापेनवावाणीयदियास्यतिभारतम् ॥ कदा शापाद्विनिर्मुच्यलभिष्यतिपदंतव ॥१३॥ तांवाणींब्रह्मसदनंगंगांवाशिवमन्दिरम् ॥ गन्तुंवदसिहेनाथतत्क्षमस्वचतेवचः ॥ १४ ॥ इत्युक्त्वाकमलाकांतपादंधृत्वाननामसा ॥ स्वकेशैर्वेष्टनंकृत्वारुरोदचपुनःपुनः ॥ १५ ॥ "उवाचपद्मनाभस्तांपद्मांकृत्वास्ववक्षसि ॥ ईषद्धास्यप्रसन्नास्योभक्तानुग्रहकातरः ॥ १ ॥" ॥ श्रीभगवानुवाच ॥ त्वद्वाक्यमाचरिष्यामिस्ववाक्यंचसुरेश्वरि ॥ समतांचकरिष्यामिशृणुत्वंकमलेक्षणे ॥ १६ ॥ भारतीयातुकलयासरिद्रूपाचभारते ॥ अर्धासाब्रह्मसदनंस्वयंतिष्ठतुमद्गृहे ॥ १७ ॥ भगीरथेनसानीतागंगायास्यतिभारते ॥ पूतंकर्तुंत्रिभुवनंस्वयंतिष्ठतुमद्गृहे ॥ १८ ॥तत्रैवचंद्रमौलेश्चमौलिंप्राप्स्यतिदुर्लभम् ॥ ततःस्वभावतःपूताऽप्यतिपूताभविष्यति ॥ १९ ॥ कलांशांशेनगच्छत्वंभारतेवामलोचने॥पद्मावतीसरिद्रूपातुलसीवृक्षरूपिणी ॥ २० ॥ कलेःपंचसहस्रेचगतेवर्षेचमोक्षणम् ॥ युष्माकंसरितांचैवमद्गेहेचागमिष्यथ॥२१॥संपदाहेतुभूताचविपत्तिःसर्वदेहिनाम् ॥ विनाविपत्तेर्महिमाकेषांपद्मभवेभवेत् ॥२२॥ मन्मंत्रोपासकानांचसतांस्नानावगाहनात् ॥ युष्माकंमोक्षणंपापाद्दर्शनात्स्पर्शनात्तथा ॥२३॥ पृथिव्यांयानितीर्थानिसंत्यसंख्यानिसुंदरि ॥ भविष्यंतिचपूतानिमद्भक्तस्पर्शदर्शनात् ॥ २४ ॥ मन्मंत्रोपासकाभक्ताविभ्रमंतिचभारते ॥ पूतंकर्तुंतारितुंचसुपवित्रांवसुंधराम् ॥२५॥ मद्भक्तायत्रतिष्ठंतिपादंप्रक्षालयंतिच ॥ तत्स्थानंचमहातीर्थंसुपवित्रंभवेद्ध्रुवम् ॥ २६ ॥ स्त्रीघ्नोगोघ्नःकृतघ्नश्चब्रह्मघ्नोगुरुतल्पगः ॥ जीवन्मुक्तोभवेत्पूतोमद्भक्तस्पर्शदर्शनात् ॥ २७ ॥ एकादशीविहीनश्चसन्ध्याहीनोऽथनास्तिकः ॥ नरघातीभवेत्पूतोमद्भक्तस्पर्शदर्शनात् ॥ २८ ॥ असिजीवीमसीजीवीधावकोग्रामयाचकः ॥ वृषवाहोभवेत्पूतोमद्भक्तस्पर्शदर्शनात् ॥ २९ ॥ विश्वासघातीमित्रघ्नोमिथ्यासाक्ष्यस्यदायकः ॥ स्थाप्यहारीभवेत्पूतोमद्भक्तस्पर्शदर्शनात् ॥ ३० ॥ अत्युग्रवापुंदूषकश्चजारकःपुंश्चलीपतिः ॥ पूतश्चग्लीपुत्रोमद्भक्तस्पर्शदर्शनात् ॥ ३१ ॥ शूद्राणांसूपकारश्चदेवलोग्रामयाजकः ॥ अदीक्षितोभवेत्पूतोमद्भक्तस्पर्शदर्शनात ॥ ३२ ॥ पितरंमातरंभार्यांभ्रातरंतनयंसुताम्॥गुरोःकुलंचभगिनींचक्षुर्हीनंचबांधवम् ॥ ३३ ॥ श्वश्रूंचश्वशुरंचैवयोनपुष्णातिसुंदरि ॥ समहापातकीपूतोमद्भक्तस्पर्शदर्शनात् ॥३४ ॥

हेपद्मभवे ॥ २२ ॥ मन्मंत्रोपासकानामिति ॥ इदमुपलक्षणं ब्रह्मनिष्ठशैवशाक्तगाणेशसौराणांभक्तानामपि तेषामपिपुराणांतरेषुतीर्थादिपावकत्वस्यश्रवणात् ॥ २३ ॥२४॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ धावकइति ॥ रजककर्मकर्ताब्राह्मणइत्यर्थः ॥ २९ ॥ ३० ॥ पूतश्चभवतीत्यर्थः ॥ ३१ ॥ सूपकारःपाककर्ता ॥ ३२ ॥ ३३ ॥ ३४ ॥

॥३५॥३६॥३७॥ ३८ ॥ कीदृशानराधमास्तानाह । हरिभक्तीति ॥ ३९ ॥ कीदृशावैष्णवास्तानाह । पुनंतीति ॥ क्षणादहोइत्येतत्पर्यंतंलक्ष्मीप्रश्नः ॥ ४० ॥ ४१ ॥ अम्मयानि जलमयानीत्यर्थः ॥ ४२ ॥ श्रेष्ठोपचक्रमेइत्यत्रश्रेष्ठेतिलुप्तप्रथमांतम् आर्षत्वात् ॥ श्रेष्ठउपचक्रमेइत्यर्थः ॥ ४३ ॥ ४४ ॥ ४५ ॥ विष्णुमंत्रइति ॥ इदमुपलक्षणं शिवशक्तिगणेशसूर्य मंत्राणामपि ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ स्वात्मास्वदेहोभक्तिवशतयाविस्मृतोयेन॥वाहिताग्न्यादिषुइत्यनेनसाधुत्वम् ॥ ५० ॥ ५१॥ ५२ ॥ श्राव्यगानैर्मधुरगानैः ॥५३॥५४॥

अश्वत्थनाशकश्चैवमद्भक्तनिंदकस्तथा॥ शूद्रान्नभोजीविप्रश्चपूतोमद्भक्तदर्शनात् ॥३५॥ देवद्रव्यापहारीचविप्रद्रव्यापहारकः ॥ लाक्षालोहरसानांचविक्रेतादुहितुस्तथा ॥३६॥ महापातकिनश्चैवशूद्राणांशवदाहकः ॥ भवेयुरेतेपूताश्चमद्भक्तस्पर्शदर्शनात् ॥३७ ॥ श्रीमहालक्ष्मीरुवाच ॥ भक्तानांलक्षणंब्रूहिभक्तानुग्रहकातर ॥ येषांतुदर्शनस्पर्शात्सद्यःपूतानराधमाः ॥३८॥ हरिभक्तिविहीनाश्चमहाहंकारसंयुताः ॥ स्वप्रशंसारताधूर्ताःशठाश्चसाधुनिंदकाः ॥३९॥ पुनंतिसर्वतीर्थानियेषांस्नानावगाहनात् ॥ येषांचपादरजसापूतापादोदकान्मही ॥४०॥ येषांसंदर्शनंस्पर्शंयेवावांछंतिभारते॥सर्वेषांपरमोलाभोवैष्णवानांसमागमः॥४१॥नह्यम्मयानितीर्थानिनदेवामृच्छिलामयाः॥तेपुनंत्यपिकालेनविष्णुभक्ताःक्षणादहो ॥४२॥ सूतउवाच ॥ महालक्ष्मीवचःश्रुत्वालक्ष्मीकांतश्चसस्मितः ॥ निगूढतत्त्वंकथितुमपिश्रेष्ठोपचक्रमे ॥ ४३ ॥ श्रीभगवानुवाच ॥ भक्तानांलक्षणंलक्ष्मिगूढंश्रुतिपुराणयोः ॥ पुण्यस्वरूपंपापघ्नंसुखदंभुक्तिमुक्तिदम् ॥४४॥ सारभूतंगोपनीयंनवक्तव्यंखलेषुच ॥ त्वांपवित्रांप्राणतुल्यांकथयामिनिशामय ॥ ४५॥ गुरुवक्राद्विष्णुमंत्रोयस्यकर्णेपतिष्यति ॥ वदंतिवेदास्तंचाऽपिपवित्रंचनरोत्तमम् ॥ ४६ ॥ पुरुषाणांशतंपूर्वंतथातज्जन्ममात्रतः ॥स्वर्गस्थंनरकस्थंवामुक्तिमाप्नोतितत्क्षणात्॥४७॥यैःकैश्चिद्यत्रवाजन्मलब्धंयेषुचजंतुषु॥जीवन्मुक्तास्तुतेपूतायांतिकालेहरेःपदम् ॥४८ ॥ मद्भक्तियुक्तोमर्त्यश्चसमुक्तोमद्गुणान्वितः॥ मद्गुणाधीनवृत्तिर्यःकथाविष्टश्चसंततम् ॥४९॥मद्गुणश्रुतिमात्रेणसानंदःपुलकान्वितः ॥ सगद्गदःसाश्रुनेत्रःस्वात्मविस्मृतएवच ॥५०॥ नवांछतिसुखंमुक्तिसालोक्यादिचतुष्टयम्॥ब्रह्मत्वममरत्वंवातद्वांछाममसेवने ॥५१॥ इन्द्रत्वंचमनुत्वंचब्रह्मत्वंचसुदुर्लभम् ॥ स्वर्गराज्यादिभोगंचस्वप्नेऽपिचनवांछति ॥ ५२ ॥ भ्रमंतिभारतेभक्तास्तादृग्जन्मसुदुर्लभम्॥मद्गुणश्रवणाःश्राव्यगानैर्नित्यंमुदान्विताः ॥ ५३ ॥ तेयांतिचमहींपूत्वानरंतीर्थंममाऽऽलयम् ॥ इत्येवंकथितंसर्वंपद्मेकुरुयथोचितम् ॥ ५४ ॥ तदाज्ञयातास्तच्चक्रुर्हरिस्तस्थौसुखासने ॥ इतिश्रीदेवीभागवतेमहापुराणेनवमस्कन्धेसप्तमोऽध्यायः ॥ ७ ॥ श्रीनारायणउवाच ॥ सरस्वतीपुण्यक्षेत्रमाजगामचभारते ॥ गंगाशापेनकलयास्वयंतस्थौहरेःपदे ॥ १ ॥

इतिश्रीदेवीभागवततिलकेनवमस्कंधेसप्तमोऽध्यायः॥७॥दशोत्तरशतैःपद्यैर्गंगादीनांचभारते॥कथयित्वासमुत्पत्तिंकलौवर्तनमुच्यते॥१॥पूर्वाध्यायेतदाज्ञयातास्तच्चक्रुरित्यनेनसरस्वत्यादयोनदीरूपाअभवन्नित्युक्तं तदेवस्पष्टयति।नारायणउवाच।सरस्वतीति॥गंगायाः शापेनसरस्वतीकलयांशेनभारतेखंडेआजगाम॥स्वयंपूर्णरूपेणहरेःपदेवैकुंठेतस्थौस्थितवतीत्यर्थः॥१॥

सरस्वतीनाम्नांनिरुक्तिमाह । भारतीति ॥ भारतखंडेनदीरूपेणाऽऽगमनाद्भारतीत्वम् । अर्शआद्यजंताद्गौरादिपाठात्ङीष् ॥ ब्रह्मणःप्रियत्वाद्ब्राह्मी ब्रह्मणइयमित्यस्मिन्नर्थेऽणिब्राह्मो जातावितिनिपातनाट्टिलोपेकृतेऽण्णंतत्वान्ङीप् ॥ वाण्यधिष्ठात्रीति ॥ वाण्याअधिष्ठातृत्वाल्लक्षणयावाणीतिनाम ॥ २ ॥ सरोवाप्यामिति ॥ हियतःसरसिवाप्यांस्रोतस्सुअन्यत्राऽपिसर्वत्रदेशेहरिर्दृश्यतेसर्वत्रव्यापकत्वात् तेनहेतुनासरसिविद्यमानत्वाद्धरिःसरस्वान्भवति ॥ तस्येयंशक्तिः यतस्तेनहेतुनानाम्नासरस्वतीयंकथ्यतइत्यर्थः॥सरस्वच्छब्दस्यलक्षणयासरस्वत्संबंधिनीशक्तिरित्यर्थेउगितश्चेतिङीपिसरस्वतीशब्दःसिद्धः ॥ ३ ॥ ४ ॥ सरस्वत्युत्पत्त्यनंतरंगंगोत्पत्तिमाह ॥ पश्चादिति ॥ वाणीशापेनकलयांशेनजगाम ॥ ५ ॥ तत्रैवेति ॥ ऊर्ध्वदेशादधःपतनसमयेएवतस्याधारायावेगमसहमानायाभुवःसमर्थनयावेगंसोढुंशक्तःसमर्थःशिवःशिरसातांगंगांदधारेत्यर्थः ॥ ६ ॥ पद्मेति ॥ यापद्माकलयाजगामसापद्मावतीनाम्नानदीअभवदित्यर्थः ॥ स्वयंपूर्णरूपेणहरेःपदेवैकुंठेतस्थाविति पूर्ववत् ॥ ७ ॥ ततोऽन्ययेति ॥ एकांशेनयथानदीजातातद्वत्तदनंतरम् अन्ययाकलयाद्वितीययाकलयाभारतेखंडेजन्म

भारतीभारतंगत्वाब्राह्मीचब्रह्मणःप्रिया॥वाण्यधिष्ठातृदेवीसातेनवाणीप्रकीर्तिता ॥२॥सरोवाप्यांचस्रोतस्सुसर्वत्रैवहिदृश्यते ॥ हरिःसरस्वांस्तस्येयंतेननाम्नासरस्वती॥३॥सरस्वतीनदीसाचतीर्थरूपाऽतिपावनी॥पापिनांपापदाहायज्वलदग्निस्वरूपिणी ॥४॥ पश्चाद्भागीरथीनीतामहींभगीरथेनच॥ सावैजगामकलयावाणीशापेननारद ॥५ ॥ तत्रैवसमयेतांचदधारशिरसाशिवः ॥ वेगंसोढुमयंशक्तोभुवःप्रार्थनयाविभुः ॥६॥ पद्माजगामकलयासाचपद्मावतीनदी॥भारतंभारतीशापात्स्वयंतस्थौहरेःपदे॥७॥ ततोऽन्ययासाकलयालेभेजन्मचभारते ॥ धर्मध्वजसुतालक्ष्मीर्विख्यातातुलसीतिच॥८॥पुरासरस्वतीशापात्पश्चाच्चहरिशापतः ।बभूववृक्षरूपासाकलयाविश्वपावनी॥९॥कलेःपंचसहस्रंचवर्षंस्थित्वाचभारते॥ जग्मुस्ताश्चसरिद्रूपंविहायश्रीहरेःपदम्॥१०॥यानिसर्वाणितीर्थानिकाशींवृंदावनंविना॥यास्यंतिसार्धंताभिश्चवैकुण्ठमाज्ञयाहरेः ११ शालग्रामःशक्तिशिवौजगन्नाथश्चभारतम्॥कलेर्दशसहस्रांतेत्यक्त्वायांतिनिजंपदम्॥ १२॥साधवश्चपुराणानिशंखानिश्राद्धतर्पणे॥वेदोक्तानिचकर्माणियुयुस्तैःसार्धमेवच॥१३॥देवपूजादेवनामतत्कीर्तिगुणकीर्तनम्॥वेदांगानिचशास्त्राणियुयुस्तैःसार्धमेवच ॥१४॥ संतश्चसत्यधर्मश्चवेदाश्चग्रामदेवताः॥व्रतंतपश्चाऽनशनंययुस्तैःसार्धमेवच॥१५॥वामाचाररताःसर्वेमिथ्याकपटसंयुताः॥तुलसीरहितापूजाभविष्यतिततःपरम्॥१६॥

लेभे ॥ तज्जन्म धर्मध्वजोदरेजातमितिधर्मध्वजसुतेतितथालक्ष्म्यंशत्वाल्लक्ष्मीति ॥ तथातुलसीतिचनाम्नाविख्याताऽभवदित्यर्थः ॥ ८ ॥ पुरेति ॥ सालक्ष्मीःपुरापूर्वंयःसरस्वतीशापउपपादितस्तस्मात् पश्चाच्चहरिशापोजातस्तस्माच्च मनुष्यरूपिणीतुलसीतिनाम्नास्थिताऽपिवृक्षरूपाबभूवेत्यर्थः ॥ तवकेशसमूहश्चपुण्यवृक्षोभविष्यतीतिचतुर्विंशाध्यायेवक्ष्यमाणोहरिशापः ॥ ९ ॥ एतानद्यःकियत्पर्यंतमत्रस्थास्यंतीतिचेत्तत्राऽऽह । कलेरिति ॥ जग्मुर्गमिष्यंतीत्यर्थः ॥ हरेःपदंवैकुण्ठम् ॥ १० ॥ काशींवृन्दावनंविनेति ॥ इदंक्षेत्रद्वयंतुप्रलयपर्यंतंलोकोद्धारायभूमावेवस्थास्यतीतिभावः ॥ ११ ॥ जगन्नाथःपुरुषोत्तमः ॥ शक्तिशिवौशक्तिशिवमूर्तिस्थापनानस्यादित्यर्थः ॥ भारतंभारतखंडंत्यक्त्वेत्यन्वयः ॥ निजंपदंस्वस्थानम् ॥ १२ ॥ साधवश्चेति ॥ शाक्तशैववैष्णवाद्याःसाधवः ॥ शंखानिक्षिवित्वमार्षम् ॥ ययुर्यास्यंतीत्यर्थः ॥ १३ ॥ देवपूजादेवादीनांपूजा तेषामेवनामतेषामेवकीर्तीनांगुणानांचकीर्तनम् ॥ १४ ॥ अनशनंव्रतम् ॥ १५ ॥ वामाचारोमद्यमांसनिषेवणादिः ॥ कामाचाररताइत्यपिपाठः ॥ यथेष्टाचाररताइतितत्पक्षेऽर्थः ॥ १६ ॥

॥ १७ ॥ पुंसांपरस्परंभेदोमित्रत्वाभावइत्यर्थः ॥ यद्वा स्त्रीपुंसभेदएवकेवलंस्थास्यतिनतुजातिभेदइत्यर्थः ॥ अतएव जातिभेदाभावाद्विवाहःसर्वस्त्रीभिःसहसर्वपुरुषाणांनिर्भयःस्यादि त्यर्थः॥स्वस्वामिभेदइति ॥ पितुर्वस्तुपितुरेव पुत्रस्यवस्तुपुत्रस्यैव नपरस्परंदास्यंतीत्यर्थः ॥१८ ॥ १९ ॥ भृत्याधिकोभृत्यापेक्षयाऽप्यधिकोऽधमोगृहीगृहस्वामीत्यर्थः । वध्वाःस्नुषायाः श्वश्रूःचेटीसमादासीसमा श्वशुरश्चदाससमःस्यादित्यर्थः ॥२० ॥ योनिसंबन्धिनोस्त्रीसम्बंधिनोबांधवागृहेषुकर्तारोनस्वबांधवाः॥विद्यासंबंधिभिःसतीर्थ्यैः ॥ २१ ॥ यथापरिचितेति ॥ पुंसोगृहस्वामिनोबांधवायथापरिचयरहितालोकास्तथाभविष्यंतीत्यर्थः॥सर्वकर्माक्षमाःसर्वकर्माणिकर्तुमक्षमाअसमर्थाः ॥२२॥ जात्याचारविवर्जितास्तेतेवर्णाइत्यर्थः ॥ २३ ॥ २४ ॥

शठाःक्रूरादांभिकाश्चमहाहंकारसंयुताः ॥ चोराश्चहिंसकाःसर्वेभविष्यंतिततःपरम् ॥ १७ ॥ पुंसोर्भेदस्त्रीविभेदोविवाहोवाऽपिनिर्भयः॥स्वस्वामिभेदोवस्तूनांभविष्यतिततःपरम् ॥१८॥ सर्वेस्त्रीवशगाःपुंसःपुंश्चल्यश्चगृहेगृहे ॥ तर्जनैर्भर्त्सनैःशश्वत्स्वामिनंताडयंतिच ॥ १९ ॥ गृहेश्वरीच गृहिणीगृहीभृत्याधिकोऽधमः ॥ चेटीदाससमौवध्वाःश्वश्रूश्वश्वशुरस्तथा ॥ २० ॥ कर्तारोबलिनोगेहेयोनिसंबंधिबांधवाः ॥ विद्यासंबंधिभिः सार्धंसंभाषापिनविद्यते ॥ २१ ॥ यथाऽपरिचितालोकास्तथापुंसश्चबांधवाः ॥ सर्वकर्माक्षमाःपुंसोयोषितामाज्ञयाविना ॥ २२ ॥ ब्रह्मक्षत्रविशःशूद्राजात्याचारविवर्जिताः ॥ संध्याचयज्ञसूत्रंचभवेल्लुप्तंनसंशयः ॥ २३ ॥ म्लेच्छाचाराभविष्यंतिवर्णाश्चत्वारएवच ॥ म्लेच्छशास्त्रंपठिष्यंतिस्वशास्त्राणिविहायच ॥ २४ ॥ ब्रह्मक्षत्रविशांवंशाःशूद्राणांसेवकाःकलौ ॥ सूपकाराधावकाश्चवृषवाहाश्चसर्वशः ॥ २५ ॥ सत्यहीनाजनाःसर्वेसस्यहीनाचमेदिनी ॥ फलहीनाश्चतरवोऽपत्यहीनाश्चयोषितः ॥ २६ ॥ क्षीरहीनास्तथागावःक्षीरंसर्पिर्विवर्जितम् ॥ दंपतीप्रीतिहीनौचगृहिणःसत्यवर्जिताः ॥ २७ ॥ प्रतापहीनाभूपाश्चप्रजाश्चकरपीडिताः॥ जलहीनामहानद्योदीर्घिकाकंदरादयः ॥ २८ ॥ धर्महीनाःपुण्यहीनावर्णाश्चत्वारएवच ॥ लक्षेषुपुण्यवान्कोऽपिनतिष्ठतिततःपरम् ॥ २९॥ कुत्सिताविकृताकारानरानार्यश्चबालकाः ॥ कुवार्ताकुत्सितःशब्दोभविष्यतिततःपरम्॥३०॥ केचिद्ग्रामाश्चनगरानरशून्याभयानकाः ॥ केचित्स्वल्पकुटीरेणनरेणचसमन्विताः ॥३१॥ अरण्यानिभविष्यंतिग्रामेषुनगरेषुच॥अरण्यवासिनःसर्वेजनाश्चकरपीडिताः ॥३२॥ सस्यानिचभविष्यंतितडागेषुनदीषुच॥प्रकृष्टवंशजाहीनाभविष्यंतिकलौयुगे॥३३॥अलीकवादिनोधूर्ताःशठाश्चाऽसत्यवादिनः॥प्रकृष्टानिचक्षेत्राणिसस्यहीनानिनारद ॥ ३४ ॥ हीनाःप्रकृष्टाधनिनोदेवभक्ताश्चनास्तिकाः॥हिंसकाश्चदयाहीनाःपौराश्चनरघातिनः॥३५॥वामनाव्याधियुक्ताश्चनरानार्यश्चसर्वतः॥स्वल्पायुषोगदायुक्तायौवनैरहिताःकलौ ॥३६॥

सूपकाराःशूद्राणामन्नपाचकाइत्यर्थः॥तेषामेवधावकावस्त्रक्षालकाः ॥ २५ ॥ २६ ॥ २७ ॥ दीर्घिकाअल्पनद्यः ॥ २८ ॥ २९ ॥ ३० ॥ ह्रस्वाकुटीकुटीरः ॥ ३१ ॥ करपीडिताःरांजग्राह्योभागःकरः ॥३२॥ तडागेषुअन्यत्रवृष्ट्यभावात्तेषुभविष्यंति । प्रकृष्टवंशजाःकुलीनाहीनानीचाभविष्यंति ॥ ३३ ॥ ३४ ॥ येदेवभक्तास्तेनास्तिकाभविष्यंति॥अदेवभक्ताइतिवाछेदः ॥ ३५ ॥ गदैरोगैरायुक्ताःसंबद्धाः ॥ ३६ ॥

॥३७॥ ३८ ॥ वधूःस्नुषाएतासांजारैरुपेतानिदत्तान्यन्नानितेषांभक्षकाः ॥ ३९ ॥ हरेर्नामजपित्वातज्जन्यंपुण्यं द्रव्यंगृहीत्वाविक्रेस्यंतीत्यर्थः ॥ ४० ॥ स्वयमुत्सृज्योति ॥ प्रथमतोदानं कीर्त्यर्थंकरिष्यतिनत्वीश्वरप्रीत्यर्थम् । ततःपश्चादनंतरंयद्दत्तंगवादिदानंतत्स्वयमुल्लंघयिष्यति ॥ मयानब्राह्मणायदत्तमित्युक्त्वाब्राह्मणादपहरिष्यति ॥४१॥ देववृत्तिंदेवजीविकाम् ॥ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ पत्नीनामिति ॥ कस्यकापत्नी तस्याःकोवाभर्त्तेतिनिर्णयः ॥ सर्वेषांपरस्परंपत्नीभर्तृभावात् ॥ वस्तूनांचविशषतोननिर्णयइत्यर्थः ॥ ४६ ॥ ४७ ॥

पलिताःषोडशेवर्षेमहावृद्धाश्चविंशतौ ॥ अष्टवर्षाचयुवतीरजोयुक्ताचगर्भिणी ॥ ३७ ॥ वत्सरांतप्रसूतास्त्रीषोडशेचजरान्विता ॥ पतिपुत्रवती काचित्सर्वावंध्याःकलौयुगे ॥ ३८ ॥ कन्याविक्रयिणःसर्वेवर्णाश्चत्वारएवच ॥ मातृजायावधूनांचजारोपेतान्नभक्षकाः ॥ ३९ ॥ कन्यानांभगिनीनांवाजारोपात्तान्नजीविनः ॥ हरेर्नाम्नांविक्रयिणोभविष्यंतिकलौयुगे ॥४०॥ स्वयमुत्सृज्यदानंचकीर्तिवर्धनहेतवे ॥ ततःपश्चात्स्वदानंचस्वयमुल्लंघयिष्यति ॥ ४१ ॥ देववृत्तिंब्रह्मवृत्तिंवृत्तिंगुरुकुलस्यच ॥ स्वदत्तांपरदत्तांवासर्वमुल्लंघयिष्यति ॥ ४२ ॥ कन्यकागामिनःकेचित्केचिच्चश्वश्रुगामिनः ॥ केचिद्वधूगामिनश्चकेचिद्वैसर्वगामिनः ॥ ४३ ॥ भगिनीगामिनःकेचित्सपत्नीमातृगामिनः ॥ भ्रातृजायागामिनश्चभविष्यंतिकलौयुगे ॥ ४४ ॥ अगम्यागमनंचैवकरिष्यंतिगृहेगृहे ॥ मातृयोनिंपरित्यज्यविहरिष्यंतिसर्वतः ॥ ४५ ॥ पत्नीनांनिर्णयोनास्तिभर्तॄणांचकलौयुगे ॥ प्रजानांचैवग्रामाणांवस्तूनांचविशेषतः ॥ ४६ ॥ अलीकवादिनःसर्वेसर्वेचोराश्चलंपटाः ॥ परस्परंहिंसकाश्चसर्वेचनरघातिनः ॥ ४७ ॥ ब्रह्मक्षत्रविशांवंशाभविष्यंतिचपापिनः ॥ लाक्षालोहरसानांचव्यापारंलवणस्यच ॥ ४८ ॥ वृषवाहाविप्रवंशाःशूद्राणांशवदाहिनः ॥ शूद्रान्नभोजिनःसर्वेसर्वेचवृषलीरताः ॥ ४९ ॥ पंचयज्ञविहीनाश्चकुहूरात्रौचभोजिनः ॥ यज्ञसूत्रविहीनाश्चसंध्याशौचविहीनकाः ॥ ॥ ५० ॥ पुंश्चलीवार्धुषाजीवाकुट्टनीचरजस्वला॥ विप्राणांरंधनागारेभविष्यतिचपाचिका॥५१॥अन्नानांनियमोनास्तियोनीनांचविशेषतः ॥ आश्रमाणांजनानांचसर्वेम्लेच्छाःकलौयुगे ॥ ५२ ॥ एवंकलौसंप्रवृत्तेसर्वम्लेच्छमयंभवेत् ॥ हस्तप्रमाणेवृक्षेचअंगुष्ठेचैवमानवे ॥ ५३ ॥ विप्रस्यविष्णुयशसःपुत्रःकल्किर्भविष्यति ॥ नारायणकलांशश्चभगवान्बलिनांवरः ॥५४॥ दीर्घेणकरवालेनदीर्घघोटकवाहनः ॥ म्लेच्छशून्यांचपृथिवींत्रिरात्रेणकरिष्यति ॥ ५५ ॥ निर्म्लेच्छांवसुधांकृत्वाचांतर्धानंकरिष्यंति ॥ अराजकाचवसुधादस्युग्रस्ताभविष्यति ॥ ५६ ॥

॥ ४८ ॥ ४९ ॥ कुहूरात्रिरमावास्यारात्रिः ॥ ५० ॥ कुट्टनीत्यत्रकुट्टिनीत्यपिकचित्पाठः । तदाकुष्ठवतीत्यर्थः॥ रंधनागारेपाकशालायाम् ॥५१॥योनीनांस्त्रीणांजनानामाश्रमाणांचन नियमइत्यर्थः ॥५२॥ मानवेमनुष्येंगुष्ठेंगुष्ठप्रमाणे वृक्षेचहस्तप्रमाणेजातेसति । कलियुगशेषेवृक्षमनुष्याएतत्प्रमाणाभविष्यंतीत्यर्थः ॥ ५३ ॥ विष्णुयशानामकश्चिद्ब्राह्मणः ॥ ५४ ॥ घोटकोश्वः ॥ ५५ ॥ कल्केरन्तर्धानोत्तरंवृत्तमाह । अराजकेति ॥ ५६ ॥

स्थूलास्थूलरूपामही अप्रमाणाबहुविस्तीर्णेत्यर्थः॥षड्रात्रमत्यंतसंयोगेद्वितीया ॥ षड्रात्रव्यापकवर्षधाराभिराप्लुतासतीलोकशून्येत्यर्थः ॥ ५७ ॥ ५८ ॥ इत्थंकलेरवसानेजातेपश्चात्तु
नःकृतयुगंप्रवर्ततेइत्याह । कलौगतेइति ॥ ५९ ॥ ६० ॥ ६१॥६२ ॥ सर्वेऽपिकृतयुगेदेवीभक्ताःसर्वकारणमूलप्रकृतिभक्ताःभविष्यंतीत्यर्थः ॥ देवीमंत्रामायाबीजादयस्तेषुनिरताः ॥
तथादेवीध्यानंतृतीयस्कन्धादिषूक्तंतत्परायणाः॥तच्चानेकविधम् ॥ तदुक्तंयामले ॥ स्त्रीरूपांचिंतयेद्देवींपुंरूपांवाविचिन्तयेत् ॥ अथवानिष्कलंध्यायेत्सच्चिदानन्दविग्रहमिति ॥ पुंरूपां
विराड्रूपामित्यर्थः ॥ ६३ ॥ पूर्णोधर्मःकृतयुगेधर्मःपूर्णश्चतुष्पादित्यर्थः ॥ ६४ ॥ उत्तरोत्तरमेकैकपादह्रासइत्याह ॥ धर्मस्त्रिपादिति ॥ ६५ ॥ अधुनाकालस्वरूपमाह । वाराःसप्तेति
वारशब्दोरव्यादिवासरपरः ॥ ६६ ॥ पक्षौशुक्लकृष्णाख्यौ दक्षिणायनमुत्तरायणम् ॥ ६७ ॥ वर्षंपंचविधम् । तच्चाऽष्टमस्कंधेउक्तम् ॥ संवत्सरपरिवत्सरेडावत्सरादिभेदैः यथाचाऽऽ

स्थूलाऽप्रमाणाषड्रात्रंवर्षधाराप्लुतामही ॥ लोकशून्यावृक्षशून्यागृहशून्याभविष्यति ॥ ५७ ॥ ततश्चद्वादशादित्याःकरिष्यंत्युदयंमुने ॥ प्राप्नोतिशुष्कतांपृथ्वीसमातेषांचतेजसा ॥५८॥ कलौगतेचतुर्धर्मैप्रवृत्तेचकृतेयुगे ॥ तपःसत्त्वसमायुक्तोधर्मःपूर्णोभविष्यति॥५९॥तपस्विनश्च धर्मिष्ठावेदज्ञाब्राह्मणाभुवि ॥ पतिव्रताश्चधर्मिष्ठायोषितश्चगृहेगृहे ॥६०॥ राजानःक्षत्रियाःसर्वेविप्रभक्तामनस्विनः ॥ प्रतापवंतोधर्मिष्ठाःपुण्य कर्मरताःसदा ॥ ६१ ॥ वैश्यावाणिज्यनिरताविप्रभक्ताश्चधार्मिकाः ॥ शूद्राश्चपुण्यशीलाश्चधर्मिष्ठाविप्रसेविनः ॥ ६२ ॥ विप्रक्षत्रविशांवं शाद्देवीभक्तिपरायणाः ॥ देवीमंत्ररताःसर्वेदेवीध्यानपरायणाः ॥ ६३ ॥ श्रुतिस्मृतिपुराणज्ञापुंमांसऋतुगामिनः॥ लेशोनास्तिह्यधर्मस्यपूर्णो धर्मःकृतेयुगे ॥ ६४ ॥ धर्मस्त्रिपाच्चत्रेतायांद्विपाच्चद्वापरेततः ॥ कलौवृत्तेचैकपाच्चसर्वलुप्तिस्ततःपरम् ॥ ६५॥ वाराःसप्ततथाविप्रतिथयःषोड शस्मृताः ॥ तथाद्वादशमासाश्चऋतवश्चषडेवच ॥ ६६ ॥ द्वौपक्षौऽचायनेद्वेचचतुर्भिःप्रहरैर्दिनम् ॥ चतुर्भिःप्रहरैरात्रिर्मासस्त्रिंशद्दिनैस्तथा ॥ ६७ ॥ वर्षंपंचविधंज्ञेयंकालसंख्याविधिक्रमे ॥ यथाचाऽऽयांतियांत्येवयथायुगचतुष्टयम् ॥ ६८ ॥ वर्षेपूर्णेनराणांचदेवानांचदिवानिश म् ॥ शतत्रयेषष्टचधिकेनराणांचयुगेगते ॥ ६९ ॥ देवानांचयुगंज्ञेयंकालसंख्याविदांमतम् ॥ मन्वंतरंतुदिव्यानांयुगानामेकसप्ततिः ॥ ७० ॥ मन्वंतरसमंज्ञेयमायुष्यंचशचीपतेः ॥ अष्टाविंशतिमेचेन्द्रेगतेब्रह्मदिवानिशम् ॥ ७१ ॥ अष्टोत्तरशतेवर्षेगतेपातश्चब्रह्मणः ॥ प्रलयःप्राकृतो ज्ञेयस्तत्राऽदृष्टावसुंधरा ॥ ७२ ॥

यांतियांत्येवेति ॥ यथादिनान्यायांतियांतिच तथादिनात्मकत्वाद्युगानांतान्यप्यायांतियांतिचेत्यर्थः ॥ ६८ ॥ मनुष्यदिनादीनांस्वरूपमुक्त्वादेवदिनादिस्वरूपमाह । वर्षेपूर्णेइति ॥
मनुष्यवर्षमेवदेवानामेकदिनंभवति ॥ नराणांषष्टियुगाधिकशतत्रययुगविशिष्टेयुगेयुगसमूहात्मकेकालेगतेसतीत्यर्थः ॥ तावत्कालोदेवानामेकंयुगंज्ञेयम् ॥ ६९ ॥ देवानामेकसप्ततियुगा
त्मकःकालएकंमन्वंतरमित्युच्यते ॥ ७० ॥ एवमष्टाविंशतिमेशचीपतौगतेसतितावत्परिमितःकालोब्रह्मणोहिरण्यगर्भस्यैकंदिनंभवतीत्यर्थः ॥ ७१ ॥ एवमष्टोत्तरशतवर्षात्मकेकालेगते
ब्रह्मापतति । तदाप्राकृतःप्रलयोभवतीत्यर्थः॥तत्रक्रममाह ॥ तत्राऽदृष्टेति ॥ भुवंजलेजलंवह्नौवह्निंवायौनभस्यमुम् ॥ विलाप्यखमहंकारेमहत्तत्त्वेऽप्यहंकृतिम्॥महांतंप्रकृतौमायामात्म
निप्रविलापयेदित्येवंक्रमेणोत्तरोत्तरभूतेषुपूर्वपूर्वभूतानांलयोभवति ॥ तथाचजलेधरायांनिमग्नत्वाल्लीनत्वात्तत्रतस्मिन्कालेवसुंधराऽदृष्टाज्ञानविषयानभवतीत्यर्थः ॥ ७२ ॥

॥ ५९ ॥ ६० गंधद्रव्यंकुंकुमादितदुद्भवम् ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ कृमिजंपट्टवस्त्रम् ॥ ६८ ॥ ६९ ॥ ७० ॥ माल्यमापादलंबिनींमालाम् ॥ ७१ ॥
॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ लक्ष्मीबीजंश्रीबीजंमायाबीजंभुवनेश्वरीबीजं कामोमन्मथबीजम् ॥ एतद्बीजत्रयपूर्वकःसाविञ्यैस्वाहेतिमंत्रोऽष्टाक्षरः॥एतन्मंत्रपूर्वकपूर्वमंत्रैरुपचारा

पवित्ररूपमर्घंचदूर्वापुष्पदलान्वितम् ॥ पुण्यदंशंखतोयाक्तंमयातुभ्यंनिवेदितम् ॥ ५९॥ सुगंधंगंधतोयंचस्नेहंसौगंधकारकम्॥मयानिवेदितंभ
क्त्यास्नानीयंप्रतिगृह्यताम् ॥६०॥ गंधद्रव्योद्भवंपुण्यंप्रीतिदंदिव्यगंधदम् ॥ मयानिवेदितंभक्त यागंधतोयंतवांबिके ॥६१॥ सर्वमंगलरूपंचसर्वं
चमंगलप्रदम् ॥ पुण्यदंचसुधूपंतंगृहाणपरमेश्वरि ॥६२॥ सुगंधयुक्तंसुखदंमयातुभ्यंनिवेदितम् ॥ जगतांदर्शनार्थायप्रदीपंदीप्तिकारकम् ॥६३॥
अंधकारध्वंसबीजंमयातुभ्यंनिवेदितम् ॥ तुष्टिदंपुष्टिदंचैवप्रीतिदंक्षुद्विनाशनम् ॥६४॥ पुण्यदंस्वादुरूपंचनैवेद्यंप्रतिगृह्यताम् ॥ तांबूलप्रवरंरम्यं
कर्पूरादिसुवासितम् ॥६५॥ तुष्टिदंपुष्टिदंचैवमयातुभ्यंनिवेदितम् ॥ सुशीतलंवारिशीतंपिपासानाशकारणम् ॥६६॥ जगतांजीवरूपंचजीवनं
प्रतिगृह्यताम् ॥ देहशोभास्वरूपंचसभाशोभाविवर्धनम् ॥ ६७ ॥ कार्पासजंचकृमिजंवसनंप्रतिगृह्यताम् ॥ कांचनादिविनिर्माणंश्रीकरंश्रीयुतं
सदा ॥ ६८ ॥ सुखदंपुण्यदंरत्नभूषणंप्रतिगृह्यताम् ॥ नानावृक्षसमुद्भूतंनानारूपसमन्वितम् ॥ ६९ ॥ फलस्वरूपंफलदंफलंचप्रतिगृह्यताम् ॥
सर्वमंगलरूपंचसर्वमंगलमंगलम् ॥ ७० ॥ नानापुष्पविनिर्माणंबहुशोभासमन्वितम् ॥ प्रीतिदंपुण्यदंचैवमाल्यंचप्रतिगृह्यताम् ॥ ७१ ॥
पुण्यदंचसुगंधाढ्यंगंधंचदेविगृह्यताम् ॥ सिंदूरंचवरंरम्यंभालशोभाविवर्धनम् ॥ ७२ ॥ भूषणानांचप्रवरंसिंदूरंप्रतिगृह्यताम् ॥ शुद्धवि
ग्रंथिसंयुक्तंपुण्यसूत्रविनिर्मितम् ॥ ७३ ॥ पवित्रंवेदमंत्रेणयज्ञसूत्रंचगृह्यताम् ॥ द्रव्याण्येतानिमूलेनदत्त्वास्तोत्रंपठेत्सुधीः ॥ ७४ ॥ ततोवि
प्रायभक्त्याचव्रतीदद्याच्चदक्षिणाम् ॥ सावित्रीतिचतुर्थ्यंतंवह्निजायांतमेवच ॥ ७५ ॥ लक्ष्मीमायाकामपूर्वंमंत्रमष्टाक्षरंविदुः ॥ माध्यंदिनोक्तं
स्तोत्रंचसर्वकामफलप्रदम् ॥ ७६ ॥ विप्रजीवनरूपंचनिबोधकथयामिते ॥ कृष्णेनदत्तांसावित्रींगोलोकेब्रह्मणेपुरा ॥ ७७॥ नायातिसातेनसा
र्धंब्रह्मलोकेचनारद ॥ ब्रह्माकृष्णाज्ञयाभक्त्यातुष्टाववेदमातरम् ॥७८॥तदासापरितुष्टाचब्रह्माणंचकमेपतिम् ॥ ब्रह्मोवाच॥सच्चिदानंदरूपेत्वंमू
लप्रकृतिरूपिणि ॥७९॥ हिरण्यगर्भरूपेत्वंप्रसन्नाभवसुंदरि ॥ तेजःस्वरूपेपरमेपरमानंदरूपिणि॥८०॥द्विजातीनांजातिरूपेप्रसन्नाभवसुंदरि॥
नित्येनित्यप्रियेदेवीनित्यानंदस्वरूपिणि॥८१॥सर्वमंगलरूपेचप्रसन्नाभवसुंदरि॥सर्वस्वरूपेविप्राणांमंत्रसारेपरात्परे ॥८२॥सुखदेमोक्षदेदेविप्र
सन्नाभवसुंदरि ॥ विप्रपापेध्मदाहायज्वलदग्निशिखोपमे॥८३॥ब्रह्मतेजःप्रदेदेविप्रसन्नाभवसुंदरि ॥ कायेनमनसावाचायत्पापंकुरुतेनरः ॥८४॥

देयाःस्वाहारहितोनमोंतस्तुस्त्रीणांजपेऽपि ॥ ७६ ॥ कृष्णेनगोपालसुंदरीरूपेण ॥ ७७॥ नाऽऽयातिनाऽऽगच्छातिततःकारणात्तुष्टावेत्यर्थः ॥७८ ॥ ७९॥ ८० ॥८१॥ ८२॥८३॥८४ ॥

॥ ८५ ॥ ८६ ॥ ८७ ॥ इतिश्रीदेवीभागवततिलकेनवमस्कंधेषड्विंशोऽध्यायः ॥ २६ ॥ पंचविंशतिपद्यैस्तुजन्मराजोदरेततः ॥ सावित्र्याःकलयाजातामितिसम्यगथोच्यते ॥ १ ॥ सावित्रीदशनादिकं वर्णयति स्तुत्वेति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ कमलापराकमलासदृशीसुंदरीत्यर्थः ॥ सावित्रीतदंशत्वात् ॥ ६॥ ७ ॥ ८॥ ९ ॥१०॥ वृक्षात्पतित्वासममारेत्यर्थः ॥ ११ ॥ अंगुष्ठसमामिति ॥ तदुक्तंमहाभारते । अथसत्यवतःकायात्पाशबद्धंवशंगतम् ॥ अंगुष्ठमात्रंपुरुषंनिश्चकर्षयमोबलादिति ॥ प्रययौसतीति ॥ यदिपाितिदर्शनंनस्यात्तदा देहस्त्याज्यः॥ पतिस्तुयमहस्तेदृश्यतएवेतिनदेहंतत्याजाकिंतुतत्पश्चादेवययौ॥ननुयदायमोदेहात्पतिंनिश्चकर्षतदासावित्र्यापातिव्रतयाकथंननिवारितोयमोनहिकाचित्पतिव्रतापतिमरणमिच्छंतीदृष्टा ॥ननुनिवारितएवेतिचेत्सकथंपतिव्रतावचनमुल्लंघ्यतंगृहीत्वागतः॥ नन्वीश्वराणांसामर्थ्यातिशयान्नपतिव्रतादीनांभयमस्तीतिचेत्तर्हिस्वयमेवाकिमर्थमत्रागतोनाहिकुत्रचिद्य

तत्त्वत्स्मरणमात्रेणभस्मीभूतंभविष्यति ॥ इत्युक्त्वाजगतांधातातस्थौतत्रचसंसदि ॥८५॥ सावित्रीब्रह्मणासार्धंब्रह्मलोकंजगामसा ॥ अनेनस्तवराजेनसंस्तूयाऽश्वपतिर्नृपः ॥ ८६ ॥ ददर्शतांचसावित्रींवरंप्रापमनोगतम् ॥ स्तवराजमिमंपुण्यंसंध्यांकृत्वाचयःपठेत् ॥८७॥ पाठेचतुर्णांवेदानांयत्फलंलभतेचतत् ॥ इतिश्रीदेवीभागवतेम० नवमस्कंधेषड्विंशोऽध्यायः ॥२६॥ श्रीनारायणउवाच ॥ स्तुत्वाऽनेनसोश्वपतिःसंपूज्यविधिपूर्वकम् ॥ ददर्शतत्रतांदेवींसहस्रार्कसमप्रभाम् ॥१॥ उवाचसाचराजानंप्रसन्नासस्मितासती ॥यथामातास्वपुत्रंचद्योतयंतीदिशस्त्विषा॥२॥ सावित्र्युवाच ॥ जानाम्यहंमहाराजयत्तेमनसिवांछितम् ॥ वांछितंतवपत्न्याश्चसर्वंदास्यामिनिश्चितम् ॥ ३ ॥ साध्वीकन्याभिलाषंचकरोतितवकामिनी ॥ त्वंप्रार्थयसिपुत्रंचभविष्यतिक्रमेणच ॥ ४ ॥ इत्युक्त्वासातदादेवीब्रह्मलोकंजगामह ॥ राजाजगामस्वगृहंतत्कन्याऽऽदौबभूवह ॥ ५ ॥ आराधनाच्चसावित्र्याबभूवकमलापरा ॥ सावित्रीतिचतन्नामचकाराऽश्वपतिर्नृपः ॥ ६ ॥ कालेनसावर्धमानाबभूवचदिनेदिने ॥ रूपयौवनसंपन्नाशुक्लेचंद्रकलायथा ॥ ७ ॥ सावरंवरयामासद्युमत्सेनात्मजंसदा ॥ सत्यवंतंसत्यशीलंनानागुणसमन्वितम् ॥ ८॥ राजातस्मैददौतांचरत्नभूषणभूषिताम् ॥ सोऽपिसार्धंकौतुकेनतांगृहीत्वागृहंययौ ॥ ९ ॥ सचसंवत्सरेऽतीतेसत्यवान्सत्यविक्रमः ॥ जगामफलकाष्ठार्थंप्रहर्षंपितुराज्ञया ॥ १० ॥ जगामसाध्वीतत्पश्चात्सावित्रीदैवयोगतः ॥ निपत्यवृक्षाद्दैवेनप्राणांस्तत्याजसत्यवान् ॥ ११ ॥ यमस्तंपुरुषंदृष्ट्वाबद्ध्वांगुष्ठसमंमुने ॥ गृहीत्वागमनंचक्रेतत्पश्चात्प्रययौसती ॥ १२ ॥

मःस्वयंगच्छति ॥ किंतर्हिस्वसत्त्वयैवसर्वंकार्यंकरोति ॥ तथाप्यस्याःपातिव्रत्यसामर्थ्याद्भयान्नस्वसत्त्वयादूतादिनावाकार्यंभवेदितिमनीषयाहिस्वयमागतस्तथाचानयातादृशसामर्थ्यवत्यासर्वथानिरोद्धव्यइतिचेन्न ॥ अन्याशयात् ॥ सावित्र्याअयमभिप्रायः ॥ नहिकुत्रचिद्यमोमहानुभावःपरमेश्वरःस्वयंगच्छति नचगत्वापापिनांमादृशानां चक्षुर्गोचरोभवतिकेवलंमय्यनुग्रहेणैवतुममदृष्टिगोचरोजातस्ततस्तादृशस्यपरमेश्वरस्यममाश्रमेऽतिथिरूपेणागतस्यकथमभिलषितंनसंपादनीयम् ॥ नचपतिवियोगभयात्तत्संपादनंपातिव्रतानामावश्यकमित्यस्याविषयोऽस्ति मयैतत्सहैवगमनेपातिवियोगस्यैवाभावात् ॥ नचयमलोकेमनुष्यदेहोनगमिष्यतीतिसहगमनमपिकेनाभिप्रायेणभविष्यतीतिवाच्यम्॥परमेश्वरदर्शनेनसदेहानामपिपूर्वराजशूराणांस्वर्गादिगमनस्यजातस्यश्रुतत्वेनममापिपरमेश्वरस्यैतस्यदर्शनस्यजातत्वेनसहगमनंभाविष्यतीत्यभिप्रायस्यसत्त्वादिति ॥ १२ ॥

यमस्तुतंगृहीत्वाऽतिसामर्थ्यवतीयंनिरोद्धुंसमर्थाऽपिकिमितिनपतिनयनेनिरोधंकृतवतीकिंचिदस्यामनासिकिमप्यन्यत्कर्तव्यमस्तीतिभियापृष्ठतोददर्श ॥ तत्रचसुदतींतांददर्श॥दंतवर्णने
नेषद्धास्यवतींददर्शेत्यर्थः तादृशानर्थेहास्यकारणंत्वित्थम् ॥ ममसामर्थ्येसत्यप्येतादृशमहानुभावस्येश्वरस्यातिथ्यार्थंसंतोषार्थंप्राणाधिकमपिपतिंदत्तवतीतदेतदौदार्यममदृष्ट्वाकथंनदेव
स्तुतोष किंचिद्भाषणमपिनकृतवान्किंचैतादृशदर्शनेकल्याणमेवभवतीतिदर्शनस्वभावः ॥ तत्कथमयंदयालुःसर्वज्ञःसन्स्वंस्वभावंनजानातिज्ञात्वाचकथमबलायाममपतिंनयतीत्याश्चर्य
मेवेति ॥ यमोऽपितदभिप्रायेणहास्यंज्ञात्वालज्जितोमधुरंप्रोवाच ॥ नन्वतिक्रूरःकिमित्युवाचेत्यत्राऽऽह ॥ साधूनांप्रवरइति ॥ दुष्टानांक्रूरोभासतेस्वतस्तुसाधुरेवेतिभावः ॥ १३ ॥ अहो
क्रयासीति ॥ यद्यपितवमल्लोकगमनेसामर्थ्यमास्तितथाऽपिसाधुभिरीश्वरमर्यादोल्लंघनंकर्तुमनुचितमितिभावः ॥ १४ ॥ ईश्वरमर्यादामेवदर्शयति ॥ गंतुमिति ॥१५॥ तवभर्तामयानी
तइतिमदपराधंकदापिनजानीहिकिंचत्वमपिपतिवियोगजन्यंखेदंमाकुरुप्राणिमात्रस्यकर्माधीनत्वादितिदर्शयितुंतवमर्यादयातुष्टोऽहंब्रह्मविद्यांदास्यामीतिस्वौदार्यंसावित्र्यौदार्यापेक्षयाऽ

पश्चात्तांसुदतींदृष्ट्वायमःसंयमनीपतिः ॥ उवाचमधुरंसाध्वींसाधूनांप्रवरोमहान् ॥ १३ ॥ धर्मराजउवाच ॥ अहोक्वयासिसावित्रिगृहीत्वामा
नुषींतनुम् ॥ यदियास्यसिकांतेनसार्धंदेहंतदात्यज ॥ १४ ॥ गंतुंमर्त्योनशक्नोतिगृहीत्वापांचभौतिकम् ॥ देहंचममलोकंचनश्वरंनश्वरःसदा
॥ १५ ॥ भर्तुस्तेपूर्णकालोवैबभूवभारतेसति ॥ स्वकर्मफलभोगार्थंसत्यवान्यातिमद्गृहम् ॥ १६ ॥ कर्मणाजायतेजंतुःकर्मणैवप्रलीयते ॥ सु
खंदुःखंभयंशोकःकर्मणैवप्रणीयते ॥१७॥ कर्मणेंद्रोभवेज्जीवोब्रह्मपुत्रःस्वकर्मणा ॥ स्वकर्मणाहरेर्दासोजन्मादिरहितोभवेत्॥१८॥ स्वकर्मणास
र्वसिद्धिममरत्वंलभेद्ध्रुवम् ॥ लभेत्स्वकर्मणाविष्णोःसालोक्यादिचतुष्टयम् ॥ १९ ॥ सुरत्वंचमनुत्वंचराजेंद्रत्वंलभेन्नरः ॥ कर्मणाचशिवत्वंच
गणेशत्वंतथैवच ॥ २० ॥ कर्मणाचमुनींद्रत्वंतपस्वित्वंस्वकर्मणा ॥ स्वकर्मणाक्षत्रियत्वंवैश्यत्वंचस्वकर्मणा ॥ २१ ॥ कर्मणैवचम्लेच्छत्वं
लभतेनात्रसंशयः ॥ स्वकर्मणाजंगमत्वंशैलत्वंचस्वकर्मणा ॥ २२ ॥ कर्मणाराक्षसत्वंचकिन्नरत्वंस्वकर्मणा ॥ कर्मणैवाधिपत्यंचवृक्षत्वंचस्व
कर्मणा ॥ २३ ॥ कर्मणैवपशुत्वंचवनजीवीस्वकर्मणा ॥ कर्मणाक्षुद्रजंतुत्वंकृमित्वंचस्वकर्मणा ॥ २४ ॥ दैतेयत्वंदानवत्वमसुरत्वंस्वकर्म
णा ॥ इत्येतदुक्त्वासावित्रींविरराम सवैयमः॥२५॥ इतिश्रीदेवीभागवतेमहापुराणेनवमस्कंधेसप्तविंशोऽध्यायः ॥२७॥ श्रीनारायणउवाच ॥
यमस्यवचनंश्रुत्वासावित्रीचपतिव्रता ॥ तुष्टावपरयाभक्त्यातमुवाचमनस्विनी ॥ १ ॥

धिकमितिचदर्शयितुमाह ॥भर्तुस्तेपूर्णकालइति ॥ १६॥ प्राणिमात्रस्यकर्माधीनत्वंवर्णयति । कर्मणेत्यादिविरराम सवैयमइत्यंतम् ॥ तथाचयदितवमद्दर्शनफलमपेक्षितंतदातवपतिव्य
तिरिक्तंयद्यदपेक्षितंतद्दास्यामिपतिंतुनैवदास्यामीतिगूढोऽभिसंधिः ॥१७॥१८॥१९॥२०॥२१॥२२॥२३॥२४॥ २५॥ इतिश्रीदेवीभागवतटीलकेनवमस्कंधेसप्तविंशोऽध्यायः ॥ २७ ॥
अर्धाधिकैश्चत्रिंशद्भिःपद्यैरध्यात्ममेवच ॥ पप्रच्छदेवीसंक्षेपात्तदिदानीमथोच्यते ॥१॥ सावित्रीतुकर्मणाबद्धंसर्वंभवतिनकाश्चित्प्रपंचेस्वतंत्रोऽस्ति॥ब्रह्मविष्णुरुद्रादयोऽपिकर्मणैवजाताः
कर्मणैवबद्धाश्चेतियमधर्मवाक्यंश्रुत्वाऽतिशुद्धांतःकरणासंसाराद्विरक्तासतीपतिनिष्कासनोपायंदेवसंतोषेणैवपश्चात्करिष्यामिप्रथमंत्वयंवक्तुमुद्युक्तोदेवोब्रह्मनिष्ठोऽस्मिन्समयेदुर्लभाब्रह्म
विद्याऽपिपृच्छयतेचेन्मयिसंतोषाद्वक्ष्यतीतिभासतेनैतादृशज्ञानिप्रवरस्यसमागमोममदुर्भगायाःकदाचिदपिस्यात्॥ ततःसर्वसारभूताब्रह्मविद्याप्रष्टव्येत्यभिप्रायेणतत्कर्मनाशायकर्मस्वरूप
पतन्निमित्तकारणंयःकर्मणाबद्धोदेहीसकइत्यादिकंसर्वंपृच्छति । यमस्येतितुष्टावेति॥ हेदेवेदेवत्वंममाद्यारभ्यगुरुः ॥ त्वयायदुच्यतेतत्सत्यमेवेत्यादिवाक्यैस्तुष्टावेत्यर्थः ॥ १ ॥

तथाऽपितत्रकश्चिन्ममप्रष्टव्यांशोवर्ततेतंदयांकृत्वावदेत्याभिप्रायेणपृच्छति ॥ किंकर्मेति ॥ कमस्वरूपंकीदृशंकेनकीदृशेननिमित्तेनतत्कर्मभवेत् ॥ किंचतस्यकर्मणोहेतुरुपादानभूतःकः ॥ तेनकर्मणाबद्धोदेहीकः ॥ देहश्चकः ॥ कर्मकारकः कर्मकर्ताचकः ॥२॥ येनज्ञानेनमुक्तिर्भवतीतितच्चज्ञानंकीदृशंबुद्धिश्चकाकीदृशी ॥ तेषामिंद्रियाणांलक्षणंकिंतेषांदेवताश्चकाः ॥३ ॥ कश्चभोक्ताऽस्मिन्देहेभोजयितावाकः ॥ कश्चभोगः ॥ तस्यास्यसंसारस्यनिर्नाशश्चकीदृशःकोजीवःकश्चपरमात्मातदेतत्सर्ववद ॥ यदिपतिवियोगेनसंतप्तायाममचित्तशांतिंकर्तु मिच्छसीत्यर्थः ॥ ४ ॥ तत्रप्रथमतःकर्मस्वरूपमाह । वेदेति ॥ द्विविधंहिकर्मशुद्धमशुद्धंशुभमशुभंच ॥ तत्रवेदोक्तं कर्मशुभंतारकंवेदानुक्तंतुकर्माशुभंनरकादिप्रदमित्यर्थः ॥ वेदस्य सर्वमूलप्रकृतिप्रणीतत्वेनतास्मिन्भ्रांतवाक्यत्वाभावादितरेषांशास्त्राणांत्वसर्वज्ञाज्ञानाविशिष्टकर्तृप्रणीतत्वेतनेषांभ्रांतवाक्यत्वादितिभावः॥५॥ ननुवेदोक्तशुभकर्मणामपिस्वर्गकामोयजेतें त्यादिवाक्यैरनित्यफलमेवभवतीतिकथंतस्यतारकत्वं किंचैतादृशशुभाशुभकर्मतुभोगप्रवाहपतितस्यनरस्यनकेनाऽपिप्रकारेणानिष्कासनोपायोदृश्यतइतिचेत्तत्राऽऽह ॥ अहैतुकीति॥हेतुः फलंतद्रहिता ॥ किंचसंकल्पःफलवासनातद्रहिताचयादेवसेवादेवप्रीत्यर्थंसेवासाकर्मनिर्मूलनंयावत्कर्माभावस्तद्रूपातस्यकर्त्रींचित्तशुद्धिदायिनीत्यर्थः ॥ अयंभावः । वेदोक्तमेवकर्मपरमे

## सावित्र्युवाच ॥ किंकर्मतद्भवेत्केनकोवातद्धेतुरेवच ॥ कोवादेहीचदेहःकःकोवाऽत्रकर्मकारकः ॥ २ ॥ किंवाज्ञानंचबुद्धिःकाकोवाप्राणःशरीरिणाम् ॥ कानींद्रियाणिकिंतेषांलक्षणंदेवताश्चकाः ॥ ३ ॥ भोक्ताभोजयिताकोवाकोवाभोगश्चनिष्कृतिः ॥ कोजीवःपरमात्माकस्तन्मेव्याख्यातुमर्हसि ॥४॥ धर्मउवाच॥वेदप्रणिहितोधर्मःकर्मयन्मंगलंपरम् ॥ अवैदिकंतुयत्कर्मतदेवाशुभमेवच ॥ ५ ॥ अहैतुकीदेवसेवासंकल्परहितासती ॥ कर्मनिर्मूलरूपाचसाएवपरभक्तिदा ॥ ६ ॥ कोवाकर्मफलंभुंक्तेकोवानिर्लिप्तएवच ॥ ब्रह्मभक्तोयोनरश्चसचमुक्तःश्रुतःश्रुतौ॥७॥ जन्ममृत्युजराव्याधिशोकभीतिविवर्जितः ॥ भक्तिश्चद्विविधासाध्विश्रुत्युक्तासर्वसंमता ॥ ८ ॥ निर्वाणपददात्रीचहरिरूपप्रदानृणाम् ॥ हरिरूपस्वरूपांचभक्तिंवांछंतिवैष्णवाः ॥ ९ ॥ अन्येनिर्वाणमिच्छंतियोगिनोब्रह्मवित्तमाः ॥ कर्मणोबीजरूपश्चसततंतत्फलप्रदः ॥ १० ॥

श्वरप्रीत्यर्थंनिष्कामनयाक्रियमाणंचित्तशुद्धिद्वारापरात्मानिपरानुरक्तिरूपपरभक्त्युत्पादनद्वाराज्ञानप्राप्तयेभवतीतितारकमेवतत्कर्मेत्यर्थइति ॥ ६॥ कोवाकर्मेति । इत्थंपरभक्तिंयःप्राप्तः सब्रह्मभक्तःसर्वतोनिर्लिप्तश्चकोवाकर्मकरोतीतिशेषः ॥ तथाकोवाफलंकर्मणोभुंक्तेनकोप्येतादृशोब्रह्मभक्तःकर्मकरोतिनचतत्फलंभुंक्तेकिंतुश्रुतौसएवनरोमुक्तइतिश्रुतइत्यर्थः ॥ नचैतादृश स्यकर्मफलभोगप्रवाहपतितत्वंसंभवतीतिभावः ॥७॥ मुक्तस्वरूपंवर्णयति । जन्ममृत्युजरेति ॥ तत्रभक्तिःकिंनिर्गुणेस्थापनीयोतसगुणेइतिविशेषमाह । द्विविधेति ॥ ८ ॥ निर्वाणेति एकानिर्वाणपददात्रीकैवल्यपददात्री ॥ निर्गुणात्मविषयिणीत्यर्थः ॥ द्वितीयाहरिरूपप्रदा ॥ हरिरित्युपलक्षणंसगुणब्रह्मणः तथाचसगुणब्रह्मसरूपप्रदात्रीसगुणब्रह्मविषयिणीद्वितिया भक्तिरित्यर्थः ॥ तत्रद्विविधयोर्भक्त्योरधिकारिणमाह । हरिरूपस्वरूपांचेति ॥ हरिपदमुपलक्षणंसगुणब्रह्मणोवैष्णवपदमुपलक्षणंसाधकानाम् ॥ तथाचसाधकामध्यमाधिकारिणः॥ उत्तमाधिकारप्राप्त्यर्थंहरिरूपस्वरूपांसगुणब्रह्मविषयिणींभक्तिंवांछंति ॥९ ॥ अन्येइति ॥ ब्रह्मवित्तमायोगिनोनिर्वाणमिच्छंति ॥ अर्थान्निर्गुणभक्तिंवांछंतीत्यर्थः ॥ कर्मणउपादानकारणस्वरूपमाह । कर्मणोबीजरूपश्चेति ॥ यः परमात्माकर्मणोबीजरूपस्तत्फलप्रदः कर्मफलप्रदाताच ॥ १० ॥

कर्मरूपश्चसृष्टिस्थितिसंहारात्मकस्तत्कर्ताचयः ॥ प्रकृतिः परामूलप्रकृतिरूपः सोऽपिसएवतद्धेतुरूपश्चकर्मणउपादानकारणमित्यर्थः ॥ मायाविशिष्टब्रह्मरूपिणीमूलप्रकृतिःकर्मउपादानकारणंघिवर्तकारणंनिमित्तकारणंचेतिभावः॥ तत्राविद्योपादानमविद्यायांचित्प्रतिबिंबोनिमित्तकारणंब्रह्मविवर्तकारणमितिविभागः ॥अविद्यातः कामः कामतः कर्मेतिसिद्धांतात् ॥ एतेननिमित्तकारणमदृष्टरूपमकथितमप्यर्थाद्बोद्धव्यम् ॥ देहःकइत्यस्योत्तरमाह । नश्वरएवेति ॥ योऽत्रमृतस्यनश्वरःपततिसदेहइत्यर्थः ॥ ११ ॥ सचपांचभौतिकइत्याह । पृथिवीवायुरिति ॥ सूत्ररूपाणिमणिषुसूत्रवत्सर्वदेहव्यापकानिएतानिपंचभूतानीत्यर्थः ॥ सतोब्रह्मणः सृष्टिरूपविधौदेहादिसृष्टिविधावेतानिसूत्राणिपंचभूतानीत्यर्थः ॥ ततश्चपांचभौतिकोदेहइतिसिद्धम् ॥ १२ ॥ कर्मकर्तेति ॥ यःकर्मकर्ताजीवःसएवदेहीनान्यइत्यर्थः ॥ अनेनप्रश्नद्वयोत्तरंदत्तंभवति ॥ देहीचेतिचकारेणभोक्ताऽपिसएवेतिबोध्यम्॥ आत्माभोजयितेति ॥ अंतर्यामीभोजयिताप्रेरकइत्यर्थः ॥ विभवभेदःसुखदुःखसाक्षात्काररूपोभोगशब्देनोच्यतइत्यर्थः ॥ निष्कृतिर्मुक्तिः ॥ आत्मस्वरूपावस्थानरूपामुक्तिर्निष्कृतिपदवाच्येत्यर्थः ॥ १३ ॥ सदसद्भेदबीजंचेति ॥ सदात्माअसन्मायादिकंतयोर्भेदोविवेकस्तस्यबीजंकारणंयत्तज्ज्ञानशब्देनोच्यते ॥ अपरोक्षात्मवस्तुविषयंयद्ब्रह्मविद्यारूपंतज्ज्ञानशब्देनोच्यतइत्यर्थः ॥नानाविधमिति । नानाविधंघटपटादिविषयकंतथाविषयाणांयेपरस्परविभागास्तेषांभेदिभेदकंयद्बीजंसर्ववासनानांकीर्तितम् ॥ १४ ॥ सासर्वविवेचनरूपानिश्चयरूपाबुद्धिपदेनोच्यतइतिसाचबु

**कर्मरूपश्चभगवान्परात्माप्रकृतिःपरा ॥ सोऽपितद्धेतुरूपश्चदेहोनश्वरएवच ॥ ११ ॥ पृथिवीवायुराकाशोजलंतेजस्तथैवच ॥ एतानिसूत्ररूपाणिसृष्टिरूपविधौसतः ॥ १२ ॥ कर्मकर्ताचदेहीचआत्माभोजयितासदा ॥ भोगोविभवभेदश्चनिष्कृतिर्मुक्तिरेवच ॥ १३ ॥ सदसद्भेदबीजंचज्ञानंनानाविधंभवेत् ॥ विषयाणांविभागानांभेदिबीजंचकीर्तितम् ॥ १४ ॥ बुद्धिर्विवेचनासाचज्ञानबीजंश्रुतौश्रुतम् ॥ वायुभेदाश्चप्राणाश्चबलरूपाश्चदेहिनाम् ॥ १५ ॥ इंद्रियाणांचप्रवरमीश्वरांशमनूहकम् ॥ प्रेरकंकर्मणांचैवदुर्निवार्यंचदेहिनाम् ॥ १६ ॥ अनिरूप्यमदृश्यंचज्ञानभेदोमनःस्मृतम् ॥ लोचनंश्रवणंघ्राणंत्वक्चरसनमिंद्रियम् ॥ १७ ॥ अंगिनामंगरूपंचप्रेरकंसर्वकर्मणाम् ॥ रिपुरूपंमित्ररूपंसुखरूपंचदुःखदम् ॥ १८ ॥ सूर्योवायुश्चपृथिवीब्रह्माद्यादेवताःस्मृताः ॥ प्राणदेहादिभृद्योहिसजीवःपरिकीर्तितः ॥ १९ ॥ परमंव्यापकंब्रह्मनिर्गुणःप्रकृतेःपरः ॥ कारणंकारणानांचपरमात्मासउच्यते ॥ २० ॥**

द्धिः पूर्वोक्तस्याऽनुभवात्मकस्यज्ञानस्यबीजंभवति ॥ एकैवबुद्धिरंतर्मुखतयाविलसंतीज्ञानब्रह्मविद्येत्यादिपदैर्बहिर्मुखतयाविलसंतीबुद्ध्यादिपदैरुच्यतइत्यर्थः॥वायुभेदाऊर्ध्वाधोभेदेनयेहृदयादिषुप्रसिद्धास्तेऽत्रप्राणपदेनोच्यंतइत्यर्थः ॥ तएवबलरूपाइतिविशेषरूपप्रदर्शनार्थम् ॥ १५ ॥ बुद्धेर्निश्चयात्मकंरूपमुक्त्वासंकल्पविकल्पात्मकंमनसःस्वरूपमाह।इंद्रियाणांप्रवरमिति ॥ तेषांश्रेष्ठमीश्वरस्यपरमात्मनोबिंबभूतस्यांशः अंशइवअंशः प्रतिबिंबरूपोयास्मिन्नंतःकरणरूपेमनासितादृशम् ॥ अनूहकम् ऊहस्तर्कोनिश्चयात्मकस्तदभाववत्संशयात्मकमित्यर्थः ॥ कर्मणामिंद्रियव्यापाराणांप्रेरकंदुर्निवार्यंस्वाधीनंकर्तुमशक्यमतिचंचलमित्यर्थः ॥१६॥ अनिरूप्यमेतादृशमितिनिरूपयितुमशक्यम्॥ज्ञानभेदोबुद्धिभेदोयत्तदेवमनइत्यर्थः ॥ बुद्धिरेवैतौद्वौभेदावित्यर्थः॥ज्ञानेंद्रियाण्याह।लोचनमिति॥ १७॥अंगिनामवयविनामंगरूपमवयवरूपंसर्वकर्मणांसर्वकर्मेंद्रियव्यापाराणांप्रेरकमित्यर्थः॥रिपुरूपमेतदेवेंद्रियंविषयेष्वासक्तंरिपुरूपंदुःखदंभवति॥तदेवसद्विषयेष्वासक्तंमित्ररूपंसुखदंभवतीत्यर्थः॥ १८॥इंद्रियाणांदेवताआह सूर्यइति॥अत्रसंग्रहेणोक्ताः॥ अन्यत्रतुदिग्वातार्कप्रचेतोश्विवह्नींद्रोपेंद्रमित्रकाइतिविशेषेणोक्ताः॥ जीवस्वरूपमाह प्राण देहादीति ॥ यःप्राणदेहादीनांधारकोंतःकरणेप्रतिबिंबरूपःसोत्रजीवशब्देनोच्यंतइत्यर्थः॥ १९॥परमात्मस्वरूपमाह । परमिति॥स्पष्टोऽर्थः॥ २०॥

इत्येवमिति॥ हेवत्सेममतनयेयत्त्वयापृष्टमप्रष्टव्यमपियदर्थमिंद्रादयोऽपिशतसंवत्सरंगुरुशुश्रूषांकृतवंतस्तत्सर्वंयथागममौपनिषदंतत्त्वंकथितंकेवलंत्वत्सौजन्यवशादिदमेवज्ञानिनांज्ञानरूपम् एतज्ज्ञानेनैवज्ञानिनःकृतकृत्याःसनकादयोजीवन्मुक्ताःसंतोमुक्तिंप्रापुस्तदेतन्मयोक्तंहृदिनिश्चित्यपतिवियोगजन्यंखेदंमाकार्षीःअकृत्वाचखेदंयथासुखंस्वस्थानंप्रतिगच्छेत्यर्थः ॥ अत्रसावित्र्याः सौजन्यंपरमास्तिकतास्वोपदिष्टातिसूक्ष्मतत्त्वग्राहकतास्वस्मिन्मुखचर्याभाषणादिभिर्निर्व्याजभक्तिंचज्ञात्वाऽतिगद्गदांतःकरणोझटितिवत्सेइत्युवाचेतिबोध्यम्॥२१॥सावित्रीतुमांप्रतिदेवदेवेनस्वमुखेनैववत्सेइत्युक्तंततएतस्याग्रेयथेष्टभाषणेकोदोषइत्यभिप्रायेणवदतित्यक्त्वेति॥हेदेवकांतंपतिंत्यक्त्वाक्कयामियास्यामिनक्कचिद्गंतुंस्थलमस्तीत्यर्थः॥ अयंभावः ॥ यावत्पर्यंतमहंसामान्यास्थितातावत्पर्यंतंसर्वोऽपिदेशोममगंतव्यएवस्थितोऽधुनातुत्वयावत्सेइत्युक्तंततोनाहंसामान्याकिंतुतवकन्याऽस्मिततोयमकन्येयंविधवालोकेव्यवहरतीतितवायशःकर्तुंकथंलोकेगमिष्यामीति॥किंचस्त्रियाःप्रथमंपतिः संरक्षकस्तदभावेपुत्रस्तत्रममद्वयोरभावस्तदापित्रैवसापालनीयाततश्चत्वांपितरंज्ञानार्णवंहित्वाक्कयामिनक्कचिदपिनस्त्रीस्वातं

इत्येवंकथितंसर्वंत्वयापृष्टंयथागमम् ॥ ज्ञानिनांज्ञानरूपंचगच्छवत्सेयथासुखम् ॥ २१ ॥ सावित्र्युवाच ॥ त्यक्त्वाक्कयामिकांतंवात्वांवाज्ञानार्णवंध्रुवम् ॥ यद्यत्करोमिप्रश्नंचतद्भवान्वक्तुमर्हति ॥ २२ ॥ कांकांयोनिंयातिजीवःकर्मणाकेनवापुनः ॥ केनवाकर्मणास्वर्गंकेनवानरकंपितः ॥ २३ ॥ केनवाकर्मणामुक्तिःकेनभक्तिर्भवेद्गुरौ ॥ केनवाकर्मणायोगीरोगीवाकेनकर्मणा ॥ २४ ॥ केनवादीर्घजीवीचकेनाल्पायुश्चकर्मणा ॥ केनवाकर्मणादुःखीसुखीवाकेनकर्मणा ॥ २५ ॥ अंगहीनश्चकाणश्चबधिरःकेनकर्मणा ॥ अंधोवापंगुरपिवाप्रमत्तःकेनकर्मणा ॥ २६ ॥ क्षिप्तोऽतिलुब्धकश्चौरःकेनवाकर्मणाभवेत् ॥ केनसिद्धिमवाप्नोतिसालोक्यादिचतुष्टयम् ॥२७॥ केनवाब्राह्मणत्वंचतपस्वित्वंचकेनवा॥ स्वर्गभोगादिकंकेनवैकुंठंकेनकर्मणा ॥२८॥ गोलोकंकेनवाब्रह्मन्सर्वोत्कृष्टंनिरामयम् ॥ नरकोवाकतिविधःकिंसंख्योनामकिंचवा ॥ २९ ॥ कोवाकंनरकंयातिकियंतंतेषुतिष्ठति ॥ पापिनांकर्मणाकेनकोवाव्याधिःप्रजायते ॥ यद्यत्प्रियंमयापृष्टंतन्मेव्याख्यातुमर्हसि ॥ ३० ॥ इतिश्रीदेवीभागवतेमहापुराणेनवमस्कंधेनारदनारायणसंवादेसावित्र्युपाख्यानेऽष्टाविंशोऽध्यायः ॥ २८ ॥ श्रीनारायणउवाच ॥ सावित्रीवचनंश्रुत्वाजगामविस्मयंयमः ॥ प्रहस्यवक्तुमारेभेकर्मपाकंतुजीविनाम् ॥ १ ॥

त्र्यमर्हतीतिनियमादित्याह । त्वांवाज्ञानार्णवमिति ॥ यद्यपिश्वशुरःपालकोऽस्तितथाऽपित्वंपिताब्रह्मविद्योपदेष्टागुरुश्चभवसिततस्त्वांहित्वाकथंयास्यामिनहिब्रह्मदातृगुरोर्वियोगःकस्यापिसोढव्योभवतीतिज्ञानार्णवपदेनसूचितम् ॥ ननुगुरोःसन्निधौकिंतवप्रष्टव्यमस्तीतिचेद्बहुप्रष्टव्यमस्तीत्याह। यद्यत्करोमीति ॥२२ ॥ ननुकेतेप्रश्नाइतिचेत्तत्राऽऽह । कांकांयोनिमिति॥ तेनयमराजेनवत्सेइत्युक्तेसतिसावित्रीपितृपदेनसंबोधयति । पितरिति ॥ २३ ॥ भवेद्गुरौसर्वजनकपरमात्मनीत्यर्थः ॥ २४ ॥२५॥२६॥२७॥ २८ ॥ गोलोकंकेनवायातीत्यन्वयः ॥ ॥ २९ ॥ कियंतंकालमित्यर्थः तेषुनरकेष्वित्यर्थः ॥ ३० ॥ इतिश्रीदेवीभागवततिलकेनवमस्कंधेऽष्टाविंशोऽध्यायः ॥ २८ ॥ सप्ततिश्लोकवर्यैश्चाप्यर्धश्लोकाधिकैरथ ॥ दानधर्मफलंसर्वंयथावदभिवर्ण्यते ॥ १ ॥ अथधर्मराजोममसुखाद्वत्सेइतिपदंनिःसृतंतावन्मात्रेणानयाबद्धोऽहंनकिंचित्कर्तुंशक्तोमीतिमनसिविस्मितःसंस्तस्यागुणभक्तितत्त्वज्ञानश्रद्धावलोकनतोऽतिसंतुष्टहृदयोनकिंचिदस्याअदेयमस्तीत्यभिप्रायेणाऽऽह । सावित्रीति ॥ अनेनसावित्रीविषयेऽतिप्रेमाकुलंनिष्कपटंचित्तंजातमितिबोधितम् ॥ १ ॥

प्रथमतःप्रसन्नःसंस्तांवदति ॥ कन्याद्वादशेति॥हेवत्सेयद्यपित्वंवयसाद्वादशवर्षीयाद्वादशवर्षवतीसुकुमारीअसितथापितेज्ञानंनताद्दशवयोनुरूपंकिंतुपूर्वविदुषांसनकादीनांपरंपरिपाकद
शायांजायमानंज्ञानंतद्भवतिअतिप्रौढज्ञानवतीत्यर्थः ॥२॥ त्वमेताद्दशंस्वरूपंनजानासिपरंत्वहंजानामितत्किमितिचेत्तत्राह । सावित्रीवरदानेनेति ॥ भूभृतातवपित्रातपसापुराकृतेनते
नचजायमानेनसावित्र्यावरदानेनतत्समासावित्रीकलासावित्र्याअंशरूपासीत्यर्थः ॥ ३ ॥ अतःप्रथममेकंवरमहंदास्यामितच्छृण्वित्याह ॥ यथाश्रीरिति ॥ यथैतेषांदेवानामेताःस्त्रियोऽ
खंडितसौभाग्यास्तथात्वंसत्यवतःसौभाग्याऽखंडसौभाग्यवतीप्रियाभवेतिसमुदायार्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ अयमेकोवरोमयादत्तोन्यच्चयद्यत्तवापेक्षितंतत्सर्वंवृण्वित्याह । अयंतुभ्य
मिति ॥ ८ ॥ सावित्रीस्वाभिलषितंवृणोति ॥ सत्यवतइति ॥ ९ ॥ श्वशुरस्यांधस्यराज्यलाभः शत्रुणापहृतस्यराज्यस्यलाभः ॥ नेत्रादिलाभः॥ १०॥ समतीतेलक्षवर्षेलक्षवर्षानंतर

धर्मउवाच ॥ कन्याद्वादशवर्षीयावत्सेत्वंवयसाऽधुना ॥ ज्ञानंतेपूर्वविदुषांज्ञानिनांयोगिनांपरम् ॥ २ ॥ सावित्रीवरदानेनत्वंसावित्रीकला
सती ॥ प्राप्तापुराभूभृताचतपसातत्समासुते॥३॥ यथाश्रीःश्रीपतेःक्रोडेभवानीचभवोरसि ॥ यथादितिःकश्यपेचयथाऽहल्याचगौतमे ॥४॥
यथाशचीमहेन्द्रेचयथाचन्द्रेचरोहिणी ॥ यथारतिःकामदेवेयथास्वाहाहुताशने ॥५ ॥ यथास्वधाचपितृषुयथासंज्ञादिवाकरे ॥ वरुणानीच
वरुणेयज्ञेचदक्षिणायथा ॥६॥ यथावराहेपृथिवीदेवसेनाचकार्त्तिके ॥ सौभाग्यासुप्रियात्वंचतथासत्यव्रतःप्रिये ॥७ ॥ अयंतुभ्यंवरोदत्तोऽन्य
परंचयथेप्सितम् ॥ वृणुदेविमहाभागेददामिसकलेप्सितम् ॥८॥ सावित्र्युवाच ॥ सत्यवतऔरसानांपुत्राणांशतकंमम ॥ भविष्यतिमहाभाग
वरमेतन्मदीप्सितम् ॥९॥ मत्पितुःपुत्रशतकंश्वशुरस्यचचक्षुषी ॥ राज्यलाभोभवत्वेवंवरमेतन्मदीप्सितम् ॥१०॥ अंतेसत्यवतासार्धंयास्या
मिहरिमंदिरम्॥समतीतेलक्षवर्षेदेहीदंमेजगत्प्रभो॥११॥जीवकर्मविपाकंचश्रोतुंकौतूहलंमम॥विश्वनिस्तारबीजंचतन्मेव्याख्यातुमर्हसि॥१२॥
धर्मराजउवाच ॥ भविष्यतिमहासाध्विसर्वंमानसिकंतव ॥ जीवकर्मविपाकंचकथयामिनिशामय ॥१३॥ शुभानामशुभानांचकर्मणांजन्मभा
रते ॥ पुण्यक्षेत्रेचनाऽन्यत्रसर्वंचभुंजतेजनाः ॥१४॥ सुरादैत्यादानवाश्चगन्धर्वाराक्षसादयः ॥ नराश्चकर्मजनकानसर्वेजीविनःसति ॥१५॥
विशिष्टजीविनःकर्मभुंजतेसर्वयोनिषु॥शुभाशुभंचसर्वत्रस्वर्गेषुनरकेषुच॥१६॥विशेषतोजीविनश्चभ्रमंतेसर्वयोनिषु॥शुभाशुभंभुंजतेचकर्मपूर्वा
र्जितंपरम्॥१७॥शुभेनकर्मणायातिस्वर्लोकादिकमेवच॥कर्मणाचाशुभेनैवभ्रमंतिनरकेषुच ॥१८॥कर्मनिर्मूलनेभक्तिःसाचोक्ताद्विविधासति ॥
निर्वाणरूपाभक्तिश्चब्रह्मणःप्रकृतेरिह ॥१९॥ रोगीकुकर्मणाजीवश्चाऽरोगीशुभकर्मणा ॥ दीर्घजीवीचक्षीणायुःसुखीदुःखीचकर्मणा ॥ २० ॥

मंतेसत्यवतापत्यासहैवेत्यर्थः ॥ ११ ॥ तन्मेव्याख्यातुमिति इत्थंवरंदत्त्वातदपिवदेत्यर्थः ॥ १२ ॥ १३ ॥ नाऽन्यत्रेति ॥अन्यत्रभारतखंडादितरत्रनोभयंशुभाशुभंभुंजते किंतुस्वर्गा
दौशुभमेवनरकादावशुभमेवभुंजतेइत्यर्थः ॥१४॥ कर्मजनकाएतेसर्वेकर्मजनकाःकर्मकारिणोनसर्वेजीविनःपश्चादयइतिकर्माधिकारिणोदर्शिताः ॥ १५ ॥ विशिष्टजीविनोमुख्यजीविनः
कर्माधिकृतामनुष्यादयःपूर्वोक्ताइत्यर्थः ॥ १६ ॥ पूर्वार्जितंपूर्वसंपादितम् ॥ १७ ॥ १८ ॥ निर्वाणरूपेति ॥ एकानिर्गुणभक्तिः ॥ द्वितीयाब्रह्मणःप्रकृतेर्मायाविशिष्टब्रह्मरूपिण्यामूल
प्रकृतेरित्यर्थः ॥ उभयोरपिभक्तिःकर्मनिर्मूलनेकर्मनाशनेक्षमेत्यर्थः ॥ १९ ॥ २० ॥

इदंसर्वपूर्वोक्तैकैकप्रश्नानामुत्तरंभवतीतिबोध्यम् ॥ २१॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ येस्वधर्माचारवंतःसकामाःपञ्चायतनदेवोपासकास्तत्तद्देवतालोकंगत्वापुनरायांति ॥ येनिष्कामाःसंतःस्वधर्माचारवंतःपञ्चदेवतोपासकास्तेतत्तद्देवतालोकंगत्वातत्रज्ञानंलब्ध्वामुक्ताभवंतिनपुनरावर्ततेइतिसमुदायार्थः ॥२७॥ २८॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ मणिद्वीपंतृतीयस्कन्धोक्तंदेवीलोकम् ॥ ३४ ॥ ३५ ॥ अन्यदेवेज्याःपंचायतनदेवेभ्योऽन्यदेवोपासकाइत्यर्थः ॥ ३६॥३७ ॥ देवान्यसेवनादेवसेवारहिताइत्यर्थः ॥ ३८ ॥ स्वधर्मेति

अंधादयश्चांगहीनाःकर्मणाकुत्सितेनच ॥ सिद्ध्यादिकमवाप्नोतिसर्वोत्कृष्टेनकर्मणा ॥ २१ ॥ सामान्यंकथितंदेविविशेषंशृणुसुंदरि ॥ सुदुर्लभंसुगोप्यंचपुराणेषुस्मृतिष्वपि ॥ २२ ॥दुर्लभामानुषीजातिःसर्वजातिषुभारते ॥ सर्वेभ्योब्राह्मणःश्रेष्ठःप्रशस्तःसर्वकर्मसु॥२३॥ब्रह्मनिष्ठोद्विजश्चैवगरीयान्भारतेसति ॥ निष्कामश्चसकामश्चब्राह्मणोद्विविधःसति ॥२४॥ सकामाच्चप्रधानश्चनिष्कामोभक्तएवच ॥ कर्मभोगीसकामश्चनिष्कामोनिरुपद्रवः॥२५॥सयातिदेहंत्यक्त्वाचपदंयत्तन्निरामयम् ॥पुनरागमनंनास्तितेषांनिष्कामिनांसति॥२६॥सेवंतेद्विभुजंकृष्णंपरमात्मानमीश्वरम्॥गोलोकंप्रतितेभक्तादिव्यरूपविधारिणः॥२७॥सकामिनोवैष्णवाश्चगत्वावैकुंठमेवच ॥भारतंपुनरायांतितेषांजन्मद्विजातिषु ॥ ॥ २८ ॥ कालेनतेचनिष्कामाभवंत्येवक्रमेणच ॥ भक्तिंचनिर्मलांतेभ्योदास्यामिनिश्चितंपुनः ॥२९॥ ब्राह्मणावैष्णवाश्चैवसकामाःसर्वजन्मसु ॥ नतेषांनिर्मलाबुद्धिर्विष्णुभक्तिविवर्जिताः ॥ ३० ॥ तीर्थाश्रिताद्विजायेचतपस्यानिरताःसति ॥ तेयांतिब्रह्मलोकंचपुनरायांतिभारते॥ ॥ ३१ ॥ स्वधर्मनिरतायेचतीर्थान्यत्रनिवासिनः ॥ व्रजंतितेसत्यलोकंपुनरायांतिभारते ॥ ३२ ॥ स्वधर्मनिरताविप्राःसूर्यभक्ताश्चभारते ॥ व्रजंतितेसूर्यलोकंपुनरायांतिभारते ॥ ३३ ॥ मूलप्रकृतिभक्तायेनिष्कामाधर्मचारिणः ॥ मणिद्वीपंप्रयांत्येवपुनरावृत्तिवर्जितम् ॥३४॥ स्वधर्मनिरताभक्ताःशैवाःशाक्ताश्चगाणपाः ॥ तेयांतिशिवलोकंचपुनरायांतिभारते ॥ ३५॥ येविप्राअन्यदेवेज्याःस्वधर्मनिरताःसति ॥ तेयांतिसर्वलोकंचपुनरायांतिभारते ॥ ३६ ॥ हरिभक्ताश्चनिष्कामाःस्वधर्मनिरताद्विजाः ॥ तेचयांतिहरेर्लोकंक्रमाद्भक्तिबलादहो ॥ ३७ ॥ स्वधर्मरहिताविप्रादेवान्यसेवनाःसदा ॥ भ्रष्टाचाराश्चकामाश्चतेयांतिनरकंध्रुवम् ॥ ३८॥ स्वधर्मनिरताएववर्णाश्चत्वारएवच ॥भवंत्येवशुभस्यैवकर्मणःफलभोगिनः ॥ ३९ ॥ स्वकर्मरहितायेचनरकंयांतितेध्रुवम् ॥ भारतेनभवंत्येवकर्मणःफलभोगिनः ॥४०॥ स्वधर्मनिरताएववर्णाश्चत्वारएवच ॥ स्वधर्मनिरताविप्राःस्वधर्मनिरतायच ॥ ४१ ॥ कन्यांददतिविप्रायचंद्रलोकंप्रयांतिते ॥ वसंतितत्रतेसाध्वियावदिंद्राश्चतुर्दश ॥ ४२ ॥

स्वधर्मनिरताःशुभकर्मफलभोगिनः ॥ ३९ ॥ तद्राहितानरकगामिनस्तेचनकदाऽपिभारतेखण्डेसाम्यकर्मफलभोगिनोभवंतिनरकात्तेषामनुद्धारादित्यर्थः ॥ ४० ॥ तस्मात्स्वमर्धनिरतत्वमेवचतुर्भिर्वर्णैःसम्पादनीयमित्याह । स्वधर्मनिरताइति ॥ इदानींविशेषकर्मणां विशेषफलंदर्शयति । स्वधर्मनिरताविप्राइति ॥ ४१ ॥ ददातिप्रयच्छंति ॥ ४२ ॥

सकामाइति ॥ यदितल्लोकप्राप्तीच्छयाकन्यांप्रयच्छंतितदातल्लोकंयांति यदितुनिष्कामतयेश्वरप्रीत्यर्थंकन्यांप्रयच्छंतितदाचित्तशुद्धिरेवफलमितिबोध्यम् ॥४३॥ततश्चित्तेशुद्धेज्ञानंभवति प्रतिबंधकसत्त्वेनज्ञानाभावेतुविष्ण्वादीनांस्वेष्टदेवतानांयेलोकास्तान्प्रतिगच्छंतीत्याह ॥ तेप्रयांतीति ॥ विष्णुपदमुपलक्षणंस्वेष्टदेवतानाम् ॥ ४४ ॥ ४५ ॥ सुवर्णाःशोभनवर्णाः ॥ ॥ ४६ ॥ ब्राह्मणायददतीत्यन्वयः ॥ ४७ ॥ विपुलेविस्तीर्णेलोके ॥ ४८ ॥ ४९ ॥ विपुलंबहुकालम् ॥ ५० ॥ ५१ ॥ यस्मैयस्मैचेति ॥ यद्यद्देवप्रीत्यर्थमित्यर्थः ॥५२॥ सौधेराज सदनेदेवायब्राह्मणायवादत्तेगृहापेक्षयाचतुर्गुणमित्यर्थः ॥ ५३ ॥ प्रकृष्टेमहत्तरेदेशेइत्यर्थः ॥ ५४ ॥ ५५ ॥ वापीलक्षणमाह । धनुश्चतुःसहस्रेणेति ॥ धनुःप्रमाणमुक्तंमार्कंडेयपुराणे ॥

सालंकृतायादानेनद्विगुणंफलमुच्यते ॥ सकामायांतितल्लोकंननिष्कामाश्चसाधवः ॥ ४३ ॥ तेप्रयांतिविष्णुलोकंफलसंघातवर्जिताः ॥ गव्यं चरजतंस्वर्णंवस्त्रंसर्पिःफलंजलम् ॥ ४४ ॥ येददत्येवविप्रेभ्यश्चंद्रलोकंप्रयांतिते ॥ वसंतितेचतल्लोकेयावन्मन्वंतरंसति ॥ ४५ ॥ सुचिरात्सु चिरंवासंकुर्वंतितेनतेजनाः ॥ येददतिसुवर्णाश्चगाश्चताम्रादिकंसति ॥ ४६ ॥ तेयांतिसूर्यलोकंचशुचयेब्राह्मणायच ॥ वसंतितेतत्रलोकेवर्षाणा मयुतंसति ॥ ४७ ॥ विपुलेसुचिरंवासंकुर्वंतिचनिरामयाः ॥ ददातिभूमिंविप्रेभ्योधनानिविपुलानिच ॥ ४८ ॥ सयातिविष्णुलोकंचश्वेतद्वीपं मनोहरम् ॥ तत्रैवनिवसत्येवयावचंद्रदिवाकरौ ॥ ४९ ॥ विपुलेविपुलंवासंकरोतिपुण्यवान्मुने ॥ गृहंददतिविप्राययेजनाभक्तिपूर्वकम् ॥ ॥ ५० ॥ तेयांतिविष्णुलोकंचसुचिरंसुखदायकम् ॥ गृहरेणुप्रमाणंचविष्णुलोकेमहत्तमे ॥ ५१ ॥ विपुलेविपुलंवासंकुर्वंतिमानवाःसति ॥ यस्मैयस्मैचदेवाययोददातिगृहंनरः ॥५२॥ सयातितस्यलोकंचरेणुमानाब्दमेवच ॥ सौधेचतुर्गुणंपुण्यंदेशेशतगुणंफलम् ॥ ५३ ॥ प्रकृष्टेद्विगु णंतस्मादित्याहकमलोद्भवः ॥ योददातितडागंचसर्वपापापनुत्तये ॥ ५४ ॥ सयातिजनलोकंचरेणुमानाब्दमेवच ॥ वाप्यांफलंदशगुणंप्राप्नो तिमानवःसदा ॥ ५५ ॥ सतुवापीप्रदानेनतडागस्यफलंलभेत् ॥ धनुश्चतुःसहस्रेणदैर्घ्यमानेननिश्चितम् ॥५६॥ न्यूनावातावतीप्रस्थेसावापी परिकीर्तिता ॥ दशवापीसमाकन्यायदिपात्रेप्रदीयते ॥ ५७ ॥ फलंददातिद्विगुणंयदिसाऽलंकृताभवेत् ॥ यत्फलंचतडागेचतदुद्धारेचतत्फलम् ॥ ५८ ॥ वाप्याश्चपंकोद्धरणेवापीतुल्यफलंलभेत् ॥ अश्वत्थवृक्षमारोप्यप्रतिष्ठांयःकरोतिच ॥ ५९ ॥ सप्रयातितपोलोकंवर्षाणामयुतंसति ॥ पुष्पोद्यानंयोददातिसावित्रिसर्वभूतये ॥ ६० ॥ सवसेद्ध्रुवलोकंचवर्षाणामयुतंध्रुवम् ॥ योददातिविमानंचविष्णवेभारतेसति ॥ ६१ ॥ विष्णुलोकेवसेत्सोऽपियावन्मन्वंतरंपरम् ॥ चित्रयुक्तेचविपुलेफलंतस्यचतुर्गुणम् ॥ ६२ ॥

चतुर्हस्तोधनुर्दंडोनालिकातद्युगेनतु ॥ क्रोशोधनुःसहस्रेद्वेगव्यूतिश्चचतुर्गुणेति॥धनुश्चतुःसहस्रदैर्घ्यवतीत्यर्थः ॥ ५६ ॥ प्रस्थेविस्तारवतीधनुश्चतुःसहस्रप्रमाणवतीत्यर्थः ॥न्यूनावेति ॥ अथवा विस्तारेप्रमाणनियमोनास्तीत्यर्थः ॥ देवीपुराणेतु वापीदंडमयादूर्ध्वंदशवर्गान्नयोत्तमैरितिवचनाच्चत्वारिंशद्धस्तावाप्युक्ता ॥ चतुर्हस्तोदंडस्तदादिदशवर्गाःदशगुणदंडावधि चत्वारिंशद्धस्तपर्यंतमित्यर्थः ॥ ५७ ॥ पंकोद्धारेतडागपंकोद्धारेइत्यर्थः ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ चित्रयुक्तेविचित्रेविमानेदत्तेइत्यर्थः ॥ विपुलेविस्तीर्णेइत्यर्थः ॥ ६२ ॥

दोलमंदिरंदोलस्थानयोग्यंतद्युक्तंवामंदिरम् ॥६३॥६४॥६५॥६६॥६७॥ ब्राह्मणत्वमतिदुर्लभंनैतत्तपसालभ्यतेकिंतुजन्मनैवेत्याह । क्षत्रियोवेति ॥६८॥६९॥७०॥इतिश्रीदेवीभागवत
तिलकेनवमस्कंधेएकोनत्रिंशोऽध्यायः॥२९॥ शताधिकैश्चचत्वारिंशत्संख्यैःपद्यकैरथ ॥ नानादानफलंसम्यक्स्वर्गादिप्रदमुच्यते ॥१॥ अथनानाविधदानानिस्वर्गादिफलप्रदानिपृच्छति ।

तस्यार्धंशिबिकादानेफलमेवलभेद्ध्रुवम् ॥ योददातिभक्तियुक्तोहरयेदोलमंदिरम् ॥६३॥ विष्णुलोकेवसेत्सोऽपियावन्मन्वंतरंशतम् ॥ राजमा
र्गंसौधयुक्तंयःकरोतिपतिव्रते॥६४॥वर्षाणामयुतंसोऽपिशक्रलोकेमहीयते॥ब्राह्मणेभ्योऽथदेवेभ्योदानेसमफलंलभेत्॥६५॥यद्दिदत्तंचतद्भुक्तेनद
त्तंनोपतिष्ठते॥ भुक्त्वास्वर्गादिजंसौख्यंपुण्यवाञ्जन्मभारते॥६६॥लभेद्विप्रकुलेष्वेवक्रमेणैवोत्तमादिषु॥ भारतेपुण्यवान्विप्रोभुक्त्वास्वर्गादिकं
फलम् ॥६७॥ पुनःसोऽपिभवेद्विप्रश्चैवंचक्षत्रियादयः ॥ क्षत्रियोवाऽथवैश्योवाकल्पकोटिशतेनच ॥६८॥ तपसाब्राह्मणत्वंचनप्राप्नोतिश्रुतौश्रु
तम् ॥ नाऽभुक्तंक्षीयतेकर्मकल्पकोटिशतैरपि ॥६९॥ अवश्यमेवभोक्तव्यंकृतंकर्मशुभाशुभम् ॥ देवतीर्थसहायेनकायव्यूहेनशुद्ध्यति ॥७०॥
एतत्तेकथितंकिंचित्किंभूयःश्रोतुमिच्छसि ॥ इतिश्रीदेवीभागवतेमहापुराणेनवमस्कंधेनारदनारायणसंवादेसावित्र्युपाख्यानेएकोनत्रिंशोऽध्या
यः ॥ २९ ॥ सावित्र्युवाच ॥ प्रयांतिस्वर्गमन्यंचयेनैवकर्मणायम ॥ मानवाःपुण्यवंतश्चतन्मेव्याख्यातुमर्हसि ॥ १ ॥ धर्मराजउवाच ॥
अन्नदानंचविप्राययःकरोतिचभारते ॥ अन्नप्रमाणवर्षंचशिवलोकेमहीयते ॥ २ ॥ अन्नदानंमहादानमन्येभ्योऽपिकरोतियः ॥
अन्नदानप्रमाणंचशिवलोकेमहीयते ॥ ३ ॥ अन्नदानात्परंदानंनभूतंनभविष्यति ॥ नाऽत्रपात्रपरीक्षास्यान्नकालनियमःक्वचित् ॥ ४ ॥ देवे
भ्योब्राह्मणेभ्योवाददातिचाऽऽसनंयदि ॥ महीयतेविष्णुलोकेवर्षाणामयुतंसति ॥ ५ ॥ योददातिचविप्रायदिव्यांधेनुंपयस्विनीम्॥ तल्लोममा
नवर्षंचविष्णुलोकेमहीयते ॥ ६ ॥ चतुर्गुणंपुण्यदिनेतीर्थेशतगुणंफलम् ॥ दानंनारायणक्षेत्रेफलंकोटिगुणंभवेत् ॥७॥ गांयोददातिविप्रायभा
रते भक्तिपूर्वकम् ॥ वर्षाणामयुतंचैवचंद्रलोकेमहीयते ॥८॥ यश्चोभयमुखीदानंकरोतिब्राह्मणायच॥तल्लोममानवर्षंचविष्णुलोकेमहीयते॥९॥
योददातिब्राह्मणायश्वेतच्छत्रंमनोहरम् ॥ वर्षाणामयुतंसोऽपिमोदतेवरुणालये॥१०॥ विप्रायपीडितांगायवस्त्रयुग्मंददातिच ॥ महीयतेवायुलो
केवर्षाणामयुतंसति ॥११॥ योददातिब्राह्मणायशालग्रामंसवस्त्रकम् ॥ महीयतेसवैकुंठेयावच्चंद्रदिवाकरौ ॥ १२॥ योददातिब्राह्मणायदिव्यांश
य्यांमनोहराम्॥महीयतेचंद्रलोकेयावच्चंद्रदिवाकरौ॥१३॥योददातिप्रदीपंचदेवेभ्योब्राह्मणायच ॥यावन्मन्वंतरंसोऽपिवह्निलोकेमहीयते॥१४॥

प्रयांतीति ॥ १ ॥ अन्नप्रमाणवर्षम्अन्नस्ययेरेणवस्तत्प्रमाणवर्षमित्यर्थः ॥ शिवलोकेकैलासे ॥ २ ॥ अन्येभ्योब्राह्मणातिरिक्तेभ्यः ॥ ३ ॥ ४ ॥ आसनमुपवेशनाय ॥ ५ ॥ ६ ॥
नारायणक्षेत्रइति ॥ तच्चक्षेत्रंगंगाप्रवाहसन्निधचतुर्हस्तपरिमितदेशात्मकमग्रेवक्ष्यमाणम् ॥७॥ गांयइति ॥ वृषभोत्रगोशब्देनेतिनपुनरुक्तिः ॥८॥९॥१०॥ ११ ॥ १२ ॥ १३॥१४॥

॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ २९ ॥ २० ॥ हरेर्नामेति इदमुपलक्षणं शिवदेवीगणेशसूर्यनाम्नामपि ॥ २१ ॥ दोलनंसर्वदेवानांपूर्णिमारात्रेश्चरमभागे ॥ २२ ॥ २३ ॥ २४ ॥
॥ २५ ॥ २६ ॥ इदंस्त्रीदानंप्रथमतःकृत्वापश्चात्स्त्रीभारपरिमितंसुवर्णंब्राह्मणायदत्त्वातांस्त्रियंस्वयंगृह्णीयादितिपतिव्रतापदेनसूचितम् ॥ अन्यथादातृप्रतिग्रहीत्रोरुभयोर्नरकःस्यादिति

करोतिगजदानंचयदिविप्रायभारते ॥ यावदिंद्रोनरस्तावदिंद्रस्याऽर्धासनेवसेत् ॥ १५ ॥ भारतेयोऽश्वदानंचकरोतिब्राह्मणायच ॥ मोदते
वारुणेलोकेयावदिंद्राश्चतुर्दश ॥ १६ ॥ प्रकृष्टांशिबिकांयोहिददातिब्राह्मणायच ॥ मोदतेवारुणेलोकेयावदिंद्राश्चतुर्दश ॥ १७ ॥ प्रकृष्टांवाटि
कांयोहिददातिब्राह्मणायच ॥ महीयतेवायुलोकेयावन्मन्वंतरंसति ॥ १८ ॥ योददातिचविप्रायव्यजनंश्वेतचामरम् ॥ महीयतेवायुलोकेवर्षा
णामयुतंध्रुवम् ॥ १९ ॥ धान्यंरत्नंयोददातिचिरजीवीभवेत्सुधीः ॥ दाताग्रहीतातौद्वौचध्रुवंवैकुण्ठगामिनौ ॥ २० ॥ सततंश्रीहरेर्नामभारते
योजपेन्नरः ॥ सएवचिरजीवीचततोमृत्युःपलायते ॥ २१ ॥ योनरोभारतेवर्षेदोलनंकारयेत्सुधीः ॥ पूर्णिमारजनीशेषेजीवन्मुक्तोभवेन्नरः ॥
॥ २२ ॥इहलोकेसुखंभुक्त्वायात्यंतेविष्णुमंदिरम् ॥ निश्चितंनिवसेत्तत्रशतमन्वंतरावधि ॥ २३ ॥ फलमुत्तरफल्गुन्यांततोऽपिद्विगुणंभवेत् ॥
कल्पांतजीवीसभवेदित्याहकमलोद्भवः ॥ २४ ॥ तिलदानंब्राह्मणाययःकरोतिचभारते ॥ तिलप्रमाणवर्षंचमोदतेशिवमंदिरे ॥ २५ ॥
ततःसुयोनिंसंप्राप्यचिरजीवीभवेत्सुखी ॥ ताम्रपात्रस्यदानेनद्विगुणंचफलंलभेत्॥२६॥सालंकृतांचभोग्यांचसवस्त्रांसुंदरींप्रियाम् ॥ योददाति
ब्राह्मणायभारतेचपतिव्रताम् ॥ २७ ॥ महीयतेचंद्रलोकेयावदिंद्राश्चतुर्दश ॥ तत्रस्ववेश्ययासार्धंमोदतेचदिवानिशम् ॥ २८ ॥ ततोगंधर्वलो
केचवर्षाणामयुतंध्रुवम् ॥ दिवानिशंकौतुकेनचोर्वश्यासहमोदते ॥ २९ ॥ ततोजन्मसहस्रंचप्राप्नोतिसुंदरींप्रियाम् ॥ सतीसौभाग्ययुक्तांचको
मलांप्रियवादिनीम् ॥ ३० ॥ प्रददातिफलंचारुब्राह्मणायचयोनरः ॥ फलप्रमाणवर्षंचशक्रलोकेमहीयते ॥ ३१ ॥ पुनःसुयोनिंसंप्राप्यलभते
सुतमुत्तमम् ॥ सफलानांचवृक्षाणांसहस्रंचप्रशंसितम् ॥ ३२ ॥ केवलंफलदानंवाब्राह्मणायददातिच ॥ सुचिरंस्वर्गवासंचकृत्वायातिचभारते
॥ ३३ ॥ नानाद्रव्यसमायुक्तंनानासस्यसमन्वितम् ॥ ददातियश्चविप्रायभारतेविपुलंगृहम् ॥३४॥ सुरलोकेवसेत्सोऽपियावन्मन्वंतरंशतम्॥
ततःसुयोनिंसंप्राप्यसमहाधनवान्भवेत् ॥ ३५ ॥ योनरःसस्यसंयुक्तांभूमिंचसुचिरांसति ॥ ददातिभक्त्याविप्रायपुण्यक्षेत्रेचभारते ॥ ३६ ॥
महीयतेचवैकुण्ठेमन्वंतरशतंध्रुवम् ॥ पुनःसुयोनिंसंप्राप्यमहांश्चभूमिपोभवेत् ॥ ३७ ॥ तंनत्यजतिभूमिश्चजन्मनांशतकंपरम् ॥ श्रीमांश्चधन
वांश्चैवपुत्रवांश्चप्रजेश्वरः ॥ ३८ ॥ सव्रजंचप्रकृष्टंचग्रामंदद्यात् जायच ॥ लक्षमन्वंतरंचैववैकुण्ठेसमहीयते ॥ ३९ ॥

स्पष्टमन्यपुराणे ॥ तदुक्तंस्कान्देस्त्रियंदत्त्वाततस्तांतुक्रीणीयात्कांचनादिनेति ॥ २७ ॥ २८ ॥२९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ स्वाधिकारंस्वकृतराजामात्याद्यधिकारम् ॥ ४९ ॥ ५० ॥ सर्वाण्यपीमानिदानानितथासर्वास्तपश्चर्यास्तथासव
मन्यत्पुण्यकर्मदेवीभक्तेस्तुलनांनार्हतीत्याह । जंबुद्वीपमहीदातुरिति ॥ ५१ ॥ महेशितुर्मूलप्रकृतेर्भक्तस्येत्यर्थः ॥ ५२ ॥ तेदेव्याभक्ताभुवनेशितुःभुवनेश्वर्यामणिद्वीपेनिवसंति तत्र

पुनःसुयोनिंसंप्राप्यग्रामलक्षसमन्वितम् ॥ नजहातिचतंपृथ्वीजन्मनांलक्षमेवच ॥ ४० ॥ सुप्रजंचप्रकृष्टंचपक्कसस्यसमन्वितम् ॥ नानापु
ष्करिणीवृक्षफलवल्लीसमन्वितम् ॥ ४१ ॥ नगरंयश्चविप्रायददातिभारतेभुवि ॥ महीयतेसकैलासेदशलक्षेंद्रकालकम् ॥ ४२ ॥ पुनःसु
योनिंसंप्राप्यराजेन्द्रोभारतेभवेत् ॥ नगराणांचनियुतंसलभेन्नाऽत्रसंशयः ॥ ४३ ॥ धरातंनजहात्येवजन्मनामयुतंध्रुवम् ॥ परमैश्वर्यनियुतोभ
वेदेवमहीतले ॥ ४४ ॥ नगराणांचशतकंदेशंयोहिद्विजातये सुप्रकृष्टंमध्यकृष्टंप्रजायुक्तंददातिच ॥ ४५ ॥ वापीतडागसंयुक्तंनानावृक्षसमन्वि
तम् ॥ महीयतेसवैकुंठेकोटिमन्वंतरावधि ॥ ४६ ॥ पुनःसुयोनिंसंप्राप्यजंबुद्वीपपतिर्भवेत् ॥ परमैश्वर्यसंयुक्तोयथाशक्रस्तथाभुवि ॥ ४७ ॥
महीतंनजहात्येवजन्मनांकोटिमेवच ॥ कल्पांतजीवीसभवेद्राजराजेश्वरोमहान् ॥ ४८ ॥ स्वाधिकारंसमग्रंचयोददातिद्विजातये ॥ चतुर्गुणं
फलंचांतेभवेत्तस्यनसंशयः ॥ ४९ ॥ जंबुद्वीपंयोददातिब्राह्मणायतपस्विने ॥ फलंशतगुणंचांतेभवेत्तस्यनसंशयः ॥ ५० ॥ जंबुद्वीपमहीदातुः
सर्वतीर्थानिसेवितुः ॥ सर्वेषांतपसांकर्तुस्सर्वेषांवासकारिणः ॥ ५१ ॥ सर्वदानप्रदातुश्चसर्वसिद्धेश्वरस्यच ॥ अस्त्येवपुनरावृत्तिर्नभक्तस्यम
हेशितुः ॥ ५२ ॥ असंख्यब्रह्मणांपातंपश्यंतिभुवनेशितुः ॥ निवसंतिमणिद्वीपेश्रीदेव्याःपरमेपदे ॥ ५३ ॥ देवीमंत्रोपासकाश्चविहायमानवींत
नुम् ॥ विभूतिंदिव्यरूपंचजन्ममृत्युजराहरम् ॥५४॥ लब्ध्वादेव्याश्चसारूप्यंदेवीसेवांचकुर्वते ॥ पश्यंतितेमणिद्वीपेसखंडंलोकसंक्षयम्॥५५॥
नश्यंतिदेवाःसिद्धाश्चविश्वानिनिखिलानिच ॥ देवीभक्ताननश्यंतिजन्ममृत्युजराहराः॥५६॥ कार्त्तिकेतुलसीदानंकरोतिहरयेचयः॥युगत्रयप्र
माणंचमोदतेहरिमंदिरे ॥ ५७ ॥ पुनःसुयोनिंसंप्राप्यहरिभक्तिंलभेद्ध्रुवम् ॥ जितेंद्रियाणांप्रवरःसभवेद्भारतेभुवि ॥ ५८ ॥ मध्येयःस्नातिगंगा
यामरुणोदयकालतः ॥ युगषष्टिसहस्राणिमोदतेहरिमंदिरे ॥ ५९ ॥ पुनःसुयोनिंसंप्राप्यविष्णुमंत्रंलभेद्ध्रुवम्॥त्यक्त्वाचमानुषंदेहंपुनर्यातिहरेः
पदम् ॥ ६० ॥ नास्तितत्पुनरावृत्तिर्वैकुण्ठाच्चमहीतले ॥ करोतिहरिदास्यंचतथासारूप्यमेवच ॥ ६१ ॥ नित्यस्नायीचगंगायांसपूतःसूर्यव
द्भुवि ॥ पदेपदेऽश्वमेधस्यलभतेनिश्चितंफलम् ॥ ६२ ॥ तस्यैवपादरजसासद्यःपूतावसुंधरा ॥ मोदतेसचवैकुण्ठेयावच्चंद्रदिवाकरौ ॥ ६३ ॥
पुनःसुयोनिंसंप्राप्यहरिभक्तिंलभेद्ध्रुवम् ॥ जीवन्मुक्तोऽतितेजस्वीतपस्विप्रवरोभवेत् ॥ ६४ ॥

स्थित्वाअसंख्यब्रह्मणांपातंपश्यंति तावत्कालपर्यंतंवसंतीत्यर्थः ॥ ५३ ॥ तदेवस्पष्टयति ॥ देवीमंत्रोपासकाश्चेति ॥ ५४ ॥ लोकसंक्षयंप्रलयंसखंडंकल्पप्रलयमित्यर्थः ॥ ५५ ॥ ५६॥
॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥

यदाभास्करस्तपतितदेत्यर्थः ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥७७॥ महिषैश्छागलैरितिब्राह्मणातिरिक्तविषयं कालिकापु

स्वधर्मनिरतःशुद्धोविद्वांश्चसजितेंद्रियः ॥ मीनकर्कटयोर्मध्येगाढंतपतिभास्करः ॥ ६५ ॥ भारतेयोददात्येवजलमेवसुवासितम् ॥ समोदतेच कैलासेयावदिंद्राश्चतुर्दश ॥ ६६ ॥ पुनःसुयोनिंसंप्राप्यरूपवांश्चसुखीभवेत् ॥ शिवभक्तश्चतेजस्वीवेदवेदांगपारगः ॥ ६७ ॥ वैशाखेसक्तुदानं चयःकरोतिद्विजातये ॥ सक्तुरेणुप्रमाणाब्दंमोदतेशिवमंदिरे ॥ ६८ ॥ करोतिभारतेयोहिकृष्णजन्माष्टमीव्रतम् ॥ शतजन्मकृतंपापंमुच्यतेना ऽत्रसंशयः ॥ ६९ ॥ वैकुंठेमोदतेसोऽपियावदिंद्राश्चतुर्दश ॥ पुनःसुयोनिंसंप्राप्यकृष्णेभक्तिंलभेद्ध्रुवम् ॥ ७० ॥ इहैवभारतेवर्षेशिवरात्रिंकरो तियः ॥ मोदतेशिवलोकेससप्तमन्वंतरावधि ॥ ७१ ॥ शिवायशिवरात्रौचबिल्वपत्रंददातिच ॥ पत्रमानयुगंतत्रमोदतेशिवमंदिरे ॥ ७२ ॥ पु नःसुयोनिंसंप्राप्यशिवभक्तिंलभेद्ध्रुवम् ॥ विद्यावान्पुत्रवाञ्छ्रीमान्प्रजावान्भूमिमान्भवेत् ॥ ७३ ॥ चैत्रमासेऽथवामाघेशंकरंयोऽर्चयेद्व्रती ॥ करोतिनर्तनंभक्त्यावेत्रपाणिर्दिवानिशम् ॥ ७४ ॥ मासंवाऽप्यर्धमासंवादशसप्तदिनानिच ॥ दिनमानयुगंसोपिशिवलोकेमहीयते ॥ ७५ ॥ श्रीरामनवमींयोहिकरोतिभारतेपुमान् ॥ सप्तमन्वंतरंयावन्मोदतेविष्णुमंदिरे ॥७६॥ पुनःसुयोनिंसंप्राप्यरामभक्तिंलभेद्ध्रुवम् ॥ जितेंद्रियाणां प्रवरोमहांश्चधनवान्भवेत् ॥ ७७ ॥ शारदीयांमहापूजांप्रकृतेर्यःकरोतिच ॥ महिषैश्छागलैर्मेषैःखड्गैर्भेकादिभिःसति ॥ ७८ ॥ नैवेद्यैरुपहारै श्चधूपदीपादिभिस्तथा ॥ नृत्यगीतादिभिर्वाद्यैर्नानाकौतुकमंगलम् ॥ ७९ ॥ शिवलोकेवसेत्सोऽपिसप्तमन्वन्तरावधि ॥ पुनःसुयोनिंसंप्राप्य नरोबुद्धिंचनिर्मलाम् ॥ ८० ॥ अतुलांश्रियमाप्नोतिपुत्रपौत्रविवर्धनम् ॥ महाप्रभावयुक्तश्चगजवाजिसमन्वितः ॥ ८१ ॥ राजराजेश्वरःसो ऽपिभवेदेवनसंशयः ॥ ततःशुक्लाष्टमींप्राप्यमहालक्ष्मींचयोऽर्चयेत् ॥८२॥ नित्यंभक्त्यापक्षमेकंपुण्यक्षेत्रेचभारते ॥ दत्त्वातस्यैप्रकृष्टानिचोप चाराणिषोडश ॥ ८३ ॥ गोलोकेचवसेत्सोऽपियावदिंद्राश्चतुर्दश ॥ पुनःसुयोनिंसंप्राप्यराजराजेश्वरोभवेत् ॥८४॥ कार्त्तिकीपूर्णिमायांतुकृ त्वातुरासमंडलम् ॥ गोपानांशतकंकृत्वागोपीनांशतकंतथा ॥ ८५ ॥ शिलायांप्रतिमायांचश्रीकृष्णंराधयासह ॥ भारतेपूजयेद्भक्त्याचोपहा राणिषोडश ॥ ८६ ॥ गोलोकेवसतेसोऽपियावद्वैब्रह्मणोवयः ॥ भारतंपुनरागत्यकृष्णेभक्तिंलभेद्दृढाम् ॥ ८७ ॥ क्रमेणसुदृढांभक्तिंलब्ध्वामंत्रं हरेरहो ॥ देहंत्यक्त्वाचगोलोकंपुनरेवप्रयातिसः ॥ ८८ ॥ ततःकृष्णस्यसारूप्यंपार्षदप्रवरोभवेत् ॥ पुनस्तत्पतनंनास्तिजरामृत्युहरोभवेत् ॥ ॥ ८९ ॥ शुक्लांवाऽप्यथवाकृष्णांकरोत्येकादशींचयः ॥ वैकुंठेमोदतेसोऽपियावद्वैब्रह्मणोवयः ॥ ९० ॥ भारतंपुनरागत्यकृष्णभक्तिंलभेद्ध्रुव म् ॥ क्रमेणभक्तिंसुदृढांकरोत्येकांहरेरहो ॥ ९१ ॥

राणादिषुतथाविधबलिदानेब्राह्मणस्यनिषेधात् ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥

॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ गांसुवर्णादिकमिति ॥ इदंनित्यंप्रतिदिनंक्रियमाणंदानम् ॥ पूर्वोक्तंगोस्वर्णादिकंदानंतुनैमित्तिकमितिशेषः ॥ १०० ॥

देहंत्यक्त्वाचगोलोकंपुनरेवप्रयातिसः ॥ ततःकृष्णस्यसारूप्यंसंप्राप्यपार्षदोभवेत्॥९२॥पुनस्तत्पतनंनास्तिजरामृत्युहरोभवेत् ॥भाद्रेचशुक्लद्वादश्यांयःशक्रंपूजयेन्नरः ॥९३॥ षष्टिवर्षसहस्राणिशक्रलोकेमहीयते ॥ रविवारेचसंक्रांत्यांसप्तम्यांशुक्लपक्षके ॥९४॥ संपूज्याऽर्कंहविष्यान्नंयःकरोतिचभारते ॥ महीयतेसोऽर्कलोकेयावदिंद्राश्चतुर्दश ॥ ९५ ॥ भारतंपुनरागत्यचारोगीश्रीयुतोभवेत् ॥ ज्येष्ठकृष्णचतुर्दश्यांसावित्रींयोहिपूजयेत् ॥ ९६ ॥ महीयतेब्रह्मलोकेसप्तमन्वंतरावधि ॥ पुनर्महींसमागत्यश्रीमानतुलविक्रमः ॥९७॥ चिरजीवीभवेत्सोऽपिज्ञानवान्संपदायुतः ॥ माघस्यशुक्लपंचम्यांपूजयेद्यःसरस्वतीम् ॥ ९८ ॥ संयतोभक्तितोदत्त्वाचोपचाराणिषोडश ॥ महीयतेमणिद्वीपेयावद्ब्रह्मदिवानिशम्॥ ॥ ९९ ॥ संप्राप्यचपुनर्जन्मसभवेत्कविपंडितः ॥ गांसुवर्णादिकंयोहिब्राह्मणायददातिच ॥१००॥ नित्यंजीवनपर्यंतंभक्तियुक्तश्चभारते ॥ गवांलोमप्रमाणाब्दंद्विगुणंविष्णुमंदिरे ॥ १०१ ॥ मोदतेहरिणासार्धंक्रीडाकौतुकमंगलैः ॥ तदंतेपुनरागत्यराजराजेश्वरोभवेत् ॥ २ ॥ श्रीमांश्चपुत्रवान्विद्वाञ्ज्ञानवान्सर्वतःसुखी ॥ भोजयेद्योऽपिमिष्टान्नंब्राह्मणेभ्यश्चभारते ॥३॥ विप्रलोमप्रमाणाब्दंमोदतेविष्णुमंदिरे ॥ ततःपुनरिहाऽऽगत्यसुखीचधनवान्भवेत्॥४॥विद्वान्सुचिरजीवीचश्रीमानतुलविक्रमः॥योवक्तिवाददात्येवहरेर्नामानिभारते॥५॥युगंनामप्रमाणंचविष्णुलोकेमहीयते ॥ ततःपुनरिहागत्यससुखीधनवान्भवेत् ॥६॥यदिनारायणक्षेत्रेफलंकोटिगुणंभवेत्॥नाम्नांकोटिंहरेर्योहिक्षेत्रेनारायणेजपेत्॥७॥ सर्वपापविनिर्मुक्तोजीवन्मुक्तोभवेद्ध्रुवम् ॥ नलभेत्सपुनर्जन्मवैकुण्ठेसमहीयते ॥ ८ ॥ लभेद्विष्णोश्चसारूप्यंनतस्यपतनंभवेत् ॥ विष्णुभक्तिंलभेत्सोऽपिविष्णुसारूप्यमाप्नुयात् ॥ ९ ॥ शिवंयःपूजयेन्नित्यंकृत्वालिंगंचपार्थिवम् ॥ यावज्जीवनपर्यंतंसयातिशिवमंदिरम् ॥११०॥ मृदोरेणुप्रमाणाब्दंशिवलोकेमहीयते ॥ ततःपुनरिहागत्यराजेंद्रोभारतेभवेत् ॥ ११ ॥ शिलांचपूजयेन्नित्यंशिलातोयंचभक्षति ॥ महीयतेचवैकुण्ठेयावद्वैब्रह्मणःशतम् ॥ १२ ॥ ततोलब्ध्वापुनर्जन्महरिभक्तिंचदुर्लभाम् ॥ महीयतेविष्णुलोकेनतस्यपतनंभवेत् ॥ १३ ॥ तपांसिचैवसर्वाणिव्रतानिनिखिलानिच ॥ कृत्वातिष्ठतिवैकुण्ठेयावदिंद्राश्चतुर्दश ॥ १४ ॥ ततोलब्ध्वापुनर्जन्मराजेंद्रोभारतेभवेत् ॥ ततोमुक्तोभवेत्पश्चात्पुनर्जन्मनविद्यते ॥ ११५ ॥ यःस्नात्वासर्वतीर्थेषुभुवःकृत्वाप्रदक्षिणाम् ॥ सतुनिर्वाणतांयातिनतुजन्मभवेद्भुवि ॥ १६ ॥ पुण्यक्षेत्रेभारतेचयोऽश्वमेधंकरोतिच ॥ अश्वलोममिताब्दंचशक्रस्याऽर्धासनंभजेत ॥ ११७ ॥

॥ १०१ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ ११७ ॥

अथसर्वयज्ञापेक्षयादेवीयज्ञस्यसर्वोत्कृष्टत्वमाह । सर्वेभ्योऽपीति॥ देवीमूलप्रकृतिः श्रीभुवनेश्वरीतत्प्रीत्यर्थंयद्यदनुष्ठानंज्योतिष्टोमाद्यश्वमेधांतंतथाकोटिहोमादिकंनवरात्रोत्सवादिकंतत्स र्वंदेवीमखशब्देनोच्यते॥ सदेवीमखोदेवीप्रीत्यर्थंक्रियमाणोयज्ञःसर्वेभ्योऽपिमखेभ्यस्तत्तद्देवतोद्देशेनकृतेभ्यःसर्वयज्ञेभ्यःपरःश्रेष्ठोभवतीत्यर्थः॥ मूलप्रकृत्युद्देशेनकृतत्वादितिभावः॥ ११८॥ सचयज्ञःपूर्वंविष्णवादिभिःकृतइत्याह । विष्णुनाचेति ॥ साचकथातृतीयस्कंधेउक्ता ॥ त्रिपुरासुरजयार्थंशिवेनकृतइत्यर्थः ॥ १९ ॥ १२० ॥ दक्षेणतुयदायंदेवीमखःकृतस्त दामहाननर्थोजातइत्याह । दक्षेणचेति ॥ २१ ॥ २२ ॥ दक्षप्रभृतयःसर्वेऽपिदेवीमखकर्तारोभवंतीत्याह । धर्मश्चकश्यपश्चेति ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

चतुर्गुणंराजसूयफलमाप्नोतिमानवः ॥ सर्वेभ्योऽपिमखेभ्योहिपरोदेवीमखःस्मृतः ॥ १८ ॥ विष्णुनाचकृतःपूर्वंब्रह्मणाचवरानने ॥ शंकरेणमहे शेनत्रिपुरासुरनाशने॥१९॥शक्तियज्ञःप्रधानश्चसर्वयज्ञेषुसुन्दरि॥नाऽनेनसदृशोयज्ञस्त्रिषुलोकेषुविद्यते॥१२०॥दक्षेणचकृतः पूर्वंमहान्संवादसं युतः ॥ बभूवकलहोयत्रदक्षशंकरयोःसति ॥ २१ ॥ शेपुश्चनंदिनंविप्रानंदीविप्रांश्चकोपतः ॥ यद्धेतोर्दक्षयज्ञंचबभंजचंद्रशेखरः ॥२२॥चकार देवीयज्ञंसपुरादक्षःप्रजापतिः॥धर्मश्चकश्यपश्चैवशेषश्चाऽपिचकर्दमः॥२३॥स्वायंभुवोमनुश्चैवतत्पुत्रश्चप्रियव्रतः॥ शिवःसनत्कुमारश्चकपिलश्च ध्रुवस्तथा ॥ २४ ॥ राजसूयसहस्राणांफलमाप्नोतिनिश्चितम् ॥ देवीयज्ञात्परोयज्ञोनास्तिवेदेफलप्रदः ॥ १२५ ॥ वर्षाणांशतजीवीचजीवन्मु क्तोभवेद्ध्रुवम् ॥ ज्ञानेनतेजसाचैवविष्णुतुल्योभवेदिह ॥२६॥ देवानांचयथाविष्णुर्वैष्णवानांचनारदः ॥ शास्त्राणांचयथावेदावर्णानांब्राह्मणोय था ॥ २७ ॥ तीर्थानांचयथागंगापवित्राणांशिवोयथा ॥ एकादशीव्रतानांचपुष्पाणांतुलसीयथा ॥ २८ ॥ नक्षत्राणां यथाचंद्रःपक्षिणांगरु डोयथा ॥ यथास्त्रीणांचप्रकृतीराधावाणीवसुंधरा ॥ २९ ॥ शीघ्राणांचेंद्रियाणांचचंचलानांमनोयथा ॥ प्रजापतीनांब्रह्माचप्रजानांचप्रजाप तिः ॥१३०॥वृंदावनंवनानांचवर्षाणांभारतंतथा ॥ श्रीमतांचयथाश्रीश्चविदुषांचसरस्वती॥३१॥पतिव्रतानांदुर्गाचसौभाग्यानांचराधिका ॥ देवीयज्ञस्तथावत्सेसर्वयज्ञेषुभामिनि ॥ ३२ ॥ अश्वमेधशतेनैवशक्रत्वंचलभेद्ध्रुवम् ॥ सहस्रेणविष्णुपदंसंप्राप्तःपृथुरेवच ॥ ३३ ॥ स्नानंच सर्वतीर्थानांसर्वयज्ञेषुदीक्षणम् ॥ सर्वेषांचव्रतानांचतपसांफलमेवच ॥ ३४ ॥ पाठेचतुर्णांवेदानांप्रादक्षिण्यंभुवस्तथा ॥ फलभूतमिदंसर्वंमुक्ति दंशक्तिसेवनम् ॥ १३५ ॥ पुराणेषुचवेदेषुचेतिहासेषुसर्वतः ॥ निरूपितंसारभूतंदेवीपादांबुजार्चनम् ॥३६॥ तद्वर्णनंचतद्ध्यानंतन्नामगुणकीर्त नम् ॥ तत्स्तोत्रस्मरणंचैववंदनंजपमेवच ॥ १३७ ॥

॥ १३० ॥ ३१ ॥ ३२ ॥ अश्वमेधस्यकामनापरत्वमप्याह । अश्वमेधेति ॥ पृथुः पूर्वजातोराजा ॥ ३३ ॥ इतःपरंसर्वकामापेक्षयाश्रीदेवीसेवनंसर्वोत्कृष्टमित्याह । स्नानंचसर्वतीर्थाना मिति ॥ १३४ ॥ फलभूतमिति ॥ एतैःसर्वैःपुण्यैर्जायमानैरेवश्रीशक्तिसेवनंमुक्तिप्रदंलभ्यतेनान्यथेत्यर्थः ॥ तस्मात्सर्वोत्कृष्टंश्रीमूलप्रकृतिसेवनमितिभावः ॥ ३५ ॥ अतएवसर्वशा स्त्रेषुपुराणादिषुमूलप्रकृतिसेवनमेवसर्वोत्कृष्टत्वेनवर्णितमित्याह । पुराणेषुचेति ॥ ३६॥ तद्वर्णनमित्यादौतत्पदेनमूलप्रकृतिः ॥ १३७ ॥

॥ १३८ ॥ यस्मादेवंतस्मान्मूलप्रकृतिंभजेत्याह । भजनित्यमिति ॥ परंब्रह्मनिर्गुणंप्रकृतिंपरांमायाविशिष्टब्रह्मरूपिणींमूलप्रकृतिमित्यर्थः ॥ ३९ ॥१४० ॥ इतिश्रीदेवीभागवततिलकेनवमस्कंधेत्रिंशोऽध्यायः ॥ ३० ॥ अर्धाधिकैःसप्तदशश्लोकैरथमहाविभोः ॥ मूलशक्तेर्महामंत्रंसावित्र्यैदत्तवान्यमः ॥१॥ पूर्वाध्यायेमूलप्रकृतेःसर्वोत्कृष्टत्वेनप्रतिपादनंश्रुत्वातन्मंत्रग्रहणेच्छयासावित्रीयमंप्रत्याहेतिनारायणआह । शक्तेरुत्कीर्तनमिति ॥ शक्तेर्मूलशक्तेरुत्कीर्तनंसर्वोत्कृष्टत्वेनप्रातिपादनमित्यर्थः ॥१॥ सावित्रीकिमाहेतिचेत्तत्राऽऽह । सावित्र्युवाचशक्तेरुत्कीर्तनामिति ॥ मूलप्रकृतेरुत्कीर्तनंसर्वोत्कृष्टत्वेनवर्णनंसकलोद्धारकंभवतितथाजन्ममृत्युजराहरंभवति॥२॥तथातपसापरमंस्थानंभवति॥ तथाविभोःशक्तेःकीर्तनंयोगानांवेदानांचसे

तत्पादोदकनैवेद्यंभक्षणंनित्यमेवच ॥ सर्वसम्मतमित्येवंसर्वेप्सितमिदंसति ॥ १३८ ॥ भजनित्यंपरंब्रह्मनिर्गुणंप्रकृतिंपराम् ॥ गृहाणस्वामिनंवत्सेसुखंवसचमंदिरे॥३९॥ अयंतेकथितःकर्मविपाकोमंगलोनृणाम् ॥ सर्वेप्सितःसर्वमतस्तत्त्वज्ञानप्रदःपरः ॥१४०॥ इति श्रीदेवीभागवते महा०नवमस्कंधेत्रिंशोऽध्यायः ॥ ३० ॥ श्रीनारायणउवाच ॥ शक्तेरुत्कीर्तनंश्रुत्वासावित्रीयमवक्रतः ॥ साश्रुनेत्रासपुलकायमंपुनरुवाच सा ॥ १ ॥ सावित्र्युवाच ॥ शक्तेरुत्कीर्तनंधर्मसकलोद्धारकारणम् ॥ श्रोतॄणांचैववक्तॄणांजन्ममृत्युजराहरम् ॥ २ ॥ दानवानांचसिद्धानां तपसांचपरंपदम् ॥ योगानांचैववेदानांकीर्तनंसेवनंविभोः ॥ ३ ॥ मुक्तित्वममरत्वंचसर्वसिद्धित्वमेवच ॥ श्रीशक्तिसेवकस्यैवकलांनार्हतिषोडशीम् ॥ ४ ॥ भजामिकेनविधिनावदवेदविदांवर ॥ शुभकर्मविपाकंचश्रुतंनृणांमनोहरम् ॥ ५ ॥ कर्माशुभविपाकंचतन्मेव्याख्यातुमर्हसि ॥ इत्युक्त्वाचसतीब्रह्मन्भक्तिनम्रात्मकंधरा ॥ ६ ॥ तुष्टावधर्मराजंचवेदोक्तेनस्तवेनच ॥ सावित्र्युवाच ॥ तपसाधर्ममाराध्यपुष्करेभास्करःपुरा ॥ ७ ॥ धर्मंसूर्यंसुतंप्रापधर्मराजंनमाम्यहम् ॥ समतासर्वभूतेषुयस्यसर्वस्यसाक्षिणः॥८॥ अतोयन्नामशमनमितितंप्रणमाम्यहम् ॥ येनांतश्चकृतोविश्वेसर्वेषांजीविनांपरम् ॥९॥ कामानुरूपंकालेनतंकृतांतंनमाम्यहम् ॥ बिभर्तिदंडंदंडायपापिनांशुद्धिहेतवे ॥१०॥ नमामितंदंडधरंयःशास्तासर्वजीविनाम् ॥ विश्वंचकलयत्येवयःसर्वेषुचसंततम् ॥११॥ अतीवदुर्निवार्यंचतंकालंप्रणमाम्यहम् ॥ तपस्वीब्रह्मनिष्ठोयःसंयमीसंजितेंद्रियः ॥१२॥ जीवानांकर्मफलदस्तंयमंप्रणमाम्यहम् ॥ स्वात्मारामश्चसर्वज्ञोमित्रंपुण्यकृतांभवेत् ॥१३॥ पापिनांक्लेशदोयस्तंपुण्यमित्रंनमाम्यहम् ॥ यज्जन्मब्रह्मणोंऽशेनज्वलंतंब्रह्मतेजसा ॥ १४ ॥

वनंभवति ॥ ३ ॥ मुक्तित्वादिफलमपितैनैवकीर्तनेनसिध्यतीत्याह । मुक्तित्वमिति ॥ किंबहुनाशक्तिसेवकतुल्यःकोपिनास्तीत्याह । श्रीशक्तिसेवकस्यैवेति ॥४॥ यस्मादेवंतस्मात्केनविधिनाभजामितंविधिंशुभकर्मविपाककथनंवदशुभकर्मविपाकंचवदेत्याह । भजामीति ॥ ५ ॥ ६ ॥ तुष्टावेति ॥ गुरुप्रसन्नतयालब्धाविद्याफलायभवतिनाऽन्यथेत्यभिप्रायेणयमंगुरुंतुष्टावेत्यर्थः ॥ तथाचश्रुतिः यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ ॥ तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनइति ॥ धर्मंधर्ममूर्तिंदेवम् ॥ ७ ॥ सूर्योधर्मंधर्मांशंसुतंप्राप ॥ तंसूर्यसुतंधर्मांशंधर्मराजसंज्ञकंनमामीत्यर्थः ॥ ८ ॥ ९ ॥ दंडायदंडनायशिक्षणायेत्यर्थः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

॥ १९ ॥ ततएतत्स्तोत्रेणस्तुतोयमस्तस्यैसावित्र्यैशक्तिभजनंमूलप्रकृतिमंत्रमशुभकर्मविपाकंचोवाचेत्यर्थः॥१६॥१७॥इतिश्रीदेवीभागवतातिलकेनवमस्कंधएकत्रिंशोऽध्यायः ॥ ३१ ॥
अष्टाविंशतिपद्यैश्चपातकानांस्थलानिच ॥ नानाविधानिकुंडानिप्रोच्यंतेदुःखदानिच ॥ १ ॥ पूर्वाध्यायेयमस्तांशक्तिभजनंकर्मपाकमुवाचहेत्युक्तम् ॥ तत्कीदृशंशक्तिभजनंकथंवाकर्म
विपाकउक्तस्तत्स्पष्टीकर्तुमाह ॥ नारायणउवाच ॥ मायाबीजंमहामंत्रमिति ॥ मूलप्रकृतेर्भुवनेश्वर्यामंत्रंदत्त्वेत्यर्थः ॥ तथाचश्रीभुवनेश्वर्युपासनरूपंशक्तिभजनमुक्तवानित्यर्थः ॥
विधिपूर्वकंचाक्षुषदीक्षाविधिनेत्यर्थः ॥ रवेःसुतोयमःअशुभकर्मविपाकंचोक्तवानित्यर्थः ॥ १ ॥ शुभकर्मेति ॥ शुभकर्मणांवेदोक्तकर्मणांविपाकान्नरकंकदापिनयातीत्यर्थः॥कर्माशुभेति॥
कर्मणोवेदविरुद्धकर्मणोऽशुभाविपाकादेवनरकंयातितंकर्माशुभाविपाकंकथयामीत्यर्थः ॥ २॥ तत्रशुभकर्मणांफलानिस्वर्गानानाविधाःसंतीतिप्रसंगादाह । नानापुराणेति ॥नानाभेदेनवि

योध्यायतिपरंब्रह्मतमीशंप्रणमाम्यहम् ॥ इत्युक्त्वासाचसावित्रीप्रणनामयमंमुने॥१९॥यमस्तांशक्तिभजनंकर्मपाकमुवाचह ॥ इदंयमाष्टकंनित्यं प्रातरुत्थाययःपठेत् ॥ १६ ॥ यमात्तस्यभयंनास्तिसर्वपापात्प्रमुच्यते ॥ महापापीयदिपठेन्नित्यंभक्तिसमन्वितः ॥ १७ ॥ यमःकरोतिसंशुद्धं कायव्यूहेननिश्चितम् ॥ इतिश्रीदेवीभागवतेमहापुराणेनवमस्कंधएकत्रिंशोऽध्यायः॥३१॥श्रीनारायणउवाच॥मायाबीजंमहामंत्रंप्रदत्त्वाविधि पूर्वकम् ॥ कर्माशुभविपाकंचतामुवाचरवेःसुतः ॥ १ ॥ धर्मराजउवाच ॥ शुभकर्मविपाकान्ननरकंयातिमानवः ॥ कर्माशुभविपाकंचकथया मिनिशामय ॥२॥ नानापुराणभेदेननामभेदेनभामिनि॥नानाप्रकारंस्वर्गंचयातिजीवःस्वकर्मभिः॥३॥शुभकर्मविपाकान्ननरकंयातिकर्मभिः॥ कुकर्मणाचनरकंयातिनानाविधंनरः ॥४॥ नरकाणांचकुंडानिसंतिनानाविधानिच ॥ नानाशास्त्रप्रमाणेनकर्मभेदेनयानिच ॥ ५ ॥ विस्तृता निचगर्तानिक्लेशदानिचदुःखिनाम् ॥ भयंकराणिघोराणिहेवत्सेकुत्सितानिच ॥ ६ ॥ षडशीतिचकुंडानिएवमन्यानिसंतिच ॥ निबोधतेषां नामानिप्रसिद्धानिश्रुतौसति ॥७॥वह्निकुंडंतप्तकुंडंक्षारकुंडंभयानकम् ॥ विट्कुंडंमूत्रकुंडंचश्लेष्मकुंडंचदुःसहम् ॥८॥ गरकुंडंदूषिकुंडंवसाकुंडं तथैवच ॥ शुक्रकुंडमसृक्कुंडमश्रुकुंडंचकुत्सितम् ॥ ९ ॥ कुंडंगात्रमलानांचकर्णविट्कुंडमेवच ॥ मज्जाकुंडंमांसकुंडंनक्रकुंडंचदुस्तरम् ॥ १०॥ लोमकुंडंकेशकुंडमस्थिकुंडंचदुस्तरम् ॥ ताम्रकुंडंलोहकुंडंप्रतप्तंक्लेशदंमहत् ॥ ११ ॥ चर्मकुंडंतप्तसुराकुंडंचपरिकीर्तितम् ॥ तीक्ष्णकंटककुंडं चविषोदंविषकुंडकम् ॥ १२ ॥ प्रतप्तकुंडंतैलस्यकुंतकुंडंचदुर्वहम् ॥ कृमिकुंडंपूयकुंडंसर्पकुंडंदुरंतकम् ॥ १३ ॥

शिष्टंनानाप्रकारकंस्वर्गमित्यन्वयः ॥३॥ सर्वथाशुभकर्मणाननरकः किंत्वशुभकर्मणैवेत्याह । शुभकर्मेति ॥ ४ ॥५ ॥ ६ ॥ तत्रषडशीतिकुंडानिमुख्यानितदन्यानितूपकुंडानिसंतीत्याह
षडशीतीति ॥७॥तत्रचतुर्दशाभिःश्लोकैःकुण्डनामान्याह॥ वह्निकुण्डमिति ॥ अत्रोत्तराध्यायद्वयेनक्रमेणकुंडानिकथितानितेनैवक्रमेणात्रापिकथितानिनामानिसंतीतिबोध्यम् ॥भयानक
मितिस्वतंत्रंकुण्डंचतुर्थकम् ॥ दुःसहमितिश्लेष्मकुण्डविशेषणम् ॥ ८ ॥ दूषिकाकुण्डंनेत्रमलकुण्डम् ॥ शुक्रकुण्डंबीजकुण्डम् ॥ असृक्कुण्डंरक्तकुण्डम् ॥ अश्रुकुण्डंनेत्राश्रुकुण्डंकुत्सित
मितिविशेषणम् ॥ ९ ॥१० ॥ दुस्तरामितिपदद्वयंविशेषणम् ॥ नतुस्वतंत्रंकुण्डम् ॥ प्रतप्तंक्लेशदंमहदितिलोहकुंडविशेषणम् ॥ ११ ॥ विषोदमितिविषकुण्डविशेषणम् ॥ १२ ॥
कुंतकुण्डंनानाविधायुधकुण्डंदुर्वहमितिविशेषणम् ॥ दुरंतकमितिसर्पकुण्डविशेषणम् ॥ १३ ॥

मशकुण्डंमशकानांकुण्डम् ॥ वृश्चिकानांकुण्डमितिशेषः ॥ १४ ॥ शुचास्पदमितिविशेषणम् ॥ १५ ॥ मंथानकुण्डंमंथानोजीवविशेषःतस्यकुण्डम् ॥बीजकुण्डंबीजोजीवविशेषः॥दुःसह
मितिविशेषणम् ॥ १६ ॥ महोल्वणमितिविशेषणम् ॥१७॥१८॥ गोकामुखंनक्रमुखंनक्राकारंमुखंयस्यतत्पूर्वोक्तंनक्रकुण्डंतुनक्रसमूहघटितत्वान्नक्रकुण्डम् ॥कृमिकंतुकम् ॥ एतस्यवक्ष्य
माणाध्यायद्वयेऽरुंतुदामितिसंज्ञा ॥ १९ ॥ २० ॥ कषंकषनामकंकुण्डम् ॥ शूर्पंशूर्पाकारंकुण्डम् ॥ २१ ॥ नियुतैरनेकैरित्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥ आसन्नमृत्युभिः पापिभिः ॥
दृष्टैर्दूतैरित्यन्वयः ॥ २५ ॥ पुण्यकृद्भिरदृश्यैरित्यन्वयः ॥ २६ ॥ स्वतंत्रकैर्ज्ञानिभिःस्वप्नदृष्टदेवरूपैःपुरुषैरदृश्यायमदूताइत्यर्थः ॥ इत्थंपापिस्थानमुक्त्वा तच्छ्रुत्वापुण्यवतांभयंस्या
दितितद्भयनिरासार्थमाह । येषांनिवासइति ॥ तान्कथयामीत्यर्थः ॥ २७ ॥ २८ ॥ इतिश्रीदेवीभागवततिलकेनवमस्कंधेद्वात्रिंशोऽध्यायः ॥ ३२ ॥ षविंशत्यधिकैःश्लोकैःशतसंख्यै

मशकुंडंदंशकुंडंभीमंगरलकुंडकम् ॥ कुंडंचवज्रदंष्ट्राणांवृश्चिकानांचसुव्रते ॥ १४ ॥ शरकुंडंशूलकुंडंखङ्गकुंडंचभीषणम् ॥ गोलकुंडंनक्रकुंडंका
ककुंडंशुचास्पदम् ॥ १५ ॥ मंथानकुंडंबीजकुंडंवज्रकुंडंचदुःसहम् ॥ तप्तपाषाणकुंडंचतीक्ष्णपाषाणकुंडकम् ॥ १६ ॥ लालाकुंडंमसीकुंडं
चूर्णकुंडंतथैवच ॥ चक्रकुंडंवक्रकुंडंकूर्मकुंडंमहोल्वणम् ॥१७॥ज्वालाकुंडंभस्मकुडंदग्धकुंडंशुचिस्मिते ॥ तप्तसूचीमसिपत्रंक्षुरधारंसूचीमुखम्
॥ १८ ॥ गोकामुखंनक्रमुखंगजदंशंचगोमुखम् ॥ कुंभीपाकंकालसूत्रंमत्स्योदंकृमिकंतुकम् ॥ १९ ॥ पांसुभोज्यंपाशवेष्टंशूलप्रोतंप्रकंपनम् ॥
उल्कामुखमंधकूपंवेधनंताडनंतथा ॥ २० ॥ जालरंध्रंदेहचूर्णंदलनंशोषणंकषम् ॥ शूर्पज्वालमुखंचैवधूमांधंनागवेष्टनम् ॥ २१ ॥ कुंडान्ये
तानिसावित्रिपापिनांक्लेशदानिच ॥ नियुतैःकिंकरगणैरक्षितानिचसंततम् ॥ २२ ॥ दंडहस्तैःपाशहस्तैर्मदमत्तैर्भयंकरैः ॥ शक्तिहस्तैर्गदाहस्तै
रसिहस्तैःसुदारुणैः॥२३॥ तमोयुक्तैर्दयाहीनैर्निवार्यैश्चनसर्वतः॥ तेजस्विभिश्चनिःशंकैराताम्रपिंगलोचनैः ॥२४॥ योगयुक्तैःसिद्धियुक्तैर्नाना
रूपधरैर्भटैः॥ आसन्नमृत्युभिर्दृष्टैःपापिभिःसर्वजीविभिः॥२५॥ स्वकर्मनिरतैःसर्वैः शाक्तैःसौरैश्चगाणपैः॥ अदृश्यैःपुण्यकृद्भिश्चसिद्धैर्योगिभिरे
वच॥२६॥ स्वधर्मनिरतैर्वापिविरतैर्वास्वतंत्रकैः॥बलवद्भिश्चनिःशंकैःस्वप्नदृष्टैश्चवैष्णवैः॥२७॥एतत्तेकथितंसाध्विकुंडसंख्यानिरूपणम्॥ येषां
निवासोयत्कुंडेनिबोधकथयामिते॥२८॥इतिश्रीदेवीभागवतेमहापुराणेनवमस्कंधेनारदनारायणसंवादेसावित्र्युपाख्यानेद्वात्रिंशोऽध्यायः३२॥
धर्मराजउवाच ॥ हरिसेवारतःशुद्धोयोगसिद्धोव्रतीसति ॥ तपस्वीब्रह्मचारीचनयातिनरकंध्रुवम् ॥१॥ कटुवाचाबांधवांश्चबललेपेनयोनरः ॥
दग्धान्करोतिबलवान्वह्निकुंडंप्रयातिसः ॥ २ ॥ स्वगात्रलोममानाब्दंतत्रस्थित्वाहुताशने ॥ पशुयोनिमवाप्नोतिरौद्रदग्धांत्रिजन्मनि ॥ ३ ॥

रतःपरम् ॥ कुण्डेषुयेपतंत्येवंतेषांलक्षणमुच्यते ॥ १ ॥ पुण्यवंतःकदापिनरकंनगच्छंतीतिनिश्चयार्थंपुनराह । हरिसेवेति ॥ हरिपदंदेवतांतरस्याप्युपलक्षणम् ॥ सतीतिसंबोधनम् ॥
॥ १ ॥ तर्हिकेतेषुकुण्डेषुगच्छंतीतितान्पूर्वोक्तकुंडक्रमानुरोधेनप्रत्येककुण्डगामिनःपापिनआह । कटुवाचेति ॥ कटुवाचाअप्रियवाचाबांधवांश्चकारेणतदतिरिक्तानपिजनान् ॥ बलले
पेनशरीरसामर्थ्यधनविद्यादिरूपबलगर्वेणदग्धान्संतप्तान् ॥ २ ॥ कियत्कालपर्यंतंतत्रतिष्ठतितत्राह ॥ स्वगात्रेति ॥ वह्निकुण्डभोगोत्तरंपुनःक्वगच्छंतितत्राह ॥ पशुयोनिमिति ॥
रौद्रदग्धांवनेत्युष्णेनसूर्यसंतापेनदग्धांछायारहितवनेएवपशुजन्मत्रयंभवतीत्यर्थः ॥ ३ ॥

॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ इतिश्रीदेवीभागवततिलकेदशमस्कंधेएकादशोऽध्यायः ॥ ११ ॥ त्र्यधिकैर्नवतिश्लोकैर्महालक्ष्म्याःकथानकम्।
तथामहासरस्वत्याःसंक्षेपेणात्रवर्ण्यते ॥ १ ॥ प्रतिज्ञातांमहालक्ष्म्याउत्पत्तिंवर्णयति ॥ महिषीगर्भेति । इयंकथापंचमस्कंधेविस्तरेणोक्ता ॥१॥२॥ लोकमुत्तमामिति ॥ लोकस्तुभु
वनेजनेइतिकोशात् भवनंकात्यायनाश्रमरूपमित्यर्थः ॥ ३ ॥ यत्रोत्तमौदेवदेवाविति ॥ यत्रकात्यायनाश्रमेइत्यर्थः ॥ अतएवकालिकापुराणेकात्यायनशिष्यंस्त्रीरूपेणमोहयंतंमहिषा

देवदेवंतदात्यक्त्वामोहयामासदानवौ ॥ तदैवभगवान्विष्णुःपरमात्माजगत्पतिः ॥ २६ ॥ प्रबोधमापदेवेशोददृशेदानवोत्तमौ ॥ तदातौदान
वौघोरौदृष्ट्वातंमधुसूदनम् ॥ २७ ॥ युद्धायकृतसंकल्पौजग्मतुःसन्निधिंहरेः ॥ युयुधेचततस्ताभ्यांभगवान्मधुसूदनः ॥२८ ॥ पंचवर्षसहस्राणि
बाहुप्रहरणोविभुः ॥ तौतदाऽतिबलोन्मत्तौजगन्मायाविमोहितौ ॥ २९ ॥ व्रियतांवरइत्येवमूचतुःपरमेश्वरम् ॥ एवंतयोर्वचःश्रुत्वाभगवाना
दिपूरुषः ॥ ३० ॥ वव्रेवध्यावुभौमेऽद्यभवेतामितिनिश्चितम् ॥ तौतदाऽतिबलौदेवंपुनरेवोचतुर्हरिम् ॥ ३१ ॥ आवांजहिनयत्रोर्वीपयसाचप
रिप्लुता ॥ तथेत्युक्त्वाभगवतागदाशंखभृतानृप ॥ ३२ ॥ कृत्वाचक्रेणवैछिन्नेजघनेशिरसीतयोः ॥ एवंदेवीसमुत्पन्नाब्रह्मणासंस्तुतानृप
॥ ३३ ॥ महाकालीमहाराजसर्वयोगेश्वरेश्वरी ॥ महालक्ष्म्यास्तथोत्पत्तिंनिशामयमहीपते ॥ ३४ ॥ इतिश्रीदेवीभागवतेम०दशमस्कंधेदेवी
माहात्म्येएकादशोऽध्यायः ॥ ११ ॥ मुनिरुवाच ॥ महिषीगर्भसंभूतोमहाबलपराक्रमः ॥ देवान्सर्वान्पराजित्यमहिषोऽभूज्जगत्प्रभुः ॥ १ ॥
सर्वेषांलोकपालानामधिकारान्महासुरः ॥ बलान्निर्जित्यबुभुजेत्रैलोक्यैश्वर्यमद्भुतम् ॥ २ ॥ ततःपराजिताःसर्वेदेवाःस्वर्गपरिच्युताः ॥ ब्रह्मा
णंचपुरस्कृत्यतेजग्मुर्लोकमुत्तमम् ॥ ३ ॥ यत्रोत्तमौदेवदेवौसंस्थितौशंकराच्युतौ ॥ वृत्तांतंकथयामासुर्महिषस्यदुरात्मनः॥४॥ देवानांचैवसर्वे
षांस्थानानितरसासुरः ॥ विनिर्जित्यस्वयंभुंक्तेबलवीर्यमदोद्धतः ॥ ५ ॥ महिषासुरनामाऽसौदुष्टदैत्योऽमरेश्वरौ॥वधोपायश्चतस्याऽऽशुचिं
त्यतामसुरार्दनौ ॥ ६ ॥ एवंश्रुत्वासभगवान्देवानामार्तियुग्वचः ॥ चकारकोपंसुबहुंतथाशंकरपद्मजौ ॥ ७ ॥ एवंकोपयुतस्यास्यहरेरास्या
न्महीपते ॥ तेजः प्रादुरभूद्दिव्यंसहस्रार्कसमद्युति ॥ ८ ॥ अथानुक्रमतस्तेजःसर्वेषांत्रिदिवौकसाम् ॥ शरीराद्उद्भवंप्रापहर्षयद्विबुधाधिपान् ॥
॥ ९ ॥ यदभूच्छंभुजंतेजोमुखमस्योदपद्यत ॥ केशाबभूवुर्याम्येनवैष्णवेनचबाहवः ॥ १० ॥ सौम्येनचस्तनौजातौमाहेंद्रेणचमध्यमः ॥ वारु
णेनततोभूपजंघोरूसंबभूवतुः ॥ ११ ॥ नितंबौतेजसाभूमेःपादौब्राह्मेणतेजसा ॥ पादांगुल्योभानवेनवासवेनकरांगुलीः ॥ १२ ॥

सुरंप्रतिकात्यायनःशशापस्त्रीत्वांनिहानिष्यतीति ॥ तद्वचनसार्थक्यायदेव्यातदाश्रमएवावतारोगृहीतोऽतएवदेव्याःकात्यायनीतिनामेत्युक्तम् ॥ इत्थंवृत्तांतमवतारस्यहरिहरौज्ञात्वाप्र
थमतएवकात्यायनाश्रमेगत्वास्थितवंताविति गम्यते ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ करांगुलीःकरांगुल्यः आर्षप्रयोगः ॥ १२ ॥

॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ रूपांतराणिगजादीनाम् ॥ ३१ ॥

कौबेरेणतथानासादंताःसंजज्ञिरेतदा॥ प्राजापत्येनोत्तमेनतेजसावसुधाधिप॥ १३॥पावकेनचसंजातंलोचनत्रितयंशुभम् ॥ सांध्येनतेजसाजा
तेभृकुट्यौतेजसांनिधी॥ १४॥ कर्णौवायव्यतोजातौतेजसोमनुजाधिप ॥ सर्वेषांतेजसादेवीजातामहिषमर्दिनी॥ १५॥ शूलंददौशिवोविष्णुश्चक्रं
शंखंचपाशभृत् ॥ हुताशनोददौशक्तिंमारुतश्चापसायकौ ॥ १६॥ वज्रंमहेंद्रःप्रददौघंटांचैरावताद्गजात् ॥ कालदंडंयमोब्रह्माचाक्षमालाकमंडलू
॥ १७ ॥ दिवाकरोरश्मिमालांरोमकूपेषुसंददौ ॥ कालःखड्गंतथाचर्मनिर्मलंवसुधाधिप॥ १८ ॥ समुद्रोनिर्मलंहारमजरेचांबरेनृप॥ चूडामणिं
कुंडलेचकटकानितथांगदे ॥ १९॥अर्धचंद्रंनिर्मलंचनूपुराणितथाददौ ॥ ग्रैवेयकंभूषणंचतस्यैदेव्यैमुदान्वितः ॥ २०॥ विश्वकर्माचोर्मिकाश्चददौ
तस्यैधरापते ॥ हिमवान्वाहनंसिंहंरत्नानिविविधानिच ॥ २१ ॥ पानपात्रंसुरापूर्णंददौतस्यैधनाधिपः ॥ शेषश्चभगवान्देवोनागहारंददौविभुः
॥ २२॥ अन्यैरशेषविबुधैर्मानितासाजगन्मयी ॥ तांतुष्टुवुर्महादेवींदेवामहिषपीडिताः ॥ २३ ॥ नानास्तोत्रैर्महेशानींजगदुद्भवकारिणीम् ॥
तेषांनिशम्यदेवेशीस्तोत्रंविबुधपूजिता ॥ २४ ॥ महिषस्यवधार्थायमहानादंचकारह ॥ तेननादेनमहिषश्चकितोभूद्धरापते ॥ २५ ॥ आस
सादजगद्धात्रींसर्वसैन्यसमावृतः ॥ ततःसयुयुधेदेव्यामहिषाख्योमहासुरः ॥ २६॥ शस्त्रास्त्रैर्बहुधाक्षिप्तैःपूरयन्नंबरांतरम् ॥ चिक्षुरोग्रामणीःसेना
पतिर्दुर्धरदुर्मुखौ ॥ २७ ॥ बाष्कलस्ताम्रकश्चैवबिडालवदनोपरः ॥ एतैश्चान्यैरसंख्यातैःसंग्रामांतकसन्निभैः ॥ २८ ॥ योधैःपरिवृतोवीरोम
हिषोदानवोत्तमः ॥ ततःसाकोपताम्राक्षीदेवीलोकविमोहिनी ॥ २९ ॥ जघानयोधान्समरेदेवीमहिषमाश्रितान् ॥ ततस्तेषुहतेष्वेवसदैत्यो
रोषमूर्छितः ॥ ३० ॥ आससादतदादेवींतूर्णमायाविशारदः ॥ रूपांतराणिसंभेजेमाययादानवेश्वरः ॥ ३१ ॥ तानितान्यस्यरूपाणिनाशया
मासमातदा ॥ ततोऽतेमाहिषंरूपंबिभ्राणममरार्दनम् ॥ ३२ ॥ पाशेनबद्धासुदृढंछित्त्वाखड्गेनतच्छिरः ॥ पातयामासमहिषंदेवीदेवगणांतक
म् ॥ ३३ ॥ हाहाकृतंततःशेषसैन्यंभग्नंदिशोदश ॥ तुष्टुवुर्देवदेवेशींसर्वेदेवाःप्रमोदिताः ॥ ३४ ॥ एवंलक्ष्मीःसमुत्पन्नामहिषासुरमर्दिनी ॥
राजञ्छृणुसरस्वत्याःप्रादुर्भावोयथाऽभवत् ॥ ३५ ॥ एकदाशुंभनामाऽऽसीद्दैत्योमदबलोत्कटः ॥ निशुंभश्चापितद्भ्रातामहाबलपराक्रमः ॥
॥ ३६ ॥ तेनसंपीडितादेवाःसर्वेभ्रष्टश्रियोनृप ॥ हिमवंतमथासाद्यदेवींतुष्टुवुरादरात् ॥ ३७ ॥ देवाऊचुः ॥ जयदेवेशिभक्तानामार्तिनाशन
कोविदे ॥ दानवांतकरूपेत्वमजरामरणेऽनघे ॥ ३८ ॥ देवेशिभक्तिसुलभेमहाबलपराक्रमे ॥ विष्णुशंकरब्रह्मादिस्वरूपेऽनंतविक्रमे ॥ ३९ ॥

॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥४९॥ प्रथममदर्शनंगतांपुनर्हिमालयेसुंदररूपंधृत्वास्थितांचंडमुंडौदृष्टवंतावित्याह । चंडमुंडाविति॥अत्रपंचम

सृष्टिस्थितिकरेनाशकारिकेकांतिदायिनि ॥ महातांडवसुप्रीतेमोददायिनिमाधवि ॥४०॥ प्रसीददेवदेवेशिप्रसीदकरुणानिधे ॥ निशुंभशुंभ संभूतभयापारांबुवारिधेः ॥ ४१ ॥ उद्धराऽस्मान्प्रपन्नार्तिनाशिकेशरणागतान् ॥ एवंसंस्तुवतांतेषांत्रिदशानांधरापते ॥ ४२ ॥ प्रसन्नागिरि जाप्राहब्रूतस्तवनकारणम् ॥ एतस्मिन्नंतरेतस्याःकोशरूपात्समुत्थिता ॥ ४३ ॥ कौशिकीसाजगत्पूज्यादेवान्प्रीत्येदमब्रवीत् ॥ प्रसन्नाऽहंसुर श्रेष्ठाःस्तवेनोत्तमरूपिणी ॥ ४४ ॥ व्रियतांवरइत्युक्तेदेवाःसंवव्रिरेवरम् ॥ शुंभनामावरोभ्रातानिशुंभस्तस्तस्यविश्रुतः ॥ ४५ ॥ त्रैलोक्यमोज साक्रांतंदैत्येनबलशालिना ॥ तद्वधश्चिंत्यतांदेविदुरात्मादानवेश्वरः ॥ ४६ ॥ बाधतेसततंदेवितिरस्कृत्यनिजौजसा ॥ श्रीदेव्युवाच ॥ देव शत्रुंपातयिष्येनिशुंभंशुंभमेवच ॥ ५७ ॥ स्वस्थास्तिष्ठतभद्रंवःकंटकंनाशयामिवः ॥ इत्युक्त्वादेवदेवेशीदेवान्सेंद्रान्दयामयी ॥४८॥ जगामा ऽदर्शनंसद्योमिषतांत्रिदिवौकसाम् ॥ देवाःसमागताहृष्टाःसुवर्णाद्रिगुहांशुभाम् ॥४९॥ चंडमुंडौपश्यतःस्मभृत्यौशुंभनिशुंभयोः॥ दृष्ट्वातांचारु सर्वांगींदेवींलोकविमोहिनीम् ॥५०॥ कथयामासतूराज्ञेभृत्यौतौचंडमुंडकौ ॥ देवसर्वासुरश्रेष्ठरत्नभोगार्हमानद ॥ ५१ ॥ अपूर्वाकामिनीदृ ष्टाचावाभ्यांरिपुमर्दन ॥ तस्याःसंभोगयोग्यत्वमस्त्येवतवसांप्रतम् ॥ ५२ ॥ तांसमानयचार्वंगींभुंक्ष्वसौख्यसमन्वितः ॥ तादृशीनासुरीना रीनगंधर्वीनदानवी ॥ ५३ ॥ नमानवीनापिदेवीयादृशीसामनोहरा ॥ एवंभृत्यवचःश्रुत्वाशुंभःपरबलार्दनः ॥५४॥ दूतंसंप्रेषयामाससुग्रीवं नामदानवम् ॥ सदूतस्त्वरितंगत्वादेव्याःसविधमादरात् ॥ ५५ ॥ वृत्तांतंकथयामासदेव्यैशुंभस्ययद्वचः ॥ देविशुंभासुरोनामत्रैलोक्यविज यीप्रभुः ॥५६ ॥ सर्वेषांरत्नवस्तूनांभोक्तामान्योदिवौकसाम् ॥ तदुक्तंशृणुमेदेविरत्नभोक्ताऽहमव्ययः ॥ ५७ ॥ त्वंचापिरत्नभूताऽसिभज मांचारुलोचने ॥ सर्वेषुयानिरत्नानिदेवासुरनरेषुच ॥ ५८ ॥ तानिमय्येवसुभगेभजमांकामजैरसैः ॥ देव्युवाच ॥ सत्यंवदसिहेदूतदैत्यराज प्रियंकरम् ॥ ५९ ॥ प्रतिज्ञायामयापूर्वंकृतासाप्यनृताकथम् ॥ भवेत्तांशृणुमेदूतयाप्रतिज्ञामयाकृता ॥ ६० ॥ योमेदर्पंविधुनुतेयोमेबलमपो हति ॥ योमेप्रतिबलोभूयात्सएवममभोगभाक् ॥६१॥ ततएनांप्रतिज्ञांमेसत्यांकृत्वासुरेश्वरः॥ गृह्णातुपाणिंतरसातस्याऽशक्यंकिमत्रहि ॥६२॥ तस्माद्गच्छमहादूतस्वामिनंब्रूहिचादृतः ॥ प्रतिज्ञांचापिमेसत्यांविधास्यतिबलाधिकः ॥ ६३ ॥ एवंवाक्यंमहादेव्याःसमाकर्ण्यसदानवः ॥ कथयामासशुंभायदेव्यावृत्तांतमादितः ॥ ६४ ॥ तदाप्रियंदूतवाक्यंशुंभःश्रुत्वामहाबलः ॥ कोपमाहारयामाससमहांतंदनुजाधिपः ॥ ६५ ॥

स्कंधोक्तकथयाऽत्रत्योक्तकथयाचक्वचित्काचिद्विरोधोदृश्यतेसवक्तृभेदात्कल्पभेदाद्वापरिहार्यः ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥

॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७०॥७१ ॥७२॥ बाहेनेनसिंहेन ॥ ७३ ॥७४ ॥ ७५॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥

ततोधूम्राक्षनामानंदैत्यंदैत्यपतिःप्रभुः ॥ आदिदेशशृणुवचोधूम्राक्षममचादृतः ॥ ६६ ॥ तांदुष्टांकेशपाशेषुधृत्वाप्यानीयतांमम ॥ समीपमवि
लंबेनशीघ्रंगच्छस्वमेपुरः॥६७॥इत्यादेशंसमासाद्यदैत्येशोधूम्रलोचनः ॥ षष्ट्यासुराणांसहितःसहस्राणांमहाबलः ॥६८॥ तुहिनाचलमासाद्य
देव्याःसविधमेवसः ॥ उच्चैर्देवींजगादाशुभजदैत्यपतिंशुभे ॥६९॥ शुंभंनाममहावीर्यंसर्वभोगानवाप्नुहि ॥ नोचेत्केशान्गृहीत्वात्वांनेष्येदैत्यप
तिंप्रति॥७०॥इत्युक्तासाततोदेवीदैत्येनत्रिदशारिणा ॥ उवाचदैत्ययद्ब्रूषेतत्सत्यंतेमहाबल ॥७१॥ राजाशुंभासुरस्त्वंचकिंकरिष्यसितद्वद ॥
इत्युक्तोदैत्यपोऽधावत्तूर्णंशस्त्रसमन्वितः॥७२॥भस्मसात्तंचकाराशुहुंकारेणमहेश्वरी ॥ ततःसैन्यंवाहनेनदेव्याभग्नंमहीपते ॥७३॥ दिशोदशाभ
जच्छीघ्रंहाहाभूतमचेतनम् ॥ तद्वृत्तांतंसमाश्रुत्यसशुंभोदैत्यराड्विभुः ॥७४॥ चुकोपचमहाकोपाद्भ्रुकुटीकुटिलाननः ॥ ततःकोपपरीतात्मादैत्य
राजःप्रतापवान् ॥७५॥ चंडंमुंडंरक्तबीजंक्रमतःप्रैषयद्विभुः॥ तेचगत्वात्रयोदैत्याविक्रांताबहुविक्रमाः॥७६॥ देवींग्रहीतुमारब्धयत्नास्तेह्यभव
न्बलात् ॥ तानापततएवासौजगद्धात्रीमदोत्कटा ॥७७॥ शूलंगृहीत्वावेगेनपातयामासभूतले ॥ ससैन्यान्निहताञ्छ्रुत्वादैत्यांस्त्रीन्दानवेश्वरौ
॥७८॥ शुंभश्चैवनिशुंभश्चसमाजग्मतुरोजसा ॥ निशुंभश्चैवशुंभश्चकृत्वायुद्धंमहोत्कटम् ॥७९॥ देव्याश्चवशगौजातौनिहतौचतयासुरौ ॥ इति
दैत्यवरंशुंभंघातयित्वाजगन्मयी ॥८०॥ विबुधैःसंस्तुतातद्वत्साक्षाद्वागीश्वरीपरा ॥ एवंतेवर्णितोराजन्प्रादुर्भावोऽतिरम्यकः ॥८१॥ काल्या
श्चैवमहालक्ष्म्याःसरस्वत्याःक्रमेणच ॥परापरेश्वरीदेवीजगत्सर्गंकरोतिच॥८२॥पालनंचैवसंहारंसैवदेवीदधातिहि॥तांसमाश्रयदेवेशींजगन्मोह
निवारिणीम्॥८३॥महामायांपूज्यतमांसाकार्यंतेविधास्यति॥श्रीनारायणउवाच ॥इतिराजावचःश्रुत्वामुनेःपरमशोभनम्॥८४॥देवींजगामश
रणंसर्वकामफलप्रदाम्॥निराहारोयतात्माचतन्मनाश्चसमाहितः॥८५॥देवीमूर्तिंमृन्मयींचपूजयामासभक्तितः॥पूजनांतेबलिंतस्यैनिजगात्रासृ
जंददत् ॥८६॥ तदाप्रसन्नादेवेशीजगद्योनिःकृपावती॥ प्रादुर्बभूवपुरतोवरंब्रूहीतिभाषिणी॥८७॥सराजानिजमोहस्यनाशनंज्ञानमुत्तमम् ॥ रा
ज्यंनिष्कंटकंचैवयाचतिस्ममहेश्वरीम् ॥८८॥ श्रीदेव्युवाच ॥ राजन्निष्कंटकंराज्यंज्ञानंवैमोहनाशनम्॥भविष्यतिमयादत्तमस्मिन्नेवभवेतव॥
॥८९॥ अन्यच्चशृणुभूपालजन्मांतरविचेष्टितम् ॥भानोर्जन्मसमासाद्यसावर्णिर्भविताभवान् ॥९०॥ तत्रमन्वंतरस्यापिपतित्वंबहुविक्रमम् ॥
संततिंबहुलांचापिप्राप्स्यतेमद्वराद्भवान् ॥ ९१ ॥ एवंदत्त्वावरंदेवीजगामादर्शनंतदा ॥ सोपिदेव्याःप्रसादेनजातोमन्वंतराधिपः ॥ ९२ ॥

॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥

॥ ९३ ॥ इतिश्रीदेवीभागवततिलकेदशमस्कन्धेद्वादशोऽध्यायः ॥ १२ ॥ सप्तविंशतियुक्तैश्चशतश्लोकैरतःपरम् ॥ मनूनामवशिष्टानांषण्णांवृत्तमुदीर्यते ॥ १ ॥ अष्टमनूनांवृत्तमभिधा यावशिष्टषण्मनूनांवृत्तंकीर्तयति । अथातइति ॥ १ ॥ २ ॥ ३ ॥४॥५॥६॥७॥ आत्मन्येवस्वात्मन्येवसर्वंजगद्दर्शनंजगामसर्वाधिष्ठानब्रह्मरूपदेव्याःसाक्षात्कारस्तेषांजातइतिभावः॥

एवंतेवर्णितंसाधोसावर्णेर्जन्मकर्मच ॥ एतत्पठंस्तथाशृण्वन्देव्यनुग्रहमाप्नुयात् ॥९३॥ इतिश्रीदेवीभागवतेमहापुराणेदशमस्कंधेदेवीमाहात्म्ये द्वादशोऽध्यायः ॥१२॥ श्रीनारायणउवाच ॥ अथातःश्रूयतांशेषमनूनांचित्रमुद्भवम् ॥ यस्यस्मरणमात्रेणदेवीभक्तिःप्रजायते ॥ १ ॥ आसन्वैवस्वतमनोःपुत्राःषडिमलोदयाः ॥ करूषश्चपृषध्रश्चनाभागोलिष्टएवच ॥२॥ शर्यातिश्चत्रिशंकुश्चसर्वएवमहाबलाः ॥ ततःषडेवतेगत्वाकालिंद्यास्तीरमुत्तमम् ॥३॥ निराहाराजितश्वासाःपूजांचक्रुस्ततःस्थिताः॥ ॥ देव्यामहीमयींमूर्तिंविनिर्मायपृथक्पृथक् ॥ ४ ॥ विविधैरुपचारैस्तांपूजयामासुरादृताः ॥ ततश्चसर्वएवैतेतपःसारामहाबलाः ॥ ५ ॥ जीर्णपर्णाशनावायुभक्षणास्तोयजीवनाः ॥ धूम्रपानरश्मिपानाःक्रमशश्चबहुश्रमाः ॥ ६ ॥ ततस्तेषामादरेणाऽऽराधनंकुर्वतांसदा ॥ विमलामतिरुत्पन्नासर्वमोहविनाशिनी ॥ ७ ॥ बभूवुर्मनुपुत्रास्तेदेवीपादैकचिंतनाः ॥ मत्याविमलयातेषामात्मन्येवाखिलंजगत् ॥ ८ ॥ दर्शनंसंजगामशुतदद्भुतमिवाभवत् ॥ एवंद्वादशवर्षांतेतपसाजगदीश्वरी ॥ ९ ॥ प्रादुर्बभूवदेवेशीसहस्रार्कसमद्युतिः ॥ तांदृष्ट्वाविमलात्मानोराजपुत्राःषडेवते ॥१०॥ तुष्टुवुर्भक्तिनम्रांतःकरणाभावसंयुताः॥राजपुत्राऊचुः॥महेश्वरिजयेशानिपरमेकरुणालये ॥११॥वाग्भवाराधनप्रीतेवाग्भवप्रतिपादिते ॥ क्लींकारविग्रहेदेविक्लींकारप्रीतिदायिनि॥१२॥कामराजमनोमोददायिनीश्वरतोषिणि ॥ महामायेमोदपरेमहासाम्राज्यदायिनि ॥१३॥ विष्णवर्कहरशक्रादिस्वरूपेभोगवर्धिनि ॥ एवंस्तुताभगवतीराजपुत्रैर्महात्मभिः॥१४॥प्रसादसुमुखीदेवीप्रोवाचवचनंशुभम् ॥ श्रीदेव्युवाच ॥ राजपुत्रामहात्मानोभवंतस्तपसायुताः॥१५॥निष्कल्मषाःशुद्धधियोजातावैमदुपासनात् ॥ वरंमनोगतंसर्वंयाचध्वमविलंबितम्॥१६॥ प्रसन्नाऽहंप्रदास्यामियुष्माकंमनसिस्थितम्॥राजपुत्राऊचुः॥देविनिष्कंटकंराज्यंसंततिश्चिरजीविनी ॥१७॥ भोगाअव्याहताःकामंयशस्तेजोमतिश्चह ॥ अकुंठितत्वंसर्वेषामेषएववरोहितः ॥ १८ ॥ श्रीदेव्युवाच ॥ एवमस्तुचसर्वेषांभवतांयन्मनोगतम् ॥ अथान्यदपिमेवाक्यंश्रूयतामादरादिदम् ॥ १९ ॥ भवंतःसर्वएवैतेमन्वंतरपतीश्वराः ॥ संतत्यादीर्घयाभोगैरनेकैरपिसंगमः ॥ २० ॥ अखंडितबलैश्वर्ययशस्तेजोविभूतयः ॥ भवितारोमत्प्रसादाद्राजपुत्राःक्रमेणतु ॥ २१ ॥

तथाचमनुः । सर्वभूतस्थमात्मानंसर्वभूतानिचात्मनि ॥ संपश्यन्नात्मनाजीवःस्वाराज्यमधिगच्छतीति ॥ ८ ॥ तदद्भुतमिवेति ॥ यद्योगादिभिरपिवस्तुनप्राप्यतेतत्केवलंभगवत्याराधनेनाऽऽत्मस्वरूपंलब्धमित्याश्चर्यंलोकानामभवदित्यर्थः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ कामराजःकामेश्वरः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

भ्रामरीजगदंबिकेति ॥ अनेनचैतेषण्मनवोभ्रामर्याउपासकाइतिबोधितम् ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ भ्रामर्यास्तुप्रसादत

श्रीनारायणउवाच ॥ एवंतेभ्योवरान्दत्त्वाभ्रामरीजगदंबिका॥अंतर्धानंजगामाऽऽशुभक्त्यातैःसंस्तुतासती ॥२२॥ तेराजपुत्राःसर्वेऽपितस्मिञ्ज न्मन्यनुत्तमम्॥ राज्यंमहीगतान्भोगान्बुभुजुश्चमहौजसः॥२३॥संततिंचाऽखंडितांतेसमुत्पाद्यमहीतले॥वंशंसंस्थाप्यसर्वेऽपिमनूनांपतयोऽभव न्॥२४॥भवांतरेक्रमेणैवसावर्णिपदभागिनः॥प्रथमोदक्षसावर्णिर्नवमोमनुरीरित॥२५॥अव्याहतबलोदेव्याःप्रसादादभवद्विभुः॥द्वितीयोमेरुसा वर्णिर्दशमोमनुरेवच ॥२६॥ बभूवमन्वंतरपोमहादेवीप्रसादतः ॥ तृतीयोमनुराख्यातःसूर्यसावर्णिनामकः ॥२७॥ एकादशोमहोत्साहस्तपसा स्वेनभावितः॥चतुर्थश्चंद्रसावर्णिर्द्वादशोमनुराड्विभुः॥२८॥देवीसमाराधनेनजातोमन्वंतरेश्वरः॥पंचमोरुद्रसावर्णिस्त्रयोदशमनुःस्मृतः॥२९॥ म हाबलोमहासत्त्वोबभूवजगदीश्वरः॥षष्ठश्चविष्णुसावर्णिश्चतुर्दशमनुःकृती॥३०॥बभूवदेवीवरतोजगतांप्रथितःप्रभुः ॥ चतुर्दशैतेमनवोमहातेजो बलैर्युताः ॥३१॥देव्याराधनतःपूज्यावंद्यालोकेषुनित्यशः॥महाप्रतापिनःसर्वेभ्रामर्यास्तुप्रसादतः ॥३२॥ नारदउवाच ॥ केयंसाभ्रामरीदेवीक थंजाताकिमात्मिका॥तदाख्यानंवदप्राज्ञविचित्रंशोकनाशकम्॥३३॥नतृप्तिमधिगच्छामिपिबन्देवीकथामृतम्॥ अमृतंपिबतांमृत्युर्नाऽस्यश्रव णतोयतः ॥३४॥ श्रीनारायणउवाच॥शृणुनारदवक्ष्यामिजगन्मातुर्विचेष्टितम्॥अचिंत्याव्यक्तरूपायाविचित्रंमोक्षदायकम्॥३५॥ यद्यच्चरित्रं श्रीदेव्यास्तत्सर्वंलोकहेतवे॥निर्व्याजयाकरुणयापुत्रेमातुर्यथातथा॥३६॥पूर्वंदैत्योमहानासीदरुणाख्योमहाबलः॥पातालेदैत्यसंस्थानेदेवद्वेषी महाखलः ॥३७॥ सदेवाञ्जेतुकामश्चचकारपरमंतपः ॥ पद्मसंभवमुद्दिश्यसनस्त्राताभविष्यति ॥३८॥ गत्वाहिमवतःपार्श्वेगंगाजलसुशीतले॥ पक्वपर्णाशनोयोगीसंनिरुध्यमरुद्गणम्॥३९॥गायत्रीजपसंसक्तःसकामस्तमसायुतः ॥ दशवर्षसहस्राणिततोवारिकणाशनः ॥४०॥ दशवर्षसह स्राणिततःपवनभोजनः ॥ दशवर्षसहस्राणिनिराहारोभवत्ततः ॥ ४१ ॥ एवंतपस्यतस्तस्यशरीरादुत्थितोऽनलः॥ ददाहजगतींसर्वांतदद्भुतमि वाभवत्॥४२॥ किमिदंकिमिदंचेतिदेवाःसर्वेचकंपिरे ॥ संत्रस्ताःसकलालोकाब्रह्माणंशरणंययुः ॥४३॥ विज्ञापितंदेववरैःश्रुत्वातत्रचतुर्मुखः॥ गायत्रीसहितोहंससमारूढोययौमुदा ॥ ४४ ॥ प्राणमात्रावशिष्टंतंधमनीशतसंकुलम् ॥ शुष्कोदरंक्षामगात्रंध्यानमीलितलोचनम् ॥ ४५ ॥

इतिश्रुत्वापृच्छति ॥ नारदउवाच ॥ केयमिति ॥ ३३ ॥ अस्यश्रवणमात्रेणैवमृत्युर्नास्तीत्यर्थः ॥ ३४ ॥ ३५ ॥ ३६ ॥ अरुणाख्यःअयंविप्रचित्तिवंशोद्भवइतिपुराणांतरेस्पष्टम् ॥ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

॥ ४६ ॥ ४७ ॥ ४८ ॥ ब्रह्मप्रणवंगायत्रींवाजपंतम् ॥४९॥ ५० ॥५१॥ ५२॥ नपुंभ्योनापियोषितइति ॥ अत्रस्त्रीपुंशब्देनमनुष्याकारावेवस्त्रीपुंसौगृह्येतेनपुरुषमात्रंनवास्त्रीलिंगमात्रम् ॥ अन्यथाद्विपाच्चतुष्पादादीनामपिस्त्रीपुंसोरेवांतर्भावात्तेषांपुनर्ग्रहणंव्यर्थमेवस्यादतएवदेव्याःस्त्रीपुंरूपैर्भ्रमरैर्दैत्यस्यवधेकृतेऽपिनदोषइतिबोध्यम् ॥ ५३ ॥ नोभयाद्विपाच्चतुष्पाद्रू

ददर्शतेजसादीप्तंद्वितीयमिवपावकम् ॥ वरंवरयभद्रंतेवत्सयन्मनसिस्थितम्॥४६॥ श्रुतिमात्रेणसंतोषकारकंवाक्यमूचिवान्॥ श्रुत्वाब्रह्ममुखाद्वाणींसुधाधारामिवारुणः ॥४७॥ उन्मीलिताक्षःपुरतोददर्शजलजोद्भवम् ॥ गायत्रीसहितंदेवंचतुर्वेदसमन्वितम् ॥ ४८ ॥ अक्षस्रक्कुंडिकाहस्तंजपंतंब्रह्मशाश्वतम् ॥ दृष्ट्वोत्थायननामाऽथस्तुत्वाचविविधैःस्तवैः ॥ ४९ ॥ वरंवव्रेस्वबुद्धिस्थंमाभवेन्मृत्युरित्यपि ॥ श्रुत्वाऽरुणवचोब्रह्माबोधयामाससादरम् ॥ ५० ॥ ब्रह्मविष्णुमहेशाद्यामृत्युनाकवलीकृताः ॥ तदाऽन्येषांतुकावार्तामरणेदानवोत्तम ॥ ५१ ॥ वरंयोग्यंततोब्रूहिदातुंयःशक्यतेमया ॥ नाऽत्राऽऽग्रहंप्रकुर्वंतिबुद्धिमंतोजनाःक्वचित्॥५२॥ इतिब्रह्मवचःश्रुत्वापुनःप्रोवाचसादरम्॥ नयुद्धेनचशस्त्रास्त्रान्नपुंभ्योनापियोषितः ॥ ५३ ॥ द्विपाद्भ्योवाचतुष्पाद्भ्योनोभयाकारतस्तथा ॥ भवेन्मेमृत्युरित्येवंदेवदेहिवरंप्रभो ॥ ५४ ॥ बलंचविपुलंदेहियेनदेवजयोभवेत्॥ इतितस्यवचःश्रुत्वातथास्त्वितिवचोऽब्रवीत् ॥५५॥ दत्त्वावरंजगामाऽऽशुपद्मजःस्वंनिकेतनम् ॥ ततोरुणाख्योदैत्यस्तुपातालात्स्वाश्रयस्थितान्॥ ५६ ॥ दैत्यानाकारयामासब्रह्मणोवरदर्पितः ॥ आगत्यतेऽसुराःसर्वेदैत्येशंतंप्रचक्रिरे ॥ ५७ ॥ दूतंचप्रेषयामासयुद्धार्थममरावतीम् ॥ दूतवाक्यंतदाश्रुत्वादेवराड्भयकंपितः ॥ ५८ ॥ देवैःसार्धंजगामाऽऽशुब्रह्मणःसदनंप्रति ॥ ब्रह्मविष्णूपुरस्कृत्यजग्मुस्तेशंकरालयम् ॥ ५९ ॥ विचारंचक्रिरेतत्रतेरसुवाधर्थंद्रुहाम् ॥ एतस्मिन्समयेतत्रदैत्यसेनासमावृतः ॥ ६० ॥ अरुणाख्योदैत्यराजोजगामाऽऽशुत्रिविष्टपम् ॥ सूर्येंदुयमवह्नीनामधिकारान्पृथक्पृथक् ॥ ६१ ॥ स्वयंचकारतपसानानारूपधरोमुने ॥ स्वस्वस्थानच्युताःसर्वेजग्मुःकैलासमंडलम् ॥ ६२ ॥ शशंसुःशंकरंदेवाःस्वस्वदुःखंपृथक्पृथक् ॥ महान्विचारस्तत्राऽऽसीत्किंकर्तव्यमतःपरम् ॥ ६३ ॥ नयुद्धेनचशस्त्रास्त्रैर्नपुंभ्योनापियोषितः ॥ द्विपाद्भ्योवाचतुष्पाद्भ्योनोभयाकारतोऽपिवा ॥ ६४॥ मृत्युर्भवेदितिब्रह्माप्रोवाचवचनंयतः ॥ इतिचिंतातुराःसर्वेकर्तुंकिंचिन्नचक्षमाः ॥ ६५ ॥ एतस्मिन्समयेतत्रवागभूदशरीरिणी ॥ ॥ भजध्वंभुवनेशानींसावःकार्यंविधास्यति ॥ ६६ ॥ गायत्रीजपसंसक्तोदैत्यराड्यदितांत्यजेत् ॥ मृत्युयोग्यस्तदाभूयादित्युच्चैस्तोषकारिणी ॥ ६७ ॥ श्रुत्वादैवींतथावाणींमंत्रयामासुराहताः ॥ बृहस्पतिंसमाहूयवचनंप्राहदेवराट् ॥ ६८ ॥ गुरोगच्छसुराणांतुकार्यार्थमसुरंप्रति ॥ यथाभवेच्चगायत्रीत्यागस्तस्यतथाकुरु ॥ ६९ ॥ अस्माभिःपरमेशानीसेव्यतेध्यानयोगतः ॥ प्रसन्नासाभगवतीसाहाय्यंतेकरिष्यति ॥ ७० ॥

पनारसिंहगजाननाद्युभयात्मकरूपान्नपुंसकरूपाच्चेत्यर्थः॥ भ्रमराणांषट्पदत्वान्नद्विपात्त्वंवा॥५४॥५५॥५६॥५७॥५८॥५९॥६०॥६१॥६२॥६३॥६४॥६५॥६६ ॥६७॥६८॥६९॥७०॥

जांबूनदेश्वरीम् अष्टमस्कंधोक्तजंब्बादनेश्वरीमित्यर्थः ॥ ७१ ॥ देवीमखःपूर्वोक्तोदेवीयज्ञः ॥७२॥७३॥अरातिःशत्रुः ॥ तथाचशत्रुगृहेतवागमनमनुचितमितिभावः ॥ ७४ ॥ ७५ ॥
॥७६॥तत्याजेति॥ ननुबृहस्पतिवाक्यश्रवणमात्रेणकथंतेनस्वेष्टदेवतागायत्रीत्यक्तेतिचेत्स्वेष्टदेवतात्यागोभवतुसर्वस्वनाशोवाभवतुतथाऽपिदेवपक्षपातित्वंनस्वीकरिष्यामीत्याशयात् ॥
इत्थंदेवद्वेषेऽपिकारणंतुमोहितोदेवमाययेतिमूलएवोक्तम् ॥ देवसेवयाजांबूनदेश्वरीप्रसन्नादैत्यंमुमोहसचमोहितोदैत्यएवमभिमानेनगायत्रींतत्याजेतितदर्थः ॥ ननुदेव्यापिस्वोपास
कोदैत्यःकथंमोहितइतिचेन्न॥ सकामस्तमसायतइतिपूर्वोक्तवचनेनतस्यनिष्कामोपासकत्वाभावात् ॥ निष्कामोपासकएवदेवानांप्रियोभवतिनान्यइतितुबृहदारण्यकेपुराणांतरेषुचस्प

इत्यादिश्यगुरुंसर्वेजग्मुर्जांबूनदेश्वरीम् ॥ सास्मान्दैत्यभयत्रस्तान्पालयिष्यतिशोभना ॥ ७१ ॥ तत्रगत्वातपश्चर्यांचक्रुःसर्वेसुनिष्ठिताः ॥मा
याबीजजपासक्तादेवीमखपरायणाः ॥ ७२ ॥ बृहस्पतिस्ततःशीघ्रंजगामाऽसुरसन्निधौ ॥ आगतंमुनिवर्यंतंपप्रच्छाऽथसदैत्यराट् ॥ ७३ ॥ मु
नेकुत्राऽगमःकस्मात्किमर्थमितिमेवद ॥ नाहंयुष्मत्पक्षपातीप्रत्युतारातिरेवच ॥ ७४ ॥ इतितस्यवचःश्रुत्वाप्रोवाचमुनिनायकः ॥ अस्मत्से
व्याचयादेवीसात्वयापूज्यतेऽनिशम्॥७५॥ तस्मादस्मत्पक्षपातीनभवेस्त्वंकथंवद॥इतितस्यवचःश्रुत्वामोहितोदेवमायया ॥७६॥ तत्याजपर
मंमंत्रमभिमानेनसत्तम ॥ गायत्रीत्यागतोदैत्योनिस्तेजस्कोबभूवह ॥ ७७ ॥ कृतकार्योगुरुस्तस्मात्स्थानान्निर्गतवान्पुनः ॥ ततोवृत्तांतमखि
लंकथयामासवज्रिणे ॥ ७८ ॥ संतुष्टास्तेसुराःसर्वेभेजिरेपरमेश्वरीम् ॥ एवंबहुगतेकालेकस्मिंश्चित्समयेमुने ॥ ७९ ॥ प्रादुरासीज्जगन्माताज
गन्मंगलकारिणी ॥ कोटिसूर्यप्रतीकाशाकोटिकंदर्पसुंदरा ॥ ८०॥ चित्रानुलेपनादेवीचित्रवासोयुगान्विता ॥ विचित्रमाल्याभरणाचित्रभ्रम
रमुष्टिका ॥ ८१ ॥ वराभयकराशांताकरुणामृतसागरा ॥ नानाभ्रमरसंयुक्तपुष्पमालाविराजिता ॥ ८२ ॥ भ्रमरीभिर्विचित्राभिरसंख्याभिः
समावृता ॥ भ्रमरैर्गायमानैश्चह्रींकारमनुमन्वहम् ॥ ८३ ॥ समंततःपरिवृताकोटिकोटिभिरंबिका ॥ सर्वशृंगारवेषाढ्यासर्ववेदप्रशंसिता ॥
॥ ८४ ॥ सर्वात्मिकासर्वमयीसर्वमंगलरूपिणी ॥ सर्वज्ञासर्वजननीसर्वासर्वेश्वरीशिवा ॥ ८५ ॥ दृष्ट्वातांतरलात्मानोदेवाब्रह्मपुरोगमाः ॥ तु
ष्टुवुर्हृष्टमनसोविष्टरश्रवसंशिवाम् ॥ ८६ ॥ देवाऊचुः ॥ नमोदेविमहाविद्येसृष्टिस्थित्यंतकारिणि ॥ नमःकमलपत्राक्षिसर्वाधारेनमोऽस्तुते ॥
॥ ८७ ॥ सविश्वतैजसप्राज्ञविराट्सूत्रात्मिकेनमः॥ नमोव्याकृतरूपायैकूटस्थायैमोनमः॥८८॥दुर्गेसर्गादिरहितेदुष्टसंरोधनार्गले॥निरर्गलप्रे
मगम्येभर्गेदेविनमोऽस्तुते ॥८९ ॥ नमःश्रीकालिकेमातर्नमोनीलसरस्वति ॥ उग्रतारेमहोग्रेतेनित्यमेवनमोनमः ॥ ९० ॥ नमःपीतांबरेदे
विनमस्त्रिपुरसुंदरि ॥ नमोभैरविमातंगिधूमावतिनमोनमः ॥ ९१ ॥

ष्टम् ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ चित्रभ्रमरामुष्टौयस्याः ॥ ८१ ॥ ८२ ॥ ८३ ॥ ह्रींकारमनुंह्रींकारमंत्रंगायमानैर्भ्रमरैरित्यन्वयः । एतेनसर्वेदेवीनिकटस्थाह्रींकारमंत्रजपशालि
नोभवंतीतिबोधितम् ॥ ८४ ॥ ८५ ॥ विष्टरश्रवसंविष्टरावेदास्तेषुश्रवःश्रवणंयस्याःसाविष्टरेभ्योवाश्रवोयस्याःसांतांवेदप्रतिपाद्यामित्यर्थः ॥ ८६ ॥ ८७ ॥ ८८ ॥ अर्गलाशृंखला ॥
भर्गापापस्यभर्जनात्अविद्यादिभर्जना ॥ ८९ ॥ कालिकादयोदशमहाविद्यास्तंत्रेषुप्रसिद्धाः ॥ ९० ॥ पीतांबराबगलामुखी ॥ ९१ ॥

॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ भ्रमरैर्वेष्टितेति ॥ भ्रमराणामियंस्वामिनीभ्रामरीत्यर्थेतस्येदमित्यण्णंतान्ङीप् ॥ ९९ ॥१००॥ १ ॥ २ ॥ जगतोरणेजगद्योने ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥९॥ मटचीयूथवदिति ॥ मटचीशब्देनशलभाश्छांदोग्यभाष्ये मटचीहतेषुकुरुष्वितिश्रुतौमटचीशब्देन करकागृहीतास्तावामटचीशब्देनोच्यंते ॥

छिन्नमस्तेनमस्तेऽस्तुक्षीरसागरकन्यके ॥ नमःशाकंभरिशिवेनमस्तेरक्तदंतिके ॥ ९२ ॥ निशुंभशुंभदलनिरक्तबीजविनाशिनि ॥ धूम्रलोचननिर्णाशेवृत्रासुरनिबर्हिणि ॥ ९३ ॥ चंडमुंडप्रमथिनिदानवांतकरेशिवे ॥ नमस्तेविजयेगंगेशारदेविकचानने ॥ ९४ ॥ पृथ्वीरूपेदयारूपेतेजोरूपेनमोनमः ॥ प्राणरूपेमहारूपेभूतरूपेनमोऽस्तुते ॥९५॥ विश्वमूर्तेदयामूर्तेधर्ममूर्तेनमोनमः॥ देवमूर्तेज्योतिर्मूर्तेज्ञानमूर्तेनमोऽस्तुते ॥९६॥ गायत्रिवरदेदेविसाविव्त्रिचसरस्वति ॥ नमःस्वाहेस्वधेमातर्दक्षिणेतेनमोनमः ॥ ९७ ॥ नेतिनेतीतिवाक्यैर्याबोध्यतेसकलागमैः ॥ सर्वप्रत्यक्स्वरूपांतांभजामःपरदेवताम् ॥ ९८ ॥ भ्रमरैर्वेष्टितायस्माद्भ्रामरीयाततःस्मृता ॥ तस्यैदेव्यैनमोनित्यंनित्यमेवनमोनमः ॥ ९९ ॥ नमस्तेपार्श्वयोःपृष्ठेनमस्तेपुरतोंबिके ॥ नमऊर्ध्वंनमश्चाधःसर्वत्रैवनमोनमः ॥ १०० ॥ कृपांकुरुमहादेविमणिद्वीपाधिवासिनि ॥ अनंतकोटिब्रह्मांडनायिकेजगदंबिके ॥१॥ जयदेविजगन्मातर्जयदेविपरात्परे ॥जयश्रीभुवनेशानिजयसर्वोत्तमोत्तमे ॥ २ ॥ कल्याणगुणरत्नानामाकरेभुवनेश्वरि ॥ प्रसीदपरमेशानिप्रसीदजगतोरणे ॥ ३ ॥ नारायणउवाच ॥ इतिदेववचःश्रुत्वाप्रगल्भंमधुरंवचः ॥ उवाचजगदंबासामत्तकोकिलभाषिणी ॥ ४ ॥ श्रीदेव्युवाच ॥ प्रसन्नाऽहंसदादेवावरदेशशिखामणिः ॥ ब्रुवंतुविबुधाःसर्वेयदेवस्याचिकीर्षितम् ॥ ५ ॥ देवीवाक्यंसुराःश्रुत्वाप्रोचुर्दुःखस्यकारणम्॥दुष्टदैत्यस्यचरितंजगद्बाधाकरंपरम्॥६॥देवब्राह्मणवेदानांहेलनंनाशनंतथा ॥ स्थानभ्रंशंसुराणांचकथयामासुरादृताः ॥७॥ ब्रह्मणोवरदानंचयथावत्तेसमूचिरे ॥ श्रुत्वादेवमुखाद्वाणीमहाभगवतीतदा ॥ ८ ॥ प्रेरयामासहस्तस्थान्भ्रमरान्भ्रामरीतदा ॥ पार्श्वस्थानग्रभागस्थान्नानारूपधरांस्तद ॥ ९ ॥ जनयामासबहुशोयैर्व्याप्तंभुवनत्रयम् ॥ मटचीयूथवत्तेषांसमुदायस्तुनिर्गतः ॥११०॥ तदांतारिक्षंतैर्व्याप्तमंधकारःक्षितावभूत् ॥ दिविपर्वतशृंगेषुद्रुमेषुविपिनेष्वपि ॥ ११ ॥ भ्रमराएवसंजातास्तदद्भुतमिवाऽभवत् ॥ तेसर्वेदैत्यवक्षांसिदारयामासुरुद्वताः ॥ १२ ॥ नरंमधुहरंयद्वन्मक्षिकाःकोपसंयुताः ॥ उपायोनचशस्त्राणांतथाऽस्त्राणांतदाऽभवत् ॥ १३ ॥ नयुद्धंनचसंभाषाकेवलंमरणंखलु॥यस्मिन्यस्मिन्स्थलेयेयेस्थितादैत्यायथायथा ॥ १४ ॥ तत्रैवचतथासर्वेमरणंप्रापुरुत्स्मयाः ॥ परस्परंसमाचारोनकस्याप्यभवत्तदा ॥ १५ ॥क्षणमात्रेणतेसर्वेविनष्टादैत्यपुंगवाः ॥ कृत्वेत्थंभ्रमराकार्यंदेवीनिकटमाययुः ॥ ११६ ॥

॥ ११० ॥ ११ ॥ १२ ॥ मधुहरंमाक्षिकहरम् ॥ १३ ॥ १४ ॥ १५ ॥ ११६ ॥

॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ १२७ ॥ श्रीमच्छैवकुलोत्पन्नोरंगनाथात्मजःसुधीः ॥ श्रीलक्ष्मीगर्भसंभूतोनीलकंठोऽभिधानतः ॥ १ ॥

आश्चर्यमेतदाश्चर्यमितिलोकाःसमूचिरे ॥ किंचित्रंजगदंबायायस्यामायेयमीदृशी ॥ १७ ॥ ततोदेवगणाःसर्वेब्रह्मविष्णुपुरोगमाः ॥
निमग्नाहर्षजलधौपूजयामासुरंबिकाम् ॥ १८ ॥ नानोपचारैर्विविधैर्नानोपायनपाणयः ॥ जयशब्दंप्रकुर्वाणामुमुचुःसुमनांसिच ॥ १९ ॥
दिविदुंदुभयोनेदुर्ननृतुश्चाप्सरोगणाः ॥ पेठुर्वेदान्मुनिश्रेष्ठागंधर्वाद्याजगुस्तथा ॥ २० ॥ मृदंगमुरजावीणाढक्काडमरुनिःस्वनैः ॥ घंटाशंख
निनादैश्चव्याप्तमासीज्जगत्त्रयम् ॥ २१ ॥ नानास्तोत्रैस्तदास्तुत्वामूर्ध्न्याधायांजलींस्तदा ॥ जयमातर्जयेशानीत्येवंसर्वेसमूचिरे ॥ २२ ॥
ततस्तुष्टामहादेवीवरान्दत्त्वापृथक्पृथक् ॥ स्वस्मिंश्चविपुलांभक्तिंप्रार्थितातैर्ददौचताम् ॥ २३ ॥ पश्यतामेवदेवानामंतर्धानंगतातततः ॥
इतितेसर्वमाख्यातंभ्रामर्याश्चरितंमहत् ॥ २४ ॥ पठतांशृण्वतांचैवसर्वपापप्रणाशनम् ॥ श्रुतमाश्चर्यजनकंसंसारार्णवतारकम् ॥ २५ ॥
एवंमनूनांसर्वेषांचरितंपापनाशनम् ॥ देवीमाहात्म्यसंयुक्तंपठञ्शृण्वञ्शुभप्रदम् ॥ २६ ॥ यश्चैतत्पठतेनित्यंशृणुयाद्योऽनिशंनरः ॥ सर्वपाप
विनिर्मुक्तोदेवीसायुज्यमाप्नुयात् ॥ १२७ ॥ इतिश्रीदेवीभागवते महापुराणे दशमस्कन्धेत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥ ॥

दशमस्कन्धःसमाप्तः ॥ १० ॥

सार्धरुद्रैःपंचशत ( ५११॥ ) श्लोकैर्व्यासकृतैःशुभैः ॥ देवीभागवतस्यास्यदशमस्कन्धईरितः ॥ १ ॥

देवीभागवतव्याख्यांतिलकाख्यांससर्जयाम् ॥ दशमस्कंधएतस्याःसमाप्तोऽभूच्छुभार्थदः ॥ २ ॥ इतिश्रीशैवोपनामकरंगनाथभट्टसुतलक्ष्मीगर्भजनीलकंठभट्टकृतेदेवीभागवतव्याख्या
नेतिलकाभिधेदशमस्कंधेत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥ ॥ स्कंधश्चायंसमाप्तो दशमः ॥

श्रीगणेशायनमः ॥ असारेसंसारेकिमपिनाहिसारंभगवतीपदांभोजादन्यत्सुखकरमहोमोक्षजनकम् ॥ ततोहित्वासर्वंधनसुतकलत्रादिकमुमापदांभोजंशश्वन्नमतजपतध्यायतजनाः॥१॥ अर्धाधिकोनपंचाशत्संख्यैःपद्यैरतःपरम् ॥ सदाचारप्रसंगेनप्रातःकृत्यंसमुच्यते॥२॥तत्राष्टमस्कंधे मन्वंतरेषुसर्वेषुयद्यद्रूपेणपूज्यते ॥ यस्मिन्यस्मिंश्चवैस्थानेयेन येनचकर्मणेतिजनमे जयप्रश्नवाक्ये चकारेणसदाचारस्यापिसंगृहीत्वात्सदाचारस्यापिराज्ञःप्रश्नविषयत्वेनतंसदाचारमपिनारदायनारायणेनोक्तमेवकथयिष्यामीत्यभिप्रायेणैकादशद्वादशस्कंधावारभ्येते ॥ तत्रनारदोऽष्टमस्कंधनवमस्कंधोक्तप्रकारेणश्रीभगवत्यामहिमानंसर्वोत्तरंश्रीभगवत्याएवमुख्यत्वेनसर्वाराध्यत्वंचनारायणमुखाच्छ्रुत्वातदाराधनप्रकारंज्ञातुंपृच्छति ॥ नारदउवाच भगवन्भूतभव्येशेति ॥ आख्यातमष्टमनवमदशमस्कंधोक्तप्रकारेण चरित्रमेवचारित्रम् ॥ १ ॥ प्रादुर्भावः महाकालीमहालक्ष्मीमहासरस्वतीभ्रामर्यादिदेवीनाम् ॥ असुरद्रुहां देवानां अधिकाराप्तिर्दैत्यैर्हृतस्यतत्तदधिकारस्याप्तिःप्राप्तिः ॥ यद्वास्वयंभ्वादिमनूनांमन्वंतराधिकारस्याप्तिःप्राप्तिः ॥२॥ ३ ॥ ४ ॥ ५ ॥ सत्कर्मकृदिति ॥ नहिकश्चित्क्षणमपिजातुतिष्ठत्यकर्मकृदितिन्यायेनव्यापाररहितत्वस्यासंभवेनाऽन्यव्यापारंविहायसद्व्यापारएवाश्रयणीयइत्यर्थः॥ ६ ॥ ननुपित्रादिभिर्लालनहास्यविनोदेनकालःसुखेनगच्छतितदातद्विहायकिमि

श्रीगणेशायनमः ॥ नारदउवाच ॥ भगवन्भूतभव्येशनारायणसनातन ॥ आख्यातंपरमाश्चर्यंदेवीचारित्रमुत्तमम् ॥ १ ॥ प्रादुर्भावःपरो मातुःकार्यार्थमसुरद्रुहाम् ॥ अधिकाराप्तिरुक्ताऽत्रदेवीपूर्णकृपावशात् ॥ २ ॥ अधुनाश्रोतुमिच्छामियेनप्रीणातिसर्वदा ॥ स्वभक्तान्परिपुष्णातितमाचारंवदप्रभो ॥ ३ ॥ नारायणउवाच ॥ शृणुनारदतत्त्वज्ञसदाचारविधिक्रमम् ॥ यदनुष्ठानमात्रेणदेवीप्रीणातिसर्वदा ॥ ४ ॥ प्रातरुत्थायकर्तव्यंयद्द्विजेनदिनेदिने ॥ तदहंसंप्रवक्ष्यामिद्विजानामुपकारकम् ॥ ५ ॥ उदयास्तमयंयावद्द्विजःसत्कर्मकृद्भवेत् ॥ नित्यनैमित्तिकैर्युक्तःकाम्यैश्चान्यैरगर्हितैः ॥ ६ ॥ आत्मैवनसहायार्थंपितामाताचतिष्ठति ॥ नपुत्रदारानज्ञातिर्धर्मस्तिष्ठतिकेवलम् ॥ ७ ॥ तस्माद्धर्मं सहायार्थंनित्यंसंचिनुसाधनैः ॥ धर्मेणैवसहायात्तुतमस्तरतिदुस्तरम् ॥ ८ ॥ आचारःप्रथमोधर्मःश्रुत्युक्तःस्मार्तएवच ॥ तस्मादस्मिन्समायुक्तोनित्यंस्यादात्मनोद्विजः ॥ ९ ॥ आचाराल्लभतेह्यायुराचाराल्लभतेप्रजाः ॥ आचारादन्नमक्षय्यमाचारोहंतिपातकम् ॥ १० ॥ आचारः परमोधर्मोनृणांकल्याणकारकः ॥ इहलोकेसुखीभूत्वापरत्रलभतेसुखम् ॥ ११ ॥ अज्ञानांधजनानांतुमोहितैर्भ्रामितात्मनाम् ॥ धर्मरूपोमहादीपोमुक्तिमार्गप्रदर्शकः ॥ १२ ॥ आचारात्प्राप्यतेश्रेष्ठचमाचारात्कर्मलभ्यते ॥ कर्मणोजायतेज्ञानमितिवाक्यंमनोःस्मृतम् ॥ १३ ॥

तिधर्मआस्थेयइतिचेत्तत्राऽऽह । आत्मैवेति ॥ परलोकेनपित्रादयःसहायाभविष्यंति ॥ किंतुधर्मएव ॥ संचात्मनैवजायतेइतिआत्मैवस्वस्यसहायोनान्यइतिस्वेनैवस्वस्यधर्माचरणेन कल्याणंकर्तव्यमितिभावः ॥ तदुक्तम् आत्मैवह्यात्मनोबंधुरात्मैवरिपुरात्मनइति ॥ ७ ॥ तदेवस्पष्टयति । तस्मादिति ॥ संचिनुगृहाण ॥ तमोदुःखमज्ञानंवा ॥ ८ ॥ तत्रधर्मस्यानेकविधत्वेपिमुख्यरूपस्यतस्याश्रयणेनापिनिर्वाहादवश्यंसविधेयइतिदर्शयन्धर्मस्यमुख्यंरूपमाह । आचारइति ॥ प्रथमोमुख्यःसचश्रुत्युक्तःस्मृत्युक्तश्चमान्यः ॥ आत्मनःसदाचारेद्विजो नित्यंसमायुक्तःस्यादित्यन्वयः ॥९॥ आचाररूपधर्मस्यमुख्यत्वंप्रतिपादयति । आचाराल्लभतेइति ॥ १० ॥ ११ ॥ तत्रहारीतस्मृतिमर्थतःपठति अज्ञानांधेति॥मोहितैर्भ्रांतैःपुरुषैः॥ अज्ञानांतमसांधानांभ्रामितानांकुदृष्टिभिः ॥ धर्मशास्त्रप्रदीपोऽयंधार्योमार्गोपदेशकइतिहिहारीतवचः ॥ १२ ॥ अत्रैवमनुवचनमर्थतःपठति ॥ आचारात्प्राप्यतइतितथाचमनुः ॥ आचारात्परमोधर्मइत्यादि कर्मणोजायतेज्ञानंज्ञानान्मोक्षमवाप्यतइत्यंतम् ॥ १३ ॥

॥ १४ ॥ पराशरस्मृतिमर्थतःपठति॥यस्त्वाचारविहीनइति ॥ तथाचपराशरः ॥ आचारःपरमोधर्मइत्यादि सर्वधर्मबहिष्कार्योयथाशूद्रस्तथैवसइत्यन्तम् ॥ १५ ॥ १६ ॥ नैवतांल्लंघयेदिति ॥ तथाचगौतमः यद्यपिस्यात्स्वयंब्रह्मेत्यादि ॥ तथापिलौकिकाचारंमनसाऽपिनलंघयेदिति ॥ १७ ॥ सदाचारत्यागेदृष्टदोषमाह । दुराचारोहीति ॥ १८ ॥ ननुदुराचारत्यागेऽर्थकामावपित्यक्तौस्यातांनहिसदाचारासक्तस्याऽर्थकामसंपादनंसंभवति॥ततश्चपुरुषार्थचतुष्टयेधर्ममोक्षरूपार्थद्वयमेवसंपादितंस्यात् ॥ तथाचपुरुषार्थचतुष्टयावाप्तिःसदाचारिणांभवतीतिवचनानिविरुध्येरन्नित्यतआह ॥ परित्यजेदिति ॥ धर्मवर्जितावर्थकामौपरित्यजेदेवेत्यर्थः ॥ नहिपुरुषार्थचतुष्टयेधर्मविरुद्धावर्थकामौगृहीतौयेनतद्विरोधःस्यात् ॥ किंतु धर्माविरुद्धावर्थकामौसदाचारिणोऽनायासेनजायमानावेवगृहीतावितिभावः ॥ ननुधर्मस्यगवालंभादिरूपस्यापिसत्त्वात्सोऽपिकर्तव्यइतिचेत्तत्राऽऽह । धर्ममप्यसुखोदर्कमिति ॥असुखोदर्कंप्राणिनांपीडाकरंदुःखदायकंलोकेविद्विष्टंगवालंभादिकमपित्यजेदित्यर्थः॥नहिसानित्योधर्मोयदकरणेप्रत्यवायःस्यात्किंत्वभ्युदयार्थः ॥ सचाभ्युदयोबहुभिरन्यसाधनैःशास्त्रेषूक्तएवेतिनाभ्युदयार्थंप्राणिदुःखकरंलोकैर्विद्विष्टंधर्ममाचरेदितिभावः ॥ तथाचपाद्मे ॥ मधुपर्केगवालंभोलोकाविद्विष्टएवच ॥ सचनैवप्रकर्तव्योयतःसानियतोनहीति ॥ १९ ॥तत्रधर्मस्यावश्यकर्त

सर्वधर्मवरिष्ठोऽयमाचारःपरमंतपः ॥ तदेवज्ञानमुद्दिष्टंतेनसर्वंप्रसाध्यते ॥१४॥ यस्त्वाचारविहीनोऽत्रवर्ततेद्विजसत्तमः॥ सशूद्रवद्बहिष्कार्यो यथाशूद्रस्तथैवसः ॥ १५ ॥ आचारोद्विविधःप्रोक्तःशास्त्रीयोलौकिकस्तथा ॥ उभावपिप्रकर्तव्यौनत्याज्यौशुभमिच्छता ॥ १६ ॥ ग्रामधर्माजातिधर्मादेशधर्माःकुलोद्भवाः ॥ परिग्राह्यानृभिःसर्वैर्नैवतांल्लंघयेन्मुने ॥ १७ ॥ दुराचारोहिपुरुषोलोकेभवतिनिंदितः ॥ दुःखभागीचसततंव्याधिनाव्याप्तएवच ॥ १८ ॥ परित्यजेदर्थकामौयौस्यातांधर्मवर्जितौ ॥ धर्ममप्यसुखोदर्कंलोकविद्विष्टमेवच ॥ १९ ॥ नारदउवाच ॥ बहुत्वादिहशास्त्राणांनिश्चयःस्यात्कथंमुने ॥ कियत्प्रमाणंतद्ब्रूहिधर्ममार्गविनिर्णये ॥ २० ॥ नारायणउवाच ॥ श्रुतिस्मृतीउभेनेत्रेपुराणंहृदयंस्मृतम् ॥ एतत्त्रयोक्तएवस्याद्धर्मोनान्यत्रकुत्रचित् ॥ २१ ॥ विरोधोयत्रतुभवेत्त्रयाणांचपरस्परम् ॥ श्रुतिस्तत्रप्रमाणंस्याद्द्वयोर्द्वैधेस्मृतिर्वरा ॥ ॥ २२ ॥ श्रुतिद्वैधंभवेद्यत्रतत्रधर्मावुभौस्मृतौ ॥ स्मृतिद्वैधंतुयत्रस्याद्विषयःकल्प्यतांपृथक् ॥ २३ ॥ पुराणेषुक्वचिच्चैवतंत्रदृष्टंयथातथम् ॥ धर्मंवदंतितंधर्मंगृह्णीयान्नकथंचन ॥ २४ ॥

व्यतायांप्रतिपादितायांशास्त्रकारैर्धर्मस्वरूपस्यानेकधाप्रतिपादनात्तन्निश्चयस्यासंभवेनकथंतन्निश्चयंविनाधर्मःकर्तव्यइतिपृच्छति । नारदउवाच बहुत्वादिहेति ॥ अनेकशास्त्रेषुधर्ममार्गविनिर्णयेधर्मनिश्चयेकिंशास्त्रंप्रमाणंतद्ब्रूहीत्यर्थः ॥ २० ॥ उभेनेत्रेपरमेश्वरस्येत्यर्थः ॥ चक्षुर्वैसत्यामितिश्रुतेः ॥ परमेश्वरेणश्रुतिस्मृतिरूपचक्षुर्भ्यांदृष्टोधर्मःसत्यः॥ चक्षुषादृष्टमेवमनसिनिश्चिनोतीतिपुराणरूपहृदयेनिश्चितोधर्मोऽपिसत्यइत्यर्थः ॥२१ ॥ ननुत्रयाणामपियत्रकुत्रचित्तप्तमुद्रादिविधौविरोधोदृश्यतेतत्रकिंवरमितिचेत्तत्राऽऽह । विरोधोयत्रत्विति ॥श्रुतिस्तत्रेति ॥ स्मृतिपुराणापेक्षयाश्रुतिःप्रबलेत्यर्थः ॥द्वयोरिति॥ पुराणस्मृत्योःपरस्परंविरोधइत्यर्थः॥स्मृतिर्वरेति । पुराणापेक्षयास्मृतेर्वेदमूलकत्वात्प्रामाण्यमित्यर्थः ॥२२॥ श्रुतिद्वैधंषोडशीग्रहणाग्रहणादिषुधर्मावुभौनतत्रपरस्परंबाधः ॥ किंतुधर्मद्वयमपिसत्यमित्यर्थः॥विषयःकल्प्यतामिति॥भिन्नविषयकल्पनयाविरोधःपरिहरणीयइत्यर्थः ॥२३॥ ननुयथास्मृतीनांवेदमूलकत्वात्प्रामाण्यंतथापुराणानामपिवेदमूलकत्वादेवप्रामाण्यंस्मृतिसमानमेवकिंनस्यादतआह।पुराणेष्विति॥नकेवलंपुराणानिवेदमूलकानिकिंतुतंत्रमूलकान्यपिसंति ॥तथाचपुराणापेक्षयाकेवलवेदमूलकत्वात्स्मृतीनांप्राबल्यमुक्तमव्याहतमेव॥तदुक्तंस्कांदेसूतसंहितायाम्॥क्वचित्कदाचित्तत्रार्थकटाक्षेणमुनीश्वराः॥संतितानिपुराणानिसोंशोग्राह्योनवैदिकैरिति ॥२४॥

ननुतंत्राणामपिसाक्षादीश्वरप्रणीतत्वात्प्रामाण्यम् । तथाचतन्मूलकपुराणानामपिप्रमाण्यंकिंनस्यात्तत्राऽऽह । वेदाविरोधीति ॥ देहवताशिवेनप्रणीतस्याऽऽगमस्यनस्वतःप्रामाण्यंकिंतुवे
दमूलकत्वादेव ॥ तथाचब्राह्मणस्यप्रत्यक्षश्रुतिविरुद्धतप्तमुद्राधारणादिप्रतिपादकतंत्रस्यनप्रामाण्यंकिंतुवेदाविरोध्यंशेएवप्रामाण्यमितिभावः ॥ श्रुतिरुद्धंश्रुतिविरुद्धमित्यर्थः॥ तत्प्रमा
णंभवेन्नचेति ॥ वैदिकस्येतिशेषः ॥ तथाचतंत्रार्थप्रतिपादकपुराणस्यप्रत्यक्षश्रुतिविरोधान्नप्रामाण्यमितिभावः ॥ तदुक्तंशिवेनैवमहाकालसंहितादिषु ॥ वेदाविरोधीयोंशस्तुसैवग्रा
ह्योद्विजोत्तमैः ॥ अधिकारिबहुत्वाच्चाप्यनेकार्थःप्रकथ्यते ॥ अनेकाधिकारिणउद्दिश्यतंत्रंविधीयते । तथाचयस्ययत्राधिकारस्तत्तेनग्राह्यमितितदर्थः ॥ ब्राह्मणविषयकतप्तमुद्राधारणा
दिप्रतिपादकतंत्राणांवेदानधिकारिब्राह्मणमितितुरहस्यम् ॥ अनेनचाधिकारिभेदेनसर्वेषांतंत्राणांप्रामाण्यंसमर्थितम् ॥ तथाचसूतसंहितायाम् ॥ तंत्रंप्रकृत्य अधिकारिविभेदेनप्रमा
णंनात्रसंशयः ॥ मृषावादीकथंशिवइतिच ॥ तथाचतंत्राणामपिस्मृतिष्वेवांतर्भावाद्धर्मप्रतिपादकचतुर्दशविद्यासुसंग्रहोऽस्तीतिबोध्यम् ॥२५॥ यस्मादेवंतस्मादाह । सर्वथावेदएवेति
॥२६॥२७॥२८॥॥२९॥तादृग्वेदविरुद्धाचरणवंतःकेतान्दर्शयति॥कामाचाराइति॥यथेष्टाचरणवंतइत्यर्थः॥लिंगधारिणइतिपाशुपताइत्यस्याविशेषणम् ॥३०॥ वैखानसमतानुगाइति

वेदाविरोधिचेत्तंत्रंतत्प्रमाणंनसंशयः ॥ प्रत्यक्षश्रुतिरुद्धंयत्तत्प्रमाणंभवेन्नच ॥ २५॥ सर्वथावेदएवासौधर्ममार्गप्रमाणकः ॥ तेनाविरुद्धंयत्किं
चित्तत्प्रमाणंनचान्यथा ॥ २६ ॥ योवेदधर्ममुज्झित्यवर्ततेऽन्यप्रमाणतः ॥ कुंडानितस्यशिक्षार्थंयमलोकेवसंतिहि ॥ २७ ॥ तस्मात्सर्वप्र
यत्नेनवेदोक्तंधर्ममाश्रयेत् ॥ स्मृतिःपुराणमन्यद्वातंत्रंवाशास्त्रमेवच ॥२८॥ तन्मूलत्वेप्रमाणंस्यान्नान्यथातुकदाचन ॥ येकुशास्त्राभियोगेन
वर्तयंतीहमानवान् ॥ २९ ॥ अधोमुखोर्ध्वपादास्तेयास्यंतिनरकार्णवम् ॥ कामाचाराःपाशुपतास्तथावैलिंगधारिणः ॥ ३० ॥ तप्तमुद्रांकि
तायेचवैखानसमतानुगाः ॥ तेसर्वेनिरयंयांतिवेदमार्गबहिष्कृताः ॥ ३१ ॥ वेदोक्तमेवसद्धर्मंतस्मात्कुर्यान्नरःसदा ॥ उत्थायोत्थायबोद्धव्यं
किंमयाऽद्यकृतंकृतम् ॥ ३२ ॥ दत्तंवादापितंवापिवाक्येनापिचभाषितम् ॥ उपपापेषुसर्वेषुपातकेषुमहत्स्वपि ॥ ३३ ॥ अवाप्यरजनीयामं
ब्रह्मध्यानंसमाचरेत् ॥ ऊरुस्थोत्तानचरणःसव्येचोरौतथोत्तरम् ॥ ३४ ॥ उत्तानंकिंचिदुत्तानंमुखमवष्टभ्यचोरसा ॥ निमीलिताक्षःसत्त्व
स्थोदंतैर्दंतान्नसंस्पृशेत् ॥३५॥तालुस्थाचलजिह्वश्चसंवृतास्यःसुनिश्चलः ॥ सन्निरुद्धेंद्रियग्रामोनातिनिम्नस्थितासनः ॥ ३६ ॥ द्विगुणंत्रिगुणं
वापिप्राणायाममुपक्रमेत् ॥ ततोध्येयःस्थितोयोऽसौहृदयेदीपवत्प्रभुः ॥ ३७ ॥

तप्तमुद्रांकिता इत्यस्यविशेषणम् ॥३१॥ उत्थायोत्थायेतिप्रतिदिनमितिशेषः ॥ कृतंसुकृतंकिंमयाऽद्यकृतमित्यन्वयः ॥३२॥ किमित्यस्यदत्तादिष्वन्वयः ॥ महत्स्वपिपातकेषुकिंमया
पातकंकृतमितिविचार्यमितिभावः ॥३३॥ अथाह्निकमाह । अवाप्येति ॥ यामंचतुर्थम् ॥ तत्रध्यानमुद्रामाह । ऊरुस्थोत्तानचरणइति ॥ ऊरुस्थउत्तानचरणोयस्येत्यर्थः ॥ कस्मिन्नरौ
कोवाउत्तानचरणस्तत्राऽऽह । सव्येचोराविति॥ अत्रसव्यशब्देनसव्यंदक्षिणवामयोरितिकोशाद्वामो गृह्यते । तस्मिन्सव्येवामोरौइतरंदक्षिणंपादमुत्तानंविन्यस्येत्यर्थः॥तथाचवीरासनं
सिद्धम् ॥ अग्रिमश्लोकस्थमुत्तानपदंपूर्वान्वयि ॥३४॥ किंचिदुच्चानंमुखंपृष्ठभागेकृत्वातन्मुखमुरसाऽवष्टभ्यहनुनाउरस्थलंस्पृशेदित्यर्थः ॥३५॥ तालुस्थेति ॥ जिह्वांपरावृत्यतच्छिद्रद्वा
रातालुनिनयेदित्यर्थः ॥ संवृतास्योऽविवृतास्यः ॥ नातिनिम्नेति ॥ चैलाजिनकुशोत्तरेआसनेआसीनइत्यर्थः ॥३६॥ प्रथमंप्राणायामंकृत्वापश्चादियंमुद्राकर्तव्या । तंप्राणायाममाह ।
द्विगुणमिति ॥ मुद्राबंधनोत्तरंप्राणायामस्यासंभवात्प्रथमतःप्राणायामंकृत्वामुद्राबंधःकर्तव्यस्ततोदेवोध्येयस्तदाह । ततोध्येयइति ॥ दीपवत्स्वप्रकाशइत्यर्थः । प्रभुरात्मा ॥ ३७ ॥

तस्मिन्नात्मनिकिंचिद्धारणमाह ॥ धारयेदिति ॥ आत्मानमंतःकरणम् ॥ इत्थंधारणांधारयेदित्यर्थः ॥ उक्तप्राणायाममुत्तमादिभेदेनषड्विधंवर्णयति । सधूमइति ॥ सधूमःश्वाससं
युक्तइतिलक्षणात्प्राणायामेप्रथमतोऽभ्यसनीयेझटितिप्राणउपरिआयातिसप्राणायामोऽतिलघुः ॥ पुनरतिशयाभ्यासेनसवायुरूर्ध्वमायातिसप्राणायामः पूर्वापेक्षयाश्रेष्ठः ॥ इमौद्वौकनि
ष्ठावेव ॥ चित्तव्याकुलतायाःसत्त्वात् ॥ पुनरतिशयाभ्यासेनचित्तेस्थिरीभूतेसतियःप्राणायामोभवतिसमध्यमः ॥ सोऽपिद्विविधः ॥ सगर्भोमंत्रजपसहितोऽगर्भस्तद्रहितः ॥ ३८ ॥
पुनरतिशयाभ्यासेनचित्तेस्थिरीभूतेसतियःप्राणायामःसउत्तमः ॥ सोऽपिद्विविधः ॥ सलक्ष्योलक्ष्यंदेवतातद्ध्यानसहितोऽलक्ष्योध्यानरहितइत्यर्थः ॥ प्राणायामेति । प्राणायामसमो
योगःप्राणायामएवनान्यइत्यर्थः ॥ ३९॥ रेचकादिभेदेनप्राणायामत्रैविध्यमाह ॥ प्राणायामइति ॥ रेचकादिषुक्रमेणप्रणववर्णत्रयंध्येयमित्याह ॥ वर्णत्रयात्मकाइति ॥४०॥ सएवप्र
सिद्धःपरमात्मैवप्रणवःप्रोक्तस्तदात्मकत्वादतःप्राणायामोऽपिवर्णत्रयात्मकत्वात्परमात्मरूपएवज्ञेयइतिप्राणायामेश्रद्धांवर्धयति ॥ प्राणायामप्रकारमाह । इडयेति ॥ इडावामे
स्थितानाडीपिंगलादक्षिणेमेतेतिवचनाद्वामनासापुटेनद्वात्रिंशद्वारमकारमावृत्त्यवायुमारोप्याकृष्यपूरयित्वाताद्दशंपूरकंकृत्वापश्चाच्चतुःषष्टिवारमुकारमावर्तयन्नेवोदरेस्थितं कृत्वाकुंभकं
कृत्वापुनर्दक्षिणनासापुटेनषोडशवारंमकारमावर्तयन्नेवरेचयेत्तंवायुमित्यर्थः ॥ ४१ ॥ अन्येति ॥ पिंगलयेत्यर्थः ॥ तदुक्तं द्वात्रिंशताचतुःषष्ट्याक्रमात्षोडशसंख्ययेति । इत्थंप्रथमं
सधूमंप्राणायाममुपसंहरति । एवमिति ॥ एवमेवाधिकाभ्यासेनमध्यमोत्तमावपिकर्तव्यावित्यर्थादुक्तंभवति ॥ ४२ ॥ इत्थंप्राणायामेकृतेपश्चात्षट्चक्रभेदनक्रमेणकुंडलिनींब्रह्मरंध्रेनी

धारयेत्तत्रचाऽऽत्मानंधारणांधारयेद्बुधः ॥ सधूमश्चविधूमश्चसगर्भश्चाप्यगर्भकः ॥३८ ॥ सलक्ष्यश्चाप्यलक्ष्यश्चप्राणायामस्तुषड्विधः ॥ प्राणा
यामसमोयोगःप्राणायामइतीरितः ॥ ३९ ॥ प्राणायामइतिप्रोक्तोरेचपूरककुंभकैः ॥ वर्णत्रयात्मकाह्येतेरेचपूरककुंभकाः ॥ ४० ॥ सएवप्रण
वःप्रोक्तःप्राणायामश्चतन्मयः ॥ इडयावायुमारोप्यपूरयित्वोदरेस्थितम् ॥४१॥ शनैःषोडशमात्राभिरन्ययातंविरेचयेत् ॥ एवंसधूमःप्राणाना
मायामःकथितोमुने ॥ ४२ ॥ आधारेलिंगनाभिप्रकटितहृदयेतालुमूलेललाटेद्वेपत्रेषोडशारेद्विदशदशदलद्वादशार्धेचतुष्के ॥ वासांतेबालम
ध्येडफकठसहितेकंठदेशेस्वराणांहंक्षंतत्त्वार्थयुक्तंसकलदलगतंवर्णरूपंनमामि ॥ ४३ ॥

त्वाहृदयेपूर्वोक्तंनिर्वातदीपसमानमात्मानंध्यायेदितियोगमर्यादा । तदभिप्रायेणषट्चक्रस्वरूपमाह ॥ आधारेइति ॥ आधारोमूलाधारःतालुमूलंकंठःललाटंभ्रूमध्यम् ॥ लिंगंचना
भिश्चप्रकटितहृदयंचेतिसमाहारद्वंद्वेप्राण्यंगत्वादेकवद्भावः ॥ तथाचस्थानत्रयंविवक्षितम् ॥ इत्थंषट्चक्राणांषट्स्थानान्युक्त्वातेषांपत्रसंख्यांव्युत्क्रमेणाऽऽह । द्वेपत्रेइति । द्वेपत्रे
यस्यतद्विपत्रंद्विपत्रमेवद्वैपत्रम् । तथाचयोग्यत्वाल्ललाटेविद्यमानंयद्द्विपत्रंकमलंतस्मिन्विद्यमानंयत्तत्त्वार्थयुक्तंतत्त्वार्थवाचकंहंक्षंवर्णरूपंतंनमामीत्यर्थः ॥ एवमेवसर्वत्रान्वयःकर्त
व्यः ॥ षोडशारेअरापत्रम् । तथाचतालुमूलेकंठदेशेविद्यमानस्वराणांवर्णरूपंनमामीत्यर्थः ॥ तथाऽऽधारेविद्यमानेचतुष्केचतुष्पत्रयुक्तेकमले ॥ कथंभूतेवासांते ॥ वासांतशब्दोऽ
र्शआद्यजंतः ॥ वेत्यकारउच्चारणार्थः ॥ वसांतमेववासांतम् ॥ वसांतशब्देवशब्दोवादिपरस्तथाचवकारादिसकारांतवर्णचतुष्कयुक्तेइत्यर्थः ॥ तस्मिन्विद्यमानंयद्वर्णरूपं
तन्नमामीत्यर्थः ॥ अथवालमध्येडफकठसहितेइत्यस्यसमुदायस्यलिंगनाभिप्रकटितहृदयेद्विदशदशदलद्वादशार्धेइतिसमुदायेनान्वयः ॥ पश्चात्पार्ष्णिकोयथायोग्यमन्वयः ॥ आद्यंतौ
टाकितौजलपृथिव्योःस्नेहगंधावितिवत् ॥ तथाचलिंगेविद्यमानेद्वादशार्धेषड्दलकमलेबालमध्येआकारउच्चारणार्थः ॥ वकारादिलकारांतयुक्तेविद्यमानंयद्वर्णरूपंतन्नमामी
त्यर्थः ॥ तथानाभौविद्यमानेदशदलकमलेडफसहितेडकारादिफकारांतदशवर्णयुक्तेविद्यमानंवर्णरूपंनमामीत्यर्थः ॥ तथाप्रकटितहृदयेविद्यमानेद्विदशदलेद्वादशदलकठस
हितेककारादिठकारांतद्वादशवर्णसहितेविद्यमानंयद्वर्णरूपंतन्नमामीत्यर्थः ॥ अयंभावः ॥ मूलाधारलिंगनाभिहृदयकंठभ्रूमध्येषुचतुर्दलषड्दलदशदलद्वादशदलषोड

शदलद्विदलानिभावयित्वातेषुकमलपत्रेषुप्रादक्षिण्येनपूर्वोक्तान् वर्णान् भावयित्वानमेदिति ॥ इदंसर्वंतंत्रविदांस्पष्टम् ॥ एतानिषट्कमलानितद्गतावर्णाश्चसप्तमस्कंधेदेवीगीतायां स्पष्टाः ॥ ४३ ॥ एवंषट्चक्रभावनोत्तरंकुंडलिनींध्यायेदित्याह । अरुणकमलेति । अरुणकमलंमूलाधारस्थंचतुर्दलकमलंतत्रसंस्थितारजःपुंजवर्णारजोगुणवतीत्यर्थः ॥ हरनियमित चिह्नामायाबीजावयवहकाररेफरूपंनियमितंचिह्नंयस्यांसामायाबीजवाच्येत्यर्थः ॥ पद्मतंतुर्बिसतंतुस्तत्स्वरूपासूक्ष्माविश्वमिश्रबिंदुःहुतवहोरक्तबिंदुःराकानायकश्चंद्रःश्वेतबिंदुस्त द्रूपमास्यंस्तनयुग्मंचतेनाढ्यायुक्ता ॥ तत्ररविबिंदुर्मुखमितरद्बिंदुद्वयंस्तनयुग्ममितिविवेकः ॥ इदंबिंदुत्रयंरहस्याम्नायेप्रकाशविमर्शसंवादेविस्तरेणनिर्णीतंततएवावधार्यम् ॥ अतिरह स्यत्वादत्रनस्पष्टीक्रियते ॥ तदुक्तम् मिहिरबिंदुमुखींतदधोल्लसच्छशिहुताशनबिंदुयुगस्तनीम् ॥ सहहरार्धकलारसनास्पदांभजतसत्यमिमांपरदेवतामिति ॥ अयमर्थोगुरुमुखादेवा वगंतव्यः ॥ एवंसकृदपिध्यानेनसाक्षात्कृतेजीवन्मुक्तएवभवतीत्याह । सकृदपीति ॥ ४४ ॥ इत्थंदेवींकुंडलिनींध्यात्वास्वहृदयेतयासहाऽऽत्मरूपिणींश्रीभगवतींध्यात्वाऽग्रेजायमानं सर्वंकर्मत्वदर्चनस्थानीयमेवममभवत्वितिदेवींप्रार्थयेदित्याह । स्थितिःसैवेति ॥ ४५ ॥ अनंतरमात्मानंदेवीरूपत्वेनकृतार्थंजानीयादित्याह ॥ अहंदेवीति ॥ ४६ ॥ पुनरपिहर्षगद्गद

अरुणकमलसंस्थातद्रजःपुंजवर्णाहरनियमितचिह्नापद्मतंतुस्वरूपा ॥ रविहुतवहराकानायकास्यस्तनाढ्यासकृदपियदिचित्तेसंवसेत्स्यात्स मुक्तः ॥ ४४ ॥ स्थितिःसैवागतिर्यात्रामतिश्चिंतास्तुतिर्वचः ॥ अहंसर्वात्मकोदेवस्तुतिःसर्वंत्वदर्चनम् ॥ ४५ ॥ अहंदेवीनचान्योऽस्मिब्रह्मै वाहंनशोकभाक् ॥ सच्चिदानंदरूपोऽहंस्वात्मानमितिचिंतयेत् ॥ ४६ ॥ प्रकाशमानांप्रथमेप्रयाणेप्रतिप्रयाणेप्यमृतायमानाम् ॥ अंतःपद व्यामनुसंचरंतीमानंदरूपामबलांप्रपद्ये ॥ ४७ ॥ ततोनिजब्रह्मरंध्रेध्यायेत्तंगुरुमीश्वरम् ॥ उपचारैर्मानसैश्चपूजयेत्तंयथाविधि ॥ ४८ ॥ स्तुवी ताऽनेनमंत्रेणसाधकोनियतात्मवान् ॥ गुरुर्ब्रह्मागुरुर्विष्णुर्गुरुर्देवोमहेश्वरः ॥ गुरुरेवपरंब्रह्मतस्मैश्रीगुरवेनमः ॥४९॥ इतिश्रीदेवीभा०म०एका दशस्कन्धेप्रातश्चिंतनंनामप्रथमोऽध्यायः ॥ १ ॥

॥ श्रीनारायणउवाच ॥ आचारहीनंनपुनन्तिवेदायद्यप्यधीताःसहषड्भिरंगैः ॥ छंदां स्येनंमृत्युकालेत्यजंतिनीडंशकुंताइवजातपक्षाः ॥ १ ॥ ब्राह्मेमुहूर्तेचोत्थायतत्सर्वंसम्यगाचरेत् ॥ रात्रेरंतिमयामेतुवेदाभ्यासंचरेद्बुधः ॥२॥ किंचित्कालंततःकुर्यादिष्टदेवानुचिंतनम् ॥ योगीतुपूर्वमार्गेणब्रह्मध्यानंसमाचरेत् ॥ ३ ॥

चेतसादेवींकुंडलिनींभावयेदित्याह । प्रकाशमानामिति ॥ प्रकाशमानांप्रथमेप्रयाणेब्रह्मरंध्रस्थानंप्रतिगमनेप्रकाशमानांविद्युदिवद्योतमानाम् ॥ प्रतिप्रयाणेपुनर्मूलाधारंप्रतिप्रत्यागमने अमृतायमानाममृतलुलिताम् ॥ ब्रह्मरंध्रस्थामृतधारालुलितामित्यर्थः ॥ अतःपदव्यांसुषुम्नायामनुसंचरंतींगच्छंतीमबलांकुंडलिनींशरणंप्रपद्येइत्यर्थः ॥ ४७ ॥ इत्थमात्मानंध्यात्वा गुरुंध्यायेदित्याह । ततोनिजेति ॥ मानसैर्मनसाकल्पितैः ॥ ४८ ॥ ४९ ॥ इतिश्रीदेवीभागवततिलकेएकादशस्कंधेप्रथमोऽध्यायः ॥ १ ॥ द्व्याधिकैश्चैवचत्वारिंशत्पद्यैस्तुततःपरम्॥ प्रातःकृत्योत्तरंसम्यक्शौचादिविधिरुच्यते ॥ १ ॥ तत्रप्रथमतआचाराभावेसर्वंव्यर्थंभवतीत्याह। आचारहीनमिति । नीडंगृहम् ॥ तस्मादाचारोवक्ष्यमाणोऽवश्यंकर्तव्यइत्यर्थः॥ १॥ कस्मात्कालादारभ्यसदाचारःकर्तव्यस्तदाह । ब्राह्मेमुहूर्तइति ॥ उत्थायततःप्रभृतीत्यर्थः ॥ कोऽसौब्राह्मोमुहूर्तस्तत्राऽऽह । रात्रेरंतिमयामइति ॥ चतुर्थयामेउत्थायमुखप्रक्षालना दिकंकृत्वेत्यर्थाद्बोध्यम् ॥ २ ॥ वेदाभ्यासमर्यादामाह । किंचित्कालमिति ॥ रात्रिपश्चिमयामतृतीयमुहूर्तपर्यंतमित्यर्थः ॥ तदुक्तंवायुपुराणे 'रात्रेःपश्चिमयामेतुषटिकाषट्कमेवहि ॥ वेदाभ्यासंद्विजःकुर्यात्सावेलापाठदायिनीति ॥' योगीत्विति ॥ तस्यवेदपाठाभावात्पूर्वमार्गेणपूर्वोक्तप्रकारेणब्रह्मध्यानमेवतावद्घटिकाषट्कपर्यंतंकुर्यादित्यर्थः ॥ ३ ॥

॥४॥ अग्रिमश्लोकोक्तप्रातःशब्दार्थंकथयति । पंचपंचेति ॥ पंचपंचाशद्घटिकोत्तरमुषःकालः ॥ सप्तपंचाशद्घटिकोत्तरमरुणोदयसंज्ञकःकालः॥ अष्टपंचाशद्घटिकायांप्रातःकालः॥३॥ शेषःसूर्योदयसंज्ञकइत्यर्थः ॥ ५ ॥ प्रातःपदार्थमुक्त्वातास्मिन्कर्तव्यमाह । प्रातरिति ॥ यःकुर्यात्सनैर्ऋत्यांदिशिभुवःशयनस्थानादिषुविक्षेपपरिमितमधिकंवादेशमतीत्यकुर्यादित्यर्थः। इदंदूरदेशमात्रस्योपलक्षणम् ॥ तथाचमनुःदूरादावसथान्मूत्रंदूरात्पादावसेचनमिति । नैर्ऋत्यामित्युपलक्षणंदक्षिणस्याः ॥ तथाचापस्तंबः॥ दक्षिणांदिशंदक्षिणांपरांवेति ॥ ६ ॥ प्रथमेआश्रमेब्रह्मचर्याश्रमेकर्णस्थंयज्ञसूत्रंकुर्यादित्यर्थः ॥ निवीतमिति ॥ यज्ञोपवीतंनिवीतंकृत्वापृष्ठतोलंबयेदित्यर्थः ॥ ७ ॥ तदेवस्पष्टयति । कृत्वायज्ञोपवीतमिति ॥ यज्ञोपवीतंपूर्ववचनान्निवीतरूपम् ॥ गृहीतिवानप्रस्थस्योपलक्षणम् ॥ ८ ॥ श्वासवर्जितोऽधिकश्वासवर्जितोधावन्शौचंनकुर्यादित्यर्थः ॥ ९ ॥ वल्मीकेसर्पस्थाने ॥ नशाद्वलेनहरिततृणे ॥ २० ॥

जीवब्रह्मैक्यतायेनजायतेतुनिरंतरम् ॥ जीवन्मुक्तश्चभवतितत्क्षणादेवनारद ॥ ४ ॥ पंचपंचउषःकालःसप्तपंचाऽरुणोदयः ॥ अष्टपंचभवेत्प्रातःशेषःसूर्योदयःस्मृतः ॥५॥ प्रातरुत्थाययःकुर्याद्विण्मूत्रंद्विजसत्तमः ॥ नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकंभुवः ॥६॥ विण्मूत्रेपिचकर्णस्थआश्रमेप्रथमेद्विजः ॥निवीतंपृष्ठतःकुर्याद्वानप्रस्थगृहस्थयोः ॥ ७ ॥ कृत्वायज्ञोपवीतंतुपृष्ठतःकंठलंबितम् ॥ विण्मूत्रंतुगृहीकुर्यात्कर्णस्थंप्रथमाश्रमी ॥ ८ ॥ अंतर्धायतृणैर्भूमिंशिरःप्रावृत्यवाससा ॥ वाचंनियम्ययत्नेनष्ठीवनश्वासवर्जितः ॥९॥ नफालकृष्टेनजलेनचितायांनपर्वते ॥ जीर्णदेवालयेकुर्यान्नवल्मीकेनशाद्वले ॥ १० ॥ नससत्त्वेषुगर्तेषुनगच्छन्नपथिस्थितः ॥ संध्ययोरुभयोर्जप्येभोजनेदंतधावने ॥ ११ ॥ पितृकार्येचदैवेचतथामूत्रपुरीषयोः॥उत्सारेमैथुनेवापितथावैगुरुसन्निधौ ॥ १२ ॥ यागेदानेब्रह्मयज्ञेद्विजोमौनंसमाचरेत् ॥ देवताऋषयःसर्वेपिशाचोरगराक्षसाः ॥ १३ ॥ इतोगच्छंतुभूतानिबहिर्भूमिंकरोम्यहम् ॥ इतिसंप्रार्थ्यपश्चात्तुकुर्याच्छौचंयथाविधि ॥ १४ ॥ वाय्वग्नीविप्रमादित्यमापःपश्यंस्तथैवगाः ॥ नकदाचनकुर्वीतविण्मूत्रस्यविसर्जनम् ॥ १५ ॥ उदङ्मुखोदिवाकुर्याद्रात्रौचेद्दक्षिणामुखः ॥ ततआच्छाद्यविण्मूत्रंलोष्टपर्णतृणादिभिः ॥ १६ ॥ गृहीतलिंगउत्थायसगच्छेद्वारिसन्निधौ ॥ पात्रेजलंगृहीत्वातुगच्छेदन्यत्रचैवहि ॥ १७ ॥ गृहीत्वामृत्तिकांकूलाच्छ्वेतांब्राह्मणसत्तमः ॥ रक्तांपीतांतथाकृष्णांगृह्णीयुश्चान्यवर्णकाः ॥१८॥ अथवायायत्रदेशेसैवग्राह्याद्विजोत्तमैः ॥ अंतर्जलादेवगृहाद्वल्मीकान्मूषकोत्कराात् ॥ १९ ॥ कृतशौचावशिष्टाश्चनग्राह्याःसप्तमृत्तिकाः ॥ मूत्रात्तुद्विगुणंशौचेमैथुनेत्रिगुणंस्मृतम् ॥ २० ॥ एकालिंगेकरेतिस्रउभयोर्मृद्द्वयंस्मृतम् ॥ मूत्रशौचंसमाख्यातंशौचेतद्द्विगुणंस्मृतम् ॥ २१ ॥

ससत्त्वेषुजीवसहितेषुगर्तेषु ॥ नपथिस्थितःलोकगंतव्यमार्गेस्थितोनकुर्यादित्यर्थः ॥ शौचादिसमयेमौनमाह । संध्ययोरिति ॥ जप्येजपकर्मणि ॥ ११ ॥ १२ ॥ तत्रशौचसमयेऽयंमंत्रः पठनीयइत्याह । देवताऋषयइति ॥ १३ ॥ १४ ॥ १५ ॥ तृणादिभिरित्यत्रादिनाखर्परादिना सूर्यकिरणस्पर्शाभावार्थमाच्छादनम् ॥ १६ ॥ अन्यत्रजलदूरदेशे ॥ १७ ॥ अन्यवर्णकाःक्षत्रियवैश्यशूद्राः ॥ १८ ॥ श्वेतादिमृत्तिकाभावेआह । अथवेति ॥ अग्राह्यमृत्तिकाआह । अंतर्जलादिति ॥ १९ ॥ २० ॥ मूत्रशौचज्ञानार्थमाह । एकालिंगइति ॥ एकाएकवारमित्यर्थः ॥ तिस्रःत्रिवारंउभयोर्हस्तयोर्द्विवारम् ॥ २१ ॥

विट्शौचेमृत्तिकाविभागंस्पष्टमेवाऽऽह । विट्शौचेइति ॥ एकस्मिन्करेइत्यर्थः ॥ २२ ॥२३ ॥ २४ ॥ एकैकवारंग्राह्यमृत्तिकायाःप्रमाणमाह । आर्द्रामलकेति ॥ २५ ॥ २६ ॥ २७॥
गंधलेपनाशपर्यंतंमृत्तिकालेपनमर्यादेत्यत्रमनुसंमतिमाह । गंधलेपेति ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ प्रायश्चित्तमाह । जलाहारइति ॥ जापाद्गायत्र्याः ॥ ३२ ॥ ३३ ॥ ३४ ॥
क्षीरवृक्षाःअश्वत्थोदुंबरप्लक्षन्यग्रोधाः ॥ ३५ ॥ पूर्वार्धेअग्रभागेपाषाणेनकुंचितंकृत्वाग्राह्यमित्यर्थः ॥ ३६ ॥ दंतधावनेमंत्रमाह । अन्नाद्यायेति ॥३७ ॥ ३८ ॥ प्रतिषिद्धदिनेषुचेति:॥

विट्शौचेलिंगदेशेतुप्रदद्यान्मृत्तिकाद्वयम् ॥ पंचाऽपानेदशैकस्मिन्नुभयोःसप्तमृत्तिकाः ॥२२॥ वामपादंपुरस्कृत्यपश्चाद्दक्षिणमेवच ॥ प्रत्येकं
चचतुर्वारंमृत्तिकांलापयेत्सुधीः ॥ २३ ॥ एवंशौचंगृहस्थस्यद्विगुणंब्रह्मचारिणः ॥ त्रिगुणंवानप्रस्थस्ययतीनांचचतुर्गुणम् ॥ २४॥ ॥ आर्द्राम
लकमानातुमृत्तिकाशौचकर्मणि ॥ प्रत्येकंतुसदाग्राह्यानातोन्यूनाकदाचन ॥ २५ ॥ एतद्दिवास्याद्विट्शौचंतदर्धंनिशिकीर्तितम् ॥ आतुर
स्यतदर्धंतुमार्गस्थस्यतदर्धकम् ॥ २६ ॥ स्त्रीशूद्राणामशक्तानांबालानांशौचकर्मणि ॥ यथागंधक्षयःस्याचुतथाकुर्यादसंख्यकम् ॥ २७ ॥
गंधलेपक्षयोयावत्तावच्छौचंविधीयते ॥ सर्वेषामेववर्णानामित्याहभगवान्मनुः ॥ २८ ॥ वामहस्तेनशौचंतुकुर्याद्वैदक्षिणेनन ॥ नाभेरधोवा
महस्तोनाभेरूर्ध्वंतुदक्षिणः ॥ २९ ॥ शौचकर्मणिविज्ञेयोनान्यथाद्विजपुंगवैः ॥ जलपात्रंनगृह्णीयाद्विण्मूत्रोत्सर्जनेबुधः ॥ ३० ॥ गृह्णीयाद्य
दिमोहेनप्रायश्चित्तंचरेत्ततः ॥ मोहाद्वाप्यथवाऽऽलस्यान्नकुर्याच्छौचमात्मनः ॥ ३१ ॥ जलाहारस्त्रिरात्रःस्यात्ततोजापाच्चशुध्यति ॥ देश
कालद्रव्यशक्तिस्वोपपत्तीश्चसर्वशः ॥३२॥ ज्ञात्वाशौचंप्रकर्तव्यमालस्यंनात्रधारयेत् ॥ पुरीषोत्सर्जनेकुर्याद्गंडूषान्द्वादशैवतु ॥ ३३ ॥ चतु
रोमूत्रविक्षेपेनातोन्यूनान्कदाचन ॥ अधोमुखंनरःकृत्वात्यजेत्तंवामतःशनैः ॥ ३४ ॥ आचम्यचततःकुर्याद्दंतधावनमादरात् ॥ कंटकिक्षीर
वृक्षोत्थंद्वादशांगुलमव्रणम् ॥ ३५ ॥ कनिष्ठिकाग्रवत्स्थूलंपूर्वार्धेकृतकूर्चकम् ॥ करंजोदुंबरौचूतःकदंबोलोध्रचंपकौ ॥ बदरीतिद्रुमाश्चेतिप्रो
क्तादंतप्रधावने ॥ ३६ ॥ अन्नाद्यायव्यूहध्वंसेसोमोराजायमागमत् ॥ समेमुखंप्रक्षाल्यतेयशसाचभगेनच॥३७॥ आयुर्बलंयशोवर्चःप्रजाःपशु
वसूनिच ॥ ब्रह्मप्रज्ञांचमेधांचत्वन्नोदेहिवनस्पते ॥ ३८ ॥ अभावेदंतकाष्ठस्यप्रतिषिद्धदिनेषुच ॥ अपांद्वादशगंडूषैर्विदध्याद्दंतधावनम् ॥
॥३९॥सविताभक्षितस्तेनस्वकुलंतेनघातितम् ॥ ४०॥ प्रतिपद्दर्शषष्ठीषुनवम्येकादशीरवौ ॥ दंतानांकाष्ठसंयोगाद्दहत्यासप्तमंकुलम् ॥४१॥

तानिदिनान्यग्रेवक्ष्यति ॥ ३९ ॥ सविताभक्षितइति ॥ अस्ययोदंतानांकाष्ठसंयोगंकरोतितेनेत्युत्तरेणान्वयः ॥ ४० ॥ दिनान्याह । प्रतिपद्दर्शेति ॥ तथाचव्यासः ॥ प्रतिपद्दर्शषष्ठी
षुनवम्यांचैवभारत ॥ दंतानांकाष्ठसंयोगोदहत्यासप्तमंकुलमिति ॥ एवमन्येऽपिकालाग्रंथांतरादवसेयाः ॥ ४१ ॥

दंतधावनोत्तरमाचमनमाह । कृत्वालमिति ॥ त्रिःपिबेत्केशवादित्रिनामभिः॥ द्विर्विमृज्यवचनांतरानुमत्याआस्यमित्यर्थः॥ यद्यपिवचनांतरादास्यस्यैकवारमेवोन्मार्जनंतथापिओष्ठो न्मार्जनस्यापिवचनांतरप्राप्तत्वेनतस्मिन्कृतेमुखस्यद्विरुन्मार्जनंजातमेवेत्यभिप्रायेणेयमुक्तिः ॥ अनंतरमंगुष्ठवत्यातर्जन्यांगुष्ठयुक्तयातर्जन्यानासिकारंध्रयुग्मंसजलंयथास्यात्तथाऽभिमृ शेत्स्पृशेदित्यर्थः ॥ अनंतरमंगुष्ठानामिकाभ्यांनयनयुगयुतंकर्णयुग्मंनयनयुगंकर्णयुगंचाभिमृशेत्स्पृशेत् ॥ अनंतरंकनिष्ठांगुष्ठाभ्यांनाभिदेशेस्पृशेत् ॥ अत्रतलेनहस्ततलेनहृदयंस्पृशेत् ॥ अनंतरंसर्वाभिरंगुलीभिःशिरस्यभिमृशेदिति ॥ तथाचयाज्ञवल्क्यः ॥ अंतर्जानुःशुचौदेशेउपविष्टउदङ्मुखः ॥ प्राग्वाब्राह्मेणतीर्थेनद्विजोनित्यमुपस्पृशेत् ॥ त्रिःप्राश्यापोद्विरुन्मज्य खान्यद्भिःसमुपस्पृशेदिति ॥ ४२ ॥ इतिश्रीदेवीभागवततिलकेएकादशस्कंधेद्वितीयोध्यायः ॥ २ ॥ सप्तत्रिंशन्महापद्यैःस्नानादिविधिपूर्वकम् ॥ रुद्राक्षधारणस्यापिमहिमाऽतीवक

कृत्वाऽलंपादशौचंह्यमलमथजलंत्रिःपिबेद्विर्विमृज्यतर्जन्यांगुष्ठवत्यासजलमभिमृशेन्नासिकारंध्रयुग्मम् ॥ अंगुष्ठानामिकाभ्यांनयनयुगयुतंकर्ण युग्मंकनिष्ठांगुष्ठाभ्यांनाभिदेशेहृदयमथतलेनांगुलीभिःशिरांसि ॥ ४२ ॥ इतिश्रीदे॰म॰ए॰द्वितीयोध्यायः ॥ २ ॥ श्रीनारायणउवाच ॥ "शुद्धंस्मार्तंचाचमनंपौराणंवैदिकंतथा॥ तांत्रिकंश्रौतमित्याहुःषड्विधंश्रुतिचोदितम् ॥ विण्मूत्रादिकशौचंचशुद्धंचपरिकीर्तितम् ॥ स्मार्तपौरा णिकंकर्मआचांतेविधिपूर्वकम् ॥ वैदिकंश्रौत्रमित्यादिब्रह्मयज्ञादिपूर्वकम् ॥ अस्त्रविद्यादिकंकर्मतांत्रिकोविधिरुच्यते ॥" स्मृत्वाचोंकारगाय त्रींनिबध्नीयाच्छिखांतथा ॥ पुनराचम्यहृदयंबाहूस्कंधौचसंस्पृशेत् ॥ १ ॥ क्षुतेनिष्ठीवनेचैवदंतोच्छिष्टेतथाऽनृते ॥ पतितानांचसंभाषेद क्षिणंश्रवणंस्पृशेत् ॥ २ ॥ अग्निरापश्चवेदाश्चसोमःसूर्योऽनिलस्तथा ॥ सर्वेनारदविप्रस्यकर्णेतिष्ठन्तिदक्षिणे ॥ ३ ॥ ततस्तुगत्वानद्यादौप्रा तःस्नानंविशोधनम् ॥ समाचरेन्मुनिश्रेष्ठदेहसंशुद्धिहेतवे ॥ ४ ॥ अत्यंतमलिनोदेहोनवद्वारैर्मलंवहन् ॥ सदाऽऽस्तेतच्छोधनायप्रातःस्नानंवि धीयते ॥ ५ ॥ अगम्यागमनात्पापंयच्चपापंप्रतिग्रहात् ॥ रहस्याचरितंपापंमुच्यतेस्नानकर्मणा ॥ ६ ॥ अस्नातस्यक्रियाःसर्वाभवंतिविफला यतः ॥ तस्मात्प्रातश्चरेत्स्नानंनित्यमेवदिनेदिने ॥ ७ ॥ दर्भयुक्तश्चरेत्स्नानंतथासंध्याभिवंदनम् ॥ सप्ताहंप्रातरस्नायीसंध्याहीनस्त्रिभिर्दिनैः ॥ ॥ ८ ॥ द्वादशाहमनग्निःसन्द्विजःशूद्रत्वमाप्नुयात् ॥ अल्पत्वाद्धोमकालस्यबहुत्वात्स्नानकर्मणः॥९॥प्रातर्नतुतथास्नायाद्धोमकालेविगर्हितः॥ गायत्र्यास्तुपरंनास्तिइहलोकेपरत्रच ॥ १० ॥ गायंतंत्रायतेयस्माद्गायत्रीत्यभिधीयते ॥ प्रणवेनतुसंयुक्तांव्याहृतित्रयसंयुताम् ॥ ११ ॥

थ्यते ॥ १ ॥ आचमनोत्तरंशिखाबंधमाह । स्मृत्वेति ॥ ओंकारयुक्तांगायत्रीमित्यर्थः ॥ तदुक्तंवायुपुराणे ॥ ओंकारयुक्तगायत्रींसमुच्चार्यततोद्विजः ॥ शिखाबंधंप्रकुर्वीतयेनस्याद्धि ग्रबंधनमिति ॥ शिखाबंधनोत्तरंपुनराचमनमाह । पुनराचम्येति ॥ १ ॥ प्रसंगाच्छ्रौत्राचमनमाह ॥ क्षुतेनिष्ठीवनइति ॥ २ ॥ दक्षिणकर्णस्पर्शेहेतुमाह । अग्निरापइति ॥ ३ ॥ अनंतरंस्नानमाह । ततस्त्विति ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ स्नानादिविधेर्बाहुल्याद्धोमकालस्याल्पत्वात्तादृशस्नानविधिंकृत्वासंध्यादिविधिंकुर्वतोहोमकालोनैवमिलति ॥ तत्तस्मा त्प्रातःकालेतादृशविधिनास्नानंनैवकर्तव्यम् किंतुसंक्षेपेण ॥ स्नानविधिस्तुमध्याह्नस्नानेचरितार्थइत्याह ॥ अल्पत्वादिति ॥ ९ ॥ किंतुसामान्यस्नानोत्तरमेतादृशप्राणायामेनैवस्ना नविधिफलमायातीत्याह । गायत्र्यास्त्विति ॥ १० ॥ संयुतांपठन्निति शेषः ॥ ११ ॥

सप्ररोहाभिरिति ॥ प्ररोहोऽग्रंतत्सहिताभिःपलाशसमिद्भिरित्यर्थः ॥ अनुक्तेपलाशसमिधइतिविश्वामित्रकल्पेसामान्यपरिभाषणात् ॥४७॥४८॥ सप्ररोहाभिरितिक्षारवृक्षसमिधोविशेषणम् ॥ सुवर्णकुड्मलंहेमकमलम् ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ समूलफलपल्लवंसंपूर्णवृक्षमित्यर्थः ॥ ५४ ॥ यवागूंहुत्वेतिशेषः ॥५५॥५६॥५७॥५८॥५९॥६० ॥ ६१ ॥

सप्ररोहाभिरार्द्राभिरायुर्हुत्वासमाप्नुयात् ॥ समिद्भिःक्षीरवृक्षस्यहुत्वाऽऽयुषमवाप्नुयात् ॥ ४७ ॥ सप्ररोहाभिरार्द्राभिरक्ताभिर्मधुरत्रयैः॥ व्रीहीणांचशतंहुत्वाहेमचायुरवाप्नुयात् ॥ ४८ ॥ सुवर्णकुड्मलंहुत्वाशतमायुरवाप्नुयात् ॥ दूर्वाभिःपयसावापिमधुनासर्पिषापिवा ॥ ४९ ॥ शतंशतंचसप्ताहमपमृत्युंव्यपोहति ॥ शमीसमिद्भिरन्नेनपयसावाचसर्पिषा ॥ ५० ॥ शतंशतंचसप्ताहमपमृत्युंव्यपोहति ॥ न्यग्रोधसमिधोहुत्वापायसंहोमयेत्ततः ॥ ५१ ॥ शतंशतंचसप्ताहमपमृत्युंव्यपोहति ॥ क्षीराहारोजपेन्मृत्योःसप्ताहाद्विजयीभवेत् ॥ ५२ ॥ अनश्नन्वाग्यतोजप्त्वात्रिरात्रंमुच्यतेयमात् ॥ निमज्ज्याप्सुजपेदेवसद्योमृत्योर्विमुच्यते ॥ ५३ ॥ जपेद्बिल्वंसमाश्रित्यमासंराज्यमवाप्नुयात ॥ बिल्वंहुत्वाप्नुयाद्राज्यंसमूलफलपल्लवम् ॥ ५४ ॥ हुत्वापद्मशतंमासंराज्यमाप्नोत्यकंटकम् ॥ यवागूंग्राममाप्नोतिहुत्वाशालिसमन्वितम् ॥ ५५ ॥ अश्वत्थसमिधोहुत्वायुद्धादौजयमाप्नुयात्॥ अर्कस्यसमिधोहुत्वासर्वत्रविजयीभवेत्॥५६॥संयुक्तैःपयसापत्रैःपुष्पैर्वावेतसस्यच॥पायसेनशतंहुत्वासप्ताहंवृष्टिमाप्नुयात् ॥ ५७ ॥ नाभिदघ्नेजलेजप्त्वासप्ताहंवृष्टिमाप्नुयात् ॥ जलेभस्मशतंहुत्वामहावृष्टिंनिवारयेत् ॥ ५८ ॥ पालाशीभिरवाप्नोतिसमिद्भिर्ब्रह्मवर्चसम् ॥ पलाशकुसुमैर्हुत्वासर्वमिष्टमवाप्नुयात् ॥ ५९॥ पयोहुत्वाप्नुयान्मेधामाज्यंबुद्धिमवाप्नुयात् ॥ अभिमंत्र्यपिबेद्ब्राह्मीरसंमेधामवाप्नुयात् ॥ ६० ॥ पुष्पहोमेभवेद्वासस्तंतुभिस्तद्विधंपटम् ॥ लवणंमधुसंमिश्रंहुत्वेष्टंवशमानयेत् ॥६१॥नयेदिष्टंवशंहुत्वालक्ष्मीपुष्पैर्मधुप्लुतैः॥ नित्यमंजलिनात्मानमभिषिंचेज्जलेस्थितः ॥ ६२ ॥ मतिमारोग्यमायुष्यमग्र्यंस्वास्थ्यमवाप्नुयात् ॥ कुर्याद्विप्रोन्यमुद्दिश्यसोपिपुष्टिमवाप्नुयात् ॥ ६३ ॥ अथचारुविधिर्मासंसहस्रंप्रत्यहंजपेत् ॥ आयुष्कामःशुचौदेशेप्राप्नुयादायुरुत्तमम् ॥ ६४ ॥ आयुरारोग्यकामस्तुजपेन्मासद्वयंद्विजः ॥ भवेदायुष्यमारोग्यंश्रियैमासत्रयंजपेत् ॥ ६५ ॥ आयुःश्रीपुत्रदाराद्याश्चतुर्भिश्चयशोजपात् ॥ पुत्रदारायुरारोग्यंश्रियंविद्यांचपंचभिः ॥ ६६ ॥ एवमेवोत्तरान्कामान्मासैरेवोत्तरैर्व्रजेत् ॥ एकपादोजपेदूर्ध्वबाहुःस्थित्वानिराश्रयः ॥ ६७ ॥ मासंशतत्रयंविप्रःसर्वान्कामानवाप्नुयात् ॥ एवंशतोत्तरंजप्त्वासहस्रंसर्वमाप्नुयात् ॥ ६८ ॥

लक्ष्मीपुष्पैःबिल्ववृक्षपुष्पैः ॥ ६२ ॥ एतान्यनुष्ठानान्यन्यमुद्दिश्यापिकुर्यादित्याह । कुर्यादिति ॥ ६३ ॥ ६४ ॥ ६५ ॥ चतुर्भिर्मासैः ॥ पंचभिर्मासैः ॥ ६६ ॥ ६७ ॥ ६८ ॥

परमभीष्टम् ॥ ६९ ॥ मासंशतंजपेदित्यन्वयः ॥ ७० ॥ ७१ ॥ ७२ ॥ रुद्धाप्राणमित्यर्थः अमोघासत्यवाग्भवेदित्यर्थः ॥ ७३ ॥ देवःसूर्यः ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥

रुद्धाप्राणमपानंचजपेन्मासंशतत्रयम् ॥ यदिच्छेत्तदवाप्नोतिसहस्रात्परमाप्नुयात् ॥६९॥ एकपादोजपेदूर्ध्वबाहूरुद्धानिलंवशः ॥ मासंशतम
नाप्नोतियदिच्छेदितिकौशिकः ॥७०॥ एवंशतत्रयंजप्त्वासहस्रंसर्वमाप्नुयात् ॥ निमज्ज्याप्सुजपेन्मासंशतमिष्टमवाप्नुयात् ॥७१॥ एवंशतत्रयं
जप्त्वासहस्रंसर्वमाप्नुयात् ॥ एकपादोजपेदूर्ध्वबाहूरुद्धानिराश्रयः॥७२॥नक्तमश्नन्हविष्यान्नंवत्सरादृषितामियात् ॥ गीरमोघाभवेदेवंजप्त्वा
संवत्सरद्वयम् ॥७३॥ त्रिवत्सरंजपेदेवंभवेत्त्रैकालदर्शनम् ॥ आयातिभगवान्देवश्चतुःसंवत्सरंजपेत् ॥७४॥ पंचभिर्वत्सरैरेवमणिमादिगुणोभ
वेत् ॥ एवंषड्वत्सरंजप्त्वाकामरूपित्वमाप्नुयात् ॥७५॥ सप्तभिर्वत्सरैरेवममरत्वमवाप्नुयात् ॥ मनुत्वंनवभिःसिद्धमिंद्रत्वंदशभिर्भवेत् ॥७६॥
एकादशभिराप्नोतिप्राजापत्यंसुवत्सरैः॥ब्रह्मत्वंप्राप्नुयादेवंजप्त्वाद्वादशवत्सरान् ॥७७॥ एतेनैवजितालोकास्तपसानारदादिभिः ॥ शाकमन्ये
परेमूलंफलमन्येपयःपरे ॥७८॥ घृतमन्येपरेसोममपरेचरुवृत्तयः ॥ ऋषयःपक्षमश्नंतिकेचिद्भैक्ष्याशिनोऽहनि ॥७९॥ हविष्यमपरेऽश्नंतःकुर्वं
त्येवपरंतपः ॥ अथशुद्ध्यैरहस्यानांत्रिसहस्रंजपेद्द्विजः ॥८०॥ मासंशुद्धोभवेत्स्तेयात्सुवर्णस्यद्विजोत्तमः ॥ जपेन्मासंत्रिसाहस्रंसुरापःशुद्धिमा
प्नुयात् ॥८१॥ मासंजपेत्रिसाहस्रंशुचिःस्याद्गुरुतल्पगः ॥ त्रिसहस्रंजपेन्मासंकुटींकृत्वावनेवसन् ॥८२॥ ब्रह्महामुच्यतेपापादितिकौशिकभा
षितम् ॥ द्वादशाहंनिमज्याप्सुसहस्रंप्रत्यहंजपेत् ॥८३॥ मुच्येरन्नंहसःसर्वेमहापातकिनोद्विजाः ॥त्रिसाहस्रंजपेन्मासंप्राणानायम्यवाग्यतः॥
॥८४॥ महापातकयुक्तोवामुच्यतेमहतोभयात् ॥ प्राणायामसहस्रेणब्रह्महापिविशुध्यति ॥८५ ॥षट्कृत्वस्त्वभ्यसेदूर्ध्वंप्राणापानौसमाहितः॥
प्राणायामोभवेदेषसर्वपापप्रणाशनः ॥८६॥ सहस्रमभ्यसेन्मासंक्षितिपःशुचितामियात् ॥ द्वादशाहंत्रिसाहस्रंजपेद्गोवधेद्विजः ॥८७॥ अग
म्यागमनस्तेयहननाभक्ष्यभक्षणे ॥ दशसाहस्रमभ्यस्तागायत्रीशोधयेद्द्विजम् ॥८८॥ प्राणायामशतंकृत्वामुच्यतेसर्वकिल्बिषात् ॥ सर्वेषामेव
पापानांसंकरेसतिशुद्धये ॥८९॥ सहस्रमभ्यसेन्मासंनित्यजापीवनेवसन् ॥ उपवाससमंजप्यंत्रिसहस्रंतदित्यृचम् ॥९०॥ चतुर्विंशतिसाहस्रम
भ्यस्ताकृच्छ्रसंज्ञिता ॥ चतुष्षष्टिसहस्राणिचांद्रायणसमानितु॥९१॥ शतकृत्वोभ्यसेन्नित्यंप्राणानायम्यसन्ध्ययोः ॥ तदित्यृचमवाप्नोतिसर्व
पापक्षयंपरम् ॥९२॥

॥ ७८ ॥ ७९ ॥ रहस्यानांपातकानामित्यर्थः ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥

॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ श्रीमच्छैवकुलोत्पन्नोरंगनाथात्मजःसुधीः ॥ श्रीलक्ष्मगिभर्भसंभूतोनीलकंठोभिधानतः ॥ १॥ देवीभागवतस्यास्यव्या
ख्यानरहितस्यच ॥ व्याख्यांयःकृतवान्सम्यक्तिलकाख्यांसमुज्ज्वलाम् ॥ २ ॥ स्कंधश्चैकादशस्तस्याःसमाप्तोऽभूच्छुभार्थदः ॥ प्रीयतांतेनमेदेवीगायत्रीपरमेश्वरी ॥३॥ इतिश्रीशैव



निमज्याप्सुजपेन्नित्यंशतकृत्वस्तदित्यृचम्॥ ध्यायन्देवींसूर्यरूपांसर्वपापैःप्रमुच्यते ॥९३॥ इतितेसम्यगाख्याताःशांतिशुद्ध्यादिकल्पनाः॥ रहस्यातिरहस्याश्चगोपनीयास्त्वयासदा ॥९४॥ इतिसंक्षेपतःप्रोक्तःसदाचारस्यसंग्रहः ॥ विधिनाचरणादस्यमायादुर्गाप्रसीदति॥९५॥नैमि त्तिकंचनित्यंचकाम्यंकर्मयथाविधि ॥ आचरेन्मनुजःसोयंभुक्तिमुक्तिफलाप्तिभाक् ॥९६॥ आचारःप्रथमोधर्मोधर्मस्यप्रभुरीश्वरी ॥ इत्युक्तंस र्वशास्त्रेषुसदाचारफलंमहत् ॥९७॥ आचारवान्सदापूतासदैवाचारवान्सुखी ॥ आचारवान्सदाधन्यःसत्यंसत्यंचनारद ॥९८॥ देवीप्रसाद जनकंसदाचारविधानकम् ॥ यदपिश्रृणुयान्मर्त्योमहासंपत्तिसौख्यभाक् ॥९९॥ सदाचारेणसिद्धेच्चऐहिकामुष्मिकंसुखम् ॥ तदेवतेमयाप्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥१००॥ इतिश्रीदेवीभागवतेमहापुराणेएकादशस्कन्धेसदाचारनिरूपणंनामचतुर्विंशोऽध्यायः ॥२४॥ एकादशः स्कन्धसमाप्तः ॥ ११ ॥ ॥ ॥ ॥

सार्धैरामाब्धिनेत्रेंदु (१२४३) पद्यैर्व्यासकृतैःशुभैः ॥ देवीभागवतस्यास्यैकादशः स्कन्धईरितः ॥१॥



कुलोत्पन्नरंगनाथात्मजलक्ष्मीगर्भजनीलकंठभट्टकृतेदेवीभागवततिलकेएकादशस्कंधेचतुर्विंशोऽध्यायः ॥ २४ ॥ स्कंधश्चायंसमाप्तः ॥ ११ ॥ श्रीजगदंबार्पणमस्तु ॥ ॥

इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मजक्षेमराजश्रेष्ठिना
स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणालये मुद्रितम्।
संवत् १९७६ शके १८४१,

श्रीगणेशायनमः इच्छातुसर्वजगतामधिनाथतायांकर्तृत्वमंबतुपुनर्नरकप्रदंमे ॥ कोवादयालुरधुनामधुनाशकर्त्रित्वत्तोधिकोममनोरथपूरकःस्यात् ॥ १ ॥ सप्तविंशतिपद्यैस्तुश्लोकार्धेनसमायुतैः॥ऋष्यादिकंतुगायत्र्यायथावदभिधीयते ॥ २ ॥ पूर्वाध्यायेगायत्रीविधानंसदाचारंचश्रुत्वातत्रपृच्छति । नारदउवाच सदाचारेति ॥ १ ॥ २ ॥ दुःखसाध्यानीति॥सदाचारविधिस्त्वभिलषितएव॥ किंतु कृच्छ्रादिव्रतानिदेहशुद्ध्यर्थंकथितान्यशक्तस्यनकर्तुंशक्यानितस्मात्तत्रकिंचिदुपायांतरमस्तिचेत्तत्कृपांकृत्वावदेत्येकःप्रश्नःश्लोकचतुष्टयपर्यंतम्॥३॥ ॥ ४ ॥ द्वितीयंप्रश्नमाह । सदाचारेति ॥ मुख्यतममिति ॥ मूढस्यसोपिविधिर्दुर्घटएवास्तीतितदुपयोग्युपायांतरंविद्यतेचेत्तदपिवदेत्यर्थः ॥ ५ ॥ तृतीयंप्रश्नमाह । येगायत्रीति ॥

श्रीगणेशायनमः ॥ नारदउवाच ॥ सदाचारविधिर्देवभवतावर्णितःप्रभो ॥ तस्याप्यतुलमाहात्म्यंसर्वपापविनाशनम् ॥ १ ॥ श्रुतंभवन्मुखांभोजच्युतंदेवीकथामृतम् ॥ व्रतानियानिचोक्तानिचांद्रायणमुखानिते ॥ २ ॥दुःखसाध्यानिजानीमःकर्त्रसाध्यानितानिच ॥ तदस्मात्सांप्रतंयत्तुसुखसाध्यंशरीरिणाम् ॥ ३ ॥ देवीप्रसादजनकंसुखानुष्ठानसिद्धिदम् ॥ तत्कर्मवदमेस्वामिन्कृपापूर्वंसुरेश्वर ॥ ४ ॥ सदाचारविधौयश्चगायत्रीविधिरीरितः ॥ तस्मिन्मुख्यतमंकिंस्यात्किंवापुण्याधिकप्रदम् ॥५॥ येगायत्रीगतावर्णास्तत्त्वसंख्यास्त्वयेरिताः ॥ तेषांकेऋषयःप्रोक्ताःकानिच्छंदांसिवैमुने ॥ ६ ॥ तेषांकादेवताःप्रोक्ताःसर्वंकथयमेप्रभो ॥ महत्कौतूहलंमेचमानसेपरिवर्तते ॥ ७ ॥ श्रीनारायणउवाच ॥ कुर्यादन्यन्नवाकुर्यादनुष्ठानादिकंतथा ॥ गायत्रीमात्रनिष्ठस्तुकृतकृत्योभवेद्द्विजः ॥ ८ ॥ संध्यासुचार्घ्यदानंचगायत्रीजपमेवच ॥ सहस्रत्रितयंकुर्वन्सुरैःपूज्योभवेन्मुने ॥९॥ न्यासान्करोतुवामावागायत्रीमेवचाभ्यसेत् ॥ ध्यात्वानिर्व्याजयावृत्त्यासच्चिदानंदरूपिणीम् ॥१०॥ यदक्षरैकसंसिद्धेःस्पर्धतेब्राह्मणोत्तमः ॥ हरिशंकरकंजोत्थसूर्यचंद्रहुताशनैः ॥ ११ ॥ अथातःश्रूयतांब्रह्मन्वर्णऋष्यादिकांस्तथा ॥ छंदांसिदेवतास्तद्वत्क्रमात्तत्त्वानिचैवहि ॥ १२ ॥ वामदेवोऽत्रिर्वसिष्ठःशुक्रःकण्वःपराशरः ॥ विश्वामित्रोमहातेजाःकपिलःशौनकोमहान् ॥ १३ ॥ याज्ञवल्क्योभरद्वाजोजमदग्निस्तपोनिधिः ॥ गौतमोमुद्गलश्चैववेदव्यासश्चलोमशः ॥१४॥ अगस्त्यःकौशिकोवत्सःपुलस्त्योमांडुकस्तथा ॥ दुर्वासास्तपसांश्रेष्ठोनारदःकश्यपस्तथा ॥ १५ ॥ इत्येतेऋषयःप्रोक्तावर्णानांक्रमशोमुने ॥ गायत्र्युष्णिगनुष्टुप्चबृहतीपंक्तिरेवच ॥ १६ ॥ त्रिष्टुभंजगतीचैवतथाऽतिजगतीमता ॥ शक्वर्यतिशक्वरीचधृतिश्चातिधृतिस्तथा ॥१७॥ विराट्प्रस्तारपंक्तिश्चकृतिःप्रकृतिराकृतिः ॥ विकृतिःसंकृतिश्चैवाक्षरपंक्तिस्तथैवच ॥ १८ ॥ भूर्भुवःस्वरितिच्छंदस्तथाज्योतिष्मतीस्मृतम् ॥ इत्येतानिचछंदांसिकीर्तितानिमहामुने ॥ १९ ॥

तत्त्वसंख्याश्चतुर्विंशतिसंख्याः ॥ ६ ॥ सर्वंतेषांतत्पदादिकम् ॥७॥ तत्रप्रथमप्रश्नोत्तरमाह कुर्यादिति ॥ अनुष्ठानादिकंदेहशुद्ध्यर्थंकृच्छ्रादिकंकरोतुवानकरोतुकेवलगायत्रीमात्रस्यनिर्व्याजयाभक्त्यानिरन्तरमभ्यासात्कृतकृत्योभवतिनान्यापेक्षास्तीत्यर्थः अतएवगायत्रीप्रकरणेपूर्वमुक्तमेतादृशजपेनकृच्छ्रादिकंभवतीति ॥ तदुक्तंकूर्मपुराणे ॥ एकतश्चतुरोवेदागायत्रीचैकतःपरेति ॥ ८ ॥ द्वितीयप्रश्नोत्तरमाह । संध्यास्विति ॥ संध्यात्रयेऽर्घ्यदानंसहस्रगायत्रीजपएवमुख्योऽन्यत्त्वाभ्युदयिकमितिभावः ॥ ९ ॥ तदेवाह । न्यासानिति ॥१०॥११॥ तृतीयप्रश्नोत्तरमाह । अथातइति ॥ १२ ॥ महातेजाइतिविश्वामित्रविशेषणम् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

देवताआह । आग्नेयमिति ॥ अत्रपञ्चमषष्ठवर्णयोरेकंआदित्यएवदेवतेत्युक्तम् ॥ सप्तदशाष्टमाक्षरयोर्मैत्रावरुणदेवतात्वमेवोक्तम् । गायत्रीब्रह्मकल्पेतुभिन्नाएवदेवताउक्ता॥तथाहि आ
द्योवर्णोग्निदेवःस्याद्वायुदेवोद्वितीयकः ॥ तृतीयःसूर्यदेवत्योधनदेवश्चतुर्थकः ॥ यमःपंचमवर्णस्यवारुणःषष्ठएवच ॥ सप्तमोबार्हस्पत्योहिपार्जन्योनारदाष्टम॥वर्णस्यनवमस्येंद्रोगन्धर्वा
दशमस्यच ॥ एकादशस्यवर्णस्यदेवताप्रोष्ठउच्यते ॥ द्वादशस्यतुवर्णस्यमित्रावरुणदेवता ॥ स्यात्तुत्रयोदशोवर्णस्त्वाष्ट्रदैवतसंयुतः ॥ चतुर्दशस्यवर्णस्यदेवतावासवःस्मृतः ॥ मरुद्दैव
तकोवर्णःपंचदशकएवच ॥ सोमस्तुदेवताज्ञेयावर्णस्यषोडशस्यच ॥ सप्तदशस्यवर्णस्यदेवताअंगिराभवेत् ॥ अष्टादशस्यवर्णस्यविश्वेदेवाश्चदेवताः ॥ एकोनविंशतिकस्यवर्णस्यदेवता
श्विनौ ॥ विंशतिकस्यवर्णस्यपूषादेवःप्रकीर्तितः ॥ रुद्रोदेवस्तुवर्णस्याप्येकविंशतिकस्यहि ॥ द्वाविंशतितमोवर्णोविद्युद्देवःप्रकीर्तितः॥ब्रह्मदैवतकोवर्णस्त्रयोविंशतिकःस्मृतः॥चतुर्विंश

दैवतानिशृणुप्राज्ञतेषामेवानुपूर्वशः ॥ आग्नेयंप्रथमंप्रोक्तंप्राजापत्यंद्वितीयकम् ॥ २० ॥ तृतीयंचतथासोम्यमीशानंचचतुर्थकम् ॥ सावित्रंप
ञ्चमंप्रोक्तंषष्ठमादित्यदैवतम् ॥ २१ ॥ बार्हस्पत्यंसप्तमंतुमैत्रावरुणमष्टमम् ॥ नवमंभगदैवत्यंदशमंचार्यमेश्वरम् ॥ २२ ॥ गणेशमेकादशकं
त्वाष्ट्रंद्वादशकंस्मृतम् ॥ पौष्णंत्रयोदशंप्रोक्तमैंद्राग्नंचचतुर्दशम् ॥२३॥ वायव्यंपंचदशकंवामदेव्यंचषोडशम् ॥ मैत्रावरुणिदेवत्यंप्रोक्तंसप्तदशा
क्षरम् ॥ २४ ॥ अष्टादशंवैश्वदेवमूनविंशंतुमातृकम् ॥ वैष्णवंविंशतितमंवसुदैवतमीरितम् ॥ २५ ॥ एकविंशतिसंख्याकंद्वाविंशंरुद्रदैवतम्॥
त्रयोविंशंचकौबेरमाश्विनंतत्त्वसंख्यकम् ॥ २६ ॥ चतुर्विंशतिवर्णानांदेवतानांचसंग्रहः ॥ कथितःपरमश्रेष्ठोमहापापैकशोधनः ॥ २७ ॥
यदाकर्णनमात्रेणसांगंजाप्यफलंमुने ॥ इतिश्रीदेवीभागवतेमहापुराणेद्वादशस्कन्धेगायत्रीविचारोनामप्रथमोऽध्यायः १ ॥ श्रीनारायणउवा
च ॥वर्णानांशक्तयःकाश्चताःशृणुष्वमहामुने ॥ वामदेवीप्रियासत्याविश्वाभद्रविलासिनी ॥ १ ॥ प्रभावतीजयाशांताकांतादुर्गासरस्वती ॥
विद्रुमाचविशालेशाव्यापिनीविमलातथा ॥ २ ॥ तमोपहारिणीसूक्ष्माविश्वयोनिर्जयावशा ॥ पद्मालयापराशोभाभद्राचत्रिपदास्मृता॥
॥ ३ ॥ चतुर्विंशतिवर्णानांशक्तयःसमुदाहृताः ॥ अतःपरंवर्णवर्णान्व्याहरामियथातथम् ॥ ४ ॥ चंपकाअतसीपुष्पसन्निभंविद्रुमंतथा॥स्फ
टिकाकारकंचैवपद्मपुष्पसमप्रभम् ॥ ५ ॥ तरुणादित्यसंकाशंशंखकुन्देन्दुसन्निभम् ॥ प्रवालपद्मपत्राभंपद्मरागसमप्रभम् ॥ ६ ॥ इंद्रनीलम
णिप्रख्यंमौक्तिकंकुंकुमप्रभम् ॥ अंजनाभंचरक्तंचवैदूर्यंक्षौद्रसन्निभम् ॥ ७ ॥ हारिद्रंकुन्ददुग्धाभंरविकांतिसमप्रभम् ॥ शुकपुच्छनिभंतद्वच्छ
तपत्रनिभंतथा ॥ ८ ॥ केतकीपुष्पसंकाशंमल्लिकाकुसुमप्रभम् ॥ करवीरश्चइत्येतेक्रमेणपरिकीर्तिताः ॥ ९ ॥ वर्णाःप्रोक्ताश्चवर्णानांमहापा
पविशोधनाः ॥ पृथिव्यापस्तथातेजोवायुराकाशएवच ॥ १० ॥

तिकोवर्णोभवेददितिर्दैवतइति ॥२०॥ २१॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ अत्रव्याहृतीनांदेवताऋष्यादयश्चप्रसिद्धत्वान्नोक्ताः ॥ इतिश्रीदेवीभागवततिलकेद्वादशस्क
न्धेप्रथमोऽध्यायः ॥ १ ॥ अष्टादशश्लोकवर्ग्यैर्वर्णानांशक्तयस्तथा ॥ श्वेतपीतादयोवर्णावर्णानामक्षरक्रमात् ॥ उच्यन्तेचैवमुद्राश्चप्रोक्ताएवप्रसंगतः ॥ १ ॥ वर्णशक्तीराह । वर्णानांश
क्तयइति ॥ १ ॥ २ ॥ ३ ॥ वर्णवर्णाश्चतुर्विंशतिवर्णानांश्वेतपीताकारान्वर्णानित्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ वर्णतत्त्वान्याह । पृथिव्यापइति ॥ पूर्वोक्तेगायत्र्याक्षरन्या
सस्थलेइदंतत्त्वऋषिवर्णाद्यात्मकंप्रत्यक्षरंस्मृत्वावर्णान्न्यसेदितिरहस्ये ॥ १० ॥

पायुपादंचेत्यत्रप्राण्यंगत्वादेकवद्भावः ॥ क्वचित्पायुःपादौचेत्यपिपाठः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ तुर्यरूपाःगायत्र्याश्चतुर्थचरणस्येत्यर्थः ॥ १७॥१८॥ एतामुद्रा एकादशस्कन्धेउक्ताएवप्रसंगादत्रकथिताइतिबोध्यम् ॥ जपसमयेसर्वेऋषयःसर्वाणिछन्दांसिसर्वाःशक्तयःसर्वाणितत्त्वानिसर्वेवर्णवर्णाःस्मर्तव्यामुद्राश्चदर्शनीयाइतिसमुदायार्थः॥ इति श्रीदेवीभागवततिलकेद्वादशस्कन्धेद्वितीयोऽध्यायः ॥ २ ॥ पंचविंशतिभिःपद्यैर्जगन्मातुःपरात्परम् ॥ कवचंप्रोच्यतेसम्यक्सर्वमंगलकारकम् ॥ १ ॥ नारदःकवचंपृच्छति । स्वामिन्निति ॥ पातकात्केनपुण्येनमुच्येतेत्यन्वयः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ तद्बीजमिति ॥ तत्पदंबीजमित्यर्थः ॥७॥ प्रथमंचतुर्भिरक्षरैर्हृदयमित्यर्थः ॥ एवमुत्तरत्रबोध्यम् ॥

गंधोरसश्चरूपंचशब्दःस्पर्शस्तथैवच ॥ उपस्थंपायुपादंचपाणीवागपिचक्रमात् ॥ ११॥ घ्राणंजिह्वाचचक्षुश्चत्वक्श्रोत्रंचततःपरम् ॥ प्राणोपानस्तथाव्यानःसमानश्चततःपरम् ॥ १२ ॥ तत्त्वान्येतानिवर्णानांक्रमशःकीर्तितानितु ॥ अतःपरंप्रवक्ष्यामिवर्णमुद्राःक्रमेणतु ॥१३ ॥ सुमुखंसंपुटंचैवविततंविस्तृतंतथा ॥ द्विमुखंत्रिमुखंचैवचतुःपंचमुखंतथा ॥ १४ ॥षण्मुखाधोमुखंचैवव्यापकांजलिकंतथा ॥ शकटंयमपाशंचग्रथितंसंमुखोन्मुखम् ॥ १५ ॥ विलंबंमुष्टिकंचैवमत्स्यंकूर्मंवराहकम् ॥ सिंहाक्रांतंमहाक्रांतंमुद्गरंपल्लवंतथा ॥ १६ ॥ त्रिशूलयोनीसुरभिश्चाक्षमालाचलिंगकम् ॥ अंबुजंचमहामुद्रास्तुर्यरूपाःप्रकीर्तिताः ॥१७ ॥ इत्येताःकीर्तितामुद्रावर्णानांतेमहामुने ॥ महापापक्षयकराःकीर्तिदाःकांतिदामुने ॥१८॥ इतिश्रीदेवीभागवतेमहापुराणेद्वादशस्कंधेद्वितीयोऽध्यायः ॥२॥ नारदउवाच ॥ स्वामिन्सर्वजगन्नाथसंशयोस्तिममप्रभो ॥ चतुःषष्टिकलाभिज्ञपातकाद्योगविद्वर ॥१॥ मुच्येतकेनपुण्येनब्रह्मरूपःकथंभवेत् ॥ देहश्चदेवतारूपोमन्त्ररूपोविशेषतः ॥ २॥ कर्मतच्छ्रोतुमिच्छामिन्यासंचविधिपूर्वकम् ॥ ऋषिश्छंदोधिदेवंचध्यानंचविधिवत्प्रभो ॥ ३ ॥ श्रीनारायणउवाच ॥ अस्त्येकंपरमंगुह्यंगायत्रीकवचंतथा ॥ पठनाद्धारणान्मर्त्यःसर्वपापैःप्रमुच्यते ॥४॥ सर्वान्कामानवाप्नोतिदेवीरूपश्चजायते ॥ गायत्रीकवचस्यास्यब्रह्मविष्णुमहेश्वराः ॥५॥ ऋषयोऋग्यजुःसामाथर्वश्छंदांसिनारद ॥ ब्रह्मरूपादेवतोक्तागायत्रीपरमाकला ॥ ६ ॥ तद्बीजंभर्गइत्येषाशक्तिरुक्तामनीषिभिः ॥ कीलकंचधियःप्रोक्तंमोक्षार्थेविनियोजनम् ॥ ७ ॥ चतुर्भिर्हृदयंप्रोक्तंत्रिभिर्वर्णैःशिरःस्मृतम् ॥ चतुर्भिःस्याच्छिखापश्चात्त्रिभिस्तुकवचंस्मृतम् ॥८॥ चतुर्भिर्नेत्रमुद्दिष्टंचतुर्भिःस्यात्तदस्त्रकम् ॥ अथध्यानंप्रवक्ष्यामिसाधकाभीष्टदायकम् ॥ ९ ॥ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिंदुनिबद्धरत्नमुकुटांतत्त्वार्थवर्णात्मिकाम् ॥ गायत्रींवरदाभयांकुशकशाःशुभ्रंकपालंगुणंशंखंचक्रमथारविंदयुगलंहस्तैर्वहंतींभजे ॥१०॥ गायत्रीपूर्वतःपातुसावित्रीपातुदक्षिणे ॥ ब्रह्मसंध्यातुमेपश्चादुत्तरायांसरस्वती ॥ ११ ॥

॥ ८ ॥९॥ ध्यानमाह । मुक्ताविद्रमेति ॥ प्रत्येकमीक्षणत्रयवद्भिःपंचभिर्मुखैर्युक्तामित्यर्थ. ॥ तत्त्वार्थवर्णात्मिकामिति ॥ चतुर्विंशतितत्त्वान्यर्थोयेषांवर्णानांतत्सवितुरित्यादीनांतदात्मिकामित्यर्थः ॥ दक्षाद्यूर्ध्वयोर्हस्तयोःकमलद्वयंतदधस्तनयोश्चक्रशंखौतदधस्तनयोःरज्जुकपालेतदधस्तनयोःपाशांकुशौतदधस्थयोरभयवरौ ॥ कशापाशः ॥ गुणोरज्जुरित्यायुधध्यानम् ॥ १० ॥ ब्रह्मसंध्या–ब्रह्मणाराध्यासंध्याब्रह्मसंध्या ॥ ११ ॥

॥ १२ ॥ १३ ॥ हेब्रह्माणिभवतीमेऊर्ध्वदेशंरक्षेदित्यन्वयः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ इतिश्रीदेवीभागवतति
लकेद्वादशस्कन्धेतृतीयोऽध्यायः ॥ ३ ॥ अथश्रीजगदंबायागायत्र्याहृदयंपरम् ॥ अथर्वोक्तंक्रमेणैवगाथारूपेणकथ्यते ॥ १ ॥ कवचश्रवणोत्तरंगायत्रीहृदयंपृच्छति।भगवन्निति ॥ १॥

पार्वतीमेदिशंरक्षेत्पावकीजलशायिनी ॥ यातुधानीदिशंरक्षेद्यातुधानभयंकरी ॥१२॥ पावमानीदिशंरक्षेत्पवमानविलासिनी ॥ दिशंरौद्रींचमे
पातुरुद्राणीरुद्ररूपिणी ॥१३॥ऊर्ध्वंब्रह्माणिमेरक्षेदधस्ताद्वैष्णवीतथा ॥ एवंदशदिशोरक्षेत्सर्वांगंभुवनेश्वरी ॥१४॥ तत्पदंपातुमेपादौजंघेमेस
वितुःपदम् ॥ वरेण्यंकटिदेशेतुनाभिंभर्गस्तथैवच ॥१५॥ देवस्यमेतद्धृदयंधीमहीतिचगल्लयोः ॥ धियःपदंचमेनेत्रेयःपदंमेललाटकम् ॥ १६॥
नःपातुमेपदंमूर्ध्निशिखायांमेप्रचोदयात् ॥ तत्पदंपातुमूर्धानंसकारःपातुभालकम् ॥ १७ ॥ चक्षुषीतुविकाराणस्तुकारस्तुकपोलयोः ॥
नासापुटंवकाराणोंरेकारस्तुमुखेतथा ॥ १८ ॥ णिकारऊर्ध्वमोष्ठंतुयकारस्त्वधरोष्ठकम् ॥ आस्यमध्येभकाराणोंगोंकारश्चुबुकेतथा ॥१९ ॥
देकारःकण्ठदेशेतुवकारःस्कंधदेशकम् ॥ स्यकारोदक्षिणंहस्तंधीकारोवामहस्तकम् ॥२० ॥मकारोहृदयंरक्षेद्धिकारउदरेतथा ॥ धिकारोनाभि
देशेतुयोकारस्तुकटिंतथा ॥२१॥ गुह्यंरक्षतुयोकारऊरूद्वौनःपदाक्षरम् ॥ प्रकारोजानुनीरक्षेच्चोकारोजंघदेशकम्॥२२॥दकारंगुल्फदेशेतुयकारः
पदयुग्मकम्॥तकारव्यंजनंचैवसर्वांगेमेसदाऽवतु॥२३॥इदंतुकवचंदिव्यंबाधाशतविनाशनम्॥चतुःषष्टिकलाविद्यादायकंमोक्षकारकम् ॥२४॥
मुच्यतेसर्वपापेभ्यःपरंब्रह्माधिगच्छति ॥ पठनाच्छ्रवणाद्वापिगोसहस्रफलंलभेत् ॥२५ ॥ इतिश्रीदेवीभागवतेमहापुराणेद्वादशस्कन्धेगायत्रीमं
त्रकवचंनामतृतीयोऽध्यायः ॥३॥ नारदउवाच ॥ भगवन्देवदेवेशभूतभव्यजगत्प्रभो ॥ कवचंचश्रुतंदिव्यंगायत्रीमंत्रविग्रहम् ॥ १॥ अधुना
श्रोतुमिच्छामिगायत्रीहृदयंपरम् ॥ यद्धारणाद्भवेत्पुण्यंगायत्रीजपतोऽखिलम्॥२॥श्रीनारायणउवाच॥देव्याश्चहृदयंप्रोक्तंनारदाथर्वणेस्फुटम्॥
तदेवाहंप्रवक्ष्यामिरहस्यातिरहस्यकम् ॥ ३ ॥ विराड्रूपांमहादेवींगायत्रींवेदमातरम् ॥ ध्यात्वातस्यास्त्वथांगेषुध्यायेदेताश्चदेवताः ॥ ४ ॥
पिंडब्रह्मांडयोरैक्याद्भावयेत्स्वतनौतथा ॥ देवीरूपेनिजेदेहेतन्मयत्वायसाधकः॥५॥नादेवोभ्यर्चयेद्देवमितिवेदविदोविदुः ॥ ततोऽभेदायकाये
स्वेभावयेद्देवताइमाः ॥६॥ अथतत्संप्रवक्ष्यामितन्मयत्वमथोभवेत् ॥ गायत्रीहृदयस्याऽस्याऽप्यहमेवऋषिःस्मृतः ॥ ७ ॥ गायत्रीच्छंदउद्दि
ष्टंदेवतापरमेश्वरी ॥ पूर्वोक्तेनप्रकारेणकुर्यादंगानिषट्क्रमात् ॥ आसनेविजनेदेशेध्यायेदेकाग्रमानसः ॥ ८ ॥

॥२॥तदेवेति ॥ आनुपूर्वीक्रमेणैवेत्यर्थः ॥ ३ ॥ विराड्रूपामिति ॥ विराड्रूपांगायत्रींध्यात्वातस्याअंगस्थानीयावक्ष्यमाणदेवताभावयित्वापिंडब्रह्मांडयोरैक्यान्निजंदेहमपिश्रीगाय
त्रीरूपंविभाव्यतस्मिन्देहेवक्ष्यमाणदेवतान्यसेदित्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ अहमेवनारायणऋषिरित्यर्थः ॥ परमेश्वरीगायत्रीदेवता ॥ ८ ॥

द्यौर्दैवतंमूर्ध्निभावयेदित्यर्थः ॥ सर्वत्रएवंयथायोग्यमर्थऊहनीयः ॥ सवितुर्वरेण्यायश्रेष्ठायतेजसेइत्यर्थः । पूर्वाजयायपूर्वस्यांदिश्युदितायेतिफलितोर्थः ॥ प्रातरादित्येआदित्यमंडले
प्रतिष्ठायस्यागायत्र्यास्तस्यैनमइत्यर्थः ॥ फलमाह । प्रातरधीयानइति ॥ इतिश्रीदेवीभागवततिलकेद्वादशस्कंधेचतुर्थोऽध्यायः ॥ ४ ॥ एकोनत्रिंशताश्लोकैर्गायत्र्याःस्तोत्रमुच्यते ।
सिद्धयष्टकंभवेत्सिद्धंयेनतन्मयतापिच ॥ १ ॥ गायत्रीहृदयश्रवणोत्तरंनारदःपृच्छति । नारदउवाच भक्तानुकंपिन्निति ॥ १ ॥ २ ॥ गायत्रीब्राह्मीब्रह्मणःसमानाकारत्वात्तेनाराध्य

अथार्थन्यासःद्यौर्मूर्ध्निदैवतम् ॥ दंतपंक्तावश्विनौ ॥ उभेसंध्येचोष्ठौ ॥ मुखमग्निः॥ जिह्वासरस्वती ॥ ग्रीवायांतुबृहस्पतिः ॥ स्तनयोर्वसवोऽष्टौ ॥ बाह्वोर्मरुतः ॥ हृदयेपर्जन्यः ॥ आकाशमुदरम् ॥ नाभावंतरिक्षम् ॥ कट्योरिंद्राग्नी ॥ जघनेविज्ञानघनःप्रजापतिः ॥ कैलासमलयेऊरू ॥ विश्वेदेवाजान्वोः ॥ जंघायांकौशिकः ॥ गुह्यमयने ॥ ऊरूपितरः ॥ पादौपृथिवी ॥ वनस्पतयोंगुलीषु ॥ ऋषयोरोमाणि ॥ नखानिमुहूर्तानि ॥ अस्थिषुग्रहाः ॥ असृङ्मांसमृतवः ॥ संवत्सरावैनिमिषम् ॥ अहोरात्रावादित्यश्चंद्रमाः ॥ प्रवरांदिव्यांगायत्रींसहस्रनेत्रांशरणमहंप्रपद्ये ॥ ॐतत्सवितुर्वरेण्यायनमः ॥ ॐ तत्पूर्वाजयायनमः ॥ तत्प्रातरादित्यायनमः ॥ तत्प्रातरादित्यप्रतिष्ठायैनमः॥प्रातरधीयानोरात्रिकृतंपापंनाशयति ॥ सायमधीयानोदिवसकृतंपापंनाशयति ॥ सायंप्रातरधीयानोअपापोभवति ॥ सर्वतीर्थेषुस्नातोभवति ॥ सर्वैर्देवैर्ज्ञातोभवति ॥ अवाच्यवचनात्पूतोभवति ॥ अभक्ष्यभक्षणात्पूतोभवति ॥ अभोज्यभोजनात्पूतोभवति ॥ अचोष्यचोषणात्पूतोभवति ॥ असाध्यसाधनात्पूतोभवति॥ दुष्प्रतिग्रहशतसहस्रात्पूतोभवति ॥ सर्वप्रतिग्रहात्पूतोभवति ॥ पंक्तिदूषणात्पूतोभवति॥अनृतवचनात्पूतोभवति अथाऽब्रह्मचारीब्रह्मचारीभवति॥अनेनहृदयेनाधीतेनक्रतुसहस्रेणेष्टंभवति॥षष्टिशतसहस्रगायत्र्याजप्यानिफलानिभवंति॥अष्टौब्राह्मणान्सम्यग्ग्राहयेत् ॥ तस्यसिद्धिर्भवति ॥ यइदंनित्यमधीयानोब्राह्मणःप्रातःशुचिः सर्वपापैःप्रमुच्यतइति ॥ ब्रह्मलोकेमहीयते ॥ इत्याहभगवाञ्श्रीनारायणः॥इतिश्रीदेवीभागवतेमहापुराणेद्वादशस्कंधेगायत्रीहृदयंनामचतुर्थोऽध्यायः॥४॥नारदउवाच ॥ भक्तानुकंपिन्सर्वज्ञहृदयंपापनाशनम्॥गायत्र्याःकथितंतस्माद्गायत्र्याःस्तोत्रमीरय॥१॥श्रीनारायणउवाच॥आदिशक्तेजगन्मातर्भक्तानुग्रहकारिणि॥सर्वत्रव्यापिकेऽनंतेश्रीसंध्येतेनमोऽस्तुते ॥२॥ त्वमेवसंध्यागायत्रीसावित्रीचसरस्वती॥ब्राह्मीचवैष्णवीरौद्रीरक्ताश्वेतासितेतरा ॥३॥ प्रातर्बालाचमध्याह्नेयौवनस्थाभवेत्पुनः॥वृद्धासायंभगवतीचिंत्यतेमुनिभिःसदा ॥४॥ हंसस्थागरुडारूढातथावृषभवाहिनी॥ऋग्वेदाध्यायिनीभूमौदृश्यतेयातपस्विभिः ॥ ५ ॥

त्वाद्वा । सावित्री रौद्रीतत्समानाकारत्वात्तेनाराध्यत्वाद्वा ॥ सरस्वतीवैष्णवीविष्णुसमानाकारत्वात्तेनाराध्यत्वाद्वा ॥ गायत्रीरक्ता सावित्रीश्वेता सरस्वतीसितेतराकृष्णा ॥ ३ ॥
तिसृणांक्रमेणवयोवस्थामाह । प्रातरिति ॥ याचिंत्यतेतस्यनमइतिशेषः ॥ ४ ॥ तिसृणांदेवतानांवाहनान्याह । हंसस्येति ॥ हंसस्थाब्राह्मी ॥ गरुडारूढासरस्वती॥वृषभवाहिनी
सावित्री ॥ देवतात्रयस्यक्रमेणवेदत्रयोत्पादकत्वमाहऋग्वेदेति ॥ ५ ॥

भ्राम्यमाणेति ॥ भुविसर्वत्रविद्यमानापिरुद्रलोकंगतेत्यर्थः ॥६॥ रुद्रलोकंगतेति । देवतात्रयस्ययथायोग्यंलोकत्रयंयोजनीयम् ॥ अमर्त्यानुग्रहकारिणीतिच्छेदः॥ एतादृशीतस्यैनमइ तिशेषः ॥७॥ शिवयोरिति ॥ शिवयोःशिवशक्त्योःकरनेत्रेभ्योऽवयवेभ्योयानिर्गतादशविधादशरूपादुर्गासापित्वमेवासीत्यर्थः ॥ इयंकथाकात्यायनीतंत्राद्रौप्रसिद्धा॥८॥ दशविधदुर्गा णांनामान्याह । वरेण्येति ॥ ९ ॥ भोगमोक्षदेत्येका ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ तोया करतोया ॥ १९ ॥ गांधार्यादयःशरीरस्थानाड्यः ॥ ॥ २० ॥ स्वप्ननायिकेति ॥ कंठेस्वप्नइतिश्रुतेःकंठस्थायाःस्वप्नजनकत्वात् ॥ २१ ॥ बिंदुस्थाभ्रूमध्यस्था ॥ बिंदुमालिनीबिंदुरूपेणमालतेशोभतइत्यर्थः ॥ मूलेमूलाधारेकुंडली ॥

यजुर्वेदंपठंतीचअंतरिक्षेविराजते ॥ सासामगापिसर्वेषुभ्राम्यमाणातथाभुवि ॥ ६ ॥ रुद्रलोकंगतात्वंहिविष्णुलोकनिवासिनी ॥ त्वमेवब्रह्म णोलोकेऽमर्त्यानुग्रहकारिणी ॥ ७ ॥ सप्तर्षिप्रीतिजननीमायाबहुवरप्रदा ॥ शिवयोःकरनेत्रोत्थाह्यश्रुस्वेदसमुद्भवा ॥ ८ ॥ आनंदजननीदुर्गा दशधापरिपठ्यते ॥ वरेण्यावरदाचैववरिष्ठावरवर्णिनी ॥ ९ ॥ गरिष्ठाचवरार्हाचवरारोहाचसप्तमी ॥ नीलगंगातथासंध्यासर्वदाभोगमोक्षदा ॥१०॥भागीरथीमर्त्यलोकेपातालेभोगवत्यपि ॥त्रिलोकवाहिनीदेवीस्थानत्रयनिवासिनी॥११॥भूर्लोकस्थात्वमेवासिधरित्रीशोकधारिणी॥ भुवोलोकेवायुशक्तिःस्वर्लोकेतेजसांनिधिः॥१२॥महर्लोकेमहासिद्धिर्जनलोकेजनेत्यपि ॥ तपस्विनीतपोलोकेसत्यलोकेतुसत्यवाक् ॥ १३ ॥ कमलाविष्णुलोकेचगायत्रीब्रह्मलोकदा॥रुद्रलोकेस्थितागौरीहरार्धांगनिवासिनी॥१४॥अहमोमहतश्चैवप्रकृतिस्त्वंहिगीयसे ॥ साम्यावस्था त्मिकात्वंहिशबलब्रह्मरूपिणी ॥ १५ ॥ ततःपरापराशक्तिःपरमात्वंहिगीयसे ॥ इच्छाशक्तिःक्रियाशक्तिर्ज्ञानशक्तिस्त्रिशक्तिदा ॥१६ ॥ गंगाच यमुनाचैवविपाशाचसरस्वती ॥ सरयूर्देविकासिंधुर्नर्मदेरावतीतथा ॥ १७ ॥ गोदावरीशतद्रूश्चकावेरीदेवलोकगा ॥ कौशिकीचंद्रभागाचवि तस्ताचसरस्वती ॥ १८ ॥ गंडकीतापिनीतोयागोमतीवेत्रवत्यपि॥ इडाचपिंगलाचैवसुषुम्नाचतृतीयका ॥ १९ ॥गांधारीहस्तिजिह्वाचपूषा पूषातथैवच ॥ अलंबुसाकुहूश्चैवशंखिनीप्राणवाहिनी ॥ २० ॥नाडीचत्वंशरीरस्थागीयसेप्राक्तनैर्बुधैः ॥ हृत्पद्मस्थाप्राणशक्तिःकंठस्थास्व प्ननायिका ॥ २१ ॥ तालुस्थात्वंसदाधाराबिंदुस्थाबिंदुमालिनी ॥ मूलेतुकुंडलीशक्तिर्व्यापिनीकेशमूलगा ॥ २२ ॥ शिखामध्यासनात्वं हिशिखाग्रेतुमनोन्मनी ॥ किमन्यद्बहुनोक्तेनयत्किंचिज्जगतीत्रये ॥ २३ ॥ तत्सर्वंत्वंमहादेविश्रियेसंध्येनमोस्तुते ॥ इतीदंकीर्तितंस्तोत्रंसं ध्यायांबहुपुण्यदम् ॥ २४ ॥ महापापप्रशमनंमहासिद्धिविधायकम् ॥ यइदंकीर्तयेत्स्तोत्रंसंध्याकालेसमाहितः ॥ २५ ॥

केशमूलगाचूडामूलपर्यंतंव्याप्तव्यापिनी ॥ २२ ॥ शिखामध्यासना ॥ तस्याःशिखायामध्येपरमात्माव्यवस्थितइतिश्रुत्युक्ताशिखाज्ञानकलातस्यामध्येआसनंस्थितिर्यस्याःसापरमात्म रूपिणीत्यर्थः ॥ शिखाग्रेतस्याएवशिखायाअग्रेब्रह्मरंध्रेमनसिगतेसतिमनोन्मनीशक्तिरेवावतिष्ठतेइतियोगप्रसिद्धम् ॥ २३ ॥ श्रियेमोक्षलक्ष्म्यर्थमित्यर्थः ॥ संध्येइत्येकवचनेनैकैवगा यत्रीसंध्यात्रयरूपेणध्येयेत्युक्तमितिबोध्यम् ॥ उपपादितंचैतदेकादशस्कंधे ॥ २४ ॥ २५ ॥

॥ २६ ॥ २७ ॥ २८ ॥ नारदेति ॥ संबोधनम् ॥ संध्योक्तंसंध्योद्देशेनोक्तंस्तोत्रमित्यर्थः ॥ २९ ॥ इतिश्रीदेवीभागवततिलकेद्वादशस्कंधेपंचमोऽध्यायः ॥ ५॥ पंचषष्टिश्लोकवर्यैःशत श्लोकाधिकेरथ ॥ गायत्र्याश्चमहादेव्यानाम्नांसाहस्रमुच्यते ॥१ ॥ अथनारदःसर्वाभीष्टप्रदंसर्वानुष्ठानन्यूनतापूर्तिकरंगायत्रीसहस्रनामस्तोत्रंश्रोतुकामःपृच्छति । भगवन्सर्वधर्मज्ञइति ॥ १ ॥ विद्यावेदविद्या ॥ २॥ ३ ॥ ४ ॥ ५ ॥ भगवताब्रह्मणा ॥ ६ ॥ ७ ॥ मातृकाक्षरैरिति ॥ मातृकामंत्रषडंगमेवास्यषडंगमित्यर्थः ॥८॥ प्रातःकालिकगायत्रीसंध्यारूपायादे व्याध्यानमाह । रक्तेति ॥ रक्तश्वेतहिरण्यनीलधवलैर्नानावर्णविशिष्टैर्मणिगणैर्युक्तामित्यर्थः ॥ प्रातःसंध्यायाश्चतुर्वक्त्रत्वात्पंचमुखत्वेनवर्णनंनयुक्तमितिमणिगणैरित्यस्यैवविशेषणंयु क्तम् ॥ रक्तनवस्रजंरक्तपुष्पस्रजमित्यर्थः ॥ कुंडंकुंडिकामंबुजंचकरतलाभ्यांव्यानद्धंधृतंयया ॥ वरमिष्टम् ॥ स्रजमक्षमालाम् ॥ ९ ॥ अथमातृकाक्षरक्रमेणैवसहस्रनामान्युच्यंते ॥

अपुत्रःप्राप्नुयात्पुत्रंधनार्थीधनमाप्नुयात्॥सर्वतीर्थतपोदानयज्ञयोगफलंलभेत् ॥२६॥ भोगान्भुक्त्वाचिरंकालमंतेमोक्षमवाप्नुयात्॥तपस्विभिः कृतंस्तोत्रंस्नानकालेतुयःपठेत्॥२७॥यत्रकुत्रजलेमग्नःसंध्यामज्जनजंफलम्॥लभतेनात्रसंदेहःसत्यंसत्यंचनारद ॥२८॥ शृणुयाद्योपितद्भक्त्या सतुपापात्प्रमुच्यते ॥ पीयूषसदृशंवाक्यंसंध्योक्तंनारदेरितम् ॥२९॥इतिश्रीदेवीभागवतेम० द्वादशस्कंधेगायत्रीस्तोत्रंनामपंचमोऽध्यायः॥५॥ नारदउवाच ॥ भगवन्सर्वधर्मज्ञसर्वशास्त्रविशारद ॥ श्रुतिस्मृतिपुराणानांरहस्यंत्वन्मुखाच्छ्रुतम् ॥१॥ सर्वपापहरंदेवयेनविद्याप्रवर्तते ॥ केन वाब्रह्मविज्ञानंकिंनुवामोक्षसाधनम् ॥२॥ ब्राह्मणानांगतिःकेनकेनवामृत्युनाशनम् ॥ ऐहिकामुष्मिकफलंकेनवापद्मलोचन ॥३॥ वक्तुमर्हस्यशे षेणसर्वंनिखिलमादितः ॥ श्रीनारायणउवाच ॥ साधुसाधुमहाप्राज्ञसम्यक्पृष्टंत्वयाऽनघ ॥४ ॥ शृणुवक्ष्यामियत्नेनगायत्र्यष्टसहस्रकम् ॥ नाम्नांशुभानांदिव्यानांसर्वपापविनाशनम् ॥५॥ सृष्ट्यादौयद्भगवतापूर्वंप्रोक्तंब्रवीमिते ॥ अष्टोत्तरसहस्रस्यऋषिर्ब्रह्माप्रकीर्तितः ॥६ ॥छंदोनु ष्टुप्तथादेवीगायत्रीदेवतास्मृता ॥ हलोबीजानितस्यैवस्वराःशक्तयईरिताः ॥ ७ ॥ अंगन्यासकरन्यासावुच्येतेमातृकाक्षरैः ॥ अथध्यानंप्रव क्ष्यामिसाधकानांहितायवै ॥८॥ रक्तश्वेतहिरण्यनीलधवलैर्युक्तांत्रिनेत्रोज्ज्वलांरक्तांरक्तनवस्रजंमणिगणैर्युक्तांकुमारीमिमाम् ॥ गायत्रींकमला सनांकरतलव्यानद्धकुंडांबुजांपद्माक्षींचवरस्रजंचदधतींहंसाधिरूढांभजे ॥ ९॥ अचिंत्यलक्षणाव्यक्ताप्यर्थमातृमहेश्वरी॥ अमृतार्णवमध्यस्था प्यजिताचापराजिता ॥ १० ॥ अणिमादिगुणाधाराप्यर्कमंडलसंस्थिता ॥ अजराऽजाऽपराऽधर्माअक्षसूत्रधराऽधरा ॥ ११ ॥

तत्रप्रथमतोचिंत्यलक्षणेत्यारभ्यांत्यजार्चितेत्यंतान्यकारादीनिपंचत्रिंशन्नामान्याह । अचिंत्यलक्षणेति ॥ अबुद्धिगम्यलक्षणेत्यर्थः॥ यतोवाचोनिवर्तंतेइतिश्रुतेः॥ अव्यक्ताअस्पृष्टानाम रूपरहितेत्यर्थः ॥ तद्धेदंतर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यांव्याक्रियतइतिश्रुतेः ॥ अर्थमातरः प्रपंचरूपार्थपरिच्छेदकाब्रह्मादयस्तेषांमहेश्वरीनियंत्री ॥ अपिशब्दःसंध्यभावायाऽसंदे हार्थः ॥ अजितानान्यैर्जिता ॥ अपराजितायुद्धेनपराजितानपराजयंप्राप्ता ॥ अजितापराजितेअष्टपीठशक्त्यंतर्गतेदेवतेवा ॥ १० ॥ अणिमादिगुणाअणिमादिसिद्धयस्तेषामाधारा आश्रयभूता ॥ अजाअजामेकामितिश्रुतेः ॥ नपरोधिकोयस्याःसाऽपरा ॥ नधर्मोजात्यादिनिमित्तोयस्याःसाऽधर्मा ॥ अधरानिकृष्टरूपापीयमेव ॥ ११ ॥

अकारआदिर्यस्याःक्षकारोऽन्तेयस्याःसा ॥ मातृकारूपिणीत्यर्थः ॥१२॥ अदितिर्देवमाता ॥ अजपागायत्री॥ अविद्याजीवोपाधिस्तस्यध्वंसिनी ॥ १३ ॥ अजाछागी ॥ अजमुखंब्रह्ममुखंतस्मिन्निवासोयस्याः ॥ अर्धमात्राअर्धमात्रास्थितानित्येत्युक्ता॥अर्थदानंपुरुषार्थचतुष्टयदानंतस्यज्ञा ज्ञात्रीत्यर्थः॥१४॥अंत्यजामातंगीरूपिणीतयार्चिताप्रजिताआदिलक्ष्मीरित्यारभ्यांतरध्वांतनाशिनीत्यन्तान्याकारादीनिद्वाविंशतिनामानि॥आदिलक्ष्मीःसाम्यावस्थमायाशबलब्रह्ममूर्तिः ॥ तप्तकांचनवर्णाभातप्तकांचनभूषणेतिरहस्योक्तामहालक्ष्मीः ॥आदिशक्तिर्माया ॥ आकृतिराकाररूपिणी ॥ आयतंहास्येनविस्तृतमाननंयस्याः ॥ १५ ॥ आदित्यपदवीआदित्यमार्गस्तास्मिंश्चारश्चरणंयस्याः॥ आदित्येनादितिपुत्रेणपरिसेविता॥ आचार्यास्वयंव्याख्यात्री ॥ आवर्तनाजगद्वर्तयित्री ॥ आचारादक्षिणाचाराद्याचाररूपिणी ॥ आदिमूर्तिर्ब्रह्मतस्मिन्निवासशीला ॥ १६ ॥ आग्नेयीअग्निदेवताकाऽऽग्नेयीदिशावा॥ आमरीअमराणामियंपुरीआमरी ॥ अमरावतीरूपिणीत्यर्थः॥ आधारोमूलाधारःसनिलयोवासस्थानंयस्याःकुण्डालिन्याःसाआधारासर्वाधाररूपिणी ॥ आकाशांतोहंकारतत्त्वंतस्मिन्नाकाशस्यलयात्तस्मिन्निवासशीला ॥१७ ॥ अंतरेदेहमध्येभवआकाशोदहराकाशस्तद्रूपिणी ॥ आंतरध्वांतमविद्यांधकारस्तस्यनाशिनी ॥ १८ ॥ इंदिरेत्यारभ्येंद्राक्षीत्यंतानित्रयोदशह्रस्वेकारा

अकारादिक्षकारांताप्यरिषड्वर्गभेदिनी ॥ अंजनादिप्रतीकाशाप्यंजनाद्रिनिवासिनी ॥ १२ ॥ अदितिश्चाजपाविद्याप्यरविंदनिभेक्षणा ॥ अंतर्बहिःस्थिताविद्याध्वंसिनीचांतरात्मिका ॥ १३ ॥ अजाचाजमुखावासाप्यरविंदनिभानना ॥ अर्धमात्रार्थदानज्ञाप्यरिमंडलमर्दिनी ॥ ॥ १४ ॥ असुरघ्नीह्यमावास्याप्यलक्ष्मीघ्न्यंत्यजार्चिता ॥ आदिलक्ष्मीश्चादिशक्तिराकृतिश्चायतानना ॥ १५ ॥ आदित्यपदवीचाराप्यादित्यपरिसेविता ॥ आचार्यावर्तनाचाराप्यादिमूर्तिनिवासिनी ॥ १६ ॥ आग्नेयीचामरीचाद्याचाराध्याचासनस्थिता ॥ आधारनिलयाधाराचाकाशांतनिवासिनी ॥ १७ ॥ आद्याक्षरसमायुक्ताचांतराकाशरूपिणी ॥ आदित्यमंडलगताचांतरध्वांतनाशिनी ॥ १८ ॥ इंदिराचेष्टदाचेष्टाचेंदीवरनिभेक्षणा ॥ इरावतीचेंद्रपदाचेंद्राणीचेंदुरूपिणी ॥ १९ ॥ इक्षुकोदंडसंयुक्ताचेषुसंधानकारिणी ॥ इंद्रनीलसमाकाराचेडापिंगलरूपिणी ॥ २० ॥ इंद्राक्षीचेश्वरीदेवीचेहात्रयविवर्जिता ॥ उमाचोषाह्युडुनिभाउर्वारुकफलानना ॥ २१ ॥ उडुप्रभाचोडुमतीह्युडुपाह्युडुमध्यगा ॥ ऊर्ध्वंचाप्यूर्ध्वकेशीचाप्यूर्ध्वाधोगतिभेदिनी ॥ २२ ॥ ऊर्ध्वबाहुप्रियाचोर्मिमालावाग्ग्रंथदायिनी ॥ ऋतंचर्षिर्ऋतुमतीऋषिदेवनमस्कृता ॥ २३ ॥ ऋग्वेदाऋणहर्त्रीचऋषिमंडलचारिणी ॥ ऋद्धिदाऋजुमार्गस्थाऋजुधर्माऋतुप्रदा ॥ २४ ॥

दीनिनामानि ॥ चकारःसंध्यभावार्थः ॥ इरावती इराभूवाक्सुरांबुष्विति मेदिनीकोशात्भूवाक्सुरांबुमतीत्यर्थः ॥ १९ ॥ इक्षुकोदण्डःपौण्ड्रेक्षुधनुस्तेनसंयुक्ता पौण्ड्रेक्षुपाशांकुशपुष्पबाणहस्तेनमस्तेजगदेकमातरितिललिताध्यानेउक्तत्वात् ॥ २० ॥ इंद्राक्षीशताक्षीनाम्नीदेवता ॥ ईश्वरीदेवी ॥ ईहात्रयविवर्जितेतिनामद्वयंदीर्घेकारादिकम् ॥ ईश्वरीणांदेवीश्वरीदेवी ॥ ईहात्रयमेषणात्रयंतेनविवर्जिता ॥ उमेत्यारभ्योडुमध्यगेत्यंतान्यष्टौह्रस्वोकारादीनिनामानि ॥ उमाप्रसिद्धा ॥ उषारात्रिशेषरूपिणीबाणासुरसुतावा॥उषाबाणसुतारात्र्योरितिमेदिनी उडुनिभानक्षत्रसदृशी ॥ उर्वारुकंकर्कटी ॥२१॥ उडुपापोतरूपिणीचंद्ररूपिणीवा ॥ ऊर्ध्वादीन्यूर्मिमालावाग्ग्रन्थदायिनीत्यंतानिपंचदीर्घोकारादीनिनामानि॥ ऊर्ध्वंमूर्ध्वदेशरूपिणी॥ ऊर्ध्वाधोगतिरुच्चनीचगतिस्तस्याभेदिनी ॥ २२ ॥ ऊर्मिमालासमुद्रतरंगमालातद्वद्वाचाग्रन्थःकवितारूपोवातस्यदायिनी ॥ ऋतमित्यादीनिऋज्वीत्यंतानित्रयोदशह्रस्वऋकारादीनिनामानि ॥ ऋतंसूनृतवाणीरूपाऋषिदेवरूपा ॥ ऋतुमतीरजस्वला ॥ २३ ॥ २४ ॥

दीर्घऋकारादिनाम्नामप्रसिद्धत्वात्तानिनोक्तानि ॥ ऌकारादिनामान्यप्यप्रसिद्धानियद्यपितथापिऌकारेलकारस्यसत्त्वात्तदादिकमेवनामत्रयमुच्यते ॥ लूतारिवरसंभूता ॥भुक्तेलूतातूर्णनाभपिपीलिकगदांतरेइतिमेदिनीकोशाल्लूतारोगविशेषस्तस्याऽरिवरःशत्रुश्रेष्ठस्तन्नाशकोमंत्रःससंभूतोयस्याःसा ॥ २५ ॥ एकाक्षरेत्यारभ्यनामचतुष्टयमेकारवर्णादिकमर्थस्तुस्पष्टएव ॥ ऐंद्रीत्यादिनामत्रयमैकारादिकम् ॥ ऐहिकामुष्मिकफलस्यप्रदात्रीत्यर्थः ॥२६॥ ओंकारेत्यादीनिचत्वारिनामान्योकारादीनि ॥ ओंकाराप्रणवरूपिणी ॥ ओतामणिषुसूत्रवत्सर्वाभ्यंतरेस्थिता ॥कस्मिन्निदमोतंचेतिश्रुत्यापरमात्मनिसर्वंजगदोतंचप्रोतंचास्तीति तस्मिन्नोतप्रोतजगीतिनवसतितच्छीलाओतप्रोतनिवासिनीत्यर्थः ॥ औवेंत्यादिनामत्रयमौकारादिकम् ॥ उर्व्यांभवाऔर्वा ॥२७॥अनुस्वारादिकमेकंनाम ॥ विसर्गादिकमेकंनाम ॥ अंडमध्यस्थितानांशक्तीनांदेवीत्यर्थः ॥ अःकाररूपोविसर्गरूपोयोमंत्रस्तद्रूपिणी ॥तंत्रराजेविसर्गस्यशक्त्यात्मकत्वेनवर्णनात् ॥ मायाशक्त्यभिधःसर्गःसर्वभूतात्मकःप्रभुरितितंत्रांतरोक्तेश्च कात्यायनीत्यारभ्यकुक्षिस्थाखिलविष्टपेत्यंतानिएकोनसप्ततिककारादीनिनामानि ॥२८॥करवीरपुरवा

ऋग्वेदनिलयाऋज्वीलुप्तधर्मप्रवर्तिनी ॥ लूतारिवरसंभूतालूतादिविषहारिणी ॥२५॥ एकाक्षराचैकमात्राचैकाचैकैकनिष्ठिता ॥ ऐंद्रीह्यैरावतारूढा चैहिकामुष्मिकप्रदा ॥२६॥ ओंकारह्योषधीचोताचोतप्रोतनिवासिनी ॥ और्वाह्यौषधसंपन्नाऔपासनफलप्रदा ॥२७॥ अंडमध्यस्थितादेवी चाःकारमनुरूपिणी ॥ कात्यायनीकालरात्रिःकामाक्षीकामसुन्दरी ॥२८॥ कमलाकामिनीकांताकामदाकालकंठिनी ॥ करिकुंभस्तनभरा करवीरसुवासिनी ॥२९॥ कल्याणीकुंडलवतीकुरुक्षेत्रनिवासिनी ॥ कुरुविंददलाकाराकुंडलीकुमुदालया ॥३०॥ कालजिह्वाकरालास्याकालिकाकालरूपिणी ॥ कमनीयगुणाकांतिःकलाधाराकुमुद्वती ॥३१॥ कौशिकीकमलाकाराकामचारप्रभंजिनी ॥ कौमारीकरुणापांगीककुबंताकरिप्रिया ॥३२॥ केसरीकेशवनुताकदंबकुसुमप्रिया ॥ कालिंदीकालिकाकांचीकलशोद्भवसंस्तुता ॥ ३३ ॥ काममाताक्रतुमतीकामरूपाकृपावती ॥ कुमारीकुण्डनिलयाकिरातीकीरवाहना ॥३४॥ कैकेयीकोकिलालापाकेतकीकुसुमप्रिया ॥ कमंडलुधराकालीकर्मनिर्मूलकारिणी ॥ ॥३५॥ कलहंसगतिःकक्षाकृतकौतुकमंगला ॥ कस्तूरीतिलकाकम्राकरींद्रगमनाकुहूः ॥३६॥ कर्पूरलेपनाकृष्णाकपिलाकुहराश्रया ॥ कूटस्थाकुधराकम्राकुक्षिस्थाखिलविष्टपा ॥ ३७ ॥ खड्गखेटकराखर्वाखेचरीखगवाहना ॥ खट्वांगधारिणीख्याताखगराजोपरिस्थिता ॥ ३८ ॥

सिनी ॥ करवीरंकृपाणीस्याद्दैत्यभेदाश्वमारयोरितिमेदिनीकोशात् ॥ करवीरोदैत्यविशेषस्तेनपूजितासुवासिनीत्यर्थः ॥ यद्वा करवीरंमहालक्ष्मीक्षेत्रंतत्रनिवसनशीलेत्यर्थः ॥२९॥कुरुविंददलाकारा कुरुविंदंरत्नभेदेमुस्ताकुल्माषयोःपुमानितिमेदिनीकोशान्मुस्तादलाकारेत्यर्थः ॥ ३० ॥ ३१ ॥ कामचारोयथेष्टाचरणंतस्यनाशिनी ॥ ककुबंताककुभांदिशानामंताऽवसानरूपा ॥ ३२ ॥ केसरीसिंहरूपिणीत्यर्थः ॥ कलशोद्भवोऽगस्त्यस्तेनसंस्तुता ॥ ३३ ॥ कुण्डमग्निहोत्रकुंडंतन्निलया ॥ ३४॥ केतकीतिस्वतन्त्रंनाम ॥कुसुमप्रियेतिस्वतंत्रंनामकालीत्यत्रक्रूरेत्यपिपाठः ॥ ३५ ॥ कक्षेत्यत्रकुब्जेत्यपिपाठः ॥ ३६॥ कृष्णेत्यत्रकृष्टेत्यपिपाठः ॥ कृष्टाआकृष्टा ॥ कम्रेतिपुनरुक्तंनाम ॥ तदर्थस्तुपूर्वत्रकम्रासुंदरी ॥ द्वितीयकम्रानाम्नीकाचनदेवांगना ॥ कंप्रेतिपाठेनपुनरुक्तिः ॥ ३७ ॥ खड्गखेटकेरत्यारभ्यखण्डेन्दुतिलकेत्यंतानिएकादश खकारादीनिनामानि ॥ खड्गखेटकेरतिएकंनामबोध्यम् ॥ ३८ ॥

खंडाख्यानप्रदायिनी ॥ खंडःपानांतरभेदेइतिमेदिनीकोशात् खंडःपानशास्त्रभेदशास्त्रंवातस्याख्यानदायिनी ॥ गंगेत्यारभ्यगुह्यमण्डलवर्तिनीत्यंतानिषट्त्रिंशद्गकारादीनिनामानि ॥ गणेशगुहपूजितेत्येकंनाम ॥३९॥ गामिनीगमनशीला ॥ गाधाप्रतिष्ठारूपिणी॥ गन्धर्वाप्सरेत्यत्रसकारलोपआर्षः ॥४०॥ गोत्रापृथ्वी ॥ गमी गमोनाक्षविवर्तेस्यादपर्यालोचनेध्वनी तिमेदिनीकोशाद्गमःपर्यालोचनंतद्यस्यास्तीत्यर्थेऽर्शआद्यच् ॥ तस्यस्त्रीत्यर्थेपुंयोगादाख्यायामितिङीष् ॥ ४१ ॥४२॥४३॥ गोकर्णस्थानासक्ता ॥ घर्मदेत्यारभ्यघनवेगिनीत्यंतानिच तुर्दशघकारादीनिनामानि॥ ४४ ॥ घृणिमन्त्रःसूर्यमन्त्रः ॥४५॥ घनैर्निबिडमरिमंडलंदैत्यरूपंयस्याःसा ॥ ङकारादिनाम्नोऽप्रसिद्धत्वाज्जञोर्ज्ञइत्यक्षरंनिष्पन्नंतस्यकश्चिद्भाषायांङ काररूपेणोच्चारात्तदादिकमेकमेवनामज्ञानधातुमयीत्युच्यते ॥ ज्ञानधातुश्चिद्धातुस्तन्मयी ॥ चर्चेत्यारभ्यचारुहेतुकीत्यंतानिचकारादीन्येकोनपंचाशन्नामानि ॥ चर्चापरिभाषणक्रिया रूपा ॥ चर्चितांचंदनादिना ॥ ४६ ॥४७॥ चूलिकानाटकस्यांगकर्णमूलेचहस्तिनामितिमेदिनी ॥ चन्द्रमा कर्णकुण्डलंयस्याःसा ॥ चन्द्रवदाह्लादकरोहासोयस्याः ॥ खड्गरूपावा ॥

खलघ्नीखंडितजराखंडाख्यानप्रदायिनी ॥ खण्डेन्दुतिलकागङ्गागणेशगुहपूजिता॥३९॥गायत्रीगोमतीगीतागांधारीगानलोलुपा ॥गौतमीगा मिनीगाधागंधर्वाप्सरसेविता ॥४०॥ गोविंदचरणाक्रांतागुणत्रयविभाविता ॥ गंधर्वीगह्वरीगोत्रागिरीशागहनागमी ॥ ४१ ॥ गुहावासागुण वतीगुरुपापप्रणाशिनी ॥ गुर्वीगुणवतीगुह्यागोप्तव्यागुणदायिनी ॥४२ ॥ गिरिजागुह्यमातंगीगरुडध्वजवल्लभा ॥ गर्वापहारिणीगोदागोकुल स्थागदाधरा॥४३॥ गोकर्णनिलयासक्तागुह्यमंडलवर्तिनी॥ घर्मदाघनदाघंटाघोरदानवमर्दिनी॥४४॥घृणिमंत्रमयीघोषाघनसंपातदायिनी॥ घंटारवप्रियाघ्राणाघृणिसंतुष्टकारिणी ॥४५॥ घनारिमंडलाघूर्णाघृताचीघनवेगिनी ॥ ज्ञानधातुमयीचर्चाचर्चिताचारुहासिनी ॥४६॥ चटु लाचंडिकाचित्राचित्रमाल्यविभूषिता ॥ चतुर्भुजाचारुदंताचातुरीचरितप्रदा ॥४७॥ चूलिकाचित्रवस्त्रांताचन्द्रमःकर्णकुण्डला ॥ चन्द्रहासा चारुदात्रीचकोरीचन्द्रहासिनी ॥४८॥ चन्द्रिकाचन्द्रधात्रीचचौरीचौराचचंडिका ॥ चंचद्वाग्वादिनीचन्द्रचूडाचोरविनाशिनी॥४९॥चारु चन्दनलिप्तांगीचंचच्चामरवीजिता ॥ चारुमध्याचारुगतिश्चंदिलाचन्द्ररूपिणी ॥५० ॥ चारुहोमप्रियाचार्वाचरिताचक्रबाहुका ॥ चन्द्रमं डलमध्यस्थाचन्द्रमंडलदर्पणा ॥ ५१ ॥ चक्रवाकस्तनीचेष्टाचित्राचारुविलासिनी ॥ चित्स्वरूपाचन्द्रवतीचन्द्रमाश्चंदनप्रिया ॥ ५२ ॥ चोदयित्रीचिरप्रज्ञाचातकाचारुहेतुकी ॥ छत्रयाताछत्रधराछायाछंदःपरिच्छदा ॥ ५३ ॥ छायादेवीछिद्रनखाछन्नेन्द्रियविसर्पिणी ॥ छंदोनुष्टुप्प्रतिष्ठांताछिद्रोपद्रवभेदिनी ॥ ५४ ॥

चन्द्रस्यहासिनीहसनशीला ॥ चन्द्रापेक्षयास्वस्यातिशयाह्लादजनकत्वात् ॥४८॥ चौरीचुराशीलमस्याःसा ॥ चौरा चौरःपाटच्चरेपिस्याच्चौरापुष्पौषधावपीतिमेदिनीकोशादौषधिविशे षरूपा ॥४९॥ चन्दिलाकर्नाटदेशेप्रसिद्धादेवता ॥ चन्द्रिकेत्यपिपाठः ॥ ५० ॥ चक्रंसुदर्शनंबाहौहस्तेयस्याःसा ॥ ५१ ॥ चन्द्रमास्तत्स्वरूपा ॥ ५२ ॥ चोदयित्रीप्रेरयित्रीचारुहेतु र्जगत्सर्जनेयस्याः ॥ गौरादिपाठात्साधुत्वम् ॥ छत्रयातेत्यारभ्यछेदनप्रियेत्यंतानिचतुर्दशछकारादीनिनामानि ॥ छन्दःपरिच्छदा ॥ छन्दोवशेप्यभिप्रायेइतिमेदिनीकोशात्कोपिच्छं दोग्राह्यः ॥५३ ॥ छायायादेवीस्वामिनी ॥ छिद्रनखा ॥ छिद्रंदूषणरंध्रयोरितिमेदिनीकोशात्रंध्रवंतिनखानियस्याः ॥ छन्नेंद्रियाउपसंहृतेंद्रियाःपुरुषायोगिनस्तेषुविसर्पतिगच्छतित च्छीला ॥ छन्दःसंज्ञकायाऽनुष्टुप्तस्याःप्रतिष्ठायाःस्थलस्यांतःसमाप्तिःअनुष्टुप्छन्दस्कमंत्रबोध्येत्यर्थः ॥ छिद्रोपद्रवाःकपटोपद्रवास्तेषांभेदिनी ॥ ५४ ॥

जननीत्यारभ्यकुंडलेत्यंतानिचत्वारिंशज्जकारादीनिनामानि ॥५५॥ ५६ ॥ ५७ ॥ ५८ ॥ जितेनजयेनाक्रांताःपुरुषास्तन्मयी ॥ ज्याघोषास्फोटोदिङ्मुखेयस्याःसाज्याघोषास्फोटदि
ङ्मुखा ॥ ज्याघोषव्याप्तदिगंतेत्यर्थः ॥ ५९ ॥ जंभिनी ॥ जंभोभक्ष्येवदंतेचेतिकोशाद्भक्ष्यवतीदंतवतीवेत्यर्थः॥झिंझिकेत्यारभ्यचत्वारिझकारादीनिनामानि ॥ झिंझिकापक्षिविशेषो
यस्यभाषायांझिंगुरवाइतिप्रसिद्धिरस्ति ॥ झणइतिनिर्घोषोयस्याः ॥ झंझावातेतारवायाविति कोशात् झंभामारुतोभयंकरवातस्तद्वद्वेगोयस्याः ॥ ६० ॥ ञकारादिकंनामद्वयम् ॥
ञरूपा ॥ ञःपुमान्स्याद्बलीवर्देशुकेवाममतावपीतिकोशाद्बलीवर्दरूपा॥ञःशुकोभुजेहस्तेयस्याःसा श्यामलांगिका॥ञभुजाञवद्बलीवर्दवद्भुजोयस्याइति वा ॥ टंकबाणेत्यादीनिषट्
कारादीनिनामानि ॥ टंकःपरशुः ॥ ६१ ॥ टंकीगणवत्रुद्रगणवत्कृतआघोषोययासा ॥ टंकनीयंवर्णनीयंमहोरोयस्याःसा टंकारकारिणीनांटंकारशब्दंकुर्वतीनांदेवीनांदेवीस्वामिनी

छेदाछत्रेश्वरीछिन्नाछुरिकाछेदनप्रिया॥जननीजन्मरहिताजातवेदाजगन्मयी॥५५॥ जाह्नवीजटिलाजेत्रीजरामरणवर्जिता॥जंबूद्वीपवतीज्वा
लाजयंतीजलशालिनी॥५६॥जितेंद्रियाजितक्रोधाजितामित्राजगत्प्रिया ॥ जातरूपमयीजिह्वाजानकीजगतीजरा॥५७॥ जनित्रीजह्नुतनया
जगत्त्रयहितैषिणी॥ ज्वालामुखीजपवतीज्वरघ्नीजितविष्टपा॥५८॥जिताक्रांतमयीज्वालाजाग्रतीज्वरदेवता ॥ज्वलंतीजलदाज्येष्टाज्याघोषा
स्फोटदिङ्मुखी॥५९॥जंभिनीजृंभणाजृंभाज्वलन्माणिक्यकुंडला॥झिंझिकाझणनिर्घोषाझंझामारुतवेगिनी॥६०॥झल्लरीवाद्यकुशलाञरूपाञ
भुजास्मृता॥टंकबाणसमायुक्काटंकिनीटंकभेदिनी ॥६१॥टंकीगणकृताघोषाटंकनीयमहोरसा ॥टंकारकारिणीदेवीठठशब्दनिनादिनी॥६२॥
डामरीडाकिनीडिंभाडुंडमारैकनिर्जिता ॥ डामरीतंत्रमार्गस्थाडमड्डमरुनादिनी ॥६३॥ डिंडीरवसहाडिंभलसत्क्रीडापरायणा॥ ढुंढिविघ्नेश
जननीढक्काहस्ताढिलिव्रजा ॥६४॥ नित्यज्ञानानिरुपमानिर्गुणानर्मदानदी॥त्रिगुणात्रिपदातंत्रीतुलसीतरुणातरुः ॥६५॥ त्रिविक्रमपदाक्रांता
तुरीयपदगामिनी॥तरुणादित्यसंकाशातामसीतुहिनातुरा ॥६६॥ त्रिकालज्ञानसंपन्नात्रिवलीचत्रिलोचना ॥ त्रिशक्तिस्त्रिपुरातुंगातुरंगवदना
तथा॥६७॥ तिमिंगिलगिलातीव्रात्रिस्रोतातामसादिनी ॥ तंत्रमंत्रविशेषज्ञातनुमध्यात्रिविष्टपा॥६८॥त्रिसन्ध्यात्रिस्तनीतोषासंस्थातालप्रता
पिनी ॥ ताटंकिनीतुषाराभातुहिनाचलवासिनी ॥६९॥ तंतुजालसमायुक्तातारहारावलिप्रिया ॥ तिलहोमप्रियातीर्थातमालकुसुमाकृतिः॥
॥७०॥ तारकात्रियुतातन्वीत्रिशंकुपरिवारिता ॥ तलोदरीतिलाभूषाताटंकप्रियवाहिनी ॥७१॥ त्रिजटातित्तिरीतृष्णात्रिविधातरुणाकृतिः ॥
तप्तकांचनसंकाशातप्तकांचनभूषणा ॥ ७२ ॥

त्यर्थः ॥ ठकारादिकमेकमेवनाम ॥ ६२ ॥ डकारादीन्यष्टौनामानि ॥ डिंभाबालरूपा ॥ डुंडुमारोराक्षसः ॥ ६३ ॥ डिंडीरवोवाद्यविशेषरवस्तस्यसहा सहनकर्त्री ॥ ढकारादी
नित्रीणिनामानि ॥ ढुंढिविघ्नेशोढुंढिराजः ॥ ढिलिनामकागणाःशिवपुराणेप्रसिद्धास्तेषांव्रजःसमुदायोयस्याःसा ॥ ६४ ॥ णकारादिनाम्नोऽप्रसिद्धत्वात्तत्स्थानेनकारादिनामपंचक
माह । नित्यज्ञानेति ॥ त्रिगुणेत्यारभ्यतकारादीनिद्विषष्टिनामानि ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ त्रिस्तनीमलयध्वजराज्ञःकन्यापार्वतीहलास्यमाहात्म्येतटाकानाम्नाप्रसिद्धा ॥
तोषेसंतोषेआसंस्थासम्यक्स्थितिर्यस्याःसा ॥ ६९ ॥ ७० ॥ त्रिभिर्गुणैर्वेदत्रयेणवासुतायुक्ता ॥ तन्वीत्यत्रतंत्रीत्यपिपाठः ॥ ७१ ॥ ७२ ॥

॥७३॥ त्रिभंगीस्थानत्रयेवक्रतायुक्ता ॥ तनुस्तन्वीवल्लरीदेहलतायस्याःसा ॥ थकारादीनित्रीणिनामानि थात्कारीथादितिशब्दंकुर्वती ॥ थारवा । थंरक्षणमंगलेचसाध्वसेचनपुंसकम् शिलोच्चयेपुमानेवकचित्तुभयरक्षकेइतिमेदिनीकोशात्–भयरक्षकआरवःशब्दोयस्याःसा ॥ थांताथस्यमंगलस्यांतापर्यवसानभूमिः ॥ दोहिनीत्यारभ्यदकारादीनिसप्तविंशतिनामानि॥ ॥ ७४ ॥ दिवायुक्तारात्रिर्दिवारात्रिः ॥ ७५ ॥ ७६ ॥ दंडिनीवाराहीललितोपाख्यानेप्रसिद्धा ॥ ७७ ॥ धात्रीत्यारभ्यधकारादीनिविंशतिनामानि ॥ ७८ ॥ ७९ ॥ ८० ॥ नंदेत्यार

त्रैयंबकात्रिवर्गाचत्रिकालज्ञानदायिनी ॥ तर्पणातृप्तिदातृप्तातामसीतुंबुरुस्तुता ॥७३ ॥ तार्क्ष्यस्थात्रिगुणाकारात्रिभंगीतनुवल्लरिः ॥ थात्कारीथारवाथांतादोहिनीदीनवत्सला ॥७४॥ दानवांतकरीदुर्गादुर्गासुरनिबर्हिणी ॥ देवरीतिर्दिवारात्रिर्द्रौपदीदुंदुभिस्वना ॥७५॥ देवयानीदुरावासादारिद्र्योद्भेदिनीदिवा ॥ दामोदरप्रियादीप्तादिग्वासादिग्विमोहिनी॥७६॥दंडकारण्यनिलयादंडिनीदेवपूजिता॥ देववंद्यादिविषदाद्वेषिणीदानवाकृतिः ॥७७॥ दीनानाथस्तुतादीक्षादैवतादिस्वरूपिणी ॥ धात्रीधनुर्धराधेनुर्धारिणीधर्मचारिणी ॥७८॥ धरंधराधराधाराधनदाधान्यदोहिनी ॥ धर्मशीलाधनाध्यक्षाधनुर्वेदविशारदा॥७९॥ धृतिर्धन्याधृतपदाधर्मराजप्रियाध्रुवा॥धूमावतीधूमकेशीधर्मशास्त्रप्रकाशिनी ॥ ॥८०॥ नंदानंदप्रियानिद्रा नृनुतानंदनात्मिका॥नर्मदानलिनीनीलानीलकंठसमाश्रया॥८१॥नारायणप्रियानित्यानिर्मलानिर्गुणानिधिः ॥ निराधारानिरुपमानित्यशुद्धानिरंजना ॥८२॥ नादबिंदुकलातीतानादबिंदुकलात्मिका ॥ नृसिंहिनीनगधरानृपनागविभूषिता॥८३॥ नरकक्लेशशमनीनारायणपदोद्भवा ॥ निरवद्यानिराकारानारदप्रियकारिणी ॥ ८४ ॥ नानाज्योतिःसमाख्यातानिधिदानिर्मलात्मिका ॥ नवसूत्रधरानीतिर्निरुपद्रवकारिणी ॥८५॥ नंदजानवरत्नाढ्यानैमिषारण्यवासिनी ॥ नवनीतप्रियानारीनीलजीमूतनिस्वना॥॥८६॥ निमेषिणीनदीरूपानीलग्रीवानिशीश्वरी ॥ नामावलिर्निशुंभघ्नीनागलोकनिवासिनी ॥८७॥ नवजांबूनदप्रख्यानागलोकाधिदेवता ॥ नूपुराक्रांतचरणानरचित्तप्रमोदिनी ॥८८॥निमग्नारक्तनयनानिर्घातसमनिस्वना ॥ नंदनोद्याननिलयानिर्व्यूहोपरिचारिणी ॥८९॥ पार्वतीपरमोदारापरब्रह्मात्मिकापरा ॥ पंचकोशविनिर्मुक्तापंचपातकनाशिनी॥९०॥ परचित्तविधानज्ञापंचिकापंचरूपिणी॥पूर्णिमापरमाप्रीतिःपरतेजःप्रकाशिनी ॥ ॥ ९१ ॥ पुराणीपौरुषीपुण्यापुंडरीकनिभेक्षणा ॥ पातालतलनिर्मग्नाप्रीताप्रीतिविवर्धिनी ॥ ९२ ॥

भ्यनकारादीनिपंचपंचाशन्नामानि ॥ ८१ ॥ ८२ ॥ नृसिंहिनी नृसिंहउपासकोस्तियस्याःसा नृसिंहवेषवतीवा ॥ नृपनागविभूषितेतिएकंनाम ॥ ८३ ॥ ८४॥ ज्योतिर्ज्योतिःशास्त्रम् ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ पार्वतीत्यारभ्यपल्लवोदरीत्यंतानिपंचविंशत्यधिकशतनामानिपकारादीनि ॥ पंचब्रह्मात्मिकासद्योजातादिपंचब्रह्मात्मिका ॥ परब्रह्मात्मिकेत्यपिपाठः ॥ परेतिस्वतंत्रंनाम ॥ ९० ॥ पंचिकाश्रीविद्यायांपंचपंचिकाभूजनंदक्षिणामूर्तिसंहितादिषुवर्णितंतत्पंचिकादेवतारूपा ॥ पंचरूपिणीप्रपंचरूपिणी । परमाप्रीतिरितिनामद्वयम् ॥ ९१ ॥ पौरुषीपुरुषसंबंधिनी ॥ ९२ ॥

पादसहिताकिरणसहिता ॥ प्रजापतिस्तद्रूपिणी ॥ ९३ ॥ ९४ ॥ पुरंध्रीत्येकंनाम ॥ पुरवासिनीमातापुरवासिनी ॥ ९५ ॥ प्रज्ञावत्याःसुतेत्येकंनाम ॥ पुत्रपूज्यापुत्रेणपूज्येत्यर्थः ॥ ॥ ९६ ॥ ९७ ॥ पुंडरीकपुरंचिदंबरक्षेत्रम् ॥ ९८ ॥ ९९ ॥ प्रणवानांप्रस्तोत्रीणांदेवांगनानांगतिः ॥ पंचवाणीविस्तृतवाणी ॥ पंचिकाकाचिद्देवता ॥ १०० ॥ परप्रीतिरित्येकंनाम ॥ १ ॥ पंचभक्षामकारपंचकभक्षाःवामाचारिणस्तेषांप्रियआचारोयस्याःसा ॥ पूतनेत्येकंनाम ॥ ३ ॥ ४ ॥ ५ ॥ पाटलीत्येकंनाम ॥ ६ ॥ प्रणवाप्रणवरूपिणी ॥ ७ ॥ फलि

पावनीपादसहितापेशलापवनाशिनी ॥ प्रजापतिःपरिश्रांतापर्वतस्तनमंडला ॥९३॥ पद्मप्रियापद्मसंस्थापद्माक्षीपद्मसंभवा ॥ पद्मपत्रापद्मप दापद्मिनीप्रियभाषिणी॥९४॥पशुपाशविनिर्मुक्तापुरंध्रीपुरवासिनी॥पुष्कलापुरुषापर्वापारिजातसुमप्रिया॥९५॥ पतिव्रतापवित्रांगीपुष्पहास परायणा॥ प्रज्ञावतीसुतापौत्रीपुत्रपूज्यापयस्विनी ॥९६॥ पट्टिपाशधरापंक्तिःपितृलोकप्रदायिनी॥ पुराणीपुण्यशीलाचप्रणतार्तिविनाशिनी ॥९७॥ प्रद्युम्नजननीपुष्टापितामहपरिग्रहा ॥ पुंडरीकपुरावासापुंडरीकसमानना ॥९८॥ पृथुजंघापृथुभुजापृथुपादापृथूदरी ॥ प्रवालशोभापिं गाक्षीपीतवासाः प्रचापला ॥९९॥ प्रसवापुष्टिदापुण्याप्रतिष्ठाप्रणवागतिः ॥ पंचवर्णापंचवाणीपंचिकापंजरस्थिता ॥ १०० ॥ परमायापर ज्योतिःपरप्रीतिःपरागतिः ॥ पराकाष्ठापरेशानीपाविनीपावकद्युतिः ॥१ ॥ पुण्यभद्रापरिच्छेद्यापुष्पहासापृथूदरी॥ पीतांगीपीतवसनापीत शय्यापिशाचिनी ॥ २ ॥ पीतक्रियापिशाचघ्नीपाटलाक्षीपटुक्रिया ॥ पंचभक्षप्रियाचारापूतनाप्राणघातिनी ॥ ३ ॥ पुन्नागवनमध्यस्थापुण्य तीर्थनिषेविता ॥ पंचांगीचपराशक्तिःपरमाह्लादकारिणी ॥ ४ ॥ पुष्पकांडस्थितापूषापोषिताखिलविष्टपा ॥ पानप्रियापंचशिखापन्नगोपरि शायिनी ॥ ५ ॥ पंचमात्रात्मिकापृथ्वीपथिकापृथुदोहिनी ॥ पुराणन्यायमीमांसापाटलीपुष्पगंधिनी ॥ ६ ॥ पुण्यप्रजापारदात्रीपरमार्गैक गोचरा ॥ प्रवालशोभापूर्णाशाप्रणवापल्लवोदरी ॥७॥ फलिनीफलदाफल्गुःफूत्कारीफलकाकृतिः॥फणींद्रभोगशयनाफणिमंडलमंडिता॥८॥ बालबालाबहुमताबालातपनिभांशुका ॥ बलभद्रप्रियावंद्यावडवाबुद्धिसंस्तुता ॥ ९ ॥ बंदीदेवीबिलवतीबडिशघ्नीबलिप्रिया ॥ बांधवीबो धिताबुद्धिर्बंधूककुसुमप्रिया ॥ ११० ॥ बालभानुप्रभाकाराब्राह्मीब्राह्मणदेवता ॥ बृहस्पतिस्तुतावृंदावृंदावनविहारिणी ॥ ११ ॥ बालाकिनी बिलाहाराबिलवासाबहूदका ॥ बहुनेत्राबहुपदाबहुकर्णावतंसिका ॥ १२ ॥

नीत्यादीनि सप्तफकारादीनि नामानि ॥ ८ ॥ बालबालेत्यारभ्यब्रह्मकंकणसूत्रिणीत्यंतानिपंचाशद्बकारादीनिनामानि ॥ तत्रबवयोरभेदात्वकारादीनिनामान्यपिकानिचित्पवर्गीया दिनामसुपठयंते । बालबालाबालादपिबाला ॥ ९ ॥ बिलवतीबिलंकर्मच्छिद्रंतद्वतीतद्दृष्ट्रीत्यर्थः ॥ बडिशंकपटंतस्यहंत्रीत्यर्थः॥ ११०॥११॥बालाकिनी ॥ बलाकानांबकपंक्तीनांसमूहो बालाकंतदस्ति यस्याःसाबालाकिनी ॥ बिलाहाराकर्मच्छिद्रभक्षणकर्त्रीत्यर्थः ॥ बिलवासाबिलेगुहारूपेवासोयस्याःसा ॥ १२ ॥

॥ १३ ॥ बद्धगोधांगुलित्राणा ॥ गोधातलनिहाकयोरितिमेदिनीकोशात् गोधाहस्ततलस्तस्यत्राणमंगुलित्राणंचबद्धंययासा ॥ वीरलक्षणमेतत् बद्धगोधांगुलित्राणाःकालिंदीमभितो ययुरितिमहाभारतेविराटपर्वणिप्रसिद्धम् ॥ १४ ॥ १५ ॥ बडिस्था डलयोरभेदाद्वलिस्थेत्यर्थः ॥ बिंदुरव्यक्तमायात्मासादर्पणोयस्याः ॥ तत्रप्रतिबिंबितत्वात् ॥ मायायाबिंदुत्वं च नमस्तेसमस्तेशिबिंदुस्वरूपेइतिप्रपंचसारेस्पष्टम् ॥ बाणासनवतीधनुष्यहस्तेत्यर्थः ॥ १६ ॥ ब्रह्मकंकणसूत्रिणी ब्रह्मशब्देनब्रह्मविद्यादानंलक्षणयातद्विषयकंयत्कंकणंसूत्रंतदस्ति

बहुबाहुयुताबीजरूपिणीबहुरूपिणी ॥ बिंदुनादकलातीताबिंदुनादस्वरूपिणी ॥ १३ ॥ बद्धगोधांगुलित्राणाबदर्याश्रमवासिनी ॥ वृंदारका बृहत्स्कंधाबृहतीबाणपातिनी ॥ १४ ॥ वृंदाध्यक्षाबहुनुताबनिताबहुविक्रमा ॥ बद्धपद्मासनासीनाबिल्वपत्रतलस्थिता ॥ १५ ॥ बोधिद्रुम निजावासाबडिस्थाबिंदुदर्पणा॥बालाबाणासनवतीवडवानलवेगिनी॥१६॥ब्रह्मांडबहिरंतःस्थाब्रह्मकंकणसूत्रिणी॥भवानीभीषणवतीभाविनी भयहारिणी ॥१७॥ भद्रकालीभुजंगाक्षीभारतीभारताशया॥भैरवीभीषणाकाराभूतिदाभूतिमालिनी॥१८॥ भामिनीभोगनिरताभद्रदाभूरिवि क्रमा ॥ भूतवासाभृगुलताभार्गवीभूसुरार्चिता ॥१९॥ भागीरथीभोगवतीभवनस्थाभिषग्वरा ॥ भामिनीभोगिनीभाषाभवानीभूरिदक्षिणा॥ ॥ १२० ॥ भर्गात्मिकाभीमवतीभवबंधविमोचिनी ॥ भजनीयाभूतधात्रीरंजिताभुवनेश्वरी ॥२१॥ भुजंगवलयाभीमाभेरुंडाभागधेयिनी॥ मातामायामधुमतीमधुजिह्वामधुप्रिया ॥ २२ ॥ महादेवीमहाभागामालिनीमीनलोचना ॥ मायातीतामधुमतीमधुमांसामधुद्रवा ॥ २३ ॥ मानवीमधुसंभूतामिथिलापुरवासिनी ॥ मधुकैटभसंहर्त्रीमेदिनीमेघमालिनी ॥ २४ ॥ मंदोदरीमहामायामैथिलीमसृणप्रिया ॥ महालक्ष्मी महाकालीमहाकन्यामहेश्वरी ॥ २५ ॥ माहेंद्रीमेरुतनयामंदारकुसुमार्चिता ॥ मंजुमंजीरचरणामोक्षदामंजुभाषिणी ॥ २६ ॥ मधुरद्राविणीमु द्रामलयामलयान्विता ॥ मेधामरकतश्यामामागधीमेनकात्मजा ॥ २७ ॥ महामारीमहावीरामहाश्यामामनुस्तुता ॥ मातृकामिहिराभासा मुकुंदपदविक्रमा ॥ २८ ॥ मूलाधारस्थितामुग्धामणिपूरकवासिनी ॥ मृगाक्षीमहिषारूढामहिषासुरमर्दिनी ॥ २९ ॥ योगासनायोगगम्या· योगायौवनकाश्रया । यौवनीयुद्धमध्यस्थायमुनायुगधारिणी ॥ १३० ॥ यक्षिणीयोगयुक्ताचयक्षराजप्रसूतिनी ॥ यात्रायानविधानज्ञायदु वंशसमुद्भवा ॥ ३१ ॥यकारादिहकारांतायाजुषीयज्ञरूपिणी ॥ यामिनीयोगनिरतायातुधानभयंकरी ॥ ३२ ॥ रुक्मिणीरमणीरामारेव तीरेणुकारतिः ॥ रौद्रीरौद्रप्रियाकारारामभातारतिप्रिया ॥ ३३ ॥

यस्याःसा ॥ ब्रह्मविद्याप्रचारेत्यर्थः॥ भवानीत्यारभ्यभागधेयिनीत्यंतानिएकोनचत्वारिंशद्भकारादीनिनामानि ॥ १७ ॥ भारताशया भा स्वप्रकाशासंवित्तस्यांरतायेज्ञानिनस्तेषुआश योयस्याःसा ॥ १८ ॥ १९ ॥ १२० ॥ भूतधात्रीरंजितेत्येकंनाम ॥ ३१ ॥ मातेत्यारभ्यमहिषासुरमर्दिनीत्यंतानिचतुष्पंचाशन्मकारादीनिनामानि ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ योगासनेत्यारभ्ययातुधानभयंकरीत्यंतानियकारादीनिविंशतिनामानि ॥ १३० ॥ यक्षराजस्यप्रसूतिकाप्रसवित्री ॥ ३१ ॥ ३२ ॥ रुक्मिणीत्यार भ्यरुक्मभूषणेत्यंतानिसप्तत्रिंशद्रेफादीनिनामानि ॥ ३३ ॥

॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ लज्जेत्यारभ्यलोकधारिणीत्यंतानित्रयोदशलकारादीनिनामानि ॥ ३८ ॥ ३९ ॥ वरदेत्यारभ्यवाल्मीकिपरिसेवितेत्यंतानिसप्तत्रिंशद्वकारादीनिनामानि ॥ १४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ शाकंभरीत्यारभ्यशर्वरीवंद्येत्यंतानिएकोनत्रिंशच्छकारादीनिनामानि ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ षड्भाषेत्यारभ्यषडंगरूपसुमतिसुरासुरनमस्कृतेत्यंतानिपञ्चषकारादीनिनामानि ॥ षडाधारामूलाधारप्रभृतयस्तत्रस्थितानांदेवीनांदेवीस्वामिनी ॥ षडंगरूपायेसुमतिसुरास्तैरसुरैश्चनमस्कृतेत्यर्थः ॥ ४९ ॥ सर

रोहिणीराज्यदारेवारमाराजीवलोचना ॥ राकेशीरूपसंपन्नारत्नसिंहासनस्थिता ॥ ३४ ॥ रक्तमाल्यांबरधरारक्तगंधानुलेपना ॥ राजहंससमारूढारंभारक्तबलिप्रिया ॥३५॥ रमणीययुगाधाराराजिताखिलभूतला ॥ रुरुचर्मपरीधानारथिनीरत्नमालिका ॥३६॥ रोगेशीरोगशमनीराविणीरोमहर्षिणी ॥ रामचन्द्रपदाक्रांतारावणच्छेदकारिणी ॥ ३७ ॥ रत्नवस्त्रपरिच्छन्नारथस्थारुक्मभूषणा ॥ लज्जाधिदेवतालोलाललितालिंगधारिणी ॥ ३८ ॥ लक्ष्मीर्लोलालुप्तविषालोकिनीलोकविश्रुता ॥ लज्जालंबोदरीदेवीललनालोकधारिणी ॥३९॥ वरदावंदिताविद्यावैष्णवीविमलाकृतिः ॥ वाराहीविरजावर्षावरलक्ष्मीर्विलासिनी ॥ ४० ॥ विनताव्योममध्यस्थावारिजासनसंस्थिता ॥ वारुणीवेणुसंभूतावीतिहोत्राविरूपिणी ॥ ४१ ॥ वायुमण्डलमध्यस्थाविष्णुरूपाविधिप्रिया ॥ विष्णुपत्नीविष्णुमतीविशालाक्षीवसुन्धरा ॥४२॥ वामदेवप्रियावेलावज्रिणीवसुदोहिनी ॥ वेदाक्षरपरीतांगीवाजपेयफलप्रदा ॥ ४३ ॥ वासवीवामजननीवैकुंठनिलयावरा ॥ व्यासप्रियावर्मधरावाल्मीकिपरिसेविता ॥४४॥ शाकंभरीशिवाशांताशारदाशरणागतिः ॥ शातोदरीशुभाचाराशुंभासुरविमर्दिनी ॥४५॥ शोभावतीशिवाकाराशंकरार्धशरीरिणी ॥ शोणाशुभाशयाशुभ्राशिरःसंधानकारिणी ॥ ४६ ॥ शरावतीशरानन्दाशरज्ज्योत्स्नाशुभानना ॥ शरभाशूलिनीशुद्धशबरीशुकवाहना ॥४७॥ श्रीमतीश्रीधरानंदाश्रवणानंददायिनी ॥ शर्वाणीशर्वरीवंद्याषड्भाषाषड्तुप्रिया ॥४८॥ षडाधारस्थितादेवीषण्मुखप्रियकारिणी ॥ षडंगरूपसुमतिसुरासुरनमस्कृता ॥४९॥ सरस्वतीसदाधारासर्वमंलकारिणी ॥ सामगानप्रियासूक्ष्मासावित्रीसामसंभवा ॥ ५० ॥ सर्वावासासदानंदासुस्तनीसागरांबरा ॥ सर्वैश्वर्यप्रियासिद्धिःसाधुबंधुपराक्रमा ॥५१॥ सप्तर्षिमंडलगतासोममंडलवासिनी ॥ सर्वज्ञासांद्रकरुणासमानाधिकवर्जिता ॥ ५२ ॥ सर्वोत्तुंगासंगहीनासद्गुणासकलेष्टदा ॥ सरघासूर्यतनयासुकेशीसोमसंहतिः ॥ ५३ ॥ हिरण्यवर्णाहरिणीह्रींकारीहंसवाहिनी ॥ क्षौमवस्त्रपरीतांगीक्षीराब्धितनयाक्षमा ॥ ५४ ॥

स्वतीत्यारभ्यसोमसंहतिरित्यंतानिसप्तविंशतिसकारादीनिनामानि ॥ सावित्रीत्येकंनाम ॥ १५०॥ साधुबन्धुपदक्रमासाधूनांस्वभक्तानांयेबन्धवोमित्राणितेषुपदक्रमःपदसंचारोयस्याःस्वभक्तभक्तेष्वपिदयावतीत्यर्थः ॥ ५१ ॥ ५२ ॥ सरघामधुमक्षिका ॥ ५३ ॥ हिरण्यवर्णेत्यादीनिचत्वारिहकारादीनिनामानि ॥ ळलयोरभेदाल्लकारादिनामभिरेवळकारादिनामान्यपिसंगृहीतानीतिमन्यतेमुनिः ॥ क्षौमवस्त्रपरीतांगीत्यारभ्यत्रीणिनामानिक्षकारादीनि ॥ ५४ ॥

गायत्र्यादीनिअष्टौनामानिमातृकाक्षरक्रमरहितानि ॥ ५५ ॥ ५६ ॥ ५७॥ ५८॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ १६५ ॥ इतिश्रीदेवीभागवततिलकेद्वादशस्कन्धेषष्ठोऽध्यायः ॥ ६ ॥ पंचपंचाशदधिकैःशतश्लोकैरतःपरम् ॥ दीक्षाविधिंसमासेनवक्तिनारायणोमुनिः ॥१॥ अत्राधुनिकपुस्तकेषुअष्टावध्यायावैष्णवतन्त्रस्थाःकेनचित्प्रक्षिप्तादृश्यन्ते॥तत्र शक्तिदीक्षाप्रकरणेतत्कथनस्यासंगतेः प्राचीनपुस्तकेषुतेषामदर्शनाच्चसोऽपपाठः ॥ ततःप्राचीनपुस्तकपाठमनुरुध्यैवव्याख्यायते ॥ सहस्रनामश्रवणोत्तरंनारदःपृच्छति । श्रुतंसहस्रनामेति ॥१॥ दीक्षालक्षणंदीक्षाविधिस्वरूपमित्यर्थः ॥ ब्राह्मणानामित्यर्थस्यदेवीमन्त्रेधिकारितेतिपूर्वेणान्वयः ॥ २ ॥ ३ ॥ ययाभवेदिति॥ तदुक्तम्–अदीक्षितस्यमरणंरौरवायप्रक

गायत्रीचैवसावित्रीपार्वतीचसरस्वती ॥ वेदगर्भावरारोहाश्रीगायत्रीपरांबिका ॥ ५५ ॥ इतिसाहस्रकंनाम्नांगायत्र्याश्चैवनारद ॥ पुण्यदंसर्वपापघ्नंमहासंपत्तिदायकम् ॥ ५६ ॥ एवंनामानिगायत्र्यास्तोषोत्पत्तिकराणिहि ॥ अष्टम्यांचविशेषेणपठितव्यंद्विजैःसह ॥ ५७ ॥जपंकृत्वा होमपूजाध्यानंकृत्वाविशेषतः ॥ यस्मैकस्मैनदातव्यंगायत्र्यास्तुविशेषतः ॥ ५८ ॥ सुभक्तायसुशिष्यायवक्तव्यंभूसुरायवै ॥ भ्रष्टेभ्यःसाधकेभ्यश्चबांधवेभ्योनदर्शयेत् ॥ ५९ ॥ यद्गृहेलिखितंशास्त्रंभयंतस्यनकस्यचित् ॥ चञ्चलापिस्थिराभूत्वाकमलातत्रतिष्ठति ॥ ६० ॥ इदंरहस्यंपरमंगुह्याद्गुह्यतरंमहत् ॥ पुण्यप्रदंमनुष्याणांदरिद्राणांनिधिप्रदम् ॥ ६१ ॥ मोक्षप्रदंमुमुक्षूणांकामिनांसर्वकामदम् ॥ रोगाद्वैमुच्यतेरोगीबद्धोमुच्येतबन्धनात् ॥ ६२ ॥ ब्रह्महत्यासुरापानंसुवर्णस्तेयिनोनराः ॥ गुरुतल्पगतोवापिपातकान्मुच्यतेसकृत् ॥ ६३ ॥ असत्प्रतिग्रहाच्चैवाऽभक्ष्यभक्षाद्विशेषतः ॥ पाखंडानृतमुख्येभ्यःपठनादेवमुच्यते ॥ ६४ ॥ इदंरहस्यममलंमयोक्तंपद्मजोद्भव ॥ ब्रह्मसायुज्यदंनृणांसत्यंसत्यंनसंशयः ॥ १६५ ॥ इति श्रीदेवीभागवते महापुराणे द्वादशस्कंधे गायत्रीसहस्रनामस्तोत्रकथनंनामषष्ठोऽध्यायः ॥ ६ ॥

श्रीनारदउवाच ॥ श्रुतंसहस्रनामाख्यंश्रीगायत्र्याःफलप्रदम् ॥ स्तोत्रंमहोन्नतिकरंमहाभाग्यकरंपरम् ॥ १ ॥ अधुनाश्रोतुमिच्छामिदीक्षालक्षणमुत्तमम् ॥ विनायेननसिध्येतदेवीमंत्रेधिकारिता ॥ २ ॥ ब्राह्मणानांक्षत्रियाणांविशांस्त्रीणांतथैवच ॥ सामान्यविधिनासर्वंविस्तरेणवदप्रभो॥३॥श्रीनारायणउवाच॥शृणुदीक्षांप्रवक्ष्यामिशिष्याणांभावितात्मनाम्॥देवाग्निगुरुपूजादावधिकारोययाभवेत्॥४॥दिव्यंज्ञानंहियादद्यात्कुर्यात्पापक्षयंतुया ॥ सैवदीक्षेतिसंप्रोक्तावेदतंत्रविशारदैः ॥ ५ ॥ अवश्यंसातुकर्तव्यायतोबहुफलामता ॥गुरुशिष्यावुभावत्राप्यतिशुद्धावपेक्षितौ ॥ ६ ॥ गुरुस्तुविधिवत्प्रातःकृत्यंसर्वंविधायच ॥ स्नानसंध्यादिकंसर्वंयथाविधिविधायच ॥ ७ ॥ कमण्डलुकरोमौनीगृहंयायात्सरित्तटात् ॥ यागमण्डपमासाद्यविशेत्तत्रासनेवरे ॥ ८ ॥

ल्पते ॥ नपूजाद्यधिकारोस्तिविनादीक्षांवराननेइति ॥ ४ ॥ दीक्षापदार्थमाह । दिव्यंज्ञानमिति ॥ दाणूदानेक्षिक्षयेइतिधातुद्वयनिष्पन्नोदीक्षाशब्दइत्यर्थः ॥ यादीक्षाक्रिया ॥ ५ ॥ अतिशुद्धौमातृतःपितृतआचारतश्चेत्यर्थः ॥ तदुक्तंशारदायांमातृतःपितृतःशुद्धइति ॥ ६ ॥ विधिवदिति ॥ पूर्वोक्तप्रकारेण ॥ ७ ॥ यागमंडपंदीक्षास्थानम् ॥ मंडपशब्देनकुण्डमण्डपोक्तविधिनाषोडशहस्तपरिमितःकुण्डमण्डपःकर्तव्यइतिसूचितम् ॥ तदुक्तंपिंगलामते–कलाकरप्रमाणःस्यान्मण्डपोमुख्यएवचेति ॥ तद्विधिश्चग्रन्थान्तरादवसेयः ॥ ८ ॥

अस्त्रमन्त्रेणेति ॥ अर्घ्यपात्रेजलंगृहीत्वागंधपुष्पेप्रक्षिप्यसप्तवारंफडित्यस्त्रमन्त्रेणाभिमन्त्रयेदित्यर्थः ॥ ९ ॥ अस्त्रमन्त्रंफडितिमंत्रम् ॥ द्वारंमंडपद्वारम् ॥ द्वारमितिजात्येकवचना
च्चत्वारिमंडपद्वाराणीत्यर्थः ॥ १० ॥ ऊर्ध्वोदुंबरकेद्वारस्योर्ध्वफलकेप्रथमप्रांतेगणनाथंमध्येलक्ष्मींद्वितीयप्रांतेसरस्वतींचपूजयेदित्यर्थः ॥ नाममन्त्रैर्गणेशायनमइत्यादिभिः ॥ ११॥
गंगांप्रथमतःसंपूज्यतद्वामभागेविघ्नेशमर्चयेदित्यर्थः ॥ तथाक्षेत्रपालंप्रथमतस्तद्वामभागेसूर्यजांयमुनांपूजयेदित्यर्थः ॥ १२ ॥ देहल्यामधोदेहल्यामस्त्रमंत्रतः फडितिमंत्रतः ॥ अनं
तरंमंडपमध्येसर्वंदेवीमयमस्तीतिविभाव्योर्ध्वपश्यन्दिविभवान्विघ्नानुत्सारयेदित्यर्थः ॥ १३ ॥ पादघातैस्त्रिभिर्भौमान्विघ्नानुत्सारयेदित्यर्थः ॥ १४ ॥ अनन्तरमन्तःस्थितविघ्ननिर्ग
मनार्थमार्गपरित्यज्यद्वारवामशाखांस्पृशन्दक्षिणांघ्रिमग्रेदत्त्वामण्डपेप्रविशेदित्याह । वामशाखामिति ॥ अन्तःस्थिताविघ्नानिर्गच्छंतिअहंत्वंतःप्रविशामीतिभावयन्प्रविशेदितितात्प

आचम्यप्राणानायम्यगंधपुष्पविमिश्रितम् ॥ सप्तवारास्त्रमंत्रेणजप्तंवारिसुसाधयेत् ॥ ९ ॥ वारिणातेनमतिमानस्त्रमंत्रंसमुच्चरन् ॥ प्रोक्षयेद्द्वारम
खिलंततःपूजांसमाचरेत् ॥ १० ॥ ऊर्ध्वोदुंबरकेदेवंगणनाथंतथाश्रियम् ॥ सरस्वतींनाममंत्रैःपूजयेद्गंधपुष्पकैः ॥ ११ ॥ द्वारदक्षिणशाखायां
गंगांविघ्नेशमर्चयेत् ॥ द्वारस्यवामशाखायांक्षेत्रपालंचसूर्यजाम् ॥ १२ ॥ देहल्यांपूजयेदस्त्रदेवतामस्त्रमंत्रतः ॥ सर्वंदेवीमयंदृश्यमितिसंचिंत्यस
र्वतः ॥ १३ ॥ दिव्यानुत्सारयेद्विघ्नानस्त्रमंत्रजपेनतु ॥ अंतरिक्षगतान्विघ्नान्पादघातैस्तुभूमिगान् ॥ १४ ॥ वामशाखांस्पृशन्पश्चात्प्रविशेद्द
क्षिणांघ्रिणा ॥ प्रविश्यकुंभंसंस्थाप्यसामान्यार्घ्यंविधायच ॥ १५ ॥ तेनचाऽर्घ्यजलेनापिनैर्ऋत्यांदिशिपूजयेत् ॥ वास्तुनाथंपद्मयोनिंगंधपु
ष्पाक्षतादिभिः ॥ १६ ॥ ततःकुर्यात्पंचगव्यंतेनचाऽर्घ्योदकेनच ॥ तोरणस्तंभपर्यंतंप्रोक्षयेन्मंडपंगुरुः ॥ १७ ॥ सर्वं देवीमयंचेदंभावयेन्मन
साकिल ॥ मूलमंत्रंजपन्भक्त्याप्रोक्षणंस्याच्छराणुना ॥१८॥शरमंत्रंसमुच्चार्यताडयेन्मंडपक्षमाम् ॥ हुंमंत्रंतुसमुच्चार्यकुर्यादभ्युक्षणंततः॥१९॥
धूपयेदंतरंधूपैर्विकिरान्विकिरेत्ततः ॥ मार्जयेत्तांस्तुमार्जन्याकुशनिर्मितयापुनः ॥ २० ॥ ईशानदिशितत्पुंजंकृत्वासंस्थापयेन्मुने ॥ पुण्याह
वाचनंकृत्वादीनानाथांश्चतोषयेत् ॥ २१ ॥ विशेन्मृद्वासनेपश्चान्नमस्कृत्यगुरुंनिजम् ॥ प्राङ्मुखोविधिवद्धयात्वादेयमंत्रस्यदेवताम् ॥ २२ ॥
भूतशुद्ध्यादिकंकृत्वापूर्वोक्तेनैववर्त्मना ॥ ऋष्यादिन्यासकंकुर्याद्देयमंत्रस्यवैमुने ॥ २३ ॥ न्यसेन्मुनिंतुशिरसिमुखेछंदःसमीरितम् ॥ देवतां
हृदयांभोजेगुह्येबीजंतुपादयोः ॥ २४ ॥ शक्तिंविन्यस्यपश्चात्तुतालत्रयरवात्ततः ॥ दिग्बंधंकारयेत्पश्चाच्छोटिकाभिस्त्रिभिर्नरः ॥ २५ ॥
प्राणायामंततःकृत्वामूलमंत्रमनुस्मरन् ॥ मातृकांविन्यसेद्देहेतत्प्रकारस्तथोच्यते ॥ २६ ॥

र्यम् ॥ सामान्यार्घ्यंपूर्ववत् ॥ १५ ॥ १६ ॥ १७ ॥ शराणुनास्त्रमन्त्रेण ॥ १८ ॥ मंडपक्षमांमंडपभुवम् ॥ १९ ॥ विकिरानिति ॥ तदुक्तंचिद्वल्लीतन्त्रे ॥ जलचन्दनसिद्धार्थभ
स्मदूर्वांकुराक्षताः ॥ विकिराइतिसंदिष्टाःसर्वविघ्नौघनाशनाइति ॥ तान्विकिरानित्यर्थः ॥ २० ॥ तत्पुंजमिति ॥ तस्मिन्पुंजेऽग्रेवर्धनीस्थापनंवक्ष्यति ॥ २१ ॥ देयमंत्रस्येति ॥
शिष्यस्ययोदेयोमंत्रस्तस्यदेवतामित्यर्थः ॥ २२ ॥ पूर्वोक्तेनैकादशस्कन्धोक्तप्रकारेण ॥ २३ ॥ ऋष्यादिन्यासस्थानान्याह । न्यसेदिति ॥ २४ ॥ तालत्रयरवादिति॥तालत्रयशब्देन
दिव्यांतरिक्षभौमविघ्नानुत्सार्यछोटिकाभिर्दिग्बंधंकुर्यादित्यर्थः ॥ २५ ॥ २६ ॥

ओंअंनमइतीति ॥ ॐअंनमः । ओंआंनमः ओंइंनमइत्यादिप्रकारेणशिरआदिस्थानेषुमातृकान्यासप्रकरणेप्रसिद्धेषुन्यसेदित्यर्थः ॥ २७ ॥ मूलमंत्रेति ॥ देयमंत्रेत्यर्थः ॥ सचषडंग
स्तत्तत्कल्पेप्रसिद्धः ॥ षडंगन्यासस्थानान्याह । अंगुष्ठादिष्विति ॥ २८ ॥ नमःस्वाहेति ॥ हृदयायनमः ॥ शिरसेस्वाहा ॥ शिखायैवषट् ॥ कवचायहुम् ॥ नेत्रत्रयायवौषट् ॥ अ
स्त्रायफडित्येवंरीत्येत्यर्थः ॥ २९ ॥ ३० ॥ ततोनिजदेहेवक्ष्यमाणक्रमेणदेव्याआसनंकल्पयेदित्याह ॥ ततोनिजेइति ॥ तमेवक्रममाह । दक्षांसेइति ॥ ३१ ॥ ३२ ॥ नञादीनिति॥
नञ्पूर्वानित्यर्थः ॥ तथाचाधर्मायनमः अज्ञानायनमः अवैराग्यायनमः ॥ अनैश्वर्यायनमइतिमंत्राःसंपन्नाः ॥ ३३ ॥ तस्मिन्कल्पितेआसनेपर्यंककल्पनामाह । पादाधर्मादयइति॥
पादाःपर्यंकखुराधर्मादयोज्ञेयाइत्यर्थः ॥ अधर्मादयस्तुपर्यंकगात्राणीतिज्ञेयाइत्यर्थः ॥ ३४ ॥ मध्येऽनंतमिति ॥ तंचाऽनंतंमृद्वासनस्थलेमृदुतूलिकास्थानेभावयेदित्यर्थः ॥
तस्मिन्ननंतेप्रपंचपद्मंभावयेत् ॥ तस्मिन्कमलेसूर्येन्दुपावकानुपर्युपरिन्यसेद्भावयेच्चेत्याह प्रपंचपद्ममिति ॥ ३५ ॥ कलायुतानिमंडलादिन्यसेदित्याह । न्यसेत्कलायुतानि

ॐअंनमइतिप्रोच्यन्यसेच्छिरसिमंत्रवित् ॥ एवमेवतुसर्वेषुन्यसेत्स्थानेषुवैमुने ॥ २७ ॥ मूलमंत्रषडंगंचन्यसेदंगेषुसत्तमः ॥ अंगुष्ठादिष्वंगुली
ष्वहृदयादिषुचक्रमात् ॥ २८ ॥ नमःस्वाहावषड्हुंकैर्हुंवौषट्फट्पदान्वितैः ॥ प्रणवादियुतैर्मन्त्रैःषड्भिरेवंषडंगकम् ॥२९॥ वर्णन्यासादिकंप
श्चान्मूलमंत्रस्ययोजयेत् ॥ स्थानेषुतत्तत्कल्पोक्तेष्वितिन्यासविधिःस्मृतः ॥ ३० ॥ ततोनिजेशरीरेऽस्मिंश्चिंतयेदासनंशुभम् ॥ दक्षांसेच
न्यसेद्धर्मंवामांसेज्ञानमेवच ॥ ३१ ॥ वामोरौचापिवैराग्यंदक्षोरावथविन्यसेत् ॥ ऐश्वर्यमुखदेशेतुमुनेध्यायेदधर्मकम् ॥ ३२ ॥ वामपार्श्वेना
भिदेशेदक्षपार्श्वेतथापुनः ॥ नञादींश्चापिज्ञानादीन्पूर्वोक्तानेवविन्यसेत् ॥ ३३ ॥ पादाधर्मादयःप्रोक्ताःपीठस्यमुनिसत्तम ॥ अधर्माद्यास्तुगा
त्राणिस्मृतानिमुनिपुंगवैः ॥ ३४ ॥ मध्येऽनंतंहृदिस्थानेन्यसेन्मृद्वासनेस्थले ॥ प्रपंचपद्मंविमलंतस्मिन्सूर्येन्दुपावकान् ॥ ३५॥ न्यसेत्कला
युतान्मंत्रीसंक्षेपात्तावदाम्यहम् ॥ सूर्यस्यद्वादशकलास्ताइंदोःषोडशस्मृताः ॥ ३६ ॥ दशवह्नेःकलाःप्रोक्तास्ताभिर्युक्तांस्तुतान्स्मरेत् ॥ सत्त्वं
रजस्तमश्चैवन्यसेत्तेषामथोपरि ॥३७॥ आत्मानमंतरात्मानंपरमात्मानमेवच ॥ ज्ञानात्मानंन्यसेद्विद्वानित्थंपीठस्यकल्पना ॥ ३८॥ अमु
कासनायनमइतिमंत्रेणसाधकः ॥ आसनंपूजयित्वातुतस्मिन्ध्यायेत्पराम्बिकाम् ॥ ३९ ॥ कल्पोक्तविधिनामंत्रीदेयमंत्रस्यदेवताम् ॥ मान
सैरुपचारैश्चपूजयेत्तांयथाविधि ॥ ४० ॥ मुद्राःप्रदर्शयेद्विद्वान्कल्पोक्तामोदकारिकाः ॥ याभिर्विरचिताभिस्तुमोदोदेव्यास्तुजायते ॥ ४१ ॥
नारायणउवाच ॥ ततःस्ववामभागाग्रेषट्कोणोपरिवर्तुलम् ॥ चतुरस्रयुतंसम्यङ्मध्येमंडलमालिखेत् ॥ ४२ ॥

ति ॥ कस्यकतिकलाःसंतीतितदाह । सूर्यस्यद्वादशेति ॥ ३६ ॥ तेचसूर्यादयःप्रणवस्यवर्णत्रयपूर्वकान्यस्तव्याइतितंत्रांतरेउक्तम् ॥ तथाचायंप्रयोगः ॥ अंसूर्यमंडला
यद्वादशकलात्मनेनमः उंसोममंडलायषोडशकलात्मनेनमः मंवह्निमंडलायदशकलात्मनेनमः इतिप्रयोगंकृत्वान्यसेदित्यर्थः ॥ तदुपरिसत्त्वादिगुणत्रयंन्यसेदित्याह । सत्त्वंरजइति ॥
संसत्त्वायनमःरंरजसेनमः तंतमसेनमइतिप्रयोगः ॥ ३७ ॥ आत्मानमिति ॥ तांश्चचतुरआत्मानोदेवीस्थानात्पूर्वादिदिक्षुन्यसेदितितुचिद्वल्लीतंत्रादूह्यम् ॥ ३८ ॥ अमुकासनाय
नमइतीति ॥ अमुकशब्दस्थानेपूजनीयदेवतानामग्राह्यमित्यर्थः ॥ यथादुर्गासनायनमः गायत्र्यासनायनमइति ॥ ३९ ॥ ४० ॥ ४१ ॥ विशेषार्घ्यस्थापनमाह । ततःस्वेति ॥ प्रथ
मतःषट्कोणंकृत्वातदुपरिवर्तुलंकृत्वाचतुरस्रंकुर्यात्चंदनेनेत्यर्थः ॥ ४२ ॥

मध्येषट्कोणमध्ये ॥ त्रिकोणमधोमुखंकुर्यादित्यर्थः ॥ षडंगानिदेयमंत्रस्यषडंगानि ॥ ४३ ॥ कांदिशमारभ्यषडंगानिपूजयेत्तत्राह । अग्न्यादिष्विति॥ अत्रपूज्यपूजकयोर्मध्येप्राची ग्राह्यातदनुरोधेनाग्न्यादिकल्पनाकर्तव्या ॥ तदुक्तंदक्षिणामूर्तिसंहितायाम्—अग्नीशासुरवायव्यमध्यदिक्ष्वंगपूजनमिति॥ ततःषडंगपूजनानंतरंकृत्यमाह । आधारपात्रमिति॥त्रिपादिकामित्यर्थः ॥४४॥ त्रिपादिकायांभावनापुरःसरंपूजामंत्रमाह । मंवह्निमंडलायेति ॥ मंवह्निमंडलायदशकलात्मनेदुर्गादेव्यर्घ्यपात्रस्थानायनमइतिमंत्रः ॥४५॥ ४६ ॥ पूर्वमारभ्यपूर्वे दिशमारभ्यतस्यांत्रिपादिकायांवह्निमंडलसंयुतादशवह्निकलाःपूज्याइत्यर्थः ॥ ताश्चकलाःशारदातिलकादिषुस्पष्टाएव ॥ ४७ ॥ मूलमंत्रेणदेयमंत्रेण ॥ ४८ ॥ अंसूर्यमंडलायद्वादशकलात्मनेदुर्गादेव्यर्घ्यपात्रायनमइतिमंत्रः ॥ ४९ ॥ ५० ॥ तपिन्याद्यास्तपिनीतापिनीधूम्राद्याःशारदातिलकादिषुस्पष्टाः ॥ ५१ ॥५२ ॥ सृणिमुद्रयांकुशमुद्रया ॥५३॥ हृदानमइति

मध्येत्रिकोणंसंलिख्यशंखमुद्रांप्रदर्शयेत् ॥ षडंगानिचषट्कोणेष्वर्चयेत्कुसुमादिभिः ॥४३॥ अग्न्यादिषुतुकोणेषुषडंगार्चनमाचरेत्॥ आधारपात्रमादायशंखस्यमुनिसत्तम ॥ ४४ ॥ अस्त्रमंत्रेणसंप्रोक्ष्यस्थापयेत्तत्रमंडले ॥ मंवह्निमंडलायोक्त्वाततोदशकलात्मने ॥ ४५ ॥ अमुकदेव्याअर्घ्यपात्रस्थानायनमइत्यपि ॥ मंत्रोयमुक्तःशंखस्याप्याधारस्थापनेबुधैः ॥४६॥ आधारेपूर्वमारभ्यप्रदक्षिणक्रमेणतु ॥ दशवह्निकलाःपूज्यावह्निमंडलसंस्थिताः ॥४७॥ ततोवैमूलमंत्रेणप्रोक्षितंशंखमुत्तमम् ॥ स्थापयेत्तत्रचाधारेमूलमंत्रमनुस्मरन्॥४८॥अंसूर्यमंडलायोक्त्वाद्वादशांतेकलात्मने ॥ अमुकदेव्यर्घ्यपात्रायनमइत्युच्चरेत्ततः ॥४९॥ शंशंखायपदंप्रोच्यनमइत्येतदुच्चरेत् ॥ प्रोक्षयेत्तेनतंशंखंतस्मिन्द्वादशपूजयेत् ॥५०॥ सूर्यस्यद्वादशकलास्तपिन्याद्यायथाक्रमम् ॥ विलोममातृकांप्रोच्यमूलमंत्रंविलोमकम् ॥५१॥ जलैरापूरयेच्छंखंतत्रचेंदोःकलान्यसेत्॥उंसोममंडलायोक्त्वांतेषोडशकलात्मने॥५२॥अमुकार्घ्यामृतायेतिहृन्मंत्रांतोमनुःस्मृतः॥पूजयेन्मनुनातेनजलंतुसृणिमुद्रया ॥५३॥ तीर्थान्यावाह्यतत्रैवाप्यष्टकृत्वोजपेन्मनुम्॥षडंगानिजलेन्यस्यहृदांसे पूजयेदपः॥५४॥अष्टकृत्वोजपेन्मूलंछादयेन्मत्स्यमुद्रया ॥ ततोदक्षिणदिग्भागेशंखस्यप्रोक्षणींन्यसेत्॥५५॥शंखांबुकिंचिन्निक्षिप्यप्रोक्षयेत्तेनसर्वतः॥पूजाद्रव्यंनिजात्मानंविशुद्धंभावयेत्ततः ॥५६ ॥ नारायणउवाच॥ततःस्वपुरतोवेद्यांसर्वतोभद्रमंडलम्॥संलिख्यकर्णिकामध्यंपूरयेच्छालितंडुलैः ॥५७॥ आस्तीर्यदर्भांस्तत्रैवन्यसेत्कूर्चंसलक्षणम्॥ आधारशक्तिमारभ्यपीठमन्वंतमर्चयेत् ॥ ५८ ॥ निर्व्रणंकुंभमादायाप्यस्त्राद्भिःक्षालितांतरम् ॥ तंतुनावेष्टयेत्तंतुत्रिगुणेनारुणेनच ॥ ५९ ॥

मंत्रेण ॥ ५४ ॥ प्रोक्षणींसामान्यार्घ्यस्थानीयाम् ॥ शंखोदकेनविशेषार्घः प्रोक्षण्युदकेन सामान्यार्घः ॥ ५५ ॥ ५६ ॥ अर्घ्यस्थापनोत्तरंकृत्यमाह । ततस्तुपुरतोवेद्यामिति ॥ चतुष्कोणैकहस्तावेदी । तस्यांसर्वतोभद्रमंडलंलिखेदित्यर्थः ॥ तन्मंडलस्यकर्णिकामध्येप्रथमतःशालिभिःपूरणंततस्तंडुलैःपूरणमित्यर्थः ॥ ५७ ॥ कूर्चमिति ॥ सप्तविंशतिदर्भाणांवेण्यग्रंग्रंथिभूषितमित्युक्तलक्षणंकूर्चम् ॥ आधारशक्तिमिति ॥ आधारशक्तयेनमः मूलप्रकृत्यैनमः कूर्मायनमः शेषायनमः क्षमायैनमः सुधासिंधवेनमइत्यादिशारदातिलकचिद्वल्लीतंत्रोक्तप्रकारेण ॥ पीठमन्वंतामिति ॥ दुर्गादेवीयोगपीठायनमइतिपीठमंत्रः ॥ ५८ ॥ अस्त्राद्भिःफट्मंत्राभिमंत्रितैर्जलैः ॥ त्रिगुणेत्यनेनतस्मिंस्त्रिवारवेष्टिततंतौसत्त्वगुणरजोगुणतमोगुणभावनाकार्येत्यर्थः ॥ अरुणेनरक्तवर्णेनतंतुनेत्यर्थः ॥ ५९ ॥

कूर्चः पूर्वोक्तः ॥ तारमंत्रेणप्रणवोच्चारेण॥६०॥तत्रकुंभस्यपीठस्यचैकत्वंभावयेदित्याह । ऐक्यमिति ॥ प्रतिलोमंक्षकारमारभ्याकारपर्यंतंमातृकामंत्रमुच्चरंस्तीर्थोदकैः पूरयेदित्यन्वयः॥ ॥६१॥६२ छादयेदिति ॥ तेषुनवपल्लवेषुकल्पवृक्षभावनाकर्तव्येतितुशारदातिलकेउक्तम् ॥ वस्त्रयुग्मेनरक्तेनेतिबोध्यम् ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ मनुनापुटितैरिति ॥ ह्रींमंह्रींह्रींमांह्रींमित्यादिप्रकारेणदेयमंत्रेणपुटितैर्मातृकाक्षरैर्देवतायाअंगेषुमातृकाक्षरन्यासस्थानेषुशिरःप्रभृतिषुपुष्पैःपूजयेदित्यर्थः ॥ ६८ ॥६९ ॥ कुंदपुष्पादीति ॥ आदिनापूर्वमेकादशस्कंधोक्तानिग्राह्याणि ॥ पुरुर्गुग्गुलस्तस्यव्रातःसमुदायः ॥ अगरुगुग्गुलोशीरचंदनानांचूर्णंकृत्वाशर्करामधुभ्यांचमिश्रितंकृत्वागुटिकांकुर्यात्तस्यधूपोदेव्याअतिप्रियइत्यर्थः ॥

नवरत्नोदरंकूर्चयुतंगंधादिपूजितम् ॥ स्थापयेत्तत्रपीठेतुतारमंत्रेणदेशिकः॥६०॥ ऐक्यंकुंभस्यपीठस्यभावयेत्पूरयेत्ततः॥मातृकांप्रतिलोमेनजपंस्तीर्थोदकैर्मुने॥६१॥मूलमंत्रंचसंजप्यपूरयेद्देवताधिया॥अश्वत्थपनसाम्राणांकोमलैर्नवपल्लवैः ॥६२॥छादयेत्कुंभवदनंचषकंसफलाक्षतम्॥संस्थापयेतमतिमान्वस्त्रयुग्मेनवेष्टयेत्॥६३॥प्राणस्थापनमंत्रेणप्राणस्थापनमाचरेत्॥आवाहनादिमुद्राभिर्मोदयेद्देवतांपराम्॥६४॥ध्यायेत्तांपरमेशानींकल्पोक्तेनप्रकारतः॥स्वागतंकुशलप्रश्नंदेव्याअग्रेसमुच्चरेत्॥६५॥पाद्यंदद्यात्ततोप्यर्घ्यंततश्चाचमनीयकम्॥ मधुपर्कंचसाभ्यंगंदेव्यैस्नानंनिवेदयेत् ॥६६॥ वाससीचततोदद्याद्रक्तेक्षौमेसुनिर्मले॥नानामणिगणाकीर्णानाकल्पान्कल्पयेत्ततः ॥ ६७॥ मनुनापुटितैर्वर्णैर्मातृकायाविधानतः॥देव्याअंगेषुविन्यस्यचंदनाद्यैःसमर्चयेत्॥६८॥गंधःकालागरुभवःकर्पूरेणसमन्वितः॥काश्मीरंचंदनंचापिकस्तूरीसहितंमुने ॥ ६९॥ कुंदपुष्पादिपुष्पाणिपरदेव्यैसमर्पयेत्॥धूपोऽगरुपुरुव्रातोशीरचंदनशर्कराः॥७०॥मधुमिश्राःस्मृतादेव्याः प्रियाधूपात्मनासदा॥ दीपाननेकान्दत्त्वाथनैवेद्यंदर्शयेत्सुधीः॥ ॥७१॥प्रतिद्रव्यंजलंदद्यात्प्रोक्षणीस्थंनचान्यथा ॥ततःकुर्यादंगपूजांकल्पोक्तावरणानिच॥७२॥ सांगांदेवीमथाभ्यर्च्यवैश्वदेवंततश्चरेत्॥दक्षिणेस्थंडिलंकृत्वातत्राधायहुताशनम्॥७३॥मूर्तिस्थांदेवतांतत्राऽऽवाह्यसंपूज्यचक्रमात्॥ तारव्याहृतिभिर्हुत्वामूलमंत्रेणवैततः॥७४॥पंचविंशतिवारंतुपायसेनससर्पिषा॥हुनेत्पश्चाद्व्याहृतिभिःपुनश्चजुहुयान्मुने ॥ ७५॥ गंधाद्यैरर्चयित्वाचदेवींपीठेतुयोजयेत्॥वह्निंविसृज्यहविषापरितोविकिरेद्बलिम् ॥७६॥ देवतायाःपार्षदेभ्योगंधपुष्पादिसंयुतान्॥पंचोपचारान्दत्त्वाथतांबूलंछत्रचामरे ॥७७॥दद्याद्देव्यैततोमंत्रंसहस्रावृत्तितोजपेत् ॥ जपंसमर्प्यचैशान्यांविकिरेदिशिसंस्थिते॥७८॥कर्करींस्थापयेत्तस्यांदुर्गामावाह्यपूजयेत्॥ रक्षरक्षेतिचोच्चार्य्यनालमुक्तेनवारिणा ॥ ७९ ॥ अस्त्रमंत्रंजपन्देशंसेचयेत्तुप्रदक्षिणम् ॥ कर्करींस्थापयेत्स्थानेपूजयेच्चास्त्रदेवताम् ॥ ८० ॥

॥ ७० ॥ ७१ ॥ प्रोक्षणीस्थंपूर्वोक्तसामान्यार्घ्यपात्रस्थम् ॥ तदुक्तंशारदायां–सर्वमेतत्प्रयुंजीतप्रोक्षणीस्थेनवारिणेति ॥ अंगपूजांदेवतायाःषडंगपूजाम् ॥ ७२ ॥ ७३ ॥ मूर्तिस्थांकलशस्थाम्॥तारव्याहृतिभिरिति ॥ ओंस्वाहाभूःस्वाहेतिप्रकारेणप्रथमतोहुत्वापंचविंशतिवारंदेयमंत्रेणहुत्वापुनश्चपूर्ववत्तारव्याहृतिभिर्जुहुयादित्यर्थः ॥७४॥७५॥ हविषाहोमावशिष्टपायसेन॥७६॥७७॥ऐशान्यांदिशीति॥ऐशान्यांदिशिपूर्वंसंमार्जनंकृत्वासंस्थापितेविकिरेकर्करीमुभयमुखींस्थापयेदित्यर्थः॥७८॥७९॥ देशंमंडपस्थंदेशम्।अस्त्रदेवतांदुर्गाम्॥८०॥

वेद्यांमंडपेएवनिद्रांकुर्यादित्यर्थः ॥ अयमधिवासनप्रकारः । सद्योधिवासनंवाकार्यम् ॥ स्पष्टंचेदंचिद्वल्लीतंत्रशारदातिलकयोः॥८१॥अधिवासनानंतरमाग्निमुखमाह । ततःकुंडस्येति॥ अत्रकुंडस्येतिपदेननवकुंडीविधानंसूचितम् ॥ तच्चाऽत्राऽनुक्तमपिशारदातिलकादिनिबंधोक्तरीत्याकार्यम् ॥ तदभावेआह । स्थंडिलस्यचेति ॥ ८२ ॥ मूलमंत्रंसमुच्चार्यकुंडंवीक्षयेदित्यर्थः ॥ तेनैवास्त्रमंत्रेणैवप्रोक्षणंदृढीकरणार्थंसमिदादिभिस्ताडनंचकार्यमित्यर्थः ॥ कवचेनहुमितिमंत्रेणाऽभ्युक्षणंचेत्यर्थः ॥ ८३ ॥ लिखेल्लेखाःसमिदादिभिः ॥८४॥ पीठमिति ॥ आधारशक्तयेनमइत्यारभ्याऽमुकदेवीयोगपीठायनमइत्येतत्पर्यंतंपीठंकुंडेपूजयेदित्यर्थः ॥ ८५ ॥ ८६ ॥ क्रीडांरतिम् ॥ ८७ ॥ ८८ ॥ ८९ ॥ सप्तवारंप्रणवेनाभिमंत्रयेदित्यन्वयः ॥

पश्चाद्गुरुस्तुशिष्येणसहभुंजीतवाग्यतः ॥ तस्यांरात्रौतुतद्वेद्यांनिद्रांकुर्यात्प्रयत्नतः॥८१॥नारायणउवाच ॥ ततःकुंडस्यसंस्कारंस्थंडिलस्य चवामुने ॥ प्रवक्ष्यामिसमासेनयथाविधिविधानतः॥८२॥मूलमंत्रंसमुच्चार्यवीक्षयेदस्त्रमंत्रतः ॥ प्रोक्षयेत्ताडनंकुर्यात्तेनैवकवचेनतु ॥८३॥ अभ्युक्षणंसमुद्दिष्टंतिस्रस्तिस्रस्ततःपरम्॥प्रागग्राउदगग्राश्चलिखेल्लेखाःसमंततः॥८४॥प्रणवेनसमभ्युक्ष्यपीठंदेव्याःसमर्चयेत् ॥ आधारशक्तिमारभ्यपीठमंत्रावसानकम्॥८५॥तस्मिन्पीठेसमावाह्यशिवौपरमकारणौ ॥ गंधाद्यैरुपचारैश्चपूजयेत्तौसमाहितः ॥८६॥ देवींध्यायेदृतुस्नातांसंसक्तांशंकरेणतु ॥ कामातुरांतयोःक्रीडांकिंचित्कालंविभावयेत्॥८७॥अथवह्निंसमादायपात्रेणपुरतोन्यसेत् ॥ क्रव्यादांशंपरित्यज्यपूर्वोक्तैर्वीक्षणादिभिः॥८८॥संस्कृत्यवह्निंरंबीजमुच्चार्यतदनंतरम् ॥ चैतन्यंयोजयेत्तस्मिन्प्रणवेनाभिमंत्रयेत् ॥ ८९॥ सप्तवारंततोधेनुमुद्रांसंदर्शयेद्गुरुः॥ शरेणरक्षितंकृत्वातनुत्रेणावगुंठयेत् ॥ ९० ॥ अर्चितंत्रिःपरिभ्राम्यप्रादक्षिण्येनसत्तमः ॥ कुंडोपरिजपंस्तारंजानुस्पृष्टमहीतलः ॥९१॥ शिवबीजधियादेव्यायोनौवह्निंविनिक्षिपेत् ॥ आचामयेत्ततोदेवंदेवींचजगदंबिकाम् ॥ ९२ ॥ चिंपिंगलहनदहपचयुग्मंततःपरम् ॥ सर्वज्ञाज्ञापयस्वाहामंत्रोयंवह्निदीपने ॥ ९३ ॥ अग्निंप्रज्वलितंवंदेजातवेदंहुताशनम् ॥ सुवर्णवर्णममलंसमिद्धंविश्वतोमुखम् ॥ ९४ ॥ मंत्रेणानेनतंवह्निंस्तुवीतपरमादरात् ॥ ततोन्यसेद्वह्निमंत्रंषडंगंदेशिकोत्तमः ॥ ९५ ॥ सहस्रार्चिःस्वस्तिपूर्णउत्तिष्ठपुरुषःस्मृतः ॥ धूमव्यापीसप्तजिह्वोधनुर्धरइतिक्रमात् ॥ ९६ ॥ जातियुक्ताःषडंगाःस्युःपूर्वस्थानेषुविन्यसेत् ॥ ध्यायेद्वह्निंहेमवर्णंत्रिनेत्रंपद्मसंस्थितम् ॥ ९७ ॥ इष्टशक्तिस्वस्तिकाभीधारकंमंगलंपरम् ॥ परिषिंचेत्ततःकुंडंमेखलोपरिमंत्रवित् ॥ ९८ ॥

शरेणास्त्रमंत्रेण ॥ तनुत्रेणहुमितिमंत्रेण॥९०॥अर्चितंचंदनादिभिःपूजितंवह्निंकुंडोपरित्रिस्त्रिवारंपरिभ्रामयित्वाजानुभ्यांस्पृष्टमहीतलःसन्तारमंत्रमुच्चरन्सन्शिवबीजधियाशिववीर्यधियादेव्यायोनौवह्निंविनिक्षिपेदित्यन्वयः ॥९१॥ ततोदेवायदेव्यैचाचमनंदद्यादित्याह । आचामयेदिति ॥९२॥ हनदहपचयुग्ममिति ॥ हनहनदहदहपचपचेत्येवंरूपमित्यर्थः ॥ वह्निदीपनेइति ॥ अनेनमंत्रेणवह्निंप्रज्वालयेदित्यर्थः ॥ ९३ ॥ अग्न्युपस्थानमंत्रमाह । अग्निंप्रज्वलितमिति ॥९४॥९५॥९६॥ जातियुक्ताःनमःस्वाहावषट्हूंवौषट्फट्पदैर्युक्ताइत्यर्थः । ओंसहस्रार्चिषेहृदयायनमः ॥ स्वस्तिपूर्णायशिरसेस्वाहेत्यादयःषडंगमंत्राऊह्याइत्यर्थः ॥ पूर्वस्थानेषुहृदयादिषु ॥ ९७ ॥ इष्टंवरमुद्रा ॥ अभीरभयमुद्रा ॥ ९८ ॥

त्रिकोणवृत्तेति ॥ त्रिकोणोपरिषट्कोणंततोवृत्तंततोऽष्टपत्रंततोभूपुरमित्येवंरीत्याऽग्निस्थापनात्पूर्वमेवयंत्रंलिखेदधुनैववाभावयेत् ॥९९॥१००॥ १ ॥ २ ॥ ३ ॥ मूर्तीराह ॥ जातवेदाइति ॥ ४ ॥ ५ ॥ ताराग्नयेइति ॥ ओंअग्नयेजातवेदसेनमइत्यादिप्रयोगऊह्यः ॥ ६ ॥ वह्निपूजानंतरंकृत्यमाह । ततःस्रुक्स्रुवसंस्काराविति ॥ तेचसंस्काराःशारदातिलकादिनिबंधेषुस्पष्टाएवसंतीतितत्तएवावधार्याः ॥ पुराणेतेषामुपयोगाभावाद्गौरवाच्चनात्रलिख्यंते ॥ होमंततःकुर्यादिति ॥ ततःस्रुक्स्रुवसंस्कारानंतरंवक्ष्यमाणरीत्याहोमंकुर्यादित्यन्वयः ॥७॥ दक्षिणभागादिति॥ आज्यस्थाल्यांदक्षिणवामभागकल्पनांकृत्वादक्षिणभागात्स्रुवेणाज्यमादायअग्नयेस्वाहाइतिमंत्रेणाग्नेर्दक्षिणलोचनेजुहुयात्तथैववामभागादादायसोमायस्वाहेतिवामलो-

दर्भैःपरिस्तरेत्पश्चात्परिधीन्विन्यसेदथ ॥ त्रिकोणवृत्तषट्कोणंसाष्टपत्रंसभूपुरम्॥९९॥यंत्रंविभावयेद्वह्नेःपूर्वंवासंलिखेदथ॥तन्मध्येपूजयेद्वह्निंमंत्रेणानेनवैमुने ॥ १०० ॥ वैश्वानरततोजातवेदःपश्चादिहावह ॥ लोहिताक्षपदंप्रोक्त्वासर्वकर्माणिसाधय॥१॥ वह्निजायांतकोमंत्रस्तेनवह्निंतुपूजयेत् ॥ मध्येषट्स्वपिकोणेषुहिरण्यागगनातथा ॥ २ ॥ रक्ताकृष्णासुप्रभाचबहुरूपातिरक्तिका ॥ पूजयेत्सप्तजिह्वास्ताःकेसरेष्वंगपूजनम् ॥ ३ ॥ दलेषुपूजयेन्मूर्तीःशक्तिस्वस्तिकधारिणीः ॥ जातवेदाःसप्तजिह्वोहव्यवाहनएवच ॥४॥ अश्वोदरजसंज्ञोन्यःपुनर्वैश्वानराह्वयः॥ कौमारतेजाःस्याद्विश्वमुखोदेवमुखःस्मृतः ॥ ५ ॥ ताराग्नयेपदाद्याःस्युर्नत्यंतावह्निमूर्तयः ॥ लोकपालांश्चतुर्दिक्षुवज्राद्यायुधसंयुतान् ॥६॥ नारायणउवाच ॥ ततःस्रुक्स्रुवसंस्कारवाज्यसंस्कारएवच ॥ कृत्वाहोमंततःकुर्यात्स्रुवेणादायवैघृतम् ॥ ७ ॥ दक्षिणाद्घृतभागात्तुवह्नेर्दक्षिणलोचने ॥ जुहुयादग्नयेस्वाहेत्येवंवैवामतोऽन्यतः ॥ ८ ॥ सोमायस्वाहेतिमध्याद्घृतमादायसत्तम ॥अग्नीषोमाभ्यांस्वाहेतिमध्यनेत्रेहुनेत्ततः ॥ ९ ॥ पुनर्दक्षिणभागात्तुघृतमादायवैमुखे ॥ अग्नयेस्विष्टकृतेस्वाहेत्यनेनैवहुनेत्ततः ॥ ११० ॥ सताराभिर्व्याहृतिभिर्जुहुयादथसाधकः ॥ जुहुयादग्निमंत्रेणत्रिवारंतुततःपरम् ॥ ११ ॥ ततस्तुप्रणवेनैवाऽप्यष्टावष्टौघृताहुतीः ॥ गर्भाधानादिसंस्कारकृतेतुजुहुयान्मुने ॥१२॥ गर्भाधानंपुंसवनंसीमंतोन्नयनंततः ॥ जातकर्मनामकर्माप्युपनिष्क्रमणंतथा ॥ १३ ॥ अन्नप्राशनंतथाचूडाव्रतबंधस्तथैवच ॥ महानाम्न्यंव्रतंपश्चात्तथौपनिषदंव्रतम् ॥ १४ ॥ गोदानोद्वाहकौप्रोक्ताःसंस्काराःश्रुतिचोदिताः ॥ ततःशिवंपार्वतींचप्रजयित्वाविसर्जयेत् ॥ १५ ॥ जुहुयात्पंचसमिधोवह्निमुद्दिश्यसाधकः ॥ पश्चादावरणानांचाप्येकैकामाहुतिंहुनेत् ॥ १६ ॥ घृतंस्रुचिसमादायचतुर्वारंस्रुवेणच ॥ पिधायतांतुतेनैवमुनेतिष्ठन्निजासने ॥ १७ ॥ वौषडंतेनमनुनावह्नेस्तुजुहुयात्ततः ॥ महागणेशमंत्रेणजुहुयादाहुतीर्दश ॥ १८ ॥

चनेमध्यभागादादायाग्नीषोमाभ्यांस्वाहेतितृतीयलोचनेजुहुयादित्यर्थः ॥८॥९॥११०॥सताराभिरिति ॥ ओंभूःस्वाहाओंभुवःस्वाहेत्येवंरीत्या॥ अग्निमंत्रेणपूर्वोक्तेन॥११॥ संस्कारकृतेसंस्कारार्थमष्टावष्टावाहुतीर्जुहुयादित्यर्थः ॥१२॥ गर्भाधानादिसंस्कारान्गणयतिगर्भाधानमिति ॥१३॥१४॥ एतत्संस्काराणांस्वरूपंधर्मशास्त्रेस्पष्टम् ॥ शिवंपार्वतींचेति॥वह्नेःपितृभूतौदेवावित्यर्थः॥१५॥१६॥१७॥वह्नेर्मनुनापूर्वोक्तेन ॥ महागणेशमंत्रेणेति ॥ ओंओंस्वाहा १ ओंश्रींस्वाहा २ ओंश्रींह्रींस्वाहा ३ ओंश्रींह्रींक्लींस्वाहा ४ ॐश्रींह्रींक्लींग्लौंस्वाहा ५ ओंश्रींह्रींक्लींग्लौंगंस्वाहा ६ ओंश्रींह्रींक्लींग्लौंगंगणपतयेइत्यंतंसप्तमः ७वरवरदइत्यंतोऽष्टमः ८ सर्वजनंमेवशमित्यंतोनवमः ९ आनयस्वाहेत्यंतोदशमः१० इतिदशाहुतीर्जुहुयादित्यर्थः ॥१८॥

वह्नौपीठमिति ॥ देयमंत्रदेवतायाःपीठंतत्तत्कल्पोक्तंवह्नौपूजयेदित्यर्थः ॥ तद्वक्त्रेदेवतायावक्त्रे ॥ १९ ॥ वक्त्रैकीकरणायचेति ॥ वह्निदेवतयोरेकवक्त्रतासंपादनार्थमित्यर्थः ॥१२०॥ ॥ २१ ॥ २२ ॥ एकैकक्रमयोगेनेति ॥ एकांदेवतामुद्दिश्यैकामाहुतिंजुहुयादित्यर्थः ॥ २३ ॥ गजांतकसहस्रकम् अष्टोत्तरसहस्रकम् ॥२४॥२५॥२६॥२७॥२८॥ तच्चैतन्यमिति ॥ शिष्यचैतन्यंनिजात्मनिप्रविष्टमितिभावयेदित्यर्थः ॥ अध्वनांवक्ष्यमाणानाम् ॥२९॥ १३० ॥ षडध्वशोधनंकर्तव्यमित्युक्तंतत्रकेतेषडध्वानःकुत्रसंतीतिसर्वमाह । तनौध्यायेदिति ॥

वह्नौपीठंसमभ्यर्च्यदेयमंत्रस्यदेवताम्॥वह्नौध्यात्वातुतद्वक्त्रेपंचविंशतिसंख्यया ॥१९॥ मूलमंत्रेणजुहुयाद्वक्त्रैकीकरणायच॥वह्निदेवतयोरैक्यं भावयन्नात्मनासह॥१२०॥एकीभूतंभावयेत्तुततस्तुसाधकोत्तमः ॥ षडंगदेवतानांचजुहुयादाहुतीःपृथक् ॥२१॥ एकादशैवजुहुयादाहुतीर्मुनिसत्तम ॥ एतेननाडीसंधानंवह्निदेवतयोर्मुने ॥२२॥ एकैकक्रमयोगेनाप्यावृत्तीनांतथैवच ॥ एकैकक्रमयोगेनघृतेनजुहुयान्मुने ॥ २३ ॥ ततः कल्पोक्तद्रव्यैस्तुजुहुयादथवातिलैः ॥ देवतामूलमंत्रेणगजांतकसहस्रकम् ॥ २४ ॥ एवंहुत्वाततोदेवींसंतुष्टांभावयन्मुने ॥ तथैवाऽऽवृतिदेवीश्चवह्नचाद्यादेवताअपि ॥२५॥ ततःशिष्यंचसुस्नातंकृतसंध्यादिकक्रियम् ॥ वस्त्रद्वययुतंस्वर्णाभरणेनसमन्वितम् ॥ २६ ॥ कमंडलुकरंशुद्धंकुंडस्यांतिकमानयेत ॥ नमस्कृत्यततःशिष्योगरूनथसभासदः ॥ २७ ॥ कुलदेवंनमस्कृत्यविशेत्तत्राऽथविष्टरे ॥ गुरुस्ततस्तुतंशिष्यंकृपादृष्ट्यावलोकयेत् ॥ २८ ॥ तच्चैतन्यंनिजेदेहेभावयेत्संगतंत्विति ॥ ततःशिष्यतनुस्थानामध्वनांपारिशोधनम् ॥२९॥ कुर्यात्तुहोमतोविद्वान्दिव्यदृष्ट्यवलोकनात् ॥ येनजायेतशुद्धात्मायोग्योदेवाद्यनुग्रहे ॥ १३० ॥ नारायणउवाच ॥ तनौध्यायेत्तुशिष्यस्यषडध्वनःक्रमेणतु ॥ पादयोस्तुकलाध्वानमंधौतत्त्वाध्वकंपुनः ॥३१॥ नाभौतुभुवनाध्वानंवर्णाध्वानंतथाहृदि ॥ पदाध्वानंतथाभालेमंत्राध्वानंतुमूर्धनि ॥३२॥ शिष्यंस्पृशंस्तुकूर्चेनतिलैराज्यपरिप्लुतैः ॥ शोधयाम्यमुमध्वानंस्वाहेतिमनुमुच्चरन् ॥ ३३ ॥ ताराद्यंचजुहुयादष्टवारंप्रत्यध्वमेवहि ॥षडध्वनस्ततस्तांस्तुलीनान्ब्रह्मणिभावयेत्॥३४॥पुनरुत्पादयेत्तस्मात्सृष्टिमार्गेणवैगुरुः ॥ आत्मस्थिततच्चैतन्यंपुनःशिष्येतुयोजयेत्॥३५॥पूर्णाहुतिंततोहुत्वादेवतांकलशेनयेत्॥पुनर्व्याहृतिभिर्हुत्वावह्नेरंगाहुतीस्तथा॥३६॥एकैकशोगुरुर्दत्त्वाविसृजेद्वह्निमात्मनि॥ततःशिष्यस्यनेत्रेतुबध्नीयाद्वाससागुरुः॥३७॥नेत्रमंत्रेणतंशिष्यंकुंडतोमंडलंनयेत् ॥ पुष्पांजलिमुरुयदेव्यांकारयेच्छिष्यहस्ततः॥३८॥नेत्रबंधंनिराकृत्यवेशयेत्कुशविष्टरे॥ भूतशुद्धिंशिष्यदेहेकुर्यात्प्रोक्तेनवर्त्मना॥३९॥मंत्रोदितांस्तथान्यासान्कृत्वाशिष्यतनौततः॥मंडलेवेशयेच्छिष्यमन्यस्मिन्कुंभसंस्थितान् १४०

अंधौलिंगेतत्त्वाध्वानंन्यसेदित्यर्थः ॥३१॥३२॥३३॥ ओंअस्यशिष्यस्यकलाध्वानंशोधयामिस्वाहेतिमंत्रेणाष्टवारंतंकलाध्वानंपादयोःस्थितंकूर्चेनवामहस्तेनस्पृशञ्जुहुयादेवंप्रत्यध्वमित राध्वसुकुर्यादित्यर्थः ॥३४॥ तस्माद्ब्रह्मणःआत्मस्थितमिति ॥ पूर्वंयत्स्वस्मिन्योजितंतदित्यर्थः ॥३५॥ देवतामिति॥होमार्थमग्नावावाहितांदेवतांकलशेनयेत्कलशेगतामितिभावयेद्वि सर्जनमंत्रेणेत्यर्थः ॥ ३६ ॥ ३७ ॥ नेत्रमंत्रेणवौषण्मंत्रेणनेत्रबंधंकृत्वातंशिष्यंकुंडस्थलान्मंडलंकलशंप्रतिनयेदित्यर्थः ॥ ३८ ॥ ३९ ॥ मंत्रोदितान्देयमंत्रोदितान् ॥ १४० ॥

॥ ४१ ॥ वर्धनीयापूर्वमीशान्यांस्थापितातस्यांस्थितैर्जलैरभिषेकंकुर्यादित्यर्थः ॥ ४२ ॥ ४३ ॥ तयोःशिष्यदेवतयोरैक्यंभावयन्देवताबुद्ध्याशिष्यंपूजयेदित्यर्थः ॥ ४४ ॥ स्वहस्तं दक्षिणहस्तंशिष्याशिरसिअमृतमयंस्थापयेदित्यर्थः ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ इतितेकथितइतिनारायणोनारदंप्रत्युपसंहारंकरोति ॥ ४९ ॥५० ॥ ५१ ॥ तत्तदुक्तेति ॥ वैदिकरीत्यास्वस्वगृह्योक्तरीत्यादीक्षितोवैदिकान्प्रयोगान्कुर्यातकुंडमंडपादिपुरःसरतंत्रोक्तप्रकारेणदीक्षावांस्तांत्रिकान्प्रयोगान्कुर्यादित्यर्थः ॥ ५२ ॥ ५३ ॥ व्यासोजनमेजयंप्रतिनारायणनारदसंवादकथामुपसंहरति । व्यासउवाच इतिराजन्निति ॥ दध्यौनारायणइत्यर्थः ॥ ५४ ॥ १५५ ॥ इतिश्रीदेवीभागवततिलकेद्वादशस्कन्धेसप्तमोऽध्यायः ॥ ७ ॥ अर्धाधिकैक

पल्लवाञ्छिष्यशिरसिविन्यसेन्मातृकांजपेत् ॥ कलशस्थजलैःशिष्यंस्नापयेद्देवतात्मकैः ॥ ४१ ॥ वर्धनीजलसेकंचकुर्याद्रक्षार्थमंजसा ॥ततः शिष्यःसमुत्थायवाससीपरिधायच ॥ ४२ ॥ कृतभस्मावलेपश्चसंविशेद्गुरुसन्निधौ ॥ ततोगुरुःस्वकीयात्तुहृदयान्निर्गतांशिवाम् ॥ ४३ ॥ प्रविष्टांशिष्यहृदयेभावयेत्करुणानिधिः ॥ पूजयेद्गंधपुष्पाद्यैरैक्यंवैभावयंस्तयोः ॥ ४४ ॥ ततस्त्रिशोदक्षकर्णेशिष्यस्योपदिशेद्गुरुः ॥ महामंत्रं महादेव्याःस्वहस्तंशिरसिन्यसन् ॥ ४५ ॥ अष्टोत्तरशतंमंत्रंशिष्योपिप्रजपेन्मुने॥ दंडवत्प्रणमेद्भूमौतंगुरुंदेवतात्मकम् ॥ ४६ ॥ सर्वस्वमर्पयेत्तस्मैयावज्जीवमनन्यधीः ॥ ऋत्विग्भ्योदक्षिणांदत्त्वाब्राह्मणांश्चापिभोजयेत्॥४७॥सुवासिनीःकुमारीश्चबटुकांश्चैवसर्वशः॥ दीनानाथान्दरिद्रांश्चवित्तशाठ्यविवर्जितः ॥ ४८ ॥ कृतार्थतांस्वस्यबुद्ध्वानित्यमाराधयेन्मनुम् ॥ इतितेकथितःसम्यग्दीक्षाविधिरनुत्तमः ॥ ४९ ॥ विमृश्यैतदशेषेणभजदेवीपदांबुजम् ॥ नान्यस्तुपरमोधर्मोब्राह्मणस्याऽत्रविद्यते ॥ १५० ॥ वैदिकः स्वस्वगृह्योक्तक्रमेणोपदिशेन्मनुम् ॥ तांत्रिकस्तंत्ररीत्यातुस्थितिरेषासनातनी ॥ ५१ ॥ तत्तदुक्तप्रयोगांस्तेतेतेकुर्युर्नचान्यथा ॥ नारायणउवाच ॥ इतिसर्वंमयाख्यातंयत्पृष्टंनारदत्वया ॥ ५२ ॥ अतःपरंपरांबायाभजनित्यंपदांबुजम् ॥ नित्यमाराध्यतच्चाहंनिर्वृतिंपरमांगतः ॥ ५३ ॥ व्यासउवाच ॥ इतिराजन्नारदायप्रोक्त्वासर्वमनुत्तमम् ॥ समाधिमीलिताक्षस्तुदध्यौदेवीपदांबुजम् ॥ ५४॥ नारायणस्तुभगवान्मुनिवर्यशिखामणिः ॥ नारदोपिततोनत्वागुरुंनारायणंपरम् ॥ जगामसद्यस्तपसेदेवीदर्शनलालसः ॥१५५॥ इतिश्रीदेवीभागवतेमहापुराणेद्वादशस्कन्धेसप्तमोऽध्यायः ॥ ७ ॥ जनमेजयउवाच ॥ भगवन्सर्वधर्मज्ञसर्वशास्त्रवतांवर ॥ द्विजातीनांतुसर्वेषांशक्त्युपास्तिःश्रुतीरिता ॥ १ ॥

नवतिश्लोकैरथसुविस्तृता ॥ केनोपनिषदुद्दिष्टाकथाप्रस्तूयतेऽधुना ॥ १ ॥ इत्थमेतावत्पर्यंतंसर्वेर्वर्षिमानवानांश्रीदेव्याराधकत्वमुक्तंश्रुत्वाजगतिश्रीदेव्याउपासनांनित्यांविहायविष्णुशिवगणेशादिदेवतोपासकाञ्जनानालक्ष्यविस्मितोराजापृच्छति ॥ जनमेजयउवाच भगवन्सर्वधर्मज्ञेति ॥ द्विजातीनामिति ॥ ब्राह्मणक्षत्रियविशांशक्त्युपास्तिःश्रींगायत्र्युपास्तिर्नित्याश्रुतिभिर्वेदचतुष्टयैरीरिताकथितेत्यर्थः ॥ तथाचश्रुतिः ॥ अहरहःसंध्यामुपासीतेति ॥ तदकरणेप्रत्यवायःप्रायश्चित्तंचश्रुत्योक्तम् । नैवंशिवविष्णूपासनायानित्यत्वप्रतिपादिकाश्रुतिरस्ति ॥ तस्माद्गायत्र्युपासनैवनित्येतिभावः ॥ १ ॥

कस्मिन्कालेतदाह । संध्याकालत्रयेति॥त्रिसंध्यंद्विजैर्नित्यंश्रीगायत्र्युपासनाकर्तव्या तदतिक्रमेश्रुतिस्मृत्यादिषुप्रायश्चित्तकथनात्॥ यदाप्रथमतःश्रुत्यागायत्रीष्टदेवताद्विजानामुदिताध र्मकामार्थमोक्षदातदातांस्वेष्टदेवतांपराशक्तिंसंध्याकालातिरिक्तेऽन्यस्मिन्कालेनिरंतरंस्मरेदिदमपिश्रुत्यैवोक्तम् ॥ स्वेष्टदेवतास्मरणंविहायान्यदेवतास्मरणेप्रयोजनाभावात् ॥ तथाच श्रुतिः।योवैस्वांदेवतामतियजतेसस्वायैदेवतायैच्यवतेनपरांप्राप्नोतिपापीयान्भवतीति ।तथाचतादृशीमिष्टदेवतांपराशक्तिंविहायतांस्वीकृत्यवातदभिमानंविहायकस्मात्प्रयोजनादन्यदे वताउपास्यत्वेनगृह्णीयुः ॥ नकिंचित्प्रयोजनमस्तीत्यर्थः श्रीगायत्र्याःसर्वार्थदातृत्वंचश्रुत्यैवाभिहितम् ॥ तथाचगोपथब्राह्मणेगायत्र्युपनिषदि। ब्रह्महेदंश्रियंप्रतिष्ठामायतनमैक्षतततत्त पस्वयादितद्व्रतेध्रियेततत्सत्येप्रत्यतिष्ठत् ॥ससवितासावित्र्याब्राह्मणंसृष्ट्वातत्सावित्रींपर्यदधादित्यादि॥योहवाएवंवित्सब्रह्मवित्पुण्यांचकीर्तिंलभतेसुरभींश्चगंधान्सोपहतपाप्मानंतांश्रिय मश्नुतेयएवंवेद यश्चैवांविद्वानेवमेतांवेदानांमातरंसावित्रींसंपदमुपनिषदमुपास्तेइति॥तथासामविधिब्राह्मणे॥अथगायत्र्यंगानिव्याख्यास्यामः॥शिरोब्रह्मालोलाटंद्यौश्चंद्रादित्यौचक्षुषीमुख मग्निर्जिह्वासरस्वतीत्वष्टाग्रीवावसवश्चरुद्राश्चबाहूउरोवायुःपृष्ठमिंद्रोविष्णुर्नाभिःप्रजापतिर्जघनमूरूमरुतोवेदाःपादौस्मितंविद्युच्छ्वसितंवायुरस्थीनिपर्वताः समुद्रावासोसिनक्षत्राण्यलंक रोयएवंवेदडुःष्टुतात्दुरुपयुक्तान्न्यूनाधिकाच्चसर्वस्मात्स्वस्तिदेवऋषिभ्यश्चब्रह्मसत्यं च पातुमांब्रह्मसत्यंचपातुमामिति।तथाबृहदारण्यकोपनिषदि।साहैषागयांस्तत्रेप्राणावैगयास्तत्प्राणां स्तत्रतद्यद्गयांस्तत्रेतस्माद्गायत्रीनामेति ॥ एवमेवचतुर्ष्ववेदेषुविद्यमानाःश्रुतयउदाहार्याः॥ ननुविष्णुशिवगणपतिप्रभृतिदेवतानामपिपुराणागमादिषुगायत्रीप्रतिपाद्यत्वंप्रतिपादितम् ॥ तथाचमैत्रायणीयश्रुतिः॥योहवाअमुष्मिन्नादित्येनिहितस्तारकोक्षिणिवैषभर्गाख्योभाभिर्गतिरस्यहीतिभर्गोभर्जयतीतिवैषभर्गइतिरुद्रइति॥अनयाचश्रुत्याशिवस्यगायत्रीप्रतिपाद्यत्वमु क्तम् ॥ तथाग्निपुराणेतंत्रेषुचनारायणस्यगायत्रीप्रतिपाद्यत्वंप्रतिपादितम्॥तथाचगायत्रीमंत्रस्यपराकृतिरेवदेवतेतिनियमोनसिद्धइतिचेन्न॥ गायत्रीमंत्रस्यांतर्यामिप्रतिपादकत्वेनांत

संध्याकालत्रयेऽन्यस्मिन्कालेनित्यतयाविभो ॥ तांविहायद्विजाःकस्माद्गृह्णीयुश्चान्यदेवताः ॥ २ ॥

र्यामिणश्चसर्वपदार्थजातांतर्यामित्वेनगायत्रीमंत्रस्यतद्देवताप्रतिपादकत्वकथनेपिमुख्यगायत्र्युपास्तौचतुर्षुवेदेषुस्त्रीत्वविशिष्टदेवतायाएव ॥आयातुवरदादेवीअक्षरंब्रह्मसंमितम्।गायत्रीं छंदसांमातेइदंब्रह्मजुषस्वमे इत्यावाहनमन्त्रे ॥ उत्तमेशिखरेजातेभूम्यांपर्वतमूर्धनि ॥ ब्राह्मणेभ्योभ्यनुज्ञातागच्छदेवियथासुखमितिविसर्जनमंत्रे ॥तथाध्यानमंत्रेपि बालांबालादित्य मंडलमध्यस्थामित्यादिनाध्येयत्वेनस्त्रीत्वविशिष्टदेवतायाएवकथनात्पराचिच्छक्तिरेवगायत्रीमंत्रप्रतिपाद्येतिनियमात्॥अत्यल्पमिदमुच्यते ॥ शिवविष्णुगणेशानामेवगायत्रीप्रतिपाद्य त्वमितिगायत्र्याब्रह्मप्रतिपादकत्वेनब्रह्मणश्चसर्वात्मकत्वेनसर्वपदार्थजातस्यैवगायत्रीप्रतिपाद्यत्वसंभवात्॥ तथापिवेदेषूपासनासमयेयद्रूपंध्येयत्वेनोक्तंतदेवोपास्यमस्माकंद्विजानाम्॥ तच्चस्त्रीत्वविशिष्टमेववेदेषूक्तमिति॥तदेवपराशक्तिरूपमेवाऽस्माकमुपास्यंनविष्ण्वादिरूपम् ॥ननुवेदेपिगायत्र्यागायत्रीच्छंदोविश्वामित्रऋषिःसवितादेवताअग्निर्मुखंब्रह्माशिरोविष्णुर्हृ दयंरुद्रःशिखांइत्यनेनसवितृरूपमेवदेवतात्वेनोक्तमितिचेन्न॥नात्रसवितृशब्देनसूर्यमंडलाधिष्ठाताकश्चित्पुरुषोविवक्षितः॥ किंतु तदंतर्गतोजगत्प्रसवकर्तापरमात्माविवक्षितस्तस्यचस्त्री रूपत्वेनैवतस्मिन्नेवमंत्रेध्येयत्वोक्त्याविरोधाभावात्॥अन्यथागायत्रीमंत्रेणसवितुःसंबंधिवरेण्यंश्रेष्ठमंतर्यामिरूपंध्येयत्वेनस्वमुखेनसाक्षात्प्रतिपादितम् ॥ ब्राह्मणमंत्रेणतुसवितैवध्येयत्वे नोक्तइतिमहान्विरोधःस्यात्॥ अतएवमैत्रायणीयब्राह्मणेषष्ठप्रपाठकेपिसवितृमंडलाधिष्ठितपुरुषांतर्गतपरमात्मरूपमेवगायत्रीमंत्रप्रतिपाद्यत्वेनोक्तम्॥ तथाचश्रुतिःमैत्रायणीयब्राह्मणे॥ अथभर्गोदेवस्यधीमहीतिसवितावैदेवस्ततोस्यभर्गाख्यस्तंचिंतयामीत्याहुर्ब्रह्मवादिनइति ॥ अनेनचसवितुर्देवस्यसूर्यस्यसंबंधियदंतर्यामिभर्गाख्यंतेजस्तद्धीमहीत्यन्वयउक्तः॥अतएव पुराणांतरेपिसंध्येतिसूर्यंगंब्रह्मसंधानादविभागतइत्युक्तम्।सूर्येणाविभागतःसंधानाद्वर्तनात्संध्योपास्तिंकरिष्येइत्यादौसंध्याशब्देनसूर्यगंब्रह्मोच्यतइतितदर्थः॥अस्तुवासूर्योदेवतातथापि

तस्यध्यानंस्त्रीलिंगविशिष्टमेवकर्तव्यमितितास्मिन्नेवमंत्रेऽभिहितम् ॥ तथाचसमंत्रः सवितादेवताग्निर्मुखंब्रह्माशिरोविष्णुर्हृदयंरुद्रःशिखापृथिवीयोनिःप्राणापानव्यानोदानसमानासप्राणाश्वेतवर्णासांख्यायनसगोत्रागायत्रीचतुर्विंशत्यक्षरात्रिपदाषट्कुक्षिःपंचशीर्षोपनयनेविनियोगइति ॥ तथाचस्त्रीलिंगविशिष्टासूर्यरूपापराशक्तिरेवोपास्येतिसिध्यति ॥ किंचशिवविष्ण्वादीनांगायत्रीदेवतात्वेगायत्रीदेवतायाअंगेषुब्रह्माशिरोविष्णुर्हृदयंरुद्रःशिखेतिमंत्रेणशिवादीनांविन्यासोपवर्णनंसर्वथानसंगच्छते ॥ तस्मात्स्त्रीत्वविशिष्टापराशक्तिर्गायत्र्यादेवतैवगायत्रीमंत्रेणसर्वद्विजातिभिर्नित्यतयोपास्येतितांस्वेष्टदेवतांविहायकिमित्यन्यदेवतांगृह्णंतीतियुक्तएवप्रश्नः॥२॥नन्वन्यदेवतोपासकाःकेसंतितान्दर्शयति।दृश्यंतेइति ॥ वयंवैष्णवाइतिकेचिद्वदंति ॥ परेवयंगाणपत्याइतिवदंति ॥ केचित्तुकापालिकावयमितिवदंति ॥ चीनमार्गरताश्चीनदेशीयमार्गरताः ॥ ३ ॥ आदिनाशैवतंत्रानुयायिनः॥ दृश्यंतइति इमेवेदश्रद्धाविवर्जितागायत्र्युपास्तिनिष्ठारहिताश्चबहवोदृश्यंतेइत्यर्थः॥४॥नकेवलंमूढास्तन्मतेप्रवृत्ताः किंतुबुद्धिमंतोपीत्याह । बुद्धिमंतइति॥५॥स्वकल्याणंवेदादेवजायमानंनहिकश्चित्स्वबुद्ध्याऽ

दृश्यंतेवैष्णवाःकेचिद्गाणपत्यास्तथापरे ॥ कापालिकाश्चीनमार्गरतावल्कलधारिणः ॥ ३ ॥ दिगंबरास्तथाबौद्धाश्चार्वाकाएवमादयः ॥ दृश्यंतेबहवोलोकेवेदश्रद्धाविवर्जिताः ॥ ४ ॥ किमत्रकारणंब्रह्मंस्तद्भवान्वक्तुमर्हति ॥ बुद्धिमंतःपंडिताश्चनानातर्कविचक्षणाः ॥ ५ ॥ अपिसंत्येववेदेषुश्रद्धयातुविवर्जिताः ॥ नहिकश्चित्स्वकल्याणंबुद्ध्याहातुमिहेच्छति ॥६॥ किमत्रकारणंतस्माद्वदवेदविदांवर ॥ मणिद्वीपस्यमहिमावर्णितोभवतापुरा॥७॥कीदृक्तदस्तियद्देव्याःपरंस्थानंमहत्तरम्॥ तच्चापिवदभक्तायश्रद्दधानायमेऽनघ॥८॥प्रसन्नास्तुवदंत्येवगुरवोगुह्यमप्युत॥ सूतउवाच ॥ इतिराज्ञोवचःश्रुत्वाभगवान्बादरायणः ॥ ९॥ निजगादततःसर्वंक्रमेणैवमुनीश्वराः ॥ यच्छ्रुत्वातुद्विजातीनां वेदश्रद्धाविवर्धते॥ ॥१०॥ व्यासउवाच ॥ सम्यक्पृष्टंत्वयाराजन्समयेसमयोचितम् ॥ बुद्धिमानसिवेदेषुश्रद्धावांश्चैवलक्ष्यसे॥११॥ पूर्वंमदोद्धतादैत्यादेवैर्युद्धंतुचक्रिरे ॥ शतवर्षंमहाराजमहाविस्मयकारकम्॥१२॥नानाशस्त्रप्रहरणंनानामायाविचित्रितम् ॥ जगत्क्षयकरंनूनंतेषांयुद्धमभून्नृप॥१३॥पराशक्तिकृपावेश।द्देवैर्दैत्याजितायुधि ॥ भुवंस्वर्गंपरित्यज्यगताःपातालवेश्मनि ॥ १४ ॥ ततःप्रहर्षितादेवाःस्वपराक्रमवर्णनम्॥ चक्रुःपरस्परंमोहात्साभिमानाःसमंततः ॥ १५ ॥ जयोऽस्माकंकुतोनस्यादस्माकंमहिमायतः ॥ सर्वोत्तरःकुत्रदैत्याःपामरानिष्पराक्रमाः ॥१६ ॥ सृष्टिस्थितिक्षयकरावयंसर्वेयशस्विनः ॥ अस्मदग्रेपामराणां दैत्यानांचैवकाकथा ॥ १७ ॥

न्यमतमवलंब्यवेदमार्गंहातुंत्यक्तुमिहेच्छति नकोपीत्यर्थः ॥ ६ ॥ तथापितथाबहवोदृश्यंतेतस्मात्प्रबलंकिंचित्कारणंवेदत्यागेगायत्रीश्रद्धाभावेचवर्ततेतद्वदेत्याह । किमत्रकारणमिति ॥ किंचतृतीयस्कंधमारभ्यद्वादशस्कन्धपर्यंतंमणिद्वीपस्यमहिमाबहुविधःश्रुतोस्तितत्स्थानंकीदृगस्तितदपिवदेत्याह । मणिद्वीपस्येति॥७॥८॥९॥१०॥जनमेजयवाक्यंश्रुत्वाव्यासउवाच । सम्यक्पृष्टमिति ॥११ ॥ तत्रसत्ययुगेसर्वेद्विजागायत्रीरूपपराशक्तिनिष्णातावेदश्रद्धावंतश्चस्थिताःपश्चात्कारणवशात्तद्राहिताजाताइतिवदन्प्रथमतस्तलवकारोपनिषदुक्तपराशक्तिमहिमानंकथयति । पूर्वंमदोद्धता इति ॥ १२ ॥ १३ ॥ पराशक्तिकृपावेशाद्देवैर्जितादैत्याभुवंस्वर्गंचपरित्यज्यपातालेगताइत्यन्वयः॥१४॥स्वपराक्रमेति ॥पराशक्तिप्रसादेनजयेलब्धेऽपितंप्रसादमुन्मादेनविस्मृत्यस्वपराक्रमवर्णनंचक्रुरित्यर्थः ॥ १५ ॥ कथंचक्रुस्तदाह । जयोऽस्माकमिति ॥ १६ ॥ १७ ॥

तथाचश्रुतिःतलवकारोपनिषदि ॥ ब्रह्महदेवेभ्योविजिग्येतेस्यहब्रह्मणोविजयदेवाअमहीयंततऐक्षंताऽस्माकमेवाऽयंविजयोस्माकमेवायंमाहिमेति ॥ अनुग्रहंकर्तुमहंकारेणविमूढानुद्धर्तुमि
यर्थः ॥ अनेनचाप्रार्थिताऽपिदेवीनिजभक्त परिपालनंकरोतीत्यहोभक्तवात्सल्यंश्रीभगवत्याइतिबोधितम् ॥ यतोदेवैरप्रार्थिताऽपितानुद्दधारेति ॥ १८॥ यक्षरूपेणेति ॥ यक्षंयजनीयम्
अतिपूज्यंतेजःपुंजरूपेणःप्रादुरासीदित्यर्थः ॥ तथाचश्रुतिःतद्धैषांविजज्ञौतेभ्योहप्रादुर्बभूवतन्नव्यजानंतकिमिदंयक्षमिति ॥तेजोवर्णयति । कोटिसूर्येति ॥ १९ ॥ २० ॥ अहोकिमिद
मपूर्वंयक्षंकिमिदमपूर्वयक्षमितिप्राहुरित्यर्थः ॥ तैःकृताननेकांस्तर्कान्विशदयति । दैत्यानामिति ॥२१॥२२॥ प्रतिक्रियेति ॥ यद्ययंप्रबलःशत्रुस्तदापलायनंयदिसमबलस्तदायुद्धंयद्य
यमीश्वरस्तदाभक्त्यातदनुसरणमेवंरूपाप्रतिक्रियेत्यर्थः ॥२३॥ यतोऽसिमुखमुत्तममिति ॥ अग्निर्वैदेवानामास्यमितिमुखादग्निरजायतेतिश्रुतेरित्यर्थः ॥२४ ॥ यतस्त्वंमुखमस्माकंतत
स्त्वमेवमुखेभवत्वान्मुख्यस्ततस्त्वमेवैतद्विशिष्टंकार्यंकुरुष्वेत्याह । ततोगत्वेति ॥ तथाचश्रुतिः ॥ तेऽग्निमब्रुवन्जातवेदएतद्विजानीहिकिमेतद्यक्षमिति ॥२५॥ वेगादिति ॥ तेनचवह्नेः

पराशक्तिप्रभावंतेनज्ञात्वामोहमागताः ॥ तेषामनुग्रहंकर्तुंतदैवजगदंबिका ॥१८॥ प्रादुरासीत्कृपापूर्णायक्षरूपेणभूमिप ॥ कोटिसूर्यप्रतीकाशं
चंद्रकोटिसुशीतलम् ॥१९॥ विद्युत्कोटिसमानाभंहस्तपादादिवर्जितम्॥ अदृष्टपूर्वंतदृष्ट्वातेजःपरमसुंदरम्॥२०॥सविस्मयास्तदाप्रोचुःकिमि
दंकिमिदंत्विति॥ दैत्यानांचेष्टितंकिंवामायाकापिमहीयसी ॥२१॥ केनचिन्निर्मितावाऽथदेवानांस्मयकारिणी॥ संभूयतेतदासर्वेविचारंचक्रुरु
त्तमम् ॥२२॥ यक्षस्यनिकटेगत्वाप्रष्टव्यंकस्त्वमित्यपि॥बलाबलंततोज्ञात्वाकर्तव्यातुप्रतिक्रिया॥२३॥ततोवह्निंसमाहूयप्रोवाचेंद्रःसुराधिपः॥
गच्छवह्नेत्वमस्माकंयतोसिमुखमुत्तमम् ॥ २४ ॥ ततोगत्वातुजानीहिकिमिदंयक्षमित्यपि ॥ सहस्राक्षवचःश्रुत्वास्वपराक्रमगर्भितम् ॥२५॥
वेगात्सनिर्गतोवह्निर्ययौयक्षस्यसंनिधौ ॥ तदाप्रोवाचयक्षस्तंत्वंकोऽसीतिहुताशनम् ॥ २६ ॥ वीर्यंचत्वयिकिंयत्तद्वदसर्वंममाग्रतः ॥ अग्निर
स्मितथाजातवेदाअस्मीतिसोऽब्रवीत्॥२७॥सर्वस्यदहनेशक्तिर्मयिविश्वस्यतिष्ठति ॥ तदायक्षंपरंतेजस्तदग्रेनिदधौतृणम् ॥२८॥ दहैनंयदितेश
क्तिर्विश्वस्यदहनेऽस्तिहि ॥ तदासर्वबलेनैवाऽकरोद्यत्नंहुताशनः ॥ २९ ॥ नशशाकतृणंदग्धुंलज्जितोऽगात्सुरान्प्रति ॥ पृष्टेदेवैस्तुवृत्तांतंसर्वंप्रो
वाचहव्यभुक् ॥ ३० ॥ वृथाऽभिमानोह्यस्माकंसर्वेशत्वादिकेसुराः ॥ ततस्तुवृत्रहावायुंसमाहूयेदमब्रवीत् ॥ ३१ ॥ त्वयिप्रोतंजगत्सर्वंत्वच्चे
ष्टाभिस्तुचेष्टितम् ॥ त्वंप्राणरूपःसर्वेषांसर्वशक्तिविधारकः ॥ ३२ ॥

साहंकारत्वंबोधितम् ॥ यक्षस्यसन्निधौहुताशनेगतेसतितंहुताशनंतद्यक्षःकोऽसित्वमित्यपृच्छदित्याह । तदाप्रोवाचेति॥ तथाचश्रुतिः ॥ तथेतितदभ्यद्रवत्तमभ्यवदत्कोऽसीति॥२६॥
त्वयिकिंवीर्यमस्तितदपिवदेत्याह । वीर्यंचेति ॥ यक्षवाक्यंश्रुत्वायदग्निरवदत्तदाह । अग्निरस्मीति ॥२७॥ स्ववीर्यमाह । सर्वस्येति ॥ सर्वविश्वदाहिकाशक्तिर्मयितिष्ठतीत्यर्थः॥तथा
चश्रुतिः॥अग्निर्वाअहमस्मीत्यब्रवीज्जातवेदावाअहमस्मीति॥ तस्मिंस्त्वयिकिंवीर्यमित्यपीदंसर्वंदहेयंयदिदंपृथिव्यामितिसाभिमानाग्निवाक्यंश्रुत्वायद्येतादृशीशक्तिस्त्वयितिष्ठतितर्ह्येत
तृणलेशंदग्ध्वादर्शयस्वशक्तिमितिवदद्यक्षंहुताशनस्याग्रेतृणंदधारेत्याह । तदग्रेनिदधौतृणमिति ॥ २८ ॥ २९ ॥ ३० ॥ सर्वेशत्वादिकेतद्विषयेइत्यर्थः ॥ तथाचश्रुतिः ॥तस्मैतृणंनि
दधावेतद्दहेतितदुपप्रेयायसर्वजवेनतन्नशशाकदग्धुंसततएवनिववृतेनैतदशकंविज्ञातुंयदेतद्यक्षमिति ॥३१ ॥ कार्योत्साहायवायुंस्तौति । त्वयिप्रोतमिति॥ प्रोतंग्रथितम् ॥ तथाचश्रुतिः
वायुर्वैगौतमतत्सूत्रंवायुनावैगौतमसूत्रेणसर्वाणिभूतानिसंदृब्धानीति ॥ ३२ ॥

॥ ३३ ॥ ३४ ॥ यक्षंदृष्ट्वेति वायुंदृष्ट्वाकोऽसित्वंत्वयिचकाशक्तिरस्तीतिसर्वंममाग्रतोवदेतितद्यक्षंप्रोवाचेत्यन्वयः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ उद्योगमिति ॥ सवायुःसर्व शक्तियुतश्चालयितुंप्रवृत्तोऽपितत्तृणंस्वस्थानान्नचचालततोलज्जितःसन्वायुरपिजगामेत्यर्थः ॥ ४० ॥ गर्वनिर्वापोगर्वनाशः ॥ समर्थाःस्मवयंदेवाइतिशेषः ॥ तथाचश्रुतिः ॥ अथवा युमब्रुवन्वायवेतद्विजानीहिकिमेतद्यक्षमिति ॥ तथेतितदभ्यद्रवत्तमभ्यवदत्कोऽसीतिवायुर्वाअहमस्मीत्यब्रवीन्मातरिश्वावाअहमस्मीतितस्मिंस्त्वयिकिंवीर्यमित्यपीदंसर्वमाददीयंयदि दंपृथिव्यामितितस्मैतृणंनिदधावेतदादत्स्वेतितदुपप्रेयायसर्वजवेनतन्नशशाकादातुंसततएवनिववृतेनैतदशकंविज्ञातुंयदेतद्यक्षमिति ॥ ४१ ॥ ४२ ॥ ४३ ॥ प्राद्रवच्चेति ॥ नकेवलं सामान्यतइन्द्रःसमुपाजगामकिंतुवेगेनप्राद्रवच्चेति ॥ ततस्तत्तेजोमयंयक्षरूपंमहोऽतर्धानंप्रापेत्यर्थः॥४४॥अतीवलज्जितइति ॥ मदपेक्षयान्यूनावग्निवायूतयोरनेनयक्षेणसंभाषणमभूदहं

त्वमेवगत्वाजानीहिकिमिदंयक्षमित्यपि ॥ नाऽन्यःकोऽपिसमर्थोऽस्तिज्ञातुंयक्षंपरंमहः ॥ ३३ ॥ सहस्राक्षवचःश्रुत्वागुणगौरवगुंफितम् ॥ सा भिमानोजगामाऽऽशुयत्रयक्षंविराजते ॥३४॥ यक्षंदृष्ट्वाततोवायुंप्रोवाचमृदुभाषया ॥ कोसित्वंत्वयिकाशक्तिर्वदसर्वंममाग्रतः ॥ ३५ ॥ ततो यक्षवचःश्रुत्वागर्वेणमरुदब्रवीत् ॥ मातरिश्वाऽहमस्मीतिवायुरस्मीतिचाब्रवीत् ॥३६॥ वीर्यंतुमयिसर्वस्यचालनेग्रहणेऽस्तिहि ॥ मच्चेष्टया जगत्सर्वंसर्वव्यापारवद्भवेत् ॥३७॥ इतिश्रुत्वावायुवाणींनिजगादपरंमहः ॥ तृणमेतत्तवाऽग्रेयत्तच्चालययथेप्सितम् ॥ ३८ ॥ नोचेद्गर्वंविहा यैनंलज्जितोगच्छवासवम् ॥ श्रुत्वायक्षवचोवायुःसर्वशक्तिसमन्वितः ॥३९॥ उद्योगमकरोत्तच्चस्वस्थानान्नचचालह ॥ लज्जितोऽगाद्देवपार्श्वे हित्वागर्वंसचानिलः ॥४०॥ वृत्तांतमवदत्सर्वंगर्वनिर्वापकारणम् ॥ नैतज्ज्ञातुंसमर्थाःस्ममिथ्यागर्वाभिमानिनः ॥४१॥ अलौकिकंभातिय क्षंतेजःपरमदारुणम् ॥ ततःसर्वेसुरगणाःसहस्राक्षंसमूचिरे ॥४२॥ देवराडसियस्मात्वंयक्षंजानीहितत्त्वतः ॥ ततइंद्रोमहागवार्त्तद्यक्षंसमुपाद्र वत्॥४३॥ प्राद्रवच्चपरंतेजोयक्षरूपंपरात्परम् ॥ अन्तर्धानंततःप्रापतद्यक्षंवासवाग्रतः ॥४४॥ अतीवलज्जितोजातोवासवोदेवराडपि ॥ यक्षसं भाषणाभावाल्लघुत्वंप्रापचेतसि ॥४५॥ अतःपरंनगंतव्यंमयातुसुरसंसदि ॥ किंमयातत्रवक्तव्यंस्वलघुत्वंसुरान्प्रति॥४६॥ देहत्यागोवरस्तस्मा न्मानोहिमहतांधनम् ॥ मानेनष्टेजीवितंतुमृतितुल्यंनसंशयः ॥ ४७ ॥ इतिनिश्चित्यतत्रैवगर्वंहित्वासुरेश्वरः ॥ चरित्रमीदृशंयस्यतमेवशरणं गतः ॥४८॥ तस्मिन्नेवक्षणेजाताव्योमवाणीनभस्तले ॥ मायाबीजंसहस्राक्षजपतेनसुखीभव ॥४९॥ ततोजजापपरमंमायाबीजंपरात्परम् ॥ लक्षवर्षंनिराहारोध्यानमीलितलोचनः ॥ ५० ॥

तदपेक्षयाऽधिकःसन्नपिमयासहयक्षेणभाषणमपिनकृतमतोलज्जितइत्यर्थः ॥ ४५॥ तत्रगत्वामयास्वलघुत्वंवक्तव्यंकिमित्यन्वयः ॥ ४६ ॥ ४७ ॥ नायंकश्चिच्छत्रुःस्यात्तर्हियुद्धार्थंप्रवृ त्तःस्यात्तथाऽयंनप्रवृत्तः ॥ किंत्वंतर्हितस्तस्मादयमीश्वरएवेतिनिश्चित्यतमेवशरणंगतइत्याह । इतिनिश्चित्येति ॥४८॥ मायाबीजंसाम्यावस्थमायाशबलब्रह्मवाचकंभुवनेश्वरीबीजमित्य र्थः ॥ तेनसाम्यावस्थमायाशबलब्रह्मरूपिणीमूलप्रकृतिर्भुवनेश्वरीयंप्रादुर्भूतातिरोभूताचेतिबोधितम् ॥ ४९ ॥ लक्षवर्षंनिराहारइत्यनेनश्रीमूलप्रकृतिदर्शनंनाल्पपुण्येनलभ्यते किंतुबहु पुण्येनेतिबोधितम् ॥ ५० ॥

अकस्मादिति ॥ चैत्रशुक्लनवम्यांमध्याह्नेइत्यर्थः ॥ यस्मिन्नेवस्थलेतेजस्तिरोभूतंतस्मिन्नेवस्थलेतदेवतेजःपुनराविरासीदित्यर्थः ॥५१॥ तस्मिंस्तेजोमंडलेकुमारींकांचिद्विलक्षणांददर्श तांवर्णयति । तेजोमंडलमध्येत्विति ॥५२॥ पाशांकुशेष्टाभयमुद्रायुक्तहस्तचतुष्टयसहितातिरमणीयांभुवनेश्वरीमूर्तिंददर्शेतिसमुदायार्थः ॥ ५३ ॥ ५४ ॥ ५५ ॥ पद्मरागीकृतक्ष्मांदंतच्छटाभिर्दाडिमीबीजसदृशदंतपंक्तिदीधितिभिःपद्मरागमणिसन्निभकृतभूतलाम् ॥५६ ॥ हैमवतींहिमकल्पिताभरणवतीम्॥हिमवतोदुहितरंवेतिपार्वत्यभेदादियमुक्तिः॥तथाचश्रुतिः अथेंद्रमब्रवन्मघवन्नेतद्विजानीहिकिमेतद्यक्षमिति ॥ तथेतितदभ्यद्रवत्तस्मात्तिरोदधे॥सतस्मिन्नेवाकाशेस्त्रियमाजगामबहुशोभमानामुमांहैमवतींतांहोवाचाकिमेतद्यक्षमिति॥५७॥५८॥ जगदीशितुःश्रीभुवनेश्वर्याः ॥५९॥ उवाचेति ॥ इदंयक्षंकिमस्ति ॥६०॥ कस्माच्चकारणात्प्रादुर्भूतंतत्सर्ववदेत्यर्थः ॥६१॥ रूपंमदीयमिति ॥ इदंयद्यक्षंतन्मदीयंमुख्यंरूपमिदमेवब्रह्म सर्वकारणंभवतीत्यर्थः ॥ तदेवब्रह्मस्वरूपंवर्णयति।मायाधिष्ठानेति ॥ साम्यावस्थमायाधिष्ठानमित्यर्थः ॥ तद्विशिष्टमितिफलितम्॥६२॥सर्ववेदप्रतिपाद्यत्वंतस्याऽऽह।सर्वेवेदाइति ॥

अकस्माच्चैत्रमासीयनवम्यांमध्यगेरवौ ॥ तदेवाऽऽविरभूत्तेजस्तस्मिन्नेवस्थलेपुनः ॥ ५१ ॥ तेजोमंडलमध्येतुकुमारींनवयौवनाम् ॥ भास्वज्जपाप्रसूनाभांबालकोटिरविप्रभाम् ॥ ५२ ॥ बालशीतांशुमुकुटांवस्त्रांतर्व्यंजितस्तनीम् ॥ चतुर्भिर्वरहस्तैस्तुवरपाशांकुशाभयान् ॥५३ ॥दधानांरमणीयांगींकोमलांगलतांशिवाम् ॥ भक्तकल्पद्रुमामंबांनानाभूषणभूषिताम् ॥ ५४ ॥ त्रिनेत्रांमल्लिकामालाकबरीजूटशोभिताम् ॥ चतुर्दिक्षुचतुर्वेदैर्मूर्तिमद्भिरभिष्टुताम् ॥५५॥ दंतच्छटाभिरभितःपद्मरागीकृतक्ष्माम् ॥प्रसन्नस्मेरवदनांकोटिकंदर्पसुन्दराम् ॥५६॥ रक्तांबरपरीधानांरक्तचंदनचर्चिताम् ॥ उमाभिधानां पुरतोदेवींहैमवतींशिवाम् ॥ ५७ ॥ निर्व्याजकरुणामूर्तिंसर्वकारणकारणाम् ॥ ददर्शवासवस्तत्रप्रेमसद्गदितांतरः ॥ ५८ ॥ प्रेमाश्रुपूर्णनयनोरोमांचिततनुस्ततः ॥ दंडवत्प्रणनामाथपादयोर्जगदीशितुः ॥ ५९ ॥ तुष्टावविविधैःस्तोत्रैर्भक्तिसन्नतकंधरः ॥ उवाचपरमप्रीतःकिमिदंयक्षमित्यपि ॥६०॥ प्रादुर्भूतंचकस्मात्तद्वदसर्वंसुशोभने ॥ इतितस्यवचःश्रुत्वाप्रोवाचकरुणार्णवा ॥६१ ॥ रूपंमदीयंब्रह्मैतत्सर्वकारणकारणम् ॥ मायाधिष्ठानभूतंतुसर्वसाक्षिनिरामयम्॥६२॥सर्वेवेदायत्पदमामनंतितपांसिसर्वाणिचयद्वदंति॥यदिच्छंतोब्रह्मचर्यंचरंतितत्तेपदंसंग्रहेणब्रवीमि ॥ ६३ ॥ ओमित्येकाक्षरंब्रह्मतदेवाहुश्चह्रींमयम् ॥ द्वेबीजेममंत्रौस्तोमुख्यत्वेनसुरोत्तम ॥ ६४॥ भागद्वयवतीयस्मात्सृजामिसकलंजगत् ॥ तत्रैकभागःसंप्रोक्तःसच्चिदानंदनामकः ॥ ६५ ॥

यत्पदंपद्यतेप्राप्यतेज्ञानिभिरितिपदंतदेतत्पदंब्रह्मसर्वेवेदाआमनंतिप्रतिपादयंति ॥ तथासर्वाणितपांसिचाऽस्मांभिराचीर्णैरिदमेवप्राप्यमितिवदंति॥ तथायदिच्छंतोब्राह्मणाब्रह्मचर्यंगुरुकुलवासमष्टविधमैथुनत्यागंचचरंत्याचरंति ॥ तदेतद्वस्तुतेतुभ्यंसंग्रहेणनाम्नाब्रवीमिकथयामि ॥ सर्वोपासनाकर्मफलभूतमिदमेवेत्यर्थः ॥ ६३ ॥ किंतन्नामेतिचेत्तदाह ।ओमित्येकाक्षरंब्रह्मेति ॥ सर्ववेदेष्वोमितिपदेनयदुद्घोष्यतेतद्ब्रह्मेत्यर्थः ॥ तस्यैवह्रींकारमंत्रोऽपिवाचकइत्याह ॥ तदेवाहुश्चह्रींमयमिति ॥ आहुर्वेदाइत्यर्थः ॥ तथाचश्रुतिः ॥ ओमितिब्रह्मेति॥ तथाह्रींब्रह्मेतिचाथर्वणे ॥ नन्वेकस्यैववस्तुनोद्वेबीजेकिमितिवाचकेजातेतत्रकारणमाह । द्वेबीजेइति ॥ ६४ ॥ भागद्वयवतीति ॥ यतोऽहंमायाभागब्रह्मभागरूपभागद्वयवतीमायाशबलब्रह्मरूपिणीसर्वंजगत्सृजामितस्मात्कारणान्ममभागद्वयत्वाद्बीजद्वयंवाचकमित्यर्थः कौतौभागौतत्राह । तत्रैकभागइति ॥ ६५ ॥

ननुतर्हिब्रह्मभागस्यवाचकःप्रणवोमायाभागस्यवाचकंमायाबीजमितिपर्यवसन्नंतथाचप्रणवोपासनायामुपास्येब्रह्मणिशक्तेर्भागोऽनंतर्भूतस्तथामायाबीजोपासनायांब्रह्मभागोनंतर्भूतइतिप्राप्तमितिचेत्तत्राऽऽह । साचमायेति ॥६६॥ ममाभिन्नत्वमागतेति ॥ नहिशक्तिःशक्तिमतःपृथगुपलभ्यते ॥ वह्न्यादिशक्तिषुवह्न्यादेःशक्तेःपृथगनुपलंभात् ॥ किंतु ममशक्तिमतोमायाशक्तिर्मदभिन्नैवातिष्ठति॥तथाचाग्निशक्तौहोमेऽग्नौहोमोऽर्थसिद्धोयथावाऽग्नौहोमेऽग्निशक्त्यांहोमोऽर्थसिद्धस्तथाब्रह्मभागवाचकस्यप्रणवस्यशक्तिविशिष्टब्रह्मवाचकत्वंमायाशक्तिभागवाचकस्यमायाबीजस्यमायाविशिष्टब्रह्मवाचकत्वंबीजद्वयस्यापिविशिष्टवाचकत्वमतएवर्ह्रींब्रह्मेतिसामानाधिकरण्यंश्रुत्युक्तंसंगच्छतेइतिभावः ॥६७॥ ननुप्रलयेमायालयात्कथंत्वदभिन्नासेतिचेत्तत्राऽऽह । प्रलयइति ॥ प्रलयेमायानाशेउत्तरसर्गानुपपत्तिप्रसंगान्मायानाशःप्रलयेनास्ति किंतु प्रलयेमदभिन्नैवसातिष्ठतीत्यर्थः ॥ननुतर्हिप्रलयेपिमायासत्त्वेनिरंतरंकारणसत्त्वात्कार्यंजगत्सर्जनादिरूपंनिरंतरमेवस्यादितिचेत्तत्राह । प्राणिकर्मेति॥नकेवलंमायासहायंकर्मादिकंविहायजगत्करोति किंतु तदपेक्षयैवकरोति तथाचप्रलयेसर्वकर्मणांपरिपक्वानांफलस्यप्रदत्तत्वेनापरिपक्वानांचकर्मणांफलदानसमयाभावेनपरिपक्वकर्मरूपसहायाभावात्प्रलयोभवति ॥ तदनंतरमवशिष्टप्राणिकर्मणांपरिपाकेसतिसैवव्यक्तरूपामायापरिपक्वकर्मरूपसहायसाहिताव्यक्तीभावमुपैतीतिनकारणसत्त्वेपिकार्यस्यजगत्सर्जनरूपस्यनिरंतरमुत्पत्तिरितिभावः ॥ ६८ ॥ ननुतर्हिमायायाःप्रलयेपिविद्यमानत्वे तमआसीत्तमसागूढोहमग्रेति श्रुतौमायायाः

मायाप्रकृतिसंज्ञस्तुद्वितीयोभागईरितः ॥ साचमायापराशक्तिःशक्तिमत्यहमीश्वरी ॥६६॥ चंद्रस्यचंद्रिकेवेयंममाभिन्नत्वमागता ॥ साम्यावस्थात्मिकाचैषामायाममसुरोत्तम ॥६७॥ प्रलयेसर्वजगतोमदभिन्नैवतिष्ठति ॥ प्राणिकर्मपरीपाकवशतःपुनरेवहि ॥६८॥ रूपंतदेवमव्यक्तंव्यक्तीभावमुपैतिच ॥ अंतर्मुखातुयाऽवस्थासामायेत्यभिधीयते॥६९॥ बहिर्मुखातुयामायातमःशब्देनसोच्यते॥ बहिर्मुखात्तमोरूपाज्जायतेसत्त्वसंभवः ॥ ७० ॥ रजोगुणस्तदैवस्यात्सर्गादौसुरसत्तम ॥ गुणत्रयात्मकाःप्रोक्ताब्रह्मविष्णुमहेश्वराः ॥७१॥ रजोगुणाधिकोब्रह्माविष्णुःसत्त्वाधिकोभवेत् ॥ तमोगुणाधिकोरुद्रःसर्वकारणरूपधृक् ॥ ७२ ॥ स्थूलदेहोभवेद्ब्रह्मालिंगदेहोहरिःस्मृतः ॥ रुद्रस्तुकारणोदेहस्तुरीयात्वहमेवहि ॥ ७३ ॥ साम्यावस्थातुयाप्रोक्तासर्वांतर्यामिरूपिणी ॥ अतऊर्ध्वंपरंब्रह्ममद्रूपंरूपवर्जितम् ॥ ७४ ॥

कथमुत्पत्तिरुक्तेतिचेत्तत्राऽऽह । अंतर्मुखात्विति ॥ अयमर्थः ॥ अंतर्मुखायामायायाअवस्थागुणत्रयसाम्यावस्थारूपासानित्यानतस्याउत्पत्तिःश्रुतौश्रूयते किंतुतस्यागुणत्रयस्ययद्वैषम्यमुत्पद्यतेतदेवतमआसीदित्यादिनोत्पत्त्याश्रयत्वेनाभिधीयते॥तच्चोत्पद्यमानंतमोरूपंबहिर्मुखमायारूपमुच्यतइतिनमायायाउत्पत्तिःश्रुतावभिहिता किंतुमायागुणानामेवोत्पत्तिरिति ॥६९॥तत्रप्रथमतःकोवागुणउत्पद्यतेतत्राऽऽह।बहिर्मुखादिति॥प्रथमतोऽव्यक्तात्तमोगुणउत्पद्यतेततःसत्त्वगुणस्ततोरजोगुणइत्यर्थः॥७०॥एतद्गुणत्रयविशिष्टचैतन्यस्यनामांतराण्याह॥गुणत्रयात्मकाइति ॥ गुणत्रयमध्येएकैकगुणाभिमानिनोब्रह्मादयइत्यर्थः॥७१॥विभागेनतदेवाह । रजोगुणाधिकइति ॥ यद्यपिगुणत्रयात्मकाएवब्रह्मादयःसर्वंजगच्च तथापियस्ययस्यगुणस्ययत्राधिक्यंतत्तद्गुणरूपत्वंतस्योच्यतेइतिबोधनार्थमधिकपदं सर्वकारणरूपधृगितितमोगुणादेवरजःसत्त्वगुणोद्भवस्योक्तत्वात्तमोगुणोपाधिकरुद्रस्यसर्वकारणरूपमुक्तंयुक्तमेव ॥॥७२ ॥७३॥तवतुरीयरूपस्याःकोवाउपाधिस्तत्राह । साम्यावस्थेति ॥ यागुणत्रयसाम्यावस्थांतर्मुखामायासामेतुरीयरूपस्योपाधिरित्यर्थः ॥ ननुतर्हितुरीयस्यमायाविशिष्टेंऽतर्भावेनिर्गुणंब्रह्मकिंभविष्यतीतिचेत्तुरीयातीतम्भविष्यतीत्याह । अतऊर्ध्वमिति॥ मायारहितंतुतुरीयातीतंयत्तदेवनिर्गुणंब्रह्मभविष्यतीत्यर्थः॥इदमवस्थापंचकंतापनीयश्रुतौप्रसिद्धम्॥७४॥

निर्गुणसगुणभेदेनतंदेवस्वस्वरूपंविशदयति । निर्गुणमिति ॥ ७५ ॥ अंतर्यामिरूपाहमेवेत्याह । साऽहंसर्वमिति ॥ तथाचश्रुतिः ॥ तत्सृष्ट्वा तदेवानुप्राविशदिति॥यथायस्यकर्मतथा तंप्रेरयामीत्यर्थः॥७६॥तिरोधानेसंहारे कारणात्मकंकारणदेहाभिमानिनमित्यर्थः ॥ तथाचमदाज्ञयातेब्रह्मादयःसृष्टिंकुर्वंतीतिमुख्यत्वेनसृष्टिस्थितिसंहारकर्त्रीअहमेवास्मीतिभावः ॥ ७७ ॥ नकेवलंब्रह्मादयएवमदधीनाःकिंतर्हिसर्वेदेवाइत्याह । मद्भयादितिं ॥ इंद्राग्निमृत्यवस्तद्वन्मद्भयादेवव्यवहारंकुर्वंतीतिशेषः ॥ तथाचश्रुतिः॥भीषास्माद्वातःपवते॥ भीषोदे तिसूर्यः ॥ भीषास्मादग्निश्चेंद्रश्च ॥ मृत्युर्धावतिपंचमइति ॥७८॥ एतावत्पर्यंतंकिमिदंयक्षमित्यपीतिदेवद्वप्रश्नस्योत्तरंदत्तम्॥ततःपरंप्रादुर्भूतंचकस्मात्तदितिद्वितीयप्रश्नस्योत्तरमाह । मत्प्रसादादिति ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ततःसर्वेइति ॥ तद्दिनादारभ्येतिशेषः ॥ ८५ ॥ गायत्रीजपतत्पराःपूर्वमपिसर्वेगायत्रीजपवंतएवस्थितास्तद्दिनादार भ्यतुगायत्रीजपनिष्णाताजाताइत्यर्थः ॥ ८६ ॥ एवंसत्ययुगेसर्वद्विजदेवादयोगायत्रीप्रणवहृल्लेखामंत्राणामेवमूलप्रकृतिवाचकानामुपासकाःस्थिताइत्यर्थः॥८७॥यतोमूलप्रकृतिःसर्वे

निर्गुणंसगुणंचेतिद्विधामद्रूपमुच्यते ॥ निर्गुणंमाययाहीनंसगुणंमाययायुतम् ॥७५॥साऽहंसर्वंजगत्सृष्ट्वातदंतःसंप्रविश्यच ॥ प्रेरयाम्यनिशंजी वंयथाकर्मयथाश्रुतम् ॥७६॥ सृष्टिस्थितितिरोधानेप्रेरयाम्यहमेवहि ॥ ब्रह्माणंचतथाविष्णुंरुद्रंवैकारणात्मकम् ॥७७॥ मद्भयाद्वातिपवनोभी त्यासूर्यश्चगच्छति ॥ इंद्राग्निमृत्यवस्तद्वत्साऽहंसर्वोत्तमास्मृता ॥७८॥ मत्प्रसादाद्भवद्भिस्तुजयोलब्धोऽस्तिसर्वथा ॥ युष्मानहंनर्तयामिका ष्ठपुत्तलिकोपमान् ॥७९॥ कदाचिद्देवविजयंदैत्यानांविजयंक्वचित् ॥ स्वतंत्रास्वेच्छयासर्वंकुर्वेकर्मानुरोधतः ॥८०॥ तांमांसर्वात्मिकांयूयंवि स्मृत्यनिजगर्वतः ॥ अहंकारावृतात्मानोमोहमाप्तादुरंतकम्॥८१॥अनुग्रहंततःकर्तुंयुष्मद्देहादनुत्तमम्॥निःसृतंसहसातेजोमदीयंयक्षमित्यपि॥ ॥८२॥ अतःपरंसर्वभावैर्हित्वागर्वंतुदेहजम्॥मामेवशरणंयातसच्चिदानंदरूपिणीम्॥८३॥व्यासउवाच॥ इत्युक्त्वाचमहादेवीमूलप्रकृतिरीश्वरी॥ अन्तर्धानंगतासद्योभक्त्यादेवैरभिष्टुता ॥८४॥ ततःसर्वेस्वगर्वंतुविहायपदपंकजम् ॥ सम्यगाराधयामासुर्भगवत्याःपरात्परम् ॥ ८५॥ त्रिसं ध्यंसर्वदासर्वेगायत्रीजपतत्पराः ॥ यज्ञभागादिभिःसर्वेदेवींनित्यंसिषेविरे ॥ ८६ ॥ एवंसत्ययुगेसर्वेगायत्रीजपतत्पराः ॥ तारहृल्लेखयोश्चा पिजपेनिष्णातमानसाः ॥८७॥ नविष्णूपासनानित्यावेदेनोक्तातुकुत्रचित्॥नविष्णुदीक्षानित्याऽस्तिशिवस्यापितथैवच ॥८८॥गायत्र्युपास नानित्यासर्ववेदैःसमीरिता ॥ ययाविनात्वधःपातोब्राह्मणस्यास्तिसर्वथा ॥ ८९ ॥

श्वरीसर्वोत्तमाऽस्तितस्मादेवकारणात्तस्याएवगायत्रीरूपायादीक्षोपासनाचनित्यत्वेनसर्ववेदैःप्रतिपादितानशिवविष्ण्वादिदेवानामित्याह॥नविष्णूपासनेति॥अहरहःसंध्यामुपासीतेतिगा यत्र्युपासनविधिवन्नकुत्रापिविष्ण्वादिदेवतोपासनविधिर्नित्यत्वेनद्विजानांश्रूयते॥तस्मान्नविष्ण्वादिदेवतानामुपासनादीक्षाचनित्या॥यदिचसानित्यास्यात्तदासर्वेशैवावैष्णवावाभवेयुः॥ नचतथादृश्यंते ॥ केचित्तुवैष्णवाःकेचिच्छैवाःकेचिद्गाणपत्याः तस्मात्तदुपासनाभ्युदयिकीकाम्यैवेतिभावः ॥८८॥ नित्योपासनातर्हिकाऽस्तीत्यत्राऽऽह । गायत्र्युपासनेति ॥ द्विजोये दिगायत्रीदीक्षितोनस्यात्तदाऽधएवपतेत् नतथाविष्णुगणेशदीक्षाभावेऽधःपातोद्विजस्यकुत्राप्युक्तस्तथात्वेसर्वेशैवावैष्णवागाणपत्यावाबभूवुर्नचकेचिच्छैवाःकाश्चिद्वैष्णवाःकेचिद्गाणपत्या इति ॥ गायत्रीदीक्षावंतस्तुसर्वेद्विजादृश्यंते ॥ तस्माद्गायत्रीदीक्षैवनित्येतिभावः ॥ ८९ ॥

नन्वभ्युदयार्थमपिद्विजस्यशैववैष्णवादिदीक्षाऽपेक्षितेतिचेत्तत्राऽऽह । तावताकृतकृत्यत्वमिति॥ गायत्र्युपासनायांयदिकश्चिदभ्युदयार्थोन्यूनःस्यात्तदातत्प्राप्त्यर्थमन्यदेवतोपास्तिर्द्विज स्यापेक्षितानतुतथाऽस्ति ॥तावताकेवलगायत्रीमंत्रेणैवकृतकृत्यत्वंद्विजस्यश्रुतिर्ब्रवीतितस्माद्द्विजस्याभ्युदयार्थमपिनान्यदेवतोपास्तिरपेक्षितेतिभावः॥ तथाचश्रुतिर्बृहदारण्यके॥ अष्टाक्षरं वाएकंगायत्र्यैपदमएतदुहास्याएतत्सयावदेतेषुलोकेषुतावद्धजयतियोस्याएतदेवंपदंवेदेति॥ एतत्सयावतीयंत्रयीविद्यातावद्धजयतियोस्याएतदेवंपदंवेदएतत्सयावदिदंप्राणितावद्धजय तियोस्याएतदेवंपदंवेदेतितथासाँहैषागयांस्तत्रेप्राणावैगयास्तत्प्राणांस्तत्रेतद्यद्गयांस्तत्रेतस्माद्गायत्रीनामेति॥तथागोपथब्राह्मणे योहवाएवंवित्सब्रह्मवित्पुण्यांचकीर्तिंलभतेसुरभींश्चगंधा न्सोपहतपाप्मानंतांश्रियमश्नुतेयएवंवेदयश्चैवंविद्वानेवमेतांवेदानांमातरंसावित्रीसंपदमुपनिषदमुपास्तेइत्यादिसर्ववेदेषुश्रुतयोद्रष्टव्याः॥ ननुतर्हिवेदेषुकिमित्यन्यदेवतोपास्तिरुक्तेतिचे दिच्छायावैचित्र्यात्स्वभावतइतरदेवताभक्तानामिच्छाविघाताभावायेतिब्रूमः ॥१०॥मनुरपिगायत्रीमंत्रेणैवद्विजस्यकृतकृत्यत्वमाहेत्याह।कुर्यादन्यन्नवेति ॥ तथाचमनुः।कुर्यादन्यन्नवा

तावताकृतकृत्यत्वंनान्यापेक्षाद्विजस्यहि ॥ गायत्रीमात्रनिष्णातोद्विजोमोक्षमवाप्नुयात् ॥ १० ॥ कुर्यादन्यन्नवाकुर्यादितिप्राहमनुःस्वयम् ॥ विहायतांतुगायत्रींविष्णूपास्तिपरायणः ॥११॥ शिवोपास्तिरतोविप्रोनरकंयातिसर्वथा ॥ तस्मादाद्ययुगेराजन्गायत्रीजपतत्पराः ॥ देवीपदांबुजरताआसन्सर्वेद्विजोत्तमाः ॥१२॥ इतिश्रीदेवीभागवतेमहापुराणेद्वादशस्कंधेऽष्टमोऽध्यायः ॥८॥ व्यासउवाच ॥ कदाचिदथकालेतुदशपंचसमाविभो ॥ प्राणिनांकर्मवशतोनववर्षशतक्रतुः ॥१॥ अनावृष्ट्याऽतिदुर्भिक्षमभवत्क्षयकारकम् ॥ गृहेगृहेशवानांतुसंख्याकर्तुंनशक्यते ॥ ॥२॥ केचिदश्वान्वराहान्वाभक्षयंतिक्षुधार्दिताः ॥ शवानिचमनुष्याणांभक्षयंत्यपरेजनाः ॥ ३॥ बालकंबालजननींस्त्रियंपुरुषएवच ॥ भक्षितुंचलिताःसर्वेक्षुधयापीडितानराः ॥४॥ ब्राह्मणाबहवस्तत्रविचारंचक्रुरुत्तमम् ॥ तपोधनोगौतमोऽस्तिसनःखेदंहरिष्यति ॥५॥ सर्वैर्मिलित्वागंतव्यंगौतमस्याश्रमेऽधुना ॥ गायत्रीजपसंसक्तगौतमस्याश्रमेऽधुना ॥६॥ सुभिक्षंश्रूयतेतत्रप्राणिनोबहवोगताः ॥ एवंविमृश्यभूदेवाःसाग्निहोत्राःकुटुम्बिनः ॥७॥ सगोधनाःसदासाश्चगौतमस्याऽऽश्रमंययुः ॥ पूर्वदेशाद्ययुःकेचित्केचिद्दक्षिणदेशतः ॥ ८॥ पाश्चात्याऔत्तराहाश्चनानादिग्भ्यःसमाययुः ॥ दृष्ट्वासमाजंविप्राणांप्रणनामसगौतमः ॥ ९ ॥

कुर्यान्मैत्रोब्राह्मणउच्यतेइति॥महाभारतेपिशांतिपर्वणिजप्यमाहात्म्येगायत्रीमंत्रस्यैवप्राशस्त्यमुक्तम् ॥ किंचगायत्रीमंत्रमगृहीत्वाद्विजोविष्णवादिदेवतोपास्तिपरायणोनरकमेवसर्वथा याति॥विष्णवादिदेवतामंत्रमगृहीत्वाकेवलगायत्रीमंत्रपरायणोमोक्षंयातितस्मात्पराशक्तेर्गायत्र्याएवोपास्तिर्नित्यासर्वोत्तमाचेत्याह । विहायतांतुगायत्रीमिति॥११॥उपसंहरति।तस्मा दिति ॥ अतएवहेतोःसत्ययुगेसर्वेपराशक्तिगायत्रीपादांबुजरतादेवीभक्ताआसन्नित्यर्थः ॥ प्रथमतोद्विजातीनांवेदेनोपदिष्टगायत्र्युपासनयासकलेष्टसंभवेऽन्यदेवतोपासनायांप्रयोजना भावएवेतिभावः ॥१२॥ इतिश्रीदेवीभागवततिलकेद्वाशस्कन्धेऽष्टमोध्यायः॥८॥ शतश्लोकैर्ब्राह्मणानांशापाद्गौतमसंभवात् ॥ अन्यदेवोपासनासुश्रद्धाजातेतिचोच्यते॥१॥ इत्थंसत्ययु गेपराशक्तिर्भक्तिपराशक्तिमहिमप्रकाशनपूर्वकमुपपाद्यानंतरमन्यदेवोपासनाश्रद्धायांनिमित्तंराज्ञापृष्टंकथयितुंपूर्ववृत्तमाह। व्यासउवाच कदाचिदथेति ॥ दशपंचसमाःपंचदशवर्षाणि ॥ शतक्रतुरिंद्रः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ औत्तराहाउत्तरस्यांभवाः ॥ उत्तरादाहञितिसूत्रेणाहञ्प्रत्ययः ॥ ९ ॥

